४र्थं वर्षे ]　　सौर-वैशाखः, १९८४ वैक्रमाब्दाः　　[१मा संख

संस्कृत-साहित्य-समाजस्य मुखपत्रम् ।

# सुप्रभातम् ।

तिमिरततिमुदस्यद् भेदतारा विलुम्प-
न्नयदधिसुरभाषाभाषि जागर्तिमुच्चैः ।
विबुध-विहग-वादै राह्वयद् भाग्य-भानुम्
विलसतु भुवनेऽस्मिन् सर्वतः सुप्रभातम् ॥




सम्पादकः
श्रीकेदारनाथ शर्मा, सारस्वतः ।

वार्षिकम्मूल्यम् ३), छात्राणां कृते १॥), विदेशेषु १२) एकाङ्कस्य मूल्यम् ।)

# लेखसूची ।



चित्राणि ।

१—श्री शिवराजः [ शिवाजी ] ( बालकस्य )

२—श्री महामहोपाध्याय-देवीप्रसादशर्म्मा, शुक्लः, कविचक्रवर्ती ।

---

## लेखक-नियमाः

( १ ) सर्वे लेखाः परिवर्तनार्थं पत्राणि पुस्तकानि च "सुप्रभातसम्पादकः, काशी" ( Benares City)—इति सङ्केतेन प्रेषणीयानि ।

( २ ) प्रकाशनार्थं प्रेषितानि निवन्धाः, पत्राणि, सूचनाः, कवितादीनि पत्रस्यैकत एव चतुर्दिक्षु लेखनार्थं स्थानं विहाय विरलपङ्क्तिभिः स्पष्टाक्षरैः संस्कृत-लिप्या संस्कृतभाषया लेखनीयानि ।

( ३ ) भावपूर्णाः, यथासंभवं सङ्क्षिप्ताः, वेद-इतिहास-भूगोल-साहित्य-दर्शन-तर्क-विज्ञान-आयुर्वेद-व्याकरण-छन्दोगणित-होरा-धर्मशास्त्र-समाजशास्त्रादीनि, किं बहुना, सर्वविधा एव संस्कृत-साहित्य-सम्बन्धिनो लेखाः यथासंभवं प्रकाशिता भवितुमर्हन्ति ।

( ४ ) कविताः सरलाः व्याकरण-छन्दोभावालङ्कारादिशुद्धाः स्वल्पा उत्कृष्टा एवात्र स्थानमासादयन्ति ।

(५) सर्वेषां निबन्धादीनां प्रकाशनम् अप्रकाशनं क्रमशः प्रकाशनं परावर्तनम् इत्यादि सर्वं सम्पादकायत्तमस्ति ।

( ६ ) लेखादीनां परावर्तनाय अपेक्षिताः चिटिकाः ( टिकट-Stamp. ), लेखप्रहेतृभिः प्रेषणीयाः ।

( ३९ तम-पृष्ठस्य नीचैर्द्रष्टव्यम् )

# सुप्रभातम्



यवन-जलद-जालोत्क्षेप-झञ्झा-मरुत्वान्, विमत-तिमिर-दूरीकार-मध्याह्न-भानुः ।
सुत इव दयितोऽयं भारतस्यार्तिभाजो जयति विमलकीर्तिः **श्री शिवाजी नृपालः** ।
श्रीरामदास-सद्गुरु—नीतिमूर्तेव देशरक्षायै । वीरव्रतैकदीक्षा जयति **शिवाजी-नृपालात्मा** ॥

—श्रीनारायणशास्त्रिणः, [खिस्ते.]

# सुप्रभातम् ।

विविध-विषय-विभूषितम्, सचित्रम्, अद्वितीयम् संस्कृत-मासिक-पत्रम् ।

४ वर्षे | वाराणसी, सौर वैशाखः, १९८४ वैक्रमाब्दाः | १म संख्या

## माङ्गलिकाः सूक्तयः

क यासि खलु चौरिके ! प्रसुषितं स्फुटं दृश्यते,
द्वितीयमिहमामकं वहसि कन्दुकं कञ्चुके ।
त्यजेति नवगोपिका-कुचयुगं प्रमथ्नन् बला-
ल्लसत् पुलक-पञ्जरो जयति गोकुले केशवः ॥

—दीपकस्य ।

रघुवंश-जलधि-चन्द्रं रावण-वनदन्ति-पारीन्द्रम् ।
सीता-विपिन-मयूरी—मुदिर-मुदारं महः कलये ।

—पण्डितराजस्य ।

उत्तेजित-नुत-भाग्यम्,
शृंगार-रसान्यदत्त-वैराग्यम् ।
आहत-नत-दौर्भाग्यम्,
कामं कलये कपालिसौभाग्यम् ।

—नागेशभट्टस्य ।

क्कणत्कनककिङ्किणी-खणखणायितं नूपुरै-
र्विरावि-मणि-किङ्किणी-कलित-मेखला-मण्डलम् ।
अमन्दकरकन्दलं परिपतत्पदाम्भोरुहम्
मुदा मनसि रासयन् वसतु वल्लवी-वल्लभः ॥

—कस्यापि ।

कलिव्यालोद्गीर्णातुलकलुष-हालाहलकृता-
ऽविलङ्घ्यापर्यन्त-प्रलयजनिमूर्छाभ्रमहरः ।
श्रयन् शैले नीले श्रुतिशतनुतां जाङ्गलिकताम्
जगन्नाथ-स्वामी मम मनसि मोहं शमयतु ॥

—म० म० तैलंग-गंगाधर-शास्त्रिणः ।

करोति चतुराननस्त्वयि नतिं स वेदाननः,
स्मरेभ-मदमाननस्त्वमसि किञ्च पञ्चाननः ।
सुतस्तव षडाननः परिकरः सहस्राननः,
कथं नु गुणकाननं विशतु ते शिवैकाननः ? ॥

—म० म० तैलंग रामशास्त्रिणः ।

—*—

# नूतनवर्षाभिनन्दनम् ।

( श्रीदेवीप्रसाद शर्मा, शुक्लः, कविचक्रवर्ती )

( १ )

हेवर्ष ! हर्षकर ! नूतन ! तावकीना
सन्मङ्गलं दिशतु मे खलु संप्रवृत्तिः ।
हृत्तापमापदुदितं निखिलं बलेन
प्रोन्मूल्य कल्यमनसं कुरु सत्वरं माम् ॥

( २ )

माद्यन्मधुव्रतकुलैरुपगीयमानाः
कूजत्पिकव्रज-कुहू-रव-रञ्जिताशाः ।
एते रसालतरवः परवश्यकल्पा-
स्त्वत्सङ्गजां श्रियमवाप्य समुल्लसन्ति ॥

( ३ )

त्वत्सङ्गमेन किल चेतन एव लोके
नो केवलं कलितकामकलश्चकास्ति ।
किन्तूल्लसन्ति नितरां चितरम्यभावा-
स्ताश्चेतनाविरहिता अपि वृक्षलक्ष्म्यः ।

( ४ )

येषां मनो न विकृतिं लभते विलोक्य,
त्वां हायनप्रवर ! सर्वगुणाभिरामम् ।
तेऽसंशयं कठिनशैल-समानचित्ताः
कुड्योपमा जगति जाग्रति जीवशून्याः ।

( ५ )

मन्मंगलं कुरु, वरं वितराशु मह्यम्,
मां रक्ष, रक्ष, सततं वरवर्ष ! हर्षात् ।
त्वामादरेण मनसा शिरसा च भूयो-
भूयो नमामि भवताद् भुवि भोगलक्ष्मीः ।

## विबुध-वन्दनम् ।

[ ले०—श्रीनारायण शास्त्री, खिस्ते, साहित्याचार्यः

नित्यानन्दवपुर्निरन्तरगलद्धात्सल्यपूरोत्तरो
नागेश-प्रणय-प्रसाधित-महाहार-प्रकारोद्धुरः ।
रामे लक्ष्मणसंयुते कृतमना यो भालचन्द्रात्मकः
श्रीदामोदर-पाणि-सेवित-पदः पायात्स गंगाधरः ।

\+ \+ \+ \+ \+

विद्वत्समाज-प्रथम-पूजनीय पदाम्बुजः ।
नित्यानन्दः कृपालुः स्यात् सुप्रभाते नवोदिते ॥२॥
विद्वत्समाज—मूर्द्धन्यः सर्वशास्त्रार्थमर्मवित् ।
श्रीमान् प्रमथनाथो द्राक् सुप्रभातेऽनुकम्पताम् ॥३
अवतारः सरस्वत्या लोकातिग-महामतिः ।
रामावतारस्तनुतां सुप्रभाते दयाद्दृशम् ॥ ४ ॥
मीमांसकाग्रणी नैकप्रबन्धोदितसद्यशः ।
गंगानाथो बुधश्रेष्ठः सुप्रभाते प्रसीदतु ॥ ५ ॥
प्राच्य-प्रतीच्य-शास्त्राब्धि-सम्भेद स्नान-निर्मलः ।
गोपीनाथस्तत्वदर्शी सुप्रभातं करोतु नः ॥ ६ ॥
ज्योतिर्विदाम्वर ! श्रीमन् ! मुरलीधर ! सादरम् ।
मुरलीं वादयन् कुर्याः सुप्रभातं प्रभान्वितम् ॥ ७
कोकिलालाप-सदृशीः सुधासिक्ता मनोहराः ।
सदयं सुप्रभातेऽपि गिरः किरतु लक्ष्मणः ॥ ८ ॥
विद्वत्समाजे जागर्ति येन नूनं प्रवर्त्तिता ।
दयतां सुप्रभातेऽपि स श्रीमान् लक्ष्मणो बुधः ॥ ९

विश्व- भवत्प्र शब्दश श्रीरा ... हा स्व अ द्रां द्रुत दामः मपि ? ई

विश्व-विख्यात-वैदुष्य ! *वामाचरण*-पण्डित !
भवत्प्रसादमासाद्य सुप्रभातं प्रसीदतु ॥ १० ॥

शब्दशास्त्र-विदां वन्द्यो विद्वद्राका-निशाकरः ।
*श्रीरामभवनो* धीमान् सुप्रभाते विभासताम् ॥ ११ ॥

साहित्य-रत्नं कविचक्रवर्ती
नैकैः प्रसिद्धैर्विरुदैरुपेतः ।
*देवीप्रसादो* गिरिशान्वितश्रीः
दयादृशा रक्षतु सुप्रभातम् ॥

विद्वद्वादिकरिव्रात-केशरी चण्डगर्जनः ।
*श्रीबालकृष्णः* सदयं सुप्रभाते निरीक्षताम् ॥ १२ ॥

गङ्गाधर-सुतः श्रीमान् *बालचन्द्रः* प्रियम्वदः ।
अविघ्नं सुप्रभातस्य सर्वदैवाभिकाङ्क्षतु ॥ १३ ॥

*विद्याधरेण शिवदत्त*-विभूति-भाजा
नित्यं निषेवितपदः प्रथित-प्रभावः ।
लीलागृहीततनु जैमिनिरेव साक्षात्
प्रीणातु पूतचरितः *पृथुदत्तशर्म्मा* ॥



# संस्कृत-शिक्षा-दुरवस्था ।

( *ले०—'विमर्शी विद्वान्'* )

हा ! उदुम्बरकीटत्वं संस्कृताध्यायिनो गताः ।
स्व-शिक्षा-नेतुरौदास्यादालस्यादात्मनस्तथा ॥

हो व्यामोहः ! सर्वतोऽपि वाद्यमाने जागर्तिपटहे, जागरित्वा च स्वीयां स्वीयां दशामुन्नेतुं प्रद्रवणपरेऽत्र भूलोके, स्वीयां चिरकाल-प्रवृत्तां मोहमयीं द्रां विहातुमनिच्छतोऽस्य भारतस्यैव अयमपूर्वो-द्भुत आश्चर्य्यकरोऽनन्यसदृशो व्यामोहः । किमत्र र्मः ? कमुपालभामहे ? कं शरणमाश्रयामः ? न मपि आधारमाकलयामः ? कुत्र गच्छामः ? किङ्- ? ईश्वरोऽपि तु श्रीकृष्णरूपेणावतीर्णः—

अस्ति चेदीश्वरः कश्चित् फलरूप्यन्यकर्मणाम् ।
कर्त्तारं भजते सोऽपि न ह्यकर्त्तुः प्रभुर्हि सः ॥
( भागवते १० स्कन्धे )

इति पुरुषार्थमेवाश्रयति । पुरुषकारबलेनैव जयप्राण ( जापान ) देशस्था अल्पीयसैव कालेने-दृशमात्मानमुन्नमितवन्तो यत् उन्नतिपथजुषः पाश्चात्या अपि ( रूस-अमेरिकन् प्रभृतयोऽपि ) चूर्णमदाः सञ्जाताः ।

अस्तु । तत्रापि दर्शादर्शितया कियन्तो भारतीयाः पाश्चात्यशिक्षापद्धतिजुषः चेष्टन्तेऽपि किञ्चिद्धस्तपादौ प्रक्षेप्तुम् । परन्तु वयमेवात्मानम्भारतीय-सभ्यता-पितामहम्मन्यमानाः भारतनेतृत्वे स्वात्मनो जन्मसिद्धाधिकारं समर्थयन्तोऽपि नेहामहे स्वपार्श्वपरिवर्तनं कर्त्तुम्, न निरीक्षामहेऽग्रतः संसर्पतो नरपुङ्गवान्, न विलोकयामहे कालमहिमानं, नाधीमहे वेगतो धावमानां कालधारां, न किन्तु तस्यामेव धारायामुह्यमानमात्मानम्, केवलं गजनिमीलिकया स्वात्मानमेव वञ्चयामः, स्वपूर्व-

जान्निन्दयामः, स्वोत्तरजाँश्च पातयामः, विदेशीयैरात्मानमुपहासयामः, इत्यहो व्यामोहवैचित्र्यम् !

पश्यन्तु भवन्तः ! कियद्दूरमारूढास्ते म्लेच्छपदाभिधेयाः समुन्नतेः शिखरमिति । इदानीन्ते चन्द्रलोके सूर्य्यलोकेऽप्यविहतगतयो भवन्ति । स्वच्छन्दं व्योम्नि विहरन्ति, स्वतन्त्रतया पर्य्यटन्ति च द्वीपद्वीपान्तरेषु, स्थलवत्क्रीड़न्ति सलिलाभ्यन्तरेषु । किं वहुना ? श्रुतिगतविषयाणां प्रत्यक्षमुपदर्शकत्वादिदानीन्त एव—

"ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः"

इति मनुवाक्यस्योदाहरणीभूताः । वयञ्च "मम-पितृपितामहैः घृतं भुक्तं मम हस्तं जिघ्रत" इति लौकिकाभाणकं चरितार्थयन्तः कालं यापयामः । अतः सर्वस्यास्य दशापरिणामस्य मूलमस्माकमिदानीन्तनी संस्कृत-शिक्षापद्धतिरेव । सा एवं पङ्ककर्त्री, कूपान्तःपातिका, गर्तनेत्री, आवर्तभ्रामिका सञ्जाताऽस्ति ; यस्यां निपतिता वयं न पारयाम आत्मानमुन्नेतुम् । न पश्यामोऽधोऽधोगच्छन्तमप्यात्मानम् । विषकृमिन्यायवत्तदेव रोचतेऽस्मभ्यम् । तत्रैव निमग्नाश्चात्मानं धन्यम्मन्यामहे । अतो वै येन-केनप्रकारेण प्रथमतस्तस्याः सकाशादेवात्मानं मोचयामः । ततो विमोचिते सति स्वात्मनि स्यात्सर्वं साधितमिति अस्माकं दृढ़ो विश्वासः ।

विदाङ्कुर्वन्तु श्रीमन्तः ! "एकतः पतितो वृक्षात्, अन्यतो दण्डताडना" इति आभाणकं सफलयन्तः संस्कृत-राजकीयपरीक्षा-समितिस्था अधिकारिणः अस्मिन् वर्षे सर्वथा सर्वास्वपि संस्कृतपरीक्षासु सर्वस्मिन्नेव विषयविभागे संस्कृतच्छात्रान् पातितवन्तः । कोऽयं न्यायः ? एकतस्तु तेषां कृते कोऽपि नास्ति एवं प्रवन्धो येन तेषां शिक्षादीक्षयोः सम्यक् निरीक्षणं भवेत् ।

अद्वैतवादीयकूटस्थब्रह्मवत् एक एव संस्कृत पाठशालानिरीक्षकः ( संस्कृत इन्स्पेक्टर ) विद्यते । यश्च वर्षे भाग्यत एव एकवारमपि नगरगताः पाठशाला निरीक्षितुं न प्रभवति; दूरेस्तु ग्रामस्थानां विद्यालयानां कथा । अपरतश्च आत्मानं वृहस्पतेरपि पितृव्यं मन्यमानैरध्यापनकलानभिज्ञैः बहुशोऽध्यापकैः वराकाश्छात्रा अध्याप्यन्ते । येन च न भवति तेषां सम्यक् सन्तोषः । ( तैस्तु दयनीयोऽहं ) ये "नयन्ति तेष्वप्युपपन्ननैपुणा गभीरमर्थं कतिचित् प्रकाशताम् " इत्यस्योदाहरणीभूताः सन्ति । एवं वात्याप्रवाहपतितेयं संस्कृतच्छात्राणां नौः कथं पारमेष्यतीत्यत्र धीरा एवावदधतु ।

विगतेष्वपि वर्षेषु अत्र संयुक्त—( यू० पी ) प्रान्ते यानि शिक्षा-केन्द्राणि ( यूनिवर्सिटी ) सन्ति । तेषु सर्वेष्वपि सर्वस्मिन्नपि विभागे सर्वास्वपि कक्षासु यावन्तश्छात्राः समुत्तीर्णाः । तत्र प्रत्येक शिक्षा-केन्द्रतः प्रत्येकस्मिन्नपि विभागे प्रतिकक्षम् अत्र संस्कृतपरीक्षायां न्यूनाश्छात्रा उत्तीर्णाः, इत्याहोपूर्वत्वं संस्कृतशिक्षायाः ? अलभ्यो लाभः संस्कृत पाठनस्य च ? अचिन्त्यमौदार्य्यं संस्कृत परीक्षायाम् ! प्रशंसनीया वदान्यता परीक्षाशुल्कदानां निर्धनानां संस्कृतच्छात्राणाम् । यत्ते प्रतिवर्षं परीक्षाशुल्कैः संभरन्ति भाण्डारम् परीक्षाद्यूतकराणां सभिकानामेषामिति । सर्वत्र शिक्षाकेन्द्रेषु

( यूनिर्वसिटी ) नियमोऽस्ति यत् प्रति-शतं ७० सप्ततिः, ७५ पञ्चसप्ततिर्वा छात्रा उत्तारेलिमा इति। परन्तु अत्र तु 'सप्तलोकतो मथुरा अन्या' इति लोकगाथैवचारितार्थ्यमेति,नकोऽप्यस्ति अत्र नियमः, अन्यैर्यथा परीक्षायां प्रतिशतं ३३ त्रयस्त्रिंशदङ्कलाभो भवति, तथैव भाग्यतस्त्रयस्त्रिंशत् छात्रा अपि उत्तरन्ति। इत्यहो लोकोत्तरत्वं महाभागा: ! अस्तु ! नाम मात्रतः, लोकानां पुरतः कथयितुमत्र राजकीय-संस्कृत-शिक्षा-विभागे एका शिक्षा-परिषद् ( शिक्षा-बोर्ड ) विद्यते। यत्र स्वमनःकल्पिता एव पण्डिताः सदस्याः भवन्ति। न तत्र एवं भूतो कश्चन निर्वाचन-नियम-प्रकारो वर्त्तते ; येन लोकप्रतिनिधि भूता अपि विद्वांसः सदस्या भवेयुरिति। परीक्षास्थ पाठ्यपद्धतेस्तु कथैव न वाच्या। सा तु आसृष्टेः प्रलयं यावत् स्थापयितुं दिव्यदृष्टिभिर्महर्षिभिर्निर्मितास्ति। यत्रापौरुषेयवेदवत् कोऽपि दोष एव नास्ति। तत्र तु विषये दृष्टिप्रक्षेपको 'नास्तिको' 'दुष्ट' इत्याद्युपाधिभिरेवालङ्क्रियते। केन्द्रविषयेऽपि प्रथमामध्यम-परीक्षयोः केन्द्राणि यत्र क्वचन नगरेषु सन्त्यपि,किन्तु शास्त्र्याचार्यपरीक्षाकेन्द्र अत्र वाराणस्या मेवास्ति, नान्यत्र। न जाने अनया विडम्बनया को भवति लाभो धन्यवादार्हाणामधिकारिणाम्। येन वराकाः संस्कृत छात्रा व्यर्थमेव वाष्पशकट—( रेल )—प्रभृति मार्गव्यये प्रतिच्छात्रं १०) १५) दश पञ्चदशानि रूप्यकाणि व्ययीकृत्य, अत्रैव शास्त्र्याचार्य परीक्षां दातुमायान्ति, इत्यस्माकं स्वल्पबुद्धीनां मनसि स्फुरत्येव नहि अस्या विडम्बनायाः प्रयोजनम्। मन्ये, इदमेव प्रयोजनं भवेत् यदस्य परीक्षाकेन्द्रस्य मानहानिः स्यात्; अन्यत्र परीक्षाकेन्द्रस्थापनेन। इत्यहो दम्भविजृम्भितम् !

अस्तु। मया तु, हितं मनोहारि च दुर्लभं वचः। इति नियममाश्रित्य अधिकारिणोऽभ्यर्थ्यन्ते। यत्ते अवदधतु ! निरीक्षन्ताम् स्वीयं दोषजातम्। अतिसंघर्षतश्चन्दनतोऽपि अग्निर्निःसरत्येव। इदानीञ्च भृशमुद्विग्नाः संस्कृतच्छात्राः। नैवमेव सुप्ताः स्थास्यन्ति।

संस्कृतज्ञाँश्च छात्रानभ्यर्थये यत् भ्रातरः ! भवन्तो विमृशन्तु स्वीयं वलं भवतामेव वलेन इयं संस्कृत-परीक्षा-यन्त्रिका प्रचलति। या च प्रतिवर्षं "भोजनाच्छादने नैव कङ्कत्युभयसन्ध्ययोः" "दाना न घास दोनों शाम खरहरा" इत्याभाणकतः श्रीमत एव मर्दयति।

सर्वथैवोपेक्षन्ते भवतस्तत्रत्याधिकारिणः। वर्षाभ्यन्तरे एकदा भवतः समेत्य परीक्षायन्त्रे मुद्रापयित्वा निःसारयन्ति। अलम् एतावतैव आत्मानं कृतकृत्यं मन्यमानाः पुनः वर्षं यावत् सुखनिद्रां शेरते। तत्र च परीक्षायन्त्रे ये मुद्रिताः, ते छात्रा मोदन्ते, ये च पिष्टा भग्नास्ते विषीदन्ति। पुनरुत्पतन्तः पतन्त स्तत्रैवागत्य पुनः स्वशिरांसि पातयन्ति। अहो व्यामोह-प्रभावः ! इदानीं विमृशन्तु भवन्तः समेत्य, किमेवमेव जीवनं यापयिष्यन्ति ? किन्न ज्ञास्यन्ति भवन्तो लोकवृत्तम् ? किन्न द्रक्ष्यन्ति देश प्रगतिम् ? किन्नावधारयन्ति जागर्तियुगवृत्तम् ? किन्नानुष्ठास्यन्ति स्वीयमनुष्ठानम् ? किन्न सम्पादयिष्यन्ति आत्मनोऽवश्यङ्कर्तव्यम् ? भवतामेवालस्यादिमां कष्टां दशां विन्दते सुरभारती। भवन्तोऽपि—अन्धेन नीयमाना यथान्धा—इति श्रुतेरुदाहरणीभूताः कूप-

मण्डूक-पदभाजो भवन्ति, सर्वं च देशकालज्ञा विद्वांसो भवत उपहसन्ति । अत इदानीमवश्यम् श्रीमन्तश्चैकीभूय स्व-स्व—पाठशालातः—सर्वेषां छात्राणां विदुषाञ्च हस्ताक्षरतः संस्कृतशिक्षा परिषद्गतां विविधप्रबन्धव्यवस्थादित्रुटिं लिखित्वा संस्कृतशिक्षापद्धतौ स्वीयमतं च विलिख्य, संस्कृत-साहित्य-समाजे प्रहिण्वन्तु । समाजोऽयं संस्कृतसाहित्यगतं दोषं दूरीकर्तुमेव प्रतिष्ठापितोऽस्ति । अतो वयमत्र विषये सम्यक् व्यवस्थितमान्दोलनं कर्तुं कामयामहे । विक्रमस्य विंशतितमेयं शताब्दी । अत्र शयाना एव लुण्ठ्यन्ते, जागरिता योद्धार एव विजयन्ते । इति विरमामः ।



# रघुवंश-महाकाव्यम् ।

द्वितीयः सर्गः ।

## चोरपक्षीया टीका ।

लेखकाः—

**स्वर्गीय-कवीन्द्र दुःखभञ्जनशुक्लमहोदयाः ।**

अथ प्रजानामधिपः प्रभातेऽ—
जायाप्रतिग्राहितगन्धमाल्याम् ।
धनाय पीतप्रतिबद्धवत्सां
यशोधनो धेनुमृषेर्मुमोच ॥ १ ॥

स पूर्वोक्तः चौरः प्रभाते ऋषेर्धेनुं मुमोच चोरयामास । कीदृशः ? यशोऽधनः यश एव अधनं मृत्युर्यस्य, अथ धनाभावः यस्य, अथ यशसि अधनः दरिद्रः. पुनः कीदृशः ? प्रजानामधिपः प्रजानां नामानि धीयन्ते अत्र इति प्रजानामधिः तं पाति तादृशः अर्थात् यत्र गमनमात्रेणैव प्रजाः सापवादाः भवन्तिः तस्य ग्रामस्य पतिः,कीदृशीं धेनुम्? अजायाप्रतिग्राहितगन्धमाल्याम् अजानां छागानाम् आयेन लाभेन आ-ईषत् प्रतिग्राहिते गन्धमाल्ये पिन्याकतूवरतुषौ यस्यै तां, पुनः कीदृशीं ? वनायपीतप्रतिबद्धवत्सां वनस्य आये अयने विस्तारे वा पीतास्वमुखेनैव पीता सा चासौ प्रतिबद्धवत्सा च ताम् ॥ १ ॥

तस्या खुरन्यासपवित्रपांशु—
मपांशुलानान्धुरिकीर्तनीया ।
मार्गं मनुष्येऽश्वरधर्मपत्नी
श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥ २ ॥

मनुष्ये मनुष्यजातौ अश्वरधर्मपत्नी अश्वं लाति रलयोः साम्यात् तस्य चौरस्य महिषी, तस्या धेनोः मार्गं मार्गणं अनु लक्षीकृत्य अगच्छत् । अथ अधर्मपत्नी चौरपत्नी अश्वः न श्वः भविष्यदनद्यतनं यत्र कर्मणि तद्यथा तथा अर्थात् तस्मिन्नेव दिवसे तस्या अन्वेषणाय अगच्छत् । कीदृशी अश्वरधर्मपत्नी ? अपांशुलानान्धुः अपांशुलाः आनाः प्राणा यस्य, एवम्भूतः अन्धुः कूपः लक्षणया कश्चिदवयवविशेषो यस्याः सा। पु. की. इकीर्त्तनीया कामेन कीर्त्तनीया इति यावत् । कीदृशं मार्गम्? खुरन्यासपवित्रपांशुम् । खुराणां न्यासं पान्ति ते खुरन्यासपाः । वित्रपाः विगतलज्जा अंशवो यस्मिन् सः तम् ।

का कस्मिव । स्मृतिः स्मरणम्, श्रुतेः श्रवणस्याऽर्थम् इव ॥ २ ॥

निवर्त्य राजा दयितां दयालु—
स्तांसौरभेयीं सुरभिर्यशोभिः ।
पयोधरीभूतचतुस्समुद्रां
जुगोप गोरूपधरामिवोर्वीम् ॥ ४ ॥

स तां जुगोप गुप्ताञ्चकार, कीदृशः ? निवर्ती निवर्तते तच्छीलः, तथा दयालुः दया एव आलुः कन्दविशेषो यस्य सः, तथा यशोभिः सुरभिः शून्यः, "पुमान् वसन्ते धेनौ स्त्री वाच्यवद्गढि मात्रके । सुगन्धौ च तथा शून्ये प्रसिद्धे वरवस्तुनि । सुरभि" रित्यादि । कीदृशीं ? अराजादयितां अराणि कीलानि वीयन्ते अत्र, अधिकरणे घञ् । अथ अराणि अजति, कर्तरि अप् । अथ न राजा अराजः । अथ न राजा यस्य तस्य आसमन्तात् ईषत् वा दयिता प्रिया । अथ न दयिता तां, पुनः कीदृशीं ? सौरभेयीं सौरी शनैश्चरीभा यस्याः तस्याः अपत्यं स्त्री तां, तथा पयोधरीभू तचतुस्समुद्रां चतुरः धर्मार्थकाममोक्षान् स्यति नाशयति तथा विधा चासौ मुद्रा च रजतमुद्रा । पयसः दुग्धस्य अधरीभूता पयःपरतन्त्रा चतुस्समुद्रा चतुर्वर्गनाशि मौल्यं यस्याः; ताम् । अर्थात धेनुविक्रयजनित धनं चतुर्वर्गं विनाशयति । तथा उर्वीम् उरुं महतीं । कामिव ? गोरूपधरां वृषभरूपधरामिव उच्चककुत्वात । दुग्धापेक्षया धेनोर्मौल्यंभवति, अतएवोक्तं पयसः अधरी भूता मुद्रा, सापि चतुर्वर्गनाशिनी इति पुराणादौ प्रसिद्धम् ॥ ३ ॥

व्रतायते नानुचरेणधेनो-
र्न्यषेधि शेषोप्यनुयायिवर्गः ।
नचान्यतस्तस्यशरीररक्षा-
स्ववीर्यगुप्ताहि मनोः प्रसूतिः ॥

हेव्रतायते ! व्रते अयतिः अथव्रतमेव आयतिर्यस्य, तत्संबुद्धौ । धेनोः चरेण, नु वितर्के अनुननौर्यत्रकर्मणि तद्यथातथा, शेषोपि यायिवर्गः नान्यषेधि, च पुनः तस्य शरी=वाणवान्, अन्यतः अन्यान्, शसि तसिः न ररक्ष, अहिमनोः प्रसूतः अस्ववीर्यगुप्ता । अथ हि यतः तस्य शरी ताः=प्रजाः, न ररक्ष, कीदृशः ? अस्ववीर्यगुप् । अथ तस्य शरी मनोः प्रसूतिर्न अन्यतः अन्यस्य प्रसूतिः । अत एव अस्ववीर्यगुप् । अथ आसु मनोः प्रसूतिषु तस्य शरी अवीर्यगुप्ता प्रसूतिः । अथ आसु मनोः प्रसूतिषु न अन्यस्य प्रसुतिः अत एव ता न ररक्ष । अथ अहिमनोः प्रसूतिः अत एव अन्यान् न ररक्ष ॥ ४ ॥

आस्वादवद्भिः कवलैस्तृणानां
कण्डूयनैर्दंशनिवारणैश्च ।
अव्याहतैः स्वैरगतैः स तस्याः
सम्राट्समाराधनतत्परोऽभूत ॥५॥

सः तस्याः धेनोः समाराधनतत्परोभूत । मरणं मारः । तेन सहितं यत् अधनं तत्र तत्परोभूत, कीदृश्याः धेनोः ? एतैरुपलक्षितायाः, कैः ? तृणानां कवलैः, कीदृशैः आसमन्तात् स्वेषु अदवद्भिः न दव-इव आचरद्भिः, तथा कण्डूयनैः उपलक्षितायाः, कीदृशैः ? दंश निवारणैः, दंशा एव निवारणाः निवारका येषु तैः । कर्तरि ल्युः । तथा स्वैरगतैः उपलक्षितायाः, कीदृशैः ? अव्याहतैः अविभिः मेषैः आहतैः । अथ स्वैः आत्मीयै अगतैः अगमनैः सर्वैः अव्याहतैः वा अथ अव्याहतः न विभः अहतैर्वा । कीदृशः ? सः सम्राट् सम्यक् राति सम्र रलयोः साम्यात् सर्वस्वग्राही स चासौ अट् च सः अटतेः क्विप् । अथ सम्रं अटति तथाविधः ॥ ५ ॥

[ क्रमशः ]

# हिन्दूसमाजस्य घातिकाः प्रथाः ।

लें०—कश्चित् विद्यार्थी

( गताङ्कतोऽवशिष्टम् )



गताङ्के केवलं वैवाहिक्यो दुष्टप्रथा अस्माभिरुल्लेखिता, अधुना काश्चिदवशिष्टरीतयः स्पष्टं लेखनीया भवन्ति । तासामस्पृश्यतानिवारणमेकाऽऽवश्यकी वर्तते । प्राचीनमहर्षिभी राजकार्यनिपुणैः समाजशास्त्रज्ञैश्च सनातनधर्मस्य चिरकालं रक्षणं भूयादेतदर्थं विशिष्टपद्धतेर्मर्यादा कृता । तदनुरूपमाचरणेनास्माकमार्यधर्मः प्राणधारणं कर्तुं शशाक । सा पद्धतिर्वर्णाश्रमव्यवस्थेति नाम्ना सुप्रसिद्धा । प्रत्येकसमाजः कार्यभेदेन सुसंघटितः सुव्यवस्थितश्च भवति । यत्र पञ्चषा मनुष्या एकत्रसङ्गता भूत्वा मिथः सम्बन्धेन कार्याणि कुर्वन्ति, तत्र श्रमविभागेन तत्समूहक्लेशानि दूरीकर्तुं कोऽपि यत्नो भवति । विद्याव्यासङ्गिनां जनानां कार्यम्, अध्ययनमध्यापनञ्च भवति; ते ब्राह्मणसञ्ज्ञां प्राप्ताः । ब्रह्मविद्यानुगामिनो ये ते ब्राह्मणाः । अन्यजनभयनिवारणार्थं विना क्लेशेन कार्यं भवत्विति ये प्रयत्नान् कुर्वन्ति ते 'क्षत्रिया'भिधां प्राप्ताः । क्षेत्ररक्षणं, तत्समूहस्य संघटनं कृत्वा तस्मिन् शान्तिस्थापनञ्च तेषां कर्तव्यम् । कैश्चिदन्नमुत्पादयित्वा समूहान्तर्गतसर्वजनानामुदरभरणभारः स्वशिरसि गृहीतः, ते 'वैश्य' इति नाम्ना ख्याताः । एवम्भूतास्त्रयः पक्षाः स्वकार्ये दत्तचित्ता बभूवुः, किन्तु तेषां काचित् सहाय्यापेक्षाऽवर्तत । कानिचिदवशिष्टकार्याणि बभूवुर्यत्कृतेन विनैते पक्षाः स्वकार्याणि शान्ततासमाधानपूर्वकं साधयितुं न शेकुः । तदा तदवशिष्टकार्यपूरणार्थं सेवाकरणार्थञ्च कैश्चिदुदारहृदयैः स्वदेहमर्पितम् । तदा स समाजशकटो निर्विघ्नोऽभवत् ।

सेवावृत्तिमवलम्बितं पक्षं 'शूद्रेति' नाम्ना सम्बुबुधुः । एवं चतुर्णां वर्णानामुत्पत्तिर्दृश्यते । "ब्रह्म एव इदमग्रमासीदेकमेवतदेकं सन्नव्यभवत्, तच्छ्रेयो रूपमत्यसृजत क्षत्रं इत्यादि, सनैव व्यभवत् सविशमसृजत इत्यादि, सनैवव्यभवत् सशौद्रं वर्णमसृजत इत्यादि, बृहदारण्यकोपनिषदि स्पष्टमेव दृश्यते, योयत्कार्यं कर्तुं शक्नोति तदेव स स्वीकुरुते, तेनैव तस्य वर्णनिर्देशो भवति । विशिष्टसमये ब्राह्मणैः क्षत्रियाणां, क्षत्रियैर्ब्राह्मणवैश्यानां, वैश्यैश्च क्षत्रियशूद्राणां कार्याणि, सम्यक्कृतानि; इतिहासपुराणेषु द्रष्टुमस्माकं सुशकम् । अन्यवर्णानां सहाय्यमापत्काले मनुष्यः कृतवान् । परराष्ट्राक्रमणसमये स्वराष्ट्ररक्षणार्थं यदा क्षत्रिया असमर्था बभूवुस्तदा ब्राह्मणवैश्यशूद्राः क्षत्रियवर्णेतरा कवचखड्गधारिणः समराङ्गणं सम्प्राप्तास्तेषां सहाय्यार्थम् ।

किन्तु कालान्तरेण 'कर्मणा वर्णनिर्णय'—प्रथा नष्टा । 'जन्मना वर्णनिश्चयश्च प्रसृतोऽखिलेषु भारतवर्षेषु ! अधुना तु 'जन्मना वर्णनिश्चयो' जनानां मतो भवति । अनया पद्धत्या समाजहानिरभवत् ! अखण्डः सनातनधर्मः क्रमशः खण्डधर्मो भवि

## हिन्दूसमाजस्य घा

ले०—कश्चित्

( गताङ्कतोऽव



ताङ्के केवलं

अस्माभिरुल्लेखि

शिष्टरीतयः स्पष्ट

तासामस्पृश्यता

वर्तते । प्राचीनमहर्षिभी रा

शास्त्रैश्च सनातनधर्मस्य

देतदर्थं विशिष्टपद्धतेर्मर्यादा

णेनास्माकमार्यधर्मः प्राणधार

पद्धतिर्वर्णाश्रमव्यवस्थेति ना

कसमाजः कार्यभेदेन सुसं

भवति । यत्र पञ्चषा मनुष्य

मिथः सम्बन्धेन कार्याणि कुव

तत्समूहक्लेशानि दूरीकर्तुं के

विद्याव्यासङ्गिनां जनानां काय

श्च भवति; ते ब्राह्मणसंज्ञां

गामिनो ये ते ब्राह्मणाः ।

विना क्लेशेन कार्यं भवत्वि

ते 'क्षत्रिया'भिधां प्राप्ताः ।

संघटनं कृत्वा तस्मिन्

कर्तव्यम् । कैश्चिदन्नमुत्पाद

सर्वजनानामुदरभरणभारः

# सुप्रभातम्

जीवनम्

श्रद्धेय—श्रीदेवीप्रसाद शुक्लः, कविचक्रवर्ती ।



माता रामरतिर्यस्य पिता श्रीदुःखभञ्जनः ।

सोऽयं देवीप्रसादाख्यः कविः शुक्लो विराजते ॥

कलयति । तस्मिन्ननेकसमाजाः स्थापिताः, येषां पारस्परिकं वैरं प्रतिदिनं वर्धते। ब्राह्मणेषु च शताधिका जातयः परिकल्पिताः, तासामपि परस्परप्रेमसम्बन्धो नास्तीत्यनुभवसिद्धम् । क्षत्रियवैश्यशूद्रेषु तदेव दृश्यते विचित्रचित्रम् । दक्षिणदेशेषु प्रतिदिनं ब्राह्मणब्राह्मणेतरयोर्वैरं वृद्धिं गच्छति । किमियं समाजस्योन्नतिरवनतिर्वा भवति ? एवमाचरणेन पुरातनधर्मरक्षणं कथं भवेत् ? तं धर्मवृक्षं भक्षयन्ति सूक्ष्मतमा जन्तवः । सावधानमनसा तान्दूरीकृत्य तद्वृक्षवर्धनं सुष्ठु सदुपायम्, यद्येवं न वयं कुर्मस्तर्हि जगतीषु वैदिकधर्मस्य नामापि श्रोतुं न पारयिष्यामः, दूरीकुर्वन्तु भवन्तस्तत्तज्जातिभेदम् । यथा वयं 'मानवा' स्तथा तेऽपि । तेषामधिकारो मा नश्येत् ! तानस्पृश्यान् गणयित्वा तेषामनादरं मा कुरुत ! यदि तेऽस्वच्छा वर्तन्ते तर्हि तेभ्यो ज्ञानदानं कृत्वा स्वच्छताशिक्षादानमस्माकं परमकर्तव्यम् ।

अद्य ये जना अस्पृश्या भवन्ति तेष्वपि बुद्धिमन्तो वर्तन्ते । योग्यमार्गेण तेभ्यो यदि सुशिक्षणं दत्तं स्यात्तर्हि ते 'महर्षि' पदं प्राप्तुं शक्नुवन्ति । केषांचिदस्पृश्यानामाचरणमेतादृक् शुद्धं वर्तते; यद् 'ब्राह्मण' पदलाञ्छनैः (जन्मना, न तु ज्ञानेन) आधुनिकजनैस्तेषां दर्शनं पादसेवनं च कृत्वा प्रतिदिनं स्वकृतपापक्षालनं करणीयमिति । किन्त्वेवंभूतांस्तांस्ते 'शूद्रकुले प्रसूताः' एतदर्थं वयं गर्वाढ्यप्रकृतयस्तिरस्कुर्मः । धिगस्मान् ! स ब्राह्मणो यो ब्रह्मज्ञानी, जीवन्मुक्तः स एव । स एव क्षत्रियो येन वीरोचितकृत्यानि सम्पादितानि । अधुना तु गर्दभरवेण कम्पमानाः 'क्षत्रिया' दृश्यन्ते सर्वत्र !! अस्तु । न वयमिच्छामः सर्ववर्णानामन्नसम्बन्धं ; नापि वा तेषां विवाह-व्यवहारम् । किन्तु तेषाम् 'अस्पृश्यत्वं' दूरीकर्तुमिच्छामः केवलम् ।

इदमस्माकं हर्षस्थानं यदार्यसमाजेनायं कार्यभारः स्वस्कन्धे गृहीत्वा कल्पनातीतं यशः प्राप्तमिति । उपरिनिर्दिष्टाया दुष्प्रथाया निराकरणार्थं स आर्यसमाजः कायवाङ्मनोभिर्यतते । ततस्तस्य प्रसारोऽपि भवति । वस्तुत आर्यसमाजो नास्ति कोऽप्यन्यो धर्मः । सनातनार्यधर्मस्य सोऽङ्गमेव । तमन्यं कल्पयित्वा स्वहस्तगतपरशुना वयमस्माकमेव पादेष्वाघातं कुर्मः । तर्हि भेदभावं त्यक्त्वाऽस्मिन् कार्ये तेभ्यः सहाय्यं दातुमस्माकमुचितम् एवं कृतेऽस्माकं धर्मः शुद्धस्वरूपं धारयिष्यति ।

'धर्मसंस्थापनार्थाय सम्भवामि युगे युगे' इति वदन् स दयाधनः प्रभुरस्मभ्यं सद्बुद्धिं ददात्विति प्रार्थयित्वा लेखनीं विरमयामः ।

—:*:—

## पाणिनीय-प्रकाशः ।

(ले०-महामहोपाध्याय श्रीदेवीप्रसाद शर्म्मा, शुक्लः, कविचक्रवर्ती)

[ क्रमागतः ]

ओम्याङि च परेऽवर्णा त्स्यात्पूर्वपरयोर्द्वयोः ॥
पररूपमचोरेकादेश इत्येतदिष्यते ॥ १०५ ॥
शिवायोन्नम इत्यस्य मन्त्रस्य जपतः पुमान् ॥
विहाय सर्वदुःखानि भुक्तिम्मुक्तिं समश्नुते ॥१०६॥

धातुः पुरोपसर्गेण युज्यते तदनन्तरम् ॥
अन्येन सहसंयोगं भजतोति विबुध्यताम् ॥ १०७ ॥
धातूपसर्गयोः कार्यमन्तरङ्गं स्मृतं ननु ॥
कार्येऽन्तरङ्गे कर्त्तव्ये वहिरङ्गं न सिध्यति ॥ १०८ ॥
योऽयमेकादेश आस्ते स पूर्वस्याऽन्तवत्स्मृतः ॥
तथाऽन्त्यस्याऽऽदिवच्चप्रोक्तमेतन्महर्षिणा ॥ १०९ ॥
वैकुण्ठमागतं शम्भुं विलोक्याऽऽदरतो भृशम् ॥
शिवेहीतिवदन् विष्णुः समुत्तस्थौ निजासनात् ॥११०॥
ध्वन्यनुकरणस्याऽनेकाचोऽच्छब्दोऽस्ति यस्ततः परतः॥
इतिशब्दे पररूपं ह्येकादेशस्तु पूर्वपरयोस्स्यात् ॥१११॥
भयदायीपटित्यासीत्त्रुट्यतो धनुषो ध्वनिः ॥
अनेकाच इतिप्रोक्तेश्श्रादित्यादौ न दुष्टता ॥ ११२ ॥
ध्वन्यनुकरणस्याऽने-काचश्शब्दस्य बहुलं द्वे ॥
डाचूप्रत्यये परेस्तस्त्विति वहुलोक्तेरिह द्वित्वम् ॥११३
द्विरुक्तस्य परं रूपं स्यादाम्रेडितसंज्ञकम् ॥
आम्रेडितस्य नो तस्य प्रागुक्तं स्यात्परे सति ॥११४॥
इतिशब्दे तदन्त्यस्य तकारस्य तु वा भवेत् ॥
पटत्पटेत्यभूदुच्चैश्चापस्य त्रुटतो ध्वनिः ॥ ११५ ॥
झषांजशः पदान्ते स्युः पटत्पटदितिध्वनिम् ॥
चर्वन्करोति वागीशश्चिद्रूपं ब्रह्म कथ्यते ॥ ११६ ॥
अकः सवर्णेऽचिपरे स्यात्पूर्वपरयोरचोः ॥
एकादेशो दीर्घसंज्ञ इति पाणिनिनोदितम् ॥ ११७ ॥
शिरश्छिच्छेददैत्यारिश्श्रीशश्चक्रेण विद्विषाम् ॥
विष्णूदयो न कस्येष्टो होतॄकारः प्रकाशते ॥ ११८ ॥
पदान्तादेङोऽतिपरेस्यात्पूर्वपरयोरचोः ॥
एकादेशः पूर्वरूपमिति पाणिनिनेरितम् ॥ ११९ ॥
हरेऽव करुणां कृत्वा दीनं विष्णोऽव मां सदा ॥
एङन्तस्य पदान्ते गोः प्रकृतित्वं परेऽति वा ॥१२०॥
लोके वेदे च गोअग्रं सद्गोग्रंपूज्यतामतः ॥
पदान्त इतिनिर्देशाद्गोरित्यत्र न दुष्टता ॥ १२१ ॥
न चित्रग्वग्रमित्यादि प्रयोगेष्वस्ति दुष्टता ॥
एङन्तस्येति निर्देशादितिबोध्यं बुभुत्सुभिः ॥ १२२ ॥
आदेशः शिदनेकाल् च सर्वस्य स्थानिनो भवेत् ॥
आदेशो ङिदनेकालूयोलोऽन्त्यस्यैवभवेदिह ॥ १२३

—[ क्रमशः ]

# पञ्चनदीयो विश्वविद्यालयः

( एतन्नामा लेखः, श्रीमतः पण्डित दीनानाथ शर्मणः शास्त्रिणो गतपौषमाघयोः प्रकाशित आसीत्। इह तस्योत्तरे किञ्चिल्लेखितव्यमस्ति । संस्कृत गिरामुन्नतिमुद्दिश्य किञ्चिल्लिख्यते, नेर्ष्या, नासूया, नापीदृक् कारणान्तरमस्ति इति मास्म तत्रभवान्कोप गच्छेत् )।

"पुण्ड्रेक्षुं चूषतः कस्यापि पुरुषस्य नासा अमेका मक्षिका पुनः पुनरध्यास्त । बहुकृत्वो वार्य माणापि यावत्सा नामुञ्चत् तावत्क्रुद्धः सन् पुरुषश्छुरिकया नासामेवाकृन्तत्—चल, आसनमे नास्ति, इदानीं क्वासिष्यसे ?" इत्येवमल्पस्य हेतो र्बहुहातुमसाम्प्रतम् । दुग्धपात्रे यदि मक्षिकाऽ पतेत् तर्हि दुग्धं नोत्सृज्यते । तत्रभवाँल्लिखति "अधुना पञ्चनदीयविश्वविद्यालयेन ईदृशी सुविधा व्यधायि, येन प्रवेशिका (matriculation) दित्सु विद्यार्थी एकमास एव प्राज्ञपरीक्षां प्रविश्य उत्तीर्णत लाभमश्नुते, नेदं मृषोद्यम् । अहह ! कीदृशी शोच्या दशा ? किमनेनैव विधिना संस्कृतप्रचार आश

स्यते । सम्मतौ तु "अस्मात् प्रचारात् तदभाव एव श्रेयान्, सँस्कृतनदीष्णानामवहेला प्रतिष्ठाविरहस्तु वा तदसत्त्वेन सेत्स्यति" इति । सर्वमेतदुक्तं मन्ये । साधूक्तम् । यदा प्रचार एव न भविष्यति, तदा नदीष्णानामवहेला प्रतिष्ठाविरहो वा कुतः सेत्स्यति इति । किन्तु तत्रभवत इयं नीतिः कदाचित्पुष्प्येत्तर्हि कटु फलं जनयेत्, विपरीताः पाशाः पतेयुरित्येतावन्मात्रमवधेयम् । कथमितिचेत्तदवधीयताम्—

यदि भारते पञ्चनदे वा सँस्कृतभाषाया प्रचार इष्टस्तर्हि योग्यताप्रश्नो दूरे क्षिप्यताम् । अथो यदि योग्यताऽपेक्ष्यते तदा प्रचारो नेष्यताम् । एकस्मिन्कोषे द्वौ चन्द्रहासौ प्रवेष्टुं नार्हतः । अथेदानीं निश्चेयं यदनयोः कतरो न इष्टतर इति । सर्वे योग्या एव सन्ति किम्पुनरिदानीन्तनाः । अद्यत्वे तु जगति विरला एव सन्ति सँस्कृतभाषयाः परिचिताः । एतत्सप्रमाणमुदाहर्तुं शक्यते यदधुनाऽस्माकं देशे भूयांसस्तादृशा भ्रातरो विद्यन्ते ये विदन्ति—यया ब्राह्मणानां जोविका चलति । याचोपनयन-विवाह-मृतक-संस्कार—सम्पादनमात्र एव प्रयुज्यते सा संस्कृता भाषेति । ते न जानन्ति यद् अस्यां भाषायामपि विज्ञानकोषो गुप्त आस्ते । इदमपि कलाकौशल भाण्डागारमस्तीति ।

एवं स्थिते एतत्कथनं नोचितं प्रतिभाति यद्-अस्मात् प्रचारात्तदभाव एव श्रेयान् इति । कोऽसौ सुमना योऽद्यत्वे संस्कृतभाषाभ्युदयं नेच्छति ? अखिल भारतवर्षीय –संस्कृत-साहित्य–सम्मेलनोत्पत्तिरेतस्मादेव वीजात्, यत्कथञ्चित्संस्कृतभाषायाः प्रचारो भवेदिति । इदमेव तस्य षण्णां प्रयोजनानां सर्वप्रथमं प्रधानं च प्रयोजनमस्ति । एतदर्थमेव प्रतिवर्षं सम्मेलने विविधा उपायाः प्रस्तूयन्ते-आचर्यन्ते च । योग्यता तु संस्कृतभाषा प्रचारतरोः फलम् । फलञ्च वृत्ते सति स्यात्, इति योग्यतामूलत्वात्प्रचार एव सम्प्रतीष्टतरः । तत्र चायमेकतम उपाय एव यत्-प्राज्ञपरीक्षायामधुना पञ्चनदीय-विश्वविद्यालयेन ईदृशी सुविधा व्यधायि '—इति । नेयं शोच्यादशाऽपि तु हर्षास्पदमेतत् । इत्थं हि अभीष्टः संस्कृत प्रचारः सुखं संपत्स्यते । शोचनीयन्त्वेतदस्ति यत्-' शास्त्रिपरीक्षायां सुविधा न दृश्यते ।

शास्त्रिपरीक्षापरिणतौ प्रतिशतं पञ्चदश छात्रा उत्तरन्तीति ', तेन हीतरे छात्राः संस्कृताध्ययनाद् ग्लायन्ते ।

ननु 'एकश्चन्द्रस्तमोहन्ति न वै ताराः सहस्रशः' इति योग्यः शास्त्री एक एव पर्याप्तः, किन्नोऽल्पज्ञ-शास्त्रिसम्मर्देन ? अपि च शास्त्रिणोऽपि षष्टिः प्रतिशतमुत्तरेयुश्चेत्तदेतन्निः संशयं यत् ते प्रायेण बहुपटव एव स्युः । अथ च भविष्यत्काले त एवाध्यापकाः स्युः, तदा तु महानर्थपरम्परा । नूनं सँस्कृतभाषायाः क्षय एव । तेन ' सौष्ठवमेवाकलितमास्ते यत् शास्त्रिपरीक्षायां सुविधा न दृश्यते ' इति चेत् । सत्यम्, किन्त्वेवङ्कारं प्रचारमार्गो रुध्यते । तेन तथा चिन्तनीयं यथा सर्पोऽपि नश्येल्लगुडोऽपि रक्ष्यताम् । प्रचारमार्गोऽपि न पिधीयताम्, योग्यतापि भवेत् ।

अथ योग्यता-सम्पादनाय नैषमार्गः साधीयान् यत्परिणामेऽधिकतराश्छात्रा अनुत्तीर्णाः क्रियेरन्, यद्वा प्रश्नपत्राणि कठिनानि स्युः, अथवाङ्कवितरणे

सङ्कोचो विधीयेत । कस्तर्हि साधीयान् इति पुरस्ताच्चिन्त्येत । अध्यापनार्थं यद्दु योग्यानामेवावश्यकता तदर्थमपि प्रबन्धोऽस्त्येव । तथाहि-उत्तीर्णाश्छात्रास्तावत् तिसृषु श्रेणिषु ( Divisions ) विभज्यन्ते । ताश्चोत्तममध्यमाधमा इति । सर्वत्र प्राय उत्तमश्रेण्यामेवोत्तीर्णाश्छात्रा अध्यापनार्थं नियुज्यन्ते नियोज्याश्च । उत्तमश्रेण्यामुत्तितीर्षूणां च परीक्षार्थिनां कृते यथोचितं कार्कश्यमाचर्यते आचरणीयश्च । सर्वत्र कार्कश्याचरणन्तु संस्कृतभाषाप्रचारे महतो महीयान्प्रतिबन्धकः ।

ननु परीक्षायां कर्कशे व्यवहारे क्रियमाणे उत्तीर्णच्छात्राणां प्रतिशतं नवतिश्छात्रा योग्याः सम्भवेयुः । मृदुले व्यवहारे च तेऽप्युपेक्षां करिष्यन्ति, तेन प्रतिशतं दश विंशतिर्वापि योग्या न संभवेयुरिति चेत् ; साधु कथितम्, किन्तु अन्येऽपि तत्र बहवः पन्थानः सन्ति, यैः खलु वैदुष्यं सम्पाद्येत । तथाहि—वर्तमानाध्ययनाध्यापनपरीक्षण—परिपाटी परिवर्तः स्यात् । प्रायः क्रियात्मकोऽभ्यासो भवेत् । श्लीला ग्रन्थाः पाठ्येरन् ( तत्रभवतोऽश्लीलग्रन्थबहिष्करण प्रस्तावोऽनुमोद्यतेतराम् ) पठनपाठनापेक्षया लेखाय बहुतरमवधानं दीयेतेत्येवमादयः । किञ्च वैदुष्याभावे सर्वगरिष्ठं कारणन्त्वेतदस्ति यदल्पीयसा कालेन भूयो ज्ञानं सञ्चिकीर्ष्यते । संस्कृतविद्यार्थिनो हि प्रायः कौमारात्यये पठनमारभमाणा अवलोक्यन्ते । जीविकाचिन्ताकुला यथाकथं त्रिचतुरैर्हायनैः सकलमध्ययनं समीप्सन्ति । पयोराशिं कलशे बुभूर्षन्ति । बाल्यात्प्रभृत्येव यदि बालाः संस्कृतां गिरं पाठ्येरन्, तर्हि पक्वयसि कथन्न ते योग्या भवेयुः ? कथं न पण्डिताः स्युः ?

एवं हीतरे भूयांस उपायाः सन्ति पाण्डित्यमुन्नमयितुम्, न केवलं परीक्षायां काठिन्याचरणमेः साधकतमम् । मास्म मुधैव वराकाश्छात्रा निपीड्यन्ते । 'आगमिष्यति यत्पत्रं तदस्मांस्तारयिष्यति' इत्याशातन्तुस्तेषां सहसैव न त्रुट्येत्, न त्रुट्येत् ।

—बहादुरचन्द्रगुप्तः शास्त्री

# सौवरः ।

( स्वरमीमांसा )

ले०-तारादत्तपन्तः, साहित्याचार्यः, व्याकरणकाव्य-तीर्थः दर्शनशास्त्री ।

कोऽयं सौवरः ? स्वरमधिकृत्य कृतो ग्रन्थः कोऽयं ? तद्धितप्रकृतिः शब्दः । रान्तो वाऽदन्तो वा रान्तस्याऽव्ययत्वेन भमात्रे टिलोपविधानात् सौ इति भवति । कथमपदान्ताद्वकारादैजागमः द्वारादीनाञ्चेति विद्धि ।

अथ कोऽर्थः स्वरशब्दस्य ? शब्दार्थकात्स्व धातोः स्वरतीति विगृह्य पचाद्यचि, शब्दजनक वायुव्यापारो, वायुश्च, स्वरपदार्थः । उदात्तोऽनुदात्तः स्वरितश्चेति त्रिविधः सः । तदाश्रयाश्च वर्णाः स्वरशब्देन व्यवह्रियन्ते । तत्रैव षड्जादयः । तदयं नानार्थः सम्पन्नः ।

१ नासासञ्चारी वायुः स्वरः, स्वरोदये विचारितः । स चायं स्वरो विचित्रः । कदाचिद्दक्षिणनासापुटेन सञ्चरति, कदाचिद्वामेन, कदाचिदुभाभ्याम्, तस्य नित्यमभ्यासकरणेनैव फलादेशकथनयोग्यो भवति स्वरज्ञः । तत्र द्युनिशोः प्रहरेषु विभिन्नस्तस्य सञ्चारः । विभिन्नमेव फलम् ।

अनुमीयते खलु नरपतिरत्नचर्या-पर्यालोचनया, स्वरज्ञानेनैव त्रिकालज्ञता प्राचामासीदिति । एतस्य स्वतन्त्रो विचारः पुनः प्रकरणान्तरे निरूपयिष्यते ।

वर्णजनको वायुव्यापाररूपः स्वरस्त्रिविधः । तद्यथा-वर्णजनकानां कण्ठादीनां (वाङ्मीमांसा-निर्णीतानाम्) स्थानानां त्रये भागाः । ऊर्द्धम्, अधः, मध्यञ्चेति । तथाच प्रयत्नप्रेरितो वातः कण्ठस्योर्द्ध्वभागस्पर्शेन चेदकारञ्जनयेत्स अकारः,-उदात्तोदान- व्यापार-जनितत्वेनोदात्तः । स एव वातः कण्ठाधोभागस्पर्शेन चेदकारञ्जनयेत्स-अनुदात्त-वातव्यापार-जनितत्वेनानुदात्तः । मध्य-भागस्पर्शेन चेज्जनयेत्स-उदात्तानुदात्त-रूप-वायु-व्यापारेण समाहृतेन सञ्जात-स्वर इति-स्वरित-इत्युच्यते ।

एवं तालवादीनां भागत्रयकरणेनोकारादीनां तज्जनकवायुव्यापारस्य च त्रिविधत्वमूहनीयम् ।

तदेवमकारादयः पञ्चसमानाः, एकारादीनि चत्वारि सन्ध्यक्षराणि, नववर्णाः स्वरधर्मवत्त्वेन धर्मिणोपि स्वरा-इत्युच्यन्ते । एतेषाम्—भेदान् प्रयोगान परीहारांश्च निरूपयिष्यामः ।

इति स्वरनिर्देशप्रकरणम् ।

# विराम-चिन्हानि ।



ले० -श्रीबालमुकुन्द शर्म्मा, सारस्वतः,

अध्यापकः—रणवीर-पाठशालायाः,

यदा मनुष्यः केनचित् भाषणं करोति, व्याख्यानं वा ददाति, तदा स स्वीयानां भावानां प्रकाशनाय विविधाश्चेष्टाः करोति । स कदाचित् मृदुशब्दैः, कदाचित् कठोर-शब्दैः, कदाचित् विचित्रैः प्रकारैः, स्वीयान् हृद्गतान् भावान् प्रकटीकरोति । परन्तु यदा स लिखित्वा स्वीयान् भावान् अन्येषामुपरि प्रकाशयितुमभिलषति, तदा तस्य, विविध चेष्टानां, स्वराणां, भावानां प्रकटीकरणाय, विविधानां चिह्नानां प्रयोग आवश्यको भवति । यथाः—

"इदमुचितम्" "इदमुचितम् ?"

अत्र यदि द्वितीये वाक्ये '?' इदं चिन्हं न भवेत्तदा द्वयोरपि वाक्ययोः कश्चन भेदो नास्ति । परन्तु चिन्हेन द्वयोरपि भावे भेदः प्रतीयते । एवमेव चिन्हैर्महदन्तरं भवति ।

प्रथमं संस्कृते हिन्दी भाषायां वा (।) इमं पूर्णविरामं त्यक्त्वा नासीदन्यत् किमपि चिन्हम्, किन्तु हिन्दी-गद्यभागस्य समुन्नत्या, प्रचुरेण च प्रचारेण, आंग्लभाषादिवदस्यामपि विविध-भाव-प्रकाशनाय विविध-चिह्नानां प्रयोगो भवति । एतस्य प्रधानं कारणमिदमेव, यत् पूर्वं हिन्दीभाषायां गौण-वाक्यानां लेखनं नासीत्, साम्प्रतं तेषां लेखन-प्रथा प्रचुरं प्रचलिता विद्यते । अतः साम्प्रतं विराम-चिह्नानां महती-आवश्यकता दृश्यते ।

हिन्दीभाषायान्तु यथा कथमपि विराम-चिह्नानां प्रयोगः प्रचलित एव, परन्तु संस्कृतभाषायां नास्ति सम्यक् प्रयोग उपयोगो वा । का कथा छात्राणाम्? पण्डिता एव बहवो न जानन्ति विरामचिह्नानामुपयोगम् ।

विरामचिन्हानामुपयोगेन-अर्थ ज्ञाने कियती विलक्षणता समुत्पद्यते- इति तु प्रत्यक्ष मेव; तथाप्यत्र कतिचिदुदाहरणानि दीयन्ते यैरर्थस्य-अनर्थोऽपि स्पष्टं प्रतीयते; यथाः—

[१] "असत्य-भाषणं कर्तव्यं, न दण्डो भविष्यति । तथा—असत्य-भाषणं कर्तव्यं न, दण्डो भविष्यति । "

[२] "एतस्य नैतत तात्पर्यम् यत्, भवन्तः, स्वीकृतं कार्यं त्यजन्तु । "

एवमन्यान्यप्युदाहरणानि दातुं शक्यन्ते ।

हिन्दी-साहित्ये साम्प्रतं निम्नलिखितानि चिन्हानि कार्ये समायान्ति । अर्थावबोधार्थं चिह्नानां प्रयोग उपयोगश्च नितरामावश्यकः ।

*विराम चिह्नानां नामानि, रूपाणि च ।*

[१]—अल्प-विरामः, पाद-विरामः, प्राथमिका वा-(,)

[२]—अपूर्ण-विरामः, न्यून-विरामो वा-(:)

[३]—अर्द्ध विरामः-(;)

[४]—पूर्ण-विरामः-(।)-(॥)

[५]—विस्मयादि बोधकम्, सम्बोधनार्थम्, आश्चर्य चिह्नम् (!) (!!) (!!!)

[६]—प्रश्नचिह्नम्, काकुचिह्नम् वा (?)

[७]—कोष्टकम् बन्धनी वा-( () )-( [] )

[८]—आदेशकम्-(—)

[९]—संयोजकम्-(-)

[१०]—उद्धरणम्-(" ")

[११]—वर्जनम्-(……) (× × ×)

[१२]—त्रुटि-चिह्नम्-(^)

[१३]—टिप्पणी-सूचकम्-( × ,*,‡,¶,†, + )

[१४]—प्रदर्शक-चिन्हम्-(:— )

[१५]—कस्यापि शब्दस्य लघुरूपलेखने, खण्डरूप लेखने तस्य शब्दस्य प्रथमाक्षरात् पश्चात् ( ० ) शून्य दातव्यम् ।

*अङ्कानां चिह्नानि ।*

[१६] योग-चिह्नम्—( + )

[१७] गुणन-चिह्नम्—( × )

[१८] न्यूनीकरण चिह्नम्—( — )

[१९] भाग-चिह्नम्—( ÷ )

प्रत्येकस्य विवरणमग्रे ।

—:*:—



## मुद्रणालयः ।

( *ले० श्री शिवरामशर्म्मा, सारस्वतः,* छात्रः, सारस्वत भवनस्य ) ।

**प्रियवराः भ्रातरः !**

भवन्त एतज्जानन्त्येव यदेतत् संस्कृत-साहित्य समाजस्य मुखपत्रं सुप्रभातं भवत् सेवायां प्रतिमासं सहस्रशो मुद्रयित्वाऽऽगच्छति । सम्पादकाः लेखकाश्च हस्तलिखितान् यान् लेखान् साधारणपत्रोपरि लिखित्वा मुद्राणालये प्रेषयन्ति, तान् मुद्रणालयाध्यक्षा नवीनाकारेण शीसकाक्षरैर्मुद्रयित्वा ददति । भवन्त एव विचारयन्तु यत् यदि मुद्रणालयो नाभविष्यत्तर्हि कार्य-निर्वाहः कथमभविष्यत

इदानीन्तु सहस्रशो महानुभावाः प्रतिमासं सुप्रभातमवलोक्य प्रफुल्लिता भवन्ति, किन्ते विना मुद्रणालयमेवमानन्दं कर्तुं शक्नुवन्ति । सम्पादकमहाशयाः प्रतिमासं हस्ताभ्यां दश वा पञ्चदश वा पत्राणि लेखितुमेव प्रभवन्ति । एतस्यामवस्थायान्ते सर्वेषां ग्राहकमहाशयानां मनः प्रसादयितुं कथं पारयेयुः, ईदृशानि सुन्दराणि, अक्षराणि वा नयनानन्ददायीनि कथं भवेयुः । धन्यास्ते महानुभावाः, यैः खलु पूर्वं मुद्रणालया आविष्कृताः, ते निःसंशयमस्माकं धन्यवादार्हाः सन्ति ।

सर्वप्रथमं 'चीन'-देशे मुद्रणालयस्याविष्कारः समभूत् । अद्यतः सहस्रवर्ष–पूर्वं चीनदेशीयेन सुप्रसिद्धेन निपुणतरेण 'फुंगतेऊ'–नाम्ना राजमन्त्रिणा काष्ठाक्षराणि निर्माय कार्यारम्भः कृतः । तेन तत्साहाय्येन पत्रप्रकाशनं कृतमासीत्, परन्तु तेन तस्य सम्यक्तया समुन्नतिर्वा नाभवत् ।

आधुनिक–मुद्रणयन्त्राणां निर्माण-वैशिष्ट्यं, सौन्दर्यश्च योरोपीयानां कला-कौशलमेव वर्तते ।

१२२५ तमे खिस्ताब्दे योरोपदेशेऽपि काष्ठाक्षरवतो मुद्रायन्त्रालयस्य कार्यं प्रारब्धम् । पुरातत्वविदां कथनं यत् योरोपीयैरपि 'चीन, देशीयेभ्य एव मुद्रणालय–निर्माण शिक्षा प्राप्ता । किन्त्वाधुनिकाकारवतो मुद्रायन्त्रालयस्य आविष्कारकः कश्चन शर्मण्य—( Germany ) देशीयः 'गटनवर्ग' नामा महाशय एवाऽऽसीत् । तस्य जन्म शर्मण्य देशे ( जर्मन ) 'मैंज' नाम्नि नगरे समभूत् ।

( क्रमशः )




[ ले०-हिन्दी-साहित्य-सम्राट् श्री किशोरीलाल गोस्वामी ]

## सप्तमः परिच्छेदः ।

*सन्यासिनी, योगिनी च ।*

यत्काषवादजनितं भयमाशु सर्वं ।
खेदं विहाय विरहानलजं स्वकीयम् ॥
कार्यश्च कोपि नहि संशय आयताक्षि !
गच्छाधुना पतिगृहं सुखिनी भव त्वम् ॥

—कमलाकरस्य ।

अथैकस्मिन् दिने अपराह्णवेलायां वन्ये पर्णकुटीरे स्थिते द्वे प्रौढे, परस्परमालापं चक्रतुः । तयोर्मध्ये एका सन्यासिनी, अपरा च योगिनी ।

योगिनी—ततः परं किं जातम् ?

सन्यासिनी—ततः परं यज्जातम्, तत् शृणु । यदा मया तस्य शयनमन्दिरे प्रवेशः कृतः, तदैव तस्य निद्रा विलयं गता । इत्यवलोक्य, मनसि चैवं विचिन्त्य —'न स्थानमन्यमत्र'—इति; अहं सपदि तस्मात् स्थानात् पलायिता, लुक्कायिता च तत्रैवान्धकारमये गृह-कोणे । ततः परं तेन स्वामिना महान् कोलाहलः कृतः, आहूय च सर्वेभ्यो दासदासीजनेभ्यः चौरागमनवार्ता निवेदिता । इत्येतत् सर्वं श्रुत्वैव भिया तस्मात् स्थानात् पलायिताऽहम् ।

योगिनी—सखि, तव पलायनमनुचितं जातम्, तत्रैव स्थित्वा त्वया, स्वामिना सह साक्षात्कारो विधेयः ।

सन्यासिनी—सत्यं वदसि वयस्ये ! किन्तु किं करोमि ? तस्मिन्नवसरे भिया, हृत्कम्पवशेन च तत्रावस्थानं कर्तुं नाहं समर्था-अभवम् ।

योगिनी—अनेन प्रकारेण कियत् कालं यावत् स्थास्यति ?

सन्यासिनी—यावत्कालपर्यन्तं विधाता न प्रसाद-सुमुखो भविष्यति । भवतु तावत्, इदानीं वद त्वम्, इतः परं किमनुष्ठेयम् ?

योगिनी—शृणु सखि ! सत्वरमेव स्वामिना साकं सम्मिलिता भव !

सन्यासिनी—तत्तु कर्तव्यमेव । किंतु किं करोमि सखि ! भयेन नाग्रेसरं भवति मे मनः ।

योगिनी—साध्वि ! साहसं कुरु; हृदयबलं मा जहीहि ! कुरु स्वामिनः साक्षात्कारम् ।

सन्यासिनी—तत्तु करिष्याम्येव ।

योगिनी—अपि ब्रवीमि, किं ज्ञातवती त्वां लावण्यमयी ?

सन्यासिनी—सा मुग्धा कथं ज्ञास्यति माम् !

योगिनी—लावण्यमयी-सुधाकरयोर्मध्ये अपि जातं पवित्रं प्रेम ?

सन्यासिनी—अयि ! जातं तयोरकृत्रिमं प्रेम, तौ द्वावपि प्रत्यहं पुष्पोद्याने क्रीडतः, इत्यवलोक्य जानामि, यत् विधात्रा एव अनयोः संयोगः स्थिरीकृतः, संस्थापितश्च ।

योगिनी—श्रुत्वैतत् सुखिनी संवृत्ताऽस्मि । अपि श्रुता विधात्रा मे प्रार्थना । वद वयस्ये ! एतद्रहस्यं त्वया किं तस्मै स्वामिने नोक्तम् ?

सन्यासिनी—किमपि नोक्तम्, सखि !

योगिनी—मह्यं सुधाकरं दत्वाऽपि त्वं कियत्कालपर्यन्तं पतिसविधे एव अतिष्ठः । तस्मिन् समयेऽपि त्वया एतद्रहस्यं न भर्त्तुः कर्णगोचरीकृतम् ?

सन्यासिनी—नैव कृतं, सखि ! तत्रेदमेव कारणम्, शृणु, वयस्ये ! यदा त्वया सुधाकरः समानीतः तदा अहं मूर्छां गतवती, पश्चात् ज्ञाने संवृत्ते मयेदं श्रुतम्, यत् "धात्री, त्वं शिशोर्मृतदेहं गृहीत्वा इतो गच्छ ! " इति । ततः परं मनसि एवंविधाया आशाया अपि सञ्चारोजातः, यत् शिशुर्जीवतीति । त्वयापि तु मत्सकाशे इदमेवप्रोक्तम्, यत् " पुत्रे सञ्जाते तमुपादायाऽहं प्रच्छन्नतयैव स्थानान्तरं गमिष्यामि "-इति । इदमेव ममाशायाः बीजम् । परं सर्वैरेवमेवोक्तम्, यत् "मृत एव बालको जातः" इति । ततः परं कियद्वर्षानन्तरं तव दर्शनं नोपलब्धं मया; तदा मदीयाया आशायाः स्थानं निराशा जग्राह । अतएव स्वस्वामि समीपे सा वार्त्ता नोक्ता या आवयोर्मध्ये स्थिरीकृताऽसीत् ।

योगिनी—अस्तु तावत्, इदानीं वद सखि, यत् त्वया मत्सकाशे यदङ्गीकृतम्, तत्तु न विस्मृतम् ?

सन्यासिनी—नहि आलि ! साऽङ्गीकृता वार्ता किं विस्मर्तव्या ? त्वया बहुवर्षपर्यन्तं यथायोग्य लालनं पालनञ्च कृत्वा मदीयं हृदयरत्नं सयत्नं प्रत्यर्पितम्, एतावता त्वदग्रे मया यदङ्गीकृतम् तज्जीवनावधि न विस्मरिष्यामि, किन्तु, सखि ! त्वं का ? प्रथमं स्व-वृत्तान्तं तु वद ?

योगिनी—आलि ! स्वस्था भव । समये आगते सर्वं रहस्यं कथयिष्यामि ।

सन्यासिनी—अधुनैव कथं न वदसि ?

अग्रे २९ पृष्ठे द्रष्टव्यम् ।

## सुभाषिते ।

(१)

सुदण्डधार्या प्रतिकूलमित्वरी,
प्रतारयन्ती जनसङ्गमादरात् ।
सुदारुणा केन विनिर्मिताऽद्भुता,
जडाश्रया दुर्जन-भारती-तरी ॥

(२)

महान्तमप्यात्मनि विस्मयन्ति ये,
लघुस्वरूपं मुकुराः खला इव ।
विभूति-दिग्धाः प्रतिगृह्णतेऽन्यथा,
परानुरूपं यदि ते न विस्मयः ॥

—रामेश्वर शर्म्मा

## प्रश्नोत्तराणि ।

नाम-धाम-गुप्तिः ।

लेखकः—

प्रश्नोत्तर प्रथमाक्षर-नामधेयः ।

—:*:—

का कृष्णस्य प्रियाऽस्ति भो बुधवराः ?
किं विष्णुनामान्तरम् ?
द्रौपद्याः किमु वाचकं ?
निरसने धातुश्च कः कीर्तितः ?
किं वा नाम खगेश्वरस्य गदितं ?
धातुश्च कः खण्डने ?
प्रश्नस्योत्तर-पूर्व-वर्ण-जनिता
ज्ञेया मदीयाऽभिधा ॥ १ ॥

*　　*　　*　　*



### व्याकरण-विषयकः प्रश्नः ।

यस्य धातोस्तु रूपाणि लुङ्लृङोः सदृशानि च ।
चत्वारि किल जायन्ते स हि धातुः प्रदर्श्यताम् ॥

—मूलशंकर शर्मा, व्यासः

## जगदीश्वरी-वन्दना ।

जगदीश्वरी ! शुभं नः शक्ता त्वमेव दातुम् ।
भक्तास्तवानुरक्ताः सोढुं व्यथामशक्ताः ।
तेषां त्वमेव शक्ता बाधामधो विधातुम् ॥
जगदीश्वरी० ॥ १ ॥

दुष्टा अहर्निशं हा ! घ्नन्ति ह्यसंख्यका गाः ।
मातर्जगत्तले ना कोप्यस्ति तास्तु पातुम् !
जगदीश्वरी० ॥ २ ॥

आयत्त एष देशः क्व स्यात् सुखस्य लेशः ?
भारस्त्वयि ह्यशेषः शक्यो जनैर्निधातुम् ॥
जगदीश्वरी० ॥ ३ ॥

दीना दशा तु नातः संदृश्यते हि मातः !
सर्वं शुभं तवातः सामर्थ्यमस्ति दातुम् ॥
जगदीश्वरी० ॥ ४ ॥

ज्वालामुखी, कांगड़ा । — श्रीबालकृष्णशर्मा सारस्वतः (छात्रः)



# अद्भुत-समाचाराः ।

*बालापहारिणी वात्या ।*

भागलपुरनगरात् दसक्रोशदूरे दिशि च पूर्वस्यां "पक्कोसराय" इति लोकाभिधीयमाननामाऽनेकजातिविरचितधामाऽभिरामो ग्रामो वर्तते, यस्य चाभ्यासे घोघा नाम

वाष्पयानविरतिस्थानम् ( Ghogha Station E. I. Ry. ) तत्र स्वजातिजीविकया जीवनमानन्दयन् ललितनामा कलादः सपरिजनो निवसति । वैशाखकृष्ण-तृतीयायां बुधवासरे ( २०-४-२७ ) मध्याह्ने कृतभोजनस्तस्याष्टवर्षदेशीयः " शुकदेवनामा " तनयः पुस्तकमादाय पाठशालां गच्छन् पथि अपूर्व्या प्रबलया वात्यया गगनपथेन स्थानात्तस्मात्क्रोशद्वयदूरे पूर्वदिगवस्थिते "एकवारी"-ग्रामाद्बहिर्विशाल-रसालतरु-निकरशोभिते प्रदेशे शाखायां तेरारपाति । अम्बरपथागतेन प्रसारितकरयुगलेन तेन बालकेनावलम्बिता शाखा, विशालकाण्डावतरणाऽऽशक्तो गृहीत्वा शाखामधोलम्बितदेहो धरणीशरणमलभताधःपतनेन । अदृष्टपूर्वं विजनञ्च तत्स्थानमवलोक्यानन्यशरणं रुदन्तन्तम्बालकमचिरादेव तेन वर्त्मना गच्छन्तो बहवो गोशकटवाहका एकाकिनमवलोक्य तत्रागमनस्य रोदनस्य च कारणं पर्यपृच्छन्, पृष्टः सहायकमवलोक्य हृष्टश्च स निजपितुर्ग्रामस्य च नामाभिधया कथयदात्मकथाम् । सविस्मयाश्चते समारोप्य तं शकटे तस्य पितुरन्तिकमगच्छन्, तत्र च तत्परिजनो वात्यापहृतो मे बालक इति जनैराकर्ण्य वात्यामनुसरन्, पथि मध्ये शकटाधिरूढमागन्तं तमेव बालकमवलोक्य मोदपूरपूरितमानसो बालकमादाय निजावासमगात् । सत्यमुक्तं केनचित् ।

"अरक्षितं तिष्ठति दैवरक्षितं, सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः कृतप्रयत्नोऽपि गृहे न जीवति ॥

ग्राम-रसलपुर,
पो० कहलगांक-
P. O. Calgaon.
जि० भागलपुर ।
२४।४।१९२७ ।

—श्रीलक्ष्मीनाथ मिश्रः
( काव्यतीर्थः )

* * * *

—वीकानेर राजधान्यां राजधानीतः १२ क्रोश दूरे कस्मिँश्चिद् ग्रामे ११२ वार्षिकः कश्चन वृद्धो विद्यते, य एकस्मिन् दिवसे स्वग्रामात् वीकानेर राजधानीं यावत् पद्भ्यामेव गतागतं करोति ।

* * * *

—जापान-देशीयस्य 'असाही' नामकस्य दैनिकपत्रस्य ग्राहक-संख्या २१ लक्षमिता विद्यते । लन्दन-अमरीका-फ्रान्स-प्रभृति देशेषु तु १५ लक्षमिता ग्राहक-संख्या बहूनां पत्राणां विद्यते ।

* * * *

—जगति सर्वाधिका जलवृष्टिः, भारते कामरूप,—( आसाम )—प्रान्ते " चेरापूँजी " स्थाने भवति ।

* * * *

—बन्नूनगरे (सीमाप्रान्ते) कश्चन 'खान' जातीयो यवनः कस्यामपि दरिद्रबालिकायामासक्तोऽभूत सा ग्रामं त्यक्त्वा पलायिता । तां हठादाहर्तुं तेन त्रयो मनुष्याः प्रेषिता । ते यदा तां ग्रहीतुं प्रायतन्त, तदैव भूमौ निमग्नाः । बहवो जना दूरतः समेत्य, दृश्यमेतत् सकुतुकमवलोकयन्ति ।

---

## शुद्धिः ।

—होशियारपुरमण्डले ईसवीय-मतप्रविष्टानां १०७ चर्मकाराणां शुद्धिरभूत् ।

—आवागढ़-राजधान्यां राजभिः क्षत्रियैश्च म… काना जातीयानां यवनानां शुद्धिः कृता । अन्येषां चिराद् यावनधर्मप्रविष्टानां बहूनां शुद्धिः कृता ।

—जामनगरे ( गुजरात ) ३ यवनाः पुनर्हिन्दुधर्मं प्रवेशिता आर्यसमाजेन ।

—निमाडमण्डलान्तर्गत 'हरसूद'—ग्रामे 'महमूद'नाम्नो यवनस्य शुद्धिः सञ्जाता ।

—कुरुक्षेत्रे यवनधर्मप्रविष्टस्य कस्यचन शुद्धिः कृता ।

—थनेसर ( कुरुक्षेत्र ) 'वलीमहम्मद' नामा-कश्चन शुद्धिं कारयित्वा हिन्दूधर्मे प्रविष्टः ।

—दिल्लीनगरे काचन यवनीरमणी पुनर्हिन्दूधर्मे प्रविष्टा, तस्य शोभादेवीति नाम विद्यते ।

अभयतः'

## विज्ञान-समाचाराः ।

लन्दननगरे भूगर्भे धूम्रयानं ( रेल ) प्रचलति, तस्य द्वाराणि स्वयमेव प्रोद्घाटितानि, पिहितानि च भवन्ति । यदा यानं तिष्ठति तदा उद्घाटितानि भवन्ति, यदा च प्रचलति तदा पिहितानि भवन्ति । एषा क्रिया विद्युच्छक्त्या क्रियते ।

वैज्ञानिकैरीदृशः प्रकाश-रश्मिराविष्कृतः, येन जीवानां संहारो भवति । तस्य नाम 'मृत्यु-रश्मिः' विद्यते । स रश्मिः, १० कोशं यावत् सम्मुखे पतितानां पदार्थानां, जीवानाञ्च नाशं कर्तुं प्रभवति । एतस्याविष्कर्ता 'मिस्टर एडविन स्काट' नामा विद्यते । सान्फ्रैंसिस्को नगरे तस्य रसायनशाला विद्यते । स वदति यदेतेन प्रकाशेन ४ कोशं यावत् पतितानां पशूनां विनाशः कृतः, वृक्षेषु वह्निः प्रज्वालितः, वायुयानानां विनाशः कृतः, तेषामधःपातोऽपि विहितः ।

## सूचना सारः ।



### 'धर्मवीरः ।'

कर्णपुरे ( कानपुर ) रेलवाज़ारस्थार्यसमाज-स्थापित—श्रीश्रद्धानन्दमिशनद्वारा यः "श्रद्धानन्द-मुसाफ़िर-विद्यालयः" स्थापित आसीत्, सम्प्रति तस्मिन्नेकादशच्छात्रा अरब्याः संस्कृतस्य च शिक्षां यथानियमं प्राप्नुवन्ति । इतः परं मिशनतो "धर्मवीर" नामधेयं साप्ताहिकं हिन्दी-मयं पत्रमपि न चिरात्प्रकाशमेष्यति । पत्रस्य नीति-र्रगलपुरीय ( आगरा ) "आर्यमुसाफ़िर" तुल्या स्थास्यति । येन हिन्दीपाठकानां स्वधर्मस्य ज्ञानं विधर्मिणाञ्च मतानां दिग्दर्शनमायासादृते संपत्स्यते । पत्रस्य वार्षिकं मूल्यं ३) रु० मात्रं भविष्यति । शुद्धि-संग्रन्थन-दलितोद्धार-प्रेमिभिः सपदि ग्राहकैर्भाव्यम् ।

आर्यसमाजः,
रेलवाजार,
कानपुर ।

विनीतः—
प्रवन्धकः,
धर्मवीरस्य ।

× × × ×

### 'अभय'स्य विशेषाङ्कः ।

सहारनपुर–नगरात् प्रतापसिंह नेगी–महाशयानां सम्पादकत्वे वर्षत्रयादभयनामकं साप्ताहिकं पत्रं निःसरति । एतद्धि पत्रं हिन्दूसंग्रन्थन-शुद्धि-प्रभृति-विषये निर्भयमालोचनं करोति । आगामिनि श्रीकृष्णजन्माष्टमी-समये एतस्य 'शुद्ध्यङ्कः' प्रकाशितो भविष्यति । एतस्मिन्नङ्के सुप्रसिद्धविदुषां संग्रन्थन-शुद्धि-विषयकाः लेखाः प्रकाशमेष्यन्ति । चित्राण्यपि विचित्राणि चित्राणि च स्थास्यन्ति । एतस्य मूल्यम्—एका मुद्रा भविष्यति । जूनमासं - यावद्ग्राहकत्वमधिगतेभ्य अमूल्यमेव दायेत ।

पत्र-सङ्केतः—प्रबन्धकः,
अभयस्य, सहारनपुर ( यू० पी० ) ।

+ + + +

## श्रद्धानन्दस्मृतिः ।

अयोध्यानगरीयस्य नवीनघट्टस्य नाम परावर्त्य 'श्रद्धानन्द घट्टः' इतिनाम जातम् । छात्रसमिति-वाचनालयस्य च 'श्रद्धानन्द-वाचनालय'—इतिनाम जातम् । ( साधुवादाः ! )

—श्रीरामगोपालशर्मा "शारदः"
( मन्त्री )

\+ + + +

## विद्वत्परिषत् सूचना ।

काशीस्थविद्वत्परिषदो विशेषाधिवेशने श्रीमतां सभापति—उपाध्याय-महाशयानां त्यागपत्र-विषये विचारः समभूत् । समस्तैरुपस्थितैः सदस्यैरेतन्निर्णीतम् यत्—"उक्त विद्वद्वरोदासीनतावबोधक-पत्रेण सभेयं कथमपि न सहमता, यतोऽयमस्या जन्मदातृषु मुख्यः, प्रत्युताधिकाश्रयणमपेक्षते चातस्तदीयं पत्रं परावर्तयितव्यम् नियमेन ।" तदनु सभाज्ञां स्वकृतेोक्तविदुषा स्वकीयं पत्रं प्रतिगृहीतम् ।

हंसतीर्थ, ( हरतीरथ )
काशी,
चैत्र, कृष्ण १४, ८३,

रामावधि शर्म्मा,
मन्त्री,
विद्वत्परिषदः ।

\+ + + +

## प्रदर्शिनी ।

अत्र बडोदाराज्यान्तर्गत-कडीप्रान्तीयाध्यक्षप्रवरस्य 'मुकर्जी'—महोदयस्योद्योगेन चतुर्दिवसं यावत् महता समारम्भेण 'कृषक-सम्मेलनादि' विविधं प्रदर्शन-कृत्यं समजनि । येन राज्यान्तर्गत-सर्व-समुत्कृष्ट-वस्तु-पशु-प्रभृतीनां दर्शन-विनिमयादिना महानुपकारः समभूत् प्रजानाम् । इदानीं शिथिल प्रायेषु भारतीय-नरपतिषु बडोदा-नरेश्वरा एव स्वकीयप्रजासमुन्नत्युपायमहर्निशं नवं नवं सम्पाद-यन्तो भारते वृटिशशासनमप्यतिशेरते इति नास्त्य-विदितं देशकालविदां विदुषाम् ।

अत्र राज्ये दशवर्षं यावत् बालिकानां, षोडश वर्षं यावत् बालकानाञ्च शिक्षणमनिवार्यं विद्यते येन राज्ये नास्तीदृशः कोऽपि पुमान्, स्त्री वा यो लिखितुम्पठितुञ्च जानीत इति ।

एतद्राज्यशासन-प्रकारो विस्तरशोऽग्रेपाठ-कानाम्पुरस्तात् उपस्थापयिष्यते ।

*श्रीजयदत्तशास्त्री*
सिद्धपुरम्, ( उत्तर गुजरात ) ।

---

## समालोचना

---

*बालकः (विशेषांकः)*

सम्पादकः रामवृक्ष शर्म्मा, वेनीपुरी ।

प्रकाशकः—हिन्दीपुस्तकभाण्डारः, लहेरिया सरा[य] दरभङ्गा ।

एतस्य विषयेऽस्माभिः पूर्वमेव प्रकटाकृताऽ सीत्सम्मतिः । साम्प्रतमेतस्य विशेषाङ्कं-दृष्ट्वा नित[ां] प्रसीदामः मुखपृष्ठ एव-' अग्रतश्चतुरो वेदाः, पृष्ठ[तः] सशरं धनु'-रितिभावपूर्णं चित्रं विद्यते । पत्रेऽस्मि[न्] हिन्दी-विदुषां बालोपयुक्ताः बहवो लेखाः सन्ति ८२ चित्राणि सन्ति । भाषा नितान्तसरला, मुद्र[ण] म्प्रि-नयन-मनोहरम्, पत्राणि च मसृणानि सन्ति एतस्य सम्पादकैः सञ्चालकैश्च बालकस्याभ्युद[याय] यद्यद्भवितुमर्हति तस्य तस्य सम्पादने न कापि त्रु[टि]

कृता । हिन्दीभाषायाः सौभाग्य-रूपाय, स्वस्थ-शरीराय, सरल-सुन्दराय, वीर्यवते बालकाय वयं स्पृहयामः, अभिनन्दयामहश्च, शुभाशीर्भिः सततं सम्भावयामः । चिरञ्जीवतु बालकः । अद्वितीयमिदं बालकानां पत्रम् । शिशुसाहित्ये सार्वभौममद्वितीयं पत्रम् । एतस्य सम्पादन-सरणिं भाषाञ्च दृष्ट्वा वयं परं सन्तुष्टाः स्मः ।

---

*हिन्दूपञ्चस्य (होलिकांकः)* ।

सम्पादकः—श्री ईश्वरीप्रसाद शर्म्मा । प्रकाशकः-रामलाल वर्मा, अपरचितपुर रोड, कलकत्ता । वार्षिकम्मूल्यम्—२) मुद्राद्वयम् ।

एतस्य सर्वाङ्गसुन्दरं होलिकाङ्कं दृष्ट्वा चञ्चलं भवति चेतः । हिन्दूसमाजे जागर्ति-जननाय प्रस्तुतमिदं बृहदाकारं, स्वल्पमूल्यं, सचित्रं, लोकरञ्जकं पत्रं न हिन्दी-संसारे स्वीयं साम्यमादधाति । एतस्य सम्पादकाः सिद्धहस्त-लेखकाः, लब्धकीर्तिसम्पादकाः, संस्कृत-विद्वाँसश्च सन्ति । एतस्याङ्कस्य सम्पादनं सर्वथा सुन्दरम्, अनुभवपूर्णञ्च विद्यते, पत्रस्यास्य हिन्दूनां गृहे गृहे प्रचारमभिलषामः । हिन्दूसमाजस्य परमहितचिन्तकमिदं पत्रम् ।

*शुद्धिसमाचारस्य उदयांकः* ।

सम्पादकः—चिदानन्द स्वामी । वार्षिकमूल्यम्—मुद्रात्रयम् ।

एतस्मिन् विचारपूर्णाः, शास्त्रीयाः, उत्साह-वर्धकाः लेखाः सन्ति । एतस्य लेखकाः प्रायो विद्वाँस एव । स्वर्गतानां स्वामिनां श्रद्धानन्द-महोदयानां मृत्यु-चित्रम्, शुद्धिचित्रञ्च नितरां मनोहरं भावजनकञ्च वर्तते । हिन्दूसमाजे शुद्धिसमाचार-सदृशानामुत्साहवतां पत्राणां महती आवश्यकता वरीवर्ति ।

*मतवाला (होलिकांकः)* ।

सुप्रसिद्धमिदं पत्रम् । निर्भीकतायाम्, स्पष्ट-वादितायाम्, सत्य-समालोचने च हास्यरस-प्रधानमिदमेकमेव हिन्दीपत्रम् । एतेन पत्रेण हिन्दी संसारे नवयुग-प्रवर्तनं कृतमिति श्लाघ्यम्, स्पृहणीयम्, गौरवान्वितञ्च पत्रम् । एतस्य सम्पादकाः श्री महादेवसेठमहाशयाः हिन्दूसमाजकृते साम्प्रतमेव कारागारात्समागताः । होलिकाङ्के 'अफजलवध'—'नवीनगणित सिद्धान्त'—'साहित्य शब्दार्थगडही'—प्रभृतयो लेखा नितरामद्भुताः सन्ति । एतस्य होलिकाङ्क-सम्पादनम् नामानुरूपमेव सञ्जातम् ।

*अभयः* ।

साप्ताहिकं हिन्दीपत्रम् । सञ्चालकः—श्री स्वामी विचारानन्दसरस्वती । सम्पादकः—श्री प्रतापसिंह नेगी । वार्षिकम्मूल्यम्—३॥) । प्राप्ति स्थानम्—'अभय'—कार्यालयः, सहारनपुर (यू० पी०) ।

अस्य पत्रस्य ४ वर्षीया १२ संख्या प्राप्ताऽस्माभिः । पत्रं नितरां सरलं हिन्दू-संग्रन्थन-समर्थकञ्चेति परं प्रमोदस्थानम् । एतस्मिन् समाचार संग्रहः, लेख-संग्रहश्च सम्यग्विद्यते । जन्माष्टम्यामेतस्य 'शुद्ध्यङ्को' महता समारम्भेण प्रकाशितो भविष्यति । वयमेतस्योन्नतिमभिलषामः ।

*हिन्दू-धर्म-शिक्षा ।*

लेखकः—ब्रह्मश्री महादेव शास्त्री, दिवेकरः । तिलक-विद्यापीठ-पुस्तकमालायाः द्वितीयं पुष्पम् । प्राप्तिस्थानम्—गणपतिशङ्कर जयशङ्कर शास्त्री, श्री हो० रा० पाठशाला, वडाली, महीकाठा । मूल्यम्—सप्ताणकाः ।

गुर्जरभाषा—निबद्धमिदं बालानां नितरामुपकारकं पुस्तकम् । मध्ये मध्ये संस्कृतपद्यमया उपदेशाः साधु निवेशिताः सन्ति । एवम्भूतानां पुस्तकानामाविर्भावत—आधुनिकानां पाश्चात्य-शिक्षा-पद्धतिपतितानां बालानां स्यादेव कियानुपकारः ।

*चकियाशतकम् ।*

लेखकः—सरयू प्रसाद मिश्रः, साहित्याचार्यः, संस्कृत-पाठशाला, चकिया, बनारस स्टेट ।

महाराजाधिराजस्य वर्तमान-काशीनरेश्वरस्य प्रशस्तिभूतमिदं शतकं ग्रन्थकर्तुः सकाशादमूल्यं लभ्यते । श्रीगोपाल शास्त्री ।

*हरिधारित-ग्रन्थरत्नम् ।*

श्रीहरिरायशर्म्म-विरचितम् । प्रकाशकः पं० विश्वेश्वरदयालु शर्म्मा, वैद्यराजः, अनुभूत योगमालायाः सम्पादकः । मूल्यम्-षडानकाः, प्राप्तिस्थानम्, अनुभूत योगमाला कार्यालय, पो० बरालोकपुर, इटावा ( यू० पी० )

पुस्तकमिदमनुभूतयोगमालायाः ३ य रत्नम् । एतस्मिन् प्रायः प्रचलितानां बहूनां रोगाणामनुभूताः सरलाः योगाः सन्ति । सर्वेऽपि योगाः सुलभाः ग्राम्याणां कृतेऽ तितरामुपकारकाः सन्ति । पुस्तकमिदं नितरामुपयुक्तं सर्वैः संस्थापनीयञ्च । वयं दृष्ट्वा प्रसीदामः ।

अनुभूतयोगमालाया अन्यान्यपि पुस्तकानि प्राप्तानि सन्ति । तेषामालोचनमग्रे विधास्यामः ।

—सम्पादकः

# सम्पादकीयम् ।

*हिन्दू-केसरी शिवराजः ।*

दुर्दान्तानां यवनानां साम्प्रतं कियानत्याचारः! परराज्ये दासतामनुभवन्तो यवना इदृशं निःशङ्कमत्याचरन्ति, तदा स्वकीये राज्ये तेषां कियानत्याचार आसीदिति सुस्पष्टमेव प्रतीयते । तत्रापि यवनाकुलापसदस्य दुर्दान्तस्य-उरगजिह्वस्य ( औरङ्गजेब ) शासने किं वक्तव्यम् ? यत्र लक्षशो निरीह-हिन्दूनां विनाशः, सहस्रश आर्यललनानां सतीत्वभङ्गः, देवमन्दिराणां विलुण्ठनम्, दैनिकमासीत् । तस्मिन्भीषणतरे समये भारत-साम्राज्यपदमधितिष्ठतः, परमप्रतापशालिनो यवनसम्राजो निशङ्कं मानमर्दनं कर्तुं काचन वीर्यवती हिन्दूनां महाशक्तिरुद्भूत् । यया च कम्पमानो यवनसम्राट् न कदाचिदपि सुख-स्वापमवाप । सा च शक्तिः शिवराज-रूपा महाराष्ट्रप्रान्ते जीजाबाई-गर्भतः समुत्पन्ना, निखिलमपि सनातनं हिन्दूधर्मं ररक्ष ।

अहो ! तस्य वीर-वरस्य वीरोचितानि विचित्राणि कृत्यानि ध्यायं ध्यायं स्फुरति बाहुः, प्रोच्छलति हृदयम्, कण्टकायते कलेवरम्, समुद्दीप्यते उत्साहः,गौरवेण समापूर्यते चेतः साम्प्रतमपि मृतकल्पानामस्माकम् ।

श्रीमान् शिवराजो न कुत्रापि महति राजकुले समुत्पन्नः, स साधारणदशायामेव जन्म लेभे कस्यचन महाराष्ट्रवीरस्य गृहे । बाल्यत एव तस्

वीर-प्रसविनी माता वीरोचित-शिक्षया तस्य हृदये हिन्दूगौरवस्याङ्कुरमुत्पादितवती । शनैः शनैः युवावस्थामवाप्तः शिवराजो धन-जन-साहाय्य-विकलोऽपि पञ्चाषाणां मित्राणां साहाय्येन शतद्वय-सैनिक-वर्ती सेनां संगृह्य, नि [illegible]णमत्याचरतो घृणा-स्पदस्य परमप्रतापशालिनोऽपि उरगजिह्वस्य विरुद्धं युद्धघोषणमकरोत् । दुर्ग-नीति-निपुणो महावीरः स्वकीय-युद्धकौशलेन सहस्रशो यवनान् विनाशयन्, महाराष्ट्रप्रान्ते तस्य शासनं शिथिली-चकार ।

शिवराजस्य विषये स्वकपोलकल्पनाकुशला भारतीय-गौरवं भञ्जयितुमीहमाना आँग्लाः विविधं विलिख्य, प्रख्यापयन्ति, यत् "स नासीत् क्षत्रियः, नच प्रभावशाली नृपालः, नच महत्वपूर्णं युद्धं कृतवान् । कूटयुद्धेन यवनसम्राजमपीडयत् ।" परन्तु, सभ्यताशिखरमारूढाँस्तान् वयमेव सवि-नयं पृच्छामः, यत् भवन्त एव स्वमुखमवलोकयन्तु महाभागाः! सभ्यता-पाठ-पाठकाः; भारतीय-इति-हासस्याचार्यत्वं कुर्वाणाः!

परन्तु सन्ति केचन सत्यवक्तार अपि वैदेशिका ऐतिहासिकाः । ते लिखन्ति यत् 'शिवराजस्य सविधे न कदाचिदपि शतद्वयाधिकाः सैनिकाः समभवन्, परन्तु स स्वीयेन रणचातुर्येण, राज-नीति-नैपुण्येन, दुर्ग-रचना-कौशलेन च वारं वारं सहस्रशो यवनान् शतशः पराजितवान् ।' तस्यो-पमा योरोपीयमहावीरेण नयपालाभिधेन (नैपो-लियन) सह दीयते ।

वस्तुत आँग्लाः, यवनाश्च हिन्दूवीरस्य बुद्धि-वैभवम्, रण-विद्या-नैपुण्यम्, दर्शं दर्शं दन्दह्य-मानाः भवन्ति । परन्तु मृत-कल्पा हिन्दवस्तस्य गौरवं विस्मारयन्ति । यदि शिवराजो नाभ-विष्यत्तदा लक्षशः हिन्दूनां शिखा-सूत्राणि प्रण-ष्टान्यभविष्यन् , न जाने किं किं नाभविष्यत ? शिवराजस्य छत्रच्छायायां सर्वतो विलुप्तस्य हिन्दू-धर्मस्य संरक्षणमभवत् । तस्यातङ्केन यवनानां हृदयं प्रेजते स्म । तेषां प्राणाः निःसरन्तिस्म । तस्य महावीरस्य जयन्त्युत्सवः साम्प्रतं वैशाखमासे सर्वत्र भारते महता समारम्भेण सम्भूतः । परन्तु नास्ति तावान् प्रचारः समारोहो वा यादृशस्तस्य हिन्दूसम्राजः स्मृतौ सुतरामपेक्षितो विद्यते ।

*श्री अद्वैतप्रसाद गुप्तः ।*

श्रीमतः श्रीअद्वैतप्रसादगुप्तस्य चित्रं विशेषाङ्के मुद्रितमासीत् । तेन च महाशयेन सम्प्रतं कियतः कालात् जन-साधारण-सेवायां भागो गृहीतः । काशीस्थ-अनाथालये, अग्रवाल-समाजे, दयानन्द-एँग्लो-वैदिक-विद्यालये च सहस्रशो मुद्राः प्रदत्ताः । तत्र तत्र संस्थासु कार्यमपि क्रियते । दयानन्द-विद्यालये अवैतनिकमध्यापनमपि क्रियते । एष च काशीस्थे नितरांप्राचीने प्रसिद्धे शाहवंशे समुत्पन्नः । एतत्कुलं काशीस्थ-धनिकानां सर्वश्रेष्ठं प्रधानञ्च विद्यते । एतेषां पितरः श्रीयदुनाथप्रसादगुप्ताः सुप्रसिद्धाः धनिका उदाराश्चासन्, तैर्विंशतिशलक्षमुद्राणां-व्ययः कृत आसीत् । एतैरपि लक्षशो व्ययीकृतम्, परमिदानीं जनताकार्ये-धनव्ययः क्रियत इति परं प्रमोदस्थानम् । इमे नवयुवकाः, सहृदयाः, उत्साहिनः, विद्वांसश्च सन्ति । आँग्लभाषायान्तु परं प्रवीणा एव हिन्दीभाषायामपि सम्यग् ज्ञानं वरीवर्ति । एते संस्कृत-साहित्य-समाजस्य प्रचुरं साहाय्यं कृतवन्तः, करि-ष्यन्ति चेति सुप्रभातं संस्कृत-समाजस्य । इमे चिरायुषः, सुखिनश्च सन्तु । एतेषां पुत्रत्रयमासीत् । तत्र पुत्रद्वयं कालेन कवलीकृतम् । ज्येष्ठपुत्रो रमाप्रसादः नव-वर्ष-देशीयः साम्प्रतमध्ययनं करोति ।

* * *

## संस्कृत-परीक्षा-फलम् ।

प्रतिवर्षमस्माभिः काशीस्थ-संस्कृत-परीक्षाफलं प्रकाश्यते । विगत-वत्सरे तदध्यक्षमहोदयानां कृपया नोपलब्धमस्माभिः, न च प्रकाशितमासीत् । साम्प्रत-वत्सरेऽपि सविनयं प्रार्थितास्तदध्यक्षाः कथमपि प्रकाशनाज्ञां प्रदत्तवन्तः । परन्तु वयमेव जानीमो यथा तैरङ्काः प्रदत्ताः, यथाचास्माभिरुपलब्धाः ।

सर्वप्रथमन्त्विदं विद्यते यदध्यक्षमहोदयाः परपुरुषदर्शनं सर्वथा परिहरन्ति । अष्टवादने विज्ञापिताः, द्वादशवादन समये कला-द्वयं यावत् मिलन्ति । एतावत्कालं यावद्दिदृक्षुः, जिज्ञासुर्वा बहिस्तिष्ठति । वयं तान् पृच्छामः, यत् किं भवन्त एव समय-महत्वं जानन्ति, नान्ये । नैतावता महत्वं सेत्स्यति, एतत्तु नितरामनुचितं महताम् ।

दृष्टं मया प्रातः सप्तवादनतः पोष्टाचार्य-परीक्षार्थिनः समागता आसन्, ते द्वादशवादनं यावत् वराकाः बुभुक्षिताः, तृषार्दितास्तत्रैव स्थिता आसन्, तेषां नासीत् काचन सूचना । ते वराका न जानन्तिस्म किमपि । पुन र्न जाने कदा परीक्षा सञ्जाता, किञ्जातम् ? परमुक्तं बहुभिश्छात्रैर्यद् 'वयं भृशं चिक्लिश्यमानाः स्मः । किं कुर्मः ? न कोऽपि शृणोति' । हन्त ! भोः ! अध्यक्षैर्यदि आँग्ल-पद्धतिः स्वीक्रियते चेत्; सर्वाण्यपि कार्याणि यथा समयं, यथा निश्चयं स्वच्छतया निर्वर्तनीयानि, यदि भारतीया पद्धतिः स्वीक्रियते, तदा यवनिकाभ्यन्तरे परपुरुषदर्शन-परिहारस्य काऽऽवश्यकता ?

अस्माभिः सम्यगनुभूतम्, सर्वत्र कार्यं शैथिल्यमेवायाति । परीक्षाफलं द्रष्टुं भीष्मे ग्रीष्मे मध्याह्ने छात्राः समागच्छन्तिस्म । ते इतस्ततः परिभ्रम्य गच्छन्तिस्म । नासीत्तेषां काचन लिखिता सूचना यत्परीक्षाफलममुकदिवसे प्रकाशितं भविष्यति, न वा । कार्यकर्तारः ( लेखकाः ) स्वीयामेवाध्यक्षतां प्रदर्शयन्ति 'निर्धनी धनमाप्नोति तृणवन्मन्यते जगत् ।' हन्त ! संस्कृतच्छात्राणामिमां दुरवस्थां दृष्ट्वा, संस्कृताधिकारिणाञ्चेदृशीमवस्थामवलोक्य विदीर्णं भवति हृदयम्, यदिमां दशामनुभवन्ति भवन्तः ! धिगिमं जीवितम् ! यदि नाम आँग्लच्छात्राणां कृते-एवं कृतं भवेत्तदा ते आपातालमाब्रह्मलोकमान्दोलनं कृत्वा कम्पयेयुः सर्वान् ।

मा मिलन्तु केनापि सह अध्यक्षमहोदयाः ! मा वार्तालापं कृत्वा समयव्ययं कुर्वन्तु, परन्तु यत् वास्तवि कार्यं विद्यते, तत्कुर्वन्तु । निश्चितं कुर्वन्तु, समये कुर्वन्तु परीक्षाध्यक्षस्य कर्तव्यमेव तत् । एतेन सर्वथा-असामर्थ्य द्योत्यते । एकतः समीचीनः प्रबन्धः क्रियते, अन्यत्र नावलोक्यते । को न जानाति यत् वर्षद्वयात् कियती व्याप विभागेषु वर्तते त्रुटिः ।

परीक्षाङ्क—प्रकाशनावसरे दरिद्रस्य सुप्रभातस भूयान् व्ययो जातः, स च व्यर्थमेव । छात्रा एव सुप्रभातस कार्यं कुर्वन्ति, ते क्षेत्रे भोजनं कुर्वन्ति । ते दिनत्रयं यावद ध्यक्षमहोदयानामाज्ञया तत्रच गताः, व्यर्थमेव प्रहरद्वयं संस्थाप्य प्रोक्तं तै र्यत् '**श्वः समागन्तव्यम्** '। जातम् ! एके वाक्येन तेषां सम्पूर्णं दिनं विनष्टम् । भोजनं गतम् सुप्रभातस्य व्ययः समजनि । अध्यक्षास्तु '**श्वः समागन्त व्यम्**' इति कथयित्वा यानमारुह्य गताः । '**नहि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम्** ।' एव मेव बहुवा तैः कृतम्, बहुवारञ्च तेषां कर्मकरैः ( Clark ) कृतम ।

परीक्षाफलप्रकाशने २९) मुद्राणां व्ययः समज सप्तमुद्राश्च ततो लब्धाः । किम्फलं सुप्रभातस्य, ? केव परीक्षार्थिनां सौकर्याय । नासीदस्माकं स्वीयं कार्यम् सर्वसाधारणं, विशेषतश्च परीक्षाध्यक्षाणाम् । तेषां कियत्का क्रियतेऽस्माभिः ? कियान् भारो लघुः क्रियते ? ते अङ्का लिखित्वा बहिः काष्ठफलके स्थापयन्ति । गौरव-गर्वा सुप्रभाते न ददति । यदि दत्तं स्यात् तदा तेषाम गौरवम्, पत्रस्यापि गौरवम् । तत्र न दृश्यते तेषां का न हानिः ! किं कर्तव्यम् ? ईश्वरेच्छैव तादृशी ।

एतस्य प्रकाशने सरस्वतीभवनस्थ-हस्तलिखित-संस्कृ पुस्तकालयाध्यक्षैः श्रीनारायणशास्त्रि—खिस्ते-महोदयै त्साहाय्यमाचरितम् । तेषां कृतज्ञतां स्वीकुर्मः ।

---

## भूकम्पः ।

—ज्येष्ठ-शुक्ल-तृतीयाम् गुरो ( २ जून, २७ ) रा सपाद-दशवादन-समये काश्यां भू—कम्पः समभूत् । स क्षणमात्रं यावदासीत् । न च काचन क्षतिः सञ्जाता ।

लावण्यमयी ।

(२६ पृष्ठादग्रे)

योगिनी—इदानीमपि तद्रहस्यप्रकाशनस्य नैव मुपयुक्तोऽवसरः ।

सन्यासिनी—वरम्, यथेच्छसि, तथैव कुरु ।

योगिनी—इदानीं सखि, त्वं स्वामिना सह मिलिता भव ।

सन्यासिनी—तदेवाहमपीच्छामि । किन्तु, तावत्कालपर्यन्तम् इतस्ततो भ्रमणं कृत्वा, इदानीं त्सकाशं गमनावसरे मम हृत्कम्पो भवति । वद, किं करवाणि ? कथं तत्समीपे गमिष्यामि ? धर्मत तु पूतचरित्रैवाऽहम्, किन्तु स पतिः मद्विषये किं न स्वमनसि विचारयिष्यति ?

योगिनी—मैवं वद सखि ! त्वं तु सीतेव पर- ा साध्वी । तव विमलं चरित्रं किं स न जानाति ? दि कश्चित् व्याघातः समुपस्थितो भवेत्, तर्हि मां षय, अहं त्वां सर्वापवादेभ्यो मोचयिष्यामि । ा शुचः ?

सन्यासिनी—तर्हि अद्यैव रात्रौ मेलिष्यामि । ततः परं यद् भाग्ये भविष्यति, तदेव भविष्यति ।

ततः परं ते द्वे अपि स्वं स्वं गन्तव्य स्थानं प्रतिजग्मतुः । इति सप्तमः परिच्छेदः ।

---

( ७ ) अतिदीर्घनिबन्धनां नाटकादीनां पुरातनग्रन्थानां प्रकाशनं सापवादम् ।

( ८ ) लेखस्य कवितायाः सूचनायाश्चान्ते स्वकीयं नाम पूर्णसङ्केतश्च हस्ताक्षरसहितो लेख्यः । अन्यथा तन्निबन्धो न प्रकाशितो भविष्यति ।

( ६ ) सर्वविध पत्रव्यवहारावसरे स्वसङ्केतेन सह स्वीया ग्राहकसङ्ख्या अवश्यं लेखनीया । अन्यथा तत्पत्रमत्राऽवलोकितमेव न भवति । कार्यालयश्च तत्पत्राणां नोत्तरदायी स्यात् ( भवतां ग्राहकसङ्ख्या सुप्रभातपत्रे भवतां नाम्नः समीपे प्रतिवारं लिख्यते ) ।

( ७ ) धनादेशस्य ( मनिआर्डर ) समाचारपत्रे ( कूपन ) नूतनैर्ग्राहकैः 'नूतनोऽहम्'—इति वाक्येन सह पूर्णः स्वसङ्केतो लेख्यः । प्राचीनग्राहकैश्च स्वीया ग्राहकसङ्ख्या पूर्णः स्वसङ्केतश्च लेख्यः ।

( ८ ) सुप्रभाते समालोचितपुस्तकानां कृते सुप्रभात-कार्यालये पत्रं न प्रेषणीयम् । किन्तु ग्रन्थकर्तुः समीपे पत्रं प्रेषणीयम् ।

( ६ ) पत्रोत्तरमभिलषद्भिः स्वपत्रेण सह ॥ चिटिक ( टिकट ) प्रेषणीया । अन्यथा उत्तरप्रदाने कार्यालयोऽसमर्थ एव ।

——:*****:——

## अपेक्ष्यते वरः ।

सरयू-पारीण-जातीय-कन्यायाः कृते कश्चन ब्राह्मणजातीयो विंशतिवर्ष देशीयो वरः समपेक्ष्यते । स च बी० ए०, एम० ए०, एल्-एल्० बी० परीक्षायां वा समुत्तीर्णः सम्पन्नश्च स्यात् । संस्कृतज्ञानमपि नितरामपेक्षितं विद्यते । कन्या, ऊनपञ्चदशवर्ष-वयस्का विद्यते, संस्कृते प्रवीणा, हिन्दीभाषायां लेखादिकं लिखति, आँग्लभाषायामपि एन्ट्रेन्स-योग्यतां धारयति । सुरुपा, सुशीला, गृहकर्म-निपुणा, सहृदया, महाकुल-प्रसूता च विद्यते । वरो ब्राह्मणः स्यात्, अवान्तरजातिभेदो न गण्यः स्यात् ।

पत्र व्यवहार-सङ्केतः—
सुप्रभात-सम्पादकः,
काशी ।

## सम्पादकीय-समाचाराः ।

विशेषाङ्क-प्रकाशने, परीक्षाङ्क-प्रकाशने च महान् विलम्बो भूयाँश्च परिश्रमः समजनि । इतो ग्रीष्मावकाशात् सर्वेऽपि समाज-कार्यकर्तारः सुप्रभातकार्यकर्तारश्च परिभ्रमणार्थं बहिर्गताः सन्ति । अहमपि २० दिनानि यावद्बहिर्ग्रामे भ्रमणार्थं गत आसम् । इत्येभिर्बहुभिः कारणैः सुप्रभातस्य इयं संख्या समयमतीत्य प्रकाशिता-इति पाठकैः सर्वथा क्षन्तव्यम् । अग्रिमाङ्कस्तु आषाढ मासस्यान्तिमे सप्ताहे युग्मरूपेण प्रकाशितो भविष्यति । ततः परं यथासमयं निश्चित दिवस एव सुप्रभातस्य प्रकाशनं भविष्यति ।

अग्रिमाङ्कतः सुप्रभाते लेखमालाद्वयं प्रचलिष्यति । प्रथमा लेखमालाः संस्कृत साहित्यस्य नवीना संस्कृति' विषये, अपरा च भारतीय-राज-शासन-व्यवस्था-विषये भविष्यति । अपरा लेखमाला श्री अद्वैतप्रसाद गुप्तस्य हिन्दीभाषायां लिखिता विद्यते, सा च केवलं सुप्रभात-कृत एव भविष्यति ।

सुप्रभाते मुद्रितं शिवराज चित्रं 'बालक' स्य विद्यते । श्रीमद्भ्यो बालक-सम्पादकेभ्यः प्रचुराः धन्यवादाः दीयन्ते । इमे प्रायः प्रत्यङ्कं चित्रदानं विधास्यन्ति ।

संस्कृत-साहित्य-समाजस्य मन्त्रणासमित्या निर्धारितम्, यत् साम्प्रतं सम्पादन-कार्यं केदार नाथ शर्म्मणा गृहीतमिति समाजस्य मन्त्रित्वं श्रीमता गोपालशास्त्रिणा ग्रहीतव्यम्, व्यवस्थापकाश्च श्री गिरीशशर्म्मांणो भवन्त्विति ।

सुप्रभात-प्रकाशकेन श्रीगौरीनाथ शर्म्मणा प्र शकत्वस्य त्यागपत्रं दत्तम्, तच्च तदनुरोधे सर्वसम्मत्या स्वीकृतम् । एष निश्चयश्च सञ्जा यत् सम्पादक एव प्रकाशकोऽपि भवत्विति तदनुसारमग्रिमाङ्कात् तदेव भविष्यति ।

---

### नूतन—समाचाराः ।

#### महामहोपाध्याय-मानपत्रम् ।

ज्येष्ठ-शुक्ल-चतुर्थ्यां शुक्रे ( ३ जून २७ ) काश्यां मतामस्मद्गुरुवराणां श्रद्धास्पदानां सुप्रभात-जीवन श्रीदेवीप्रसाद-कविचक्रवर्ति-महोदयानां महाम पाध्याय-मानपत्र लब्धिरभूदिति नितरां सौभाग्यमस्माक तेषां चित्रमपि प्रकाशितं विद्यते । मुद्रिते सुप्रभाते ज्ञा स्माभिः । तेषां विस्तृतं जीवन-चरित्रमग्रिमाङ्के प्र यिष्यामः ।

#### भ्रम—संशोधनम् ।

सुप्रभाते मुद्रिते श्रीमतां कविचक्रवर्ति-महोदयानां यन्त्रालयीयानां प्रमादेन जीवनमिति मुद्रितम् । 'सुप्रभातस्यजीवनम्' इति बोध्यम् पाठकैरिति ।

—सम्पादकः ।

—:*:—

Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

४ वर्षे ] सौर-ज्येष्ठाषाढौ, १९८४ वैक्रमाब्दाः [ २-३ संख्ये

संस्कृत-साहित्य-समाजस्य मुखपत्रम् ।

# सुप्रभातम् ।

काशी-हिन्दू विश्वविद्यालयः



संस्कृत-विद्यालयः, छात्रालयः, सङ्गीतालयश्च ।

तिमिरततिमुदस्यद् भेदतारा विलुम्पन्नयदधिसुरभाषाभाषि जागर्तिमुच्चैः ।
विबुध-विहग-वादै राह्वयद् भाग्य-भानुम् विलसतु भुवनेऽस्मिन् सर्वतः सुप्रभातम् ॥

सम्पादकः

श्रीकेदारनाथ शर्मा, सारस्वतः ।

वार्षिकम्मूल्यम् ३), छात्राणां कृते १॥), विदेशेषु १२) एकाङ्कस्य मूल्यम् ।)

# लेख-सूची ।



---

# चित्र-सूची ।




विविध-विषय-विभूषितम्, सचित्रम्, अद्वितीयम् संस्कृत-मासिक-पत्रम् ।

४ वर्ष | वाराणसी, सौर-ज्येष्ठाऽऽषाढयोः, १९८४ वैक्रमाब्दाः | सङ्ख्या २-३

## माङ्गलिक्यः सूक्तयः ।

[ सङ्कलिताः ]

विहाय कमलालया-विलसितानि विद्युन्नटी-
विडम्बन-पटूनि, मे विहरणं विधत्तां मनः ।
कपर्दिनि, कुमुद्वती-रमण-खण्ड-चूडामणौ,
कटीतट-पटीभवत्-करटिचर्मणि, ब्रह्मणि ॥

—लङ्केश्वरस्य.

शारदामृत-करावदातया ।
हस्तिनां विदधती दृशा रदान् ॥
भक्त-पालन-विधौ विशारदा ।
शारदा स्फुरतु मानसे मम ॥

—म० म०-गङ्गाधरशास्त्रिणः

सूर्याचन्द्रावतंसा जलधरमलिना-
कालिका विश्रुता या ।
निस्तन्द्रां विष्णुमूर्तिं शरदि निजगदु-
र्यां शशाङ्कार्कनेत्राम् ॥
रौद्री यस्याश्च मूर्तिः शिशिर-कर-कला-
मात्र-विश्रान्त-तापा ।
वैराजी सत्समष्टिर्जयति भवमयी-
सा शिवा च स्वभूश्च ॥

—श्रद्धेय रामावतारशर्म्मणाम् ।

सकल-कलुष-हारि-चारु-चञ्चत्-
परम-पवित्र-चरित्र-चित्रित-श्रीः ।
नत-विबुध-नुतस्सतामुपास्य-
स्सदिशतु मे मतिमुज्वलान्द्विपास्यः ।

—म० म०-कविचक्रवर्तिनाम् ।

---

# सम्पादकीयम् ।

*महामहोपाध्यायाः कविचक्रवर्ति-महोदयाः ।*



विदितचरमेव सर्वेषामपि सुप्रभात-पाठकानां यत् व्यतीते मासे ( ३ जून, २७ ) अस्माकं परमाराध्य-पादा महामान्याः श्रीदेवीप्रसाद शुक्ल-कवि चक्रवर्तिमहोदयाः, भारतसम्राजा महामहोपाध्यायोपाधिना सम्मानिता इति । एतद्धिपरमं प्रमोदस्थानं संस्कृत-साहित्य-समाजस्य । श्रीमन्तः पूज्यपादा न केवलं काश्यामपितु निखिलेऽपि भारते वर्षे साहित्य-शास्त्रे प्रधानपदमधितिष्ठन्ति । कविचक्रवर्ति-महोदया न केवलं साहित्य-शास्त्रज्ञाः, कवयश्च सन्ति, ते वेदान्त-साङ्ख्ययोग-न्यायादिदर्शनानां प्रधानग्रन्थानेवाधिक्येन पाठयन्ति । तन्त्र-व्याकरण-ज्योतिःशास्त्रेष्वपिप्रचुरमध्ययनं वर्वर्ति पूज्यचरणानाम् । ते चतुरस्र-विद्वांसो महाकवयश्च सन्ति । नैतादृशो विद्वान् महाकविः, संस्कृत-प्रधान-पीठभूतायामस्यां वराणस्यामधुना विद्यते । लोककार्येषु, समाज-कार्येषु, देश-कार्येषु च सर्वदा दत्तावधाना अग्रेसराश्च सन्तिष्ठन्ते संस्कृत-साहित्य-समाजः, तस्य मुखपत्रं सुप्रभातञ्च तेषामेव करुणा-कटाक्ष-विलसितमिति जानन्त्येव सर्वे सुप्रभात-पाठकाः ।

सुप्रभाताय तैरेव जीवनं प्रदत्तम्, साम्प्रतमपि तेषामेव कृपया सर्वमेतस्य सम्पादनं भवति । भारताधीश्वरैस्तेभ्यो 'महामहोपाध्याय' पदवीं दत्त्वा यत् स्वीयं विवेक-बाहुल्यं प्रकटीकृतम्, तेन व नितरां प्रसन्नास्तेभ्यः साधुवादान् धन्यवादा वितरामः । प्रार्थयामहे च यत्ते सर्वदा एवमे विवेचनं कृत्वा विदुषां सम्मानं कुर्वीरन्निति । ये सर्वोच्चैरिय सुपाधिः स्वयमपि विभूषिता भवेत्

श्रीमन्तो गुरुचरणानां पितृचरणा अभिनव- हर्षाः सकल-विद्यावन-विहारकण्ठीरवाः कवीन्द्र राः श्रीदुःखभञ्जन-शुक्ल-महोदयाः दैवशक्तिसम्प महापुरुषा आसन् । प्रायः सर्वेऽपि प्राचीन-विद्वां स्तेषामद्भुतमाश्चर्यकरं वृत्तं जानन्ति । (ते विस्तृतं जीवन-चरित्रं संगृह्य सुप्रभात-पाठकेभ्य निवेदयिष्यामः ) श्रीमतां कविचक्रवर्तिमहोदया बाल्यकाल एव तेषां कैलासवासः समभूत् । ते स्वर्गारोहणसमये श्रीमतामाचार्यपादानां व षड्वार्षिकमेवासीत् । ततः प्रभृत्येवासहाय मवस्थामापन्नैरेभिः स्व-बाहुबलेनैवैतावती स न्नतिः सम्पादिता ।

श्रीमतां पूज्यपादानां जन्म १९४० तमे वैक्रमा ब्दे पौषकृष्ण-द्वितीयायां समभूत् । षड्वर्षा यावत् पितृचरणानामङ्क एव बाल्य-लीलामा लयन्तः प्रारम्भिकीं शिक्षां प्राप्तवन्तः । तस्मिन् समये छन्दोनिर्माणं कुर्वन्ति स्म । दौर्भाग्यात् पि चरणानां कैलासवासेन महतीं कष्टां दशा भवन्तः श्रीमन्तः, दरभङ्गा-पाठशालायां स्वर्गवासि प्रातःस्मरणीयानां श्रीशिवनारायणब्रह्मचारि सविधे लघुकौमुदी-रघुवंश-मेघदूत-सिद्धान्तकौ दी-भागवत-मनोरमा--महाभाष्यादिप्रबन्धानधी पूज्य-चरणानां पण्डित शिरोमणीनां दर्शनसार्व मानां श्री १०८ श्रीदामोदरलाल-गोस्वामि-म

दयानां पादमूले साहित्यदर्पण-काव्यप्रकाश-रस गङ्गाधरादीन् षड्दर्शनीञ्चाधीतवन्तः ।

१९५९ तमे वैक्रमाब्दे कान्यकुब्जपाठशाला-याम्, नगवा पाठशालायाञ्चाध्यापकत्वमकुर्वन् । १९६३ तमे वैक्रमाब्दे च वैश्यविद्यालये, १९६७ तमे च विक्रमाब्दे सन्यासि-संस्कृत-पाठशालायामध्य-क्षपदमुपारूढा इमे न्याय-वेदान्त-मीमांसा-साङ्ख्य-योगादिदर्शनशास्त्राण्यध्यापयन् ।

विगतवत्सरे च तां विहाय, सुप्रसिद्धायां मार-वाडी-संस्कृत-पाठशालायां–साहित्य-प्रधानाध्यापक-पदे तिष्ठन्ति ।

इमे खलु हिन्दूकालेजस्य, हिन्दू–विश्व-विद्या-लयस्य, राजकीय-संस्कृत-पाठशालायाश्च परीक्षका अपि सन्ति ।

कविचक्रवर्ति-महोदयानां पुत्रचतुष्टयमासीत्, तत्र प्रथमः पुत्रः श्रीकालिप्रसादः, साम्प्रतं चतुर्दश-वर्षदेशीय अध्ययनं करोति । द्वितीयो दुर्गाप्रसादः, षट्वर्षदेशीयोऽकाल एव गुरुवराणां हृदये शोक-शङ्कं निचखान । तृतीयो विश्वनाथः पञ्चवर्षीयः साम्प्रतं बाल्यलीलामनुभवति । चतुर्थ एकवर्षीय एव साम्प्रतमेव वैशाखमासे मृतः ।

कविचक्रवर्ति-महोदयैः लक्ष्मीनारायण-महाका-व्यम्, चित्रोपहारः, ललितोपहारः, पद्योपहारः, सुश्लिष्टाष्टकम्, पुण्यश्लोकोदयं महानाटकम्, पाणिनीय-प्रकाशः, वाग्वल्लभ-विवृतिश्चेतिग्रन्थाः प्रणीताः प्रायो मुद्रिता एव सन्ति ।

हिन्दीभाषायामपि महाकवय एव सन्ति । तादृशाः हिन्दीभाषा-कवयः साम्प्रतं सन्ति । तत्रा-पि ग्रन्थद्वयं प्रणीतमेभिः ।

एतेषां विद्वत्ता-परिचयो विदित एव सुप्रभात-पाठकानाम् । प्रत्यङ्कं पठन्ति सुप्रभात-पाठका स्तेषां कविताः । श्रीमद्भिः कवि-चक्रवर्ति-महोदयैः प्रारम्भत इदानीं यावद्यद्यत्कृतम् तत्सर्वं स्व-प्रतिभा-प्रभावेणैवेति सर्वैरस्माभिस्तेषां महत्त्व-पूर्ण जीवनेन स्वावलम्ब-शिक्षा ग्रहीतव्या ।

* * * *

*काशी-संस्कृत-परीक्षा-कालः ।*

काशीस्थ—राजकीय-संस्कृत-परीक्षा, प्रतिवर्षं प्रायो माघमासस्यान्ते, फाल्गुनमासस्य प्रारम्भे वा भवति, वैशाखसमाप्तौ परीक्षाफलं प्रकाश्यते, आषाढान्ते च पठन-पाठन-व्यवस्था प्रचलति । एवं फाल्गुनमासादाषाढमासं यावत् मासपञ्चकं छात्राणां व्यर्थमेवापगच्छति ।

न कुत्रापि परीक्षायामेवं छात्राणां समय-विना-शः, अवहेलना च क्रियते । सर्वत्राङ्गल-परीक्षा श्चैत्रमासस्यान्तिमे सप्ताहे वैशाखे वा भवन्ति । ततश्छात्राः परीक्षां दत्वा ग्रीष्मावकाशे गृहं गच्छ-न्ति । ग्रीष्मावकाश एव समाचारपत्रेषु परीक्षा फलं प्रकाश्यते । एवं छात्राणां व्यर्थः समय-व्ययो न भवति । विहारप्रान्ते, पञ्जाबप्रान्ते च संस्कृत परीक्षा अपि चैत्रान्ते, वैशाखारम्भे वा भवन्ति । अत्र तु छात्राणां मासपञ्चकं व्यर्थं व्यत्येति । पठन कालोऽपि स्वल्पीयानेव भवति । अध्ययनार्थं माघ-मासः, फाल्गुनमासश्च समीचीनौ भवतः । तस्मिन् सुवर्ण-समये वराकाश्छात्राः परीक्षां दत्वा इतो भ्रष्टास्ततो भ्रष्टाः, किं कर्तव्य-विमूढा अमूल्यं समयं स्व-भाग्य-परिपाक-प्रतीक्षायामतिवाहयन्ति ।

अत्रत्यानां परीक्षाधिकारिणां दृष्टिर्न छात्राणां सौकर्य-सम्पादने मनागपि सँल्लगति । ते यथाकथमपि स्व-शिरोभारमवतारयन्ति । सर्वासु व्यवस्थास्वेवमेवावलोकयामः । काशीस्थाश्छात्रा एतस्मिन् विषये महान्तमान्दोलनं कर्तुं सन्ति प्रयता इति परं सन्तोषास्पदमस्माकम् ।

वयं सर्वान् काशीस्थराजकीय-परीक्षार्थिनः साग्रहमावेदयामः, यत्त एतस्मिन्नत्यावश्यके विषये महान्तमान्दोलनं कृत्वा परीक्षासमय-परिवर्तनार्थं परीक्षाध्यक्षाणाम्, युक्त-प्रान्तीय-शिक्षाध्यक्षाणाञ्च सविधे प्रार्थनापत्रं प्रेषयन्तु । तान् साग्रहमनुरुन्धन्तु । मा बिभ्यतु । हृदय-दौर्बल्यं त्यक्त्वा स्वकीयेऽस्मिन्कार्ये सन्नद्धास्तिष्ठन्तु । प्रतिपाठशालातः प्रार्थनापत्रं प्रेषयन्तु छात्राः परीक्षाध्यक्षसविधे, शिक्षामन्त्रिसविधे च । नैतेन तेषां कापि हानिः सम्भाव्यते । वयं परीक्षाध्यक्षाणामपि ध्यानमस्मिन् विषये समाकर्षयामः ।

---

*ग्राहका निवेद्यन्ते ।*

ग्राहका न जानन्ति यत् सुप्रभातस्य सम्पादने, प्रकाशने वा कियत् कष्टं भवति । भारतीयानि सर्वाण्यपि महान्ति पत्राणिअर्थ-सङ्कटेन महतीं दुरवस्थामासादयन्ति, का कथा मृतप्रायस्य संस्कृत-समाजस्य पत्राणाम् ! ग्राहका जानन्ति यत् सुप्रभातस्य महानायो भवति, सम्पादकाः, व्यवस्थापकाश्च प्रचुरं वेतनं गृह्णन्ति । परन्तु त एव जानन्ति यथा प्रतिमासं पत्रस्य मुद्रणव्ययः प्रदीयते, यथा च ऋणं कृत्वा घृतं पीयतेऽस्माभिः । तृतीये चतुर्थ वा मासे सुप्रभातस्याय-व्यय-तालिका प्रकाश्यते प्रतिवर्षञ्च प्रकाश्यते तयोर्विवरणम् । तदवलोकनं विवेचनीयञ्च पाठकैः । साम्प्रतमेव वर्तते शतमु मितं ऋणमवशिष्टम् सुप्रभातस्य । सम्पादक व्यवस्थापका अन्ये च कार्यकर्तारः स्वीयममू समयं व्ययीकृत्य, धनञ्च स्वकीयं दत्त्वा केव मुत्साहेन, संस्कृत-सेवाबुद्ध्या च महतीं संस्क पत्र-त्रुटिं पूरयितुं सन्ति सन्नद्धाः !

एतस्यामप्यवस्थायां छात्राणां सौकर्याय हा स्वीकृत्यापि सुप्रभातं स्वल्पमूल्येन वितीर्णमित्य महदाश्चर्यं साहसञ्चासीत् सुप्रभात-सञ्चाल नाम् । नानया रीत्या भारते कस्यापि पत्रस प्रचार-कार्यं भवति । तथापि नास्ति ग्राहका सन्तोषः, विश्वासश्चेति महदाश्चर्यम् !!

सुप्रभात-सम्पादने या यास्त्रुटयो वर्षत्रया न्तरे समनुभूतास्तासामपाकरणाय शनैः श क्रियते प्रयत्नः, अन्तस्त्रुटीः अपहाय सुप्रभातस्य महती बाह्या त्रुटिर्विद्यते; यत् तत्र यथासमयं ग्रा काणां सविधे समुपसर्पति । एतस्याः प्र कारणं द्रव्याभाव एव वर्तते । तथापि साम्प्रतं पाठकान् निवेदयामो यत् श्रावणमासादिदं सुप्र सौरमासस्यान्तिमे सप्ताहे नूनं पाठकानां स समेष्यति । यदि सौरमासाभ्यन्तरे पत्रं लभ्येत् चेत् ग्राहकैरवश्यमेवकार्यालये ग्राह सङ्ख्या सहितं पत्रं प्रेषणीयम् । पत्रालय-प्रमा केषाञ्चन सविधे सुप्रभातं यथा समयं न समे तेच सुप्रभातं निन्दन्तस्तिष्ठन्ति, न च कार्या सूचनापत्रं प्रेषयन्ति, येन पुनः प्रेषितं स्य सुप्रभातम् ।

एतदपि प्रथमं निवेदयामो यत् यन्त्रालय-प्रमादेन सम्पूर्णं पत्रं यस्मिन् कस्मिन्नपि मासे न प्रकाशितं भविष्यति चेत् स्वल्पाकारमेव सुप्रभातं प्रेषयिष्यामः, तस्य क्षतिपूर्तिश्चागामिन्यङ्के विधास्यामः । परन्तु तत्र न पाठकैः सन्दिहानैर्भाव्यम् संस्कृतज्ञैरिति ।

* * * *

*सुरभारती ।*

परं प्रमोद स्थानं यत् सुप्रभात-क्षुण्णे वर्त्मनि साम्प्रतमन्येऽपि नवीनाः पत्र-प्रकाशन-रसिकाः प्रयतन्ते । सौभाग्यमिदं सुरभारत्याः । भारते बहूनां संस्कृत-पत्राणामावश्यकता वरीवर्ति । न द्वित्रैः पत्रैरपारमनन्तं संस्कृत-वाङ्मयमान्दोलितं प्रमथितञ्च स्यात् । अस्माकं सविधे प्रियसुहृद्भिः श्रीमद्भिः श्रीगुरुप्रसाद-शर्म्मभि र्व्याकरणाचार्यैः सुप्रभाते प्रकाशनाय काचन सूचना प्रेषिता । यां दृष्ट्वा वयं परं प्रसीदामः । सा च स्थानाभावान्नास्मिन्नङ्के प्रकाशिता । तस्या अयमेव सारांशः " यत् सत्वरमेव वाराणसीतः सुरभारती नाम्नी सुप्रभाताकारा, शतपृष्ठात्मिका, पुरातत्व-विषयिणी, मासिकी संस्कृत-पत्रिका प्रकाशिता भविष्यति । तस्याश्च सम्पादनं महामहोपाध्यायाः श्रीगङ्गानाथ झा-एम० ए०, डी लिट्०-[ वाइस चान्सलर—प्रयागविश्वविद्यालय ] —महोदयाः करिष्यन्ति । श्रीगोपीनाथ कविराज-एम० ए० महोदया अपि तत्रावधानं दास्यन्ति । प्रायः सर्वेऽपि भारतीया महामहोपाध्याय-पदवीभाजः पण्डिताः, सुप्रसिद्धाः संस्कृत-लेखकाः, हिन्दी लेखकाश्च लेखान् दास्यन्ति । एतस्या वार्षिकं मूल्यं मुद्राषट्कं ६) भविष्यति । श्रावण मास एव ग्राहकत्वमुररीकुर्वद्भिः ५) देयम् । इयं पत्रिका संस्कृत वाङ्मयस्य पुरातत्त्वान्वेषणे यद्यद् भविष्यति तत्तत् सर्वं सम्पादयिष्यतीति । " वयं पत्र-सञ्चालकेभ्यः साधुवादान् धन्यवादांश्च वितरामः । सहयोगितया, एककर्मकारित्वेन सुहृत्स्नेहेन च सुरभारत्याः प्रथमाङ्क-विलोकने विलोचने प्रमृज्य, परमुत्कण्ठिताः सन्तिष्ठामहे, सुरभारत्याः सफलताञ्च कामयामहे ।

* * * *

## मानव-शास्त्रम् ।

*ले०—श्रद्धेय-श्रीरामावतारशर्म्म-महोदयाः.*

[ साहित्याचार्याः, एम० ए० ]

( क्रमागतम् )




यतः कालात् प्राक् पाश्चात्याः जानन्तिस्म, यत् ख्रिष्टजन्मतः ४००४ वर्षाणि पूर्वं पृथिव्याः, मानुषाणाञ्च समुत्पत्ति र्नासीदिति । पूर्वदेश-वासिनः खल्विमां वार्तां न समामनन्तिस्म । परन्तु वस्तुतस्तेषामपि यथार्थशास्

नासीत् एतस्मिन् विषये। पूर्वजानां शब्दान् विहाय, उभयो र्नासीदन्यत् किमपि प्रमाणम्; येन ते मानुषाणां वास्तविको-मवस्थामवगन्तुं प्रभवेयुः। साम्प्रतं भूगर्भ-विद्यया विनिश्चितम्, यत् पृथिव्यां लक्षवर्षात् वृक्षाः, जन्तवश्चासन्. तेषां सुदीर्घकालानन्तरं पृथिव्यां मनुष्याणामुत्पत्तिर्बभूव। यदि साम्प्रतकालात् लक्ष-वर्षाणि पूर्वं मनुष्याणामुत्पत्तिः स्वीक्रियेत चेत्; नेदमसङ्गतं भवति। गज-गण्डक-भल्लुकादीनामस्थिभिः सह, शीतदेशेषु मनुष्याणामस्थीनि प्राप्तानि सन्ति। एतस्मादिदमनुमीयते. यद् यदा तेषु तेषु देशेषु ग्रीष्मः पततिस्म; तदा तत्र गज-गण्डकादीनामुत्पत्तिर्बभूव। यदा तत्र शीत-साम्राज्यं जातम्, तदा च तेषां विनाशः समजनीति। एवं यदातस्तत्र गज-गण्डकादय आसन् तदातस्तत्र मानवानामपि स्थितिरासीत्। साम्प्रतं पाश्चात्येषु शीत-देशेषु गजादयो न लभ्यन्ते परन्तु; यत्र तत्र भूखननेन गजानामस्थीनि लभ्यन्ते। एतेन प्रतीयते यत् प्राचीन समये तत्तद्देशानां जलानि, वायवश्च नातिशीता आसन्, यथा साम्प्रतं वर्त्तन्ते। फ्रांसदेशस्य कुत्रापि भूगर्भे गभीरा गुहाः समुपलब्धाः, यत्र वन्यानां पशूनामस्थीनि, पाषाणस्य शस्त्राणि, मृगाणामस्थिपञ्जराणि च समुपलब्धानि, तानि फ्रान्सदेशस्य समीपे साम्प्रतं न दृश्यन्ते। एतासु कन्दरासु यत्रतत्र हस्तिदन्तेषु, हरिणानां शृङ्गेषु च, हरिणानाम्. शवलगजानाञ्च चित्र-रेखा लिखिताऽस्ति। एतेषां चित्राणामवलोकनेन प्रतीयते, यत् कदाचिदत्र गजाः समुद्भवन्तिस्म। एतैर्लक्षणैः सम्यग्लक्ष्यते यत् पृथिव्यां लक्षवर्षेभ्यः पूर्वं मानवसृष्टिः समभूदिति।

वन्यमानवैर्निर्मितेषु पाषाण-शस्त्रेषु गजानां चित्ररेखासु च साम्प्रतं मृत्तिकाऽऽच्छादनं जातम्। एतेषामुपरि इयती मृत्तिका कतिवर्षेषु समारोढुं शक्नोतीति गवेषणादपि मानवसृष्टेः कालनिर्णयो भवितुं शक्यः। शतवर्षेषु केवलं पर्वमात्रं (इञ्च) मृत्तिका समारोहति। यत्रतत्र रोमनजातीयानां वस्तूनि वितस्तिचतुष्टयस्याधस्तात् समुपलब्धानि। एवं यदि १९०० वर्षेषु वितस्तिचतुष्टयामिता मृत्तिकासमारोहति; तदा ६० वितस्तिमितायाः मृत्तिकायाः समारोहणे सहस्रशो वर्षाणि लगिष्यन्तीति सम्यगनुमिमीमहे। ६० वितस्तीनामधस्तात् नीलनदस्य परिसरभूमौ मानवचिह्नानि मृत्तिकाभाजनानि, इष्टकाखण्डानि च लब्धानि सन्ति तेषां काल-निर्णयात् प्रतीयते, यद् यदा लक्षवर्षाणि पृ शस्त्रास्त्रविद्या, भाजननिर्माण-कला च पृथिव्यां प्रचलि ताऽऽसीत्तदा मनुष्याणामुत्पत्तिस्ततो सुदीर्घकालात् प्रथ मेवाभूदिति। शतशो वितस्तीनामधस्तादपि भूगर्भे मान चिह्नानि वर्तन्ते, लब्धानि, लभ्यन्ते च। अतो मानवसृ कालो नितरां प्राचीनतम इति निःसंशयम्।

प्राक्तन-पुरुषाणां बहूनि चिह्नानि समुपलब्धानि। य कुत्रापि सरोवरेषु गृहनिर्माणं कृत्वा निवसतां मनुष्या चिह्नानि लभ्यन्ते, कुत्रापि शस्त्रास्त्राणि लब्धानि। कुत्र पीष्टकाखण्डानि प्राप्तानि। इमानि चिह्नानि अनुमान ६-७ सहस्रवर्ष-पूर्वकाणि सन्ति। कियन्तो जानन्ति, य पूर्वजाः पुरुषा नितरां सभ्या आसन्। अतो यतो हस्तलिखि पुस्तकानि लभ्यन्ते, ततएव मानवानां सृष्टिं मन्यन्ते परन्तु वैज्ञानिकैः सिद्धान्तैरिदं निर्णीतम् विद्यते, य सभ्यता शनैः शनैरेधते। अतः सभ्यता-समयात् प्रा मानवाः चिरकालं यावदसभ्या एवासन्। भाषाणां परीक्षणे नापि मनुष्याणां प्राचीनताऽवगम्यते। भारतीय-भाषासु पाश्चात्य-भाषासु च बहुधा साम्यं वर्तते। कुतः? भारती यानां पाश्चात्यानाञ्च भाषाणां मूलभूता काचन भिन्नैव भाष अवर्तत, कतिसहस्रवर्षात् भारतीयभाषाणाम् पाश्चात्यभाषा णाञ्च भेदः समजनिष्ट। एतस्मात् भेदकारणात् प्रा कतिसहस्रवर्ष-पूर्वं द्वयोरैक्यमासीदिति न ज्ञातुं शक्यते।

भाषाणां कति वर्गाः सन्ति। प्रत्येकस्य वर्गस्य शब्दा, कोषः, व्याकरणानि भिन्नानि सन्ति, तथापि सर्वेषां हृदयन् समानमेव वरीवर्ति। एतेन कारणेनैकजातीयोऽपरजातीय भाषां सम्यक् शिक्षितुं शक्नोति। अतो भाषानुसारं मनुष्य जातीनां विभागो न युज्यते। यतः सम्भाव्यते, यत् भिन्न भिन्न-जातीयै र्मनुष्यैरन्येषां भाषा स्वीकृता भवेत्। उदा हरणं, यथा-फ्रांसदेशीया रोमनभाषा-समुत्पन्नां भाषां वदन्ति भारतीय-द्रविडजातौ यत्रतत्राऽऽर्यभाषायाः संस्कृतस्य भूया प्रचारो विद्यते। अतो मानवशास्त्रज्ञै र्वर्णानुसारं मानवजातेर्भेद स्वीकृतः, न हि भाषानुसारम्।

साम्प्रतमिदमवलोकनीयम् यत् मनुष्येषु सभ्यता-विकाशः केन क्रमेण सञ्जातः । पृथिव्यामधुनापि भयङ्कराः वन्याः मनुष्याः, अमरीका-प्रभृति देशानां विपिनेषु प्राप्यन्ते । सभ्यतमा अपि जातयः पाश्चात्यदेशेषु प्राप्यन्ते । कतिस-सूवर्षेभ्यः पूर्वकालीनं मानवानामितिवृत्तं समुपलभ्यते । लिखितानामितिहासानां प्राक्तनमपि वृत्तं भूगर्भलीनेभ्यो मानव-चिह्नेभ्योऽनुमीयते । कियन्तो जानन्तिस्म, जानन्ति च बहवो भारतीयाः, यत् केनापि प्रारम्भत एव सभ्यमनुष्याणां सृष्टिः कृतासीत्, अथवा मानवसृष्टिमुत्पाद्य सद्य एव तेषां सभ्यता शिक्षा केनापि प्रदत्ता, शनैः शनैस्ते सभ्यतां, विद्यां, कलाञ्च विस्मृत्य, साम्प्रतमसभ्याः सञ्जाता इति । परन्तु बहुभिः कारणैरियं कल्पना निर्मूलैव प्रतीयते । प्रथमन्त्विदम् यत् पूर्वजाः वायुयानानाम्, सेतुप्रभृतीनां निर्माणं न जानन्तिस्म, यदि तेषां तस्या विद्याया ज्ञानमासीत्तदा ते किमर्थमीदृशीमुपकारिणीं विद्यां विस्मृत्य, नितरामसभ्याः संवृत्ताः । द्वितीयं कारणमिदं यत् भूगर्भशास्त्रानुसारं यानि सर्वप्राचीनानि चिह्नानि सम्प्राप्तानि सन्ति; तेभ्यो न किमपि तेषां सभ्यतासूचकं चिह्नं लभ्यते । मृत्तिकाभाण्डानि, इष्टकाखण्डानि च नातिनोच्चैः पृथिव्याः लभ्यन्ते । एतेनैतत् सिद्ध्यति, यत् सृष्टौ वानराणामनन्तरं सर्वप्रथम-मसभ्यमनुष्याणां सृष्टिरभूत्; पुनर्मनुष्येषु शनैः शनैः सभ्यतायाः क्रमविकाशः समजनि । प्रथममसभ्यजातीनामवस्था साम्प्रतिकानामवशिष्टानामसभ्यजातीनां दर्शनेन स्फुटं प्रतीयते, अन्यच्चासभ्यतायुगस्य प्रचलितेन व्यवहारेण, आचारेण च ज्ञातुं शक्यते, ये साम्प्रतमपि सभ्यजातिषु प्रचलन्ति ।

प्राक्तना अङ्गुलीषु गणनां कुर्वन्तिस्म । साम्प्रतिका असभ्या अपि अङ्गुलीष्वेव गणनां कुर्वन्ति । अग्निप्रज्वालनार्थं वैज्ञानिकैः स्फुर-शलाका ( दियासलाई, Matches ) आविष्कृता, परन्तु पुरा अरणिमन्थेनेनाग्निं प्रज्वलयन्तिस्म । दारुसंघर्षणेन, पाषाण-लौह-संयोगेन च वह्निप्रज्वालनमसभ्य-समयादागतं विद्यते । पाश्चात्याश्चापि पशुप्रभृतिषु, प्रचलितानां महामारी-प्रभृति-रोगाणामुपशमाय काष्ठसंघर्षणजन्यमग्निमुपयुञ्जन्ति । मृतमनुष्याणां कृते भोजनादिदानमपि प्राचीनाया असभ्यायाः प्रणाल्याः प्रभाव एव । प्राचीना जानन्तिस्म, यत् मरणानन्तरमात्मा शरीराद्बहिर्निष्क्रम्य वायौ परिभ्रमति, भोजनं जलञ्चान्वेषयति । परन्तु साम्प्रतं दर्शनशास्त्रेण, विज्ञान शास्त्रेण चेदससङ्गतं भ्रम-विजृम्भितञ्च प्रतिभाति । प्राच्येषु पाश्चात्येषु च देशेषु मृतस्य भोजनाच्छादनाय महान् प्रयत्नः क्रियते, रूस-देशे पुरा मृतकस्य शवस्य पार्श्वे पिष्टसोपानं रचयन्तिस्म, येन स सुखं स्वर्गमारोहेत् । पाश्चात्यदेशेषु मृतकस्य हस्ते पणमेकं संस्थाप्यते; येन स मूल्यं दत्वा वैतरणीं तरेत् । भारतेऽपि गवां पुच्छं धृत्वा, वैतरणी-तरण-प्रथा वर्त्तते । तन्त्राणि, मन्त्राणि, यन्त्राणि, अभिचारादीन्यपि तस्मादेवासभ्यसमयात्समागतानि सन्ति, तस्मिन् समये लोकानां भूतेषु, प्रेतेषु, पिशाचेषु च महान् विश्वास आसीत् । साम्प्रतमपि पाश्चात्यदेशेषु बहवः काकादीनां रुतैः शकुनज्ञानं मन्यन्ते । शत्रूणां विनाशाय तेषां पुत्तलदाहः क्रियते तत्र । स्वल्पवर्षेभ्यः पूर्वमिङ्ग्लेण्डदेशे तत्रत्यप्रधानमन्त्रिणः श्री एसक्किथमहोदयस्य पुत्तलदाहः कृत आसीत् । यदि विज्ञानमयेषु पाश्चात्यप्रदेशेषु ईदृशी अन्धपरम्परा साम्प्रतमपि प्रचलीचलीति, तदा मूर्खप्रचुरे-भारते तेषां पुरातनप्रथानां प्रचारः किं नो भवेत्? नात्र किमप्याश्चर्यम्!

सभ्यतायास्त्रीणि सोपानानि सन्ति । एकस्तु स समय आसीत्; यत्र जनाः पाषाण-कुठारैः, पाषाण-चक्रैश्च कार्य-निर्वाहं कुर्वन्तिस्म । पुनश्च द्वितीये समये मानवाः कोमलधातूनां ताम्र-लौह-प्रभृतीनां शस्त्राणि निर्मितवन्तः । तृतीयः स यत्र मनुष्यैर्भूगर्भाल्लौहादि निस्सारणे प्रयतितम् । कुत्र कुत्रापि देशे पाषाणयुगानन्तरमेव लौहयुगं समागतम् । भारते, योरपदेशे च त्रयाणामपि समयानां चिह्नानि लभ्यन्ते । अमरीका-अफरीका-प्रभृतिदेशेषु समयद्वयस्यैव चिह्नानि लभ्यन्ते । एतेषां त्रयाणामपि युगानां नामानि, क्रमशः-पाषाणयुग-स्वर्णयुग-लौहयुगानि सन्ति । अतिप्राचीनकालीनाः नराः मृगयां कृत्वा, मत्स्यान् मारयित्वा, फलान्यवचित्य च, तत इतो परिभ्रमन्तस्तिष्ठन्तिस्म । यतो मनुष्याः कृषिं कर्तुं प्रवृत्ताः, यतश्च ते एकत्र सङ्घीभूय निवासं कृतवन्त स्ततएव तेषां सामाजिकी नैतिकी च परिस्थितिः

समुन्नतिमवाप्तुं प्रवृत्ता । कुटुम्बाध्यक्ष एव राज्ञः कार्यं करोतिस्म । शनैः शनै राज्यस्थापनमभूत् । पारस्परिक-विवाद-निर्णये व्यवस्थायाः, धाराणाञ्चावश्यकता समजनि । क्रमशो लेखनकलाया आविर्भावोऽभूत् । अनया कलया सभ्यतायां महत्साहाय्यं समागतम् । इतिहास-शिल्पादीनां वृद्ध्यर्थं स्मृति-शक्तेरत्यावश्यकता विद्यते, स्मृतिशक्तौ लेख-साहाय्यं नितरामपेक्षितम्, अध्यापकानाम्, पुरोधसाम्, लेखकानाम्, शासकानाञ्च लेखद्वारा शासनानाम्, उपदेशानाञ्च प्रचारे महत्साहाय्यं जातम् । अनेकानां जीवानां चित्र-रेखा-निर्माणन्तु पूर्वत एव आसीत्, तथैव चित्रनिर्माणकलया लिपि-विस्तारः सञ्जातः ।

काष्ठ-सङ्घर्षणेन वह्निप्रज्वालनकला तु चिरकालात् ज्ञाताऽऽसीत् । तस्य प्रमाणन्त्विदमेव यत् गृहानान्तले मानवीयास्थिभिः सह काष्ठाङ्गाराण्यपि लब्धान्यासन् । अस्थ्नां सूच्योऽपि समुपलब्धाः याभिरिदं ज्ञायते, यत् यथा साम्प्रतं कियन्तो वन्य-वर्वराः चर्म-वस्त्रं संसीव्य परिदधते, तथैव पुराकालेऽपि मनुष्याः कुर्वन्तिस्म । अद्यापि वन्येषु अस्थ्नां कुन्ताः, पाषाणानां शिलीमुखाः दरीदश्यन्ते ।

शिलायुगस्य—अर्थात्—पाषाण-समयस्य विभागद्वयं विद्यते (१) प्राचीन-शिलासमयः, (२) नवीन-शिलासमयश्च । प्राचीनशिलासमये पाषाणान् भङ्क्त्वा तेषां सूच्यग्राः खण्डा निरमीयन्त । तेभ्य एव छुरिका-कुन्त-बाणादीनां कार्यं गृह्णन्तिस्म । नूतनशिलायुगे पाषाणाः परिष्कृत्य चिक्कणाः क्रियन्ते स्म । पाश्चात्येषु पाषाणस्य कुन्ताः, पृथिव्यामति दूरं निखन्यन्तेस्म । अफरीकायाः स्थलेषु पृथिव्यामीदृशाः प्रस्तरा, मिलन्ति, यान् दृष्ट्वाऽनुमीयते यदत्र शिलास्त्रधारिणो वन्या वसन्तिस्म । तसमन्य ( Tasmania ) द्वीपस्य वन्य-मानवास्तु साम्प्रतमपि पाषाणान् भङ्क्त्वा शस्त्रनिर्माणं कुर्वन्तो दरीदश्यन्ते । तत्रत्या जाङ्गलिका मानवा काष्ठयष्टिकाभिः पाषाण-खण्डैश्च शस्त्रास्त्राणां कार्यं गृह्णन्तः समवलोक्यन्ते । पुरुषाः 'कांगरू' नाम्नः पशोर्मृगयां कुर्वन्तिस्म । स्त्रियश्च वृक्षाणामुपरि गत्वा पशून् पक्षिणो गृह्णन्तिस्म । इमे शम्बूकानां ( घोंघा ), कर्कटानां ( केकड़ा ) भोजनं कुर्वन्तिस्म, उलूपी नामानं जलचरं लगुडेन ताडयन्तिस्म । जाल-वडिशादीनां निर्माणमिमे न जानन्तिस्म । इमे फ मांसादीन् वह्नौ संस्कृत्य भक्षयन्तिस्म । जले खाद्यपदार्थ पाचनमेते न ज्ञातवन्त आसन् । एतेषां कृषिज्ञान नासीत् । यष्टिकानामावरणं निर्माय तस्यैव साहाय्येन य कथमपि न्यवसन् । सूक्ष्मवल्कल-सूत्रैः सम्बद्धं चर्मक व्यवहरन्तिस्म कटनिर्माणकलां जानन्तिस्म । पञ्चतोऽधि सङ्ख्यां नाविन्दन् । छायामेवात्मानं प्रेतञ्च जानन्तिस्म वनानां भीषण-गहन-गह्वरेषु भूत-प्रेत-पिशाचादीनां स्थि स्वीकुर्वन्तिस्म । प्रेतरक्षार्थे शवस्यास्थीनि गले बध्नन्तिस्म शवानां निखनन-चयेषु (Graves) तेषामुपयोगार्थं शस्त्रा स्थापयन्तिस्म, एतेषां द्वीपवासिनां-जीवन-परीक्षया नि प्राचीनानां जीवनस्य बहुज्ञानं भवितुमर्हति ।

---

## संस्कृत-व्याख्यानम् ।

आषाढशुक्ल-तृतीयायां शनौ ( २।७।२७ ) सा षट्वादन समये टाउनहाल-नाम्नि सभास्थले, लव पुरीय-दयानन्दप्रधान-विद्यालयस्य ( डी० ए० वी० कालेज; लाहौर ) संस्कृताध्यापका अस्माकं प्रि सुहृदः श्रीमन्तः श्रीचारुदेवशर्म-शास्त्रि-( एम० ए० ( एम० ओ० एल० ) महोदयाः, 'को वेदानुद्धरि ष्यतीत्यस्मिन् विषमे संस्कृते प्रभावशालि महत् पूर्णश्च भाषणं प्रदत्तवन्तः । वैदिक कालमारभ्य साम्प्रतकालं यावद्वेदस्य परिस्थितिं प्रदर्शयद्भिस्तै वेदानां प्रचाराय रमणीयमुक्तम् । संस्कृते काश्य नैतादृशं भाषणं श्रूयते प्रायः ।

व्याख्याने काशीस्थाः बहवश्छात्रा अध्याप काश्च सम्मिलिता आसन् ।

वयं शास्त्रिणां संस्कृत भाषणेन नितरां सन्तुष्ट स्तेभ्यो धन्यवादान् वितरामः । —सम्पादकः

## भगवान् कौटिल्यः ।

( ले०—श्री देवीचरणशर्म्मा, निगमः )



अर्थशास्त्रम् केन निर्मितम्—इति प्रश्ने महत् वैमत्यम्, ग्रन्थकर्ता स्वयमेवात्मानम् कौटिल्यनामानम् ब्रवीति । कुत्रचिच्च छन्दोभिरात्मानम् नन्दवंशविजयिनमपि सूचयति । परन्तु विद्वांसस्तमन्येनापि नामधेयेनाकारयन्ति । केचित् 'विष्णुगुप्त'—इति कथयन्ति । अन्ये च 'चाणक्य' इति अभिदधते, अस्तु । कौटिल्यस्य नन्दवंशविजयस्तु विष्णुपुराण-प्रामाण्यादपि सिद्ध्यति । तत्र लिखितम्—

"महापद्मः । तत्पुत्राश्चैकं वर्षशतमवनीपतयो भविष्यन्ति नव । तान्नन्दान्कौटिल्यो ब्राह्मणस्समुद्धरिष्यति । तेषामभावे मौर्याश्च पृथिवीं भोक्ष्यन्ति । कौटिल्य एव राज्ये चन्द्रगुप्तमभिषेक्ष्यति । तस्यापि पुत्रो विन्दुसारो भविष्यति । तस्याप्यशोकवर्धनः ॥"

यत्किञ्चिदपि विवेचितं, तेन ईशातः ३२१-वर्ष पूर्वं चन्द्रगुप्तोऽभिषिक्तो राज्ये बभूव । अशोकवर्धनश्च ईशातः २६६ वर्षपूर्वं राज्यासनमधितष्ठौ । एतेनेदं प्रतीयते "ईशातः ३२१-३०० वर्षपूर्वम्, अस्मिन्नेवान्तरे कौटिल्यो महद्ग्रन्थमर्थशास्त्रं रचितवानिति ॥

कामन्दकोऽपि नीतिसारस्य प्राक्कथने यत् किञ्चिदपि लिखति कौटिल्यविषये; तेनापीदमेव सिद्ध्यति । यतः स कथयति—

"यस्याभिचारवज्रेण वज्रज्वलनतेजसः ।
पपात मूलतश्श्रीमान् सुपर्वा नन्दपर्वतः ॥
एकाकी मन्त्रशक्त्या यश्शक्त्या शक्तिधरोपमः ।
आजहार नृचन्द्राय चन्द्रगुप्ताय मेदिनीम् ॥
नीतिशास्त्रामृतं धीमानार्थशास्त्रमहोदधेः ।
समुद्दध्रे नमस्तस्मै विष्णुगुप्ताय वेधसे ॥"

प्रथमाध्यायस्य चतुर्दशे श्लोके कामन्दको यवनशासनं वर्णयति । संभाव्यतेऽयं यवनः ' कनिष्क ' एव इति ।

अपिच—कामन्दकवत् दण्डी, विष्णुगुप्तमेव अर्थशास्त्रकर्तारम् वदति । दशकुमारचरिते तेन कतिचित् पदान्युद्धृतानि । एवञ्च तानि—

"अधीष्व तावद्दण्डनीतिम् । इयमिदानीमाचार्यविष्णुगुप्तेन मौर्यार्थे षड्भिश्श्लोकसहस्रैः संक्षिप्ता । सैवेयमधीत्य सम्यगनुष्ठीयमाना यथोक्तकर्मक्षमा ॥"

इमानि पदानि तु अर्थशास्त्रेणैव गुप्तरीत्या सिद्ध्यन्ति । तत्र तु ग्रन्थकर्ता स्वयमेव द्वितीयपुस्तकस्य दशमेऽध्याये कथयति *"नरेन्द्रार्थे रचितमिदम्मयेति"* ॥ नरेन्द्रोऽयं चन्द्रगुप्तमपहायापरः कश्चिन्नास्ति ।

अर्थशास्त्रस्यामिश्रणता पवित्रता च दण्डिना साधिता, स कथयति "षड्भिश्श्लोकसहस्रैरिति" । सन्ति च तत्र श्लोकानां षट् सहस्राणि । दशकुमारचरितपदानां अर्थशास्त्रपदानां ? पठनम् तुलना च दृश्यते । तथाहि—

### दशकुमारचरिते एवं पाठः ।

(१) इयत ओदनस्य पाकायैतावदिन्धनम्

(२) कृत्स्नमायव्ययजातमहः प्रथमेऽष्टमे भागे श्रोतव्यम् ।

(३) चत्वारिंशच्चाणक्योपदिष्टानाहरणोपायान् सह-
स्नधाऽऽत्मबुद्ध्येव विकल्पयितारः ।

(४) द्वितीयेऽन्योऽन्यं विवदमानानां, तृतीये स्नातुं
भोक्तुं च चतुर्थे हिरण्यप्रतिग्रहाय ॥

## अर्थशास्त्रे चैवम् ।

(१) काष्ठपञ्चविंशतिपलम् तण्डुलप्रस्थसाधनम् ।

(२) दिवसस्याष्टमे भागे रक्षाविधानमायव्ययौ च
शृणुयात् ।

(३) तेषाम् आहरणोपायाश्चत्वारिंशत् ।

(४) द्वितीये पौरजानपदानां कार्याणि पश्येत् । तृती-
ये स्नानभोजनं सेवेत । स्वाध्यायं च कुर्वीत ।
चतुर्थे हिरण्यप्रतिग्रहमध्यक्षांश्च कुर्वीत ॥

(५) भुक्तस्य च यावदन्तः परिणामस्तावदस्य
विषमयं न शाम्यत्येव ॥

(५) अग्नेर्ज्वाला धूमनीलता·········इति विषयुक्त-
लिङ्गानि ॥

पुनश्च कादम्बरीनिर्माता बाणः कौटिल्यविज्ञानं
निन्दन् कौटिल्यमेवार्थशास्त्रकर्तारम् सूचयति,
द्रढयति चेदस्मतम् ॥

स एवं निन्दति—

"किं वा तेषां साम्प्रतं, येषामतिनृशंसप्रायोप-
देशि निर्घृणं कौटिल्यशास्त्रं प्रमाणम् । अभिचारैक-
प्रकृतयः पुरोधसो गुरवः । पराभिसन्धानपरा
मन्त्रिण उपदेष्टारः । नरपतिसहस्रोज्झितायां
लक्ष्म्यामासक्तिः । मारणात्मकेषु शास्त्रेष्वभियोगः ।
सहजप्रेमार्द्रहृदया भ्रातर उच्छेद्याः ॥"

अग्रे च पञ्चतन्त्रकर्ता, चाणक्यमर्थशास्त्ररचयि-
तारं वदति । तेन लिखितम्—

"ततो धर्मशास्त्राणि मन्वादीनि, अर्थशास्त्राणि
चाणक्यादीनि, कामशास्त्राणि वात्स्यायनादीनि"।

प्रतीयते च वात्स्यायनोऽपि कामशास्त्रम्, अर्थ
शास्त्रानुकूलमेव विरचितवानिति ॥ तेन यत्रकुत्र
चिदर्थशास्त्रपदानि प्रयुक्तानि ॥ तथाहि—

कामशास्त्रे,

(१)·········कामसूत्रमिदं प्रणीतम् । तस्यायं प्रक
रणाधिकरणसमुद्देशः ॥ ·········विद्यासमुद्देश
"·····औपनिषदिकम् ॥ १. १.

(२) यथा दाण्डक्यो नाम भोजः कामाद्ब्राह्मण
कन्याममभिमन्यमानस्सबन्धुराष्ट्रो विननाश।"
····रावणश्च सीतामपरे चान्ये बहवो दृश्यन्
कामवशगा विनष्टा इत्यर्थचिन्तकाः ॥

(३) पितृपैतामहं, वश्यं, इति मित्रसम्पत्,

(४)···अर्थोऽर्थानुबन्धः
···अर्थो निरनुबन्धः
इत्यादि ॥

अर्थशास्त्रे ।

(१) इदमर्थशास्त्रं कृतम् । तस्यायं प्रकरणाधि
कारसमुद्देशः विद्यासमुद्देशः ।······औपनि
षदिकम् ।

(२) यथा दाण्डक्यो नाम भोजः कामाद्ब्राह्मण
कन्यामभिमन्यमानस्सबन्धुराष्ट्रो विननाश
······रावणः परदारानप्रयच्छन् ।······
चान्ये च बहवः शत्रुषड्वर्गमाश्रिताः सबन्धु
राष्ट्रा राजानो विनेशुरजितेन्द्रियाः ॥

(३) पितृपैतामहं, वश्यं, इति मित्रसम्पत् ॥

(४)····अर्थोऽर्थानुबन्धः ।
·· अर्थो निरनुबन्धः

इत्यादि ॥

पुनश्च सः "सूत्राध्यक्षगवाध्यक्षपण्याध्यक्ष-अयुक्तका" दीनि शब्दानि प्रयोजयति । "ते च राज्ञः प्रतिनिधयः इति तान् विवृणोति । अपहाय चेदं सर्वं सोऽर्थचिन्तकशब्दमर्थशास्त्राध्यापकार्थं प्रयोजयति ॥ अत्रत्विदं संभाव्यते "कौटिल्योऽर्थ-चिन्तक" इति, तत्र प्रयुक्तशब्दानां कौटिल्यशास्त्रेऽपि दर्शनात् ।

मल्लिनाथसूरिरपि कालिदासस्य कुमारसंभवस्य रघुवंशस्यापि टीकायाम् तत्रत्यपदानि अर्थशास्त्रप्रमाणं समुद्धृत्यैव प्रकटीकरोति । एवंविधानि तानि पदानि,

*मल्लिनाथ टीकायाम्—*

(१) भूतपूर्वमभूतपूर्वं वा जनपदं परदेशप्रवाहेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत् ॥

—रघु० १५, २९, कुमा० ६, ३७,

(२) कार्याणां नियोगविकल्पसमुच्चया भवन्ति । अनेनैवोपायेन नान्येनेति नियोगः । अनेन वाऽन्येन चेति समुच्चयः ॥

—रघु० १७, ४९.

(३) क्षीणाः प्रकृतयो लोभं, लुब्धा यान्ति विरागताम् । विरक्ता यान्त्यमित्रं वा भर्तारं घ्नन्ति वा स्वयम् ॥

—रघु० १२, ५५,

*अर्थशास्त्रे—*

(१) भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत् ॥

—अर्थ० २. १.

(२) आपदां नियोगविकल्पसमुच्चया भवन्ति । अनेनैवोपायेन नान्येनेति नियोगः । अनेन वान्येन वेति विकल्पः । अनेनान्येनचेति समुच्चयः ॥

अर्थ० १०. ७.

(३) क्षीणाः प्रकृतयो लोभं लुब्धा यान्ति विरागताम् । विरक्ता यान्त्यमित्रं वा भर्तारं घ्नन्ति वा स्वयम् ॥

अर्थ० ७. ५.

एवमन्येऽपि ।

अभिज्ञानशकुन्तलायां मृगयां प्रशंसन्कालिदासोऽपि कौटिल्यपदान्येवोल्लिखति । तदेवम्;—
मेदश्छेदकृशोदरं लघुभवत्युत्थानयोग्यं वपुः,
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।
उत्कर्षस्स च धन्विनां यदिषवस्सिध्यन्ति लक्ष्ये चले,
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ।

—शकु० २-५

मृगयायां तु श्लेष्मपित्तमेदस्स्वेदनाशश्चले स्थिरे च काये लक्ष्यपरिचयः, कोपस्थाने हि तेषु च मृगाणां चित्तज्ञानञ्च ।

—*अर्थ० ८-३*

अर्थशास्त्रेषु कानिचित्पदानि विलक्षणान्येव । प्रकृतिशब्दः कौटिल्येन नवीनेऽर्थे प्रयुक्तः । स स्वयमेव तत् कथयति । अमरसिंहेन अन्यैश्च "सप्त राज्याङ्गानि" इति लिखितम् । कौटिल्यस्तु प्रकृतिशब्दं प्रयुज्य "अष्ट राज्याङ्गानि" इति वदति । स सप्तके तस्मिन् शत्रुशब्दं योजयति । एवञ्च प्रकृतिशब्दयोजनेन शत्रोरपि गणना भवति । काम-

न्दकोऽपि प्रकृतिशब्दं प्रयोजयति । सिद्धयति चैवं " कामन्दककालिदासादयः कौटिल्यादेव नीति-वाचकान् विशेषशब्दान् जगृहुरिति " । एवञ्च कौटिल्यः सर्वेषां तेषां पूर्वमभवत् न पश्चादिति ज्ञायते ।

" कौटिल्यः पूर्वकालीनः " इति एकयान्ययापि युक्त्या सिद्धयति । प्रथमत एकः प्रश्नः । " याज्ञवल्क्योऽपि प्रकृति शब्दं राज्याङ्गार्थे प्रयोजयति । परन्तु तस्य गणनायां शत्रुशब्दो नास्ति । अतः कौटिल्यकालः याज्ञवल्क्यकालानन्तरम् इति शङ्क्यते । तत्राहुः । अर्थशास्त्रस्य याज्ञवल्क्यस्य व्यवहारकाण्डस्य च परिशीलनम्, सर्वां दूरं नयति शङ्काम् । अवलोकयन्तु कानिचित्पदानि ।

याज्ञवल्क्ये

(१) महोत्साहस्स्थूललक्षः कृतज्ञो वृद्धसेवकः ।
विनीतस्सत्वसंपन्नः कुलीनः सत्यवाक्शुचिः ।
अदीर्घसूत्रस्स्मृतिमानक्षुद्रोऽपरुषस्तथा ।
धार्मिकोऽव्यसनश्चैव प्राज्ञश्शूरो रहस्यवित् ।
स्वरन्ध्रगोप्ताऽऽन्वीक्षिक्यां दण्डनीत्यां तथैव च ।
विनीतस्त्वथ वार्तायां त्रय्यां चैव नराधिपः ॥

(२) अयुक्तं शपथं कुर्वन् अयोग्यो योग्यकर्मकृत् ।

(३) करपाददतो भङ्गे छेदने कर्णनासयोः ।
मध्यो दण्डो व्रणोद्भेदे मृतकल्पहते तथा ॥

अर्थशास्त्रे ।

( १ ) महाकुलीनो, दैवबुद्धिः, सत्त्वसम्पन्नो, वृद्धदर्शी, धार्मिकः, सत्यवागविसंवादकः, कृतज्ञस्स्थूललक्षो महोत्साहोऽदीर्घसूत्रश्शक्यसामन्तो, दृढबुद्धिरक्षुद्रपरिषत्को विनयकामः ।

( २ ) शपथवाक्यानुयोगमनिष्टं कुर्वतो युक्त कर्म्मणि चायुक्तस्य ।

( ३ ) पाणिपाददन्तभङ्गे कर्णनासाच्छेदने व्रण विदारणे चान्यत्र दुष्टव्रणेभ्यः ।

अत्रावधारयन्तु " १—कौटिल्यः सूत्ररीतिमनुसरति ।

२—कौटिल्यः अक्षुद्रपरिषत्कं समस्तं प प्रयोजयति ।

३—कौटिल्यः पाणिनिनियमानुसारं न चलति याज्ञवल्क्यश्च

१—श्लोकरीतिमनुसरति ।

२ —याज्ञवल्क्यः समस्तं पदं न प्रयुज्य " अक्षुद्रोऽपरुषः " इति शब्दद्वयं प्रयोजयति ।

३—याज्ञवल्क्यः पाणिनिनियमाननुसरति ॥" इति । पृच्छन्तु च स्वस्वान्तःकरणम् कतर अनयो प्राचीन इति ।

अपि च । कौटिल्यशास्त्रे युक्तस्यार्थः " राज्ञ प्रतिनिधि अयुक्तस्य च " न राज्ञः प्रतिनिधिः " इमेऽर्था अशोकशिलालेखेऽपि विद्यन्ते[1] । परन्तु याज्ञवल्क्यमुनिना " योग्यः, अयोग्यः " इत्यर्थ प्रयुक्तौ इमौ शब्दौ । अर्थश्चायं न प्राचीनः; किन्तु आधुनिक एव । एवमन्यत्रापि महान्मतभेदोऽस्ति अस्तु । सर्वाण्यपीमानि " कौटिल्य एव प्राचीनः " इति प्रकटीकुर्वन्ति ।

तिथिक्रमानुसारं पुनः वाराहमिहिरपुस्तके विष्णुगुप्तस्योल्लेखः । स तु बृहत्संहितां ( यस्य ग्रहादीनां प्रभावस्य वर्णनम् ) विष्णुगुप्तस्यो लिखति । स कथयति—

उक्तं चाचार्यविष्णुगुप्तेन, तथाहि—

अप्यर्णवस्य पुरुषः प्रतरन्कदाचित्
आसादयेदनिलयोगवशेन पारम् ।
नत्वस्य जालपुरुषाख्यमहार्णवस्य
गच्छेत्कदाचिदनृषिर्मनसापि पारम् ॥

परन्त्वेवंविधस्य पद्यस्य कौटिल्यशास्त्रे कुत्रापि नोल्लेखः । अत एव अपर एव कश्चिदयं विष्णुगुप्त इत्यनुमीयते । अस्तु किमनेन ।

जैनमतानुयायिभिरपि कौटिल्यः पठितः । सोमदेवसूरिः यशोधरसमकालीनः स्वकीयं 'नीति वाक्यामृतं' कौटिल्यशास्त्रानुकूलं विरचितवानिति प्रतीयते । अधः पदे स चाणक्यमपि निर्दिशति ।

श्रूयते हि किल चाणक्यस्तीक्ष्णदूतप्रयोगेणैकं नन्दं जघानेति तदनन्तरं नन्दीसूत्रेऽपि चाणक्यस्यार्थशास्त्रस्य च सममेवैवमुल्लेखः—

"खमए अमच्चपुत्ते चाणक्के चैव थूलभद्देय[1] ।
भारहं रामायण भीमसूरक्कं कोडिलयम्[2] ॥

कौटिल्योऽर्थशास्त्रे लिखति " सूत्ररीतिरियं मदीया, मयैवाविष्कृते " ति कथयति । कुत्रचित्स-पाणिनिनियमानपि न गणयति । इदं उपर्युक्तश्च यत् तत्सर्वमवधारणेन इदमेवानुमीयते—

" कौटिल्यः प्राचीनः । तस्यैव विष्णुगुप्तः, चाणक्यः, इति नामधेयम् । तेनैव "अर्थशास्त्रम्: चाणक्यशतश्च " लिखितम् । अर्थशास्त्रम् कौटिल्येनैव निर्मितम् । तत्र मिश्रणलेशोऽपि नाऽस्ति । स ईशातः ३२१ वर्षपूर्वादारभ्य ३०० वर्षपूर्वं यावत् कस्मिन्नपि काले जातः " इति ॥

१ नन्दी. पृ० १३३ । २ नन्दी. पृ० ३९१



# गोरक्षा ।

[ ले०—श्रीलक्ष्मीनाथ मिश्रः, काव्यतीर्थः, ]

गोसेवापरिपूतनन्दसदने सम्वर्धमानो गवां-
यूथं यः परिपालयन् सहचरैर्गोपालबालैर्मुदा ।
गोविन्दः समरक्षदक्षतमहो ! वर्षाकुलं गोकुलं
सोऽव्याद् गोधनमापदांपदमिदं गोवर्धनोद्धारणः ।



गोरक्षापदाद् गवां रक्षणम् ( गोपालनम् ) इत्येवार्थो यद्यप्यभिधया प्रतीयते, तथापि गूढाभिप्रायसम्वलितात्मया चमत्करोति चेतः सचेतसां पदमिदम् । स्वल्पेनैवावधानदानेनास्य पदस्य आत्मरक्षा, धनरक्षा, धर्मरक्षा, राष्ट्ररक्षा चेत्येवं वहवोऽर्था अवतरन्ति बुद्धिपथे । एकस्यैव कार्यस्य विधानेन सुखसम्पाद्यानि चेदन्यानि करणीयानि तदा तदपहाय न प्रवर्त्तन्ते कार्यान्तरे मतिमन्तः, इत्येव मतिमतां नीतिः । सम्पादिते गोपालने नावशिष्यते तद्वस्तु वसुधातले यस्य गोपालनजनितामितलाभेन जनः सिद्धिं न विन्देत । एवमुपकारि कार्यमुपेत्य सीदन्ति सन्ततं सन्तः, न पुनरालम्बते सेवां गवाम् । पुरा सकलसम्पाद्यनिदानं गोपालनमेव निश्चित्य सर्वे भारतीया गोपालनमावश्यकं प्रधानञ्च कर्म्मामनन्तिस्म । प्रयोजनं

फलश्च समुद्बीदयैव मन्दोऽपि कस्मिन्नपि कार्ये प्रवर्त्तते, गोपालनेन सर्वेषां वर्णानां सकलधर्म्मावलम्बिनाञ्च महानुपकारस्ततः प्रवृत्तिरासीदविवादेन तस्मिन् समेषाम्, आचरन्तश्च तथा सदा सुधामधुरां दुग्धधारां निपीय, रोगशोकपरीतापोन्मुक्तामतियुक्तां दशामनुभवन्तो जनाः सानन्दमनयन् दिवसान् । अधुना हतदैवेन मलिनेनानेन कलिकालेन वाऽमनुष्योचितामवस्थामुपगता वयमिति पौरुषविरहितात्मनां सालसानाम्मनोविनोद-सम्पादन-वचनम्, गोरक्षोपेक्षा एवास्मानधो नयति प्रतिदिनम्, यदधीनश्च जीवनधारणानुकूलं निखिलं वस्तु भारतीयानामिति क्षणं नयने निमील्य विवेचयितुं पारयिष्यन्ति अपारक्लेशाकूपारपारं जिगमिषवः । गोधनसम्भूतयशो-गौरव-धनानि, भारतभुवं विहाय, देशान्तर विहितनिलयानीति लज्जास्पदमस्माकम् । गोकुलमाकुलमवलोक्य नावलम्बन्ते दयालवं दयालवः, पयो विना शिशूनसून् विजहतो विलोक्य न तन्निदाने तदपाकरणे वा मतिं निवेशयन्ति जनाः, दैवोपालम्भेनात्मानं सन्तोषयन्ति न पुनराश्रयन्ति श्रेयो गोपालनम् । प्रचुरपयोलाभे सत्येव भारतसेवकानां बालकानां जीवनस्य संरक्षणं सेत्स्यति । विशुद्धगव्यालाभेनैव युवानश्च तरुणय एव स्थविरा इव हतशक्तयो लुप्तमतयश्च भीत भीता देशसेवा-विमुखा आत्मानमपि विपद्भ्यः परित्रातुमनीशाः साम्प्रतं शिरोनिहितकरा निषीदन्ति विषीदन्ति च । धनिनो जनाः सुखं स्वपन्ति न विमुञ्चन्ति सम्पादितदीनतामलसताम् ! किमतः परं क्लेशकरमस्माकम् ? गव्यस्य यथा

शरीरोपकारकत्वं न तथाऽन्येषां पयसामिति प्रम
णयति वाक्यमायुर्वेदविदाम् ।

"गोक्षीरमनभिष्यन्दि स्निग्धं स्वादु रसायन
रक्तपित्तहरं शीतं मधुरं रसपाकयोः
जीवनीयंतथा वातपित्तघ्नं परमं मतम्,, इति

एवं न केवलं गोपयस एव गुणाः प्रोक्ताः कि
"विद्याद्दधिघृतादीनां गुणदोषान् यथा पयः" इ
दध्नो घृतस्य चापि तथैवोक्ता गुणा वाग्भटे
श्रुतिरपि बोधयति "आयुर्वैघृतम्" आयुर्वे
विदस्तु गोघृतस्यैवमुपकारकत्वम्बोधयन्ति ।

"गव्यं घृतं घृतश्रेष्ठं चक्षुष्यं बलवर्धनम्
विपाके मधुरं श्रेष्ठं वात-पित्त-विषापहम्" इति ।

वस्त्वन्तरं पुराणं गलितगुणतया न गृह्य
केनचित्, परं गोघृतं यथैव पुरातनतामेति तथैव
धिकगुणतयाऽधिकमुपकरोति लोकान् तथाहि—

"सर्पिः पुराणं त्रिमल-प्रतिश्या-तिमिरापहम्
मूर्च्छाकुष्ठविषोन्माद-ग्रहापस्मार-नाशनम्" इति

एवमुपकारकं गोधनं भृशमुपेक्षन्ते जन
किमतः परं शोचनीयम् ? निजपराधजनितेन नू
नेन दुःखसमूहेन सीदन्ति भारतीयाः, स्वाध
सकलसम्पन्निदानं गोपालनं नाङ्गीकुर्वन्ति !

धेनुभ्य एव जायन्ते वृषाः, तदधीनं कृषिक
तदायत्तश्च महीमण्डलमधिवसतां सतामसता
जीवितम्, धेनूनामुपेक्षया यथा वृषा असुलभ
प्रयान्ति प्रतिदिनमिति सर्वे एवानुभवन्ति कृ
मात्रजीवनाः । भारते कृषीवलानामेव संख्यासर्व
धिका, ते च कर्षका वृषालाभेन न सम्यक् ि
कृत्यं सम्पादयितुं शक्नुवन्ति, एवं फलमलभमा
दीनास्ते दीनां कृतिमूरीकृत्य निजमवशेषं दुःखा

वसं व्यतिवाहयन्ति ! तेषु गलितवयसोऽशरणा यष्टिशरणा विविधक्लेशान् सहमाना भ्रमन्तश्च भिक्षया रक्षन्ति हतप्रायं जीवनं कथञ्चित् । अनुभवन्ति गोरक्षोपेक्षाफलमेवं जनाः, नालसतां दासतां च जहति ॥

न केवलं गव्येन वृषैर्वाऽस्माकं प्रयोजनानि साधयन्ति गावः; किन्तु मूत्रेण गोमयेनापि भूभागोर्वरतां सम्वर्ध्य समुत्पन्नेन प्रचुरेणान्नेनापि सदाऽस्मान् पालयन्ति, किमिदमल्पीयानेव तत्कृतोपकारः? गोधूमाद्यनेकविधानामन्नानामुत्पत्त्या हन्यते भुव उर्वरता, सा च गोमयेन गोमूत्रेण च पुनर्जन्यते नान्योपायेनेति भारतीयानां पाश्चात्यानाञ्च न मतभेद इति कथमेवमुदासीनाः कर्षका गोपालने इति न जानीमः । स्वातन्त्र्यमनुभवन्तो विपुलधनवन्तश्च पाश्चात्या यथा यन्त्रविशेषैरेव भुवं विदलयन्तोऽविकलं फलं समासादयन्तश्च सुखं तिष्ठन्ति, तथा हलम्विना, विहाय च वलीवर्दान्, न सुकरं कृषिकर्म दीनानां भारतवासिनाम्, अतः कृषिसम्पादनसाधनेषु वृषा एव प्रधानतामाकलयन्ति । पाश्चात्या गोपालनमाचरन्तः प्रचुरेण पयसाऽऽत्मानं निजदेशनिवासिनश्च रिरक्षन्तोऽवशिष्टं पयः विज्ञानवलेन दुग्धक्षोदं विधाय सम्प्रेष्य चास्मद्देशीयान् शिशून् व्याधितल्पगतान् जनांश्च जीवयन्ति, अर्जयन्तिच ससाधुवादं विपुलं धनमिति चित्तेऽस्माकं त्रपा पदं विधत्ते ।

अत्र प्रयोजनं न केवलं कृषीवलानामेव; किन्तु येऽपि रत्नराजि-राजितकोशा धराधीशाः, येऽपि सत्कुथस्वस्थस्थूलकाया व्यापारान्तराभिनिर्विष्टहृदया धनाधीशास्तेषामपिजीवनमन्नं, पयः, प्राचुर्येण घृतम् । तेषामनया उदासीनतयाऽवसितं भवेद्यदि गोकुलं, कृषिरपि कृशतामियात्, तत्कथं विना पयोघृतान्नानि जीवनधनं ते गोपायिष्यन्ति ? पुरा धनेषु प्राधान्यमारोहद् गोधनं न केवलं दीनानामेव; अपितु भूपतीनामपि धनेषु प्रथमस्पदमवाप । तदानीन्तनाश्च राजवंशावतंसा यथा गोपालनचतुरास्तल्लक्षणज्ञाश्चासन् एतत्सर्वं महाभारतीयविराटपर्वणि सहदेव-विराटराज-सम्वादेन विशदीचकार भगवान् बादरायणः । तत्रहि; विराटराजेन पृष्टः सहदेव एवमाह—

"पञ्चानां पाण्डुपुत्राणां ज्येष्ठो भ्राता युधिष्ठिरः ।
तस्याष्टशतसाहस्रा गवां वर्गाः शतम् शतम् ।
अपरे दशसाहस्रा द्विस्तावन्तस्तथापरे ।
तेषां गोसंख्य आसम्वै तन्तिपालेति मां विदुः ॥
भूतं भव्यं भविष्यं च यच्च संख्यागतं गवाम् ।
नमेऽस्त्यविदितं किञ्चित्समन्ताद्दशयोजनम् ॥
गुणाः सुविदिता ह्यासन् मम तस्य महात्मनः ।
आसीच्च स मया तुष्टः कुरुराजो युधिष्ठिरः ॥
क्षिप्रं हि गावो बहुला भवन्ति,
न तासु रोगो भवतीह कश्चन ।
तैस्तैरुपायैर्विहितं मयैत—
देतानि शिल्पानि मयि स्थितानि ॥
ऋषभानपि जानामि राजन् पूजितलक्षणान् ।
येषां मूत्रमुपाघ्राय अपि वन्ध्या प्रसूयते " इति ॥

श्रुत्वा वचनमिदं सहदेवस्य विराटराजस्तं निजगोधन-संरक्षणे नियोजयन् यथा प्रावोचदवगम्यते तेनापि तदानीन्तनराजगोधनसंख्या, तथाहि—

" शतं सहस्राणि समाहितानि
सवर्णवर्णस्य विमिश्रितान् गुणैः ।

पशून् सपालान् भवते ददास्यहं
त्वदाश्रया मे पशवो भवन्त्विह " ॥ इति ॥

एवं विराटराज-गोधन-संरक्षण-निरतः सहदेवो महता सहायकेनेव गोपालनेन गुप्तवासनियममपूरिष्ट। गवां रक्षणं तत्फलञ्चान्यत्रापि यथावर्णितं-वृत्तन्नाविदितं विदितेति-वृत्तानाम्महात्मनाम्। परमद्यापि स्वातन्त्र्यमनुभवन्तो भारतीयाः कियन्तो महीपतयो गोधनं प्रधानं गणयन्ति परिरक्षन्ति वा ? गोरक्षा दूरेऽपास्ताम् ; व्ययसापेक्षत्वात्तस्याः, किन्तु निजे राज्ये जायमानं गोवधमपि न वारयन्ति व्यवस्थया कतिपये राजानः, इति तेषामियमुपेक्षा व्यथयति चेतः सचेतसां राजसाहाय्यलालसानाम् ॥ सूर्यवंशप्रदीपो महीपो दिलीपो गोसेवया गोरक्षया च यथा यशोधर्ममभिलषितञ्चालभतेति विदितमेव, रघुवंशे दिलीपकृत-गोसेवाप्रकार-वर्णनप्रकरणे कविकुलकमलबन्धुना कालिदासेन यदुक्तम्,—

" स्थितः स्थितामुच्चलितः प्रयातां
निषेदुषीमासनबन्धधीरः ।
जलाभिलाषी जलमाददानां
छायेव तां भूपतिरन्वगच्छत् " इति,

तेनावगन्तुं शक्यते यत्कां श्रेणिमशिश्रयन्नृपतेः गोपालनानुरागः । निजप्रियदेहव्ययेनापि सिंहाक्रान्ताया धेनोरक्षां विधित्सुना नृपतिना यदुक्तम्—

" सेयं स्वदेहार्पणनिष्क्रयेण
न्याय्या मया मोचयितुं भवत्तः ।
न पारणास्याद्विहता तवैवं
भवेदलुप्तश्च मुनेः क्रियार्थः " इति

ज्ञायते तेनेदं यत्, नावलोकितं स्वार्थपरतया, जीवनप्रियतया, राज्यसुखलिप्सया वा महीपति-चेतोमन्दिर-द्वारम् । धर्मपरीक्षणेऽविचलमतिः भूपतिः श्रेयः समाश्रयत् सुरभिदुहितुः प्रसादात् । अधुना गोपालेनापि पालयितुमशक्ता राजानः, गोरक्षणे पाश्चात्या अपि यतन्तेऽतो नैवोपहासश्च तेषां संसदि । अथवा गावः सुखं विचरन्तु, तद भूभागदानेन, राजकीयव्यवस्थया गोवधनिवारणे धनदानादिना गोशालासञ्चालनशक्तिसम्वर्धनेन गोकुलं परित्रातुं प्रभवन्त्येव प्रभवः । गोवंशविन कृषेः, कृषिकार्यस्य च विनाशे प्रजाया अमङ्गलं भा तेति न तर्कयन्ति, मलिनयन्ति राजधर्मम्, स्मरन्ति ।

" अरक्षितारं राजानं बलिषड्भागहारिणम् ।
तमाहुः सर्वलोकस्य समग्रं पापचारिणम् "
इति कृष्ण द्वैपायनवचनम्। प्रकरणेनानेन-
" क्षतात्किलत्रायत इत्युदग्रः
क्षत्रस्य शब्दो भुवनेषु रूढः ।
राज्येन किं तद्विपरीतवृत्तेः
प्राणैरुपक्रोशमलीमसैर्वा " इति

कविकुलगुरोः कालिदासस्य पद्यमिदं स्मृतिपथिकायते । अधुनात्मपरित्राणमेव प्रधानम्, प्रजाधनं प्रमोदसाधनम्, प्रजापीड़नं शक्तिफलम्, आनन्ति भारतीया अपि भूपतयः । अद्यापि दिनमणिकुलमणयः, सुधांशुवंशावतंसाश्च भूपतयो भूतलमलङ्कुर्वन्ति, किमु नैवानुकरिष्यन्ति ते निजपूर्वजचरितं गोरक्षणम् ? सकलसुखसम्पादयित्रीं जगद्धात्रीमपि परित्रातुमनीशा धराधीशाः ? नालस्यमतादोषो जहाति तानित्याकुलयति मानसं गोरक्षणानिरतव्यापाराणां जनानाम् । अन्ये केचिद्भूपतयः रक्षन्तो गोवंशं गोवधदोषं च निःसारयन्ति राज्यात् परमेवंविधा बुधा धराधिपा अङ्गुलिगणनीया एव । अतः कामयामहेऽन्येऽपि स्वतन्त्रा नरेन्द्रा निस्तन्द्राः स्तत्पथमनुसरन्तु ॥ [ सावशेषम्

# पाणिनीय-प्रकाशः ।

लेखकः—

महामहोपाध्याय-श्रीदेवीप्रसाद शर्मा, शुक्लः, कविचक्रवर्ती

—:*:—

[ क्रमागतः ]

एङन्तस्य पदान्ते गोरवङ् वाऽचि परे भवेत् ॥
गवाग्रं भाति गोऽग्रं दृश्यं गोग्रं निरीक्ष्यताम् ॥१२४॥
पदान्ता इतिनिर्देशाद्गवीत्यत्र न दुष्टता ॥
अवङ् नित्यं गवाक्षे तु व्यवस्थित विभाषया ॥१२५॥
एङन्तस्य पदान्तेगोरवङिन्द्रेपरे भवेत् ।
गवेन्द्रो नर्दति प्रोच्चैर्धुवन्युग्मं विषाणयोः ॥ ॥१२६॥
अशूद्रविषये प्रत्य-भिवादे वाक्यमस्ति यत् ॥
प्लुतो भवति टेस्तस्य सचोदात्तः स्त्रियान्तु न ॥१२७॥
नित्यं प्लुताः प्रगृह्याश्च प्रकृत्या स्युः परेऽचि वै ॥
आचार्य्य ! देवदत्तोऽहं भवन्तमभिवादये ॥ १२८ ॥
भो आयुष्मानेधि देव-दत्त ३ इत्यत्रटेः प्लुतः ॥
स्त्रियां नत्वितिनिर्देशादहं गार्ग्यभिवादये ॥ १२९ ॥
भो भवाऽऽयुष्मती गार्गीत्यत्र नो भवति प्लुतः ॥
वाक्यं प्रत्यभिवादे यत्तस्याऽन्ते तु प्रयुज्यते ॥१३०॥
यत्र नामाऽथवा गोत्रं तत्रैव प्लुत इष्यते ॥
इत्यतो न भवत्यायु-ष्मानेधीत्यादिषु प्लुतः १३१ ॥
अशूद्रविषयेप्रत्यभिवादे वाक्यमस्ति यत् ॥
तदन्त्यानां भवेद्वा टेः भोराजन्य विशां प्लुतः ॥१३२॥
अयुष्मानेधि भो ३ भूयोप्यायुष्मानेधि भो इति ॥
इन्द्रवर्माऽहमाचार्यं भवन्तमभिवादये ॥ १३३ ॥
भवाऽऽयुष्मानिन्द्रवर्मन् ३ गुरोहमभिवादये ॥
इन्द्रवर्मा,भवाऽऽयुष्मानिन्द्रवर्मन् नमामि भोः ॥१३४॥
स इन्द्रपालितोऽहं त्वाऽऽयुष्मानेधीन्द्रपालित ॥
नौमीन्द्रपालितोऽहं त्वाऽऽयुष्मानेधीन्द्रपालित ॥१३५॥
दूरात्सम्बोधने वाक्यं यद्भवेत्तस्य टेः प्लुतः ॥
आगच्छ कृष्ण ३ अत्रैव शष्पं चरति गौरियम् ॥१३६॥
प्रयोगे हैहयोर्वाक्यं दूरात्सम्बोधने तु यत् ॥
मुनिना कथितस्तत्रहैहयोरेव हि प्लुतः ॥ १३७ ॥
हेराम रामहै ३ एहि राक्षसो मां हरत्यसौ ॥
'विकल्प्यते प्लुतः सर्व' इति सिद्धान्ततः खलु ॥१३८॥
पुत्रेतीत्यादयश्शुद्धाः प्रयोगाः परिकल्पिताः ॥
इति शब्देपरेऽनार्षे भवत्यप्लुतवत् प्लुतः ॥ १३९ ॥
तथाह्यप्लुतकार्यं स करोतीहयणादिकम् ॥
आगच्छाऽऽगच्छ सुश्लोकेत्याजुहाव सुतं पिता॥१४०॥
अप्लुतइत्युक्तेऽप्लुत एव विधीयेत सप्लुतश्चापि ॥
प्रतिषिध्येत तथा वै सति प्रगृह्याश्रये प्रकृतिभावे॥१४१॥
प्लुतस्य श्रवणं न स्यादितिवद्ग्रहणं कृतम् ॥
अग्नी इति वदन् विप्रस्समायाति कुतोऽप्यसौ ॥१४२॥
उकारस्तु प्लुतो वा स्यात्परेच्यप्लुतवत्खलु ॥
चिनुहीति फलानि त्वं चिनुही ३ इति सोऽवदत्१४३॥
चिनुहीदं फलं सर्वं चिनुहीऽइदमेव च ॥
उभयत्र विभाषेयं पण्डितैः परिकीर्तिता ॥१४४॥
स्यादीदूदेदन्तं द्विवचनमत्र प्रगृह्यसंज्ञं वै ॥
जगति हरी एतौ स्तः साक्षाद्विष्णू इमौ भूतः ॥१४५॥
गङ्गे अमू विराजेते अवनेर्मालिके इव ॥
मुक्तामय्यौ महापाप हारिण्यौ ते विलोकय ॥१४६॥
प्रसिद्धेषु प्रयोगेषु मणीवेत्यादिकेषु तु ॥
इवार्थको व शब्दो वा, वा शब्दोवेति वुध्यताम् ॥१४७॥

(क्रमशः)



# ब्रह्मचर्यम् ।

( ले० श्रीविश्वनाथ प्रभाकरः, संस्कृत-पाठशाला, खन्ना, लुधियाना )

—:*:—

शतायुषः सहस्रायुषश्च पुरुषा बभूवुः, दृढवपुषः शान्ता दान्ता धीरा बहुवीराः सुन्दरविशालाकृतयोऽमितशक्तयः साक्षात्कृतसकलतत्वाः शुद्धसत्वाश्च । अद्यत्वे पुनर्यो वा षष्टिं वर्षाणि जीवति;मन्यते स बहुजीवी, कश्चिदेव हि महाभाग्यवान् वर्षं शतं जीवेत् । प्रायो विश्वेऽपि विश्ववासिनो जर्जरितदेहाः क्षीणशक्तयो मलिनमतयः कातरा वामनाकारा अशक्ता विविधरोगाक्रान्ताश्च सन्ति । प्रतिशतं पञ्चविंशतिपुरुषास्तु क्षयराजयक्ष्मादिपापरोग-क्षपितशक्तयः, कतिचन जीवन-दिनानि गणयन्तोऽकाल एव कालकवलिता भवन्ति, सहस्रशो द्वित्रेष्वेव हायनेषु गर्भयातना एव भोक्तुमागता इव बाला एव विपद्यन्ते । अहो ? दुर्विलसितं विधेः, त एव वयं, सैवेयं भूः,तदेव निर्मलं जलं, स एव वायुः, किन्तु; क्व तदायुः? क्व गतं तद्बाहुवीर्यं? क्व च तद्धैर्यं ? क्व प्रणष्टं तन्मतिवैभवं ? किमिति पलायितं तद् बहु शक्तिमत्वं ? क्व तच्छरीरसौन्दर्यं विशालता चाकारस्य ? क्व गता सा विद्या तत्वावगमशक्तिश्च ? क्व च सा शुद्धसत्वता ? किं तच्चिरत्नं रत्नमस्माकं विनष्टं यद्रहिता वयं मणिविरहितेनाऽहिविगत सरसिजं सर इव, राकेव विलुप्तचन्द्रतारका, न शोभामहे, परः सहस्राणि कष्टानि भुञ्ज्महे, पदे पदे परिभूयामहे, विमुखम... विनष्टशक्तयोऽधैर्य्या निःसत्वाश्च जाताः स्मः, शतैः पापरोगैराक्रम्यामहे, अकालमृत्युना च ह्रियामहे, किमपि स्वजीवनोद्देश्यं पूरयितुं पारयामः, इति चिन्ता-मञ्च-शायिनि मोहि... येव विमुग्धचेतसि मयि प्रादुरभूदयं विचारः "ब्रह्मचर्यं, ब्रह्मचर्यं, ब्रह्मचर्यम्" इति ।

अथ संजातसंज्ञोऽहं बुद्धवान् अहो ? इद... तदमूल्यं रत्नं यदपगमाद् वयं नरककीटा... वहाः कालाच्चेखिद्यामहे । एतदालोकादेवोज्... बभूव वदनं भारतमातुः । किमिदं ब्रह्मचर्यमिति ... पर्यालोच्यापि वीर्यरक्षैव ब्रह्मचर्यतत्वं पर्यवस्यति "ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः" इति योगसूत्रमपि सिद्धान्तमिममेव द्रढयति... वीर्यं हि शरीरे सप्तमः सर्वोत्तमो धातुः, इदमेव ... रीरिकीं मानसीं च पूर्णतां सम्पादयति ... वीर्यमेव शरीरेऽस्मिन् राजा । एतद्बल... शरीरस्थाः सर्वा अपि शक्तयः कुर्वते का... णि,—पश्यति चक्षुः, जिघ्रति घ्राणम्, शृणो... श्रोत्रम्, स्पृशति त्वक्, मनो मनुते । अर... विनष्टे चास्मिन् वीर्ये राजनि विनश्य... सर्वा अपीतराः शक्तयः, सर्वथाऽसमर्थानि भव... चेन्द्रियाणि । अराजकराष्ट्रमिव सर्वतो विप्ल... प्लुतं भवतीदं शरीरम् । प्रबलायन्ते च दोषा ... भवति च तन्मूलानां बहूनां रोगाणामाक्रमण... अन्ततो जर्जरितमिदमसमय एव प्रणाशमभ्येति... रक्षिते पालिते चास्मिन्-राजन्वान् देश इव स... सुव्यवस्थितं तिष्ठति शरीरम्, सर्वा अपि श...

( इन्द्रियादीनि ) सुष्टु निर्वहन्ति स्वानि २ कर्माणि, नावकाशस्तत्र द्विषां दोषाणां, क्व स्यादवकाशस्तदा तदाश्रयाणां रोगाणाम् । पलायते वीदयैवाकाल-मृत्युरपि । तथा च श्रुतिः "ब्रह्मचारी न कांचनार्तिमार्छत्" "ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत" इति च ( ब्रह्मचर्यं, वीर्यरक्षा-तदेव तपः ) ।

ब्रह्मचर्यं ( वीर्यरक्षा ) हि मानवस्य मुख्यं सर्वप्रथमं च कर्त्तव्यम् । तत एव सम्पाद्य योग्यतां प्रवेभूयते मनुजः पूरयितुं जीवनोद्देश्यानि धर्मार्थ काममोक्षान् । एतां सर्वार्थसाधिकां जीवनमूल-भूतां वीर्यरक्षामेवोद्दिश्य परमकारुणिकैः साक्षा-त्कृतधर्मभिः पूज्यैर्महर्षिभिर्मानवजीवनम्--

"ब्रह्मचर्यं परिसमाप्य गृही भवेत्, गृही भूत्वा वनी भवेत्, वनीभूत्वा प्रव्रजेत्"

--इति चतुर्धाविभज्याश्रमेषु मुख्यत्वं ब्रह्मचर्य-स्यैव निर्दिष्टम् । अहो ? कीदृशी मनोहरा पूर्वतनी, महर्षिभिराचरिताऽऽश्रमपद्धतिः । प्रथमे ह्यायुषो-भागे वीर्यरक्षया शारीरिकीं, वेदवेदाङ्गादिशिक्षया मानसीं च योग्यतामधिगम्य, योग्या भूत्वा द्विजा इतराश्रमेषु प्रवेशमलभन्त । तथाचरतां च तेषां न भवतिस्म कापि शारीरिकीणां मानसीनां वा यातनानामाभिमुख्यम् । आसँश्च तदा शतशो ब्रह्मचर्याश्रमा गुरुकुलानि च यत्र व्यवस्थानु-कूल्यादनायासमेव वीर्यरक्षानियमाः पालिता अभूवन्, वनेष्वाश्रमाणां स्थितिः, शुद्धं जलं, पूतः पवनः, सात्विकाः ( कन्दमूलफलप्रायाः ) आहाराः, अध्ययनं वेदवेदाङ्गानाम्, नियमेन सन्ध्योपासनम्, प्रतिदिनं सायं प्रातर्होमः, अनुकूलो व्यायामः, स्वध-र्मानुष्ठानम्, नासीत्कामविकाराणां स्वप्नेऽप्युपलब्धिः। अतएव चासँस्तदातना मानवाः शान्ताः, शुद्धान्तः करणाः, बहुबलिनः, मतिशालिनः, दृढवपुषः, दीर्घायुषः, सत्यप्रतिज्ञाः, सकलरहस्याभिज्ञाः, अनु-करणीयचरित्राः, वशिष्ठ-गोतम-भृगु-कणाद-पराश-र-प्रभृयो ब्राह्मणाः, भगीरथ-राम-युधिष्ठिरकर्णादयो राजन्याश्च, अद्य येषां नामानि गृहीत्वा मोमुद्यते चेतः, रोमाञ्चश्चाञ्चति तनुः । को हि नाम न परिचित आजन्म ब्रह्मचारिणः, कुरुकुल-मुख्यस्य, प्रातःस्मरणीयना-म्नो भीष्मस्य परमपवित्रेण चरित्रेण, यस्याग्रे सर्व-शक्तिमतो लीलावतारस्य भगवतः श्रीकृष्णचन्द्र-स्यापि शस्त्राग्रहणप्रतिज्ञा धूलिधूलिताऽभूत, यश्चान्ते परःसहस्रबाणविक्षतविग्रहोऽपि षण्मासं बाणशय्यायामेव सुखमशेत, स्वेच्छया च प्राणान विजहौ । किञ्च वीराग्रगण्यस्य श्रीमतो हनुमतः समुद्रलङ्घनभूधरानयनादिकं विस्मयकरं निखिल-मपि वृत्तं वीर्यरक्षाविजृम्भितमेव ।

साम्प्रतन्तु कलिकाल-दुर्विलासेन, द्विजानामेव वा दौर्भाग्येन, परमात्मकोपेनैव वा, सङ्कीर्णा सा चिरन्ता खल्वाश्रमपद्धतिः, न जानीमः क्व विलीना सा ब्रह्म-चर्य-मर्यादा । विलासप्रायमिदं युगम्, इदंयुगी-नाश्च प्रायः सर्वेऽपि विलासस्यैव दासा ब्रह्मचर्य नाम्नोऽपि ह्रिणीयन्ते, दिने दिने हीनवीर्यताश्चापद्यन्ते, स्वप्नस्खलितवीर्या विगतपुंस्त्वाश्च सन्ति । वीर्य क्षीणतया च तैः "तेजो हीनता, अक्षिदौर्बल्यम्, अव-यवशैथिल्यम्, शरीरकार्श्यम्, बुद्धिमान्द्यम्, हृदय-दुर्बलता, इन्द्रियक्षीणता, भीरूत्वम्, निरुत्साहत्वम्, दैन्यम्, औदासीन्यम्, नित्यरोगित्वम्, कार्या-

क्षमत्वम्, नैर्बल्यम्, वयसोऽल्पत्वं च" इत्याद्याः परः शता हानयः प्रत्यक्षमनुभूयन्ते । दशामिमां निरीक्ष्य विदीर्यते हृदयं, तमसाच्छाद्येते चक्षुषी । न सम्भवमिदं यत् पुनरपि यथा पूर्वं स्याद् ब्रह्मचर्य व्यवस्था, विषमेयं समस्या, युगेऽस्मिन्नपि कथङ्कारं स्याद् वीर्यरक्षा, अत्र विदुषामपि विघूर्णते मस्तिष्कम् । ( सावशेषम् ) ।

—:*:—



## सुप्रभातप्रशस्तिः

*ले०-बालशर्मा, सोरों ( एटा )*

( १ )

अज्ञानाख्यतमः क्षिपज्जनमनःपद्मानि संफुल्लयत्,
सद्यस्तार-विचार-सार-निकरैर्ज्योतिश्च विस्तारयत्,
रागं संजनयत् पदार्थनिचयं सन्दर्शयद्धर्षयत्,
कामं चञ्चति सुप्रभातमिव मेः "*श्रीसुप्रभातं*" दलम् ।

( २ )

अनेकबुधवाञ्छितं, स्फुरित-शुद्धवर्णोत्तमं,
विचित्ररस-संयुतं, नियतभूरिमोदाचितम्,
विनाशिततमोङ्ककं, प्रिय ? नदीन-देहोद्गतम्,
विभाति भुवि मेऽमृतं व, खलु "*सुप्रभातं*" दलम् ।

( ३ )

मुखस्फुरितसन्नुति, प्रततधर्ममर्मोन्नति,
निषेवितषडङ्गकं, कलितवेद-चर्चा-चयम्,
प्रसादगुणभूषितं, परविचारलब्धान्तरम्,
सदाऽत्रमुनिमण्डलं, जयति *सुप्रभातं* तथा ।

( ४ )

मसृण-नसितवर्णं, श्वेतसत्कान्ति-पर्णम्,
सहित-रस-रहस्यं, सद्गुणैः सुप्रशस्यम्,
कलित-सुमुदजातं, कोमलं "*सुप्रभातम्*"
उदित घनगणान्तं, मित्र ! सम्यक् सरासि ।



## सामुद्रिक-परिचयः ।

ले०–श्रीकालिकाप्रसाद शर्मा, राजज्योतिषी, रामनगर (से

अयि सुरभारती-रस-रसिका महोदयाः विदाङ्कुर्वन्तु भवन्तः, यल्लोके लोकानां शुभाशु फलज्ञानाय कर-कपाल-कुण्डल्यादिबहवः प्रका स्सम्यक् प्रचलितास्सन्ति; परन्तु तेषु प्राचीं तमं करकपालादिलक्षणप्रधानं सामुद्रिकं शा दैव-दुर्विपाकादिदानीं लुप्तप्रायमेव ।

तदेव सामुद्रिकं शास्त्रं येन स्रष्टुस्सृष्ट भूयते, नरनारीणां प्रकृतिः, सदसदाचरणजन्म मरणान्तं, लाभालाभौ, भ्रातृ-भगिनी-पुत्री-पु भाग्योदय-विवाहादि-समस्त-व्यवहाराणामपरि नञ्च भवति ।

पुरैतद्बलमाश्रित्यैव महर्षयो विदुषां राजपु दीनाञ्चाखिलानि भाविजीवनचरित्राणि कथ

न्तिस्म । सम्यग्विश्वसन्ति च ते तद्वचनानि अवलम्बिरे च धैर्य्यं तद्वचनस्मरणाद्दारुणवेलायाम् ।

यथा वाल्मीकिरामायणे युद्धकाण्डे रावणाज्ञया राक्षसीभिस्सह पुष्पकविमानमारुह्य, रणाङ्गणे शयानौ रामलक्ष्मणाववलोक्य, विलपन्तीं सीतां "केशाः सूक्ष्माः इत्यादि—समग्रयवमच्छिद्रं पाणिपादं च वर्णवत् । मन्दस्मितेत्येव च मां कन्यां लाक्षणिकाविदुरित्यन्तं लाक्षणिकवचनं संस्मृत्य त्रिजटायाः शुभानुमानवचनमाकर्ण्य च धृतिमविन्दत । लाक्षणिकवचनेषु लक्षणशास्त्रे च पूर्णतया विश्वास आसीत्तस्या यन्मेऽखिलान्यङ्गलक्षणानि सधवाया एवेति ।

एवं महर्ष्यतिरिक्ता राजानोऽपि लक्षणशास्त्रं जानन्तिस्म, यथा-शाकुन्तलस्य प्रधाननायको महाराजो दुष्यन्तः केसरिणा सह क्रीडमानस्य शिशोः प्रसारिते मृदुलकरकमले जालाख्य चिह्नमवलोक्येतरलक्षणाश्च चक्रवर्तिपुत्रोऽयमिति निश्चितवान् । यथा तत्रैव—

"विभाति जालग्रथिताङ्गुलिः करः,

सामुद्रिकेऽपि—

"अतिरक्तः करो यस्य ग्रथिताङ्गुलिको मृदुः ॥
चापाङ्कुशाङ्कितः सोऽपि चक्रवर्त्ती भवेद्ध्रुवम् ।

इत्याद्यनेकोक्तिभिरिदं सिध्यति यदिदं शास्त्रं विज्ञानपरिपूर्णम् । वैज्ञानिकाश्चानेन शास्त्रेण गुप्तादपि गुप्ततरं रहस्यमनायासेनैव ज्ञात्वोद्घाटयन्ति च ।

अस्मिञ्छास्त्रे विषयद्वयं वर्तते, लक्षणं, रेखा च, शरीरावयवे लक्षणानि ज्ञायन्ते, कर-कपाल-चरणे-विधातृलिखिताखिल—जीवनचरित्राण्यनुभूयन्ते । विधिरेवंभूतान्यवयवानि रेखाश्च विनिर्माति, येनानायासेन मर्त्यानाञ्जन्मकालिक-मास-तिथि ग्रहाहोरात्रकृष्णाकृष्णपक्षादीनां ज्ञानं भवितुं शक्नोतीति कीदृशं विलक्षणं शास्त्रमस्ति ? किन्तु चिरकालिकानुभवसाध्यं वर्तते ।

"नेत्रदन्तेन नारी स्यात् पुरुषो भाषणेन च"-त्यादि-नख-शिखोक्त-लक्षणैः, शशक-मृग-तुरग-वृषभ-जाति-पुरुषलक्षणैः, पद्मिनी-चित्रिणी-हस्तिनी-शङ्खिनी-जातीय-स्त्री लक्षणैश्च जनानान्निखिलसुख-दुःखाचारव्यवहारादीनामनुभवो भवति एभिर्लक्षणैः स्त्रीपुरुषाणां सम्बन्धस्योचितं ज्ञानं भवति । कोकशास्त्रेण लक्षणमात्रस्यैव ज्ञानं भवति; न तु फलस्य, अनेन तु केवलं शशकपद्मिन्यादिलक्षणै-राजन्ममरणान्तस्याखिलफलाफलस्य ज्ञानं भवति, यतो यथार्थं संघटतेऽतो यथार्थज्ञानमपेक्षतेऽयम्विषयः ।

वर्तमानसमये शास्त्रमिदं गीर्वाणवाण्यां न यथार्थतया प्राप्नोति; किन्तु पाश्चात्य विद्वाँसो बहुशोऽनुभूय प्रचारार्थं बहूनि पुस्तकान्यरचयन् विचित्राणि । खलु दर्शनप्रणाली तेषां महर्षीणां विज्ञानाऽनुभवप्रकारं च तद्भिन्नं, तैः करचरणेषूर्ध्वमत्स्यपद्महलशङ्खचक्ररेखाभिः फलकथनपरिपाटी प्रदर्शिता पुराणादिष्वपि प्रसङ्गवशाद्यथावकाशं निरूपिता, समायाति च प्रायो विदुषां समक्षं; परन्तु कार्यरूपे क्षेत्रे न चरितार्थयन्ति ते । तस्मादस्य प्रचारे ध्यानं देयं, येनेदं शास्त्रं पुनः जागरितामवस्थां प्राप्नोत्विति प्रार्थयामहे वयमिति ।

——:*:——

# ब्रह्मचर्यम् ।

—*—

( १ )

यस्मिन् प्रदीपे शलभन्ति दोषाः,
यस्मिन् सुधांशौ परितापशान्तिः ।
यस्मिन् समुद्रे गुणरत्नभूति-
स्तद् ब्रह्म को न स्पृहयेत् सचेताः !

( २ )

यस्मिन् दिनेशे परितप्यमान—
उपद्रवध्वान्तमुपैति नाशम् ।
इष्टार्थ-सम्पादन-कल्पवृक्षेऽ-
स्मिन् ब्रह्मचर्ये सुधियो यतेरन् ॥

( ३ )

सिंहासने चोपविशन् सुरेन्द्रः
प्रवन्दते यान् शुचिभक्तिनम्रः ।
ते ब्रह्मचर्य-व्रत-बद्धचित्ता
मनस्विनो मर्त्यभुवां जयन्ति ॥

( ४ )

फलन्ति मन्त्रा वहते च कीर्त्ति-
रध्यासते सन्निधिमप्यमर्त्याः ।
यस्मिन् सति प्रस्फुरितप्रभावे
तद् ब्रह्मचर्यं सुविचारलभ्यम् ॥

( ५ )

अस्थ्नां प्रभूतं बलमपर्यन्तं
रक्तप्रवाहं प्रविकासयन्तम् ।
मुखे प्रतापारुणतां दधानं
न कः सुधीर्ब्रह्मयमं सुरक्षेत् !

( ६ )

न तं शरत्पर्व-हिमांशुरोचिः
प्रल्हादमुत्पादयितुं क्षमेत ।
न तं रसं दिव्यफलानि चापि,
ह्लादं रसं ब्रह्म यमातनोति ॥

—*मुनि-न्यायविजयो न्यायतीर्थः* ।

# मुक्तावली–चन्द्रिका ।

( *आलोचना* ) ।

सिद्धान्तमुक्तावल्यास्तात्र च्छुज्जूरामशास्त्रिकृत
मूलचन्द्रिकेति व्याख्या सम्प्रति प्रसिद्धिमा
गतास्ति-सा च सुप्रभातपत्रग्राहक–मनोविनोदना
यास्माभिरेवं समालोच्यते ।

( १ ) मूले—विघ्नविघाताय कृतं मङ्गलं शिष्य
शिक्षायै निबध्नातीति पाठोऽस्ति तत्र चन्द्रिका
कर्त्रा—मत्कृतं मङ्गलं दृष्ट्वा, मच्छिष्या अप्येवं कुर्यु
रित्यास्तिकतोपदेशनार्थमिति शिष्यशिक्षायै इत्य
स्यार्थ उक्तः, तत्रैवं पृच्छ्यते भवान् । उपदेशनं शि
गुरोर्व्यापारः । न चोपदेशनं निबन्धनादन्यत्प्रकृते
लक्ष्यते । एवं चोपदेशनमेव निबन्धनमित्युपदेश
नार्थमिति चतुर्थ्या नात्यन्तमवसरः । शिक्षायै इत्य
स्योपदेशनार्थम् इति चतुर्थीसमर्थनमपि न स्वार
स्ययुक्तम् । अतः शिक्षा नामाऽस्मदाचार्यवदस्मा
भिरपि कर्तव्यमिति शिष्यगतं ज्ञानम्; तदुद्देशेन निब
न्धनं क्रियत इत्यर्थवर्णने चतुर्थ्याः स्वारस्यम् ।
णिजन्त-शिक्ष-धातूत्पन्न-शिक्षाशब्दस्य शिष्यकर्तृ

कव्यापारवाचित्वमेव भवति न त्वाचार्यकर्तृकोपदेशनार्थकत्वम् ।

( २ ) विघ्नविघातायेत्यत्र विघातशब्दे प्रकाश ( दिनकरी ) कृता सकीचकैरितिवद्विशब्दार्थं चिन्त्यमुक्त्वा—

धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्तते ।

तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधेति

महदुक्ते विशेषेण घात इत्यर्थे ग्रन्थकृत्तात्पर्यात्, विशेषश्च मध्यावसानविघ्ननाशकत्वमित्यलेखि । तत्र यद्यपि बहुवक्तव्यमस्ति, तथाप्यत्रैतावदाक्षिप्यते। अवसानविघ्ननाशकत्वमित्यस्य कोऽर्थः ग्रन्थमध्ये जनिष्यमाणविघ्नानां नाशकत्वमित्यभिप्रायो वा ? ग्रन्थमध्य एव ग्रन्थावसानं, येन भवति-इदानीं मङ्गलकाले विद्यमान इति तन्नाशकत्वमिति वा ? जनिष्यमाणस्य तु करिष्यमाणपापस्याद्यतनकृतप्रायश्चित्तेनैव नानेन मङ्गलेन नाशो वक्तुं युज्यते इति प्रथमपक्षो न घटते । अन्त्यपक्षे तु विघ्नपदेन समाप्तिप्रतिबन्धकविघ्नत्वेन तस्यापि ग्रहणासत्त्वेन घातायेतिपदेनापि तन्नाशः शक्यते कर्तुम्-इति प्रकाशकृदाशय एव युक्तः प्रतिभाति ।

( ३ ) अत्रैवाग्रे भवान सोपसृष्ट-हन्-धातोरेवार्थान्तरं कल्पयन् "संभवत्येकवाक्यत्वे वाक्यभेदो न चेष्यते" इतिवार्तिककृत्कुमारिलभट्टीयकारिकार्थं प्रमाणत्वेनोपस्थापयति । यद्यप्यत्रोपसर्गार्थोऽपि धातोरेव वक्तव्य इत्यत्र संभवत्येकवाक्यत्वे वाक्यभेदो न चेष्यत इति प्रमाणमुपन्यस्तम् । कथमस्य प्रकृतविषये प्रमाणत्वमिति तु स एव प्रष्टव्यः । बहूनां वाक्यानामर्थ एकस्मिन् वाक्ये संभवति चेत्स्वीकर्तव्य इति नह्यस्यार्थस्य तात्पर्यं तथा-चेदनेकपदार्था अपि एकस्मिन् पदे स्वीकर्तुमुचिता इतिन्यायसाम्यं कल्पयितुं शक्येत, नच तस्यैवं तात्पर्यं तथा सति बहुमीमांसकमतं विरुध्येत, अतः कथमिदं प्रमाणमिति ।

( ४ ) मङ्गलस्य सफलत्वे सिद्धे इत्यत्र मूले मङ्गलाऽऽचरणस्येत्यर्थः कृतस्तत्रैवं प्रयुज्यते । मङ्गलाचरणस्येत्यस्य मङ्गलकृतेरित्येवार्थो भवति एवंच मङ्गलस्यैव सफलत्वं वक्तव्यमस्ति न मङ्गलकृतेः स्तस्मात् मङ्गलपदस्यात्र मङ्गलाऽऽचरणस्येत्यर्थ करणमसदेव ।

( ५ ) नचैवं स्वतःसिद्धविघ्नविरहवतेतिमूलमुद्दिश्योक्तैवंपदस्यैवं सतीत्यर्थ एव स्वरसतः प्रतीयते, तद्विहायैवमपीति–अपिशब्दपूरणं किमर्थं कृतमेवमित्यत्रापीति शब्दपूरणमभिप्रेत्य विघ्नध्वंसनिष्ठजन्यतानिरूपितजनकताया मङ्गलनिष्ठत्वेपीति व्याख्यानं च न रुचिरम् ।

(६) स्वतः सिद्धविघ्नविरहवता कृतस्य मङ्गलस्य निष्फलत्वापत्तिरिति शङ्कायाः समाधानपक्षे इष्टापत्तिरिति मूलोक्तिं विस्मृत्य, भवान् " मङ्गलं तु विघ्नसत्त्वे तन्नाशयति तदभावे पुण्यं जनयतीति निष्कर्ष इत्यभिधत्ते, इदं च मूलोक्तिविरुद्धमेव । यथा प्रायश्चित्तानन्तरं पापे विद्यमाने तन्नाशयतीतरथा न किमपि पुण्यं जनयति तथा मङ्गलं प्रायश्चितरूपं विघ्नसत्त्वे तन्नाशयत्यन्यथा वृथेत्येव प्रकृते मूलसम्मतम्मतमस्ति ।

( ७ ) विघ्नशङ्कया तदाचरणात्तथैव शिष्टाचारादिति मूलम् । तदेवं विवृणोति । इदमुपलक्षणं फलदर्शनाच्छ्रुतितश्चेत्यपि बोध्यम् । तथाच साङ्ख्य-

सूत्रं-"मङ्गलाऽऽचरणं शिष्टाचारात्फलदर्शनाच्छ्रुतितश्चेति"। अत्रोच्यते। पूर्वं विघ्नशङ्कया तदाचरणादित्युक्त्वा;आचरणे विघ्नशङ्कापूर्वकत्वमनुभवदर्शनेन स्थापयितुं तथैवेत्यादि मूलं प्रवृत्तम्। अतो ह्याचारे शङ्कापूर्वकत्वसाधकस्यास्य वाक्यस्य कर्तव्यतासाधकत्वं नास्ति। कर्तव्यतासाधने तु प्रमाणत्रयं साङ्ख्यसूत्रेऽस्त्युपन्यस्तं, न च तदेतत्प्रकरणेन संगच्छते इति दिक्।

(८) मङ्गल-विघ्नध्वंसयोः कार्य-कारणभावबोधको वेदः 'समाप्ति कामो मङ्गलमाचरेदित्याकारकः' इति मूलचन्द्रिका। विघ्नध्वंसकामो मङ्गलमाचरेदिति वक्तव्येऽत्र समाप्तिकामो मङ्गलमाचरेदित्यन्यथैवोद्गारि तत्रभवता विद्यासागरेणेति पश्यन्तु पारदृश्वानः। नहि समाप्तिमङ्गलयोः कार्यकारणभावः प्रकृते बोध्यते। नवा नवीनमते कथमपि समाप्तिं प्रति मङ्गलस्य कारणत्वमुपस्थितं भवति। तस्मात्समाप्तिकाम इति निर्देशोऽयुक्त एव।

९ पापभ्रमेणेति मुक्तावल्यास्तावद्भवान् पापबुद्धयेत्यर्थं स्फोरितवान्। स च न साधुः। यतो भ्रमशब्दो हि विशेषवाची; बुद्धिशब्दस्तु सामान्यवाचकतया परिगृहीतः। नह्यत्र प्रमाबुद्धिर्ग्रहीतव्यास्ति, अतो यथावस्थितस्य मूलस्यान्यथोद्बोधजनकं व्याख्यानं नाख्यानरम्यमिति विमृशन्तु विवेकिनः।

(१०) मुक्तावल्यामीश्वरस्य जगत्कर्तृत्वमेव साधितं सशरीरत्वं तु नाङ्गीकृतम्। सत्येवं कथमियं चन्द्रिका मूलमुल्लासयितुं प्रभवेद्या "कर्तृत्वसिद्धौ परमेश्वरस्य साकारसिद्धिः स्वत एव जाता। घटस्य कर्ता खलु कुम्भकारः क... शरीरी न च नाशरीरी" इत्यादिरूपा। एतद्विपु... वागाडम्बरं तु न्यायमतमजानतैवाऽऽविर्भावितम्...

इति दिङ्मात्रं प्रदर्शितम्।

दौचाना, नारनौल, पटियाला स्टेट { रामनारायणशर्मा, शा...

# दांपत्य-दंड-विधान...

लेखकः—
हिन्दी साहित्य-सम्राट्-श्री किशोरीलाल गोस्वा...
महोदयः

अबलाः सरलाश्च ज्ञात्वा अस्माकं स्त्रीणामु... घोर अत्याचारो भवति। पुरुषाणामहङ्कारोऽत... वृद्धिं गतः। इदानीम् मानवाः स्त्रियो न मन्यन्ते... स्त्रीणां सर्वाणि पुरातनानि स्वत्वानि अपहृतानि... अधुना स्त्रीणामाज्ञायाः केऽपि न निर्वाहकाः। एत... सर्वान् विषयान् याथातथ्येन नियमपूर्वकं परिचा... यितुम् अस्माभिः "स्त्री-स्वत्व-रक्षिणी" स... स्थापिता। तस्याः सभाया विशेषाः समाचा... पश्चात् प्रकटिता भविष्यन्ति। अस्मिन् स... वक्तव्यमेतत्, यद् अस्माकं स्वत्वरक्षणार्थं सभ... एकः सदुपायः स्थिरीकृतः। एतदर्थमस्माभिर्... शासक-समीपे-एकं आवेदन पत्रं प्रेषितम्, तथा... तेनैव साकं पतिशासनार्थमेका "दाम्पत्य-द... विधानस्य" नियम-लिपिरपि-प्रेषिता।

यत्र सर्वेषां स्वत्व-रक्षणार्थं प्रतिदिनं नवा नवा विधिव्यवस्था निर्मिता भवन्ति, तत्र अस्माकं सनातन-स्वत्व-रक्षणार्थं कापि विधिव्यवस्था शीघ्रमेव स्वीकृता भविष्यति । अनयैवेच्छया पतिसमुदायेभ्यः सूचनार्थमहमेतत् सुप्रभात-पत्रे प्रकाशनाय प्रेषयामि । अनेके महाशया मातृभाषायां विधिव्यवस्थां सम्यक्तया ज्ञातुं समर्था न भवन्ति । विशेषतो विधिव्यवस्थायाः भाषानुवादः प्रायेण सुन्दरो न भवति । तेनैव हेतुना-एषा विधि-व्यवस्था पूर्वमिङ्ग्लिशभाषायामेव लिखिता जाता । तस्य भाषानुवादो नोत्तमोऽभूत् । एतावता स्थाने स्थाने-इङ्ग्लिश भाषायां देशभाषायाञ्चान्तरमस्ति । अत आँग्ल-विद्या-विशारदैरस्याँग्लभाषा-लिपिः संगृह्य द्रष्टव्या । अत्र तु केवलं संस्कृत भाषायामेव द्रष्टव्यम् । आशासे यत् सुप्रभात-सम्पादक महोदयाः, एनां 'दाम्पत्य-दण्ड विधान-व्यवस्थां' नूनं स्वीये सुप्रसिद्धे पत्रे प्रकाशयिष्यन्ति ।

एनामवलोक्य सर्वेषां विदितं स्याद्यदस्यां व्यवस्थायां किमपि नूतनत्वं नास्ति । अपितु पूर्वतनमेव विधानं लिपिबद्धमभूत् ।

**श्रीमती अनन्त-सुन्दरी देवी**

स्त्री-स्वत्व-संरक्षिणी-सभाया मन्त्रिणी ।

## दम्पत्य-दण्ड-विधानम् । *

प्रथमोऽध्यायः ।

प्रस्तावना ।

स्त्रीणामुद्दण्डस्वामिनामुपरि शासनकरणाय एकस्या विशेषप्रकारायाः विधिव्यवस्थायाः प्रयोजनमस्ति । एतदर्थं निम्नलिखिता विधिव्यवस्था निर्मिताः भवन्ति—

धारा—१—अस्या विधिव्यवस्थायाः नाम "दाम्पत्य-दण्ड-विधानम्" भविष्यति । भारतवर्षे ये देशीया विवाहिताः पुरुषाः सन्ति, तेषां सर्वेषामुपरि अस्य विधानस्य प्रभावो भविष्यति

द्वितीयोऽध्यायः ।

—:*:—

साधारणी व्याख्या ।

धारा २—या जङ्गमा सजीवा सम्पत्तिः स्त्रीणामधिकारे वर्त्तते, तस्या नाम पतिरिति ।

उदाहरणम् ।

( क ) पेटिका-मञ्जूषादीनां पतिरिति न संज्ञा । कथम् ? यद्यपि उक्ताभ्यः सर्वा जङ्गमाः अर्थात्-अस्थावराः सम्पत्तयः, तथापि ता न सजीवाः ।

( ख ) गौ, महिषी, वत्सः, इत्यादयो न पतिरिति संज्ञकाः, कस्मात् ? यद्यपीमे सजीवाः पदार्थाः सन्ति, तथापि-एतेषु स्वेच्छानुसारं कार्यकरणस्य शक्तिरस्ति । नैव इमे सर्वे सम्पत्तया स्त्रीणामधीनाः सन्ति ।

( ग ) विवाहिताः पुरुषा एव स्वातन्त्र्येण किमपि कर्म कर्त्तुं न शक्नुवन्ति । अतएव परवशेन पतिसंज्ञका इति ।  ( क्रमशः )

* साहित्य-सम्राजोः श्रीहरिश्चन्द्र-वङ्किमचन्द्रयोः एकरूपतां गतौ निबन्धौ समवलोक्य देवभाषायाम् लिखितम् ।



# [1]विभ्रमगीतम् ।

( ले०—श्रीगिरिधर शर्मा, नवरत्नम्, काव्यालंकारः )

अये विमुञ्च, मुञ्च मुञ्च, बन्धनाद्विमुञ्च माम् ।
स्व-बन्धनाद्विमुञ्च मां, विमुञ्च, मुञ्च मुञ्च माम् ।(ध्रु०)

मधु प्रिये ! पुनः पुन-
नं चुम्बनोत्थितं चिरम् ।
चिराय माधुरीमया-
त्स्वबन्धनाद्विमुञ्च माम् ॥ १ ॥
सुगन्धभृत्पदार्थजात-
धूप-धूम-सञ्चितैः ।
मदीयहृन्नभस्वनोऽ-
दयं स मर्चतेतमाम् ॥ २ ॥ अये० ।
समर्पयावकाश मेहि
सुप्रभात-तेजसे ।
अपाकुरुष्व गोपुराऽ-
वरोधमालिकामिमाम् ॥ ३ ॥ अये० ।
त्वयीह मोह-संवृतो
गतोऽस्मि लीन-चेतनः ।
अपावृणुष्व मायिकं
स्वकं प्रदर्शयस्व माम् ॥ ४ ॥ अये० ।
पुनः प्रयच्छ पौरुषं
प्रिये मयाऽद्य यन्मनः
स्वतन्त्रतां गतं हि
तुभ्यमर्प्यतां समर्प्यताम् ॥५॥ अये० ।

१ डा० श्रीरवीन्द्रनाथटागोर कृत काव्यानुवादरूपम् । ' ग़ज़ल ' रूपेण च गीयते ।



# स्वाभाविको बोधः ।

( ले०—श्री तारादत्त पन्तः, साहित्याचार्यः, काव्य व्याकरण—तीर्थः, दर्शनशास्त्री, )



णिमात्रस्यास्ति कश्चन स्वाभाविको बो
स च जातिभेदेन विलक्षण एव दृश्य
ते । अश्वास्तावत् कुरुक्षेत्रात् पाटलि
प्रापिता अपि तत्रैव गन्तुं प्रयतमा
दृश्यन्ते, किम्बहुना, यदि भवद्भिः
नेत्रपट्टिकाबन्धा रात्रौ धूमयानमा
प्याऽपि ते लवपुराल्लक्ष्मणपुरं त्यज्येरन्; तदा
लवपुरायैवाऽभिमुखा भवेयुः, न मद्राय, ना
कामरूपाय । अहो कीदृशं पशूनां ज्ञानम्
नास्ति मोहः, न मार्ग-विभ्रमः, नाऽपि वा दे
विस्मृतिः । कुतः स्यादेषां स्थान-विस्मृतिः !

मनुष्या वारं वारं बोधिता अपि न जानी
यन् मम निवासतो मम गन्तव्यदेशः कस्यां दि
कियद्दूरे वर्तते । पारावताः, केनापि कपोतपा
काता निष्कासिता महति पञ्जरे निधाय, कस्य
कालीघट्ट-( कलकत्ता )—वासिनो हस्ते विक्रीता
सच कपोत-पोषण-चतुरः प्रसन्नास्यः काशी
कालीघट्टं गत्वा स्वनिकेतने विटङ्के तान् निवे
यामास । ते च क्षणादेव तस्मिन्नन्यचित्ते, सम्भू
ड्डीनाः वाराणसीमेव प्राप्ताः । एवमेव कश्चि
शाहजहांपुर—निवासी कलरवैर्वञ्चितः काशी
सिभिः । मत्कुणादयोऽपि न विस्मरन्ति स्वनिवा

भूमिम् । पश्येयुर्भवन्तस्तच्चेष्टाम् । यत उत्थाय तदभिमुखं भवन्तस्तान् क्षिपेयुः, सत्वरन्ते तदभिमुखा एव धावन्तो दृश्यन्ते । एवं पिपीलिकानामपि विद्यते विलक्षणा बोधशक्तिः । अस्ति काचन विचित्रा दैवीशक्तिः, येन कीटा अपृष्ट्वैव कमपि मार्गं, तामेवसरणिमवलम्बन्ते, यया तेषां स्वपदप्राप्तिरप्रतिहतैव दरीदृश्यते ।

न केवलं दिक्परिज्ञानमेव विलक्षणं तेषाम्; अपि तु गन्धेन वस्तुनिर्णये स्वजातिपरिचयेऽलौकिकमेव वैलक्षण्यं दृश्यते पशुमात्रस्याऽपि । विलक्षणं जिघ्रन्तः पशवः स्वयूथमेव प्राप्नुवन्ति । सारमेया इमे कमपि संकेतं विदधतः पथिचलन्तो दृश्यन्ते, नास्ति तदस्माकं ज्ञानं किमनेन कृतम्, किञ्च सङ्केतितम् , पाश्चात्येषु गुप्तचराः कुक्कुराणामेव साहाय्येन चौरान्, हत्याकारिणो धरन्ति । ते यस्य कस्यापि वस्त्रखण्डमेकमुपाघ्राय तैनेव गन्धेन पुरुषं परिचिन्वन्ति । विगते योरोपीय—महायुद्धे कपोताः पत्राणाम्, समाचारादीनाञ्च नयनानयनं कुर्वन्ति स्म । रावणस्य शुक-सारणादयः समाचारवाहकाः सन्ति प्रसिद्धाः ।

अथ च शकुनज्ञानमपि संदृश्यते सविशेषं पशूनाम् । काकः कदाचित् कस्यापि सदनाभिमुखं प्रातरेव रुवन् किमपि भविष्यं सूचयति । सारमेयश्च विशेषतः शुभाशुभं तत्त्वतो वेत्ति, सूचयति च हर्ष-विषादानुमापकेन विकृतेन स्वरेण । कदाचिदूर्ध्वमुखः, कदाचित्तिर्यङ्मुखः, कदाचिदधोमुखः, कदाचित् पालकसदनाभिमुखः, तद्रोदन-विचार-चतुरेभ्यो विलक्षणं विज्ञानं निवेदयति ।

अहो महर्षीणां विज्ञानम् ; ये खलु काक-विद्याम्, कृकलास-विद्याम्, सारमेय-विद्याम्, भूगर्भ-विद्याम्, उदक-विद्याम्, स्व-संहितासु स्थापितवन्तः । ये खलु पशूनां गति-भाषित-चेष्टितैः शुभाशुभज्ञानोपायं मनुष्येभ्यो बोधितवन्तः । सोऽयं स्वाभाविको बोधो नियतः पशूनाम् ।

मनुष्यस्तु यत्किञ्चिदंशे नियतोऽपि, शिक्षाभ्यास-पाटवेन, वैलक्षण्यं किमप्यनियतमेव भजते । न दृश्यते च स्वाभाविकता तादृशी; यादृशी पशूनाम् । मूढतमेषु बालकेषु दृश्यते क्वचित् क्वचित् स्वाभाविको बोधः ।

पाश्चात्या वैज्ञानिका एतेन महालाभं प्राप्ताः सन्ति । परं वयं सङ्कीर्णविषय एव मस्तकं मारयन्तो न किमपि पश्यामः स्व-पूर्वजानामद्भुतं विज्ञानम् ।

—:❖❁❖:—




दग्धोऽसि यद्यपि निदाघ-प्रचण्ड-वह्नौ,
सत्याग्रहच्युतिमरे ! न कदाप्युपेयाः ।
शान्तिं नयन् समुपयाति नवीन-नीर-
गम्भीर-मन्थर-रवः पिक ! नीरदोऽयम् ॥

२

आयासि चेज्जलद ! शोभनमागतं त,
आयाहि सेचय वनं शनकैः शनैस्त्वम् ।
मार्तण्ड-चण्ड-किरणैः कवलीकृतं न-
त्वेतत्पतिष्यति महाजाल-धारयाशु ॥

३

प्राप्ते प्रशस्त-समये रिपवोऽपि मैत्रीं,
कुर्वन्ति तथ्यमिति नात्र विचारणीयम् ।
ये वायवः खरतरा व्यथका निदाघे,
ते वान्ति नीर समये त्रिविधाः सुखाय ॥

४

स्रोतैर्विना लयमुपैति नदोऽपि दीर्घः,
संक्षीयमाणरविरस्य महत्प्रमाणम् ।
उद्योगिनं जलधरं च विलोक्य पौनः-
पुन्येन लज्जित इवास्तमितो विवस्वान् ॥

५

सम्मान-खाद्य-रहिता अपि दुष्टवर्या
एधन्त एव न विचित्रमिदं कुराज्ये ।
ग्रीष्मे प्रशासति भुवं खलु कण्टकानां
वृद्धिर्यतो नयनमार्गमवश्यमेति ॥

६

योऽत्याचरत्यनुदिनं न सुखाय यस्य,
कर्माणि कान्यपि भवन्ति मनुष्यलोके ।
सद्यः स वै व्रजति दुर्जन एव नाम-
निःशेषतामघकरश्च यथा हि तापः ॥

७

द्वारं पिधाय सखि ! तिष्ठ गृहे स एव,
वायुः समेति जलदागम-सूचकोऽयम् ।
निःश्वासमश्रुपतनं तनुकम्पनं च,
प्राप्तं मयास्य कृपयाऽऽतुरया भयेन ॥

८

रमानाथः शेते श्वशुर-भवने क्षीरजलधौ,
विदेशं मे कान्तस्त्यजति न धनार्थी गतघृणः
स्वदुःखं कस्याग्रे जलदजनितं यामि गदितुं,
ऋतावस्मिन् प्राणाः सखि ! मम गमिष्यन्ति बहुधा ॥

—कालीप्रसाद शास्त्रिणः "श्रीकरस्य"

# भारतीय-शासन-व्यवस्था ।

—:*:—

## भारतस्य आङ्गल-राज्येन सम्बन्धः

—:*:—

(१)

( ले० — शाह — श्रीअद्वैतप्रसादगुप्तः ) ।

—:*:—

भारतं वर्षं हि नाम आङ्गल-साम्राज्यस्य, प्र तमम्, सम्पत्तिशालि, महत्वपूर्णश्चाङ्गमस्ति । खलु राजनैतिकदृष्ट्या च ब्रिटिश-साम्राज्य हस्तलग्नोऽप्रतिमो देशः । आँग्ल साम्राज्यस्य विध सुव्यवस्था-सम्पादनाय भारतमिदं मह पूर्णं प्रधानं सहायकश्च विद्यते । अन्ताराष्ट्रीय-प्र द्वन्द्वितायामेकशतवर्षाणि यावत् एशिया-म द्वीपे योरोपीय जातीनां यन्महायुद्धं प्रचलितमासी तत्र भारते आँग्लानां यत् प्रभुत्वं संस्थापितं तन्म त्वपूर्णं विद्यते । एतद् भारतस्यैव विलसितम्; सततु महासाम्राज्येषु आग्लानां महत्वपूर्णं स्थ विद्यते । विश्वस्मिन् साम्राज्ये शान्तिर सभ्यताप्रचाराय च भारतस्यैव व्यक्तित्वम्, द्र साहाय्यञ्च प्राधान्यमालम्बते ।

आँग्लानां साम्राज्याभिवृद्धौ, साम्राज्येषु प्रधान्येन गणनायाञ्च भारतवर्षमेव प्रधानं क णम् । भारतीयान्येव रत्नानि ब्रिटिशसाम्राज्य मुकुटमण्डलमुज्वलयन्ति ।

भारतीयेषु पारस्परिक-कलह-परायणेषु शि लेषु संवृत्तेषु. आँग्लैः स्वकीयस्य व्यापारस्य, वि

नस्य, युद्धेश्च प्रधानमिदं क्षेत्रं स्वाधीनं कृतम् । भारतप्राप्त्या ब्रिटिश साम्राज्यस्यार्थिकी परिस्थितिरपि परां कोटिमुपगता । व्यतीते योरोपीय-महायुद्धे, ब्रिटिश-साम्राज्यस्य विजये, हिन्दूनां साहाय्यं सर्वप्रधानं चिरस्मरणीयञ्च विद्यते । युद्धात् पूर्वमप्याँग्लेतिहासे ब्रिटिश साम्राज्योदये भारतस्यैव हस्तावलम्बः प्रधानं कारणमासीदिति नास्त्यविदितचरं केषामपि ।

भारतीयानामाँग्लानाञ्च पारस्परिके सम्बन्धे सञ्जाते भारतेनाऽपि महती समुन्नतिः सम्पादिता । एतस्या वार्तायाः सत्यतानुभव आँग्लशासनात्प्राक्तनानां भारतीयेतिहास-पृष्ठानां परावर्तनेन सम्यग् ज्ञायते; यदेतेषामागमनात्पूर्वं भारते कीदृशी विशृङ्खलताऽऽसीदिति । यतः कालादत्र ब्रिटिश-शासनमभूत्तत एव भारतं श्रृङ्खलाबद्धम्, उपचीयमानम्, शान्तिपूर्णञ्च विद्यते । पाश्चात्यानां मध्ययुगे योरोपीयानामपि तादृश्येवावस्थाऽऽसीद्यादृशी ब्रिटिशशासनात् पूर्वं भारतस्याभूत् । अन्तर्जातीय युद्धैः, धार्मिकयुद्धैः, आक्रमणैः, पारस्परिकैः कलहैः, अराजकतया, हिंस्रतया, अन्धभक्त्या, मूर्खतया च भारतमिदं शिथिलम्, जर्जरितञ्चासीत् । कारागारे बद्धमिव भारतमिदं बाह्य-राष्ट्र-सम्बन्ध-विहीनमासीत् । आङ्ग्लानामागमनेन भारतीया दशा परावृत्ता । जातीयतायाः, राष्ट्रिय-सहयोगस्य, ज्ञानस्य विज्ञानस्य च महती वृद्धिरभूत् । भारतीयेषु च स्वोन्नति-सम्पादनस्य भावो जागरितः । तेषु नूतनमिव जीवनं समायातम् ।

यत्र यत्र भारतीयानि पुरातनानि तत्वान्युपलब्धानि, तेषां महती सुव्यवस्था सम्पन्ना, शान्तिः, सौख्यम्, नियन्त्रणम्, व्यवस्थितत्वञ्च भारते संवृत्तम् । यद्यपि राज्येऽस्मिन् भारतीयेषु राष्ट्रिय-सामाजिक-समुन्नतिप्रवाहो मन्द एव वर्तते । तथापि प्रचलत्येव । यथा स्वातन्त्र्योपासकेषु महत्सु साम्राज्येषु राजनैतिकी प्रगतिर्दृश्यते, तथैवा त्राऽपि वर्तत एव । साम्प्रतं भारतस्य नैतिकी स्थितिः कार्यक्षमा वर्तते । सर्वेषु भारतीयेषु सहयोग-सम्पादनज्ञानमपि समागतम् । सामाजिक-वैश्रृङ्खल्यस्य दूरीकरणोपायाश्चाऽपि भारतीयैर्विज्ञाताः । यद्यप्येते महान्तो लाभाः सञ्जाता परन्त्वियमेवैका त्रुटि विद्यते, यद् भारते स्वतन्त्रतासुखं नास्ति ।

निखिलभारतस्य-ग्रहणात् पूर्वमाङ्ग्लानां शासनपद्धतिर्यादृशी बभूव, यादृशाश्च विचारा आसन्, ते साम्प्रतमाङ्ग्लैः परावर्तिताः । पारस्परिकं कलहं कारयित्वा साम्राज्य-कर्णधारैर्भारतीय-प्रकृतौ यत्परिवर्तनं क्रियते तत्रापि भारतीया एव निदानभूताः सन्ति । भारतीया एव तेषां महान्तमुद्देश्यं पूरयन्ति, एतेषां पादार्पणमपि भारते भारतीयानामेव कृपया सञ्जातम् । एभिरयोग्यराज्यानां युद्धेन विनाशो विहितः, अवशिष्टा राजानश्च शान्त्या निर्जिताः । प्रजायां देशे च शान्तिः, समुन्नति-शीलस्य सम्राज्यस्य नितरामावश्यकी । आङ्ग्ला इमं तत्वं जानन्ति, आवश्यकताञ्च समर्थयन्ति । अतएव भारतस्य राजनैतिकं समुत्थानं विलम्बेन सञ्जातम् । यदि आँग्लानामेष विचारःस्यात्; यत् शनैःभारतस्य समुन्नतिः सम्पद्येत, तदा नितरामुत्तमं भवेत् । भारतेन ब्रिटिशशासनं स्वीकृत्य व्यतीतायामेकस्यां शताब्द्यां या समुन्नतिः कृता, प्रत्यहं क्रियते च सा स्वल्पाऽपि सन्तोष जननी विद्यते ।

# मुद्रणालयः ।

—:*:—

ले०—शिवराम शर्म्मा, सारस्वतः
[ छात्रः—सारस्वतभवनस्य, काशी ]

[ अवशिष्टांशः । ]

यदा गटनवर्गः स्वदेश एवासीत्तदा तत्रत्येषु ( मेज ) धनिकेषु निर्धनेषु च महान् कलहः समुत्पन्नः, अतस्तत्पितरौ तमादाय 'ट्रान्सवर्ग' नाम्नि-स्थानं जग्मतुः। स चिरकालं तत्र स्थित्वा दर्पणस्य कार्यं प्रारब्धवान्। तस्मिन्कार्येऽसाफल्यमवेत्य, मुद्रणयन्त्रालयोद्घाटने तस्य महती समुत्कण्ठा बभूव। अतः १४४६ तमे ईशाब्दे मुद्रणयन्त्रालय-निर्माणार्थं पुनः स्वजन्मभूमौ 'मेंज' नगरे समाजगाम। परन्तु निर्धन एवासीत्। अतः 'जोनफाष्ट' नाम्नो धनिकादृणं गृहीत्वा यन्त्रालय-सामग्रीनां निर्माणमकरोत्। एतस्मिन् कार्ये स्कूफरनाम्ना काष्ठकारेण तस्य महत्साहाय्यमाचरितम्। गटनवर्गेण प्रथमं काष्ठाक्षराणां मुद्रणालयः संस्थापितः। तेषां सत्वरं विनाशेन तन्मित्रेण स्कूफरेण लौहाक्षराणि निर्मितानि। १४५५ तमे खिष्टाब्दे गटनवर्गेण लौह-यन्त्रालये 'बाइबिल' नामा धर्मग्रन्थो मुद्रितः। अस्य ग्रन्थस्य भागद्वयं मुद्रितं वर्तते। अस्य मुद्रणे गटनवर्गस्य षट्सहस्रमुद्राणां व्ययः समजनि। द्रव्याभावात् मुद्रणालयकार्यं विनष्टम्। तस्य धनिकेन जोनफास्टेन तस्य मुद्रणालयो दुष्टतया विनाशितः। सोऽपि कृच्छ्रेण कतिपय दिनान्यतिवाह्य मृतः। परन्तु साम्प्रतमपि लोकास्तस्य यशो गायन्ति।

तदनन्तरमेतस्मिन् कार्ये, जर्मन-इटली-प्रभृ देशेष्वनेकैरुत्कण्ठितैरध्यवसायिभिस्तैनैव पथा मु णालयानां निर्माणं कृतम्। 'विलियम कैस्टन' नामा यूरोपीयस्तस्य शिक्षां ग्रहीतुं जर्मन-दे गतः। ततः शिक्षां प्राप्य तेन १४७६ तमे खिस्त ब्दे 'वेष्टमिंस्टर एवी' नाम्नि स्थाने मुद्रणाल संस्थापितः। तदनन्तरं यन्त्रालयस्य प्रबन्धस 'किनडो वार्डो' नाम्नः कस्यचन कार्यकर्तुह गतम्। तेन मुद्रणालयस्य महती वृद्धिः कृता, चतु शतानि पुस्तकानि च प्रकाशितानि। क्रमशस्तस प्रचारः सर्वत्र योरोपे समभूत्। तेन तस्य सर्वेऽ दोषा दूरीभूताः।

ततश्च 'केनिग' नाम्ना विदुषा दैनिकपत्र मुद्रणाय द्वौ मुद्रणयन्त्रालयौ निर्मितौ, यौ वाष्प गेन कार्यमकुरुताम्। तयोः प्रतिहोरायां ११० पत्राणि मुद्यन्तेस्म। एतदेव यन्त्रमधिकनियन्त्रणा प्रतिहोरं १८०० पत्राणि मुद्रितुं समर्थमासीत्

ततः कपूर—एटिलगेट—महाशयाभ्यामे सुन्दरो मुद्रायन्त्रो विनिर्मितः यस्मिन् प्रतिहो ५००० पञ्चसहस्र-सङ्ख्यकानि पत्राणि मुद्यन्तेस्म अधुना तु नूतन एव यन्त्रो विनिर्मितो विद्यते, य प्रतिहोरं लक्षसङ्ख्यकानां पत्राणां मुद्रणं भवति। केवलं मुद्रणमेव भवति, परं कर्तन-बन्धनादिक र्याण्यपि सहैव भवन्ति।

साम्प्रतन्तु पैशाचिकी समुन्नतिः सञ्जाता मुद्र कलायाम्। पुनः कदापि निवेदयिष्यामि।

—:०:—

## अभिनन्दनम् ।

गौस्ते प्रसन्ती कवि-चक्रवर्त्तिन् !
सुरवैरिणी भारत-पुङ्गवाग्र्यैः ।
यदा न तुष्टा ; प्रमदं तदागा-
दाङ्गूलप्रभूणां सहवास-योगैः ॥
यां सा सुवर्णाऽजनयन् महामहो-
पाध्याय-नाम्नीं पदवीं सुखश्रुतिः ।
तया समालिङ्गितमद्वितीयकं-
भवन्तमीशः सुभगं क्रियात्सदा ।

—श्रीमहादेव पाण्डेयः ।

## मधु-सञ्चयः ।

—:o:—

( ले०—मधुकरः )

—:*:—

### हास्य-स्वास्थ्यञ्च ।

—:o:—

शरीरस्य स्वास्थ्येन सह हास्यस्य घनिष्ठः सम्बन्धः । हासरूपमौषधं ये निषेवन्ते, ते केवलं रोगमुक्ता एव न भवन्ति, प्रत्युत तेषां क्षुद्ररोगास्तु भवन्त्येव नहि । शरीरस्य स्वास्थ्य-सम्पादनाय परमावश्यकमिदं यत् चिन्ता-शोक-दुःखादीनां भारेण हृदयं नावसादनीयम् । आयुर्वेदे लिखितं यत् शोकेन, दुःखेन च बल-क्षयो भवति । प्रसन्नता स्वास्थ्यस्य परमं भेषजम् । हास्यं नितरां स्वास्थ्यप्रदम् । नात्रास्त्यत्र सन्देहावसरः सर्वदा मनःप्रसादो नितरां कठिनं कार्यम् । अतएव श्रीमता भगवता कृष्णेनाप्युक्तम् :—

मनःप्रसादः सौम्यत्वं मौनमात्म-विनिग्रहः ।
भाव-संशुद्धिरित्येतत् तपो मानसमुच्यते ॥
( श्रीमद् भगवद्गीतायाम् )

प्रसन्नतारूपेणानुष्ठानेन ये जनाः यदभिलषिष्यन्ति, यद्वा कामयिष्यन्ते, तन्नूनं पूर्णं भविष्यति, तेषां मनोरथा न कदाचिदपि विनङ्क्ष्यन्तीति निश्चितम् ।

—:o:—

### किमर्थं विवाहः कृतः ?

——:*:——

केनचित् पत्रिका-सम्पादकेन स्वपाठकेभ्यः प्रश्नमिदं कृतम्, यत्—"युष्माभिः किमर्थं विवाहः कृत"—इति । एतस्योत्तरे तत्सविधे शतशः पत्राणि समागतान्यासन्, येभ्यो विवाह—विषये भिन्न-भिन्न मनोवृत्तीनां ज्ञानं भवति । ततश्च कियतां पत्राणां सारांशः पाठकानां विनोदाय प्रकाश्यते—

१—विवाह—प्रथा परम्पराप्राप्ता वर्तते, न कश्चिच्चिन्तयति यत् किमर्थं मया विवाहः क्रियते । यथा कश्चिदिदं न विचारयति यन्मया किमर्थं भोजनं क्रियते, किमर्थं वस्त्रपरिधानं क्रियते, तद्वदेव मयाऽपि प्रथाप्राप्तोऽयं विवाहः कृतः ।

२—ममाभिलाषा तु नासीद्विवाहं कर्तुम् परन्तु सङ्कोचवशात्स्वीयामिच्छां न प्रकटीकर्तुमशकम् ।

३—समीचीनाः भृत्या न मिलन्तिस्म; मिलिता अपि न स्थायिरूपेण तिष्ठन्तिस्म, विशेषतः पाचको नासीत् समीचीनः । विवाहानन्तरमेव विपद् व्यपगता ।

४—अहं परिणीतस्त्वस्म्येव; परं न मया स्वयं स्व—विवाहः कृतः । बाल्यावस्थायामेव पितृभिर्विवाहः कृतः । एतस्योत्तरदातारस्त एव सन्ति ।

५—मन्निकटे महती सम्पत्तिरासीत्, नासीच्च पुत्रः, अतो मया परिणयः कृतः, यद्यपि सा लालसा न परिपूर्णा, पुत्रादिदानीमपि वञ्चितोऽस्मि; परं सप्तकन्यकाः सन्ति, ता मदीय वैभवस्य सम्यक् सदुपयोगं विधास्यन्ति ।

६—मदीय—वैभवस्य नासीत् कश्चन भोक्ता, स्त्रिया समागत्य पूरितैषा त्रुटिः ।

७—मम कुटुम्बिनः प्रतिक्षणं मां परिवृत्य तिष्ठन्तिस्म । अतो मया पाणिग्रहणं कृतम् । साम्प्रतं न कश्चित्कुटुम्बी सविधे समागच्छति ।

८—मित्राणाम्, सम्बन्धिनाञ्च कार्येषु मयाशिष्टाचारस्य ( नेग ) प्रचुरं धनं दत्तमासीत् तद्ग्रहणार्थं मया विवाहः कृतः । मदीयं धनं किमपि न संलग्नम् ।

९—जननी-मरणानन्तरं कश्चन मदीयो निरीक्षको नासीत् । अतोऽगत्या मयोद्वाहः कृतः ।

१०—अहमेकाकी आसम् । कार्यालय-गमनावसरे गृहे ताल यन्त्रपिधानस्य (ताला बन्द) आवश्यकता भवतिस्म । अतो मया विवाहो विहितः ।

११—मात्रा शपथो दत्त आसीत् । अतो मया विवाहः कृतः ।

१२—मदीयं स्वास्थ्यं समीचीनं नासीत् प्राय रुग्ण एव अतिष्ठम्, नास्ति कश्चन सेवार्थं शुश्रूषणार्थञ्चेति मया विवाहः कृतः ।

१३—जना जानन्तिस्म यदस्य कुले किमपि दूषणं विद्यते, अतो मया विवाहः कृतः ।

१४—वैद्यानां सम्मतिरासीदतो मया विवाहः कृतः ।

१५—अहं सेना-विभागे कार्यं करोमि । तत्र विवाहितानां वेतनमधिकं लभ्यते, अतो मया विवाहः कृतः ।

१६—अहमस्मि महान् क्रोधी । मदीयां भर्त्सनां तर्जनाञ्च सोढुं नासीत् कश्चन, तदर्थं विवाहः कृतः ।

———:※:———

## इच्छाशक्तेः प्राबल्यम् ।

इच्छाशक्तेः संकल्पशक्तेश्च वैलक्षण्यं भारतवासिनां कृते न विस्मयजनकम् । भारतीयानां सिद्धान्तः, यत आत्मोन्नतेश्चरमसीमां प्राप्ताः पुरुषाः सत्य-कामाः, सत्य-सङ्कल्पाश्च भवन्ति यदपेक्षन्ते तदेव प्राप्नुवन्ति । यत् कामयन्ते तत् सत्यं भवति । योगिनो हठयोगद्वारा संकल्पशक्तिं प्राप्तुं यतन्ते । (सा च 'प्राकाम्य' नाम्नी शक्तिः) इयं वार्ता सुप्रसिद्धेन अमरीकादेश-वासिना पेलटन महोदयेन सत्यं प्रदर्शिता । एतस्मिन् विषये स्फुटविषयाणां स्वानुभूतानां संग्रहः पुस्तकरूपे कृतः । एतस्य पुस्तकस्याध्ययनेन मनुष्यः स्वीयमायं बर्द्धयितुं प्रभवति । दरिद्रो धनी भवितुमर्हति । पेलटन महाशयेन प्रतिज्ञा कृता यदि मदीयानुभवस्तथ्यतां नावहेच्चेत्पुस्तकमूल्यं परावर्तयिष्यामि ।

—माधुरीतः

## निदाघोपालम्भः ।

श्रीमन्निदाघ ! भवदागमनात्पुराऽऽसी-
न्निस्सीम नित्यमृतुराजसुखं समेषाम् ।
त्वय्यागते त्विह जनाः परितप्यमाना-
नानाविधोक्तिभिरजस्रमुपालभन्ते ॥१॥

पार्श्वोल्लसद्बहुरसालमधूपभोगो-
द्योगोद्-भ्रमद्-भ्रमर-गुञ्जन-रञ्जितं ये ।
मन्दातपं पवनवासितमाशु पान्थाः-
पन्थानमेत्य बहुदूरमुपेतवन्तः ॥२॥

ते साम्प्रतन्तु परितोऽग्निकणां किरद्भि-
र्भास्वद्गभस्तिभिरनारततप्तभूमौ ॥
आधातुमात्मचरणां नहि शक्नुवन्तो-
ऽनन्तोद्यमैरपि न गन्तुमलं भवन्ति ॥३॥

स्वेदोद्गमात्स्नपितगात्रतयाऽतिमात्रा-
द्रात्रावपि स्फुरदनङ्गमदोन्मदिष्णू ।
नो दम्पती कथमपीह परस्पराङ्गा-
ऽऽसङ्गाद्विनोदमुपगन्तुमलं भवेताम् ॥४॥

कान्ताऽधरोऽपि च कपोलतलाद्गलद्भिः-
स्वेदोदविन्दुभिरनुक्षणमुद्यमाणः ,
श्रद्धास्पदं भवितुमर्हति नैव यूनां-
पातुं कथञ्चिदपि साम्प्रतमत्र!लोके ॥५॥

शुष्यन्त्यशेषसरितः परितश्च कूपा-
न्नो पातुमाशु सलिलं तृषितोऽप्युपैति ।
किञ्चाधुनोपचयमञ्चति रोगजातं-
ज्ञातं भवेत्किमपि नाभ्युदिते त्वयीह ॥६॥

इत्थं जनैरनुदिनं ननु निन्दितः स-
न्नम्भोदमानयसि यन्नहि सा प्रशंसा ।
सांसिद्धिकाभ्रिकदयोद्गमितप्रकर्षा-
वर्षादयस्त्वृतुवराः सुचिरायुषः स्युः ॥७॥

बेहटा, बेनीपट्टी, दरभंगा । श्रीभूपनारायण झा, शर्मा । ( व्याकरणाचार्यः )

## विज्ञान वैभवम् ।

( संकलयिता—'कुचुटुतुपु' )

फ्रान्सदेशस्य द्वाभ्यां वैज्ञानिकाभ्यां वैद्याभ्यां नवीनः सूचि-चिकित्सा-(इन्जेक्सन) प्रकारः समुद्भावितः । येन दुर्बलो नितरां स्थूलः, स्थूलश्च नितरां दुर्बलो भवितुमर्हति । तयोर्नाम डा० पी० कर्नाट्-महाशयः, डा० ई० टैरिस-महाशयश्च विद्यते । ते वदन्ति, यत् वयं मनुष्यान् स्वेच्छानुसारं दुर्बलान् स्थूलांश्च कर्तुं शक्नुमः । दुर्बलानां विनाशोन्मुखानां पशूनां शरीरेण किमपि औषधं निर्मीयते, येन स्थूलतरा अपि पुरुषा कतिपयेष्वेव सप्ताहेषु दुर्बलाः भवन्ति । एतस्माद्वैपरीत्येन स्वस्थशरीराणां बर्द्धमानानां पशूनां शरीरेण निर्मितमन्यदौषधमपि निर्मीयते, येन दुर्बलाः कृशा अपि पुरुषाः पुष्टाः स्वस्थाश्च भवन्ति । एतस्यौषधस्य परीक्षा प्रथम पशूनामुपरि कृताऽऽसीत् । तदनन्तरं द्वाभ्यां स्त्रीभ्यां कृता । उभयोरपि शरीरे शूकरवसायाः सूचिचिकित्सा सञ्जाता । द्वयोरपि शरीर-भारो वृद्धिं गतः । राजयक्ष्मा रोगे तु रामवाण-कार्यं करोत्यौषधमिदम् ।

* * * *

फ्रान्स-देश-राजधान्यां पेरिस नगरे प्रो० 'जिन पेरिन' नामा कश्चन वैज्ञानिको विद्वान् कृत्रिमसूर्य-निर्माणे निरन्तरं प्रयत्नमाचरति । तेन बहु साफल्यमपि सम्पादितं विद्यते । तस्य कथनं विद्यते, यत् एककोटिमितानां विद्युद्वर्तिकानां शक्त्या पृथिव्यामेव कृत्रिमं सूर्यमुद्भावयिष्यामि । एतस्य महाकार्यस्य सर्वप्रथमं प्रारम्भः अमरीका-निवासिना डा० स्टिन मेज महाशयेन कृत आसीत् । साम्प्रतं तस्य शिष्याः कार्यमिमं कर्तुमुद्युक्ताः सन्ति । बहूनां मतम्, यत् कृत्रिमसूर्यस्योद्भवेन पृथिव्यां भयानको दावानलः प्रज्ज्वलिष्यति । अत्रत्याः सर्वेऽपि पदार्थाः खण्डशो भविश्यन्ति । सर्वेऽपि पदार्थाः भीषणतापेन विनष्टाः भविष्यन्ति । मनुष्याः, पशवः, पक्षिणः, वृक्षाश्च विनष्टा भविष्यन्ति । इयं वार्ता यदा पेरिनाय कथिता सर्वैस्तदा तेनोक्तम्, यत् परमाणूनां विभागे विनाश अवश्यम्भावी विद्यते । किन्तु सत्य-वैज्ञानिकाः प्रत्येकस्मिन् विषये विचारं कुर्वन्ति, न च समारम्भात् कदाचिदपि विरमन्ति । अतो नास्माभिर्भेतव्यम् '

पश्यामः, पेरिन-महाशयस्यानेन कृत्येन कः परिणामो भवति ।

* * * *

स्त्रियो यदा भोजन निर्माणं कुर्वते, तदा यावद्भोजनं न सम्यक् परिपचति तावद् बहिस्समीपे स्थित्वा प्रतीक्षां कुर्वन्ति । पाश्चात्य-स्त्रीणामप्यस्य कष्टस्य भार आसीदतस्तत्रत्यैर्वैज्ञानिकैरेको घटी यन्त्रो विनिर्मितः । येन भोजनं बह्नौ धृत्वा स्त्रिय अन्यानि कार्याणि कुर्वन्ति । परिपक्वे भोजने घटीयन्त्रः सूचनां ददाति तच्च न दह्यते, न विकारमयते ।

* * * *

राज्य-प्रहरिणः ( पुलिस, Polic ) चौराणां दस्यूनाञ्च पश्चात् पलायनं कुर्वन्ति, यदा कदाचिदपि चौरा नलिकायन्त्रेण, पिस्तौल नाम्ना यन्त्रेण च तेषामुपरि आघातं कुर्वन्ति अतः शर्मण्य ( Germany ) देशीयैरेकमद्भुत तनुत्रं ( कवचं ) विनिर्मितम् । एतस्य उर अन्येषु च मर्मस्थानेषु बन्धनेन तेषां शस्त्र न भवति । यस्य धातोरिदं तनुत्रं विनिर्मित स नितरां लघुः, सूक्ष्मश्च विद्यते । तं बन्धयित्वा सैनिकाः सम्यक् शरीरावयवानां सञ्चालनं प्रभवन्ति ।

## हंसाऽन्योक्तिः

हे हंस ? शंसितमते ? शकुनिव्रजेषु ।
प्राप्तस्त्वया शुचि यशः स्वगुणैरगण्यैः ।
कुर्वन्ति कह्वनिकरा यदि तेऽवमानम् ।
हास्यास्पदाः सुपततां हि भवन्ति मूढाः ।

*ब्रह्मचारी शिवप्रसाद त्रिपाठी ( छात्रः,*
हरदेवदास-श्रीलाल गोयनका-पाठशालीयः ।

## अमूल्योपदेशाः ।

सङ्कलयिता-श्रीचन्द्रशेखर त्रिवेदी, छात्रः

पुरुषैरैहलौकिकं पारलौकिकं वा सुखमपरिश्रमं न लभ्यते, ईश्वरेणेयम् रचनैवैवं विरचिता,

संपूर्ण-कार्य-कृते परिश्रमः कार्य्यः । भोजनार्थम् अन्नमपि लाङ्गलाकर्षणं विना न प्रभवति । पेयम् जलमपि विना सरितां कूल-गमनं, वा कूप-खननं, न समुपलभ्यते । कलेवरारोग्यताऽपि विना परिश्रमं न स्थिरीभवितुमर्हति । अन्ते स्वर्ग-प्राप्तिर्नेह कर्तव्यं विना सम्प्राप्यते । —महात्मा सुकतुः (सुकरातः)

*　　*　　*

सत्यतां विना प्रतीतिः, प्रतीतिं विना प्रीतिः कुत्र ?

*　　*　　*

महतां शिक्षा संसारिक-कर्दमे अमज्जनाय यष्टिकायाः कार्यम् सम्पादयति—तज़कर-औलिया

*　　*　　*

बुद्धिमता सर्वदैव श्रेष्ठ-सङ्गः करणीयः । तेन बहुविधा सुखप्राप्तिर्भवति । यथा उत्तुङ्गाऽनोकहाश्रिताः ये विष्किराः वसन्ति ; ते भुञ्जते सर्वदा सुखविलासम् ।—धम्मपदे.

*　　*　　*

श्रेष्ठैर्दर्शितायां सरण्याम् चलनं मनुष्याणां धर्मोऽस्ति येन उपयुक्ता शिक्षा नैवावधार्यते, तेन कदापि आज्ञा कर्तुम् न शक्यते—श्रीमनुः ।

*　　*　　*

पुरुषेण न विस्मरणीयं वाक्य-चतुष्टयम् । (१) वृद्धानां समादरः । (२) अल्पज्ञानां ज्ञानदानम्, (३) विचक्षणेभ्यो मन्त्र-ग्रहणम् । (४) मूर्खैः सह-अकलहः ।

—:०:—

संसारे सर्वदा न कस्यचन स्तुतिरेव भवति; न च निन्दैव । —श्री कालिदासः ।



# अद्भुत-समाचाराः ।

( सङ्कलयिता—मणिशर्म्मा, दाधिमथः ) ।

## युवत्याः स्मितम् ।

अमरीका-निवासिन्या 'मिसमारवे' नाम्न्या अभिनय-कर्त्र्या युवत्या, "ब्रिटिश इन्स्योरेन्स-कम्पनी"-नाम्न्यां संस्थायां स्वकीयस्य मधुरस्मितस्य सार्द्ध-सप्तलक्षमुद्रासु स्मितरक्षा दायित्वं (वीमा)। कारितम्

पादानामङ्गुलीनां चक्षुषाञ्च बह्वीभिरभिनेत्रीभिः कारित आसीत्, परन्तु स्मितस्य न कयापि रक्षा—दायित्वं ( वीमा ) कारितम् इति मारवे महाशयाया धारणा वर्तते ।

मारवे महाशयया संस्थाध्यक्षैः सह निश्चयः कृतोऽस्ति यदि दशवर्षाभ्यन्तरे रोगेण, कयाचिद्घटनया वा मदीयस्य मृदु-मधुरस्य हासस्य मधुरता, आकर्षणशक्तिश्च विनष्टा भविष्यति, न्यूना वा भविष्यति चेत् 'ब्रिटिशइन्श्योरेन्स-कम्पनी'-संस्था ७½ सार्द्धसप्तलक्षरूप्यकाणि दण्डरूपेण प्रदास्यति ।

तस्याः युवत्याः कथनमस्ति यत्—अहं स्वी स्मितमेवैकमात्रं स्वसम्पत्तिं मन्ये । स्मितेनैव ममेदृशी प्रतिष्ठा विद्यते संसारे । यदि तन्नस्यात्तदाऽहमपि किमपि न स्याम् । या युवतिः स्मितं न जानाति, सा न केनाप्यभिलषिता भविष्यति ।

सा कथयति, यत् प्रथमन्तु समितिकार्यकर्तारो मदीयां वार्तां श्रुत्वा चकिताश्चमत्कृताश्चाभवन् ।

परन्तु यदा मया प्राणापहारकं तत्सुन्दरं स्मितं तेषां प्रदर्शितम्, ततस्तैर्ज्ञातम् यत् वस्तुतः स्मितमेव मे सर्वस्वं विद्यते, ततस्तै स्मितस्य रक्षा दायित्व ( बीमा ) करणे न काप्यापत्तिर्विहिता ।

—'आज' ( काशी )

## द्वितीयः खङ्गबहादुरः ।

जानन्त्येव प्रायः पत्र-पाठकाः यत् कालीघट्ट-( कलकत्ता )—नगरे नेपालदेशोद्भवेन केनापि वीरवरेण खङ्गबहादुरेण नेपालदेशवासिन्या 'राजकुमारी' नाम्न्या युवत्या उपरि अत्याचारं कुर्वतो हीरालालस्य प्राणा अपहृताः । अन्योऽप्येकः खङ्गबहादुरः समुत्पन्नः । स च शशिमोहन दे नामा, १८ वर्षीयो युवको विद्यते । अस्मिन्मण्डले फैयाज अलीनामा कश्चन भूमिपतिरभूत्, तेन च शतशः स्त्रीणां सतीत्वं विनाशितमासीत् । राजकीय-पुरुषाणाम् ( पुलिस, Polic ) कथनमस्ति यदनेन दुष्टयवनेन 'चांदेरचाँद'—'राधारचक-ग्रामयोर्न काचनाऽपि स्त्री त्यक्ता, यस्याः सतीत्वं न खण्डतं कृतं भवेत् ।

कियतः कालात् फैयाजस्य दृष्टिः, 'पवित्र-पत्नी'—नामिकायां सद्यो विवाहितायां बालिकायामपतत् । फैयाजः, तस्य दूताश्च तां कुपथे नेतुं सुदृढं प्रायतन्त । यदा शशिमोहन इदं ज्ञातवान्; तदा तेन तस्यै समाश्वासनम् दत्वा प्रोक्तम्, यत् साम्प्रतं यदि स तव गृहे समागमिष्यति चेत्तदाऽहं तस्य कृत्यं समापयिष्यामि । एवं यदा फैयाजस्तस्योटजे प्रवेशं कुर्वन्नासीत्तदा शशिमोहनेन, त्रिभिः सहायकैः सह तत्रैव निभृतं स्थितेन, फैयाजो य[...] सदनं प्रापितः ।

ते चत्वार अपि धृता प्राड्विवाकेन दश[...] सानि यावत् विचार्य सर्वेऽपि निर्दोषा एव [...] त्यक्ताः ।

वयं प्राड्विवाकान् धन्यवादं द[...]

'स्वतन्त्र' ( कलकत्ता [...]

अमिरकायाः केनापि वैद्येन (डाक्टरेण) निर्णीतम्, शरीरस्य त्वचः स्वच्छतासम्पादनेन मनुष्यो गौ[...] सुन्दरश्च भवितुमर्हति । शयन-समये कवोष्ण जलेन, विशु[...] च काय-शोधन वटिकया ( साबुन, Soap ) शरीरं प्रक्ष[...]नीयम् । प्रक्षालनेन च रक्त-सञ्चारे महत्सौन्दर्यं सम्पा[...] भवति । एवमेव कतिपयदिनानि यावत् मुख-सम्मा[...]नाऽपि मुखं शोभनम्, स्वच्छञ्च सम्पद्यते । सौन्दर्यस[...]दनार्थं रात्रौ शयन-समये शिथिलं लघु च वस्त्रं परिधेय[...] भोजनं सदा नियमितम, स्वच्छम्, परिलघु च करणीय[...] सद्यस्त्रुटितफलानाम्, नवीनव्यञ्जनानाञ्च सर्वदोप[...] कर्तव्यः । प्रत्यहं न्यूनतोऽपि अष्ट-कंस ( गिलास, Ca[...] मितं जलं सर्वदा पेयम् । विशुद्धवायौ व्यायाम-सम्पादन[...] सौन्दर्यस्य प्रधानं साधनम् ।

* * * *

एकः कश्चन वैज्ञानिकः शर्करिलायां [...]गन्तुं समर्थं यानं निर्माति । प्रथमं परीक्षार्थं स्वल्पं यानं निर्मीयते, यस्मिन् शतत्रयाः मनु[...] स्थास्यन्ति । याने भोजन-पान-स्नान-ध्यान-वि[...] विलासादीनापि समीचीनः प्रबन्धो भविष्य[...]पत द्वारा शर्करिलेषु द्वीपेषु प्रदेशेषु च सम्या[...]तायातं भविष्यति ।

* * * *




## शास्त्रिवर्य्याणां द्वारिकायात्रा ।



अद्यत्वे पूज्यपादाः, षड्दर्शनाचार्याः, काशीस्थ-विद्वद्धुरीणाः, श्रीमन्तः श्रीपद्मनाभशास्त्रिमहोदयाः, द्वारिकायात्रायां प्रस्थिताः, श्रीसनातनधर्मस्य गूढ रहस्यं स्वीय-सरस-मसृण-मञ्जुलया सारगर्भया भाषया विवृण्वन्तः, गुर्जरप्रान्ते अभूतपूर्वां जागर्तिं जनयन्तो, तत्रतत्र अहमदावादादि-प्रधान-नगरेषु पर्यटन्तीति नाविदितं तत्प्रान्तीय-समाचार-पत्र-पाठकानां विदुषाम् । काशीविद्यापीठस्य दर्शनाध्यापका दर्शन-केशरिणः श्रीगोपालशास्त्रिणः साहित्याचार्य्याः शास्त्रिपादानां पार्श्वचरा एव सन्ति ।

जूनमासस्य सप्तमाष्टमदिवसयोः अहमदावाद नगरे गुर्जरप्रान्ते परम-प्रसिद्धानां महात्मनां श्रीवल्लभधोडा-महोदयानां महता समारम्भेण सम्पद्यमाने जयन्ती महोत्सवे, शास्त्रि महोदयाः सभापति पदमलङ्कृत्य, यद्व्याख्यानं व्यदधुस्तादृशं व्याख्यानमत्र नगरे बहुशो वर्षेभ्यो न श्रुतिपथमारुरोहेति-अत्रत्य-विमर्शिनां विदुषामैकमत्यम् ।

ततश्च शास्त्रिपादा द्वारिकाधीशदर्शनम्विधाय परावृत्ता, जामनगरे श्रीमतां दैवज्ञवाचस्पतीनां श्रीपोपटलालमूलजीशास्त्रिमहोदयानां निमन्त्रणतस्तदीयगृहे गृहवास्तुकर्मणः प्रसङ्गे गुर्जरप्रान्तीय-प्रसिद्धविद्वद्भिर्महामहोपाध्याय श्रीहाथीभाईशास्त्रिभिः सह उपस्थाय, स्वागतोपचारादिकं स्वीकृतवन्तः । तत्रापि च संस्कृत-विद्यायाः पुनरुद्धारे हिन्दूजनानामन्धपरम्परया पाश्चात्यसभ्यतानुकरणत्यागेनैव भारतीयोन्नतिः स्यादित्यादिविषये महत्वपूर्णं भाषणं समजनि । इदानीं जामनगराधिपतिभिः सङ्गत्य, शास्त्रिचरणाः राजकोटनगरे जिगमिषवः सन्ति । पुनस्तेषां प्रास्थानिकं वृत्तं निवेदयिष्यामि ।

अहमदावाद, गुजरात ।		सनातनधर्म-सेवकः—
**धर्मवीरः नगीनदास-सङ्घवी,**

## सुरत नगरे संस्कृत-प्रचारः ।



ज्येष्ठ शुक्ल-तृतीयायां गुरौ, काशी-विद्यापीठ-दर्शनाध्यापकानां संस्कृत-सहित्य-समाजस्य प्रधान-मन्त्रिणां दर्शनकेशरिणाम् श्रीगोपालशास्त्रिणामुपस्थितौ गुर्जरप्रान्तीये प्रसिद्धे सुरतनगरे, सूर्य्यपुर-संस्कृत-पाठशालायामत्रत्य संस्कृत-विदुषां महान् समारोहः समजनि ।

तत्र वैदिक-मङ्गलानन्तरं श्री पं० मोतीराम शास्त्रिभिस्तथा कपिलाशङ्कर शास्त्रिभिश्च प्रस्तावानुमोदनयोः कृतयोरत्रत्याः सुप्रसिद्ध विद्वांसः श्री पं० कृपाशङ्कर शास्त्रिणः सभापतिपदमलङ्कृतवन्तः । ततश्च रैक्वकुलोत्पन्नैः श्री पं० गङ्गाशङ्कर शास्त्रिभिर्लेखमुखेन प्रदत्ते गोपालशास्त्रिणां परिचये; प्रमुख वक्तारः श्रीगोपाल शास्त्रिणः सुमधुरैः प्राञ्जलैर्मसृणैः पदविन्यासैः सार्द्धहोरां संस्कृत-वाङ्मयमधिकृत्य सम्यग्व्याख्यानमकार्षुः ।

तेषां भाषणेन सुरत—नगरस्था विद्वन्मण्डली भृशोत्साह-सम्भृतान्तःकरणा तदानीमेव शाश्वति-

कीमेकां समितिं संस्थापयितुं निश्चितवती । ततश्च वालकृष्ण-गोर्वाण-विद्यालयाध्यापकैः पं० मनःसुखरामशर्म्मभिः कृते व्याख्यान-विवेचने तापीब्रह्मचर्याश्रम-सञ्चालकानां श्री स्वामिवर्य्याणां श्री आत्मानन्द सरस्वतीनां संस्कृतं सुन्दरं भाषणमभूत् । येन श्रोतृभिः स्वकर्तव्य-दार्ढ्यार्थं प्रतिज्ञाऽपि विहिता । स्वामिभिः श्रीगोपालशास्त्रिणां संस्कृत-व्याख्यानं हिन्दीभाषायामनूदितम् ।

सभापतीनामुपसंहार-भाषणावसाने श्री निगमशङ्करशास्त्रिभिर्धन्यवादप्रदान-समये स सम्यग् प्रसाद-गुण-गुम्फितं भाषणं विहितं अन्ते च श्रीगङ्गाशङ्करशास्त्रिभिः स्वागत मालादिभिः सभाविसर्जनं कृतम् ।

सुरतनगरे ईदृशोऽयं विद्वत्समवाय अभूत पवासीत् ।

सुरत ( गुजरात ) — श्री गङ्गाशङ्कर शा ( सभा-संयोजक

# अखिलभारतीय-विद्वत्सम्मेलन १९८४ वत्सरी

## ग्रीष्मकालिक परीक्षाफलम्—

### साहित्याचार्य III श्रेणी

धरणीधर शास्त्री का. ती. — अजमेर केन्द्र

### साहित्यशिरोमणि II श्रेणी

श्रीमन्नारायण शास्त्री — अलवर ,,
वृहद्बल संयमी शास्त्री — अमृतसर ,,

### व्याकरण शास्त्री III श्रेणी

बलवीर शर्मा — ज्वालापुर ,,
पाटनदीन सुकुल — गोंडा ,,
मङ्गतराम शर्मा — करनाल ,,

### आयुर्वेदाऽऽचार्य II श्रेणी

विश्वेश्वर शुक्ल — कानपुर ,,
मंगतराम शर्मा — करनाल ,,
उपाध्याय सूर्यचिन्तामणिशास्त्री — राजमहेन्द्री ,,

### ज्योतिः शिरोमणि II श्रेणी

विश्वभक्तिभूषणानन्द बहुगुणा शास्त्री — जयपुर के

### वैद्यशास्त्री II श्रेणी

गोविन्द प्रसाद अवस्थी — कानपुर
यागेश्वर त्रिपाठी — ,,
शिवनारायण — ,,

### III श्रेणी

नारायणदत्त मिश्र — बरेली
यशोदानन्दन मिश्र — ,,
छोटेलाल द्विवेदी — ,,

### वेदभूषण II श्रेणी

वृहद्बल संयमी शास्त्री — अमृतसर

वाग्व्यश्वादि प्रयोगेषु वालैरेतद्विबुध्यताम् ॥
स्युः पदान्ता इको ह्रस्वा असवर्णे परेऽचि वा ॥१६४॥
न ह्रस्वविधि सामर्थ्यात्स्वरसंधिरिहेष्यते ॥
चक्रि अत्राऽकरोत्केलिं चक्र्यत्र हतवान् वकम् ॥१६५
पदान्त इति निर्देशाद्गौर्य्यावित्यादिकेषु वै—
प्रयोगेषु न दुष्टत्वं भवतीति विनिश्चितम् ॥१६६॥
इदं ह्रस्वविधानं तु समासे न प्रवर्तते ॥
तेन वाप्यश्व इत्यादौ ह्रस्वो न भवति ध्रुवम् ॥१६७॥
इदं ह्रस्व विधानं न परे सिति किलेष्यते ॥
रणेऽस्मिन्पार्श्वमा भाति वीरपाणिप्रतिष्ठितम् ॥१६८
अकः पदान्ताः प्राग्वद्वास्यु ॠतीह परे सति ॥
नाऽहं ब्रह्मॠषिर्विप्र! ब्रह्मर्षिस्त्वमसि स्फुटम् ॥१६९॥
पदान्ता इति निर्देशादार्च्छदादौ न दुष्टता ॥
अयं प्रकृति भावस्तु समासेऽपि प्रवर्तते ॥१७०॥
सप्तॠषीणां सङ्गादरुन्धती रोचते नितराम् ॥
सप्तर्षीणां मण्डलमेतद्रम्यं विलोक्यतां तावत् ॥१७१॥
अवसानेऽप्रगृह्याऽस्याणोऽनुनासिकताऽस्तु वा ॥
आनयाऽऽनय शीघ्रं त्वं माहिषं मधुरं दधिँ ॥१७२॥
इदं न मधुरं नाऽपि माहिषं दृश्यते दधि ॥
अप्रगृह्यस्येति सूक्तेः प्रगृह्योऽण् नाऽनुनासिकः ॥१७३॥

॥ इत्यच्संधिः ॥

## अन्योक्तिः ।

वर्षासु वृक्षाः सकलाः सपल्लवा
भवन्ति सर्वत्र विलोकयामः ॥
ग्रीष्मावकाशे विषमेऽतितप्ते—
प्रफुल्लितास्ते तरवो हि धन्याः ॥ १ ॥

—चम्पकलालशास्त्री " चम्पकः "

## आक्षेपकारि-केशरिनादः ।

गुण-शत-शालिनि पिशुनः केवलदोषं विभावयति
कोलः कमल-तडागे कर्दममात्रं गवेषयति ॥ १



दित चरमेवास्तु विदुषामिदं भणति
स्वम्-यः कश्चन विद्वान् वङ्गदेशीयः पार्व
चरणानामा स्वनामघटकपदाभिधेयपा
मयालङ्कृतिसङ्कतेरलञ्चकार स्वमत्या
वायम्। अहो महानेष तस्यास्य विदुषः प्रथमावत
मोहस्य-यत्किलदिग्दिगन्तान्तरालेषु प्रथितनिता
कमनीयकीर्तिकलावतंसचन्द्रिराणाम् धर्मदत्तेति (
सिद्धवच्चाभ्झाशर्मेति) नामपदमलंकर्त्तॄणां प्रत्यग्र
ना-विरचित-नवीन-निबन्धॄणामुपरि, इयानाक्षेपस
हः' अहो विस्मयविलासः! विद्वांसोऽपि केचन मा
पार्वतीचरणप्रभृतयो मुह्यन्ति, समुदितेऽपि च यदी
कल्पना-वासरमणौ विवेकिनां पञ्चजनानां कि
विपश्चिताम् गदाधराशयमजानानाम् तदज्ञानति
म्, गदाधरपङ्क्तिगूढार्थतत्त्वात्मकविषयप्रकाशक
नान्वर्थनामालङ्कृतिगूढार्थतत्त्वालोकाख्यव्याख्या
ङ्क्तीनां कल्पनामिहिरकिरणानाम् मालाभिरत्य
मभज्यत। परन्त्वयमयं महानुभावः पार्वतीचरण
र्मागूढार्थतत्त्वावलोकव्याख्यायामग्राह्यतान्धतमस
साक्षात्करोतीति परं चित्रीयते चेतः, खिद्यते च स
दिते सत्यपि कल्पना-वासरमणौ 'नोलूकोप्यवलोक

दि दिवासूर्यस्य किं दूषणम्' इतिरीत्या कोऽपराधः। ल्पना दिवाकरस्य । एतेन 'स्वनामप्रचारार्थमेकां-ामप्यग्राह्यां गूढार्थतत्त्वालोकाख्यां टीकां विरचय्य द्रितवान्' गदाधरपङ्क्तिबोधे शक्तिहीनोऽपि ीकां कृतवानिति दुःसाहसम् इति च पार्वतीच-णोक्तिरपि परास्ता । उक्तटीकाकारस्य शक्तिहीनत्वं हाशक्तिशालित्वं वेत्यस्य व्युत्पत्तिवादगूढार्थतत्त्वा-ोकाख्यव्याख्यया, गीतामधुसूदनी-गूढार्थतत्त्वाव-ोकाख्य-व्याख्यया, सिद्धान्तलक्षण-सामान्यनिरु-क्त्यादिनव्यन्यायादिविवेचनथा व्याख्ययैव च विदुषां विदितचरत्वात्; त एवात्रविषये लेखवाहु-ान्महनीयकीर्त्तिभाजां तेषां महानुभावानां गुणव-नात्तमत्वादलमनल्पजल्पनेनेत्युपरम्यते ॥

प्रकृतमनुसरामः । यच्चोक्तं पार्वतीचरणशर्मणा उपसद्भिश्चरित्वा मासमेकमग्निहोत्रं जुहोतीतिवाक्य-स्य;चरित्वा = उपसत्क्रियां कृत्वा, उपसद्भिरुपसदि-ष्टिश्चरुभिर्मासमेकं जुहोतीत्येतदेव प्रकृततात्पर्यमिति; न चारु । चरित्वेत्यत्र उपसद्भिरित्यत्रापि निर्वीज-लक्षणाश्रयणात् । मीमांसाशास्त्रे शावरभाष्यतन्त्रवा-र्त्तिकशास्त्रदीपिकादिबहुषु ग्रन्थेषु कैरप्याचार्यैरत्र लक्षणा नाश्रिता ।

अक्षपादप्रणीते च काणादे सांख्ययोगयोः ।
त्याज्यः श्रुतिविरुद्धोंऽशः श्रुत्येकशरणैर्नृभिः ॥१॥
जैमिनीये च वैयासे विरुद्धांशो न कश्चन—
श्रुत्या वेदार्थविज्ञाने श्रुतिपारं गतौ हि तौ ॥२॥

इति पराशरोपपुराणादिभिश्च कर्ममीमांसाया बलवत्त्वात् कर्ममीमांसाशास्त्रप्रतिपादितश्रुत्यर्थ एवास्माभिः श्रुत्येकशरणैरत्यन्तमनुमोदनीयः प्रमाणीकर्त्तव्यश्च । तात्पर्यानुपपत्तेर्लक्षणाबीजत्वात्—वेदवाक्ये ईश्वरीयतात्पर्यमुपवर्णयता परमर्षिणा जैमिनिना, सकलदृष्टादृष्टार्थमनुपश्यता तदनुयायिना च, श्रुतयो यत्र स्वार्थपरतया परार्थपरतया वा व्याख्यातास्तत्रैव प्रमाणभावमवलम्बन्ते; नतु पार्वतीचरणमहाशयानामविद्योपाध्यवच्छिन्नजीवानाम्,तत्कल्पानां वा विपश्चितामीश्वरीयतात्पर्यमजानानां स्वकपोलकल्पितकल्पनासम्भारावनतीकृततत्तदर्थमालायां प्रमाणभावम् । मदीयपूज्यपादपितृचरणानां गूढार्थतत्त्वालोकाख्यव्याख्यायां यदुपलभ्यते 'उपसत्संज्ञककर्मोत्तरकालत्वरूपगुणवैशिष्ट्यस्यैव प्रतीतेरिति' लेखनम्, तथैव तन्त्रवार्त्तिकादावपीति प्रदर्शयामः । तथाहि—'प्रकरणान्तरे प्रयोजनान्यत्वम्' इति मीमांसाद्वितीयाध्याय-तृतीयपाद चतुर्विंशतिसूत्रम् । तस्येत्थंकारम् व्याख्यानम्—"इदानीं पर्यवसितेषु पञ्चसु भेदकारणेषु प्रकरणान्तरलक्षणो-भेदः प्रस्तूयते तत्र तावत्—

अग्निहोत्रादि शब्देन पूर्वकर्माविबोधितम् ।
न विप्रकर्षमात्रेण भेदमात्रं प्रपद्यते ।

इतिकारिका । तदर्थः यथैव वलभ्यां पाटलिपुत्रे वा उच्चार्यमाणोऽग्निहोत्रादिशब्दो नार्थान्तरं प्रतिपादयति । एवं प्रकरणान्तरेऽपि । नहि प्रकारणान्तरस्याभिधानशक्तिमभिव्यनक्ति, तद्विशेषिताश्च यजति-जुहोत्यादयोऽपि नार्थान्तरे वर्त्तन्ते नार्थान्तरेण विना किञ्चिदनर्थकं भवति, नच प्राप्तविधानं तेषु न संभवति, यावज्जीवादिविधिभिस्सहतुल्यबलत्वेन विकल्पोपपत्तेः । यो वै तेषां काम्यप्रयोगस्तस्यानवगतकालविशेषत्वात्; मासपरिमाणविधानमिह

दोषः । प्रकरणस्य च वाक्यम् बाधकमिष्टमेव । अथवा दीक्षितत्वनिमित्तेन प्रतिषिद्धानामपि मास-परिमित प्रतिप्रसवः, स तु प्रयोगमध्य एव विधीयते, अथवा तान्येवाग्निहोत्रादीन्यत्र पर्युपस्थाप्य, सोमयागसहितानि सत्रप्रयोगवचनेन फले विधीयन्ते, नहि केवलभोजी देवदत्तोन्यैः सह पङ्क्त्यां भुञ्जानोऽन्यत्वं प्रतिपद्यते न च फलान्तरेण सम्बन्धः कर्म्मान्तरेण विना वर्धते, इत्युक्तमेवेष्ट्यधिकरणे नचावश्यमङ्गैरेव क्रत्वन्तरं गन्तव्यम् प्रधानमपि कर्मपरिपूर्णं करणांशे स्वशब्देन विधीयमानं विरुद्ध्यते, तस्मादेवमपि तान्येवाग्निहोत्रादीनि इति प्राप्ते उच्यते—

उपसद्भ्यः परं ह्येतदग्निहोत्रं विधीयते ।
न च नैयमिकस्यैताः सन्तीत्येतेन भिन्नता ।

[ सावशेषम् ]




या योगीन्द्रानजस्रं स्मितयतिकलिता
सच्चिदानन्दरूपा,
मूका यत्प्रेमदृष्ट्या मधुरसकलिताः
कल्पनाः कल्पयन्ति ॥
यद्भासा भासतेऽसौ जगदिदमखिलं
भासयन् भास्करोऽपि
वाग्देवी सर्वरूपा भवतु मम मनो-
भावना-रूपिणी सा ॥ १ ॥

( २ )

वाग्देवी पादकल्पद्रुम-वरिवसिति-
प्राप्त-सद्भाव-भूति-
र्भूमौ लब्धप्रतिष्ठः पदकमलपतद्भूमि-
भृन्मौलिमाल्यैः ॥
शर्वादीनप्यवश्यान् मधुररुचिरया
स्तोत्रवाचा प्रसाद्य ।
वाग्देवी पादसेवी निखिलसुरवर-
प्रीतिपात्रत्वमेति ॥ २ ॥

( ३ )

वाचालीभूय मूको विहरति कविता-
मञ्जरी-चारु-कुञ्जे,
कश्चित्पात्रीकृतस्ते सकरुण-सहज-स्नेह-
सुस्निग्धदृष्ट्या ।
धन्यस्त्वत्प्रीतिभूमी-रुचिरहिमगिरि-
स्वर्णशृङ्गे निषण्णो
वाग्मी मूकत्वभावम्भजति तव दया-
भावितो देवि ! चित्रम् ।

( ४ )

छेत्तुं यः सम्प्रवृत्तो मतिविषमतया-
ऽधिष्ठितामेव शाखां
प्राप्तो विद्योत्तमाख्यां जननि ! तव
दयारक्षितो राजकन्याम् ।
ज्ञाताज्ञत्वस्तया यो रतिशयनगतो-
ऽत्याजि दत्वार्द्धचन्द्रं
सोऽ-भूद्वै कालिदासः कविमुकुटमणि-
र्देव्यहो ! त्वत् प्रसादात् ॥

( ५ )

माता बालानरालाचरणरततमा
नप्यपाकृत्य दोषान्
पुत्रप्रेम्णा विधत्ते परमकरुणया
सत्फलाचारनिष्ठान् ॥
मग्नानज्ञानपङ्के जननि ! तव करा-
लम्बनं प्रेक्षमाणान् ।
दीनानस्मान्निसर्गाद्दृहुदय-हृदये !
नानुगृह्णासि कस्मात् ॥

( ६ )

विकीर्णबहुकण्टकोऽतिविषमश्च
पृथ्वीतलोऽ-
निलोऽनलसमस्तमोनिचय-
भीमभीमं वनम् ॥
वयं स्खलितमार्गकास्तव
प्रकाशमाशास्महे ।
दयामयि दयामयि ! प्रकुरुषे
किमद्यापि नो ॥ ६ ॥

सनातनधर्म-संस्कृत-पाठशाला गोरखपुर । } हरिश रशर्मा विद्यार्थी

## समस्यापूर्तिः ।

प्रत्यक्षं निर्जराणां सकलसुरबलाध्यक्षमात्मप्रतीक्ष्यं
सन्तक्ष्याक्षुद्रवेगः क्षतवरुणमदः क्षीणयक्षेशदाक्ष्यः ।
वैशत्यक्षः क्षणेनाभजत समुचितां शिक्षयतां यस्य स द्राग
रक्षोदक्षेमहारी हरिरमरवरैरीडितः पीडितं माम् ॥१॥

—महादेव शास्त्री पाण्डेयः

## प्रहेलिका ।

यः शब्दश्चतुरक्षरेण गिरिजं, वर्णैस्त्रिभिर्भूधरं
वर्णाभ्यां च शरीरजं प्रकथयत्येकेन पञ्चाननम् ॥
व्यस्ते भानुजदानवेन्द्रसलिलं, मध्ये च जीवान्तकं
बुध्यन्ते यदि पण्डिता भुवि तले, धन्या बुधास्ते स्मृताः

[एतत्प्राचीनं पद्यं श्रीकिशोरीलाल गोस्वामिभिः प्रेषितम् । एतत्तात्पर्यप्रेषकानां नामानि,सधन्यवाद-मस्मिन्नेव पत्रे प्रकाश्यन्ते । उत्तरप्रेषकेभ्यः पुरस्कारोऽपि दीयेत—सम्पादकः]

## सुभाषिते ।

( १ )

सुसत्कृताः स्नेहपरम्पराभृता
निसर्गतो भीरुजनैः शिरोधृताः ।
मनोहराकार मथापि विभ्रतो-
भवन्ति वक्राः शठचूर्णकुन्तलाः ॥

( २ )

विधूय पक्षं तरलाः स्वकं भृशं,
विशन्ति येऽल्पेषु खलेषवोऽनिशम् ।
गुणोज्झिता श्यावमुपागतास्ततो-
भवन्त्यमी गोरस-मक्षिका इव ॥

—श्रीरामेश्वर शर्मा ।



# ब्रह्मचर्यम् ।

श्री विश्वनाथ प्रभाकरः, ( खन्ना, लुधियाना ) ।

अवशिष्टांशः ।

अथ कालानुकूलाः केचन नियमाः समासतो निर्दिश्यन्ते, पालितेषु येषु सम्भाव्यते वीर्यरक्षायां भूयः साफल्यम् । तथाहि—

( १ ) **भावशुद्धिः**—भावा मनःसङ्कल्पाः, सर्वमपि कार्यं शुभमशुभं वा मनःसङ्कल्पानामेव परिणामविशेषः, प्रथमं हि मनसा मनुते, ततः कुरुते । तेन वीर्यरक्षायै भावशुद्धिर्बह्वपेक्ष्यते । शुद्धेषु भावेषु कामविकारोत्पत्तेरभावात् । भावशुद्धये च ( १ ) ( विवाहित-पत्नीवर्जम् ) वयोऽधिकासु स्त्रीषु दृढं पूज्यं मातृत्वं, समानवयस्कासु शुद्धं सहोदरीत्वं, न्यूनवयस्कासु च धर्मपूतं पुत्रीत्वं भावयेत् । येन न स्यादवकाशः क्वापि कामविकारस्य । (२) दुर्दृश्यानि शृङ्गार भूयिष्ठानि नाट्यादीनि स्त्रीप्रतिकृतीश्च न पश्येत्, दृष्टं हि दुर्दृश्यं संस्काररूपेणावस्थितं कालान्तरे दुर्भावान् जनयति, तथा-स्वप्नादिष्वनुभूयमानं तदेव वीर्यनाशकं भवति । ( ३ ) रात्रौ शयन काले, प्रातः प्रबोधकालेचार्थानुसन्धानसहितान् **"यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति । दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः-शिव सङ्कल्पमस्तु"** इत्यादीन् सङ्कल्पकल्मषापहर्तॄन् वेदमन्त्रानधीयीत । (४) प्रत्यहं सायं प्रातश्च शुचिः शुचौ देशे नियमेन सन्ध्यामुपासीत, तदन्तर्गतं प्राणायामनियमं च वि[...]त्पालयेत, प्राणायामो हि मनोवृत्तिशोधकः, [...]धाराया मनोवृत्ति मिश्रितत्वान्नियमितेषु प्राणे[...]नोवृत्तेरपि नूनं संशोधनसम्भवात् । सन्ध्यान्[...] यथा शक्ति सहस्रं पञ्चशतं शतत्रयमेव वा[...]बद्धासनः पूतेन मनसा सावित्रीं जपेत्, ना[...]स्माद् भावशोधको मन्त्रः । (५) पवित्रान् धार्मि[...]ग्रन्थानधीयीत, मनोविनोदकामोऽपि [...]बहुलानि काव्यनाटकादीन्यनधीत्य वाल्मीकीय[...]यगीतादीन् उत शान्तवीररसप्रधानान् [...]कालानुरूपं राजनीतिदेशनीतिविषयकान् [...]ग्रन्थानेव पठेत्, अश्लीलालापांश्चवर्जयेत्, शृ[...]प्रधानकाव्यनाटकोपन्यासादिपाठे हि वृत्तेस्[...]कारतापाताद् भवति भाववैकृत्यं येन च [...]सिकमैथुनादिप्रवृत्त्या महती वीर्यहानिः सम्पद्[...] (६) निस्सङ्गो भवेत् सतामेव वा सङ्गमाचरेत्, स[...] हि सन्त एव भावाः संक्रामन्ति । दुर्व्यसना[...] मनसां दुष्टभावानां दुराचारिणां सङ्गं सर्वथा [...]त्यजेत् । न भवति तेन क्वापि लाभः । दुष्कर्म[...]स्यात्प्रवृत्तिः । तथाचोक्तम्—**"सङ्गः सर्वात्म[...] त्याज्यः सचेत्त्यक्तुं न शक्यते । स सद्[...]श्चैव कर्तव्यः सतां सङ्गो हि भेषज[...]** एवं भूयोभिः प्रयत्नैर्मनोभावान् संशोधयेत् ।

( २ ) **साधारणोवेशः**—वीर्यरक्षाकाम[...]धारणवेशधारी स्यात्, विलासप्रायं वेशं स[...]परित्यजेत्, सुगन्धिततैलादीन्नोपयुञ्जीत, [...]सीमन्तं च वर्जयेत्, कामिजनोचितं वेशं न कु[...]भवति हि तादृशो वेषोऽपि कामविकारोत्पादक[...]

(३) प्रतिदिनं प्रातः शीतोदक स्नानम्

ातः शीतोदकस्नाने हि भवति तेजोवृद्धिः, नैरो-यं च वपुषः, वीर्यशुद्धिश्च तेन सम्पद्यते । यामाऽवशिष्टायामेव रात्रौ परित्यज्य शयनं, दूरे मलादुत्सृज्य, दन्तधावनं च विधाय, शुचिना शीतोदकेन स्नायात् । प्रायस्तस्मिन्नेव समये जायते दर्शनं दुःस्वप्नानां भवति येन वीर्यहानिः । अतो मा कदापि शयीत काले तस्मिन् । ( परं नियमोऽयं शरीरारोग्यदशायामेव पालनीयः ) ।

(४) सात्विकः स्वल्पश्चाहारः—

लघूनि मधुरस्निग्धानि सात्विकान्येव भोजनानि भुञ्जीत, मा कदापि लवणाम्लतिक्तप्रायाणि । तेषामाहारे हि भवति वीर्यतारल्यम् । येन मूत्रादिना सह गाढनिद्रायां चाकारणमेव भूयः स्खलतिवीर्यम् । भवन्ति च प्रमेहादयो भूयांसो रोगाः ।

(५) मलमूत्रवेगानवरोधः—

तदवरोधे हि वर्धतेपित्तं, वीर्यकोष्ठे च संजायत ऊष्मा, क्षीयेत च वीर्यम् । किञ्चेन्द्रियस्थानेक दोषनिरासाय मलमूत्रत्यागान्तरमवश्यं वहुना शीतोदकेन शिश्नमपि स्नापयेत् ।

(६) सर्वदोद्योगिता— नित्यमुद्योगशीलो भवेत् । उद्योगेन शरीरशैथिल्यं विनश्यति, भक्षितान्नादीनां झटिति परिपाकद्वारा वीर्यं च शुद्ध्यति । कदाप्यालस्यवशगो न भवेत् । "आलस्यं हि मनुष्याणां शरीरस्थो महारिपुः" ।

(७) शुद्धवाह्यवायुसेवनम्-प्रतिदिनं सति सौकर्ये सायं प्रातर्वा, कालद्वयमेव वा बहिर्दूरे-परिभ्रमन् वाह्यवायुं सेवेत । वाह्यवायुसेवने वहवो गुणाः—प्राकृतदृश्यादिदर्शनेन मनःप्रसादः । भक्षिताहारपरिणामः जठराग्निसन्धुक्षणम् । सर्वाङ्गीणा सवलता । कार्यक्लमापनोदः । परम्परया वीर्यस्थैर्यं च ।

(८) व्यायामशीलता—प्रत्यहं मृदु वलानुगुणं व्यायाममवश्यं विदधीत । जायते तेन सर्वाङ्गेषु स्फूर्त्तिः, आलस्य निरासः,सर्वकार्येत्साहः, आत्मविश्वासः, सवलता शरीरस्य, शारीरिक शक्तीनां च विकाशः । शुद्धं पुष्टं च भवति वीर्यम् ।

(९) अपवाद भीतिः—नित्यं दुराचार जनितादपवादाद्वहु विभियात् । अपवादैर्मरणमेव जानीयात् । सत्यमपीदम् " सम्भावितस्य चाकीर्त्तिर्मरणादतिरिच्यते " अपवादभीतो न प्रवर्त्तिष्यते वीर्यनाशकेषु दुराचारेषु ।

(१०) नियमदृढता—येषां नियमानां पालनं प्रतिज्ञातं स्यात्तत्र दृढस्तिष्ठेत्, प्रत्यहमिदं पर्यालोचयेत्, प्रतिज्ञाता नियमाः पालिता भवन्ति न वेति । नियमपालने उपेक्षा मा कदाचित्कार्षीत् ।

अयि भारतीयाः ! भव्याः ! नवयुवकाः ! अवदधत, वीर्यरक्षाया महत्वं जानीत, पूर्वजानां पवित्रं चरित्रं स्मरत, निरुक्तान् नियमान् विधिवत्पालयध्वम्, भवत च योग्या इमां वैदिकीमाशिषं लब्धुम्—

"—पश्येम शरदः, शतं जीवेम शरदः, शतं शृणुयाम-शरदः, शतं प्रब्रवाम शरदः, शतमदीनाः स्याम शरदः, शतं भूयश्च शरदः शतात् " ।

—:*:—

## प्राप्त-पत्राणि ।

### हिन्दू-आश्रमाय दानम् ।

आजमगढ़-मण्डलान्तर्गत-'रहरिपेती'-ग्राम-निवासिभिः श्रीपण्डित रामयशश्शर्म्मभिः, आजमगढ़-मण्डलान्तर्गत-माधवभूमिस्थाय हिन्दूआश्रमाय सपादशत-(१२५)-मुद्राणामेका दुग्धवती गौः, अन्ये च बहवः पदार्थाः प्रदत्ताः। इदानीं यावत् एतावद्दानमस्मै न केनापि प्रत्तमासीदिति पण्डितमहोदयेभ्यो बहुशः साधुवादा धन्यवादाश्च प्रदीयन्ते।

—श्रीकुञ्जविहारी पाण्डेयः
[छात्रः]

× × ×

### कालिकाता-संस्कृत-परीक्षासमितेर्दुर्व्यवस्था ।

विभिन्नदेशीयाः परःसहस्राश्छात्रा अनया समित्या चाल्यमानाः प्रथमद्वितीयतीर्थपदपरीक्षाः, प्रतिवर्षं ददति। अस्याश्च परीक्षाया विस्तारकारणं द्वयम्। ये हि काश्यामुषित्वा षड्वर्षाणि यापयित्वाऽऽचार्यपरीक्षां दातुमशक्तास्ते युगपदेव तीर्थपरीक्षादित्सवो भवन्ति। तदर्थमत्रत्यामेव प्रथमां मध्यमां च परीक्षां ददति, अन्यच्च काशिकपरीक्षापेक्षया किञ्चिदस्याः सारल्यम्। परमेतत्परीक्षासंचालकानां समितिः, नितान्तं निद्रापरवशेव परीक्षायाः परिणामं मासषट्केन प्रकटीकरोति। उत्तीर्णानां प्रतिष्ठापत्रं तु वर्षत्रयेणापि न प्रेषयति। एतादृश्या दुर्व्यवस्थया हतोत्साहा बहवो विरमन्ति एतस्याः परीक्षायाः। एतत्परीक्षाव्यवस्थापनं हि संस्कृताध्येतॄणामुत्साहाय, प्रतिष्ठापत्रादिद्वारा कुत्रचिद्वृत्तिलाभानुकूल्याय चेति संभाव्यते। तत्प्रयोजन[illegible] प्रतिष्ठापत्राणां चिरकालप्रेषणेन विहन्यते। का[illegible]स्थराजकीयसंस्कृतविद्यालयीयपरीक्षासु, पञ्च[illegible]यपरीक्षासु च सर्वं कार्यं सत्वरमेव भवति। [illegible] महाविलम्बकरणे कर्मकराणामालस्यं विहाय न[illegible]त्कारणं संभाव्यते। तस्मात्प्रार्थयामहे परिडत[illegible]रान् गीर्वाणविद्याऽभिवृद्ध्यभिलाषुकान् काशीस[illegible]नन्यांश्चैतत्समितिस्थसभ्यानां प्रोद्बोधनाय, [illegible] यथाकालं परीक्षापरिणामं प्रकटयेयुः, प्रतिष्ठापत्र[illegible] च वर्षाभ्यन्तर एव प्रेषयेयुः। अन्यथा एतत्सं[illegible] प्रचालितपरीक्षा अव्यवस्थया प्रवर्तमानाः प्रति[illegible] विहीना, अतएव निष्फलाश्च भविष्यन्ति।

श्रीनारायणविद्याशाला-मुख्याध्यापकः, पेटलाद } शास्त्री अमृतलाल [illegible] ( वेदान्त-व्याकरण-ती[illegible]

* * * *

### क्षेत्रभोजिनश्छात्राः ।

विद्यागारत्वेन प्रसिद्धा वाराणसी। अत्राध्य[illegible]नार्थं दिग्विदिग्भ्यश्छात्राः समायान्ति। केचन य[illegible] कस्याञ्चन पाठशालायां छात्रवृत्तिं प्राप्य पठ[illegible] प्रयतन्ते, अन्ये च देशाचारानुसारतः क्षेत्रेषु भु[illegible] पठन्ति। अपरे च विद्यार्थिनामधारिणः [illegible] व्यर्थकालं यापयन्तः, अलसाः केवलं क्षेत्रेषु भो[illegible] कृत्वा मूर्खतां प्रचारयन्ति, न च किमपि पठन्ति[illegible] बहवः पठनशीलाश्छात्राश्च भोजनमन्तरा क्लिश्य[illegible]मानाः सन्तिष्ठन्ते। अतः समययापकेभ्यश्छात्रे[illegible] भोजनदानं निष्प्रयोजनमेव भवति। अतः क्षेत्रा[illegible]क्षैस्त एव च्छात्राः क्षेत्रेषु भोजनीयाः ये पाठशाला[illegible]क्षाणामध्यापकानाञ्च प्रमाणपत्राणि गृहीत्वा स[illegible] गच्छेयुः। अन्यथा सर्वं निष्फलमनुपयुक्तञ्च स्या[illegible]

लक्सा, काशी। } —श्रीजगदीश शुक्ल[illegible]

## बालकस्य वीराङ्कः ।

भाद्रपदमासे सुप्रसिद्धस्य बालकोपयोगिनो-हिन्दीपत्रस्य बालकस्य वीराङ्को महता समारम्भेण ...काशमेष्यति । एतस्मिन्नशीतिपत्राणि, षष्टि ...त्राणि च स्थास्यन्ति । एतस्मिन् सुप्रसिद्धानां ...हिन्दीलेखकानां विदुषाञ्च बालकोपयोगिनो लेखाः ...काशिता भविष्यन्ति । एषोऽङ्को वीररसेन, वीर-कथाभिश्च तथा परिपूर्णो भविष्यति, यथा बालकानां ...मनीषु विद्युत्सञ्चारः स्यात् । ग्राहकत्वं स्वीकुर्व-...न्नू नमस्य ग्राहकत्वमस्मिन्नेवमासे ग्रहीतव्यम् ।

एतस्य सम्पादनं हिन्दी-साहित्यभूषणं सुप्र-...द्ध-सम्पादकः श्री शिवपूजनसहाय-महाशयो विधा-...स्यति । एतेनास्मिन् सुवर्णे सुगन्धयोगः सम्पत्स्यते ।

...न्दी-पुस्तक-भण्डारः
लहेरियासराय
( दरभङ्गा )
} व्यवस्थापकः—बालकस्य

---

श्रीसूर्यचरित-महाकाव्यम्—इदं हि 'भगवद्वि-...ति-ग्रन्थमालायाः' प्रथमं रत्नम् । साहित्याचार्य ...याकरणतीर्थ पं० श्रीतारादत्तपन्तविरचितम् । ...ल्यम् १।) प्राप्तिस्थानं-'सुप्रभातकार्यालयः, बनारस' ...ति । पुस्तकस्य मुद्रणादिकं सर्वं शोभनमस्ति ।

अस्मिन् महाकाव्ये षोडश सर्गाः सन्ति । तेषु हि ऋतूनां सूर्यसंबद्धं व्युत्पादकं निरूपणमस्ति । भूगोल-खगोलादीनां तत्त्वं ललितैः पद्यै र्वर्णितमस्ति । काव्यदृष्ट्या विलोकनेऽपि अत्यन्तं हृदयं रञ्जयति । भूगोलादितत्त्वबुभुत्सा—विरहितानां संस्कृतविदुषां छात्राणा-मुपकृतिसम्पादकमिदम् । विद्वद्भिर्विलो-कनीयम् ।

—*श्रीगिरिशशुक्लः, न्यायाचार्यः* ।

# सम्पादकीयम् ।

परं प्रियं नः ।

अगस्तमासस्य प्रथमदिवसे हिन्दूविश्व-विद्यालयीय संस्कृत-विभागे द्वयोरध्यापकयोर्नियुक्तिः सञ्जाता । प्रथमा नियुक्तिर्न्यायशास्त्रस्य प्रधानाध्यापकपदे तार्किक-शिरोमणीनां श्रीशङ्करतर्करत्न-भट्टाचार्य-महोदयानाम्, अपरा च जैनन्याय-शास्त्राध्यापकपदे श्रीमतां गिरीशशुक्ल-न्यायाचार्याणाम् । एतद्धि परमं प्रमोदास्पदं संस्कृत-साहित्य-समाजस्य ।

श्रीमतां भट्टाचार्याणां तत्र नियुक्तिस्तु प्रथममेव कर्तव्या-सीत् । श्रीमन्तो भट्टाचार्याः कैलाशवासमनुभवतां गौतमा-वताराणां श्रीराखालदासभट्टाचार्यमहोदयानां प्रधान-शिष्याः सन्ति । काश्याञ्च नव्यन्याये न स्वीयां तुलां धारयन्ति । साम्प्रतिकेषु काशीस्थ-प्रधान-पण्डितेषु भट्टा-चार्याणां नव्यन्याये सर्वप्रथमं स्थानं वर्तत इति नाविदितं विदुषाम् । न जाने किमद्यावधि भट्टाचार्याणां नियुक्तौ विलम्बितम् विश्वविद्यालयाधिकारिभिः ।

अपरे चास्माकं समादरणीयाः सुहृदः, सुप्रभातस्य प्रधान-स्तम्भभूताः, भूतपूर्व-सुप्रभात-सम्पादकाः श्रीगिरीशशुक्लाः न्यायाचार्याः, सुपरिचिता एव सुप्रभात-पाठकानाम् । इमे खलु नवयुवकाः परमोत्साहिनो विद्वांसः सन्ति । इमे न केवलं न्यायाचार्या एव; अपितु वेदान्ते, साङ्ख्ये, योगे मीमांसायामपि आचार्या एव सन्ति । इमे सन्यासि-संस्कृत-पाठशालायाम्, ब्रह्मविद्या-पाठशालायाम्, गोयनका-संस्कृत-महाविद्यालये च दर्शनशास्त्राध्यापका आसन् । सत्यनारायण-महाविद्यालये चाध्यापयन्ति षड्दर्शनीम् । एते स्वभाव-सरलाः, विशुद्ध-हृदयाः, पवित्र-चरित्राः, देश-काल-तत्वविदः, संस्कृत-शिक्षा-मर्मज्ञाः, अध्यवसायिनः, शान्तमूर्तयश्च सन्ति । स्वल्पा एव सन्तीदृशा नवयुवकाः पण्डिताः !

सुप्रभाते तत्सञ्चालने च यादृशं कार्यनैपुण्यं तेषां विद्यते, न तथान्यस्य कस्यापि कार्यकर्तुरासीत् ।

वयमेतयोर्विद्वद्वलयोर्योग्यपदलाभे विश्वविद्यालयस्यच योग्य-विद्वद्दल-लाभेन परं प्रसन्नाः सहर्षं सादरं धन्यवादान् साधुवादांश्च वितरन्तो विश्वविद्यालयाधिकारिणां निर्वाचन-चातुर्यं सततं सभाजयामः ।

एवमेव हिन्दूविश्वविद्यालये प्रखर-प्रतिभा-सम्पन्नस्य कस्यचन मर्मविदः प्रकाण्ड साहित्यशास्त्र-प्रधानाध्यापकस्याऽप्यभावो नितरां मनसि खटखटायते ।

* * * *

*संयुक्त-प्रान्ते संस्कृत-सम्मेलनम् ।*

भारतवर्षे अखिल-भारतवर्षीय-संस्कृत-साहित्य- सम्मेलनम्, अखिल-भारतवर्षीय-विद्वत्-सम्मेलनम्, अखिल-भारतवर्षीय-देवभाषा-परिषद्, अन्याश्च बह्व्यः संस्कृत-संस्थाः सन्ति संस्कृत-पण्डितानाम् । एवं भाण्डारकर-ओरियन्टल-रिसर्च—इन्स्टिट्यूट-आलइण्डिया-ओरियन्टल–कान्फ्रेन्सभृतय अपि द्वित्राः संस्थाः सन्ति पाश्चात्यशिक्षा-परिष्कृत-मतिभिः संस्कृत-विद्वद्भिः संस्थापिताः । परन्तु ; अखिल-भारतीय-सम्मेलनानामेतासाञ्च संस्थानां विद्यते महत्ता-रतम्यम् ।

अखिल-भारतवर्षीय-संस्कृत-साहित्य-सम्मेलनेन दश-वर्षाभ्यन्तरे किं सम्पादितमिति प्रत्यक्षमेवास्माकं वरीवर्ति । करतलध्वनिभिर्व्याख्यानानि प्रदत्तानि, प्रचुराः प्रस्तावाः स्वीकृताः । दशवर्षाभ्यन्तरे संस्कृत–भाषाभ्युदये न किमपि कृतम् । दूरे तावदास्तामन्यत्; एकं पत्रं पुस्तकमपि वा संस्कृत-प्रचाराय न प्रकाशितम् । एवमेव न जाने विद्वत्सम्मेलनम् कुतः समापतितम् । अखिल-भारतीयस्यास्य सम्मेलनस्य नामाऽपि न जानन्ति सुप्रसिद्धा विद्वांसः । किम्बहुना, भारतवर्षस्य प्रधान-विद्यापीठ-भूतायामस्यां वाराणस्यां कदापि अखिल-भारतीयस्य सम्मेलनस्य नाम न केनापि श्रुतम् । एवमेवान्येषु संस्कृत-प्रधान-प्रान्तेषु । न जाने कुत्रैतत् सम्मेलनं भवति ? के भारतीयाः विद्वांसः ? मन्ये, ये सम्मेलनसदस्याः सन्ति; त एव वस्तुतो भारतीया विद्वांसः सन्ति । एवमेव निखिल-भारतीया देवभाषा-परिषदपि न जाने कुत्र कोणे विनिवसतीति, इयमवस्था तु संस्कृत-पण्डितैः सञ्चालितानां सभानां विद्यते । एवमेव काश्यां पण्डितैः सञ्च[ालित]-विद्वत्परिषत्–पण्डितसभा-सनातनधर्म-परिषत्प्रभृतयः व्यर्थमेव नाम धृत्वा जीवन्ति; न किमपि कार्यं कुर्व[न्ति]।

भण्डारकर ओरियन्टल-रिसर्च-इन्स्टिट्यूटेन प्राचीनाः ग्रन्थाः संगृह्य, संकलय्य च प्रकाशिताः विना पण्डितानां कार्यमेव न प्रचलति । आल[इण्डिया]-ओरियन्टल-कान्फ्रेन्स-नाम्नी सभा प्रतिवर्षं विभिन्नेषु प्रान्तेषु भवति । सर्वे च भारतीयाः प्रधान[...]सस्तां जानन्ति । तया च विभिन्नेषु नितरामु[...] विषयेषु गवेषणापूर्णाः शतशः प्रबन्धाः प्रकाशिताः [...]

एवमेव वर्तते वङ्गदेशे वङ्गीया संस्कृत-साहित्य-प[रिषत्]... यया परिषत्पत्रिका प्रकाश्यते, ग्रन्थमाला प्र[...] नाटकान्यभिनीयन्ते, पाठशालायाम् छात्रा-अध्या[...] वक्तृत्वकलायाः, लेखनकलायाः, प्रचारश्च क्रियते ।

एतस्य प्रधानं कारणमिदमेव यत्, संस्कृत-स[...] महती विश्रृङ्खलता विद्यते, एकनगर-निवासिन एव पण्डि[ताः न] सम्मिलिता भवन्ति, का कथा निखिल-भारतीय- विदु[षाम्] । एतदर्थं संस्कृत-समाजे जागर्ति-प्रचाराय शनैः शनैः स[...] कार्यक्षेत्रेषु कार्यारम्भः कर्तव्यः । नह्येकवारम् [...] भारतीयाः विद्वांसः सम्मिलिता भविष्यन्ति । [...] तावद् वैभवम्, उत्साहः, उद्योगः, परिश्रमः शक्तिर्वा सं[स्कृत]-समाजे; येन ते किमपि महत् कार्यं सञ्चालयितुं [...] प्रयतेरन्निति प्रथमं प्रतिप्रान्तं जागर्तिमुत्पाद्य, निखिल-भारतीया काचन महासभा संस्थापनीया, तस्याः सर्वाण्यप्यङ्गानि, उपाङ्गानि च सुदृढानि, सब[लानि] च भवेयुरिति । यथा बङ्गप्रान्ते बङ्गीया संस्कृत-साहित्य[-परि]षत् कार्यं करोति । आन्ध्रप्रान्तेऽप्येका संस्कृत-सा[हित्य]-परिषत् कार्यं कुरुते । एवमेव प्रतिप्रान्तमेकैव संस्कृत[...] संस्थापनीया । तत्तत्प्रान्तीयानां सर्वेषां संस्कृत विदुषां [...]स्तत्रैव सङ्घीभूय यदि कार्यं सञ्चालयिष्यति चेत् [...] सुदृढं सत्यञ्च कार्यं भविष्यति । तदस्माभिः [...] सानुरोधञ्च प्रार्थ्यन्ते युक्तप्रान्तीयाः संस्कृत-विद्वांसो [...] युक्तप्रान्ते युक्त-प्रान्तीय-संस्कृत-साहित्य-सम्मेलनं संस्था[पयितुं] बद्धपरिकराः प्रबलप्रयत्नाश्च भवेयुः । एतद्धि नितरामाव[श्यकम्] ...

युक्तञ्च कार्यं विद्यते संस्कृतज्ञानाम् । एषा सङ्घीभूता स्कृतज्ञानां शक्तिर्महत् कार्यं कर्तुं समर्था भविष्यति । तस्मिन् विषये सर्वैः संस्कृत-विद्वद्भिः स्वीया सम्मतिः कटीकर्तव्या सुप्रभाते । वयं पुनरप्यस्मिन् विषये प्रकाशं तयिष्यामः ।

*　　*　　*　　*

*हिन्दूनां सर्वनाशः ।*

"मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम्"

म्प्रत भारत-दस्यूनां यवनानामत्याचार-परम्परा शनैः शनैः रांकोटिमुपगता विद्यते । यथा यवनराज्य-समये हिन्दूना-परि दस्यूनामेषां दुराचारो भवतिस्म; तथैव साम्प्रतमपि तीदृश्यते । निःशङ्कं मन्दिराण्युत्पाट्यन्ते, निर्घृणं प्रतिमा नाश्यन्ते, निस्त्रपं स्त्रिय अपह्रियन्ते, निष्करुणं बालका वनधर्मं प्रवेश्यन्ते, गृहा दाह्यन्ते, गावो वध्यन्ते, हिन्दवो लुट्यन्ते, धर्मपुस्तकानि छिद्यन्ते, घण्टाशंखध्वनिर्नश्रोतुं ह्यते, किं किं वदामः ? एतदेव प्रतीयते यत् साम्प्रतमपि वनानामेव साम्राज्यं वर्तते हिन्दुस्थाने । दक्षिण-हैदरा-ाद-नगरे भोपाल-नगरे च तत्रत्य-यवन-राजभिर्हिन्दूनामुपरि वयं प्रत्यक्षोऽनाचारः क्रियते । क्वेटानगरे सीमाप्रान्ते यवनैर्हिन्दूनामुपरि तादृशाः पाशविका अत्याचाराः कृताः, न ते तानि तानि नगराणि विहाय, स्वीयां स्थावर-सम्पत्तिञ्च त्यक्त्वा पलायन्ते । एकः कश्चन हिन्दुः स्थावरसम्पत्ते-धिक्येन विवशतया यावनं धर्मं प्रविष्टः । अन्ये हताः, ताः । अपरे पलायिताः । एवमेव पञ्चाम्बुप्रान्ते सीमाप्रान्ते नितरामसह्यं कष्टं वरीवर्ति हिन्दूनाम् । यवनानां समाचार त्राण्यपि प्रत्यहं तीव्रं विषमुद्गिरन्ति । सर्वेऽपि यवनानां नेतारः, ये खलु स्वाराज्यवादिनः, ऐक्यपक्षपातिन आसन्, ते भारते यवनसाम्राज्यस्य जीर्णोद्धारमभिलषन्ति ।

अस्माकं शासकाश्च स्वाराज्यान्दोलने महत्कष्टमनुभूय दन्दह्यमानाः प्रत्यक्षं यवनानां पक्षं गृह्णन्ति । जानन्ति यत् "स्वाराज्यान्दोलने हिन्दूनामेव प्राधान्यं विद्यते, त एवान्दोलने' प्रमुखाः सन्ति, तेषामेव धनम्, वैभवम्, बुद्धिः, श्रमश्च प्रधान्येनाँग्लशासनं समूलघातं हन्तुं प्रभवन्ति । द्विना एव यवनाः सन्ति तत्र प्रमुखाः । यवना दरिद्राः, क्षुद्राः, पामराश्च विद्यन्ते । ते तु क्षणमात्र एव सन्तोषिताः, भीषिताश्च भवन्ति । अतो यथाकथमपि हिन्दूनां विनाशः कर्तव्यः ।" येन तेषां नैतिकम्, धार्मिकम्, सामाजिकञ्च पतनं सम्भवेत् स एवोपायः शासकैः स्थिरीकृतः ।

एवमीशवीयमतावलम्बिनः सर्वतोऽधिकाः हिन्दूधर्म-घातकाः सन्ति । ते हि गोमुखाः व्याघ्राः शनैः शनैः मधुलोभेन मक्षिका मारयन्ति ।

एवं स्थितेऽपि क्लीवानाम्, विगत-गौरवाणाम्, कीट-प्रायाणां हिन्दूनामक्षीणि न समुन्मीलन्ति चेत् सुतरां हिन्दूनां विनाशः सिद्ध एव ।

केनापि लवपुरे 'रंगीला-रसूल'-नाम पुस्तकं प्रकाशित मासीत्, तत्र महम्मद-विषये किमप्यप्रियं सत्यं लिखित-मासीत् । तमवलम्ब्य यवनैरान्दोलनं प्रचालितम्; यदस्माक मवतारस्य महम्मदस्यापमानजनकमिदं पुस्तकम् ; तदस्य लेखकाय दण्डो देय इति । न्यायालये च तस्याभियोगः प्रचलति । प्राड्विवाकैः पुस्तकस्य सत्यतां निर्णीय परित्यक्त-स्तस्य लेखक इत्यमुमेव विषयमवलम्ब्य समस्तभारते यवनैः, यवनपत्रैश्चाविरतं न्यायालयस्य, न्यायाधिकारिणाम्, हिन्दूनाञ्च भीषणो विरोधः क्रियते, विष-वर्षणं क्रियते । अत्र तु तस्मिन्नेव दिने काश्यां यवनै रामायणपुस्तकं विनाशितम् । कलिकाता नगरे चाँग्लैर्जनाथ-मन्दिरस्य मूर्तेश्च निःशङ्कं विध्वंसः कृतः इति जानन्त्येव नहि मृतप्रायाः क्लीवाः हिन्दवः । काश्यां रामायणस्य विध्वंसं दृष्ट्वाऽपि ये जीवन्ति ते सत्यं मृता एव । धिक् ! तेषां जीवनम् ।

एवं ये यवना अधिकारिणः सन्ति पुरीष-(Polic)-विभागे, शासन-विभागे, च तेऽपि प्रत्यक्षं पक्षपातं कुर्वते । यावन्यो वेश्याः, यवन-याचकाः, यवन-वैपणिकाः सर्व एव यथाशक्ति हिन्दूनां विनाशाय प्रयताः सन्ति ।

हन्त ! आश्चर्यम् !! महाशोकः !!! चतुष्कोटिमिताना-माँग्लानां दासाः, द्वात्रिंशत्कोटिमिताः भारतीयाः सन्ति । तेषु सप्तकोटिमिता यवना अपि तेषामेव दरिद्रा दासाः सन्ति । परन्तु वयमिव दासतापाशबद्धास्तेऽपि

यवनाः द्वाविंशतिकोटिमितान् हिन्दून् यथेच्छं विनाशयन्ति, भक्षयन्ति, लुण्ठन्ति, ताडयन्ति, मारयन्ति, छिन्दन्ति यत् यत् मनसि समायाति तत्तत् कुर्वन्ति । हिन्दवस्तेभ्योऽपि बिभ्यति । तदा दासानुदासा वयं किं जीवामः ? हन्त !

क गतास्ते स्वातन्त्र्य-वादिनो नेतारः, ये वदन्तिस्म यद् वयमाँग्लशासनं दूरीकरिष्यामः । साम्प्रतं त एव क्लीबा यवनानां साहाय्यमैक्यं च प्रतीक्षमाणा हिन्दूनेवाक्रोशन्ति, निन्दन्ति । अन्धपरम्परग्रस्ते समाजे यः कोऽपि समीहते स एव नेतृत्वं गृह्णाति, यत्स्वार्थसाधकं भवति तदेवोपदिशति । नास्ति हिन्दूनां सत्यो नेता, छिन्ना एव नेतारः कथं द्वाविंशत्कोटिमितेषु हिन्दुषु जागर्तिं जनयिष्यन्ति ? अतएव हिन्दूनां शैथिल्यं दृश्यते । महात्मनः श्रद्धानन्दस्य, अन्येषाञ्च बहूनां हिन्दूसंग्रन्थनकार्यकर्तॄणां हत्या कृता यवनैः । हिन्दुभिः किं प्रत्युत्तरितम् ? तथैव सुप्तैः स्थीयते हिन्दुभिः । न यवनैसहासहयोगः कृतः । यवनाः सर्वत्र हिन्दूभ्योऽसहयोगं कुर्वन्ति । परन्तु हिन्दवो न मनागपि जिह्रियति, न विचारयन्ति । एवमेव हिन्दूनां दौर्बल्यं क्लीवत्वञ्चावलोकयन्तो यवनाः प्रत्यहं प्रचीयमानोत्साहाः प्राबल्यं प्राप्ता हिन्दूनां विनाशे द्विगुणोत्साहेन प्रयतन्ते ।

या हिन्दूजातिः, बलेन, धनेन, विद्यया, बुद्ध्या, अधिकारेण, वैभवेन, जनेन, मनसा सर्वथा यवनानामपेक्षया महदाधिक्यं दधाति, सा यदीदृशं क्लैव्यमाचरति चेत् तस्या विनाशः सुतरां सिद्ध एव ।

* * * *

*भावनगरे संस्कृत-प्रचारः ।*

द्वारिकायात्रातः प्रतिनिवृत्ताः संस्कृत-साहित्य-समाजस्य मन्त्रिणः श्रीगोपालशास्त्रिणो यदा भावनगरे समुपस्थितास्तर्हि ते तत्रत्य-शासनसभा-प्रधानाध्यक्षः सर प्रभाशङ्कर दलपतराम पटनी-महोदयैः साधु-सत्कृताः राज्यातिथ्यं स्वीकृत्य दिनचतुष्टयं यावत् वर्णाश्रममधिकृत्य प्रवचनं कृतवन्तः । ते च भावनगरे प्रजानां सनातनधर्मे श्रद्धाधिक्यम्, तथा तत्रत्य प्रजानां मुखाद्राज्यशासन-पद्धतिप्रशंसामा[...] नितरामानन्दिताः । इदानीं काले रामराज्य[...] तद्राज्यमिति नात्युक्तिः ।

अतो वयं संस्कृत-साहित्य-समाजस्य मन्त्र[...]मिति-सदस्याः, श्रीविश्वनाथमभ्यर्थयामहे तत्रत्य-शासक-प्रमुखान् चिरञ्जीविनो विद्[...] अन्यांश्च नरपतीननुरुध्महे यत्ते भावनगरशास[...] कुर्युः, येन तेषु भारतीयनृपत्वं चारितार्थ्यमी[...]

× × × ×

लेखका अवदधतु ।

सुप्रभाते 'निदाघोपालम्भ'—नाम्नी श्रीमतां नारायणशर्म्मणां कविता प्रकाशिताऽऽसीत् । [...] सूर्योदयेऽपि मुद्रिता दृष्टा मया । एतन्नितरामनौचित्यं [...] लेखकानां सम्पादकानाञ्च । सम्पादका न सर्वाण्यपि प[...] पठन्ति । लेखकैरेकस्मिन्नेव पत्रे प्रथमं लेखः प्रहेयः । [...] पत्रे केनाऽपि कारणेन सोऽस्वीकृतः स्यात्तदा द्वितीये[...] लेखः प्रेषणीयः । युगपदेव पत्रद्वये लेख-प्रेषणं प्रका[...] नीतिविरुद्धमाचारविरुद्धञ्च वर्तते ; वयं लेखकान् स[...] प्रार्थयामहे यत्ते यं कमपि लेखमेकस्मिन्नेव पत्रे प्रेषयन्[...] यदि तत्र न मुद्रितं स्यात्तदाऽन्यस्मिन् पत्रे प्रहेयम[...] न वयं तादृशानां लेखकानां लेखान् कदापि प्रकाशयिष्याम[...] अन्यच्च—

प्रश्न-प्रेषकैः प्रश्नस्योत्तरं सहैव प्रेषणीयम् । नान्[...] प्रश्नप्रकाशनं स्यात् । श्रीमूलशङ्कर शर्मभिः कृतस्य प्र[...] बहून्युत्तराणि समागतानि सन्ति । परन्तु प्रश्नकर्तृभि[...] न लिखितमिति तदुत्तराणि न प्रकाशितानि । वयं [...] निवेदयामो यत्ते नूनमुत्तरं स्वयं प्रेषयन्तु । नोचेदुत्तरा[...] प्रकाशितानि स्युरिति ।



# लेख-सूची ।



## चित्राणि ।



---

# संस्कृत-साहित्य-समाजस्य

## विशिष्टाधिवेशनम्।

भाद्रपदमासस्य कृष्णप्रतिपदि रविवासरे (ता० १४।८।२७) श्रीमतां साहित्यवारि श्रीदेवीप्रसादशुक्ल-कविचक्रवर्ति-महोदयानाम् महामहोपाध्याय-पदवीलाभे सहर्षमभिनन्दन-पू समाजस्य विशिष्टाधिवेशनम्, टाउनहाले सायं चतुर्वादने महता समारम्भेण भविष्यति। संस्कृतज्ञानां समुपस्थितिः सादरं प्रार्थ्यते।

अत्रैवावसरे चिकित्सक-चूडामणि-आयुर्वेदाचार्य-कवीन्द्र-श्रीचन्द्रशेखरधर-मिश्रमहोदयानाम् दाऽऽविष्कारविषये महत्वपूर्णं भाषणं च भविष्यति।

श्री अनन्तरामशास्त्री (सभापतिः-काशीपण्डितसभायाः)
श्री गोपालशास्त्री (मन्त्री, संस्कृत-साहित्य-समाजस्य)
श्री विन्ध्येश्वरीप्रसाद शास्त्री (सूर्योदय-सम्पादकः)
मदनमोहनशास्त्री भार्गवः (मन्त्री—सनातनधर्म परिषदः)
म० म० प्रभुदत्तशास्त्री, (सभापतिः—सं० सा० समा
श्री गिरीशशुक्लः, न्यायाचार्यः (सुप्रभात-व्यवस्था
श्री केदारनाथ शर्म्मा सारस्वतः (सुप्रभात-सम्पा

## आयुर्वेद-महाविद्यालयः।

काशी-हिन्दूविश्व-विद्यालयस्याऽऽयुर्वेद-विभागे भारतशासकैर्वार्षिकं साहाय्यं प्रदातुं स्वीकृतिः प्रदत्ता। साम्प्रतं युक्तप्रान्ते, एष एव महाविद्यालय आयुर्वेदस्य प्रधान विद्यालयो भविष्यति। एतस्य प्रधानाध्यक्षाः श्रीमन्तो यादवजी त्रीकमजीमहोदया मोहमयीनगरात् समागताः सन्ति। इमे प्राच्य-पाश्चात्य-वैद्यविद्यायां परं प्रवीणा अध्यवसायिनश्च सन्ति। एतेषां काश्यामागमनं सहर्षं सादरमभिनन्दयामहे।

## आवश्यकी पूर्तिः।

नास्त्यविदितमिदं केषामपि यत्साम्प्रतं मूढाना-मौषधविक्रेतॄणां हस्ते पतित्वा ऽऽस्माकमायुर्वेद-चिकित्सा दूषिता सञ्जाता। वैद्या अन्यदभिलषन्ति, ते चान्यत् ददतीत्यौषधीनां गुणा न स्फुटीभव वास्तविक-वस्तूनि न लभ्यन्ते, अतएवाल पञ्चाम्बु-काश्मीर-गान्धारादि-प्रदेशानां के रावलपिण्डी नगरे वृहदायुर्वेदीयौषधीनां भा समुद्घाटितो विद्यते अत्र च सद्यः समानीता श्रो सर्वदा प्रस्तुताः सन्तिष्ठन्ते। अस्माकं रसाः, उपरसाः, धातवः, उपधातवः, र उपरत्नानि, कुङ्कुमम्, गोरचनम्, भस्मानि, वि उपविषाश्च लभ्यन्ते। यतस्ततो गवेषणस्य णस्य च नास्त्यावश्यकता। अस्माकं का पत्रं प्रेषणीयम्। यद्यस्माकं वस्तुनि काऽऽ पटता भवेच्चैत् वयं नूनं मूल्यं प्रेषयिष्यामः। परीक्षां कृत्वा।



Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

# सुप्रभातम् ।



माननीयः श्रीमान् मदनमोहन-मालवीय-महोदयः
हिन्दू विश्वविद्यालयस्य संस्थापकः

# लेख-सूची ।




[ संस्कृत-साहित्य-समाजस्य मुखपत्रम् ]

तिमिरततिमुदस्यद् भेदतारा विलुम्पन्नयदधिसुरभाषाभाषि जागर्तिमुच्चैः ।
विबुध-विहग-वादै राह्वयद् भाग्यभानुम् विलसतु भुवनेऽस्मिन् सर्वतः सुप्रभातम् ॥

सम्पादकः— श्रीकेदारनाथ शर्मा, सारस्वतः ।

## मङ्गलम् ।

ले०—महामहोपाध्यायः श्रीदेवीप्रसाद शुक्लः,
कविचक्रवर्ती ।

चेत्खिद्यसे हृदय ! नैजमनोरथाना-
मप्राप्तितः खलु तदाजगदम्बिकायाः ॥
पादाम्बुजन्मयुगलं सकलेप्सितानां
विश्राणनैकनिपुणं शरणं श्रयस्व !
लीलाविनिर्मितचराचर चारुशीले
चेदाम्बिकेऽणुरपि ते हृदये दयाऽऽस्ते ॥
मातर्हिगर्हित मनर्हमपि स्वबालं
हाऽऽलम्बनेन रहितं किमुनाऽवसि त्वम् ॥

## आवाहनम् ।

( जन्माष्टम्या उपलक्ष्ये )

गीत-गीत ! वसुदेव-देवकी-संकटमोचन !
चौर-चोर ! नवनीत-नीत ! अयिवसनवसनजन !
माधव ! महिता हिता महीसुर-मही-सुरभिता ।
क्रूर-निरङ्कुश-कंस-वंश-निस्त्रिंश-विशसिता ॥
योगीश्वर ! सुरवर ! हरे, भारत भुवि ते प्रेम यदि ।
अवतार हे करुणानिकर, परवशतामपहर सपदि ॥

—श्रीविन्ध्येश्वरीप्रसाद शास्त्री,
( 'सूर्योदय'-सम्पादकः )

# उपालम्भः ।



अपार्थकं न ते पार्थ-सारथे ! जन्म भूतले ।
पार्थसाहाय्य-दानेन यदकार्षीर्जगज्जयम् ॥ १ ॥
गोवर्धनं समुद् धृत्य विभ्रद्वामेन पाणिना ।
गोवर्धनं समुद्धृत्य—वियुक्तो गोपते व्यथाः ॥ २ ॥
न वासवविरोधेन गोवर्धनमपूपुजः ।
किन्तु गोपालभावेन यशोदानन्दनन्दन ! ॥ ३ ॥
चेत्कृष्ण ! पूतनामा त्वं पतितोद्धारकारकः ।
अपूतान्पतितानेतान्भारतीयांस्तदोद्धर ॥ ४ ॥
मुधैव नाम-माहात्म्यं तव लोकेषु विश्रुतम् ।
यज्जपन्तोऽपि ते नामाऽपूता नायान्ति पूतताम् ॥ ५ ॥
पतितोद्धारकत्त्वं ते तथैव वितथं हरे ।
यन्नोद्धरसि हा हिन्दू-निदानीं पतितानिमान् ॥ ६ ॥
चेत्कालयवनस्याऽरिः कृष्ण ! त्वमसि विश्रुतः ।
तत्कालयवनध्वंसं किमिदानीमुपेक्षसे ? ॥ ७ ॥

—श्रीदेवीप्रसाद शर्मा, शुक्लः, कविचक्रवर्ती,
[ महामहोपाध्यायः ]




## संस्कृतच्छात्र-सङ्घः ।




षाढ-कृष्ण-प्रतिपदि काशीस्थानां कतिप-
यानामुत्साहिनां संस्कृतच्छात्राणां समु-
द्योगेन संस्कृतच्छात्रसङ्घस्य संस्थापन-
मभूदिति परं हर्षस्थानं संस्कृत-साहित्य-
समाजस्य । संस्कृत साहित्य समाज-
ोद्देश्येषु संस्कृतच्छात्रसम्मेलनम्, निरीक्षासमितिः, संस्कृत-
ासङ्घश्चेति विभागत्रयस्य नामनिर्देश आसीत्, एतेषामुद्-
टनं कार्यकर्तॄणामभावात्, धनाऽऽभावाच्च निरुद्धमासीत् ।
ृकृतज्ञानामनुत्साहं दृष्ट्वाऽपि समाजस्याशाभङ्गः समप-
त । परमिदानीं छात्राणामिमं कार्यमुत्साहञ्च दृष्ट्वा
म्भावयामो, यत् यदि संस्कृतच्छात्राः कार्यक्षेत्रे समवतरि-
न्ति चेन्नूनं महान्तमुद्देश्यं पूरयिष्यन्ति । साम्प्रतं सर्वत्र
ायमानेऽपि राजभाषा-विजय-पटहे संस्कृतविदुषाम्, संस्कृत-
छात्राणाम्, संस्कृतभाषायाश्च भूयसी वर्तते समपेक्षा ।
ंस्कृतभाषामन्तरा भारतीयसभ्यतायाः, गौरवस्य च रक्षा
भविष्यतीति साग्रहं वक्तुमुत्सहामहे । यावदेव संस्कृतज्ञाः
ज्ञाः सन्ति तावदेवान्ये कोलाहलं कुर्वन्ति । यदाऽयं
संस्कृत-सिंहः संसार-कानने निर्भयं प्रणदिष्यति; तदा सर्वेऽपि
यत्रस्ताः सन्तः शान्तिमेष्यन्ति । तेषामनुत्साह एवास्याः
मुन्नतेर्महान् प्रतिबन्धकः । साम्प्रतं संस्कृत-समुन्नतिश्छा
ाणामेव हस्ते वर्तते । त एव भाविनः समयस्य नेतारो भवि-
ष्यन्ति । यदि ते स्वीयामवनतामवस्थां दूरीकृत्य वास्तविकं
पाण्डित्यं कार्यञ्च सम्पादयिष्यन्ति; चेत् पुनरपि विलुप्तप्रायो
भगवान् संस्कृत-वाङ्मय-भास्करो भुवनतलं विद्योतयिष्यति ।
ायमस्य सङ्घस्य कार्यजातं सभाजयामः, सङ्घस्य साफल्यञ्च
कामयामहे ।

संस्कृतच्छात्रान् सविनयं सादरं साग्रहं सानुरोधं प्रार्थ-
यामहे, यत्ते नूनमस्मिन् सङ्घे साहाय्यं प्रदाय चिरकालात्
प्रचरन्तीं संस्कृत-समाज निन्दां दूरीकृत्य, संस्कृत विरोधिनां-
मुख-मर्दनमाचरन्तु । वास्तविकञ्च ज्ञानफलं लभेरन् इति ।

* * *

## देवो दुर्बलघातकः !

विगतवत्सरे, तत्पूर्ववत्सरेषु च विहारप्रान्ते, युक्तप्रान्ते, मध्यप्रान्ते च भीषणो जलप्रलयः समभूत् । साम्प्रतवत्सरे गुर्जरप्रान्ते, सिन्धुप्रान्ते, उत्कलप्रान्ते च जलप्रलयस्य भयानकाः समाचाराः श्रूयन्ते । गुर्जरप्रान्तीयस्य जलप्रलयस्य समाचारास्तु चिरकालात् समाचारपत्रेषु प्रकाश्यन्ते । साम्प्रतं सिन्धुप्रान्ते जलप्रलयस्य रोमाञ्चकारिणः समाचाराः प्रत्यहं श्रूयन्ते । कोटिशो धनानां हानिः सञ्जाता । केवलं हैदराबाद मण्डले, धारभारकर मण्डले च पञ्चविंशतिलक्ष-मितस्य गोधनस्य हानिः सम्वृत्ता । क्षेत्राणां कार्यं रुद्धं वर्तते, सहस्रशो गृहाः जलमग्नाः सञ्जाताः । धूम्रयानमार्गा विनष्टाः सन्ति । एवमेवोत्कलप्रान्ते भद्रकमण्डले जलप्रलयेन भीषणा स्थितिः समुत्पादिता विद्यते । एकलक्षमिता मानवा गृहरहिता वर्तन्ते । सप्ताहादारभ्य सहस्रशः पुरुषा बुभुक्षिता एव म्रियन्ते । धान्यक्षेत्राणां तु महती हानिः सम्वृत्ता । राजकीयपुरुषाणामनुमानं विद्यते यदेककोटिमितस्य धनस्य हानिः सञ्जाता । सहस्रशः शवाः समुपलब्धाः समुपलभ्यन्ते च । एवं प्रान्तत्रये जलप्रलयं दृष्ट्वा रोमाञ्चमञ्चति शरीरम् । विदीर्यते हृदयम् । एषाऽऽधिदैविकी विपत्तिर्नियमेन प्रति-वर्षं समागच्छति । यवनानामीशवीयानाञ्चात्याचारैः पेपीड्यमाने दुर्दैवस्य भीषणं ताण्डवं दरीदृश्यते । न जाने भगवान् भूतभावनः किमभिलषति ? किञ्च विधास्यतीति ।

* * * *

## यवनानामत्याचाराः ।

साम्प्रतं यवनानामत्याचार-परम्परा प्रतिदिनं वृद्धि-मापन्नैव दरीदृश्यते । यवननेतारः, यवनसमाचारपत्राणि, यवनधूर्ताश्च प्रत्यहं हिन्दूनां विनाशायाविरतं प्रयतमानाः, निःशङ्कं सकललोकप्रत्यक्षं विविधानत्याचारान् कुर्वन्ति । अस्माकं देशस्य शासकाः शान्तिरक्षैकव्रतबद्धपरिकराः

केवलं विज्ञप्तिप्रकाशनं कृत्वा यवनानामेवाऽऽप्रत्यक्षं साहाय्यं कुर्वन्ति । हिन्दवस्तु यादृशाः सन्ति, तादृशं फलं लभमाना एव सन्ति । हिन्दूनां धमनीषु सञ्चरमाणो रक्तप्रवाहः शीतलतां व्रजति । न मनागपि चिन्ता दृश्यते हिन्दूसमाजे । यादृशमपमानं साम्प्रतं हिन्दूनां दृश्यते, तददृष्टपूर्वमेव । यदा यवनानामेव राज्यमासीत् तदा प्रताप-पृथ्वीराज-शिवराज-रणजित्सिंह-गुरुगोविन्दसिंह-हरिसिंह-प्रभृतयो हिन्दू-नेतारः हिन्दूजातिरक्षार्थं किं किं न सम्पादयाञ्चक्रुः । परन्तु साम्प्रतं, यदा हिन्दवः स्वतन्त्राः सन्ति; प्राप्ताधिकारा वैभव-सपन्नाश्च सन्ति; तदा स्वल्पानां दरिद्राणां दासतापाशबद्धानां मुष्टिमितानां यवनानामत्याचारैर्भृशं विदूयमाना अपि क्लीवतां भजन्तः सन्तिष्ठन्ते । नैतस्मात् परमपरं किमपि निर्जीवता चिह्नम् भविष्यति । यदि नाम हिन्दवो यवनानां मानमर्दनाय, स्वाभिमानरक्षायै च सुसङ्ग्रथिताः स्युश्चेदेकस्मिन्नेवदिने दुराचाराणामेषां दुराचारा विनष्टा भवेयुः । भयं विना प्रीतिर्नभवतीति प्रकृतेर्नियम एषः ।

क्लीवप्राया—हिन्दूनेतारः साम्प्रतंयावत्तेजस्तिमिरयोः सामानाधिकरण्यं कर्तुं प्रयतमानाः सन्ति । ते हिन्दूजातिं पश्चादाकर्षयन्ति । हिन्दूसमाजे वैमनस्य-कालुष्यादीनां वृद्धिं सम्पादयन्ति । यवनानां महम्मदअलिप्रभृतयो नेतारोऽपि यवनानां प्रत्यक्षं पक्षपातं कुर्वन्त स्तदर्थं प्रणांस्त्यक्तुं सन्ति प्रयताः । परन्त्वस्माकं नेहरूप्रभृतयस्तदेव सहयोग-स्वप्नमवलोकयन्ति । एतस्यामवस्थायान्तु यथाकथमपि हिन्दुभिः स्वाभिमानरक्षायै यत्किमपिभवेत्तथा विधेयम् । यथा यवनाः हिन्दूनां विनाशाय सर्वदा सर्वथा च समुद्यताः सन्ति, तथैव हिन्दुभिरपि न केवलं स्वरक्षायै, प्रत्युत यवनानां समूल विनाशाय सुदृढं प्रयतनीयम् । नान्यथा विद्यते हिन्दूनां परित्राणम् ! यद्यतः परमपि हिन्दवो न प्रयतिष्यन्ते चेत् तेषां जीवनं व्यर्थमेव स्यात् । पिपीलिकाऽपि स्वकार्यं विनाशिनं महान्तमपि पुरुषं दशत्येव, परं न जाने हिन्दवः के सन्ति ? हन्त ! प्रभो !!

* * * *

## विल्वपत्रम् ।

( लेखकः—
श्रीमान् राजा शशिशेखरेश्वरदेव शर्म्मा, रायबहादु




जायाः पुष्पपात्रे विल्व स्थानं नितरां गौरवपू वर्ति । हिन्दूसाधकस्य पद्म-स्थलपद्म-पाटल-च दि पुष्पेषु नास्ति तावान् समादरो यावान् पत्रे । एतस्य "महाफलवृक्षः", "शिवद्रु "अतिमङ्गलवृक्ष" श्चेति नामान्तराणि सन्ति । फलस्याऽपि "लक्ष्मीफलम्" "सदाफलम्", फल" मितिनामधेयानि सन्ति । आयु ग्रन्थेषु—विल्वमूलस्य, विल्वपत्रस्य, विल्व विल्वपुष्पस्य, विल्वकाष्ठस्य, पक्वविल्वस्य, विल्वस्य, विल्ववीजस्य च विविधा गुणाः पवर्णिताः सन्ति । अत इदं सम्यक् प्रतीयते, मानेव गुणानवलोक्य महर्षिभिरादरातिशयेन 'शिवद्रुम' 'श्रीफला' दीनि नामानि संस्था सन्ति ।

राजवल्लभसङ्ग्रहीते द्रव्यगुणनिघण्टौ वि सर्वसाधारणा गुणाः प्रोक्ताः । यथाः—

वेल्वं 'बालं' कषायोष्णं पाचनं वह्निदीपनम् ।
तङ्ग्राहि तिक्तं कटुकं तीक्ष्णं वातकफापहम् ॥
पक्वं सुगन्धि मधुरं दुर्जरं ग्राहि दोषलम् ।
कफवातामशूलघ्नी ग्राहिणी विल्वपेषिका ।
विल्वमूलं मरुच्छ्लेष्मछर्दिघ्नं रक्तपित्तजित् ॥
बृहन्निघण्टु रत्नाकरेः—
तत्पत्रं कफवाताम-शूलघ्नं ग्राहि रोचनम् ।
निहन्याद्बिल्वजंपुष्पमतिसारं तृषां वमिम् ।
विल्वमज्जाभवं तैलमुष्णं वातहरम्परम् ।
काञ्जिके संस्थितं विल्वमग्निसन्दीपनं परम् ।
हृद्यं रुचिकरं प्रोक्तमामवात-विनाशनम् ।
द्राक्षा-विल्व-शिवादीनां फलं शुष्कं गुणाधिकम् ।
भावप्रकाशे यथाः—
श्रीफलस्तूवरस्तिक्तो ग्राही रूक्षोऽग्निपित्तजित् ।
वातश्लेष्महरो वल्यो लघुरुष्णश्च पाचनः ॥
धन्वन्तरिनिघण्टौ—
विल्वमूलं त्रिदोषघ्नं छर्दिघ्नं मधुरं लघु ।
विल्वस्य च फलं चाम्लं स्निग्धं संग्राहि दीपनम् ॥
कटु-तिक्त-कषायोष्णं तीक्ष्णं वातकफापहम् ।
विद्यात्तदेव पक्वं तु मधुरानुरसं गुरु ।
विदाहि विष्टम्भकरं दोषकृत् पूतिमारुतम् ॥
इत्यादि ।

एवमेव बहुत्र वर्णितमिदं श्रीफलम् । साम्प्रतं विल्वस्य भिन्न-भिन्नानामङ्गानां ये गुणाः यत्र-तत्रास्माभिः पठिताः, अनुभूताश्च सन्ति ते निर्दिश्यन्ते ।

"विल्वपत्राणां रसस्य शरीरे सम्मर्दनेन स्थूल व्यक्तीनां स्वेदजो दुर्गन्धः सत्वरं विनश्यति । ज्वरी, यदा प्रलापं करोति, तदा तस्य शिरसि विल्वपत्राणां लेपेन प्रलापशान्तिर्भवति । तरुणे श्लेष्मरोगे विल्वपत्रस्योरसि प्रलेपेन महानुपकारो भवति । सान्निपातिके शोथरोगे, विल्वपत्राणां रसस्य कृष्णमरीचिकायाश्चूर्णेन सह पानं लाभजनकं भवति ।

"यदि ज्वरेण सह मलद्वारे भीषणा वेदनाऽपि भवेत्तदा शुष्कविल्वं क्षीरपाक-विधिना पक्त्वा तस्य भोजनं रोगिणो नितरां लाभं जनयेत् ।

शुष्कविल्वम्, तिलञ्चेति द्वावपि समानभागौ ग्रहीतव्यौ, तयोः शिलायां पेषणं कृत्वा, तस्मिन् तिलतैलं दत्वा, तक्रेण च संयोज्य, तस्याग्नौ पाकः कर्तव्यः, तस्य भक्षणेनामाशयरोगे भूयानुपकारो-भवति ।

"शुष्कविल्वम्, मधुयष्टिञ्च धौततण्डुल-जलेन पिष्ट्वा, तस्मिन् शर्कराया माक्षिकस्य च योगं दत्वा, धौत-तण्डुल-जलेन सह पानेन पित्तरक्तजोऽतिसारो विनश्यति ।

"शुष्क-विल्व-चूर्णं, शुण्ठी-चूर्णेन मेलयित्वा, जीर्णगुडेन सह भोक्तव्यम्, तदुपरि च तक्रपानेन ग्रहणी रोगः प्रशाम्यति । रक्तार्शरोगी, विल्वचूर्ण-भक्षणेन नीरोगः सञ्जात इति प्रत्यक्षीकृतमस्माभिः ।

"॥४ सेटकं तिलतैलम्, ॥१ गोमूत्र-शोधितं शुष्क विल्वम्, द्वावपि ॥६ सेटकमिते छागीदुग्धे-सम्पाच्य विल्वतैलं निर्मीयते । एतस्य कर्णद्वारा सेवनेन वधिरत्वं दूरीभवति ।

"विल्वमूलस्य क्वाथं निर्माय, ईषदुष्णे तस्मिन् लाजानां चूर्णं शर्करा च सम्मेलनीया । एतस्यावलेहस्य लेहनेन बालकानां वमिः, अतिसारश्चापगच्छति ।

" ज्वरार्तस्य, श्वासरोगिणश्च यदा हृत्स्पन्दनं विशेषतया सञ्जायते, तदा विल्व-मूलस्य काथेन सद्योलाभः सम्भवति ।

" आम-विल्व, मन्नौ संस्कृत्य, तस्य गुडेन सह भक्षणेन आमातिसारः प्रणश्यति ।

[ क्रमशः ]

## प्रार्थना-पञ्चकम् ।



( १ )

श्रीकृष्ण ! या वरिवर्त्यवस्था, भारतीया साम्प्रति,
भगवन्नहो वत वेदयामस्तां कथं वद कस्प्रति;
इह सर्वथाऽप्यकथेलिमास्ते दुष्टयवनानां कथा,
तदुपर्य्यमी ग्रसितुम्प्रवृत्ता इशवीया नस्तथा ।

( २ )

अधुनाऽपि नो निज मोहजालं हातुमिच्छति ते प्रिया,
सा भारतीया हिन्दुजाति र्दर्शनीया तत्क्रिया;
हा ! हैकतः सुरभारती-समुपासकाः समुदासते-'
तत्रान्यतो जननेतृवृन्दं त्वन्यथैव विचेष्टते ।

( ३ )

पाश्चात्य दृष्ट्यैवायतन्ते भारतोन्नयने त्विमे,
नहि भारतीय-समुन्नतिस्स्यात्तैः कृतेति विभाति मे ।
अपि पश्य हा, दैनन्दिनं हिन्दुस्थितिर्जटिलायते
सा भारतीया संस्कृतिः क्रमशोऽधुना कलुषायते ॥

( ४ )

त्वन्नामतो व्यभिचारजाडयस्त्रैणतेह विवर्द्धते,
तव वीरता दृढ़ता तथा निष्कामता न समेधते ।
क्लीवताजुडमूत्तदानीं पार्थ एव हि वीरहा
क्लीवाः समेऽपि क्षत्रियास्ते साम्प्रतं यदुवीर ! हा ?

( ५ )

गोविन्द ! गो-द्विज-भक्त ! रक्षक ! रक्ष यादव म...
हे साधुपालक ! दुष्टदारक ! धर्मधारक ! हे ह...
अयिभारत प्रिय ! हा कथं गीतावचो न निरी...
श्रीकृष्ण ! भारतवर्षमेतद्धा । कथं समुपेक्षसे ?

दर्शनकेशरी श्रीगोपाल शास्त्री त्रि...
" केशरी "



## रघुवंश-महाकाव्यम् ।

द्वितीयः सर्गः ।

—:o:—

( चोरपक्षीया टीका )

प्रणेतारः—

स्वर्गीय—कवीन्द्रवर श्री दुःखभञ्जन-शुक्ल-महोदयाः

[यन्त्रालयीयानां प्रमादेनास्याष्टीकाया अष्टौ श्लोका ...ष्टाः । अत एवाङ्कत्रये तन्मुद्रणं न जातम् । साम्प्रतं विव... चतुर्दशतमाच्छ्लोकात् प्रकाश्यते—सम्पादकः । ]

शशाम वृष्ट्यापि विना दवाग्नि-
रासीद्विशेषा फलपुष्पवृद्धिः ।
ऊनं न सत्वेष्वधिको बबाधे
तस्मिन् वनं गोप्तरि गाहमाने ॥१...

अथ, तस्मिन् गोप्तरि=अपलापके, वनं गा... माने सति विना विगतो ना यस्मात् स दवा...

थ विशेषा ना पुरुषरूपो दवाग्निः, वृष्ट्यापि न शाम=शान्तोऽभूत् । तथा विशेषा फलपुष्पवृद्धिः आसीत् । तथा सत्वेष्वधिकः, सत्वे, इष्वा=वाणेन धिकः, ऊनं न ववाधे । ऊनं अल्पं, अथ उना=म्भुना, अथ सम्बोधनेन, अथ मात्रा, ऊनं रहितं पीडयामास । सत्वेष्वधिकत्वात् । अथ वृष्ट्या-ापि, भावे लुङ् । दवाग्निर्न शशाम विशेषा=द्विशेषा, फलपुष्पवृद्धिः, विशेषा अधिका न आसीत् । अथ सत्वेषु अधिकः, अधि=अधिकः, ः=आत्मा यस्य स, ऊनं, न ववाधे ।

संचार-पूतानि दिगन्तराणि
कृत्वा दिनान्ते निलयाय गन्तुम् ।
प्रचक्रमे पल्लवरागताम्रा
प्रभा पतङ्गस्य मुनेश्च धेनुः ॥१५॥

अथ मुनेः धेनुः, पतङ्गस्य पतं=कुटिलं गच्छती तङ्गश्चौरः, तस्य अप्रभा=मालिन्यं, आदिना=थमेन सह, अन्ते चरमे, निलयाय गन्तुं प्रचक्रमे, नुः आवासाय अप्रभा नाशाय, गन्तुं प्रचक्रमे । कि कृत्वा, दिगन्तराणि सञ्चारपूतानि सम्यक् ारो यस्य तादृक्पूतं पूतिः येषु तथाविधानि त्वा अप्रभा । संचार-पवित्राणि कृत्वा, धेनुः । दृशी ? अपल्लवराग ताम्रा । अथ न पल्लवरागता = किशलय लालित्यं येषां, तथाविधा आम्रा यया ा ॥ १५ ॥

तां देवतापित्रतिथिक्रियार्था-
मन्वग्ययौ मध्यमलोकपालः ।
बभौ च सा तेन सतां मतेन
श्रद्धेव साक्षाद्विधिनोपपन्ना ॥१६॥

अथ मध्यमलः=मध्ये मलम् अन्तर्मालिन्यं यस्य स मध्यमलः, अकपालः=कपालरहितः, अथ असुख-पालः, अथ अनात्मपालः, अथ अप्रकाशपालः, स चौरः, तां धेनुम्, अन्वग्ययौ=पश्चाज्जगाम । कीदृशीं, देवतापित्रतिथिक्रियार्थां । स्पष्टम् । अथ साक्षाद्विधि साक्षाद्वेधके विध्यतेः किपि सप्तम्यकवचने रूपं, तस्मिन् न सतां मते सज्जनानाम् अनभिमते चौरे, आतेन सातत्यगमनेन उपपन्ना श्रद्धा यथा न भाति तथैव सातत्यगमनेन उपपन्ना सा धेनुर्न बभौ । या धेनुः सदैव मठचत्वरे सुखं सर्वोपभोगं भुक्तवती साकण्टक-हिंस्रभयोपपन्ने वनेऽपि असावधाना निरन्तर पलायनपरा, श्रान्ता न भातीति युक्तम्—स्पष्टदृष्टान्तोक्तिरियम् ॥ १६ ॥

सपल्वलोत्तीर्ण वराहयूथा-
न्यावासवृक्षोन्मुखबर्हिणानि ।
ययौ मृगाध्यासितशाद्वलानि
श्यामायमानानि वनानि पश्यन् ॥१७॥

स चौरः पश्यन्=इतस्ततो विलोकयन्, वनानि ययौ, कीदृशानि, मृगाध्यासितशाद्वलानि=मृगाणां आधिभिः=मानसव्यथाभिः । आसमन्तात् सितानि ॥ बद्धानि शाद्वलानि येषु तानि । षिञ् बन्धने इत्यतः क्तः । तथा श्यामायमानानि=श्यामाः अयमानाः, गच्छन्तः येषु अतिगहनत्वात् । तथा पल्वलोत्तीर्ण-वराहयूथानि=पदं लुनाति इति पल्लु कण्टकादि; तेन अलति=भूषयति, भूष्यते, तं भूषयति वा, सः नागफणयादिने पलल्वितः, क्षेत्रादिः, तस्मादुत्तीर्णाः वराहयूथा येषु तानि, आवास=तप उन्मुखा मयूरा येषु तानि ॥ १७ ॥



# जलप्रलये वटोदरस्थितिः ।

लेखकौ—नर्मदाशङ्करशर्मा, दत्तात्रेयशर्मा च ।
( बड़ोदा-राजकीयसंस्कृतमहाविद्यालयच्छात्रौ । )



अयि भारतजनाः !

श्रीमद्गुर्जरदेशमध्यविराजितपुरन्दरपुरोपमित-वटोदराख्यनगर्यां ( Baroda city बड़ोदा ) १९२७ खृस्ताब्देऽतीतजुलाईमासस्य २४ तिथौ सूर्यवासरे च भगवति सवितर्यस्तङ्गते युगपदेव नभोमण्डलं स्तनिताभ्रविद्युद्व्याकुलं झञ्झावातातिसंकुलञ्चाभवत् । तदनन्तरं मुसलधारसदृशातिवृष्टेरारम्भः समजनि । तदाप्रभृत्येव गृहाणि, हर्म्याणि, प्रासादाः, वृक्षाश्च पतनक्रियामन्वभूवन् । तेन च २५ तिथौ सोमवासरे च मध्याह्नसमये विश्वामित्रीनद्यां जलवृद्धिः समारब्धा । क्षणे क्षणे च जलं विद्युद्वेगेन वृद्धिमेत्य रात्रौ दशवादनसमये नगरीमध्यप्रदेशान्कवलयतिस्म । महावह्निशकटारोहणस्थानात् (General Station) रावपुराप्रदेशस्य महाघटीयन्त्रस्थान (Tower) पर्यन्तप्रदेशो जले निमग्नोऽभवत् । फतेपुरा, दांडीआ बजार, जम्बुबेट, नवाबजार, मोदीखाना, गोलवाड, नागरवाडो, श्रीमद्गुर्जरनरेशगायकवाडमहाराजस्य लक्ष्मीविलासप्रासादस्य पश्चाद्भागः, विश्वामित्रीस्टेशन, गोयागेटस्टेशन, भीमनाथमहादेव, सयाजीगंज, कँम्प, डफरीनहास्पिटल्, कमेटीबाग, बहुचरमाता, घोडदौडमार्ग इत्यादयः प्रदेशाश्च भूरिजलेनाऽऽक्रान्ताः । अस्यां नगर्यां शतवर्षात्पूर्वमपि एतादृशो जलप्रलयो न बभूवेति जरठाः केचन स्मरन्ति । वह्निशकटारोहणस्थाने ( Baroda station. ), तत्पर्यन्तप्रदेशे कमेटीबाग ( Public park and Musium ) इत्यादिप्रदेशे च वंशदघ्नं जलमभवत् ।

जुलाईमासस्य २८ तिथौ गुरुवासरे च प्रभृति दैवकृपयाऽतिवृष्टिः शनैः शनैः शान्तिम[गमत्] २९ तिथौ शुक्रवासरे च जलवृद्धिरपि शनैः न्यूनतामगमत् । इतिवृत्तमत्यन्तप्रमोदाऽऽस्पदम् ।

परस्सहस्राणां गृहाणां, परस्सहस्राणां वृ[क्षाणां] पञ्चसप्ततिमनुष्याणां, परश्शतानां श्वापदानां पशूनां नाशः समजनि । परस्सहस्रा मनुष्याः स्वस्थानशून्या इतस्ततो भ्रमन्ति । तेषां स्थितिं दृष्ट्वाऽनुभूय च श्रीमद्भिः परमकृपालु[भिः] गुर्जरनरेश-श्रीमद्गायकवाडकुलावतंस—श्रीस[याजी]रावमहाराजैर्लक्षरूप्यकाणि वितीर्णानि, श्रीम[तीभिः] राजमातृभिः पञ्चविंशति सहस्ररूप्यकाणि वि[तीर्णा]नि, श्रीमद्भी राजपुत्रैः धैर्यशीलरावमहाराजैः, [प्रताप]सिंहरावमहाराजैश्च ५०००० पञ्चाशत्सहस्ररू[प्यका]णि दत्तानि । अनेकैर्नगरीस्थसद्गृहस्थैर्यथा[शक्ति] दानादिसाहाय्यमारब्धम् । मोहमयी (Bomb[ay]) पुण्यपत्तन (Poond), राजनगर (Ahmeda[bad]) इत्यादिनगरनिवासिभिः श्रेष्ठिभिश्च यथाशक्ति [सा]हाय्यं प्रदीयते ।

श्रीमन्महाशयैः परोपकारपरायणैर्महात्म[भिः] श्रीकाशीनगर ( Benares ) निवासिभिः श्रीवि[...]नन्दमहाराजैरपि निराधारलोकानां कृते सप्तदश[...]सरूप्यकाणि अन्नवस्त्राणि च सङ्गृहीतानि ।

एतेषां निराधारस्थितिजुषां सर्वेषां लो[कानां] साहाय्यार्थम् अन्यैरपि प्रयत्नो विधीयते, विशे[ष]विशिष्टसमाचारानग्रे प्रेषयिष्यामः ।

## प्रार्थना ।

पुनरयं निगमागम तेजसा
झटिति मोह-निशां सुतरां हरेत् ॥
द्विजसरोज-कुलानि विबोधये-
च्छिव ! सनातनधर्म-दिवाकरः ॥ १ ॥
दिशतु नास्तिककौशिकसंहतौ
निलयनेन समं खलु मूकताम् ॥
जनित-सौख्यपयोधरवर्षणैः
प्रकुरुतां सुखि भारत मञ्जसा ॥२ ॥

गणेशीलाल सारस्वतः, साहित्योपाध्यायः,
[हेडपण्डित, बलवन्तराजपूत हाईस्कूल, आगरा, अध्या-निरीक्षकश्च, महाराज कुमारस्याऽवागढनरेशस्य (जिला एटा)]

## वर्षा-वर्णनम् ।

व्यपगतपवनं वियत्समन्ता-
दलसघनाघन-सन्निवेशरुद्धम्,
शिखिविरुत-विनन्दिताबकाशं
हरिताशं लघुबिन्दुवर्षि जातम् ॥१॥
क्वचिदुपल-निपातदीनगव्य:
क्वचिदपि पङ्कविशङ्किपापिलीकाः ।
ह्रद-सलिलनदी-तटोपविष्टै
र्गुरुमण्डूकगणैर्दिशो दशापनिद्राः ॥२॥
उत्केसरैः सुरभिभिर्नवनीपपुष्पै-
र्नासापुटाञ्जलिसुधा-विपणीकृतैस्तैः ।
क्वाचित्कमेघमनिराकृततानरेखं
सान्ध्यं नभो जलदकालकृतोपचारम् ॥३॥
कियन्ति पाथांस्यगलन्धरायां
कियन्ति शिष्टानि तथा गृहे मे ।
नक्तं व्यवस्यन्निति विद्युदक्ष्णा
विलोकयामास पयोदराजः ।

भीखूमल-मन्दिरम्, अयोध्या. | रामसुखमिश्रः

—:o:—

## आक्षेपकारिकेशरिनादः ।

[ अवशिष्टांशः ]




दि हि मासः शुद्धौ विधीयेत ततः पूर्वकर्मानुवादे बुद्धिर्भवेदपि, नत्वेतदस्ति, उपसदुत्तरकालत्वेन श्रवणात्; विद्यमानाभिरुपसद्भिः शक्यः कालो लक्षयितुम् । नच नैयमिके ताः स्वार्थाः परार्था वा विद्यन्ते, यदि तु तास्तदुत्तरकालत्वम् मासश्च विधीयेरन्, एवं सत्यनेकार्थविधानाद्वाक्यभेदः स्यात, एतस्मादेव हेतोर्दीक्षितदानहोमपाकप्रतिषेधेन प्रतिषिद्धस्य प्रतिप्रसवरूपेण वा सत्रजदेशत्वेन वाऽयं विधिः प्रत्युक्तः । तत्रापि ह्युपसदुत्तरकालत्वम् मासश्चेत्यनेकार्थमेव कर्मान्तरविधानं त्वनेकार्थत्वमदोषः, तस्मात्कर्मान्तरमिति भाष्यकारः । '

इत्येवं बहुषु मीमांसाग्रन्थेषु समुपलभ्यते-एतस्मादुपसदुत्तरकालत्वरूपगुणवैशिष्ट्यस्यैव प्रतीतेरिति एवमुपसदिष्टैश्चरुभिरग्निहोत्रं न भवितुमर्हति, अन्यार्थकल्पितस्यान्यार्थत्वासम्भवात्। उपसदिष्ट्यर्थकल्पितचरुसम्पन्नोपसदिष्टिशिष्ट-चरुभिर्मासान्तरप्राप्त-कर्मान्तराग्निहोत्रस्य सम्परयभावात् । कुण्डपायिनामयने पयोव्रतकर्त्तृकाज्यकरणकद्वादशाहुतीनामुपसत्संज्ञकत्वादुपसत्संज्ञकेष्ट्यभावात्तदीयचरुभिरग्निहोत्र-विधानासम्भवाच्च । एवं श्रुतीनां प्रमाणान्तरानपेक्षत्वेन सर्वप्रमाणेषु बलवत्त्वात्, श्रौतृव्याख्यावचोयुक्तग्रन्थाः प्रमाणतयोपन्यस्यन्ते-(आपस्तम्बे श्रौतसूत्रे-११-प्रश्ने-१३-खण्डे ११२ सूत्रे)-'स्रुवेणोपसदं जुहोती'ति सूत्रव्याख्यायाम्—"उपसदिति-आहुतिसमाख्या, तामाज्यस्थाल्यामाज्येन जुहोतीति" (तैत्तरीयसंहितायामपि प्रथमकारिकाखण्डे १२ प्रपाठके ११२—अनुवाकभाष्ये) "वैरिदुर्गोपरसदनकारित्वेन एता आहुतय उपसद उच्यन्ते" । तत्रैवोपसदामाज्यहविष्ट्वं नेत्यप्युक्तम्, तत्रैव तैस्तैस्त्रिभिर्मन्त्रैः त्रिषु दिनेषु क्रमेणोपसदाख्या आहुतयो होतव्या इति सायणभाष्यम्—(३ अध्यायस्य । ३ पादस्य । १३शाधिकरणेऽधिकरणमालायाम्) "दीक्षादिवसादूर्ध्वं सोमाभिषवदिवसात्पूर्वं कर्तव्या होमा उपसद' इत्युक्तम् । तथाचोक्तचरणमहाशयानां समष्टिजल्पनमतीवविचारासहमिति प्रतीमः । अहो ! मत्सरविलासः पार्वतीचरणमहाशयानाम् यत्किलपरसम्पदुत्कर्षो हि हीनसम्पदं पुरुषं दुःखाकरोतीति लौकिकभणतिमत्यन्तं प्रमाणयति । अतः सत्स्वपि बहुषु प्रमाणेषु पार्वतीचरणप्रभृतिजीवानाम् मनीषा श्रुत्यर्थवि
रणायाम् पारंगन्तुमिराचार्यैः कृततादृशार्थेन
माण्यमवगाहते, किं कुर्मो वयम्, स्वभावो दुर
क्रम इति जनतारवं प्रमाणयतामुक्तचरणाना
करणभावभङ्गिर्जगतीतलैरपि दूरीकर्त्तुं न पार
उक्तचरणमहाशयानां प्रमाणमनुपन्यस्यताम्
नभङ्गया केवलमिदं प्रतीमो, यदन्तःकरणस्य
द्वेषाश्रद्धामलकलङ्कितयैव, कल्पना-वायुना
रुपायमानजगत्प्रथितकीर्तिपताकानां मदीयपितृ
णानामुपरि कृतश्चाक्षेपरजोराजिप्रक्षेपः ॥

यच्चोक्तम् तेन, 'क्रियापद्धतिरपि तादृशी
तदपि स्वकपोलकल्पित—पार्वतीचरणप्रभृतीनां
अन्येषां तु मीमांसाशास्त्रानुसारिण्येव तत्पद्धति
केचनाग्निपुराणवचनेनोपसच्छब्दस्याग्निविशेषप
र्थपरतां व्याख्याय,—उपसद्भिरग्निविशेषैः, चारि
चरुं निर्वाह्य, तेन चरुणाग्निहोत्रं जुहुयात्-इ
श्रुत्यर्थमामनन्ति-तेपि परास्ताः । पूर्वोक्तनिर्वीज-
लक्षणाश्रयणादियुक्तीनामाकलनात् नानार्थकश्रुति
कपदानां कुत्रार्थे ईश्वरीयतात्पर्यमित्येवं वि
परमर्षिभ्यो निर्णयाऽसम्भवाच्च । चरित्वेत्यस्य
निर्वाह्येत्यर्थः, कया रीत्या उदभूदिति न प्रती
व्याकरणरीत्या साधनप्रक्रियाया अभावात् ।

यत्तु "नैयायिकस्तु न मीमांसामतानुस
विध्यर्थवादे, तत्किं न दृश्यते तार्किकः स्वत
वेदादिशास्त्रव्याख्याता, न तु परमुखापेक्षी। कदा
मूढः परप्रत्ययनेयबुद्धिरि'ति—तत्तुच्छम्। नैयायि
स्वातन्त्र्यवादी प्रष्टव्यः, यदि नैयायिकाः सर्वथैव
मांसकमतानुसारिणः तर्हि विध्यर्थवादे लिङादि

मीमांसकमतविपरीततयार्थकरणे एव स्वतन्त्राः; न मीमांसकमतक्रमेणानुष्ठान-विपरीतानुष्ठानेऽपि । अहो स्वातन्त्र्यभाषणप्रतारणा ! यत्र फलवैगुण्यं भवति; न तत्र तदवलम्बते । स्वातन्त्र्यवादी नैयायिकभुजङ्गः सर्वथा स्वार्थपरायणः स्वतन्त्रोऽहमितिभाषण एव न स्वतन्त्रः; 'मूढः परप्रत्ययनेयबुद्धि'रितिपद्यं तत्त्वविचारणया सार्थकयत्येव । सर्वदैवकर्मानुष्ठाने मीमांसकमुखापेक्षी स्वातन्त्र्यं विजहातीत्युक्तचरण प्रभृतिभिः कृततादृशश्रुत्यर्थस्य परस्परविप्रतिपत्तिकवलितत्वेनाप्रामाणिकत्वादलमुक्तमहाशयानामनल्पजल्पनतूलिकाप्रवेशनयेति शम् ॥

सर्वतन्त्रस्वतन्त्रमिथिलामण्डलमण्डन–पण्डित कुलपति-श्रोपाद्व-श्रीधर्मदत्तशर्मात्मभुवो नवानीवास्तव्यस्य शारदाभवन विद्यालय प्रधानाध्यापकस्य

मु०—नवानी—
मो०—तमोरिया—
जि०—दरभङ्गा ।
} श्रीजगदीश झा शर्म्मणः ।

———

## अभिवन्दनम् ।

पद्मासने पद्म-विलोचने शुभे,
वीणा-धरे पद्म-करे मनोहरे ।
पद्म-प्रिये पद्म-मुखे सरस्वति,
पद्मासने मे हृदये विराजताम् ।

सोहनलाल द्विवेदिनः—
( छात्रस्य )

—*—

## * मातः ।

( अनुगाता-श्रीगिरधरशर्मा, नवरत्नम्, काव्यालङ्कारः )

सैवासि त्वं सुषमा-लसिता
भुवि गरीयसी धन्या मातः !
अभूम दीना वयं केवला
स्वकीय-वैभव-हीना मातः ! सै०
उच्चैस्त्वमसि तथैव शङ्करी
वयमेवाऽहो तुच्छा जाताः ।
सम्भूतास्त्वत्तो जानीमः
सहामहे किं क्लेशान् मातः ! सै०
नभोऽद्यापि ते भाति सुनीलं
सूर्याचन्द्र–भगण–भा–लसितम् ।
चरणतले तेऽद्यापि गभीरं
गर्जति धीरं निधिर्हि मातः !
समुच्छलन्त्यो हिमाद्रिगर्भा-
द्गङ्गा यमुनादिपुण्यनद्यः ।
पीयूषं सिञ्चन्त्यः शतधा
क्षेत्रे क्षेत्रे वहन्ति मातः !
सुजला सुफला सैवासि त्वं
महोन्नताद्यापि दिव्य-देहा ।
कुञ्जे क्षेत्रे सन्ति सुमानि
श्यामलशस्यान्यपि ते मातः !
तव श्रिया सुखि निखिलं विश्वं
वयं दुःखनिरताः निःस्वाः ।
क्रियतां त्वया किन्तु ? सैवाऽसि
त्वन्तु चिन्मयी महती मातः

* द्विजेन्द्र लाल राय महाशय–गानानुवादरूपः ।

## कजरीयुगलम् ।

चपले ! विलसन्चतुरे ! दर्शय यानं,
यामि स्वामिभवनम् ॥
तिमिराधिक्यसङ्कुला भूति-
र्मम रुणद्धि गमनम् ॥
अहमवलातिपिच्छिलः पन्था,
वहति च वर्षापवनम् ॥
त्वं शरणं नय तत्र झटिति सखि,
यत्र तापशमनम् ॥ १ ॥
रजनीमेकाकिनीह गेहे
कथमिति तमोमयीं गमये ॥
शितशरनिकरप्रहारमनङ्गो
विदधाति मम हृदये ॥
प्रसरति नीलकण्ठरुतिरधुना
दुःसह-घनसमये ॥
नूनं नदति प्रसूनशरस्य
यशो वियोगिविजये ॥ २ ॥

## प्रश्नाः ।

मनीषिभिर्यस्य धातोर्लुङो मध्यमपूरुषे ।
प्रथितं विष्णुनामाऽस्ति स धातुरभिधीयताम् ॥१॥

सुरपुरम्, निजामराजकीयम्,

प्रश्नप्रणेता—
श्रीशेषशर्मा, हेब्बालकरः

## गोरक्षा ।

ले०— श्रीलक्ष्मीनाथ मिश्रः, काव्यतीर्थः

[ अवशिष्टांशः ]



ञ्च “ तस्य तद्वचनं श्रुत्वा सु
साऽसृजत्तदा । तस्या हुंभा
त्सृष्टाः पह्लवाः शतशो नृप ! वि
मित्रार्दितान् दृष्ट्वा पह्लवाञ्
स्तदा । भूय एवासृजद् घोरा
कान् यवनमिश्रितान् ॥ त
हुंभारतो जाताः काम्बोजा रविसन्निभाः ।
सश्चाथ सम्भूता वर्वराः शस्त्रपाणयः ॥ यो
देशाच्च यवनाः शकृद्देशाच्छकाः स्मृताः ।
कूपेषु म्लेच्छाश्च हारीताः स किरातकाः ”
वाक्यैरादिकवेर्यवनानां जनिधेनोरङ्गेभ्य इति
कारं तान् प्रत्याययन्तु भारतीयाः ? मौनावल
तेषामुत्साहसम्बर्धनम् । एकत्र लब्धावसरा उ
सीनता, पुनः कार्यान्तरप्रवृत्तौ रुणद्धि मानवम
सोत्साहम् । विविच्येदं विमुञ्चन्तु गोरक्षोदासी
ताम् । गावो यवनवशगा यथा न भवेयुस्तथा
रेयुश्चेज्जनास्तथापि गोवधविनिवर्त्तनव्यापारो
ष्टितैकांश इव भविष्यति ॥

पाश्चात्यशिक्षादीक्षा-सहवासैश्च स्वधर्मं पा
कल्पितं मन्वाना गृहीतस्वार्थसाधनधना विस्
निजधर्मायनाश्च बहवो युवानो वेदान् स्मृतिपु
तिहासग्रन्थानुपहसन्ति । तेऽपि यदि “ प

गोभ्यो लभ्यते, ताभ्य एव जाता वृषाः कृषिकार्यसाधका जनयन्त्यन्नानि, तदधीनं जीवनमस्माकम्, अतो यत्नेन रक्षणीयं गोकुलम्" इति स्वार्थसाधनधियैव यतेरन् गोपालने, तथापि सिद्धं नः समीहितम्, प्रतिहतश्च विघ्नस्यैकमङ्गम्भवेत् । निवसन्तु जनाः कस्मिन्नपि देशे, आश्रयन्तु कमपि धर्मम्, आचरन्तु च कमपि व्यवहारम्; परमुदरदरी विषमज्वालाशान्तये पयोऽन्नम्बा एवावलम्बनीये सर्वैः, तन्मूलं गोपालनमुपेक्ष्य कारणमन्तरेण कार्यं साधयितुमुद्यतास्ते कां दिशां दशास्वा गमिष्यन्ति इति मुहुर्विमृश्यापि नैव निश्चिनुमः ।

अधुना विषमायतेऽधिकान्तरायकण्टकिता गोरक्षापद्धतिरतो भवन्तु यथावद्गोपालने दत्तावधाना धन-धर्म-जीवनकामा राजानो, धनिनो वैश्या, विवेचनासाधना विद्वांसः, नवशक्तिशालिनो युवानश्च। नगरनिवासिनो ग्रामवासिनश्च यथा गोपालनमहत्त्वमवगत्य सम्यग्गोपालने प्रवर्त्तेरन्, तथा गोरक्षाप्रकारोपदेशेन, गोपालनजनितलाभप्रदर्शनेन च देशवासिनामुपकाराय प्रयतेरन् देशसेवकाः । "कारणगुणा हि कार्यगुणानारभन्ते"। अतो नगरनिवासिनस्तृणादेरसौलभ्येन न बहून् पशून् पालयन्ति, इति चिन्ता न कदापि बाधते; किन्तु पयोदानविरतानां धेनूनां सेवने ते भृशमुदासीनाः, मुष्टिमितं तृणमाददानास्ताः श्वासोच्छ्वासाभ्यां निजजीवनं सूचयन्ति गावः। स्वार्थपरताऽन्धीकृतानां तेषामियमुपेक्षा न गोकुलमङ्गलाय। येऽपि सुकृतशालिनो ग्रामवासिनोऽधिकं वहन्ति गोरक्षाभारम्, तेऽपि रक्षणज्ञानविरहेण मुष्टिसङ्कुलतया च पद्धतेर्गोकुलं न सम्यक् पुष्यन्ति। तेन प्रतिनगरं, प्रतिग्रामम्, प्रतिभवनञ्च यथा यथावद्गवां परिपालनं भवेत्तथोपदेशं ददतु, गोपालनशिक्षासहायकं पुस्तकं वितरन्तु, धेनूनामुपकारसाधकं कार्यञ्च प्रचारयन्तु सज्जनाः, अपनयन्तु च अज्ञानताजनितोदासीनतां जनतायाः। दयाविरहितहृदया लोभोपहतचेतनाः केचित्कार्योपरतान् जरद्गवान्, पयोदानविरता धेनूश्च गोमांसविक्रयिहस्ते विक्रीय नार्जयन्तु स्वल्पेन धनेन महत्पातकमिति शिक्षणीयास्ते सम्यगुपदेशेन, समाजसमित्या वा तान् दुराचारान्निवर्त्तयन्तु व्यापारादस्मात् ।

दोहनावसाने गोपालवशगा गावः पथ्यमपथ्यम्बा जलम्पिबन्त्यश्चरन्त्यस्तृणं सायं घोषमागताः दुग्धदा एव मुष्टिमितं तृणं लभन्ते, पुनश्च दोहावसाने गोमयमूत्रसञ्जातघनपङ्के, प्रकाशरहिते, सङ्कीर्णे, पवनप्रवेशरहिते गृहे स्वामिना बद्धा धेनवः उपवेशनस्थानमप्यलभमाना महता क्लेशेन रजनीं दुःखजननीमिव मन्वाना व्यतिवाहयन्ति। केचित्तु गोस्वामिनः शीतातपत्राणं मानवमात्रोचितं मन्यमाना, आतपाच्छीताद्वा गवां परित्राणाय नैव यत्नं विदधति, इत्यपि गवामहितजनकम्, तच्चापि परिहरणीयम् । घटोध्न्योऽपि युवत्योऽपि गावः उपेक्षया क्षामक्षामाः कालेनाल्पीयसैव पयोदानशक्तिरहिता व्याधिवशाश्चासमये जीवनं त्यजन्ति ! निरस्यालस्यं क्षीणानां व्याधितानां च धेनूनां यत्नेन सेवा विधेया, औषधदानेनोचितेनोपायेन च व्याधिरपनेयः। धूलिपङ्कलिप्तावयवानां गवां व्याधयो जायन्ते, तेनावश्यकं स्नानं तेषामपीत्यपि न विस्मरणीयम् । सजातीयेनासगोत्रेण वृषेण सङ्गता गर्भिण्यो धेनवो बलवत्सन्ततयः पयः शालिन्यश्च भवन्ति, निकृष्टेन सगोत्रेण सङ्गता पुनर्गर्भं दधानास्ता एव हीनाः

प्रजा जनयन्ति, स्वल्पदुग्धाश्च भवन्ति, अतो विषयेऽस्मिन् जनाः सावधाना भवन्तु । घोषे तृणादिकं लभमाना अपि न तथा तोषमाददते गावः, यथा वने स्वच्छन्दं विचरन्त्योऽतो वनविचरणोपायश्च विधेयः, भगवता गवामुपकाराय वनेऽनेकमौषधमुद्पादि, तत्र स्वच्छन्दं तृणं चरन्त्यो विनिवृत्तव्याधिप्रसराः परिपुष्टाङ्गाश्च भवन्ति गावः । अधुना भूपतयः करपरिवर्धनाय वनानि विनाशयन्तो गोविचरणभूभागमपि क्षेत्रं कल्पयन्तो जनयन्ति गवां लोकानाञ्चाहितम् । यदि केचिद्भूविभागेशा दयापरवशीकृतचित्तवृत्तयो विसृजन्ति च भूभागम्, तमपरेऽभ्यासक्षेत्राक्षपाविरहिताः पातकदुर्बलाः कृषीवलाः शनैःशनैः क्षेत्रे निजे सम्मेलयन्ति, अर्जयन्ति गोवधसदृशं महत्पातकम् । राज्ञामभ्यर्थनया, करदानेन च यथा भवेत्तथा गोसंचरणभूमिविस्तारो विधेयः सर्वत्र रमासीमानुकम्पा-भाजनैर्जनैः । एवमन्यैश्च गोवंशसम्वर्धनानुकूलैस्तैस्तैरुपायैः समुद्धरन्तु विपल्लालितं भारतं पुण्यशालिनः । आत्मानं स्वदेशञ्च सदोपकुर्वन्तु बहुलेन गोरक्षणजनितेन सुकृतेन, लाभेन च । कार्येऽस्मिन्ननिवार्ये साहसमाश्रयन्तु, श्रेयोऽनुभवन्तु दयापन्नमानसा गोकुलसेवका इति भूयो भूयोऽभ्यर्थये जगतामधीशं गोकुल-गोपाल-रक्षण-गृहीत-गोवर्धनं राधारमणम् ।

ॐ शान्तिः ।

—:*:—



# सामुद्रिक-परिचयः ।

( ले०—श्रीकालिका प्रसाद शर्म्मा, )

राजज्यौतिषी, रामनगर स्टेट ।



यदुक्तम्पूर्वप्रबन्धे पुरा महर्षयो सामुद्रिक शास्त्रेण जनानामखिल जीवनचरितानि कथयन्तिस्मेति तदाऽऽसीत्तत्कालीनेयमेव प्रण यन्निजात्मजानां शुभाशुभफलानि महर्षिभ्यः करार्य, यथावसरं संस्मृत्य च, तेषां पितरौ ये योचितं कार्यमकुरुताम् ।

एतादृक्कार्यं प्रायो महर्षिणा नारदेनैवा रूपेणाक्रियत । तद्विरचितं सामुद्रिकशास्त्रञ्चा पलभ्यते । यस्मिन् खां प्रधानां मत्वा, कृत्स्ना फ कथन-परिपाटी प्रदर्शिता । रेखाणां करचरण-ल लानीति स्थानत्रयं वर्तते । विचिन्त्य खलु सर्वा पेक्षया करं प्रशस्ततमं तत्रत्याभी रेखाभिस्समस्त फलमुक्तम् । यथा—

" अङ्गे हस्तः प्रशस्तोऽयं शीर्षादपि विशिष्यते । साध्यन्ते पाठशौचाद्या धार्मिका येन सत्क्रिया ॥"

श्रीसमुद्रमुनिनापि सर्वाङ्गेभ्यो लक्षणानि वि फल-कथने काठिन्य मवगम्य पाणिपञ्चा सौकर्यं स्वीकृतम् ।

यथाः--

सर्वाङ्ग लक्षणं प्रेक्ष्य व्याकुलानां नृणां मुदे ।

श्रीसमुद्रेण मुनिना तेन हस्तः प्रकाशितः ॥

दर्शनात्स्पर्शनाऽच्चापि तथा रेखाविमर्शनात् ।

हस्तज्ञानं त्रिधा प्रोक्तं पुरातन महर्षिभिः ॥

यतः प्रथममेवाथ स्वं पाणिं दक्षिणं पुमान् ।

पश्येद्वामन्तु वामाक्षी निजपुण्यप्रकाशकम् ।

नारदश्च सामुद्रिकस्याखिलन्तत्वम्पाणावेव मन्यते ।

यथाः--मन्त्राक्षराणामोङ्कारे यथातत्वम्प्रतिष्ठितम् ।

तथा सामुद्रिकस्यापि तत्वं हस्ते निवेशितम् ॥

करस्थ-पितृ मात्रायुष्यरेखाः गङ्गा-सरस्वती-यमुना-नाम्ना, पञ्चाङ्गुलीश्च पञ्चनदी संज्ञयोक्ता । यथाः--

पितृरेखा भवेद्गंगा मातृरेखा सरस्वती ।

आयूरेखात्र यमुना तत्संगस्तीर्थ मक्षयम् ॥

अङ्गुष्ठादिपञ्चनदी नमस्कारेषु चिन्तयेदित्यादयः करे द्वादश-राशीनां द्वादश-मासानां सिताऽसि-पक्षयोरहोरात्रस्योत्तरायण--दक्षिणायनयोरश्वि-न्यादि सप्तविंशति नक्षत्राणां पञ्चदशतिथीनां सप्त-वाराणां नवग्रहाणां द्वादशलग्नानां स्थानादीनि निरूपितानि, यैर्जन्मकालिक-ग्रहमास-नक्षत्र-तिथि दिन-लग्नादीनां ज्ञानं भवति, विधाता स्वयमिमां जनानां विचित्रां जन्मपत्रिकां निर्मितवानिति प्रमा-णीकरोत्यधस्तनःश्लोकः ।

"अक्षया जन्मपत्रीयं ब्रह्मणा निर्मिता स्वयम् ।

ग्रहा रेखा प्रदा यस्या यावज्जीवं व्यवस्थिता ॥

नास्ति हस्तात्परं ज्ञानं त्रैलोक्ये सचराचरे ।"

इत्यादिरीत्यैकैकाभी रेखाभिर्विविधां प्रणाली-मनुसृत्य विविधानि फलानि कथ्यन्ते; यानि यथा-र्थानि भवन्ति ।

प्राचीनाः गजाश्वशैलहलाब्जपुष्करिणीत्यादि-रेखाभिः फलान्युक्तवन्तस्तास्तु प्रत्यक्ष-गजादिरू-पेण मानवानाङ्कराब्जेषु न भवन्ति; किन्त्ववश्यं तासां कानिचिद्विशिष्ट-चिह्नानि सन्ति, येषां ज्ञानमाभिरेव भवति ( सम्यक् प्रदर्शितानि रेखाणां रूपस्थानानि मदीये नव-मुद्रिते सामुद्रिक-रहस्याख्ये ग्रन्थे )

नवीनाः ( गौरण्ड-जातीयास्तन्मतानुयायि-नश्च ) आसामनेकसंज्ञां मत्वाऽनेकानि शुभाशुभ फलानि कथयन्ति । यत इमाः कामधेनवः कल्प-लतिका वा सन्ति । अतः पाणौ या रेखा विधात्रा विनिर्मिताः, ताभिः केचिदाचार्य्या आजन्म मरणान्तं शुभाशुभफलानि कथयन्ति, केचिद्द्वीपान्तरीया अत्र नवनवाविष्काराणि कथयन्त्यत एव "रेखा काम-दुघा स्मृते" ति महर्षिणोक्तं सत्यं प्रतिभाति ।

अस्मिन्विषये यावद्विचारः क्रियते तावदुत्तमो-त्तमं ज्ञानं भवितुं शक्नोति । परन्त्विदानीमनेन शास्त्रेण प्रधानतया कार्याणि न भवन्तीति महदा-श्चर्य्यम् ।

नास्मिञ्छास्त्रे पञ्चाङ्गस्यावश्यकता, न ग्रहस्पष्ट ग्रहदशान्तर्दशादिगणितप्रयासक्लेशाङ्गीकरणं वर्तते; किन्तु केवलं रेखाभिर्लक्षणैर्वाखिलवृत्तान्तस्य तथ्यं ज्ञानं भवति ।

भवत्यसौकर्य्यं जन्मकुण्डलीतः फलकथने बहु-भिः कारणैरिति विधातृनिर्मित--जन्मकुण्डल्युप-योगेनार्थार्जनं कर्तव्यमतोऽस्य प्रचारार्थं देववाण्यां मातृभाषायाश्चोत्तमोत्तमग्रन्थानामावश्यकता वरी-वर्तीति ।

## नामगुप्तिः ।

लेखकः—प्रश्नोत्तरान्त्यवर्णाभिधः ।

राजीवापरनाम किस्वद सुहृ-
त्किंश्टङ्गनामान्तरम् ?
कशब्दोऽवनिवाचकोऽस्ति भगवन् !
को दानवानां गुरुः ?
को दुर्नामकरोगनाशक इद-
म्बुद्ध्या विचार्य्याशु वै
पत्राध्यक्षमहोदयस्य निकटे
प्रेष्यं प्रकाशाय तत् ॥ १ ॥

पञ्चकस्यास्य प्रश्नस्य, उत्तरान्त्यैस्तु वर्णकैः ॥
महनीयैः सुविद्वद्भिर्विज्ञेया लेखकाऽभिधा ॥ २ ॥

हरगोविन्द मिश्रः,
साहित्याचार्यः

## समस्यापूर्तिः ।

सच्छास्त्रार्णवपारगा इह बुधा-
द्विना अहो सन्ति ये
ते चेङ्ग्लैण्डविवर्त्तमाननयतः-
प्रायोऽनभिज्ञास्तथा ॥
ये वैदेशिकराजनीतिनिपुणा-
मिथ्याभिमानोद्धता,
बुध्यन्ते विदुषां न सूक्तिमिति हा-
'किं कम्प्रति ब्रूमहे' ॥ १ ॥

संसृतेः श्रेयसो मूलं, स्वधर्माचरणं सदा ॥
ज्ञात्वाप्येतन्न कुर्वन्तीत्यारतं तेन 'भारतम्' ॥१॥

स्वस्तिश्री १०८ मल्लापुर- महाराज-श्री
श्रीप्रकाशसिंह-वर्म-महोदयः

## श्री देवीप्रसादकविचक्रवर्त्तिमहोदय नाम्महामहोपाध्यायपदोपलब्धौ।

## अभिनन्दनम् ॥

सद्भिर्वयोदितमहाः समहामहोपा-
ध्यायेत्युपाधिमधिगम्य विभासिताशः
"देवीप्रसाद" कविमण्डल-चक्रवर्त्ती
देवीप्रसाद इव साकृतिराचकास्ति ॥
श्रीमन् ! भवद्भिरमिहामृतमुद्गिरन्ती-
माधाय कः श्रवणयोर्न भृशम्प्रसीदेत्
किञ्चिन्नमत्र यदि तन्नभवत्वदास्ये
लास्ये चिरादमरगीरनुरज्यतीव ॥ २
सौभाग्यमेतदुदपद्यत तत्पदव्या-
भव्यात्तरैर्यदवतंसितनामतस्ते ॥
अग्रेसरत्वमुपगम्य चिराय साऽऽदा-
ताऽऽदावुदीरिततया गुरुताम्प्रभूताम्॥
आस्तां कियान् परपद्दापद्दतौ पटीया-
नीयान्नवीनरचनेन कियान्यशश्च ॥
शक्नोति कस्त्वदितरः सुकवित्वराज्ये
साम्राज्यमेतुमधुनाऽवनिमण्डलेऽस्मिन्
नैवोपमानमधुनाऽनुभन्विपश्चित्-
कश्चिद्गवेषयति पण्डितराजमेव ॥
नाङ्गीकरोमि तदहं यदसौ यवन्या-
ऽनन्यान्तरः सुचिरमाकलयद्विलासम्
तद्दुःखभञ्जनकवेरथ रामरत्याः-
सत्याः सुपुण्यपरिणाममुदाहरामि ॥
आशास्यते च पुनरस्य कवीश्वरस्यो-
रस्योऽप्यवश्यमचिरस्य मुदाऽभ्युदीयात्

मु० वेहटा,
पो० बेनीपट्टी,
जि० दरभंगा

श्रीभूपनारायणझा, शर्मा
( व्याकरणाचार्यः )

# महामहोपाध्याय-पदाभिनन्दनम् ।

महाकवि-सुतः स्वयं कविवरः स शुक्लः कुले
विशुद्ध-हृदयः स्फुरत्सकलशास्त्रसारः कृतौ ॥
महामहिम शालितां यदि गतः स्वयं साम्प्रतम्
सुशोभयति तत्पदं जगति भूप-विश्राणितम् ॥ १ ॥

दुःखभञ्जन-महाकवेः सुतः,काव्य-पाठन-प्रगल्भ-पण्डितः ।
सुप्रभात-पठनीय-सद्गुणः शोभितो नृपतिना पदाङ्कनात् ॥ २ ॥

देवीप्रसादःकविचक्रवर्ती सम्भावितो भारत-शासकेन ।
महामहोपाधि-समर्पणाद्यत् तन्मण्डितं तत्पदमेव तेन ॥ ३ ॥

पूर्वमेव कविचक्रवर्त्तितां प्रापितो निजगुणैर्मनोहरैः ।
राजतेऽधिकतयाऽधुना कवी रत्नकाञ्चन-समागमो यथा ॥ ४ ॥

अयि विबुधा वक्तव्यं किमिह विशेषात्पुरो भवताम् ।
श्रीमन्महामहोपा-ध्याय-पदं शोभतान्त्वद्य ॥ ५ ॥

नानाशास्त्र-विचार-सार-निपुणः सत्काव्य-जन्मप्रदः
कृत्याकृत्य-विमोह-दीर्घ-रजनी श्रीसुप्रभातोद्भवः
श्रीदामोदर-सेवनाप्त-सुमतिः केदार-भक्ति-प्रियः
सम्राजाप्तपदो विभातु नितरां देवीप्रसादः कविः ॥ ६ ॥

जयति जगति सोऽयं काशिकश्छात्र-सङ्घो
जयति च पदमेतत्काञ्चनं गन्धमाप्तम् ।
जयति भुवनपालः पञ्चमोजार्ज-सम्राट्
जयति च गुणगौरो भारतेशोऽरविन्दः ॥ ७ ॥

संस्कृत-च्छात्र-सङ्घ-कार्यालयः,
काशी ।
भाद्र-कृष्ण-प्रतिपत्, रविवासरः, १९८४.

श्रीमतां सेवकाः—
संस्कृत-छात्र-सङ्घ-सदस्याः,




# ब्राह्मण-सङ्घः ।

( ले०— *विमर्शी विद्वान्* )




अयि भो महानुभावा विद्वांसो ब्राह्मणाः ! सर्वतोऽपि महासभायां, गोष्ठ्यां, समाजे, मार्गे, चतुष्पथे, गृहे, क्षेत्रे, धूमानसि, जाग्रत्स्वप्नयोश्च यत्रकुत्रापि सम्प्रति देशोद्धार-कथा-प्रवृत्तमानवानां ब्राह्मणा एव आक्षेपप्रहारास्पदीभूता इति नाविदितं देशकालात्मविदां विदुषाम्

यः सम्यक् प्रचलितुमपि न जानाति सोऽपि उपस्थितेऽवसरे न विचलति ब्राह्मणान् दृढ-प्रहारं प्रहर्तुम् । अहो आश्चर्यम् ! येषां ब्राह्मणानां नाम ग्रहणतो महतां चक्रवर्तिनां सम्राजामपि हृदयकम्पस्तावन्न निवर्तते स्म; यावत्ते तैर्ब्राह्मणैः कृतं स्वसाधुवादन्न शृण्वन्तिस्म । इदानीन्त एव ब्राह्मणाः सर्वतोऽपि सर्वथा सर्वैरवज्ञायन्ते इत्यत्र केनापि महता तेषान्दुष्कृतेन भाव्यमित्यत्र नास्ति सन्देहः ।

अस्तु नाम, मम तु अल्पमतौ यत् किञ्चित्प्रति भाति तदिदानीं सुप्रभात-पाठकानां महोदयानां पुरः उपस्थापयामि तेऽत्रविषये स्तोकमपि अध्यवसास्यन्ति चेन्मम प्रयासः साफल्यमुपयास्यतीति मे महती आस्था । इदानीं सर्वेष्वपि ब्राह्मणव्यतिरिक्त-वर्णेषु सर्वे स्वजातिमुन्नेतुं सर्वतोऽपि सर्वथा स यतन्त एव दृश्यन्ते । विहार-प्रान्तस्थाः काय संयुक्तप्रान्तस्थैः, मध्यप्रान्तस्थैः, वङ्गीयैः स सर्वविधमपि स्वकीयं व्यवहारं कुर्वन्ति कारयन्ति एवमन्येऽपि सर्वे क्षत्रियवैश्यादयः यत्र कु वसेयुः; तेषां परस्परं अभ्यवहरणपरिणयादि हारे न कश्चन दृश्यते विरोधः । परन्तु ब्राह्मणा एवम्विधा अवलोक्यन्ते येषां व्यवहारे आचा नास्ति परस्परमैक्यम् भोजनादीनां कथा तु दूरे तु; परस्परोपवेशनभाषणयोरपि पार्थक्यम् विद्यते । श्रीमद्भिः जगद्गुरुभिः श्रीशङ्कराचार्य र्या दशविधानां ब्राह्मणानां व्यवस्था स्थिरी "सारस्वताः कान्यकुब्जा गौडमैथिलकोत्कलाः" दि; तत्र गौडभेदेषु परस्पर-भोजनपरिणयादि तु दूरे तिष्ठतु; एकस्मिन्नपि भेदे एवम्पार्थक्यं वि येन ते न शक्नुवन्ति परस्परमभ्यवहरण-परि नादिकृत्यं विधातुम् । पश्यन्तु कान्यकुब्जा एव एकस्मिन् सरयूपारनिवासिभिः सह ना मूलकान्यकुब्जानां कोऽपि सम्बन्धः तेषु स पारगेष्वपि नास्ति परस्परमभ्यव्यवहरणादि-व्य हारः । तत्रापि शतशोऽवान्तरविभेदाः स सन्ति ।

परस्परेण भोज्यान्ना द्विजास्तु विदितान्वयाः । स्ववृत्त्योपार्जितं मेध्यमकेशकमिमन्तिकम् । (हा

इति धर्मशास्त्रवचनं जागर्ति एव । प कोऽवलोकयति धर्मशास्त्रं, श्रुत्वापि क इ तदनुगन्तुम्, सर्वेऽपि नेत्रे निमील्य "अन्धेन नी माना यथान्धा" इति श्रुतिवाक्यं सफल

ऽपि नावदधति, तैत्तिरीयान्तर्गतशिक्षोपनिषद्वाक्यम् । "यान्यनवद्यानि कर्माणि तानि सेवितव्यानि, नो इतराणि । यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि, नो इतराणि ।" इत्यादि । येन "धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः" इति मनोराज्ञाया अवहेलया ईदृशीं कष्टां दशां ब्राह्मणा एव अनुभवन्ति; यत् सर्वत उपहास्या स्तिरस्करणीया निदास्पदीभवन्ति इति कालमहिम्न एव विलसितम् ।

अहं सर्वान् सानुरोधस्पृच्छामि यदेवं समाजधौरेयाणां श्रीमतामीदृशी अवस्थास्ति चेत्कथं सनातनोधर्मः पुष्पितः फलितो वा भवितेति विमृशन्तु भवन्तः । कथं वा अपरे वर्णा भवदनुगामिनो भविष्यन्ति, इदानीन्तु "सङ्घे शक्तिः कलौ युगे" इतिनियमस्य भवन्त एव भञ्जकाः; तर्हि कथं स्वाधःस्थित-वर्णेषु स्वाभ्यर्हितत्वं स्थापयिष्यन्ति ।

"एकपङ्क्तौ न भोक्तव्यं ब्राह्मणैःस्वजनैः सह ।
को हि जानाति किं कस्य प्रच्छन्नं पातकम्भवेत्"

इति वाक्यमपि एकपङ्क्तिभोजनं निषेधति, यच्च भवन्तो निःसङ्कोचमाचरन्ति । उभयथापि धर्मशास्त्रविरुद्धमेवाचरन्ति यद् ब्राह्मणैर्निर्मितं पाकन्न भुञ्जते, अपितु स्वजनैः सह एकपङ्क्तौ उपविश्य भुञ्जते । अत्र विषये पञ्चद्राविडा एव समीचीना धर्मशास्त्र-पालका दृश्यन्ते; यत्ते स्वजातिषु परस्परान्नं भुञ्जते परन्तु एकपङ्क्तौ न भुञ्जते, तत्र भस्मचूर्णादिभिः पृथक् पङ्क्तिं कृत्वैव भुञ्जते । *यत्र धर्मशास्त्रमप्यस्ति यत्, 'भस्मना कृतसंस्कारा एकपङ्क्तिर्न दुष्यति' इति । अतएव तेषु अस्ति अपि कियान् परस्परोपकार्य्योपकारकभावः । परन्तु पञ्चगौडमध्ये तु "ब्राह्मणो ब्राह्मणं दृष्ट्वा श्ववद्धै गुर्गुरायते" इति आबालप्रसिद्धा लोकोक्तिरेव व्यञ्जयति परस्परमनैक्यम् ।

अतः—विचारवतां विदुषां संस्कृतच्छात्राणाञ्च प्रथमकर्तव्यमिदमापतति यत् परस्परम् ऐक्यसम्पादनाय धर्मशास्त्रानुकूलमेव व्यवहरन्तु; नाविदितमूलां समाजविध्वंसकरीं रुढिम् अनुसरन्तु इति; येन ब्राह्मणानां परस्परमैक्यसम्पादनेन ब्राह्मणजातेरुत्तरोत्तरावृद्धिः स्यान्न परस्परमीर्ष्याकालुष्यादि-प्रवाहसम्वृद्धिः इति ।

येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात् सतां मार्गं तेन गच्छन्नरिष्यति ॥

इत्यादिवाक्यन्तु सदाचार-कुलाचार-विषयकम्, नहि दोष बहुलायाः दुष्प्रथाया अनुसरण-पोषकम्; येन च अन्येषां धर्मशास्त्रवचसां बाधः स्यादिति । अन्यच्चावदधतु भवन्तः श्राद्धादिषु सपात्रिकश्राद्धे ब्राह्मणक्षत्रियवैश्यानामपि श्राद्धभोजिनो ब्राह्मणा एवेति त्रिष्वपि द्विजेषु परस्परभोजनादिव्यवहार उपलभ्यत एव, परन्तु; त्यजतु त्रिभिः सह परस्परभोजनादिचर्चाम्, ब्राह्मणैस्तु परस्परम् अभ्यवहर्तव्यमेव । तत्रापि दशविधभेदेषु भोजनकथा दूरे तिष्ठतु एकस्मिन्नेव भेदे ये अनेकशो भेदा उपलभ्यन्ते तेऽपि तु हेयाः ब्राह्मणश्रेयोविधानेन जगत्कल्याणं चिकीर्षद्भिः ब्राह्मणरूपैः सुधीभिरिति;

* पञ्चद्राविडास्तु न केवलं परस्परान्नं भुञ्जते, एकपङ्क्तावपि ते भोजनं कुर्वन्ति । गुर्जरा अप्येवं कुर्वन्ति । गुर्जराणां चतुरशीतिज्ञातिजानामेकपङ्क्तौ भोजनं प्रसिद्ध मेव—( सम्पादकः ) ।

येन परस्परं प्रथमतोऽभ्यवहरणादिनामिलिताः ब्राह्मणा ब्राह्मणसङ्घं विधाय जगतः क्षेत्रेऽवतीर्णाः स्वकीय-सङ्घशक्त्या धर्ममुत्प्लावयितुं प्रवृत्तानाम् इदानींतनराजनीतिनायकानाम् मुखभञ्जनं कुर्वन्तः स्वालौकिककर्तव्येन पुनरेकदा भारतं स्वपदे स्थापयन्तु इति। अवश्यं विदाङ्कुर्वन्तु भवन्तः, यत् ब्राह्मणानामेवौदास्येनेदानीं यस्य मनसि यदायाति स एव तस्य प्रचारको भूत्वा भारतनेतैव भवितुमिच्छति भवति च "घटं भिन्द्यात् पटं भिन्द्यात् गदर्भारोहणं चरेदिति न्यायेन। परन्तु उत्थितेषु ब्राह्मणेषु, स्वकीय-सङ्घद्वारा च प्रवर्तिते धर्मचक्रे, शक्तिरस्ति कस्यचन; यः तेषाम्पुरः स्थातुमपि वाञ्छेत् इति।

---

# लावण्यमयी।

[ आख्यायिका ]

( ले०—उपन्यास-सम्राट् श्रीकिशोरीलाल गोस्वामी )

## नवमः परिच्छेदः।

पत्र-प्रपञ्चः।

प्रियां विपज्जाल-समावृतां माम्
निशम्य शीघ्रं त्यज वा गृहाण।
त्वमेव सर्वार्त्तिहरः प्रियो मे
" वस्तु मिच्छामि गृहे परेऽस्मिन्॥
—श्रीवासुदेवाचार्यः



निशीथे स्वसहचर्या र... सहैकासने स्थिता कुमारी ... ण्यमयी, स्वच्छं श्वेतञ्च ... पुटकं ( Letter Paid ) ... त्वा, समादाय च लेखनीं ...स्य प्रोवाच—सखि, पत्र-प्रारम्भे किमपि ... सम्बोधनं देयमित्ययं शिष्टाचारः, अतो वद, प्र... मेव कीदृशं सम्बोधनं देयमिति ?

रजनी—शृणु सखि! ननु सन्ति ... सम्बोधनानि। तान्यहं ब्रवीमि। तेषु किम... द्वे, त्रीणि वा सम्बोधनानि, यथा रुचि विवि... पत्र-प्रारम्भे शोभनैरक्षरैर्विलिख।

लावण्यमयी—अस्तु! वद तावत्!

रजनी—लिख,—हे हृदय-हर! हे चित्त-चौ... हे मानस-मोषक! हे तरुणी-तस्कर! हे प्रणयि... पश्यतोहर! हे काम-किङ्कर! हे मनोभव-भक्त... मार-दास! हे मदन......

लावण्यमयी—( निर्भर्त्स्य ) विरम दुष्टे! ना... मेवंविधानि दुःसम्बोधनानि लेखिष्यामि।

रजनी—तर्हि एवं लिख, जीवितेश! स्मर-गर... खण्डनम्, तव शिरसि मण्डनम्, गृहाण त्व... ममपद-पल्लवमुदारम्।

लवण्यमयी—( लेखनीं प्रक्षिप्य ) धिक्, प... हासप्रियां त्वाम्। नाहमीदृशीं पत्रिकां लेखि... कामाऽस्मि।

रजनी—तर्हीदं लिख, यत् "तव निःशु... क्रीतेयं दासी, साष्टाङ्गं प्रणमति, याचते च तवच... च्छायाम्"।

लावण्यमयी—आम्, एवंविधमेव किमपि लिखनीयम् सम्यक् स्यात् ।

रजनी—तर्हि यदिच्छसि; तदेव लिख । अहमिदानीं गृहान्तरं गत्वा शयनीयं भजामि ।

लावण्यमयी—किं रुष्टासि प्रियसखि ?

रजनी—आम्, भृशं कुपिताऽस्मि ।

लावण्यमयी—किमर्थम् ?

रजनी—तव स्वातन्त्र्येण ।

लावण्यमयी—( विहस्य ) विदग्धे ! जानामि ते चातुर्यम् । अस्तु गृहाणेमां लेखनीम् । ततः परं यदिच्छसि, तत्तु त्वमेव लिख ।

रजनी—तर्हि लिखाम्यहम् । "हे भाग्यवन् ! युवन् ! यदि त्वमिहैव नाकसुधां पातुमिच्छसि, तर्हि सपद्येव मम चरण-सरोजमधुपो भव ! त्वद्विधमाकारं पादसंवाहकमुपलभ्य ममापि समीचीनः सन्तोषो भविष्यति । संसारे त्वद्विधानां क्रीतदासानामभावो नास्ति, परन्तु मद्विधा प्रसाद-सुमुखी स्वामिनी नितरां सुदुर्लभा । तव तु "......

लावण्यमयी—( पत्रिकां समाकृष्य, छित्वा च ) विरम मुखरे ! नैवं विधां पत्रिकामहं प्रेषयिष्यामि । हा हन्त ! न जानासि दुष्टे ! "महती देवता ह्येषा पतिरूपेण तिष्ठति" ।

रजनी—जानामि मुग्धे ! पतिस्तु पत्न्याः क्रीत दास एव भवति । अपि तु; एवंविधस्ते सम्बन्धस्य कारकः स्वयमेव भगवान् कुसुमायुधः —

'शम्भु—स्वयम्भु-हरयो हरिणेक्षणानाम्,
येनाक्रियन्त सततं गृहकर्मदासाः ।'

लावण्यमयी—त्वन्तु मकरध्वजस्य कृपया-ईदृशमेव भर्तारं लभस्व । अहन्त्वेवं वदामि, यत् स्त्रीणाम् स्वामी—गतिभर्त्ता, प्रभुः, साक्षी, निवासः, शरणं, सुहृत् भवति ।

रजनी—सखि ! तवैव स्वामी यदि ममाऽपि दासो भवेत्, तदा किं भविष्यति ?

लावण्यमयी—( स्मित्वा ) किन्त्वं मम सपत्नी भवितुमिच्छसि ?

रजनी—यदि भवेदेवमेव; तदा ?

लावण्यमयी—तदा तदेव भवतु । नाहं त्वत्तो बिभेमि । मम प्रियतमस्तु ममैव भविष्यति ।

रजनी—यदि तवैव प्रियतमो ममाऽपि दासो भवेत् ?

लावण्यमयी—तूष्णीं भव मुखरे ! यदि मम स्वामी तवास्य चापलस्य वार्तां श्रोष्यति, तर्हि त्वां यथेष्टं पुरस्करिष्यति ।

रजनी—तस्मिन् पुरस्कारे अहं ज्येष्ठा, त्वञ्च कनिष्ठा भविष्यसि ।

इत्यवसर एव तस्मिन् प्रकोष्ठे प्रविश्य सुधाकरेण रजनीमवलोक्य प्रोक्तम्—ननु ज्येष्ठे ! पश्य, पश्य, समुपस्थितोऽयं ते गृहकर्मदासः । वद, किमिदानीं भणामि ।

सुधाकरमवलोक्य, लज्जानम्रमुखी भूत्वा रजनी झटित्येव तस्मात् स्थानादुत्प्लुत्य पलायिता ।

ततः सुधाकरो लावण्यमय्याः समीपे समुपविश्य, एकेन करेण तस्याः करमपरेण च चिबुकं विधृत्य, सस्मितमुवाच—इदानीं खेदं त्यज, तवामूल्यं क्रीतो दासः सेवायां सादरं समुपस्थितः ।

लावण्यमयी—प्रियतम ! गाढं विस्मिताऽस्मि, यत् त्वं कथमस्मिन् सुरक्षिते राजप्रासादे निशार्ध समये प्रविष्टः ?

सुधाकरः—यथा रत्नापहारकश्चौरः प्रविशति । न जानासि प्रिये ! विद्या—शयन—निकेतने चौरः सुन्दरकविः कथं प्रविष्ट आसीत् ।

लावण्यमयी—( सस्मितम् ) तत्र तु चौर-साहाय्य-कारिणी मालिनी, मालिनी ।

सुधाकरः—अत्राऽपि मे साहाय्यकारिणी तव ज्येष्ठा रजनी !

लावण्यमयी—परिहासं त्यज, सत्यं वद । अस्मिन् समये त्वं केन प्रकारेण प्रासादं प्रविष्टः ।

सुधाकरः—तर्हि शृणु ! सत्यमेव वदामि ।

इत्युक्त्वा सुधाकरेण किमपि रहस्यगर्भमुक्तम् । तच्छ्रुत्वा लावण्यमयी तस्य पादयोर्निपपात ।

इत्यवलोक्य, तामुत्थाप्य, हृदयमाश्लिष्य च सुधाकरेणोक्तम्—प्रिये ! किमिदं करोषि ? त्वमेव मम स्वामिनी । अहमेव तवानुगतो दासः ।

लावण्यमयी—मैवं वद, त्वमेव जीवितेशः ! अहमेव तवानुगा किङ्करी ।

सुधाकरः—वद, क्व गता ते सा मुखरा किङ्करी ?

लावण्यमयी—किं तामपि सनाथां कर्तुमिच्छसि ?

सुधाधरः—यद्येवमेव भवेत्तर्हि तत्र को दोषः ? या ते सहचरी सा ते सपत्नी भविष्यति । शृणु प्रिये ! बहिः प्रच्छन्नेन मया युवयोः परिहासवार्ता श्रुता । अत एव तां ते सहचरीं पुरस्कर्तुमिच्छामि ।

लावण्यमयी—पुरस्कारे किमात्मानमेव तस्यै प्रदास्यसि ?

सुधाकरः—यदि तदेव भवेत् ?

लावण्यमयी—भवतु तदेव । नाहं विभे[मि] मदीय मन्तःकरणमेवं वदति, यत् त्वं म[म] प्रणय-परायणो भविष्यसि । अस्तु, तिष्ठतु ता[व]दानीं परिहास-परम्परा । इदानीं वद, तव ज[ननी] अस्मिन्नेव मम शयनगृहे समायास्यति ।

सुधाकरः—तत् कथमहं जाने !

लावण्यमयी—तर्हि वद, अहं गृहान्तरं ग[मि]ष्यामि ।

सुधाकरः—इति कथम् ?

लावण्यमयी—तव मातुः सम्मुखे त्वया स[ह]महमेकस्मिन् गृहेऽवस्थातुं न शक्नोमि ।

सुधाकरः—कालान्तरे तदपि भविष्यति ।

लावण्यमयी—यदाभविष्यति; तदा भविष्[यति] अधुना त्वहं स्थानान्तरमपसरामि ।

सुधाकरः—नहि प्रिये ! त्वमत्रैव तिष्ठ । [अह]मेव प्रकोष्ठान्तरं गमिष्यामि ।

इत्यवसर एव बहिः प्रदेशात् केनापीत्थमा[का]रितम्, यत्—वत्स सुधाकर ! क्वासि ? अत्रागच्छ

सुधाकरः—( श्रुत्वा ) प्रिये ! श्रुतं त्वया ?

लावण्यमयी—आम्. अयन्ते जनन्याः स्वरः

सुधाकरः—ओम् । अस्तु त्वमत्रैव निश्च[िन्ता] तिष्ठ ! अहं व्रजामि । पुनः प्रातस्ते द[र्शनं] भविष्यति ।

लावण्यमयी—गच्छ, प्रियतम !

तदन्तरं सुधाकरस्तस्मात् प्रकोष्ठाद्बहिर्जगाम ।

**इति नवमः परिच्छेदः ।**



# पाणिनीय-प्रकाशः ।

(ले०-महामहोपाध्यायः श्रीदेवीप्रसाद शर्म्मा, शुक्लः, कविचक्रवर्ती )

अथ हल्सन्धिः ।

ोगे सति शकारेण चवर्गेण सहाऽथवा ॥
कारस्य शकारःस्यात् तवर्गस्य चवर्गता ॥ १ ॥
ामश्शेते सुखं राम श्चिनोति विमलं यशः ॥
सच्चिदानन्दरूपस्त्वं शार्ङ्गिञ्जय निरन्तरम् ॥ २ ॥
न शकारात् परस्य स्यात्तवर्गस्य चवर्गता ॥
विश्नस्तव न सन्नस्ति प्रश्नश्चायमसङ्गतः ॥ ३ ॥
योगे सति षकारेण टवर्गेण सहाऽथवा ॥
सकारस्य षकारस्स्यात्तवर्गस्य टवर्गता ॥ ४ ॥
ष्चैते ब्राह्मणाः सन्ति रामष्षष्ठोऽयमागतः ।
पितुर्वाक्यादसौ रामष्टीकते खलु काननम् ॥ ५ ॥
भीमः पेष्टा जरासन्धं युद्ध इत्यब्रवीद्धरिः ।।
तट्टीका सुतरां भाति भोश्चक्रिण्ढौकसे कुतः ॥ ६ ॥
पदान्तोयष्टवर्गस्ततूपरयोर्नाम्बिभिन्नयोः ।
नगरीभिन्नयोश्चापि तथा नवतिभिन्नयोः ॥ ७ ॥
न षकारटवर्गौ हि स्तः सकार-तवर्गयोः ।
षट्सन्त इह वर्त्तन्ते षट् ते कार्शीमयासिषुः ॥ ८ ॥
पदान्तो यष्टवर्गस्तत्परयोरिति भाषणात् ।
इट्टेसर्पिष्टमाद्येषु प्रयोगेषु न दुष्टता ॥ ९ ॥
नाम्-भिन्नयोरिति प्रोक्ते-ष्षण्णामित्यत्र साधुता ।
नगरीभिन्नयोरित्याभाषणात्सिद्धिमागताः ॥ १० ॥
षण्णगर्य्य इहेत्याद्याः प्रयोगा इति बुध्यताम् ।
षण्णवत्यादय श्शब्दाः सिद्धा नवति भिन्नयोः॥ ११॥
इति निर्देशतस्सन्ति विबोध्यमिति बालकैः ।
तवर्गस्य टवर्गो न स्यात्षकारे परे सति ॥ १२ ॥
एते पञ्च महामूर्खाः सन षष्ठोऽयं प्रतीयते ।
पदान्तस्य यरः स्थाने वाऽनुनासिक इष्यते ॥ १३ ॥
परेऽनुनासिकेह्येतद्बोध्यं विद्यार्थिभिर्जनैः ।
एतन्मुरारिरायातो वनं गाश्चारयन्ननु ॥ १४ ॥
एतद्मुरारिरार्त्ताय धनं मे कृपयाऽददात् ।
स्पर्शस्यैव यरः स्थाने भवत्येषोऽनुनासिकः ॥ १५ ॥
अतश्चतुर्मुखाद्येषु प्रयोगेषु न दुष्टता ।
पदान्तस्य यरः स्थाने नित्यं स्यादनुनासिकः ॥ १६ ॥
प्रत्ययावयवीभूते परे लोकेऽनुनासिके ।
तन्मात्रं धन मासीन्मे चिन्मयं ब्रह्म गीयते ॥ १७ ॥
भत्वाद्यवादिकगणे दकारस्य निपातनात् ।
ककुद्मानित्ययं शब्दः सिध्यतीति विबुध्यताम् ॥१८॥
भवेत्परसवर्णस्तोर्लकारे तु परे सति ।
तल्लयो न ममाऽभीष्टो विद्वाँल्लिखति पुस्तकम् ॥१९॥
भवतीह नकारस्य लकारस्त्वनुनासिकः ।
भवेत्पूर्वसवर्णो वै स्थास्तम्भोः परयोरुदः ॥ २० ॥

[ क्रमशः ]

## संस्कृत-साहित्य-समाजस्य

# विशिष्टाधिवेशनम् ।

१९८४ वैक्रमाब्दीय-भाद्रकृष्ण-प्रतिपदि रविवासरे ( १४-८-२७ ) स्थानीये टाउनहाल नाम्नि सभामण्डपे महता समारम्भेण विशिष्टाधिवेशनम्

समपद्यत । वर्षत्यपि पर्जन्ये जन-समूहस्योपस्थितिरसाधारणी आसीत् । काशीस्थमान्य विद्वत्सु—

म० म० प्रमथनाथभट्टाचार्याः, श्री मदनन्तरामशास्त्रिमहोदयाः, म० म० प्रभुदत्तशास्त्रिणः, श्री सभापतिशास्त्रिणः, श्री अम्बिकाप्रसाद शास्त्रिणः, श्री चित्रस्वामिशास्त्रिणः, श्री विद्याधरवेदाचार्याः, श्री रघुवीरमिश्राः, वैद्याः, श्रीराजनारायणशास्त्रिणः, श्रीमहादेवशास्त्रिणः, श्रीपूर्णचन्द्राचार्याः, श्रीगिरीशशुक्लाः, श्रीदामोदरशास्त्रिणो भिषगाचार्याः, श्रीतारादत्तपन्त-महोदयाः, अन्ये च भूयाँसो विद्वाँस आसन् ।

तत्र सर्वप्रथमं श्रीमतां दामोदरशास्त्रिणां भिषगाचार्याणां सभापतित्वे, संस्कृतच्छात्रसङ्घस्य पाक्षिक मधिवेशनं समभूत् । तत्र प्रथमं सुप्रभातसम्पादकेन श्रीकेदारनाथशर्म्मणा छात्रसङ्घस्य संस्थापन विषये संस्कृतच्छात्राणां वर्तमान-स्थितिविषये च महत्वपूर्णं विशदञ्च व्याख्यानं दत्वा सङ्घस्य नियमा उद्देश्याश्च वशदीकृताः । तदनन्तरञ्च श्रीमतां मदनमोहनशास्त्रिणां छात्रसङ्ग्रन्थनमधिकृत्य सुललितं भाषणमभूत् । ततश्च श्रीमता गोपालशास्त्रिणा सङ्घस्यावश्यकताविषये ओजःपूर्णं भाषणं प्रदत्तम् । तदनन्तरं श्रीमतां सभापतीनां दामोदरशास्त्रिणां प्रभावशालि भाषणं जातम् । एवं छात्रसङ्घस्याधिवेशनं समाप्तिमगमत् ।

तदनन्तरं श्रीमतां पूज्यपादानामनन्तरामशास्त्रिणां सभापतित्वे श्रीमतां चन्द्रशेखरधर-मिश्राणामायुर्वेद-विशारदानां व्याख्यानारम्भः समजनि । सूर्योदय-सम्पादकेन श्रीमता विन्ध्येश्वरीप्रसादशास्त्रिणा प्रदत्ते मिश्रमहोदयानां परिचये, अन्तः पूज्यपादाः म० म० प्रमथनाथ भट्टाचार्याः, चक्रवर्ति-महोदयाश्च सभाभवनमलमकार्षुः ।

ततश्च श्रीमतां प्रमथनाथ भट्टाचार्य—महोदयानामाज्ञया श्रीगोपालशास्त्रिणा श्रीमतां चक्रवर्ति महोदयानामभिनन्दनम् पठितम् । मद्भिः प्रमथनाथ भट्टाचार्यमहोदयैश्च तत् भ्यः कविचक्रवर्ति-महोदयेभ्यः साशीर्वादं मुद्रितं सुसज्जितमभिनन्दनप्रदानं कृतम्, चक्रवर्ति-महोदयैश्च कृतज्ञताप्रकाशः कृतः ।

ततः संस्कृत-छात्र-सङ्घतः श्रीमता मणि शर्म्मणा छात्रेणाभिनन्दनश्लोकाः पठिताः । (अभिनन्दन द्वयमपि सुप्रभाते मुद्रितम् )

तदनन्तरं श्रीमतामायुर्वेदाचार्याणां कवी श्रीचन्द्रशेखरधर मिश्र-महोदयानां स्वकीयाऽ ष्कारविषये व्याख्यानमभूत् ।

ततश्च श्रीमद्भिः प्रमथनाथभट्टाचार्य-महो रुपसंहारे प्रभावशालि मननीयञ्च भाषणं प्रदत्त

अन्ते च श्रीमता गिरीशशुक्ल-महाशयेन स भ्यः साधुवादाः धन्यवादाश्च प्रदत्ताः ।

ततः सभाविसर्जनमभूत् ।

श्रीगोपालशास्त्री,
प्रधानमन्त्री ।



## समाचार—संग्रहः ।

**सङ्कलयिता—श्रीहरिचरण शर्मा,**

—मिश्रदेशस्य जीवनम्, स्वदेशोद्धारको वीरशिरो-[illegible] 'जगलूल पाशा' अगस्तमासस्य २४ तमे दिवसे [illegible]तः । ब्रिटिश शासनाधीनस्य मिश्रदेशस्य स्वतन्त्रतां [स]म्पादयितुमेतेन १९१४ तमेशवीये वत्सरे स्वातन्त्र्यस्या-[न्दो]लनं सञ्चालितमासीत् । ततः प्रभृति वारं वारं निर्वा-[स]न-दण्डं भुक्त्वाऽपि वीरवरेणान्दोलनं न शिथिलीकृतम् । [...]ीकृतप्राणा मिश्रप्रजाश्चास्य वीरनायकस्य कृते ब्रिटिश-[शा]सकानां प्राणान् नासिकायामकुर्वन् । १९२२ तमेशवीय-[व]त्सरे ब्रिटिशसाम्राज्येन मिश्रदेशे स्वातन्त्र्य-घोषणा कृता । [१]९२४ वत्सरे प्राधानमन्त्रिपदे जगलूल पाशा नियुक्तोऽ-[भू]त्। ब्रिटिशशासकानां महारथः प्रतियोधा मृतः ।

—दुराचारैर्यवनैर्देहली नगरे नानकचन्दस्य हत्या कृता । [अ]गस्तमासस्य २४ तमे दिवसे हिन्दूनां महती सभाऽभूत् । [न]गरे शान्तिरक्षा-प्रबन्धो विद्यते ।

### मनुष्याणां भोजनपरिमाणम् ।

सुस्वस्थो पुरुषश्चतुर्मासाभ्यन्तरे स्व-शरीरस्य परिमाण[मा]त्रमन्नं खादति ।

### मार्जारनेत्राभ्यां घटीयन्त्रस्य कार्यम् ।

चीनदेशवासिनः पुरुषः मार्जारस्य नेत्रं दृष्ट्वा सर्वथा [...]त्यं कालज्ञानं कुर्वन्ति । ते वदन्ति यत् मार्जारनेत्रे सर्वदा [प]रिवर्तन-शीले भवतः ।

## सुरभारती-सूचना ।

सुरभारती-व्यवस्थापकाः सूचयन्ति यदधोनिर्दिष्ट-समस्या-[पू]रकेभ्यः २१) एकविंशतिमुद्रामितः सुरभारती-पुरस्कारः [प्र]दीयेत । दीपावलीतः प्रागेव समस्याः प्रेषणीयाः ।

समस्याः—

**'धीरं धीरं ध्वनति नवनीलो जलधरः ।'**

पत्र प्रेषणस्थानम्:—**श्रीगुरुप्रसादशास्त्री व्यवस्थापकः**

**बड़ी कोठी, मीरघाट, काशी ।**

## संस्कृत-छात्र-सङ्घः ।

### पाक्षिकमधिवेशनम्

भाद्र-शुक्ल-प्रतिपदि सायं ५ वादने अगस्त्यकुण्डवीथी-स्थे शारदामठ-वेद-विद्यालये संस्कृतच्छात्रसङ्घस्य पाक्षिक मधिवेशनमभूत् ।

हिन्दू विश्वविद्यालयीय-आयुर्वेद-विद्यालय-प्रधानाध्यक्षाः, श्रीसन्तो यादवजी त्रीकमजी महोदयाः सभापतेरासनमल-मकुर्वन् ।

श्रीमत्परमहंसपरिव्राजकाचार्यवर्याः श्रीशङ्करस्वामिनोऽच्यु-ताश्रमस्वामिमहोदयाः, श्री गोपालशास्त्रिणः, श्रीगिरीशशुक्लाः श्रीकेदारनाथशर्माणः, श्रीगौरीनाथ पाठकाः, अन्ये च विद्वांसः समुपस्थिता आसन् ।

कार्यारम्भं कुर्वद्भिः सुप्रभात-सम्पादकैः श्रीकेदारनाथ-शर्मभिर्वर्तमान-संस्कृत-शिक्षा-पद्धतिमालोचयद्भिर्नवीनविद्या लयोद्घाटन-प्रस्तावः समुपस्थापितः । स च श्रीमद्भिर्गोपाल-शास्त्रिभिः समर्थितः । श्रीगिरीशशर्म्मणां प्रस्तावे निश्चितं यदागामिन्यधिवेशने विद्यालय-विधानं सुप्रभात-सम्पादका निर्माय समुपस्थापयन्तु ।

अन्ते च सभापतिमहोदयैः विद्यालयोद्घाटनमनुमोदयद्भि-रुक्तम् । यदहं प्रतिसप्ताहमेकवारमागत्य स्वस्थवृत्तं छात्रेभ्यः पाठयिष्यामीति ।

श्रीमद्भिः शङ्करस्वामि-अच्युताश्रममहोदयैरपि विद्या-लयाय स्वकीय-शारदामठे स्थानं दातुं प्रतिज्ञातम् ।

तदनन्तरं धन्यवादा दत्ताः । सभा विसर्जनञ्चाभूत् । अग्रिमाधिवेशनं तत्रैव भविष्यति ।

**शिवप्रसाद त्रिपाठी ( मन्त्री )**

### *सम्पादकीय–सूचना ।*

सुप्रभातस्य यथा समय-प्रकाशन-व्यतिकरे बहवो मुद्रिता लेखाः, प्रश्नानामुत्तराणि च मुद्रितान्यपि न प्रकाश्यमाप्ता-नीति लेखकेभ्यः, उत्तर-समाचारादिप्रेषकेभ्यः क्षमा-प्रार्थनं कुर्मः ।

—सम्पादकः

## संस्कृतच्छात्रसङ्घः ।



संस्कृतच्छात्रसङ्घस्य पाक्षिकमधिवेशनम् आश्विन प्रतिपदि, सायं ४ वादने, अगस्त्यकुण्डवीथिस्थे शारदा... दविद्यालये भविष्यति । तत्र च **प्राचीन भारते सं... स्थावस्था** इत्येतस्मिन् विषये काशीविद्यापीठस्य ...ध्यापकानां **श्रीरुद्रदेव वेदालङ्कार-महोदयानां** भा... भविष्यति । नवीन-विद्यालय-व्यवस्थाऽपि भविष्यति । ... संस्कृतच्छात्राणामुपस्थितिः साग्रहं प्रार्थ्यते ।

शिवप्रसादत्रिपाठी—मन्त्री ।



Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

आश्विनः (कन्या)
१९८४ वैक्रमाब्दाः

# सुप्रभातम् ।

चतुर्थवर्षे
षष्ठी सङ्ख्या

## संस्कृत-साहित्य-परिषद्-पत्रिका, ( कलकत्ता )—

विदितमिदं संस्कृतानुरागिणां यथा वाराणस्यां वर्त्तते संस्कृत-सहित्यसमाजो नाम कश्चित् सुप्रतिष्ठितः साहित्यसमाजो यस्य मुख-पत्रभूता सुप्रभातनाम्नी संस्कृतपत्रिका सुप्रयत्नेन कर्म्माधिकृतानां निःसरति काले काले नानारसनिबन्धानुरसा वहन्ती समीपे संस्कृत प्रणयिनाम् ।

तस्यां किल पत्रिकायां सन्दृश्यते कवितासौभाग्यम्, समालोक्यते धर्म्यो निबन्धसम्भारः, प्रतिपद्यते सन्तर्पणः साहित्यरसपिपासूनां सुगभीरो वचनसन्दर्भः, परिप्राप्यते समालोचकानां पुरःस्थापनीयः समीचीनः समालोचनवागूविस्तरः, समासाद्यते च सुमहतामतीतानां गुणोदाहरणभूतो जीवनवृत्तप्रकर्षः, काव्यदर्शनाद्यनुशीलनञ्च विज्ञा-नोपलम्भानुगुणम् । तदियं पत्री संस्कृतभाषामयवस्तूनाम् एकम-यनमिति समासेन शक्यप्रतिपादनं भवति ।

सत्यपि निबन्धादिगौरवे प्रथमतस्तावदस्याः पत्रिकाया न तथा दृष्टाभिवृद्धिः, परमद्यत्वे कर्म्मशक्त्या सुप्रकृष्टया कर्म्माधिकृतानां नात्यल्पवित्तादिलाभेन विविधचित्रादिभिरुपकरणैः सुशोभिता सेयं रञ्जयति मानसं सुमनसाम् । सम्प्रति हि यथैव निबन्धगौरवमस्यास्त-थैव चित्रादिवस्तुसम्पर्कसौभाग्यमिति चित्तसन्तर्पणतया सर्वेषामियं काम्या जाता । तदस्याः परिषत्सखीभूतायाः क्रमेण समुन्नतिमेव वयमीश्वरं संस्कृतानुरागिणो विदुषश्च प्रार्थयामहे ।

सम्पादकः—श्रीकेदारनाथशर्म्मा सारस्वतः ।

# लेखसूची ।




[ संस्कृत-साहित्य-समाजस्य मुखपत्रम् ]

तिमिरततिमुदस्यद् भेदतारा विलुम्पन्नयदधिसुरभाषाभाषि जागर्तिमुच्चैः ।
विबुध-विहग–वादै राह्वयद् भाग्यभानुम् विलसतु भुवनेऽस्मिन् सर्वतः सुप्रभातम् ॥

## श्रीकृष्णस्तवः ।

म्बालिविलासभूतकमलाकारेक्षणा मञ्जुला,
ायातकरालकालदलिनी दोलाधिरूढा वने ।
लिन्दीतट-कुञ्जकेलि-रसिका राधाविलासाकुला
ली काऽपि पिकालिकालिमसखा सालाकृतिः खेलतु ॥

—श्रीजगन्नाथशास्त्री, होशिङ्गः ।

## सुभाषितानि ।

ता वंशीधीरध्वनिरनुमितं कुञ्जभवनम्,
विलासोऽनुध्यातो, मधुरिपुरभून्नेत्रविषयः ।
ता नीवी मुक्तिं, हृदयमिद मद्वैतमभज-
जानीमः कोऽयं सखि ! मदनतन्त्रस्य महिमा ।

कस्यापि

, द्रव्यं, नैल्याद्, घटवदिति माने समुदिते
यदीदं रूपि स्यात्तदपि च भवेत्स्पर्शनगुणम् ।
मं सत्तर्कं शिथिलयितुमन्तर्व्यवसिता
तमोवृन्दं धत्ते कचभरमिषेणेन्दुवदना ॥

कस्यापि

## पुराणतत्त्वम् ।

( ले०—श्रद्धेय—श्रीरामावतार शर्म्मा, एम. ए., साहित्याचार्यः )




क्तिस्त्रिविधा—स्वभावोक्तिः, रूपकोक्तिः, अतिशयोक्तिश्च । वैज्ञानिक्य वार्ताः स्वभावोक्तिरूपाः सन्ति । अस्माकं वाङ्मये गोलविद्याऽऽयुर्वेदप्रभृतयः स्वभावोक्तिरूपा एव । वैदिकं साहित्यं प्रायो रूपकोक्तिमयम् । पौराणिक्य कथाः प्राधान्येनाऽतिशयोक्तिरूपाः सन्ति । पूर्णचन्द्रोदये समुद्रकल्लोला उच्चैस्तिष्ठन्ति । यतश्चन्द्रम्प्रति पृथ्वी भृशमाकृष्टा भवति । ईदृशं वर्णनं स्वभावोक्तिरूपं वर्ण्यते ; परन्तु यदीयमेव वार्ता—"समुद्रश्चन्द्रस्य पिता, चन्द्रस्तस्य पुत्रः, पुत्रस्य पूर्णतामवलोक्य पित

समुद्रः समुज्जृम्भते" इत्येवंरूपेण प्रतिपादिता स्यात्तदा रूपकोक्तिः कथ्यते। पुनश्च यद्येष एव विषयो एवं रूपेण वर्णितः स्यात्तदा सातिशयोक्तिः कथ्यते; यथा—"अस्ति सगरदेवो नाम राजा, तस्य चन्द्रदेवो नाम पुत्रः, गणकैरुक्तं यदस्य पिता प्रतिमासमेकवारमेव पूर्णमुखं द्रष्टुं शक्नोति—" इत्यादि।

आलङ्कारिकैरुक्तं यत्—"बालपशुपक्षिप्रभृतीनां स्वाभाविक-कार्य्याणां रूपाणाञ्च यथावस्थित-चित्रस्य स्वशब्दैश्चित्रणं स्वभावोक्तिरलङ्कारः"। "चन्द्रवन्मुखं" इत्यादि वाक्येषु मुखादिकं वर्णनीयत्वा उपमेयवस्तु विषयनाम्ना प्रतिपाद्यते। चन्द्राद्युपमानवस्तु; विषयितया समुदीर्यते। स्वभावोक्तौ केवलं विषयस्योल्लेख एव भवति। रूपकोपमाद्यलङ्कारेषु विषयविषयिणोर्द्वयोरपि पृथगुपादानं भवति, किन्तु अतिशयोक्तौ विषयी विषयं सर्वथा निगिलति। अतएवातिशयोक्तौ मनुष्याणां सम्भ्रमः सञ्जायते। केचन अतिशयोक्तिकविं भृशन्निन्दन्ति। अपरे त्वतिशयोक्तेर्मौलिकमर्थमबुद्ध्वैव वाह्यार्थाऽऽडम्बरे निपतिता व्यामोहमग्ना भवन्ति। आङ्गल भाषायामतिशयोक्तिः "एलेगरी" शब्देनोच्यते। "वेनियन" कवेः "पिलग्रीम्स प्रोग्रेस" नाम पुस्तकमतिशयोक्तेरेकं सुप्रसिद्धमुदाहरणं विद्यते। अस्माकं वाङ्मये पुराणान्यतिशयोक्तिप्रधानानि सन्ति। साम्प्रतमज्ञानां हस्ते पतित्वा, पुराणानि नितरां दुर्दशामनुभवन्ति। इमे पौराणिकाः किलातिशयोक्तीनामर्थं न जानन्ति। ते जानीयुरपि कथं! यावत् स्वभावोक्तिमयेभ्यो ज्योतिःशास्त्रादिभ्यस्तथा रूपकमयेभ्यो वेदेभ्यः पौराणिककथानां संगति र्न सुसम्पादिता भवेत्तावदेतेषां वास्त न्तर्निगूढस्तथ्यांशो न संलक्ष्यते।

प्रायः सर्वेष्वपि वस्तुषु स्त्री-पुरुषयो स्वाभाविकी विद्यते। मनुष्यः, भारते, तथा न्तरेषु, निखिलं जगत्, तदङ्गप्रत्यङ्गानां स्व दृश्याणि, कामक्रोधादिमनोभावान्, आधि शीलताम्, अघोरादिविभिन्नमतानामादर्शान् श्च पदार्थान् स्त्री-पुरुषयोः कल्पिते रूपे जा "होमर" तः "ब्राउनिङ्ग" पर्यन्तम्, ऋग्वेदात् सीदास पर्यन्तमियमेव दशा वर्तते। यदा म सम्पूर्णं जगत्, महापरिमाणनाकाशादी पुरुषत्वेनाधिगृह्णन्ति; तदा तं ईश्वर-विष्णु-शिव प्रभृति शब्देभ्य आकारयन्ति, अर्चन्ति च। त म्, सहस्रबाहुम्, सहस्रमस्तकम्, द्विबाहुम्, हुम् वा जानन्ति। तत्प्रीत्यै च पशूनाम्, पक्षि विविधव्यञ्जनानाञ्च वलिं ददति, अग्नौ जुह्वति एवमेव शरीरे ममत्वबुद्धिं कुर्वाणा मनुष्याः मेव हृषीकाणामध्यक्षम्, इन्द्रम्, शिवम्, वि अरूपम्, सरूपम् वा समामनन्ति। तमेव गामिनम्, नरकगामिनम्, भूतम्, प्रेतम्, वा मन्यन्ते।

यदाऽऽकाशादीनेव स्त्रीरूपेणाकलयन्ति, तद व सूर्याचन्द्रकुण्डलवतीं कालीं जानन्ति। वृद्धा दृश्यः कथाः गल्पोपन्यासादिवदानन्देन न्ति, पठन्ति च, नैतासु कथासु निगूढस्य निकस्य तत्त्वस्यान्वेषणे प्रयतन्ते। बाल उत्पतनशीलायाः खट्वायाः (उड़नखटोला) शृणोति, परं न तत्तत्त्वान्वेषणे स्वीयं पठनम्

...र्थं वा परित्यज्य सुदृढं प्रयतते । यस्मिन् देशे
...षाः कथानामक्षरार्थं पतन्ति, एतासामतिशयो-
...नां मूलमर्थं न शृण्वन्ति, न च ज्ञातुं प्रयतन्ते, स
...ा नूनं विनश्यति । अन्ये देशा एतस्या अवस्थाया
...सरन्ति; परन्त्वस्माकं देशोऽस्मिन्नेव भीषणे तम-
...निमग्न आस्ते, तथाचातिशयोक्तिमेव वैज्ञानिकीं
...भावोक्तिं मन्यमाना मूर्खा विप्रलम्भिता भवन्ति ।*
...र्स्तान् प्रवञ्चयन्ति । भगवता व्यासेन, भाग-
...कारेण च शेषसंज्ञकस्य सर्पस्य शिरसि संस्थापिता
...ी, एतदप्युक्तम्—'भवानेकः शिष्यते शेषसंज्ञः' ।
...न जानन्तिस्म, यदस्माकं देशीयाः सत्यं शेषसर्प-
... शिरसि स्थितामेव पृथ्वीं ज्ञास्यन्ति ।

सूर्य्य-किरणाः, हिम-विन्दुषु, काचेषु च सप्त-
...र्णाः संलक्ष्यन्ते । सप्तवर्णाः किरणा एव पौरा-
...कैः सप्ताश्वरूपेणोपवर्णिताः । अश्वधातो र्व्यापन-
... शीघ्रगमनं वाऽर्थः । अत एवाश्वशब्दो वेदे
...रणार्थं, घोटकार्थ च प्रयुज्यते । प्रातःकालीनस्य,
...क्तिम्नः पश्चात् सूर्योदयो भवति । कवयो
...यों मुखं कमलं चन्द्रं वा वर्णयन्ति, तथैव तैः सूर्यः
...ताश्वः, रक्तिमा च सारथिरूपः कथितः । सूर्यो-
...यात् प्रागेव रक्तिम्न उदयो भवति, तत एव स
...प्रवाहकरूपेणारुणशब्दाभिधेयेनोक्तः । एवमेव
...तप्रभातमुषानाम्ना निगद्यते । सैव सूर्यस्य ना-
...का-रूपेण प्रदर्शिता कविभिः । उषायाः कदापि
...नं (नाशः) न भवति, अत एव सा– "अहल्या"
शब्देनोच्यते । इन्दतीतीन्द्र इति व्युत्पत्त्या अहल्याऽनुगामी सूर्य एवेन्द्रशब्देनोक्तः । अमुमेवाधारं कल्पयित्वा उर्वशीपुरुरवसोः कथा प्रचलिता विद्यते । दूरव्यापी स एवोषा शब्द उर्वशीनाम्नाऽभिधीयते । वेदेषूषा-पर्यायवाच्येवोर्वशीशब्दः ।

सामान्यतः पौराणिककथानां त्रीणि मूलानि सन्ति । (१) आधिदैविकम्, (२) आध्यात्मिकम्, (३ आधिभौतिकञ्चेति । आधिदैविकं मूलमाश्रित्य विशालमनन्तमाकाशमेव शरत्कालिकस्वच्छरूपेण विष्णुनाम्ना व्यपदिश्यते । सूर्याचन्द्रौ तस्याकाशरूपस्य विष्णोर्नेत्रद्वयम् । वर्षाकाले मासचतुष्टयं यावदाकाशस्य नेत्रे निमीलिते भवतः । अतएव विष्णोः स्वापः प्रकथ्यते । कार्तिके नेत्रोन्मीलनं भवति भगवतः । लक्ष्मीः, श्रीः, शोभा वा तस्य स्त्री । वेदेषु 'द्यौः पिता' कथ्यते, इदमेवमूलमधिकृत्य पाश्चात्येषु 'द्युपितर' (ज्युपिटर) शब्दस्य कल्पना समजनि । अस्यैवाकाशस्य सान्ध्यं रूपं चन्द्रशेखर-व्योमकेश-दिगम्बर-शिवादि-शब्दैरुच्यते। वार्षिकं नीलमेघाच्छन्नं नभः कालीशब्देनोपवर्ण्यते । सूर्याचन्द्रमसावस्याः कर्णौ । आकाश-विषये विविधाः कल्पनाः सन्ति । आध्यात्मिकं मूलमधिकृत्य क्षेत्रज्ञ (आत्मा) एव शिव-विष्णु-मघवदादिवाच्यो भवति । आधिभौतिकमूलेन सुन्दराः, सुभगाः, वीराः, उदाराः, रामकृष्णादयो महापुरुषा अवताररूपाः परिगण्यन्ते । भयानकाहनुमदादयो रुद्रावताराः कथ्यन्ते, सुन्दराः रुक्मिणी-सीता-प्रद्युम्न-प्रभृतयो लक्ष्मी-कामाद्यवताराः परिकल्प्यन्ते । एवमेवान्यानादर्शान् परिगृह्यावतारकल्पना क्रियते* ।

(क्रमशः)

---

* कियतः कालात् प्राक् पाश्चात्या अपि भारतीयाना-
...मेवातिशयोक्तिषु विश्वासं कुर्वाणा नितरां नीचां दशामनुभव-
...न्ति स्म । यतस्तैर्वैज्ञानिक्या दृष्ट्या वास्तविक-वस्तु-निरी-
...क्षणं कृतम् । ततएव ते साम्प्रतमुन्नतिसीमामापन्नाः सन्ति ।

* लेखोऽयं सुधा नाम्न्यां हिन्दी पत्रिकायां मुद्रितः, सचात्रानूद्य संक्षिप्य च प्रकाशितः । एतस्य खण्डन-मण्डनरूपा लेखाश्च सहर्षं प्रकाशिताः भविष्यन्ति । —सम्पादकः

# क्रान्तिकारि-समाहितिः ।

लेखकः—विमर्शी विद्वान् ।



अये क्रान्तिकारिन्नूता ते श्रुता वाङ्मयात्यप्रिया श्राव्यमुक्तम्मदीयम् । प्रशस्योभवद्भूतो ग्राह्यभावः परम्पण्डितानाङ्गुणाश्चिन्तनीयाः ।



अयि सुहृदः! सुप्रभातपाठकाः! श्रीमद्भिः प्रियस्य क्रान्तिकारिणो लेखो दृष्टः पठित एव स्याद् । भावोऽपि भवद्भिर्भावित एव भवेदिति नास्ति तत्र मे किञ्चिदपि निगाद्यम् । मम तु तस्मिन्नेव विषये वक्तव्यम्वि-द्यते; यत्र च साहसिकेन मे क्रान्तिकारिणा मित्रेण दृष्टिरेव न पातिता ।

प्रथममेवाभिहितन्तेन यत्—"चिरसुप्तानां मोहमग्नानामस्माकमुपरि न कश्चन प्रभावः पतित इति ।" अत्राद्यत्वे महात्मानः पण्डिताः सुप्ताः सन्ति इति सर्व एवेदानीन्तनाः कार्यकर्तारो निगदन्ति । परन्तु तानहं पृच्छामि यत्ते स्वाप-शब्दार्थम् प्रथमतः परिष्कुर्वन्तु । किम्—इदानीन्तननेतृवृन्दानुष्ठितावैध-देशध्वंसकर-भारतीयसंस्कृतिविनाशकान्दोलन-बहिर्मुखत्वमेव स्वापशब्दवाच्यम्? आहोस्वित् भारतीयधर्मानभिज्ञनायकाभासप्रचारितान्दोलन विरुद्धान्दोलनकर्तृत्वाभावसमानाधिकरण-स्वधर्मप्रचारोपायचिन्तनप्रयासाद्यभाववत्त्वमिति? आद्ये

तु शिरसाभिनन्दामो वयं स्व-स्वापम् । यामहे च विश्वात्मानं यदयं स्वापोऽस्माकं पु त्रादिष्वपि स्यादिति । चरमे चास्माकमय राधो यद्वयं ऋषिप्रणीतेषु धर्मशास्त्रेषु श्र श्रद्धामावहन्तस्तल्लिखितनियमाननुसरन्त ए श्वसिमो यदस्माकन्तु धर्मशास्त्रगत-नियमा काशनम्, शास्त्रीयविषयाणां शिष्यवर्गेभ्यो वि म्, सत्यवसरे तेषाम्प्रचाराय क्षत्रियाणां पुरतो निवेदनमिति । शासकानां क्षत्रिया कृत्यमिदं यत्ते धर्मभावानाम् प्रजासु शाश्व प्रचाराय नियमान् विदध्युस्तेषामवहेलने च दानादिकमनुतिष्ठेयुरिति । अपरञ्च वयन्नाभिल "घटंभिन्द्यात्पटंभिन्द्याद्गर्दभारोहणञ्चरेदि"ति समाश्रित्य कथञ्चिदपि स्वात्मनो मिथ्याप्रख्या यदि वयमपि कयापि गुडजिह्विकया जन सम्पाद्य तत्रोपस्थाय हस्तपादौ प्रक्षिपन्तः श्चित्कुर्वन्तो व्याख्यानं दद्मः, यत्रकुत्र च अकिञ्चि रेऽपि कर्मणि व्यापृताः समाचार-पत्रादिषु त प्रकाशयामश्चेत्स्यात्सन्तोषोऽस्माकं मित्रस्य क्रा कारिणः । अये सखे! न वयं स्वनाम-प्रिया मि दम्भ-प्रख्यापकाः । जनताया लाभो भवेन्नवा "अहं नेतृपद वाच्यस्तु जात" इति वाञ्छा ना स्माकम्, नापि वयम् 'कोलाहलेन स्याद्देशोद्धा इत्यत्र श्रद्धामावहामः । नापि वयमिदानीन्तना युतानामपि धर्मद्रोहिणां कृतम् धर्मोत्प्लावनमेव द्धारपदवाच्यमाकलयामः । अस्माकन्तु—

"एकोऽपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः"॥
सविज्ञेयः परोधर्मो नाज्ञानामुदितोऽयुतैः (मनु०

इति मनुवाक्येऽप्यचला श्रद्धा न केनापि विचा-
ता भाविनी।

अपि च निभालयतु भवान् कस्मिन् क्षेत्रे वयं
र्यं कुर्मः। सर्वाण्यपि तु धर्म-समाज-साहित्य-
जनीतिक्षेत्राणि तत्तद्विषयानभिज्ञैरपि, आत्मानं
स्पतेरपि प्रपितामहं मन्यमानैः, अभिमानमूर्तिभि-
भासैरेवाक्रान्तानि। प्रचारान्दोलनप्रकारश्चा-
नातनो विचित्र एव विद्यते। विना समाचार-
ण, विना दलबन्धेन, विना च मिथ्याप्रयोगेण,
धुनिकं नेतृत्वमेव न प्रचलति। किम्बहुना, आधु-
की आन्दोलनप्रचार-पद्धतिः पाश्चात्य-पद्धतिमनु
ति, न वयमुत्सुकास्तां पद्धतिं परिचेतुम्। नाभि
यतेऽस्माभिस्तस्याः प्रचारोऽत्र भारते। स्वयं
तां प्रचारयिष्याम इत्याशा तु भवतो दुराशैव!

वयन्तु कथयामो, यत्, पाश्चात्य-शिक्षादीक्षयोरे-
यं प्रभावो यत्, भारतवर्षमिदमिमामवर्णनीयां
ामश्नुते, परन्तु नाधुना चेतयते इयं भारतीया
नता मोहपिशाचग्रस्ता।

प्रत्युत तामेव स्वीयां दशां बहु मन्यते, पाश्चात्य
क्षादीक्षादीक्षितानेवात्मनो नेतॄन् मन्यते तत्प्रचा-
तमार्गेत एव प्रचलितुमीहते। एवमिमां पाश्चा-
शिक्षादीक्षामदमत्तां स्वधर्मत्यागमोहग्रस्तां धर्मा-
भिज्ञनेतृवृन्दवृश्चिकदष्टाम्विलोक्य विषण्णहृदयाः,
कित-चकिताः, किङ्कर्तव्यविमूढा एव तु तिष्ठामः।
दानीञ्च सर्वतो वर्षाकाले मण्डूकरुतिवत् योग्या-
ग्यानां सर्वेषामेव धर्मोपदेश-प्रलापान्निशम्य "भद्र-
कृतं कृतम्मौनं कोकिलैर्जलदागमे। मण्डूका यत्र
क्तारस्तत्र मौनं हि भूषणम्" इति नियमतो वय-
कृततूष्णीम एव स्म इति।

भवाँश्च निश्चितं वेत्तु यावदिमे नेत्राभासाः परस्परं कलहायमानाः स्वशक्त्यनुकूलं परिश्रम्य श्रान्ता न भवन्ति; यावच्च भवद्विधा उत्साहिनः कार्य्यकर्तारस्तेषां व्याघ्रचर्मावृतं शुद्धस्वरूपन्न विदन्ति; यावच्च वराकी मुग्धा भारतीय–जनता एभिर्गर्तें पात्यमाना स्वान्ध्यानुकरणफलमनुभूय पराङ्मुखी न भवति; न तावदस्माकं पण्डितानां कार्य्यावसरः। पण्डितानां कार्य्यावसरस्तु पाश्चात्यदीक्षाविरसफलमास्वाद्य कृततूष्णिमि नेतृवृन्दे, तदनुकरणतश्च विनाशित-सर्वस्वे तदनुयायिजने, श्रीमद्भिश्च प्रतिक्षणं जोघुष्यमाणे संस्कृतविद्वत्सज्जनसाहाय्ये भविता। एतदपि विदाङ्करोतु भवान्। पण्डितानां कार्य्यपद्धतिर्नाधुनिकान्दोलनवदाडम्बरपरिपूर्णा, अकिञ्चित्करी भवित्री। किन्तु; भारतीय-सभ्यता-विकाशिनी, स्वल्प-प्रयासा, बहु-फलदा, सर्वजन–प्रियैव भाविनी। किञ्च पश्यति भवान् संस्कृतपण्डितानां माहात्म्यम्। यदियता कालेन पराधीनेप्यस्मिन् भारते हिन्दुजातिर्बहून् आघात-प्रतिघातान् सहमानाऽपि न स्वरूपं त्यक्तवती। क्रूरयवनसाम्राज्ये, अतिक्रान्त-कौटिल्य-कौटिल्ये वृटिश शासनेऽपि पर्वतवदकम्प्यैव विद्यते। शताब्दीशतेनापि न तावन्तो हिन्दवो विधर्माणः सञ्जाताः, यावन्त इदानीं पण्डितानां हस्ताद्विच्युतास्ते विधर्मतां गता इति। अपरञ्च भवतो दृष्टौ पण्डिताः सुप्ताः। वस्तुतस्तु त एव जागरिताः। यतो वै "अन्यदुच्छृङ्खलं सत्वमन्यच्छास्त्रनियन्तृतम्" इति सर्वथापि हिन्दु-सभ्यतां विहाय पाश्चात्य चाकचिक्यविमुग्धा, भारतीयजनता स्वीयाचारविचारमेव यत् तिलाञ्जलयितुम्प्रवृत्तास्ति; तां त

एव निरुन्धन्ति । येन तेषामिदानीन्तना नेतारो जनसमुदायश्च सततमुपेक्षामेव कुर्वते । भवद्विधा अपि अज्ञात-पण्डितरहस्यास्तानेवोपहसन्ति अवजानन्ति च इत्याश्चर्य्यतरमेतत् ।

अस्तु, भवतु नाम सर्वतोऽपि तेषामवमाननम्, परन्तु, ते तु "गच्छति करिणि कुक्कुरशब्दवन्मानयावमाननयोद्विजन्ते, प्रत्युत-"ब्राह्मणः सततं मानादुद्विजेत विषादिव, अवमानं समीहेत सुधावदिह सर्वथा"—इति मनूक्तिमाश्रित्य नन्दन्त्येव । विमृशतु भवान्, यत्, भारते संस्कृत-पण्डिता एव केवलाः सन्ति ये प्रचलितायामपि पाश्चात्य-चाकचिक्यवात्यायां स्वयम्पर्वतवदकम्प्याः सन्तः पदमपि न प्रचलन्ति प्राचीनाचारपद्धतेः । न जहति भारतीय-संस्कृतिम् । नाभिलषन्ति सुरभारतीमुपेक्ष्य इंग्लिशभाषामध्येतुम् । यत्र तेषामेव भ्रातरोऽनिशं प्रत्यक्षत एव तेषां संस्कृतं विहाय, इंग्लिशभाषामधीत्य, खृष्टधर्मिणो भूत्वा, सहस्रं मासिकमर्जयन्ति । तत्रैव ते इमाममरगवीं सेवमानाः पञ्चाशतैव सन्तोषं कुर्वन्ति । यत्र कलाशालायां ( महाविद्यालये ) संस्कृत-पण्डितेभ्यो न्यूनयोग्यता अपि इंग्लिशभाषाध्यापका अत्यधिकं मासिकं लभन्ते । तत्रैवेमे अल्पीयसैवाध्यापनं कारयन्तो गृहेऽपि अगणितसमयाः छात्रानध्यापयन्ति । नानुतिष्ठन्ति अन्यं धनार्जनोपायमिति पश्यतु भवान् पण्डितानां त्यागप्रकर्षम् । अत्र काश्यामेव प्रतिपण्डितगृहम् एको विद्यालय एव वर्तते । ते चान्यासु पाठशालासु अध्यापयन्तोऽपि स्वगेहे निःशुल्कमेव शतशश्छात्रान् पाठयन्ति । किं दर्शयिष्यति भवान् आदर्शमिमं कस्मिंश्चिदन्यस्मिन्नपि द्वीपे देशे वा । अपि वच्मि पण्डितानां माहात्म्यन्ते भारतस्य रत्न... नीयाः, मा निन्दन्तु भवन्तस्तान्, तेषामुपेक्षयैव... तीया संस्कृतिर्दिनन्दिनं कलुषायते ।

प्रतिग्रहविषये यद्भवानुपहसति । त... शृणोतु, प्रतिग्रहो हि ब्राह्मणानां षट्सु कर्मसु... कर्म । तच्च कुर्वतान्तेषां कथं ग्लानिः स्यात्... -तु दातुरेव कल्याणं भवति । धार्मिकभाववृद्धि... सम्पद्यते । परम्परागतो हिन्दूनां दानरूप आचा... प्रतिपालितो भवति । यथा कथञ्चिदीश्वरस्य वि... पूजनमपि कृतम्भवति दान-प्रतिग्रहकर्मणोति न... कोऽपि दोषः पण्डितानाम् ।

तत्रैवैकां दृष्टिमपरस्यां दिशि पातयि... भवान् तदा ज्ञास्यति, यत्, कियाननर्थस्तत्र... इति । यान् भवान् भारतनेतॄन् साधून्देशोपका... न्मनुते । ते हि अनेकैः छद्मव्रतबन्धैः मिथ्याड... च बहुलं गणान्नं ( चन्दा ) संगृह्य जनता... पुरस्तात् कियतोंऽशस्य व्ययमितस्ततो दर्शयि... अधिकांशन्तु स्वोदरसात् कुर्वन्ति । वञ्चिता भारतीयजनता अग्रे कस्मिंश्चिदेवंभूते... न पुनरुन्मुखी भवति । नूतनमेव वृत्तम्बिलोकय... गान्धिमहोदयेन कोटिमितो द्रव्यराशिः सङ्गृही... परन्तु तस्य नामापि न श्रूयते । सर्वमेवच्छद्मना... नुगामितामाश्रित्य स्वाहीकृतम् नेत्राभासैः वञ्च... शिरोमणिभिः । इमाम्वृत्तिं गर्हितां तत्र भा... संस्कृतपण्डितास्तु नाचरन्ति । तर्हि कथम्भ... तदपेक्षया पण्डितान् तिरस्कुरुते ।

अपरस्तु भवान् न जाने किं किं जल्पितवा...

ामुत्तरमदत्त्वैव लेखभूयस्त्वभयादुपसंहरन्
त्रान् शब्दान्निगद्य विरमामि ।

अन्ते भवान् कथयति, यत्, 'धर्मदत्तप्रभृतिभिः
रिडता वञ्चिता बहुश इति । अत्रेदमवगच्छतु भ-
न्; यत् अतएव ततः प्रभृति भुक्तभोगाः परिडता
वम्भूतैः कार्य्यकर्तृभिः सह स्वीयामनुमतिन्न प्रकट-
न्ति, यत्, संस्कृत-साहित्य-समाज-सञ्चालकानां
ःस्वार्थत्वं, संस्कृतोन्नतिमात्रफलकं कृत्यं, जान-
ाऽपि बहवो विद्वांसो नाधुनाऽपि संस्कृत-साहित्य-
माज-सदस्याः सञ्जाताः । तत्र समाज–सञ्चालका
ोपालम्भनीयाः, न वयं काशीस्था विद्वांसः । यतो-
यदा यदा समाजसञ्चालका अस्मान् पृच्छन्ति,
दा तदा वयं धनेन, मनसा, कायेनापि साहाय्यमा-
राम एव इति तु अविदितवृत्तवत् क्रान्तिकारिणः
थनम्, यत्, परिडताः संस्कृत-साहित्यसमाजमपि
ाद्रियन्त इति । येषाम्पार्श्वे वार्षिकोत्सवादिनिम-
णपत्रमेव नायाति; ते वराका अविदितवृत्तान्ताः
थं समाजे उपसर्पन्तु । कथन्ते दिव्यनेत्राः सन्ति ।
मृशतु भवानेव । अस्तु ! अन्ते मित्रबुद्ध्याऽहंलेख-
महाशयं निवेदयामि, यत्, लेखान् भूयोभूयः परि-
ध्य प्रकाशनाय प्रहिणोतु भवान् कस्मिश्चिदपि
त्रे । येन वराकी संस्कृत-भारती कलुषिता, न भवेत् ।
राकश्च पत्रसम्पादकः कलङ्कितो न स्यादिति ।
नवधानतया भवतो लेखे सन्त्यपि अशुद्धयः । याश्च
नचन महात्मना सूर्य्योदये प्रकाशिता अपि ।
रन्तु नाहं, तद्रोचये ।

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ।"

इत्यन्तिमा नीतिरेवाश्रयणीया विद्वद्भिः ; न पूर्वा ।
अहन्तु सम्भावयामि, यत्, मुद्रणयन्त्रस्थाक्षरनियो
जयितॄणां लेखप्रतिलिपिकर्तुर्मुद्र्यमान-लेखसंशोध-
कस्य तदुपरिनिरीक्षकस्य सम्पादकस्येति बहूना-
मसावधानतयाप्यशुद्धयो जायन्ते । न केवलं लेखक-
प्रमाद एव कारणं लेखाशुद्धौ इति ।

परन्तु श्रीमान् सुप्रभात-सम्पादकमहाशयोऽपि-
नातिक्रामति उपालम्भविषयताम् । तस्यैव महात्मनः
कृत्यमिदम्, यत् स्वयं सर्वान् लेखानवलोक्य
संशोध्य प्रकाशनाय ददात्विति । मम तु निश्चितेयं म-
तिर्यत्–यस्मिन् सुप्रभात-सम्पादक-मराडले अप्रति-
द्वन्द्विनो विद्वांसो विद्यन्ते । तेषां लेखा अशुद्धाः
कथं स्युः, केवलं तैर्दीयमानमवधानमपेक्ष्यतेऽत्र-
विषये । इति विरमति हितेच्छुर्भवताम् ।

# अयि भारतीयाः ! उत्तिष्ठत !!

लेखकः—
श्रीहरगोविन्दवोरवङ्करः ।
छात्रः—श्रीकाशी विद्यापीठस्य ।

आधुनिकजगदुन्नतौ यदि दृष्टिं निक्षेपया-
मस्तर्हि किं दृश्यते तत्रास्माभिः ।
अस्योत्तरे सर्वे कथयन्त्यैकमत्येन
यद् भौतिकशास्त्रमिदानीं महत्त्वं
प्राप्नोतीति । यस्मिच्छास्त्रे स्वो-
न्नतिर्भवति तदस्माकं कल्याणकारणं जगतश्च

सूत्राणि धारयितुं प्रेरकं च भवतीत्येषा सर्वेषां राष्ट्राणां मनीषा तदर्थं तेषां प्रयत्नश्च । को नेच्छति जगति सर्वोत्कृष्टां प्रतिष्ठाम् ? आसीदेकस्मिन्समयेऽस्माकं परमपूजनीयया मातृभूम्या सम्पादिता सा प्रतिष्ठा । इदानीमप्यात्मज्ञान—वेदान्तविद्यादि-दर्शन-विषयेषु सम्मानस्तया रक्षितः प्रयत्नतः । नास्ति कोऽपि देशोऽस्मिन्नासप्तसमुद्रीभूतले यस्य तत्त्वज्ञानेन भारतीयं तत्त्वज्ञानं सामीक्रियेत, कथं समर्थो भविष्यति वर्षसहस्राणां तेषां प्रयासस्तस्य समकक्षामागन्तुमिति मन्यामहे ! वैदिक मौपनिषदं च तत्त्वज्ञानमखिलभूतलालङ्करणं चेति सर्वेषां विदुषां धारणा प्राच्यानां पाश्चात्यानाञ्च ।

पाश्चात्या भौतिकशास्त्रेष्वग्रेसरा इति विदितमेव सर्वेषां पाठकानाम् । तेषु तेषामेतावती बभूवोन्नतिर्यस्याः साहाय्येनाशक्यतां गताः क्रियास्ते सुलभकरणीयाः कुर्वन्ति । अग्निरथः, सन्देशवाहकयन्त्रं, एकस्मादेवस्थानाद् जगतः सर्वाश्चर्याणां दर्शयितृयन्त्रं, भूमिखननात्प्रागेव भूमौ कुत्र कुत्र किं वर्तते इत्यस्य दर्शयितृयन्त्रं, आकाशयानेषु प्रतिदिनं भवित्री तेषामुन्नतिः, इत्यादीनि पुष्टिदायकान्युदाहरणानि ।

तत्र मानवशक्तीनां नास्ति सामर्थ्यं, यत्, भौतिकशास्त्रसाहाय्येन पाश्चात्या इदानीं कुर्वन्ति । पृथिवी तेषामङ्किता दासी बभूव, यतो मैनं स्वीकृत्य तेषामिष्टं सा कुरुते । प्रक्षुब्धायां स्वावस्थायां जगतः प्रलयं कर्तुं समर्थः समुद्रोऽपि भौतिकशास्त्रज्ञान् जनान् सेवक इव स्वपृष्ठे गृहीत्वा यथाभिलषितं स्थानं नयति । झञ्झावात-नाम्ना प्र नाखिलांल्लोकान् भयत्रस्तान् कुर्वताऽपि वा भौतिकशास्त्रविशारदास्ते यथाकामं मधुर-श वणकार्यं कारयन्ते , यद्वयं सुखेनानुभवामः वादन मंजूषास्वरानुकारियंत्रादिषु ( हारमो फोनोग्राफादिषु ) । पर्वतभेदनशक्तिमती च सन्देशवाहन मार्गदर्शनादिकार्याणि कुरुते । ज्ञातान्तं वियदपि समग्रं संशोध्य, परिक्रम्य चाखिलांस्तत्रत्यचमत्करान् मंगलग्रहस्थै सह सम्भाषण-योग्यतां नीतम् पाश्चात्यपण्डितै एवम्भूते सर्वशक्तिशालिनि भौतिकशास्त्रे सर्वे चित्तानामाकर्षणम्, तस्मिंश्च प्रगमनेच्छा स्वा विकी । किन्तु—

भारतवर्षमद्यापि प्रसुप्तं दृष्ट्वा दुःखेन तत्सु हृदयं प्रपूर्यते । प्रगाढां निद्रामाप्नोद यतोऽखिलवनीगतेषु भारतवर्षस्य न कोऽपि दृश्यते तस्याम् । कदा भारतीयो जनसमुद कुम्भकर्णसदृशात्स्वप्नाज्जागृतो भविष्यतीति स्थानमस्माकम् । यावत्कालं भारतीयाः स्वोन्न तां वर्धयितुं जगति प्रसारयितुं च नेच्छन्ति उत्क च्छया, तावत् क्षुद्रबुद्ध्या तानखिलाः परराष्ट्र अयोग्यान् परिगणयन्ति । तत्रापि विशेषदु स्थानमेकमस्माकं यत्तस्या गणनायाः प्रतीका बुद्धिर्नास्ति सन्निकट इति । ते विचारयन्ति, य अस्माकं पूर्वपूरुषैर्यादृशी कीर्तिरुपार्जिता, नास्ति केषांचिदपि बलवतामेतादृक् सामर्थ्यम् ' इति अयं विश्वासोऽस्माकम् युक्तः । किन्तु कस्मिन् का इति विचारणीयमत्र । पूर्वजोपार्जितयशः-सम

# लावण्यमयी ।

(...क-हिन्दी-उपन्यास-सम्राट् श्रीकिशोरीलाल गोस्वामी)

## दशमः परिच्छेदः ।

पत्नी-पुत्र-प्राप्तिः ।

—:०:—

...ादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्।
...नीय झटिति घटयति विधिरभिमतमभिमुखीभूतः॥

—रत्नावलिः ।



स्यां रजन्यां लावण्यमयी, स्वीये शयनीये सदने सख्या सह पत्र-प्रपञ्चे व्यापृताऽऽसीत्; तस्यामेव रात्रौ तृतीयपरिच्छेद-वर्णिता प्रौढा सन्यासिनी, सुधाकरेण साकम् श्रीमद्रमेशशर्म्मणो धनिकस्य ...विशालं राजप्रासादमिव महर्द्धि महालयम्, प्रच्छन्नतया ...विवेश । प्रविश्य च तया सुधाकरो लावण्यमयी-प्रकोष्ठे ...पितः, स्वयञ्च गृहस्वामिनः स्वाप-सदनं समाविशत् ।

रमेशशर्म्मा शयने सुखं सुप्त आसीत् । एतस्मिन्नेवा...रे सा सन्यासिनी तन्निर्वर्त्तिकं गृहं शनकैः प्रविष्टा । प्रविश्य ...गृहस्वामिनस्तल्पस्य पाददेशे समुपविश्य, अश्रुमोचनमार...ब्धवती । अस्मिन्नेवावसरे रमेशशर्म्मणा स्वप्ने दृष्टम्, यत्...स्यान्तर्हिता धर्मपत्नी समागता, सा तल्पस्य पाददेशे समुप...विष्टा, धृत्वा च पत्युश्चरणौ, अश्रुविसर्जनं करोति । याचते च ...क्षमा-भिक्षाम् इति । बहुकालानन्तरं प्राप्त-प्राणसम-समागम-रसोल्लास-स्फीत-हृदयो गृहस्वामी हर्षनिर्भरः सचीत्कारं निद्रां जहौ । अन्वभवच्च पादमूले पतितान् कवोष्णानश्रुविन्दून् ।

कतिपयक्षणं तूष्णीं स्थित्वा तेन ज्ञातम्, यत्, 'कश्चित् शयनस्य पादप्रान्ते स्थित्वा मन्दं मन्दं रोदिति, करोति चाश्रुविसर्जनम्'—इति । इत्यनुभूय तेनोक्तम्—'कःकोऽत्र भोः!' अस्य प्रश्नस्योत्तरं केनाऽपि किमपि न दत्तम् ।

ततस्तु संशयाविष्टो भग्नहृदयश्च द्विजस्तूर्णं तल्पादुत्थाय प्रदीपप्रज्वालनपरोऽभवत् । इत्यवसर एव केनाप्यज्ञातजीवेन तस्य दक्षिणं करं स्वीयेन हस्तेन धृत्वा, समन्दस्मितमिदमुक्तम्—' नाथ ! तवाहं किङ्करी समनुप्राप्ता । स्वस्थो भव । निर्भयं स्वीये शयनीये तिष्ठ ! उद्वेगञ्च त्यज, अहमेव दीपं प्रज्वालयामि ।' इत्युक्त्वा सा समागता श्रीरमेशशर्म्मगृहिणी प्रदीपं प्राज्ज्वालयत् ।

प्रज्वलिते प्रदीपे भुवि स द्विजः काषायवसनधारिणीं मुक्तमूर्द्धजां त्रिशूलहस्तां साक्षात् देवीमिव भुवनमोहिनीं सन्यासिनीम् अपश्यत् । कियत्क्षणं तां सोद्वेगं निरीक्ष्य तेनोक्तम्, यत्,—अहो ! इदानीं ज्ञातम्, ननु त्वमेव ममाङ्गार्धहारिणी धर्मपत्नी सुशीला ! किन्तु सत्यं वद, त्वं जीविताऽसि, मृताऽसि । अस्यामेव धरायां तिष्ठसि वा लोकान्तरे विहरसि । ननु मायाविनि ! बहुकालानन्तरमद्य किमर्थमिहागता । अधुना कथं तूष्णीं तिष्ठसि ? कथमश्रुविसर्जनं करोषि ? कथं चरणाग्रेण भुवि रेखां तनोषि ? कथञ्च दीर्घं निःश्वसिषि ? वद, बहुकालानन्तरमस्मिन् क्षणे तवागमनस्य किं बीजम् ?

सा चिरात्समागता प्रौढा द्विजवरबधूः स्वामिमुखादेवं विधान् प्रश्नानाकर्ण्य, क्षणं विचिन्त्य, तस्य पादयोः पतित्वा साश्रुविसर्जनमिदमुवाच—जीवितेश ! अद्यापि जीवितास्मि, मद्विधानां नारीणां मृत्युः क्व ? अहमस्मिन्नेव मर्त्यलोके विचरामि । अद्यापि न दृष्टं मया लोकान्तरम् । तव चरणमूलं विहायाऽहं क्वान्तर्हिताऽभवम्, पुनरद्य किमर्थमिहागता, एतत्कारणं सुस्पष्टं भणामि । प्रथमन्तु त्वं निरुद्वेगतया शयनीये सुखं तिष्ठ, ततःपरं यदहं ब्रवीमि, तत्सर्वं समाहितेन मनसा शृणु !

इत्युक्त्वा स्वपतिं शयनीये समुपवेश्य स्वयमपि तत्पादमूले स्थित्वा, धृत्वा च तच्चरणौ समुवाच सा प्रौढा गृहस्वामिनी

"स्वामिन् ! इदन्तु सम्यग्ज्ञातं त्वया, यद्बहुभिः प्रकारैरपि कृते धर्माचरणे नाप्तं तनयरत्नमावाभ्याम् । एवं गते काले स्वमात्रा सहाऽहं चन्द्रग्रहणस्नानार्थं वाराणसीमगमम् । तत्रैकस्मिन् दिवसे श्रीमदन्नपूर्णामन्दिरे काचनापरिचिता योगिनी मां सुचिरं निरीक्ष्य प्रोवाच-"वद सुन्दरि, किन्त्वमप्राप्तप्रजाऽसि ।" इतिनिशम्य मयोक्तम्—" ओम्, देवि, वन्ध्याऽहम् । " ततस्तयोक्तम्—"आं, सर्वं ज्ञातम्, अस्तु, अन्नपूर्णा-कारुण्येन त्वं सत्वरमेव पुत्ररत्नं प्राप्स्यसि, गृहाणेदमन्नपूर्णाप्रसादरूपं रसालफलम्, अद्यैव रात्रौ रहसि एतत्फलं भोक्तव्यम् । ततः कतिपयैरेवाहोभिस्त्वं गर्भवती भविष्यस्येव । किन्तु सावधाना भव ! मन्मिलनवृत्तान्तम्, रसालप्राप्तिर्वा न पत्युः कर्णगोचरीकर्तव्या । गर्भेजातेऽपि त्वया तस्य सङ्गोपनं करणीयम् । त्वं स्वगृहं व्रज, अहं तत्रैव तव साक्षात्कारं विधास्यामि ।" इत्युक्त्वा सा योगिनी क्वाप्यन्तर्हिता जाता । मयाऽपि धर्मशालायां गत्वा तत्फलं भुक्तम् । रात्रौ स्वप्ने च मया दृष्टम्, यत्, माताऽऽन्नपूर्णेश्वरी प्रसादसुमुखी भूत्वा वदति, यत्, "वत्से ! सुन्दरं सुतं प्राप्नुहि ।" इति ।

" कतिपयैरेवाहोभिरहमस्मिन् सदने समागता, गर्भवती च जाता । किन्तु योगिन्या निदेशेनैतद्रहस्यं मया कस्यापि—तवाऽपि च न कर्णगोचरी कृतम् । कालेनाल्पेनाऽहं गर्भवती सञ्जाता । तस्मिन्नेवावसरे, एकस्मिन् दिने वाराणस्यां दृष्टा सा योगिनी, मदीयेऽस्मिन्नोवोद्याने समागत्य मया सार्कं मिलिता, उक्तवती च, यत् "ब्राह्मणपत्नि, सौभाग्यवशात्त्वं गुर्विणी सम्वृत्ता, काले सुन्दरस्य कुमारस्य जननी भविष्यसि, किन्तु, सावधाना भव; एषा रहस्यमयी वार्ता कस्याप्यग्रे न निवेदनीया " । ततो मयोक्तम्—'देवि ! गर्भवृत्तान्तः कथं गोप्यः स्यात् ? काले प्रसवोऽपि भविष्यति, सोऽपि कथं सङ्गोप्यः । " ततस्तयोक्तम्—" त्वं केनापि व्याजेन स्वपितृगृहं व्रज, वद च, स्वमातुरग्रे सर्वं रहस्यम्, तत्रैव गुप्ततया प्रसवकालपर्यन्तं निरुद्वेगं तिष्ठ, समयेऽहं तत्रैवागमिष्यामि, त्वया सह साक्षात्कारञ्च विधास्यामि । ततः परं यद्यदाचरणीयं तत्तद्वदिष्यामि । "

"इत्युक्त्वा सा योगिनी स्वस्थानं गता । तस्मिन्नेवावसरे त्वं राज्ञो राजदण्डभयात्पलायितस्य श्रीशशिशेखरवर्म्मणः समुद्धारे कलिकातायां गन्तुमुद्यतः । तदाहमपि सु सरं समुपलभ्य त्वदाज्ञया पित्रालयं गता । तस्मिन्नेव मम गर्भसञ्चारादष्टमो मासः सम्प्राप्तः ।

इति श्रुत्वा सनिर्वेदमाह स्वामी—अहो ! स महात्मभिः, यत्, " **स्त्रीणां को वेद चेष्टितम्** " ततस्ततः !

गृहस्वामिनी—शृणु देव ! अद्य सर्वं वृत्तान्तं याव वदामि, ततः परं यद्यहमपराधिनी स्याम्, तदा दण्डो देयः ।

गृहस्वामी—भवतु, शीघ्रमेव वद ।

गृहिणी—" पित्रालये मम गर्भवृत्तान्तं मे जनन्य परिचारिकाद्वयेन ज्ञातमासीत् । सम्प्राप्ते प्रसवकाले सा नी समागता । तथा च सूतिकागारे मां समुपादाय समतिष्ठत् । ततः प्रसववेदनावशात् मम संज्ञा लुप्ता । संज्ञामुपलब्धवती, तदा मे माता सरोदनमिदमुवाच-" इदानी त्वं दौर्भाग्यान्मृतवत्सा सञ्जाता । तव योऽर्भको ष्टोऽभवत्, स तु जातमात्र एव पञ्चत्वं गतः । तं मृतं क्रोडे कृत्वा सा योगिनी प्रयाता ।" इति ।

"श्रुत्वेदं वज्रनिर्घातदारुणं वचः पुनर्मे संज्ञा वि ततस्तु कियता कालेन स्वस्थतां गताऽहमिहागता । त्तान्तं श्रुत्वा तवाऽपि महान् खेदो भविष्यतीति न तवाऽपि निवेदितम् ।

" ततो विगते वर्षचतुष्टये तस्मिन्नेव दिने यस्यां वियं कन्या लावण्यमयी इहानीताऽभवत्, अपराह्णवेलायां योगिनी पुष्पोद्याने मत्समीपवर्तिनी जाता, उवाच च—" विप्रवनिते, न त्वं मृतवत्सा, तेऽर्भको जात मात्र ए पञ्चत्वं गत आसीत् । किन्तु तस्य जन्म मूल-नक्षत्रेऽभू तस्य मुखावलोकनं वर्षचतुष्टयं यावत्त्वया न करणीयमि मनसि विचिन्त्य, तं बालं क्रोडे कृत्वा—" पुत्रस्तु मात्र एव मृतः "—इति मृषैव तव मात्रे निवेद्याऽहं तस्मा स्थानात् क्षिप्रमेव पलायिता । अद्य व्यतीतं वर्षचतुष्ट अनेनैव कारणेनाहमिदानीं त्वत्समीपवर्तिनी जाता । वद, किं त्वं स्वकीयं स्वस्थं सुन्दरं सबलञ्च सुतं द्रष्टुमि सि ? " इति । स्वामिन् ! तस्या योगिन्या एवं विधम

नं वचो निशम्यैवाऽहं तत्पादवन्दनं विधाय ससम्भ्रममुक्त- —'देवि, धन्याऽसि, वन्दनीयाऽसि, धन्यवादार्हाऽसि, म्, देहि देहि, झटिति प्रत्यर्पय तमर्भकम्। तयो- —'तत्तु न भविष्यति'। मयोक्तम्—'कथमिति ?'। क्तम्—'अत्र कारणं वर्तते'। मयोक्तम्—'किम्'। तयो- म्—'षोडशवर्षपर्यन्तं तस्य बालस्य मुखं तव भर्त्रा नाव- कनीयम्। एतावता यदि त्वं तं सुतं द्रष्टुमिच्छसि चेत्तर्हि त्र निशीथसमये तस्मिन्नुद्याने समागत्यावलोकय इति।

गृहस्वामी—इति किं श्रुतं मया। प्रिये! शीघ्रं ब्रूहि, ऽसौ कुमारः ?

गृहिणी—प्रियतम ! निरुद्वेगो भव, पूर्वं सर्वो वृत्तान्तं , ततः परमन्या वार्ता भविष्यति।

गृहस्वामी—तर्हि शीघ्रं वद। स एव कुमारोऽद्यापि ति किम् ?

गृहिणी—भगवत्कृपया जीवत्येव !

गृहस्वामी—अहो इदानीमहं निरुद्वेगः सम्वृत्तोऽस्मि। त्यमेवोक्तम्—भुक्तभोगिना कविना, यत्, 'स्त्रियश्चरित्रं षस्य भाग्यं देवो न जानाति कुतो मनुष्यः।' तु। साम्प्रतं त्वं स्वीयं वक्तव्यं झटिति समापय।

गृहिणी—"तदेव तु करोमि। त्वं समाहितेन मनसा शृणु। ननु देव! योगिन्या निदेशेन तस्यामेव रात्रा- नं प्रविश्य, सद्युतां तां योगिनीमपश्यम्। सा तं सुतं दत्वाऽब्रवीत् 'गृहाण नैजं हृदयरत्नम्, पश्य, कीदृशः दरोऽयं कुमारः।' मया तु ससम्भ्रमम् तमात्मजमादाय, समाश्लिष्य, मस्तकमाघ्राय, कपोले प्रचुम्ब्य, निपुणं रीक्ष्य च कथितम्—'देवि, धन्यवादार्हाऽसि त्वम्। तवैवानुकम्पया सुतिनी सम्वृत्ताऽहम्। सत्य मुक्तं या, असौ कुमारः सुधाकर इवातिसुन्दरः।' इति श्रुत्वा विहस्योक्तम्, अत, 'अद्यारभ्याऽयं नाम्नाऽपि सुधाकरो वतिति।

गृहस्वामी—क्वाऽसौ सुधाकरः ?

गृहिणी—क्षणं तिष्ठ, शृणु च सर्वं वक्तव्यम्।

गृहस्वामी—तदेव भवतु, ब्रूहि शीघ्रम्।

गृहिणी—स्वामिन्! कियत्क्षणानन्तरं तया योगिन्या मत्क्रोडात्तमात्मजं सबलमाकृष्योक्तम्—'विप्रवनिते! इदानीं त्वं प्रासादं व्रज, अहमपि नैजं गन्तव्यं स्थानं प्रति यामि'। मयोक्तम्—'देवि, निष्ठुरा मा भव, प्रत्यर्पयैनं बालम् नाहममुं त्यक्तुं समर्थाऽस्मि। तयोक्तम्—'मूढे! विस्मृतं किं सर्वं मदुपदिष्टम्। पुनः शृणु। षोडशवर्ष-पर्यन्तमस्य कुमारस्य मुखं तव भर्त्रा नावलोकनीयम्। एवं सति महाननर्थो भविष्यति।' मयोक्तम्—'तर्हि; अहमपि त्वयैव साकं गमिष्यामि।' तयोक्तम्—'यद्येवं; तर्हि तदेव कुरु। चल, मया सार्द्धं मम कुटीरे। किन्तु गमनात्पूर्वं त्वया ममैकं कर्म करणीयम्। यदि तत्कर्तुं समर्थाऽसि, तर्हि मया साकमागच्छ। अन्यथा स्व-निकेतन एव ससुखं तिष्ठ'। मयोक्तम्—'देवि, वद शीघ्रम्, किंतत्कर्म।' तयोक्तम्—'मयैका कन्यका जनिता, सा मासमात्रैव। अहं बालद्वयं स्तन्यं पाययितुं सर्वथैवाऽसमर्थाऽस्मि। अतएव त्वं तां सुतां स्वपतिशयनसदने प्रच्छन्नतयैव निधाय ममानुगामिनी, भव। तव स्तनयोर्नास्ति पयः। अतस्त्वं दातुमसमर्थाऽसि, अतएवाऽहं त्वत्सुतं सञ्जीवयामि। तव-भर्ता च मम सुतां सञ्जीवयतु। यदि तत् कर्म कर्तुं समर्थाऽसि, तदा सत्वरं वद"।

गृहस्वामी—अहो। कीदृशोऽयमाश्चर्यजनको व्यापारः। उक्तं हि केनाऽपि—

स्त्रियो हिनाम खल्वेता निसर्गादेव पण्डिताः।
पुरुषाणान्तु पाण्डित्यं शास्त्रेणैवोपजायते॥

अस्तु, ततस्ततः!

गृहिणी—ततस्तु मम दुर्बुद्धिः सञ्जाता।

गृहस्वामी—कथमिव ?

गृहिणी—"योगिनी कथनानुसारेणैवाऽस्मिन् प्रकोष्ठे तदात्मजां संस्थाप्योन्मादिनीवाऽहं तस्मिन्नेव क्षणे तदनुगामिनी समभवम्। ततस्तु तया साकं भारतवर्षस्य तीर्थे तीर्थे भ्रमन्ती कतिपयवर्षानन्तरं पुनस्तस्याः कुटीरे समायाता। तदा कुमारस्याष्टमो हायन आसीत्, तस्मिन्नेव वर्षे तस्य यज्ञोपवीतसंस्कारः सञ्जातः। ततो विद्यारम्भो बभूव। एवं वहुकाले प्रयाते यदा कुमारः सुधाकरः सप्तदशे हायने प्रविष्टस्तदा मया कुमार्या लावण्यमय्याः साकं तस्य सम्मेलनं कारि-

तम् । इदानीं मूलनक्षत्रजनितानिष्टवर्षाणि गतानि । अनेन हेतुना तस्या योगिन्या आज्ञानुसारमेवाऽहमद्य सन्नुता तव चरण-दर्शनकाम्यया समनुप्राप्ताऽस्मि, वदेदानीं किमाज्ञापयसि ?

इत्येवं सर्वमुदन्तमाकर्ण्य, सुचिरलब्धां प्रियां क्रोडे समाकृष्य, सोल्लासञ्च तां हृदयेन समाश्लिष्य, तत्कपोलाधरौ च परिचुम्ब्य, सस्नेहमुवाच स द्विजवरः—इदानीं वद प्रिये ! काऽसौ हृदयाल्हादप्रदः सुकुमारः कुमारः ।

गृहिणी—स तु अधुना अत्रैव वर्त्तते ।

गृहस्वामी—तर्हि तमाकारय शीघ्रम् ।

इति श्रुत्वा यदाकारितं तया विप्रपत्न्या, तदा पूर्व कथितं सर्वं रहस्यं सङ्क्षेपतया लावण्यमयीं प्रति निवेद्य, सुधाकरो झटिति पितृवेश्मनि समाविशत् । पपात च तस्य चरणयोः ।

अद्य प्रथममेव युवानं सुतं समुपादाय, तस्य द्विजवरस्य कीदृशी दशा सञ्जाता; तल्लेखने न मे लेखनी कथमपि समर्था । तस्मादनुक्तमप्यूहन्तु भुक्तभोगिनः । पत्नी-पुत्र प्राप्ति-प्रभूत-प्रहर्षेण सावशिष्टा रात्रिरेवमेव व्यरंसीत् ।

गृहस्वामिनोक्तम्—प्रिये ! कास्तेऽसौ साक्षाज्जगद्धात्रीव सुधाकरधात्री ।

गृहिणी—सा स्वीये निवासस्थले तिष्ठति । तस्या अतीव रहस्यमयीं वार्तां समयान्तरे निवेदयिष्यामि ।

गृहस्वामी—किमुद्याने लावण्यमयी प्रत्यहं सुधाकरेणैव साकं क्रीडतिस्म ।

गृहिणी—ओमिति ।

गृहस्वामी—अहो ज्ञातं मयेदानीं सर्वं रहस्यम् । तस्या धात्री गतदिवसे ममाग्रे एवमब्रवीत्, यत्, कुमारी लावण्यमयी प्रत्यहमुद्याने केनाप्यज्ञातकुलशीलेन युवकेन साकं यथेच्छं क्रीडतीति ।

गृहिणी—इति तु सर्वं सत्यम् । अत्र विषये अहमेव परं कारणमस्मि । मयैव सुधाकरेण सह पूर्वरागः कारित आसीत् ।

गृहस्वामी—अहो ! अद्याहं भगवतः परमानुकम्पया पुत्री सम्वृत्तः ।

## इति दशमः परिच्छेदः ।

# विल्वपत्रम् ।

श्रीमान् राजा शशिशेखरेश्वरदेव शर्म

[ रायबहादुर-महोदयः ]

[ अवशिष्टम् ]



“अपस्मार”-रोगिणः, विल्व कानां मालां गले धार एतेन सर्वथानुमीयते, विल्वकण्टका अ (Hystria) रोगस्य नाशन-शक्तिं धारयन्

“आयुर्विज्ञान-विशारदैः (डाक्टरैः) दृष्टम्, यत् विल्वस्य काष्ठभस्मनि ( फास्फेट्स् आफ लाइम (Phosphetes of L तथा फास्फेट्स् आफ आइरन (Phosphe Iron) इति पदार्थद्वयं स्वल्प मात्रायां निस्स अतो धातुक्षीणतायां, वल-वीर्य्यवृद्धौचेदं भ धुना सह भुक्तं नितान्तमुपकारं जनयिष्यति ।

“आधुनिकाः वैद्याः (डाक्टराः) दीर्घ उदरामयरोगस्य निराशाय विल्वपाकस्य (मु व्यवहारं कथयन्ति । साम्प्रतमेतस्याङ्ग भवनेषु भूयान् प्रचारो व्यवहारश्च दृश्यते । क ताधाः ‘वेथ गाड’ नाम्नि आँग्लौषधालये विल् काचशीशिकायां धृत्वा विक्रीयते ।

"एकदा वैद्यनाथतीर्थे रामधन फलाहारीतिनाम्नः [या]जक-पुरुषस्य मुखान्मयाचत्वारिंशद्वर्षेभ्यः पूर्वं [श्रु]तमासीद्यत्कदाचित् वैद्यनाथस्य परितो महती-[अ]नावृष्टिः सञ्जाता ; परन्तु तत्रैव विल्ववने धारा [स]म्पातोऽभवत् । कियतः कालात् प्राक् अग्निपुरा-[णे]ऽपि मया दृष्टमासीत् यत्—

'न च द्रव्यपतिः कश्चिद्विल्ववृक्षस्य छेदकः ।
क्रियते यत्र विच्छेदः सपुष्पफलिनस्तरोः ।
अनावृष्टि-भयं घोरं तस्मिन् देशे प्रजायते'

[रा]मधनस्य वार्तामाकर्ण्य, अग्निपुराणञ्च दृष्ट्वा मया [नि]श्चितम्, यत्—विल्ववृक्षे नूनं मेघाज्जलाकर्षण-[श]क्तिर्विद्यते । एषा परीक्षा नूनं कर्तव्या ।

"वृक्षस्यास्य विषये बृहद्धर्मपुराणे नितरां गुण[ग]था समुपवर्णिता विद्यते । तत्र नास्ति किमपि [वि]स्मयकरम् । यथा—

'यत्र वाय्व्यां गृहस्थस्य कोण ईशान नामके ।
जायते श्रीफलतरुर्न तत्र विपदः क्वचित् ।
पूर्व्वस्यां सुखदः सः स्याद्दक्षिणे यमभीतिहा ।
पश्चिमे च प्रजादायी वृक्षो विल्व उदाहृतः ।'

विल्वस्य स्वास्थ्यविधायक शक्ति-वृत्तान्तस्तु [..]लिखितः । साम्प्रतमाध्यात्मिकदृष्ट्या, धार्मिक दृष्ट्या च विल्ववृक्ष-कथा वर्ण्यते । एतस्य धार्मिक दृष्ट्या महदुपकारित्वं वरीवर्ति । यथा—

चैत्रादि चतुरो मासान् सिञ्चेद् विल्वतरुं कृती ।
यथा स्निग्धो भवेद्वृक्षस्तथा तत्पितरोऽपि च ॥
नवीनविल्वपत्रार्थी भुक्तिमुक्तिप्रदायकः ।
हरिद्रोर्नगरे यत्र वैद्यनाथो महेश्वरः ॥
तत्राक्षयो विल्व-वृक्षः स्वर्ण-वृक्ष उदाहृतः ।
कामरूपे कामतरुः काश्यामुक्तस्तथादिमः ।
काञ्चीपुरे—पुरः प्रोक्तः श्रीफलोऽक्षय पुण्यदः ॥

"उक्त श्लोकेषु कालविभागेन मास चतुष्टये तीर्थ-चतुष्टयस्य चतुर्विधानां विल्वानां यो निगूढः सम्बन्धः समुपवर्णितः, स नास्मादृशा मल्पमतीनां स्थूलदृष्टीनां निर्णय गोचरो भवितुमर्हति । धर्म्मार्थ-काममोक्षेति पुरुषार्थचतुष्टयं, तीर्थचतुष्टयानां विल्ववृक्षानामभ्यन्तरे कथंसन्निविष्टमित्यस्मिन् विचारे भूयान्कालः समपेक्षितः ।

तन्त्र-शास्त्रेऽपि विल्वमहिमा प्रोक्तः । यथा—

विल्ववृक्ष तले स्थानम् यदि विष्ठादिपूरितम् ।
तदेव शाङ्करं तीर्थं सर्व्वतीर्थ-मयं सदा ॥
सर्व्व-पीठमयं तत्तु सर्व्व-वेदमयं सदा ।
न त्यजेच्छाङ्करं क्षेत्रं न च गङ्गा त्यजेत् प्रिये ! ॥
काशीपूरसमं तत्तु तत्र प्राणांस्त्यजेद्यदि ।
किन्तत्र कोटितीर्थेन काशी वासेन किं प्रिये !



## प्रहेलिका-प्रपञ्चः ।



विगताङ्के प्रकाशितायाः प्रहेलिकाया बहून्युत्तराणि समायातानि । तत्र सर्वप्रथमुत्तरं काशीस्थ-प्रधान-विद्वद्भिर्विद्यावयोवृद्धैरस्माकं पूज्यपादैः श्री-मदनन्तरामशास्त्रिमहोदयैः प्रदत्तम् ।

तदन्तरमेभिरुत्तरं प्रदत्तम्—

( १ ) श्रीखेमानन्द शर्म्मा ( छात्रः ), अर्जुनराम योधराज-संस्कृत-पाठशाला, काशी ।

( २ ) रामसकल शास्त्री, मोहनराम पाण्डेय का मकान, गढवासी टोला, काशी ।

( ३ ) जयकान्त झा शास्त्री, १०, रानी भवानी गली, काशी ।

( ४ ) अज्ञातनामा कश्चित् ।

( ५ ) सर्वनारायणझा ( छात्रः ) गुलजारी लाल ब्रह्मभट्ट पाठशाला, नौधरा, ( कानपुर )

( ६ ) श्रीमती-विदुषी द्वारावती देवी, द्वारिकाधीश-मन्दिरम्, नाथद्वारा ।

( ७ ) देवरभट्ट शर्म्मा, ( वाराणसी ) ।

( ८ ) मङ्गलदत्त शर्म्मा, महेन्द्रगढ़ ( पटियाला ) ।

( ९ ) वंशीधर जैनः ( छात्रः )
स्याद्वाद जैन महाविद्यालयः, काशी ।

( १० ) लक्ष्मीनारायण सोमयाजी ( छात्रः ) वाणी-विलासिनी गीर्वाण कलाशाला, शालग्रामकोट, ( मद्रास ) ।

( ११ ) महावलमध्यस्थः, ( छात्रः ), रम्भापुरमठम् ।

( १२ ) वासुदेवमिश्रः, शास्त्री, गायत्रीब्रह्मचर्याध्यापकः, वशिष्ठकुण्डम्, अयोध्या ।

( १३ ) लक्ष्मीनारायणोपाध्यायः, साङ्गवेदविद्यालयः, रामघाट, काशी ।

( १४ ) वि. सु. रामस्वामीशास्त्री, प्रिन्सिपल्-रामेश्वरम् देवस्थान-पाठशाला, मदुरा ।

( १५ ) शालग्रामद्विवेदः, व्याकरणशास्त्री, जी. टी. संस्कृत कालेज, बंबई ।

( १६ ) गयाप्रसाद शर्मा द्विवेदी, साहित्यशास्त्री, जैन पाठशाला, कटनी, ( सी. पी. )

( १७ ) श्रीरामयत्नशर्मा चतुर्वेदी, बक्सी महल्ला, पटना सिटी ।

( १८ ) चन्द्रशेखरशर्मा, गुमला, नागपुर ( ओरीसा )

( १९ ) भट्ट श्रीकृष्णचन्द्र विद्यार्थी, नाथद्वारा ।

( २० ) श्रीरामशरण शास्त्री, कल्लूमल पाठशाला, कानपुर ।

( २१ ) श्रीबनारसीलालः, ( शिक्षकः ) इंग्लिशहाई-स्कूल भभुआ, जिला आरा ।

( २२ ) जयनन्दन शास्त्री काव्यतीर्थः

( २३ ) श्रीरामयत्न मिश्रः, श्रीरामपाठशाला, चटाई मुहाल, कानपुर ।

## उत्तरम् ।

( १ ) मलयजः, ( २ ) मलयः, ( ३ ) मलम्, ( ४ ) मः ( शिवः ), ( ५ ) यमः, ( ६ ) मयः, ( ७ ) ( ८ ) लयः ।

अज्ञात-नाम-धेयानां महाशयानां सप्रश्न प्रकाश्यते ।

## सप्रहेलिकोत्तरम् ।

शब्दोऽसौ मलयस्त्रिभिर्मलयजो वर्णैश्चतुर्भिर्मलं
द्वाभ्यामेष शिवात्मको म उदितो यत्रावर्णोद्भवः
व्यस्ते यत्र यमो, मयो, जलमथो मध्ये लयः, प्र
ज्ञेयं सम्प्रति सुप्रभातजनितं प्रश्नोत्तरं विद्वरैः ॥
प्रहेलिकोत्तरं ज्ञेयं विद्भिर्मलयजः खलु ।
प्रहेलिकां समाश्रित्य निजं नाम प्रकथ्यते ॥
चतुरक्षरनामाहमाद्यन्तः श्रुतिवाचकः ।
मध्ये वर्णद्वयं ज्ञेयं विद्वरैर्दातृभूषणम् ॥
यत्र व्यस्ताद्यवर्णाभ्यामग्निसंज्ञा प्रजायते ।
अन्ताभ्यामथ वर्णाभ्यां भूतः कोपि नराधिपः ॥
समस्तनाम्ना विज्ञेयः श्रुतिमोदविधायकः ।
यो मेऽभिधानं कथयेद्धन्योऽसौ धरणीतले ॥

—:०:—

## व्याकरणप्रश्नस्योत्तरम् ।

श्रीमता मूलशङ्कर शर्म्मणा कृतस्य व्याकरण प्रश्नस्य मिमे दत्तवन्तः—

( १ ) श्रद्धाराम शर्म्मा, गौडः, लक्ष्मीनाथ पाठ नवलगढ ( राजपुताना )

( २ ) श्रीकृष्ण शर्म्मा त्रिपाठी, दुर्गासंस्कृतपाठ भदैनी, काशी ।

( ३ ) रामलाल शर्म्मा, ( विद्यार्थी ) सहारनपुर ।

( ४ ) व्रजविहारी चौधरी, कुशेश्वर संस्कृत विद्या ( दरभंगा )

## उत्तरम् ।

दुह प्रपूरणे ।

—※—

## प्रश्नः ।

का केन कृतवे कृता किल कदा
काले कलेरस्ति का,

किं सर्वेऽभिलषन्ति सद्मनि सदा
राज्ञा च कोपेद्यते।
कः काश्यां कृतिनां प्रियं प्रकुरुते
वाक्कर्म सन्मानसैः,
सः प्राज्ञः सकलोत्तराण्यपि पदे—
नैकेन यः संवदेत्॥

श्रीसीताराम झा (ज्यौ. आ.)
काशीस्थसन्यासिसंस्कृतपाठशालाध्यापकः।

## प्राप्त-समाचाराः।

काशिक-परीक्षा-केन्द्रम्।

वलियास्थ—सुशिक्षितानाम् अङ्ग्ल-हिन्दी संस्कृतज्ञानाम् विदुषाम् एका समितिः, स्थानीय तहसीली स्कूले रायसाहेबस्य मुन्शी नबाबलालस्य वकीलस्य सभापतित्वे, श्रावण शुक्ले नागपञ्च-म्यां भौमे तदनुसारतोऽगस्तस्य द्वितीयतिथौ सायं पञ्चवादन-समये सञ्जाता। तत्र स्वीकृतश्च प्रस्तावत्रयम् अधोगतम्।

(१) प्रस्तावः—वाराणसेय गवर्नमेण्ट कालेज परीक्षायाः केन्द्र स्थानं वलियायां विधेयम्—यतः अस्माच्छतशश्छात्राः परीक्षायां सम्मिलिता भवन्ति, संस्कृत पाठशालाश्च नूतनाः सम्प्रति कतिपयाः स्थापिता आसन, अत इहालपश एव दिनेषूत्तरोत्तरमधिकश्छात्रसङ्ख्या वर्द्धिष्यति। रसडा सहसीहच्छपरा—प्रमुखदेशीयाः अन्तेवासिनोपि भाविनि खल्वस्मिन्नेव केन्द्रस्थाने परीक्षाम्प्रदातुम्प्रविष्टा भविष्यन्ति।

इहत्या समितिः श्रीयुक्त डायरेक्टर साहेब संस्कृत-रजिष्ट्रार-परीक्षा-समिति-सदस्यांश्चेदमनुरुणद्धि, यत्—

(२) प्रस्तावः—परीक्षाकेन्द्रस्थानं गवर्नमेण्ट हाई स्कूले, ए. वी. हाई स्कूले, मिष्ठन हाई स्कूले वा नियोजनीयम्—

यतः, इह हाईस्कूलीयपरीक्षायाः हिन्दी मिडलस्य, हिन्दी-साहित्य-सम्मेलनस्य च परीक्षाकेन्द्र स्थानं विद्यते।

(३) प्रस्तावः—अद्येह सभायामेव निश्चयो जातः, यदस्य मन्तव्यस्य प्रतिलिपिः प्रयागस्थ श्रीडाइरेक्टर साहेवस्य काशीस्थ-संस्कृत-रजिष्ट्रारस्य च सविधे वलिया मण्डले समाश्रित्य प्रवर्त्तनीयेति।

श्रीरघुनन्दन पाण्डेयः।
हेड पण्डितः बी. ए. हाई स्कूल, बलिया।

## उदुम्बर-सारः।

आयुर्वेदे अद्वितीय आविष्कारः।

अधुना भारते सर्वत्रैव पाश्चात्यौषधीनाम् प्रचारो दृश्यते। बहुशो भारतीया विदेशवस्तुप्रियाः स्वदेशगतमनर्घरत्नमपि नाद्रियन्ते। ज्ञानतो वाऽज्ञानतो वा स्यात् परन्तु महान् राष्ट्रीय-हित-विध्वंसकरोऽयं पन्थाः—बहवः कथयिष्यन्ति, यत् वैद्यक-ग्रन्थे क्षत-व्रणादीनां कृते नास्ति व्यवस्था, अतो वयं पाश्चात्यपद्धत्या स्थापितान् चिकित्सालयान् आश्रयामः, ततोवितीर्णान्यौषधानि च गृह्णीम

इति। तान् महानुभावानहं साग्रहं सानुरोधम् अभ्यर्थये। यत्ते आयुर्वेदेषु युगान्तरस्योपस्थापकानाम् आयुर्वेदाचार्य्य-चिकित्सक-चूडामणि-कवीन्द्र श्री-चन्द्रशेखरधरमिश्र-महोदयानाम् आयुर्वेद-विद्या-शालात "उदुम्बरसार" नामकमोषधिरत्नमानाय्य एवम्विधेषु रोगेषु प्रयुञ्जन्तु। पश्यन्तु च तस्याद्भुतां चमत्कृतिम्। स हि सारः सर्वविधेषु अपि क्षतेषु व्रणेषु दन्त-कर्णादिपीड़ायाञ्च तात्कालिकं स्वीयं प्रभावं प्रकटयति। तैरेव महानुभावैः "गूलरगुण विकाशापराभिधो "यज्ञाङ्ग प्रकाश"—नामक एको लघुग्रन्थो विरचितोऽस्ति,ततएव तद्गुणा द्रष्टव्याः।

तेषामेव पार्श्वे उदुम्बर-सारस्य प्रयोगविधि-रप्युपलभ्यते। संस्कृत-च्छात्राणां कृते मुक्तद्वारन्ते सर्वाण्यपि औषधानि वितरन्ति। तेषामौषधालये त एव रोगिणश्चिकित्स्यन्ते, यान् सर्वे चिकित्सका असाध्यान् विज्ञाय त्यजन्ति। किम्बहुना अस्माभिस्तु बहुशः परीक्षितोऽयमुदुम्बर-सारः। सर्वत्रैव यथा लिखितमेव फलम्वितरतीति। अतः स्वदेश-हितेच्छुभिस्त्ववश्यमस्य प्रचारं विधाय पाश्चात्यौषधानां धाराप्रवाहं प्रसृतः प्रचारोऽत्र भारते निरोद्धव्य इति।

प्राप्ति स्थानम्—
मैनेजर, चन्द्रोदय औषधालयः,
रत्नमाला, पे० वगहा, जि०
चम्पारन।

श्रीगोपालशास्त्री

बिहारोत्कलप्रदेशस्य दक्षिणे दिग्विभागे छोटानागपूर " इत्यभिधो शूद्रप्रान्तः। तत्राधिकसंख्यया " उँरांव" जातयः निवसन्ति। ते तु चतुर्वर्ण-विभागेषु चतुर्थवर्णमलङ्कुर्वाणाः सन्ति। अधुना तेषां दशा शोचनीया वर्तते। ते स्वधर्मं हित्वा खृष्टधर्मानुयायिभिराङ्ग्लपुरोहितैः खृष्टीयधर्मे प्रवे तेषां संख्या क्रमश उत्तरोत्तरं वृद्धिं गच्छति श्रावं श्रावं, दर्शं दर्शं दुःखायते चेतः, यद्वि खृष्टीयाः मोहम्मदीयाश्च हिन्दूजातीनां जा विनाशाय एतादृशाः वद्धपरिकराः वर्तन्ते। अत्रत्याः हिन्दुसनातनधर्माभिमानिनः स्वकीय तैलं दत्त्वा स्वपन्ति। अतो दुःखतरं नु किम्। ऽपरापि वार्तैका सुप्रभापाठकानां सन्निधौ स्थाप्यते। तस्मिन्नेव प्रान्ते " रेवतिआ" इत्या केचन निवसन्ति। ते तु द्वारकाधीशस्य भ श्रीकृष्णचन्द्रस्य भ्रातुः श्रीबलदेवस्य श्वसुर राजा रैवतस्तस्यान्वये स्वकं जन्म मानयन्ति। नामान्ते " सिंह " इति उपाधिरपि वर्तते। य वीतं धारयन्ति। तथा समागतान् ब्राह्मण वहुमानयन्ति। किन्तु, तेषां समाजेषु स्त्री विवाहः, छागकुक्कुरादिनां मांसाहारः,मद्यपान प्रशस्तम्। तन्मध्ये एकवर्षादारभ्य विचित्रा दृश्यते। अथ केनचित्सनातनधर्मीयेनोपदेश पदिष्टाः कतिचन युवानो जीवहिंसनं, भोजनं, मधुपानादीनां त्यागमकार्षुः। युवानोऽधुना समाजतो वहिष्कृताः वर्तन्ते समाजे भोजनपङ्क्तिषु सभासु च ते स्थानं न प्रा न्ति। केऽपि समाजसदस्यास्तेषां नवनिरामिषा विवाहार्थं कन्या अपि न दास्यन्ति। यावत्ते सदोकसंख्यकं छागानां वधं कृत्वा तन्मांस नार्थं सदस्येभ्यो न दास्यन्ति। इयं वार्ता " रां मण्डलान्तर्गत " नवाँगढ " परगनामध्ये वरीव

निवेदयति—
चन्द्रशेखर शर्मा,
गुमला, ( छोटानागपूर )

* * *

## अवशिष्टविशिष्टसमाचाराः ।

यदा जुलाईमासस्य २९ तिथौ चन्द्रवासरे वटोदरनगरी ...नाऽऽक्रान्ता, तदा बहवो जनाः सस्त्रीकाः, सबालाः, ...ानिहितभारा, भयविह्वला, दिङ्मूढाः कार्याऽकार्यविचार-...यास्सन्तो रात्रावेव निवासस्थानार्थमितस्ततो बम्भ्रम्य-...णा यत्र कुत्राप्यवसन् कल्ये राजकीयाध्यक्षैः (officers) ...शालाः, हर्म्याणि, प्राचीनराजप्रासादाः, तारकेश्वर, ...यमन्दिर ( High court ), कलाभवन, आङ्लमहा-...ालय ( Baroda college ) इत्यादीनि स्थानानि निवासार्थमुद्घाटितानि । अपि चैतेषां भोजनार्थ-...ऽपक्वान्नदानायाऽऽदिष्टम् ।

महावह्निशकटारोहणस्थाने ( General Station ) ...यान ( Railway car ) मध्ये १९०० मनुष्या आस-... तेषां भोजनार्थं गोधरा ( Gothera ) निवासिमहा-... पूरिकाः, व्यञ्जनानि च सम्प्रेषितानि । सयाजीगंज-...ने कान्टेक्टर पी. बी. गणपुलेमहाशयेन तत्रत्यजनानां ... भोजनादिव्यवस्थाऽकारि ।

रावपुरा, फत्तेपुरा, नागरवाडा, दांडीआबाजार, नवाबाजार, ...ादिप्रदेशस्थजनाः, वस्तूनि च पौरैस्तरित्रैः सधैर्यं ...कासितानि । तदा मोहमदीया अप्यासुरभावमुत्सृज्य ...यार्थं सप्रयत्ना अभूवन् ।

श्रीमन्महाकुलदीपकमजुमदारमहाशयैस्तत्संस्थापितव्या-...शालाबालैश्च स्वकीयहोडैः स्वकीयप्राणानप्यविगणय्य ...के जनाः संरक्षिताः । अपरञ्च श्रीमान्व्यायामविद्याप्रवीण-...रल-प्रोफेसर-माणिकरावमहाशयैस्तच्छिष्यैश्च मृत्युमुखा-...प्रवाहादनेके मनुष्याः समुपरक्षिताः । सर्वे च ते ...यवादार्हाः ।

राजकीयरुग्णनिवासालये ( State General ...ospital ) परश्शता व्याध्यर्दिताः क्षुत्तृड्व्याकुला ...ाकथञ्चिद्दिनान्यनयन् । अधुना पूरसङ्कटसहायिका समितिः ...स्थापिता । तया सङ्कटग्रस्तलोकानां मूलगृहनिर्माणाय ...ायार्थं सहायता प्रदीयते ।



विश्वामित्रीस्टेशनमास्तरमहाशयः कार्यालयात् समग्रं धनं गृहीत्वा बद्धपरिकरो गच्छन्महाजलौघेन क्षीणशक्तिः सन् कुत्रापि गन्तुं नाऽशकत् । ततो मृतश्च ।

सङ्कलनेन ४४०० गृहाणि भग्नानि, विदीर्णानि च । एवं २४००००० चतुर्विंशतिलक्षरूप्यकाणां हानिः सञ्जाता ।

श्रीयुतमहाशयैर्महात्मभिः श्रीकाशीनगर (Benares) निवासिभिर्विद्यानन्दमहाराजैरपि सङ्कटग्रस्तनाञ्जनानां साहाय्यार्थं २०००० विंशतिसहस्ररूप्यकाणि सङ्गृहीतानि । तेभ्यः सहस्ररूप्यकाणि सङ्कटाऽऽक्रान्तविद्यार्थिभ्यः पुस्तकदानार्थं वितीर्णानि ।

एतादृशां जनानामेतादृशीं स्थितिं दर्शं दर्शं, श्रावं श्रावं, ध्यायं ध्यायं, स्मारं स्मारं, आस्माकीनस्वान्तानि चेखिद्यन्तेतमाम् ।

एतादृश्याः स्थितेः परं कारणं समष्टिदैवमेव । अतो वयमधमोद्धारणं पतितपावनं भक्तवत्सलं सकलोत्पत्तिस्थितिसंहारकारणं श्रीजगन्नियन्तारं प्रार्थयामहे । यत्स सर्वान्सर्वदा संरक्षत्विति शम् ॥

**नर्मदाशङ्करशर्मा, दत्तात्रेयशर्मा च ।**

श्री बडोदा-राजकीय संस्कृतमहाविद्यालयच्छात्रौ ।

* * * *

## समालोचनम् ।

### सामुद्रिकरहस्यम् ।

प्रणेता—श्रीकालिकाप्रसादशर्म्मा, राजज्योतिषी, रामनगर स्टेट । प्राप्तिस्थानम्—सुप्रभात-कार्यालयः, काशी । मूल्यम्—सपादमुद्रा ।

सामुद्रिकशास्त्रं संस्कृत-वाङ्मयस्यैकं प्रधान-शाखारूपम् वर्तते । परमिदानीं दुर्दैवात् तद्विलुप्तप्रायं विद्यते । केचन इतस्तत इमां विद्यां व्यापारिक

रूपेण प्रदर्शयन्तो लौकैरुपहस्यमाना दाम्भिकशब्द व्यपदेश्या भवन्ति । वस्तुतः शास्त्रस्यास्य विषये अङ्ग्लभाषायामन्यासु च भाषासु केचन सङ्ग्रहात्मकाः ग्रन्थाः समुपलभ्यन्ते । संस्कृतभाषायामस्या महत्यास्त्रुटेः पूर्तिः श्रीमता राजदैवज्ञेन श्रीकालिकाप्रसादशर्म-महोदयेन कृतेति ते सर्वथा धन्यवादार्हा अस्माकं संस्कृतज्ञानामिति कथयन्तः परं प्रमोदामहे । अत्र संस्कृत-श्लोकानां सरल-सुगमो हिन्दी भावार्थश्च निवेशित इत्यन्यदपि सौकर्यं सम्पादितं सम्पादकेन । साम्प्रतमेतादृशानां पुस्तकानां समाजे महत्यावश्यकता वर्वर्ति । अस्मिन् पुस्तके हस्तरेखा दर्शन-सौकर्य्याय बहूनि चित्राण्यपि सन्ति । पुस्तकमेतत्सर्वैरपि संस्कृतज्ञैर्विद्वद्भिश्छात्रैश्च सर्वथा समालोकनीयम्, मननीयञ्च । येनास्य लुप्तप्रायस्य हस्तरेखा-विज्ञानस्य संस्कृते पुनः प्रचारः स्यात् । जनता च मूर्खाणां हस्ते नैव पतिता भवेत् । एतत्पुस्तकावलोकनेन शिक्षकमन्तरेणैव ज्ञानं भवति । मया स्वयं परीक्ष्य दृष्टम् ।

*सूर्यचरितम् ।*

प्रणेता, प्रकाशकश्च—श्रीतारादत्तपन्तः, साहित्याचार्यः, काव्य-व्याकरणतीर्थः, दर्शनशास्त्री । मूल्यम् १) एकामुद्रा । प्राप्तिस्थानम्—सुप्रभातकार्यालयः, काशी ।

नवीनं महाकाव्यमिदम् । इदं काव्यं गोलविद्या-विषयकं विद्यते । सूर्य एव किल भूगोलस्य खगोलस्य प्रधानतमः । अतस्तमवलम्ब्यैतत् ऋतुचरितापरपर्यायं महाकाव्यं प्रणीतवान् नवीनोऽयं कविवरः । भारतवर्षस्य विभिन्नान् देशान् समुपवर्णयन्, सरसरीत्या सामयिकं, वास्तविकं, स्वाभाविकञ्च तत्तद्वर्णनं कुर्वन् कविर्निरतिशयं कौशलं
तवान् । अत्र षोडश सर्गाः सन्ति । कविताः
मधुराः सरलाश्च सन्ति । एतस्य पठनेन विविध
नाम्, शीतोष्णादीनाम्, फल-पुष्पादीनाम्,
रव्यवहारादीनाञ्च सम्यग्ज्ञानं सम्भवति । क
गवेषक इति ग्रन्थावलोकनेन सम्यक् प्रती
किम्बहुना । नूनं द्रष्टव्यमिदं काव्यम् संस्कृत
विद्वद्भिश्च, सफलयितव्यश्च कवेर्महान् परि
श्रीमन्तः पन्तमहोदया आधुनिके काशीविद्व
प्राचीना अन्वेषका मननशीला विद्वांसः स
सुप्रभातपाठकैर्बहुधा विलोकिताः सन्ति तेषां
यः, कविताश्च । विशिष्ट-समालोचनं पुनः क

*माधुरी ( विशेषाङ्कः )*

सम्पादकौ—श्री पं० कृष्णविहारीमिश्रः, बी०
एल् एल्० बी०,—श्रीप्रेमचन्द्रश्च । सञ्चालकः श्रीवि
यण भार्गवः, नवलकिशोरप्रेस, नखलऊ । वार्षिकमूल्य

इयं सुप्रसिद्धा हिन्दी-पत्रिका हिन्दीभा
युगान्तरमुपस्थापितवतीति विदितचरमेव
साहित्यरसिकानाम् । साम्प्रतमेतस्य पूर्वसम्पा
श्रीदुलारेलाल भार्गव—श्रीरूपनारायणपा
महाशयौ सुधानाम्नीं पत्रिकां सम्पादय
तथाप्यस्याः सम्पादनं सम्यग् भवति । एष
षाङ्कः षष्ठवर्षस्य प्रथमाङ्कः । एतस्य मुद्रणं प्रका
श्चातितरां मनोहरम् । षट्चित्राणि, त्रिवर्णानि
न्ते । अन्यानि च सन्ति बहूनि चित्राणि । सम
सौन्दर्यं कौशलञ्च सभाजनीयमस्ति । लेख
निर्वाचनं सौष्ठवं च दृष्ट्वा चेतः प्रसीदतितरा
'जीवन-सुधा,' 'ज्ञानज्योतिः,' 'कृषिकौशल

वाणिज्यं व्यवसायश्च, ' ' सुभाषितं विनोदश्चे '
पञ्चस्तम्भा नूतना नियोजिताः सन्ति । एतस्य
कमपि बाह्यमान्तरश्चाङ्गं हिन्दी-साहित्य-संसारे
गौरवास्पदं महत्वपूर्णञ्च वरीवर्ति । वङ्ग-महाराष्ट्र-
गुर्जरादिसाहित्ये समुन्नततराणि पत्राणि बहूनि
सन्ति । हिन्दी-भाषायामेकैवासीत् सरस्वती । पर
मिदानीं माधुरी-माधुरी, हे पयति सर्वेषां माधुरी-
मिति वयमिमां पत्रिकां सभाजयामः । कामयामश्च
यदियं पत्री विजयतादिति ।

*बालकस्य वीराङ्कः ।*

यथा प्रौढ-साहित्ये 'माधुरी' हिन्दी-वाङ्मयं गौरवस्थान मासादयति, तथैव बालसाहित्येऽपि सौभाग्य-सुन्दरो बालकः तेषां भाषाणां बालकोपयोगिपत्रेषु महत्वमासादयतीति लसति हृदयमस्माकम् । साम्प्रतमस्य वीराङ्कः कृष्णाष्टम्यवसरे महता समारम्भेण द्रव्य-व्ययेन च सम्पन्नः । एतस्य सम्पादकाः श्रीशिवपूजनसहाय-हिन्दीभूषण-महाशयाः सन्ति । इमे सिद्धहस्ताः सम्पादकाः सन्ति । हिन्दीभाषालेखकेषु श्रीशिव-पूजन-सहायस्य सम्पादन शैली, लेखन सरणिर्यादृशी सुन्दर-तरा, सुमनोहरा च विद्यते, तादृशी नान्येषामिति ध्रुवं सत्यम् । तत्सम्पादनेन वीराङ्को वस्तुतो रमणीयः सम्वृत्तः, बालोपयो-गिनां विशिष्ट-लेखानां चित्राणाञ्च सज्जीकरणे नितरां कौशलं दर्शितमत्र । पत्रमिदं सर्वैरपि हिन्दीभाषां जानद्भिः संग्राह्यं वर्वर्त्ति । वीराङ्के लब्धसाफल्यस्य बालकस्य दैनन्दिनं समुन्नतिः सुप्रचारश्चस्यादिति मन्महे ।

*हिन्दी प्रचारकः ।*

सम्पादकः—हरिहर शर्म्मा, हिन्दी-प्रचारक-प्रेस, ट्रिप्लिकेन, मद्रास । वार्षिकम्मूल्यम्—१॥)

एष सम्मेलनाङ्कः सम्मुखेऽस्माकं विद्यते । पत्रमिदं मद्रप्रान्ते हिन्दीप्रचारं करोति । अत इदं नितरां स्पृहणीयम्, समादरणीयञ्च पत्रम् । एतस्य भाषा, नितान्त-सरला, मनो-हरा च भवति । साम्प्रतं अखिल-कर्नाटक-प्रथम-हिन्दी-प्रचार-सम्मेलनम्, मैसोर—राज्यान्तर्गते बङ्गलोरनगरे, महात्मनो गान्धि-महोदयस्य सभापतित्वे समभूत् । तस्यैवाऽयं विशे-षाङ्को महता परिश्रमेण सम्पादितः ।

*श्रीराम-सन्देशः ।*

नूतनं हिन्दी मासिकं पत्रम् । सम्पादकः, प्रका-शकः, व्यवस्थापकश्च चन्द्रभालमणि शास्त्री । वार्षिक-म्मूल्यम् २) मुद्राद्वयम् । प्राप्तिस्थानम्ः—श्रीराम-सन्देश—कार्यालयः, अयोध्या,

पत्रमिदं श्रीकृष्ण सन्देशमनुकर्तुं प्रवृत्तः । परन्तु दशा-वलोकनेन प्रतीयते यदस्यावस्था न समीचीना । साधारण-मिदं पत्रम् । अस्य समुन्नतिं कामयामहे ।

*खण्डेलवाल-जैन-हितैच्छुः ।*

भारतीय-दिगम्बर--जैनखण्डेलवाल-महासभा-याः पाक्षिकं हिन्दी मुखपत्रम् । प्रकाशकः ऋषभचन्द्र बैनाडा । प्राप्तिस्थानम्— १,वैशाखलेन, वड़ाबाजार, कलकत्ता ।

पत्रमिदं समीचीनम्, जीवनपूर्णञ्च विद्यते । सम्पादनं सम्यक् भवति । नूतनमिदं पत्रम् । अस्य समुन्नतिमभिल-षामः ।

*कल्याणम् ।*

भगवन्नामाङ्कः । सम्पादकः—हनुमान प्रसाद पोद्दारः । प्राप्तिस्थानम्—सत्सङ्गभवनम्, ठाकुरद्वार रोड, बंबई । वार्षिकम्मूल्यम्—३) । अस्याङ्कस्य मूल्यम्—१)

पत्रमिदं भगवद्भक्ति-प्रचारकम्, महता द्रव्यव्ययेन समा-रम्भेण च निःसरति । धनिकानां श्रेष्ठिनामिदं पत्रमित्यस्य मुद्रणप्रकाशनादि-सौन्दर्य्यस्य किमु वक्तव्यम् ? भगवन्नामाङ्को नितरां नयनमनोहरः । एतस्मिन् ४२ चित्राणि सन्ति । कतिचित् चित्राणि तु भृशं भावपूर्णानि सन्ति । सम्पादकस्य साफल्यं सभाजयामः । अङ्कोऽयं सर्वथा दर्शनीयः । कल्या-णस्य कल्याणं कामयामः ।

*सहस्रांशुः ।*

**संस्कृत-पाक्षिकपत्रम् । सम्पादकस्य नाम न लिखितम् । प्रकाशकः, व्यवस्थापकश्च—श्रीगौरीनाथ पाठकः, साहित्याचार्यः, शारदा भवनम्, काशी वार्षिकमूल्यम्—द्वादशाणकाः ।**

पत्र मिदं प्रत्यष्टमि प्रकाशितं भवति । बालानां कृते पत्रस्यास्य प्रादुर्भावः समजनि । परमत्रप्रायः कठिनाः, बालकानां नात्युपकारका लेखाः संदृश्यन्ते । वयमस्मिन् विषये सञ्चालकानां ध्यानमाकर्षयामः । पत्रस्य समुन्नतिभूयादित्यभिलषामश्च ।

*सन्यासी ।*

**मासिकं हिन्दी पत्रम् । सम्पादकः—श्रीटेकचन्द्रआर्य्यः । प्रकाशकः स एव । प्राप्तिस्थानम्—सन्यासी कार्यालयः, २२, कार्नबालिस ष्ट्रीट, कलकत्ता । विना मूल्यं वितीर्य्यते ।**

चैत्रमासादारभ्य पत्रमिदं प्रचलति । एतत्पत्रं विशुद्धमार्यसमाजोद्देश्यप्रचारकम् । शुद्धि-सङ्ग्रन्थन-अस्पृश्योद्धारप्रभृतिविषयाणां निर्भीकं प्रतिपादकं विद्यते । विना मूल्यं प्रदीयत इति धन्यवादार्हाः सम्पादकाः । पत्रं प्रचलिष्यति चेन्नूनं महत्कार्यमनुष्ठास्यतीति सम्भावयामः ।

*ब्राह्मणबन्धुः ।*

**मासिकं हिन्दीपत्रम् । सम्पादकः—श्रीशुकदेवशर्म्मा, कर्म्मकाण्डी, प्रकाशकः—सूर्य्यदेवशर्म्मा । प्राप्तिस्थानम्—व्यवस्थापकः—ब्राह्मणबन्धु—कार्यालयः, C/o विजयप्रेस, मुजफ्फरपुर । वार्षिक मूल्यम्—२)मुद्राद्वयम् ।**

भूमिहारब्राह्मणसमाजस्य पत्रमिदं भूमिहारेषु कर्म्मकाण्डप्रचारकम् । सर्वेषां ब्राह्मणानामेकीकरणमित्ययमुद्देश्योऽस्य समीचीनः । अस्मिन् हिन्दीभाषा नातिशुद्धा, नच परिष्कृता वर्तते ।

*धर्मरक्षकः ।*

**साप्ताहिकं हिन्दीपत्रम् । सम्पादकः—धर्मरत्नम्**

**अयि भारतीयाः ! उत्तिष्ठत !!**

( १४० तमपृष्ठादग्रे )

**दनार्थं तद्रक्षणार्थं च योग्यतां यदा वयं द… तदैव तदभिमानोऽस्माकम् युक्तः इति । नात्र वैचित्र्यसम्भावना । 'पूर्वजा मे वीरा' इति …यित्वा स्वदौर्बल्यं निगूहितुं कोऽपि भयप्र…त्मानं शूरं कथयिष्यति चेत्तत्स्यैव शोभा… नान्ये तस्मिन् विश्वसन्ति । यदि तस्य शौर्यं …त्वीक्रियते लोकैस्तदैव स शूर इत्याद्रियते । …श्येव राष्ट्रस्य स्थितिः ।**

**गत-पञ्चवार्षिकमहासंग्रामात्प्रागेव न… तीया युद्धविशारदास्तेषु युद्धकौशलाभाव…मासीदस्माकं विषये जगतो धारणा । किन्तु… शद्वर्षपर्यन्तं यैः शस्त्रं न धृतं, न वा दृष्टं, रा… ते शस्त्रं गृहीत्वा फ्रान्सदेशानां रणभूमिषु … तत्र जर्मनान् भीतत्रस्तांश्चक्रुः । इदमत्यद्भुत… पूर्वं कृत्यं दृष्ट्वा गौरवर्णीयाणां; नास्ति केषां… धैर्यमधुनाऽस्मान् भीतान् कथयितुम् । … वयमस्माकं बुद्धिप्राधान्यं सर्वान् स्वकृत्या… यामस्तदैवास्माकं सम्मानं भविष्यति जग… वयं जगतः शिरोधार्या भविष्यामो निःसंश… अतो वयं स्वावलम्बिनो भवितुं प्रयतामहे, … न्नतिं च कुर्म इति प्रार्थयित्वात्रैव विरमामि**

**श्रीज्योतिःस्वरूपशर्म्मा, सप्तभाषाज्ञः । प्रकाशक… एव । प्राप्तिस्थानम्—श्रीब्रह्मस्वरूपशर्म्मा, व्यव…पकः, सारस्वतप्रेस, गम्भीरपुरा, अलीगढ़… मूल्यम्—२)**

शुद्धसनातनधर्मस्य प्रतिपादकं समीचीनं पत्रम् । ग्राहकानामभावेनास्य दशा न सम्यक् विद्यते । एतस्य … दकाः सिद्धहस्ताः सम्पादकाः सन्ति । सनातनधर्मि… ध्यानमत्रदीयमानं नितरामपेक्ष्यते । मन्ये, विद्वांसः स… धर्मावलम्बिनश्च पत्रमिदं समवलम्बयिष्यन्ति ।

# सुप्रभात-पाठकेभ्यः

अयि आर्याः !

(१) सुप्रभातं वर्षत्रयं यावत् स्वोचित-मूल्यादपि नितरां स्वल्पेन मूल्येन स्वीयां हानिं कृत्वाऽपि
केवलं निर्धनानां संस्कृतच्छात्राणां सौकर्याय, प्रचारोद्देश्येन निरसरत् । तत्र समर्था अपि संस्कृतज्ञाः,
विद्वांसश्च छात्राणां नाम्नैव सुप्रभातं गृह्णन्त आसन्, येन प्रतिवर्षं त्रिशतमुद्राणां हानिर्जायमानासीत् । सा
च हानिर्यतस्ततो भिक्षावृत्त्या पूर्यतेस्म । तेनैव कारणेन सुप्रभातस्य कलेवर-वृद्धिः, सम्पादन-सौन्दर्यम्,
प्रकाशनसौन्दर्यञ्च न जातम् । यतः, सर्वेऽपि कार्यकर्तारः सुप्रभातस्य जीवन-रक्षायामेव संलग्ना आसन् ।
चतुर्थे वर्षे च सुप्रभातस्य मूल्यवृद्धिः सञ्जाता । तस्य प्रकाशन-सौन्दर्यम्, सम्पादन-सौन्दर्यञ्च वृद्धिङ्गतम् ।
परन्तु ग्राहकाणां वृद्धिर्वर्षत्रयात् स्थिरैव वर्तते । सर्वेऽपि छात्रमूल्येनैव सुप्रभातं गृह्णन्ति । तेन पुन-
रपि सैव प्राक्तनी व्यवस्था सञ्जाता सुप्रभातस्य । धनाभावात् सुप्रभातस्य सञ्चालनं न भवितुमर्हति ।

यदपि केषाञ्चन सुप्रभात-पाठकानाम् भ्रमः स्यात्, यत्, सुप्रभातस्य सम्पादकाः, व्यवस्थापकाः,
कार्यकर्तारश्च वेतनं गृह्णन्ति इति; तत्तु सर्वथा मिथ्याज्ञानमेव । कार्यालयस्य निम्नकर्मचारिणां कृते, ये च
संस्कृतच्छात्रा एव सन्ति, केवलं १२॥) मुद्रामितं मासिकं व्ययीक्रियते । यद्विना कार्यमेव न प्रचलति ।
अस्य सर्वे उच्चश्रेणिस्थाश्च कार्यकर्तारः स्व-स्व-पठन-पाठनादि-जीविका-कार्ये निरन्तरं प्रयताः सन्ति ।
न ते स्वीयां जीविकां विहाय सुप्रभात-कृते इतोऽधिकं महान्तं त्यागं कर्तुं शक्नुवन्ति । यावत्त्यागं
कुर्वन्ति, तावदेव प्रचुरं विद्यत इति नास्त्यत्र कश्चन सन्देहः । एवं स्थिते धनाभावेन ते न सम्यक्
पत्र-व्यवस्थां कर्तुं पारयिष्यन्ति । अतएव च सुप्रभातस्य-सम्पादने, प्रकाशने च कियत्यस्त्रुटयः संलक्ष्यन्ते ।

भिक्षावृत्तिरपि साम्प्रतयुगे नितरामव्यवस्थिता वर्तते । संस्कृतज्ञान् विहाय न वयं कमप्यन्यं
याचितुमीहामहे प्रकृतिविरुद्धत्वात् । पत्रमिदं सर्वेषां संस्कृतज्ञानां वर्तते । नैकस्य कस्यापीति पत्रस्य
निरोधे कार्यकर्तॄणां नास्ति काऽपि हानिः । प्रत्युत, संस्कृतज्ञानामेवापवादो भविष्यति, यत्ते नैकमपि पत्रं
सञ्चालयितुं समर्थाः सन्तीति । अतो वयं सुप्रभातपाठकानां पुरः प्रश्नमिमं संस्थापयामः । सुप्रभातमि-
दमिमां दरिद्रावस्थामनुभवन्नपि केवलं परिश्रमेण सत्यमूलकतयैव जीवतीति साभिमानं वक्तुं पारयामः
अतोऽत्र किं करणीयमिति तत्पाठका अस्मिन् विषये सुचिरं विचार्य कार्यालये निजां सम्मतिं प्रेषयन्तु ।

(२) हिन्दी भाषायां यत्किमपि पत्रं निःसरति. तदुपरि हिन्दी-विज्ञाः, लेखकाश्च निर्भयम्, निःश
ङ्कम्, मुक्तकण्ठम्, समालोचनं कुर्वन्ति । परन्तु, संस्कृते वारं वारं प्रार्थ्यमाना अपि संस्कृतज्ञा मूक
तायामेव स्वीयं महत्वं जानन्ति । यत्र कस्यापि वस्तुनो गुण-दोषाः सम्यङ् न प्रकटिताः भवन्ति । त
तस्य न समुन्नतिर्भवति, कार्यकर्तारश्च निरुत्साहिनो भवन्ति । अतो वयं सर्वान् पाठकान् सविनयम्
साग्रहम्, सानुरोधञ्च प्रार्थयामहे, यत्ते वर्तमान-सुप्रभात-नीति-विषये स्वीयां सम्मतिं निःसङ्कोचम्, निष्प
क्षपातम् प्रहिण्वन्तु । अग्रिमाङ्कप्रकाशनात् पूर्वमेव सर्वेषां ग्राहकाणां सम्मतिर्नूनमपेक्ष्यते । निर्दि
विषयेषु विशेषतः सम्मतिः प्रदेया—(१) सुप्रभातस्य वर्तमान-नीतिः समीचीना न वा ? (२)
समीचीना चेत्; कीदृशी नीतिः समपेक्षिता ? (३) सुप्रभाते विषयाणां परिवर्तनम्, परिवर्धनम्
परिष्कारः, संस्कारो वा अपेक्षितो न वा ? (४) अपेक्षितश्चेत्कीदृशः ? इत्यादिः ।
सुप्रभातस्य कलेवरं स्वल्पतां गतम्
अधिकाःसम्मतयः स्वीकृताः भविष्यन्ति । साम्प्रतं धनाभावात्सुप्रभातस्य
चित्रप्रकाशनञ्चावरुद्धम् ।

—इति निवेदयति,

—सम्पादकः

## साहित्य-सूचना ।

### आर्यमहिला ।

'आर्यमहिला' नाम्नी त्रैमासिकीपत्रिका चिर-
...ात् भारतधर्ममहामण्डलात् निःसरति स्म ।
...च कियतः कालात् मासिकरूपेण प्रचलतिस्म ।
...तत्र समयानुकूलं सौन्दर्यं नासीदिति महा-
...डलाधीशास्तामुन्नेतुं कृतप्रयत्नाः सन्ति । तदी-
...लीतः पत्रिकेयं महता समारम्भेण सरस्वती-
...री-सुधा-प्रभृतीनां मनोहरां सरणिमनुसृत्य
...शिता भविष्यतीति नितरां सौभाग्य-स्थानं
...दीभाषायाः । अस्या वार्षिकम्मूल्यम् ६॥)
...ष्यति । ग्राहकत्वमभिलषद्भिस्त्वरा विधेया ।

प्राप्तिस्थानम्—
आर्यमहिला—कार्यालय,
जगत्गञ्ज, काशी ।

### श्री वेङ्कटेश्वर-समाचारस्य विशेषाङ्कः ।

दीपमालिकाऽवसरे श्रीवेङ्कटेश्वर-समाचार
...स्य विशेषाङ्को नवीनरूपेण, नूतन-वर्णेन, नवी-
...ना सामग्र्या, विशिष्ट-समारम्भेण च निःसरि-
...ति । विविधानि चित्राणि, महत्वपूर्णा लेखाः,
...विताश्चेति सर्वमतितरां चित्ताकर्षकं भविष्यति ।
...स्यमूल्यमेका मुद्रा । अद्यैव ग्राहक श्रेण्यां नामो-
...लेखनं कारयितव्यम् । प्राप्तिस्थानम्

श्रीवेङ्कटेश्वर-समाचारः, बंबई, ४

## रामराज्यं पुनः स्यात् ।

सश्रद्धाधीतवेदं द्विजपरिचरणं संस्कृताधीतिवृन्दम्,
मर्यादावर्तिलोकं विगतरिपुभयं दुःखदारिद्र्य-शून्यम् ।
वर्षावाताद्यनुकूल्यं पशु-धन-निचितं शूर-वीर-प्रकृष्टम्
न्यायप्रेम-प्रशस्तं प्रमुदित-जनतं रामराज्यं पुनः स्यात् ?

—बहादुरचन्द्रः शास्त्री ।





## संस्कृत-समाचाराः ।

सुप्रभातस्य प्रधानसंरक्षकः सुप्रसिद्धो दानवीरः श्रीमान् श्रीघनश्यामदास-विरला-महोदय इङ्ग्लैण्ड-देशात् परावृत्य, भारते समागतः । साम्प्रतं काश्यां वर्तते ।

इङ्ग्लेण्डनगरे भारतीयानां राज्ञां श्रेष्ठिनाञ्च साहाय्येन श्रीराममन्दिरस्य समुद्घाटनमभवत् । तत्र भारतीयानां व्यवसायिनां कृते निवासव्यवस्था भारतीया भोजनव्यवस्था च भविष्यति । अत्र संस्कृत-विद्यालयः, संस्कृत-पुस्तकालयश्च संस्थापितो भविष्यतीति परं प्रमोदस्थानं संस्कृत-साहित्य-समाजस्य ।

म० म० विहारीलालशास्त्री चतुर्वेदः सूचयति, यत्, व्रजमण्डल-यूनिवर्सिटी-परीक्षाः, अप्रेल मासस्य द्वितीयदिवसादारब्धाः भविष्यन्ति । २१नवम्बर पर्यन्त मावेदनपत्राणि प्रेषणीयानि ।

काशीस्था राजकीया परीक्षाश्चैत्रमासे ( १० मार्च २८ ) भविष्यन्ति । एतत्कृते सर्वथा धन्यवादार्हास्तदधिकारिणः ।

काशीस्थराजकीय-महाविद्यालयात् प्राप्तावकाशानां महामहोपाध्याय-श्रीमुरलीधरझा ज्यौतिषाचार्यमहोदयानां स्थाने, जगद्विख्यात-विदुषां स्वर्गत-महामहोपाध्याय—श्रीसुधाकरद्विवेदानां पुत्राः, श्री पद्माकरद्विवेद महोदयाः ज्यौतिषाचार्याः, अध्यापकत्वेन नियुक्ता इति परं हर्षस्थानं सं० सा० समाजस्य । इमे प्राचीन-प्रतीचीन-ज्योतिःशास्त्रस्य मर्मज्ञाः, गवेषकाश्च विद्वांसः सन्ति । एतेषां नियुक्ताधिकारिणां विवेकः सर्वथा समर्थनीयः । एतादृशो नवीनो गणिततत्त्ववेत्ता संस्कृतज्ञेषु दुर्लभ एव ।

काशी-संस्कृतच्छात्रसङ्घस्य समुद्योगेन नवीनः संस्कृत साहित्य-विद्यालयः समु[illegible] भविष्यति । अत्र समयानुकूलानां धर्म-[illegible] भूगोल--लेखनकला--अनुवाद--विज्ञान--स[illegible] स्वस्थवृत्त-प्रभृतिविषयाणामध्ययन-प्रबन्ध[illegible]ष्यति । अत्राध्यापका अवैतनिका भवि[illegible] अत्राध्यापनप्रकारोऽपि नितरां सरलो नवीन[illegible]यिकश्च स्यात् । परीक्षार्थिनः, अपरी[illegible] उत्तीर्णपरीक्षाः वा सर्वेच्छात्राः पठितुं शक्नु[illegible] एष नवीन-महाविद्यालयः संस्कृतसमाजे [illegible] कार्यमनुष्ठास्यतीति प्रतीयते ।

साम्प्रतं संस्कृत-पुस्तकानां मुद्रण[illegible] सम्पादनादि-व्यवसायो मूर्खाणां हस्ते [illegible] येन तत्र सर्वत्र व्यापारिकदृष्ट्या ते सुरभा[illegible] सुरभारतीसमुपासकाँश्च निष्करुणं विलु[illegible] छात्राणां यथाकथमपि लुण्ठनं, निजकोषपूर[illegible] द्वयमेव तेषां मुद्देश्यम् विद्यते । अतस्तेषां लुण्[illegible] हस्तात्सुरभारती-संरक्षणाय, विशुद्ध-साहित्य[illegible]राय, संस्कृत विदुषां छात्राणाञ्च [illegible] काशीस्थानां विदुषां नवीना ग्रन्थमाला दीपा[illegible] प्रकटिता भविष्यति। तत्र च सर्वेऽपि संस्कृत-[illegible] ग्रन्थाः सरली कृत्य, परिष्कृत्य, संस्कृत्य च [illegible] स्वल्पमूल्येन, विशुद्धतया, सौन्दर्येण च प्र[illegible] भविष्यन्ति । एतेषां सम्पादनं काशीस्था म[illegible] विद्वांसः करिष्यन्ति । सुरसरस्वतीप्रीत्य[illegible] पुण्यकार्यं प्रचलिष्यतीति सर्वैः संस्कृतज्ञै[illegible] [illegible]न्थभाण्डारस्य पुस्तकानि ग्रहीतव्यानि । [illegible] [illegible] पुनः प्रकाशिता भविष्यति ।

[illegible] जयादशमी महोत्सवो महता [illegible] त [illegible] नगर-शासकस्य श्री वी[illegible] मह[illegible] [illegible] प्रबन्धो नितरां समीचीनो [illegible] तथापि [illegible] प[illegible]रन्तर्मालिन्यं परिव[illegible] मेव ल[illegible] [illegible]जनाश्च भीत्या न स्वीयमत[illegible] प्रकटयन्ति । विश्वेश्वरः शान्ति सम्पादयतु ।

Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

सौर-कार्तिकः ( तुला ), १९८४ वैक्रमाब्दाः

चतुर्थ वर्षे ] [ सप्तमी सङ्ख्या

# सुप्रभातम् ।

तिमिरततिमुदस्यद् भेदतारा विलुम्पन्नयदधिसुरभाषाभाषि जागर्तिमुच्चैः ।
विबुध-विहग-वादैः राह्वयद् भाग्यभानुम् विलसतु भुवनेऽस्मिन् सर्वतः सुप्रभातम् ॥

## सुप्रभातेसम्मतिः ।

भारते प्रचलितसंस्कृतपत्रेषु सुमङ्गल-सुभाषितैः, सुललितलेखैः, गवेषणापूर्णालोचनैः, निष्पक्ष-समालोचनैः, विविधार्थ-प्रहेलिकाभिः सर्वोच्चैः पदमादधाति सुप्रभातमिति मुक्तकण्ठेन प्रकटीक्रियते ।

किन्तु विदुषां छात्रमूल्येन पत्रानयनं महदनुचितमिति खिद्यते चेतः । पत्रस्य वर्तमाननीतिः प्रशस्यैव वर्तते न च विवादावसरः ।

अतोऽस्य प्रकाशनमेव संस्कृत समाजोपकारि—इति स्पष्टमनुभूयते । नैतादृक् पत्रं संस्कृतसमाजेऽन्यदस्तीति प्रकाश्यते ।

म० म० चतुर्वेदी विहारीलाल शास्त्री
रजिस्ट्रार, श्रीव्रजमण्डल-यूनिवर्सिटी, मथुरा ।

सम्पादकः—श्रीकेदारनाथशर्म्मा सारस्वतः ।

वार्षिकम्मूल्यम्—मुद्रात्रयम्, माननीयेभ्यो द्वादशमुद्राः, छात्रेभ्यः—सार्द्धैकमुद्रा ।

# लेखसूची ।

# सुप्रभातम् ।

विविध-विषय-विभूषितम्, सचित्रम्, अद्वितीयम्, संस्कृत-मासिक-पत्रम् ।

चतुर्थ वर्षं | वाराणसी, सौर कार्तिकः, १९८४ वैक्रमाब्दाः | सप्तमी संख्या


## विज्ञप्तिसारः ।

महाकवि श्रीगुमानी पन्त-कृतः ।

[ सम्पादकः—श्री तारादत्तपन्तः, साहित्याचार्यः, व्याकरण-काव्य-तीर्थः ]

…जनकजापते, द्युमणिबिम्बकोटिद्युते !
…र्णव, जगद्गुरो रघुकुलावतंस, प्रभो !
…यातिविधुरस्य मे सकरुणं वचः श्रूयताम्
…य विपदं सुखी भवति सेवकः स्वामिने ॥ १ ॥
…ते भवति भर्त्तरि त्रिभुवनैकरक्षापरे,
…भवति मामियं यदतिमात्रमापन्नता ।
…त्वमसि कारणं स्फुरति किन्तु कर्मायति-
…पश्यति दिवा रिपुर्बलिभुजां न दोषो रवेः ॥ २ ॥

त्वदन्यमनुपेयुषि स्वशरणं वदान्योद्धुरम्,
दुरन्त-भव-वाडव-ज्वलन-दह्यमाने भृशम् ।
मयि प्रणयमर्हति स्वभृतके विधातुं भवान्
भवन्ति हि दयालवः प्रणतदुर्विधेवत्सलाः ॥ ३ ॥

इदं भव-समुद्भवं परिजिहीर्षुरत्याहितम्
जनोऽयमगतिर्मनोभिमतमर्थमभ्यर्थयन् ।
लभेत कृतकृत्यतां, कृतविदो भवन्तो न किम्
रुदन्नव-घनाघनात्सलिलमाप्नुते चातकः ॥ ४ ॥

परस्य परमेशितुस्तव निसृष्टलोकस्थितेः
न सन्ति कति मादृशा जगति दीनदासेरकाः ।
ममत्वमभिमतो भवान्प्रभुरनन्यसाधारणो
विधोः कुमुदकोटयो न कुमुदस्य नैको विधुः ॥ ५ ॥

अपि प्रतिहतस्य मे हृदयमध्यमध्यासितुम्
त्वया ननु सनातनी स्वपदभक्तिरादिश्यताम् ।
तया निजसमीहितं सपदि साधयिष्याम्यलम्
न किञ्चन दुरालभं करगतेऽस्ति चिन्तामणौ ॥ ६ ॥

त्रिलोचनचतुर्मुख-प्रभृति-देवतानामपि,
स्फुरन्ति दुरितच्छिदो जगति भक्तयो भूरिशः ।
भवप्रशमनी तु सा जयति भक्तिरेकैव ते,
महान्धतमसं छविः सवितुरेव हन्तुं क्षमा ॥ ७ ॥
यथेप्सितमुपासतां चिरमुपास्य देवान्तरम् ,
विचित्ररुचयस्ततोऽभिलषितं लभन्तामपि
अहन्तु नु हृदाश्रये त्वदपरं परं दैवतम् ।
विहाय भुवि मानसं न रमते मरालः क्वचित् ॥ ८ ॥
चिराय चरणद्वयं जितभयं तव ध्यायतः,
कृतान्तवशवर्त्तिता यदि मयि प्रवर्त्तिष्यते
त्वदन्य इव वाच्यतां जगति कस्तदालप्स्यते
भयं भवति दुर्धरं खलु जनापवादोत्थितम् ॥ ९ ॥
कृतानि ननु मानिभि र्विविधकर्मजातान्यलम्
तवानुमतिमन्तरा गतिविदो जगत्साक्षिणः ।
न दातुमुचितं फलं किमपि शक्नुवन्ति स्वतो
विनार्कमभिवीक्षितुं न नयनैरलं भूयते ॥ १० ॥*

( क्रमशः )

*—एष गुमानीमहाकविरल्मोडामण्डलवास्तव्यो विक्रमस्य १८४७ तमे सम्वत्सरे जन्म लेभे । अस्य महाकवेः परिचयः श्रीमद्भिरस्माकं माननीयैः श्रीतारादत्तपन्त महोदयैः पुरा सुप्रभात-पाठकानां प्रदत्त आसीत् । महाकवेरस्य प्रपौत्रः हीरावल्लभशर्म्मा, तारादत्तपन्त-महोदयानां सविधे पठति च ।

एतैः शतशो ग्रन्थाः प्रणीता आसन् । ते च दुर्दैववशादिदानीं न समुपलभ्यन्ते, केचन ग्रन्थाः श्रीमद्भिस्तारादत्तपन्त-महोदयैः सङ्गृहीताः सन्ति । ते च साम्प्रतं क्रमशः प्रकाशमेष्यन्ति । विज्ञप्तिसारोऽयं स्तुतिरूपो माङ्गलिकतया प्रथमं प्रकाश्यते । एतद्विनिर्मितसुपदेशशतकं काव्यमाला-सम्पादकैः काव्यमालायाः द्वितीये गुच्छके प्रकाशितम् ।

—सुप्रभात-सम्पादकः




ग्राहका अवदधतु ।

साम्प्रतमासे यन्त्रालये कार्यबाहुल्यात्, क्वच शैथिल्यात् सुप्रभातमिदं व्यतीते ( तुला ) मासे दिनत्रयेणैव मुद्रितमभूत् सत्वरं प्रकाशने, कार्यव्यतिकरे च बहवो नास्माभिरवलोकिताः, न च बहूनां पत्राणामुत्त लिखितानीति ग्राहक-महाभागाः , लेखकाश्च क्षमा-प्रदानं कुर्वन्तु । ये खलु पूर्वावशिष्टा अ ताश्च लेखा आसन्; त एवात्र प्रकाशिताः अग्रिमाङ्के सुप्रभात-व्यवस्था यदा स्थिरीभ तदा वयं सर्वेषामनुग्राहकाणां लेखकानां प्रकाशयिष्यामः, साम्प्रतं विवशतया क्षाम्यन्तु ।

* * * *

## धर्म समाज-संस्कृत-कालेजः ॥

सुप्रभात-प्रचाराय पाठशालातोऽवकाशं गृहीत्वा ष्फरपुर-नगरे गतवानासम् । तत्र च गवर्नमेन्ट-धर्मसमा त-महाविद्यालयं दृष्ट्वा नितरां हर्षः समजनि । विद्यालयो नगरान्नातिदूरे स्वास्थ्यकर-स्थाने महता केन निर्मितोऽस्माकं संस्कृत-सेविनां हृदये महान्त मुत्पादयति । विद्यालय-भवनानि, तत्रत्याश्च व्यवस्था दर्शनीयतामावहन्ति । सर्वतोऽधिकं प्रमोदस्थानमि दस्माकं यत्, महाविद्यालयाध्यक्षाः पण्डित-प्रवराः ईश्वरीदत्तशास्त्रि-एम०ओ०एल०-महोदयाः सहृदय- प्रवलोत्साहिनो नवयुगप्रवर्तकाश्च सन्ति । ते खलु लयीयमध्यापनादिकार्यजातं संस्कृतभाषायामेव कुर्वन्ति

शुद्ध-हृदयाः, प्रसन्नमुखाः, निरभिमानिनः शान्तस्वरूपाश्च न्तीति सुवर्णे सुगन्ध-योग इवास्माकं हृदयमानन्दकन्दलित-कार्षुः। तैःखलु सुप्रभात-विषये या सम्मतिः प्रकटीकृता, तोत्साहाश्च वयं यथा साग्रहमुत्तेजितास्तेन वयं तेषां महा-मुपकारमुररीकुर्मः। सुप्रभातस्य विहारोत्कलप्रान्ते सर्वत्र स्कृत-पाठशालासु प्रचाराय तैस्तत्प्रान्तीयाः शिक्षाध्यक्षाः डाइरेक्टर) प्रार्थयिष्यन्ते। महाविद्यालयीयाः सर्वेऽपि विद्वांस-छात्राश्च सुप्रभात मनुग्रहीष्यन्तीत्यपि तै र्वचनं प्रदत्तम्। स्वयञ्च द्रव्यसाहाय्यं लेख-साहाय्यञ्च करिष्यन्तीति सुप्रभातं सुप्रभा-स्य। सुप्रभातस्यास्मिन् दयनीयेऽवसरे सर्वप्रथमं तैरेवावल-तं प्रदत्तमस्माकमुत्साहश्च परिवर्द्धित इति काशी-संस्कृत हित्य-समाजस्तेषामुपकृतिं विभ्रत्, तेषामुन्नतिं कल्याणञ्च मयते, प्रार्थयते च सर्वानन्यान् पाठशालाध्यक्षान्, यत्ते नुकरणं कुर्वन्तो सुरभारतीकार्ये हस्तालम्बं वितरन्त्विति।

*　　　*　　　*

सुप्रभातम्, सूर्योदयश्च।

सुप्रभात-प्रचारार्थं गतेन मया बहुधा कर्णाकर्णिकया-तम्, यत्, बहूनां विदुषां मनसि विद्यते यत्"सुप्रभातस्य सूर्योदयस्य च वरीवर्ति परस्परं घनिष्ठः सम्बन्धः, द्वयोश्च नीत्यैक्यैवेति।" एतेन विदुषां मनसि विद्यते खेदलेशः। तद्विषयेऽस्माभिः पूर्वं कतिधा निवेदितमासीत्, यत्, सुप्रभातस्य महामण्डलेन सह नास्ति कश्चनाऽपि सम्बन्धः। तथापि सुस्पष्टं प्रकाशयामो यत्, सुप्रभातं हि नाम काशीस्थ बुधानां 'संस्कृत-साहित्य-समाजस्य' मुखपत्रं स्वातन्त्र्येण केवलं संस्कृत-समाजे जागर्ति प्रचाराय, संस्कृतसाहित्य-समुन्नत्यै च प्रचरतीति।

सुप्रभातस्य नास्ति केनापि सह सम्बन्धः, विरोधो वा, निष्पक्षया धिया सर्वत्राऽपि साहित्यिकेषु सामाजिकेषु च विषयेषु निःशङ्कं मतप्रकाशनं करोति, करिष्यति च।

धर्म-जगति सुप्रभातेन सम्पादकीय-लेखेषु न किमपि प्रकाशितम्, न च प्रकाशयिष्यते। तद्धि केवलं साहित्य सामाजिक-क्षेत्रे च कार्यं करोति। राजनीत्याऽपि तस्य नास्ते कश्चन सम्बन्धः।

सूर्योदयः खलु भारतधर्ममहामण्डलीय-वाराणसी-विद्या-परिषदो मुखपत्रम्। तत्र महामण्डलाधीशस्य ज्ञानानन्द महोदयस्यैव हार्दं प्रकाशयते।

अतएव च] तत्र ज्ञानानन्दीयधर्मप्रचारो भवति। न केवलं वयमेव; अपितु सर्वेऽपि मार्मिका बुद्धिमन्तो भारतीया महामण्डलीय-मायाया उपेक्षां कुर्वन्ति।

सूर्योदय-सम्पादकः श्रीमान् विन्ध्येश्वरीप्रसादशास्त्री, अस्माकमभिन्न-हृदयः सुप्रभातसंस्थापकेष्वन्यतमश्च। तस्य खलु साम्प्रतं सुप्रभातनीत्या, सम्पादनकार्येण च नास्ति-कोऽपि सम्बन्धः। स केवलं समाजीय-मन्त्रणा समिते-रन्यतरः सदस्य एव, अतएव वयं सूर्योदयाय संस्कृतसहयोगि-त्वेन सप्रणयं स्पृहयामः।

यद्यपि सूर्योदयस्य प्रचारः सुप्रभात-विनाशाय, महामण्ड-लीयकार्याणां प्रशंसनाय, तस्य विज्ञापनवितरणाय च वर्तते, तथाप्याद्यावधि सुप्रभातेन तस्य कदापि विरोधो न कृतः, न च करिष्यते। वयन्त्वभिलषामो यत्, प्रतियोगित्वेनानुयो-गित्वेन वा, यथा कथमपि वा, संस्कृतपत्र-प्रचारो भवत्विति। तथापि वयं सूर्योदयस्य सम्पादकानां धन्यवादान् दद्मः, यैः खलु साम्प्रतं यावत् सुप्रभातस्य कश्चन विरोधो न कृत इति। तथापि तेषामिदं कार्यं न रुचिरं जातं यत्तैर्यत्रतत्र सुप्रभातस्य स्वसम्बन्धित्वं प्रख्याप्य, सुप्रभातविषये केषाञ्चन वैम-त्यमुत्पादितम्, सुप्रभातस्य च शतशो ग्राहकाणां हानिः कृता।

साम्प्रतं वयं विज्ञापयामो यद्ये ग्राहकाः सुप्रभातस्य सूर्योदयस्य च पारस्परिकं सम्बन्धं विज्ञाय सुप्रभाते विरक्ताः सन्ति, ते समनुगृह्णन्तु सुप्रभातम्। त्यजन्तु च निर्मूलां विरक्तिम्। सहयोगित्वसम्बन्धं विहाय नास्त्यस्माकं केनापि सह नीति-सम्बन्धो धर्म-सम्बन्धश्च।

*　　*　　*　　*

## स्तवः

कालिन्दीकूलकल्लोलितजलकुतुकालोकनोत्साहशीला
श्लिष्यद्राधाकपोलाऽमलमुकुरतलप्रोलसद्बिम्बकान्तिः॥
मालाजालावलीढाखिलतनुरचलोद्धारिणी नीलनीला
कल्याणी कापि कान्तिः कलुषकृतिकुलोन्मूलिनी कीर्तनीया॥

—श्रीजगन्नाथ शास्त्री, होशिङ्गः

# ब्राह्मण-चाण्डालयोर्भेदः ।

( लेखकः—बालजी गोबिन्दजी देसाई )

( "नवजीवन"-पत्रतः समुद्धृतम् )



एकदा भगवान् बुद्धः श्रावस्तिनगर्य्यां पर्य्यटन्नासीत् । एकस्मिन् दिवसे भिक्षार्थं नगर्य्यां परिभ्रमन् भगवान् भारद्वाजनाम्नो ब्राह्मणस्य गृहद्वारमगमत् । तस्य गृहेऽग्निसंस्थापनं जातमासीत् । आहुतिदानस्य समय आसीत् । स ब्राह्मणो दूरत एवायान्तं भगवन्तमवलोक्य प्रोवाच-अये मुण्डिन् ! मात्र भवानागच्छ ! अरे चाण्डाल ! दूर एव तिष्ठ । भगवानाह-अयि विप्र ! किं जानासि, यत् , कस्तावच्चाण्डालः ? केचि तस्य गुणाः, धर्माश्च सन्ति ? इति । स आह—नाऽहं वेद्मि । भवानेव शिक्षयतु । भगवानाह—तदा शृणु सावधानतया । वच्मि ते ।

क्रोधनो उपनाही च पाप मक्खी च यो नरः ।
विपन्नदिठ्ठी मायावी तं जञ्ञा वीसलो इति ॥

यः क्रोधी, द्वेषी, दम्भी, कपटी तथा कुमतिः स्यात् , स एव चाण्डाल-शब्द-वाच्यः ।

एकजं वा द्विजं वाऽपि योऽधि पाणानि पश्यति ।
यस्य पाणे दया नत्थि तं जञ्ञा वीसलो इति ॥

यः प्राणिनां हिंसां करोति, यस्य प्राणिनामुपरि दया न आगच्छति, तं चाण्डालं विद्धि ।

यो अत्तहेतु परहेतु धनहेतु च यो नरः ।
सक्खि पुठ्ठो मुसा ब्रूति तं जञ्ञा वीसलो इ[ति ॥]

य आत्मार्थम्, परार्थम्, धनार्थञ्च मृषा ब्रू[ते तं] चाण्डालमवगच्छ ।

यो ञातीनं सखानं वा दारेषु पतिदिस्सति ।
सहसा संपियेन वा तं जञ्ञा वीसलो इति ।

यः परस्त्रियं प्रति कुदृष्टिं करोति, तं चा[ण्डालं] जानीहि !

यो मातरं पितरं वा जिण्णकं गतयोब्बन[ं]
पहुसन्तो न भूति तं जञ्ञा वीसलो इति ।

यः स्वयं समर्थोऽपि वृद्धमसक्तं पितरं [मातरं] वा न पालयति, तं चाण्डालमवधेहि ।

न जच्चा वीसलो होदि न जच्चा होदि ब्राह्मणो ।
कम्मणा वीसलो होदि कम्मणा होदि ब्राह्मणो ।

न कोऽपि जन्मना चाण्डालः, नच कश्चन [ज]न्मना ब्राह्मणः । कर्मणैव चाण्डालत्वं ब्राह्मणत्वं वा ।

यस्य कायेन वाचाय मनसा नत्थि दुक्क[टं]
संवुतं तीहि ठानेहि तमहं ब्रूमि ब्राह्म[णं ।]

मनसा, वचसा, कायेन च यो निष्पापः च वर्तते, तमहं ब्राह्मणं ब्रवीमि ।

वीतदरं विसंयुत्तं तमहं ब्रूमि ब्राह्मणम् ।

यो निर्भयो निरासक्तश्चाऽस्ति, तमहं [ब्राह्मणं] वच्मि ।

यम्हि सच्चं च धम्मो च सुची सो च ब्राह्[मणो ।]

यस्मिन् सत्यमस्ति, धर्मश्चास्ति, स एव [शुचिः] स एव च ब्राह्मणः ।

अकिञ्चनं अनादानं तमहं ब्रूमि ब्राह्मणम् ।
अक्कोसं वधबन्धञ्च अदुट्ठो यो तितिक्खति ।

खन्तीवलं बलानीकं तमहं ब्रूमि ब्राह्मणम् ॥

अनपराधोऽपि यस्तिरस्कारम्, ताडनम्, बन्ध-, मारणञ्च सहते, क्षमैव यस्य शक्तिः, सैव च मा शक्तिर्यस्य बलम्, तमहं ब्राह्मणं वदामि ।

नह्येतमत्थं महतीपि सेना
सराजिका युज्झमाना लभेथ ।
तं खन्तिमां सप्पुरिसो लभेथ
खन्तीबलस्योपसमन्ति वेरा ।

जातकम्, १७—२.

क्षमाशीलः सत्पुरुषो यं विजयं प्राप्नोति, तं नित-बलवत्यपि राजसेना प्राप्तुं न शक्नोति । क्षमैव स्य बलं तस्य वैराणि शान्तानि भवन्ति ।

न ब्राह्मणस्स पहरेय्य नास्समुञ्चेथ ब्राह्मणो ।
धीब्राह्मणस्य हन्तारं ततो धीयस्समुञ्चति ॥

मा कश्चिदपि ब्राह्मणं हन्यात्, ब्राह्मणोऽपि न मपि प्रतिहन्यात् । यो ब्राह्मणं हिनस्ति तं धिक् । स्य प्रतिहर्तारं ब्राह्मणञ्च धिक् !!

वारि पोक्खरपत्तेव आरग्गेरिव सासपो ।
यो न लिम्पति कामेसु तमहं ब्रूमि ब्राह्मणम् ॥

पद्मपत्रे यथा जलं न स्थिरीभवति, यथा च सूच्यग्रे सर्षपं न स्थिरीभवति, तथैव यः काम सु लिप्तो नास्ति तमहं ब्राह्मणं वेद्मि ।

अविरुद्धं विरुद्धेसु अत्तदण्डेसु निब्बुतम् ।
सादानेसु अनादानं तमहं ब्रूमि ब्राह्मणम् ॥

यो विरोधिष्वविरुद्धः स्यात्, वञ्चकेष्वपि य पिक्षां कुर्यात्, लुब्धेष्वपि निर्लोभः स्यात्, तमहं ब्राह्मणं कथयामि ।

यस्स रागो च दोसो च मानो मक्खो च पातितो ।
सासपोरिव आरग्गा तमहं ब्रूमि ब्राह्मणम् ॥

यथा सर्षपं सूच्यग्रे न स्थिरीभवति तथैव यस्यात्मनि राग-द्वेष-मान-दम्भादयो न स्थिरीभवेयुः स ब्राह्मणः ।

सुत्तनिपात, १—७, धम्मपद १९.

# पण्डितान् प्रत्यनुयोगः ।

ले०—श्री काशीनाथ द्विवेदः



इह पितामहप्रयत्नपरिचालिते सकलेऽपि संसारे गुणदोषयोरेव प्राधान्येन सकलस्यवस्तुजातस्योत्कर्षापकर्षाधायकता नैसर्गिकीति सुकविविरञ्चिप्रपञ्चितेषु काव्येष्वपि तयोरेव तदुभयप्रयोजकत्वमिति न कस्यचन काचनाऽपि विप्रतिपत्तिः । अत एव काव्यप्रकाशादिषु तयोः प्राधान्येन विवेचनमुपलभ्यते, अङ्गनिरूपणं विनाङ्गिनो निरूपयितुमशक्यत्वात् । काव्यप्रकाशकारेण हि "तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापीति" काव्यत्वं लक्ष्यते । अत्राऽपि वैमत्यम् । साहित्यदर्पणकारास्तूक्तलक्षणे दोषमुद्भाव्य, "वाक्यं रसात्मकं काव्यम्" इत्युपन्यभान्त्सुः । वयन्तु ब्रूमः, यदि तावत् रसात्मकं वाक्यमेव काव्यं, गुणदोषौ च क्रमशः साक्षात् वाच्यार्थद्वारा तद्वाचकपदवाक्यादिद्वारा वा रसस्योत्कर्षापकर्षाधायकत्वेनाभिमतौ, गुणाश्च भवतां रसधर्मा एव, तर्हि किमनेन वितण्डावादेन समायातं, निर्दोषयोर्गुणविशिष्टयोश्च वाक्यार्थयोः काव्यत्वात् । आस्तां तावत् समयान्तरेऽत्र लेखनीमायासयिष्यामः, साम्प्रतं तु प्रकृतानुसंधानमेव नो न्याय्यम् ।

तत्र च दोषनिरूपणेषु "काव्यप्रकाशो यवनः काव्याली च कुलाङ्गना । अनेन प्रसभाक्रुष्टा कष्टामेषाश्नुते दशा" मिति परम्परया श्रुतिपथमुपस्थितेन प्राचीनपद्येन श्रीमतो मम्मटोपाध्यायस्यात्यन्तमार्मिकत्वमभिव्यज्यते ।

अनन्तरं च प्राधान्यमधुनाप्रचलितनिबन्धेषु "साहित्यदर्पण'स्य; यस्य खलु तार्किकशिरोमणयः श्रीविश्वनाथशर्माणो मुक्तावलीगोतमसूत्रवृत्त्यादेः प्रणेतारः पितृभावमापेदिरे ।

वयन्तु तयोः समालोचनावसरेषु प्रसभमेवायमिह समारोप्यते दोषो न वास्तविकतयेति तत्र तत्र शङ्काशतसमाकुलीकृत चेतसः स्वयं निर्णेतुमशक्नुवन्तः शक्नुवन्तो वा प्रत्ययशास्त्रार्थशैलीपरिकल्पनाकुतूहलितया ताभ्यामन्यतोऽप्युदाहरणान्युपादाय महतो माननीयान् पण्डितानानुयुञ्ज्मः, आशास्महे च ते कृपालवोऽवश्यमनुग्रहीष्यन्त्यस्मान् सुप्रभातद्वारैवोत्तरप्रदानेनेति ।

तत्र च प्रथमं "मुख्यार्थहति" रित्यादिना दोषाणां सामान्यलक्षणमुपवर्ण्य "दुष्टं पदं श्रुतिकटु" इत्यादिविशेष लक्षणवर्णनावसरे "तीर्थान्तरेषु स्नानेन समुपार्जित सत्कृतिः । सुरस्रोतस्विनीमेष हन्ति सम्प्रति सादरम्" इति, यत्, पद्येऽस्मिन् गमनार्थे प्रयुक्तो हन् धातुर्न तमर्थं प्रत्याययतीत्यभिप्रायेणासमर्थमुदाजहार काव्यप्रकाशकारः । तत्राऽभिधीयते, किमिदमसामर्थ्यम् हि नाम ? प्रतिपादनीयार्था प्रत्यायकत्वं चेत्किंनिमित्तम् ? किं तदर्थेऽनुशासनाभावात् उत यत्सहकारेण तदर्थप्रत्यायकत्वं तादृशपदासमभिव्याहारात्, अप्रसिद्धेऽर्थे प्रयुक्तत्वाद्वा । नाद्यः, अवाचकेऽन्तर्भावात् । न द्वितीयः, नाऽपि तृतीयः उभयथाऽपि यथाक्रममप्रयुक्तनिहतार्थयोरन्तर्भावस्यानिराकरणीयत्वात् । यदपि "यद्यप्यसमर्थस्यैवाप्रयुक्तादयः केचन भेदाः" इत्यादिमूलकारेण यच्च "आदिपदादवाचकत्वनिहतार्थकत्वनेयार्थकत्वादयो दोषा ग्राह्या" इत्यादि बालबोधिनीकारेणोक्तं, तदपि न समीचीनम् । बालबोधिन्यामेवानुपदमुपनिबद्धेन चक्रवर्त्तिवचनेनैव विशकलितप्रायत्वात् । अन्यच्चेदमुच्यते, अन्तर्भवतु नाम यथाकथंचिदवाचकत्वमसामर्थ्ये, अप्रयुक्तत्वनिहतार्थत्वयोस्तुज्ञाताप्रसिद्धार्थविषयकपदशक्तिकं ज्ञातानादृतपदसाधुत्वं च प्रति व्यभिचारितयाऽनित्यदोषत्वेन तदन्तर्भावोनितरां दुरुपपाद एव । अवाचकत्वं हि नित्यो दोषः । न च नित्यानित्ययोः परस्परविरुद्धयोरेकत्र समावेशो युज्यत इति ।

अस्तु यथाकथंचिदसामर्थ्यं स्वतन्त्रो दोषः, तथापि हन्तीत्यस्य तदुदाहरणत्वं तु नितरामविचारितरमणीयमेव, हन् धातोर्हिंसागत्योः, सममेवानुशासितत्वात् । यत्तु पदान्तरसंदानेनैव हन्धातोर्गमनार्थप्रत्यायकत्वं न केवलस्येत्यामनभट्टैरभ्यधायि, तदप्यप्रामाणिकतयाऽसमीचीनमेव । णिकत्वेहीङ्धातोरधिपूर्वत्वमिवास्याऽपि धातोः पदान्तरसंदानेनैव गमनार्थप्रत्यायकत्वमितिदीक्षितादिभिरव[लि]खितं स्यादिति ।

एवमेव—

"अकलिततपस्तेजोवीर्यप्रथिम्नि यश[ो]धवितथमदाध्माते रोषान्मुनावभिगच्छति ।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे ।
स्फुरतिरभसात्पाणिः पादोपसंग्रहणाय च"

इति प्रक्रमभङ्गमुदाहृत्य पादोपसंग्रहणायेति पूर्वं इत्युपनिबबन्ध । अयमाशयः, प्रथमद्वितीयपादौ पाद[ग्रह]णाकर्षणयोर्हेतुत्वेनोपनिबद्धाविति "यथासंख्यमनुदेशः स[मानाना]मिति न्यायेन कार्य्ये अपि तत्क्रमेणैवोपनिबन्धनीये ।

अत्रेदमवधेयम्, न हि कारणक्रमेणैव कार्याण्[युत्पद्यन्ते] इति राजानुशासनम् । न खल्वनालोकिततनयवदन[ः] ज्यायसि कनीयसोऽपत्यं न भवति । प्रत्युत निस[र्ग]सर्गस्य येन यत्कारणं यदैव प्रयतते तत्कार्य्याण्यपि [तदैव उत्प]द्यन्त इति । भवदभिमतो न्यायस्तु स्थान्यादेशभाव[विव]रितार्थम् । इह तु मदाध्मातरोषावेशदर्शनवशात्[...] लभाविमृश्यकारित्वेन प्रथमं धनुर्विद्यादर्पक्षमाय कर्म[णे] स्फुरति, पश्चाच्च तपस्वितादिस्मरणपुरःसरं पादोसंग्र[हणाय] अनन्तरं च कार्य्यक्रमेण पद्यमिदमुच्यते । एवमेव च [...] भिव्यञ्जक "मभिनव" पादोपादानमपि साफल्यमव[...] तदिदमेवं चमत्काराधायकत्वेन सहृदयहृदयाह्लादकमि[...] त्यन्तमार्मिकत्वमभिव्यञ्जयत्पद्यं दोषेषूदाहृत मित्यहो [आ]श्चर्य्यम् । नन्वेवं स्वाभाविकक्रमेण कार्य्योपनिब[न्धस्या]वश्यकत्वे करणे अपि कार्य्यक्रमेणैवोपनिबन्धनीये इति सति कुड्ये चित्रमितिन्यायेन "अकलित" "यशो[...]वित्याद्याधारतयोपक्रम्यैव रोषमदाध्मानयोराधेयतया[...] न्याय्यत्वात् ।

आस्तां तावदेतत्सर्वं रोषः खलु वाणाकर्षणे हेतुत्वेनो-तो मुनित्वं च पादोपसंग्रहण इति न कश्चनावसरो दोष-शस्यापि ।

यदपि कैश्चित् " कोपं प्रभो संहरसंहरेतियावद्गिरः मरुतां चरन्ति । तावत्कृशानुर्भवनेत्रजन्मा भस्मा-शेषं मदनं चकार ॥" इति महाकविकालिदासीय पद्ये पहेतुकसंहारोपक्रमे संहारकारितया शिववाचकं हरपदमुपादेयं त्पादकतया भवपदमित्यादि निर्वाधं न्यगादि, तदपि न चारसहम् ।

तथाहि, संहारकारितया शिववाचकेन हरपदेन कोपकाले रकरस्योपपत्तावपि कृशानुजनकत्वं नोपपद्येत । भवपदो-ादाने तु मदनस्थभस्मीभवनानुकूलव्यापाराश्रयकृशानुजनक-त्पादनशीलस्यापि भगवतो भवस्य कोपवशाद्भस्मपदप्रती-तसंहारकारित्वमित्येकस्मिन्विरुद्धधर्मद्वयाध्यासतोऽभिव्य-मानेन कोपस्य प्रावल्येन नितरां रसपरिपोषः । कृशानुजन-त्वं च स्वभावत एवोपपन्नम् । कोपं प्रभो संहरसंहरेतिसंहार-र्थनायामुपेक्षाऽपि युज्यते । नचैवं संहारप्रार्थनोपेक्षाचेद्भव-नाभिमता भवतां मदनसंहारः कथमुपपद्येतेतिवाच्यम्, नसंहारस्य कोपाक्षवनयनजन्मनः कृशानोः कार्य्यत्वात् । चैवंविधदृढस्यापि भगवतो भवस्यातिशीघ्रं जनकतापुर-रेणैव कृशानुद्वारा संहारकारित्वं परिकल्पितमित्यहो स्य माहात्म्यमित्यादिर्व्यञ्जनावृत्तिपुरस्कारेण कीदृशश्चम-र इति सूक्ष्मं विभावयन्तु सुधियः । (पुनःकदापि)

## विज्ञप्तिः

मेरेनानगरस्थ श्री गो. दि. जैन-सिद्धान्त-द्यालये उच्चतमकोटिस्थ-जैनव्याकरण-साहित्य ध्यापनार्थं कार्यकुशलस्यैकस्य विदुषः आवश्य-ता वर्तते । पाठनाभिलाषिभिः काश्यां भदैनीघाट नस्थ-श्रीस्याद्वाद-महाविद्यालये गत्वा स्वयो-ता प्रदर्शनीया, शुल्कमपि योग्यतानुसारेण भवि-तीति ।

**सहायकमन्त्री, विद्यालयस्य**




( लेखक—स्वर्गीय-श्रीदुःखभञ्जन-महोदयाः )

### द्वितीयः सर्गः



[ पूर्वमस्माभिः प्रकाशितमासीत्, यत्, 'यन्त्रालयीयानां प्रमादेनास्याष्टांकाया अष्टौ श्लोका विनष्टा' इति । तदिदानीं वयं सहर्षं विज्ञापयामो यत्, विनष्टाः श्लोकाः सम्पादकीये कार्यालये समुपलब्धाः । ते बहूनां पत्राणामन्तस्तिरोहिता आसन् । ते च श्लोका अग्रिमाङ्के प्रकाशिता भविष्यन्ति ]

—सम्पादकः ।

आपीनभारोद्वहनप्रयत्नाद्
गृष्टि गुरुत्वाद्वपुषो नरेद्रः ।
उभावलंचक्रतुरञ्चिताभ्यां
तपोवनावृत्तिपथं गताभ्याम् ॥

अथ अनरेन्द्रः वपुषो गुरुत्वात्, गृष्टिः सा धेनुः आपीन भारोद्वहनप्रयत्नात् ईषत्पीनभारोद्धरोद्वहनप्रयत्नात् हेतोः, अञ्चिताभ्यां संजातरोमाञ्चाभ्यां, गमनाभ्यां तपोवनावृत्तिपथं तपोवना तपसां रक्षिका आ वृत्तिर्यस्मिन् तं पन्थानम् अलं व्यर्थं चक्रतुः । कीदृशौ तौ उभौ उ वितर्के भा ययोरेतौ धेनुचौरो, चौरो वितर्कश्रीको भवति तत्संपर्कात् धेनुरपि वितर्कश्रीका । सा च सच तौ, अञ्चिताभ्यां संजाताञ्चाभ्यां, अथ अन् अनिति इति क्विप्, विभक्तिप्रतिरूपकमव्ययं वा चिताभ्यां अथ अन् उक्तार्थो चिता ययोः ताभ्यां गमनाभ्यां तादृशं पन्थानं व्यर्थं निर्ममतुः । व्यर्थत्वे पूर्वोक्तं हेतुः, अथ अलं अग्राहकं विष्णु ग्राहकं वा चक्रतुः ॥ १८ ॥

वसिष्ठधेनोरनुयायिनं त
मावर्तमानं वनिता वनान्तात् ॥

पपौ निमेषालसपक्ष्मपङ्क्ति-
रुपोषिताभ्यामिव लोचनाभ्याम् ॥१६॥

वनिता स्त्री, वनान्तात् वनान्तमुपेत्य ल्यप्लोपे पञ्चमी निमेषालसपक्ष्मपङ्क्तिः सती पोषिताभ्यामिव लोचनाभ्यां तं पपौ । कीदृशं तम्, अनु यथावसिष्ठधेनोः यायिनंप्रार्थकं, उवितकें आवर्तमानं आवर्तम् इव आचरन्तं नामधातोः आचारार्थक क्विपि चानशि रूपम् ॥ १९ ॥

पुरस्कृता वर्त्म निपार्थिवेन
प्रत्युद्गताऽपार्थिवधर्मपत्न्या ।
तदन्तरे-सा विरराज धेनु
र्दिन-क्षपा मध्यगतेव सन्ध्या ॥ २० ॥

वर्त्मप्रति मार्गं प्रति, निपार्थिवेन अराजकेन पुरस्कृता, अपार्थिवधर्मपत्न्या अपगता अर्थिनो यस्य तं वातिताहशो धर्मो यस्याः साचासौ पत्नीच तया उद्गता सा धेनुः, तदन्तरे तयोर्मध्ये दिनक्षपा-मध्य-गता संध्या इव अविरराज । कुत्सितं रराज कुत्सार्थे तिङा नञ् समासः ॥ २० ॥

प्रदक्षिणीकृत्य पयस्विनीं तां
सुदक्षिणा साक्षतपात्रहस्ता ॥
प्रणम्यचानर्चविशालमस्याः
शृङ्गान्तरं द्वारमिवार्थसिद्धेः ॥ २१ ॥

सुदक्षिणा शोभना दक्षिणा दिक् यस्याः सा तां पयस्विनीं प्रदक्षिणीकृत्य अस्याःप्रत्यक्षदृश्याया अर्थसिद्धेः द्वार मिव शृङ्गान्तरं आस्र चिक्षेप । कीदृशी आक्षतपात्रहस्ता, समन्तात् क्षतपात्रं व्रणभाजनं हस्तो यस्याः सा कीदृशं शृङ्गान्तरं प्रणम्यचानर्चविशालं प्रणम्याः चाः तस्कराः यस्य सा अतएव अनर्चाश्चौरहिता विशाला पक्षिशाला यस्मिन् तत्, अथ प्रणम्यः चश्चन्द्रो येषां तानि अनर्चानि कुत्सितानि विशानि अलति आलाति तैः अलति वा तादृशंऽचन्द्रं,मायां तस्करेचो अथ प्रणमनं प्रणमःघञर्थे कः, सोस्यास्ति प्रणमी तत्प्रणमि न अर्चा यत्र तत्, एतेषां कर्मधारयः ॥ २१ ॥

## चाँदनी ।

दरभङ्गा-मण्डलान्तर्गते लहेरियासरायनाम्नि चिरकालात् प्रतिष्ठितस्य पुस्तक-भाण्डारस्य नाम न क... विदितं भवेत् हिन्दी-भाषा-विज्ञस्य । ततः शतशो ग्र... द्रिताः सन्ति । विहार-प्रान्ते सर्व प्रधानोऽयं पुस्तक-भा... तत एव बालकं नाम सचित्रं सर्वाङ्गसुन्दरं बाल... पत्रं प्रचलतीति सुप्रभात-पाठकैर्नैकवारमवलोकितं ... साम्प्रतं ततएव स्थानात् चांदनी नाम्नी पत्रिका प्र... भविष्यति । एषा पत्रिका भाविनि वर्षे यदा पञ्चसह... ग्राहका भविष्यन्ति, तदा प्रकाशिता स्यात् ।

एतस्य सम्पादकाः हिन्दी जगतः सुप्रसिद्धा ... श्री रामलोचनशरण-( विहारी )-महाशयाः, तथा लेखकाः सम्पादकाश्च श्रीशिवपूजनसहाय-हिन्दीभू... दयाश्च भविष्यन्ति ।

एतस्मिन् बहुवर्णानि पञ्चषचित्राणि साधारणानि ... राणि स्युः । सुप्रभाताकारे १६० पृष्ठात्मिकेयं पत्रिका स्पृहणीया भविष्यति । वार्षिकं मूल्यम् ६) हिन्दी... सत्वरमेव ग्राहकत्वं स्वीकृत्यायमुत्साहः सम्बर्धनीयः ।

प्राप्तिस्थानम्—व्यवस्थापक—चाँ...
हिन्दी-पुस्तक-भाण्डार, लहेरिया सराय, (दरभ...

## भारतभूषणं पञ्चाङ्गम् ।

इदं पञ्चाङ्गं वाराणसेय-दैवज्ञसमित्या... संवत्सरं प्रकाश्यते । अस्य पञ्चाङ्गस्य ... सर्वेऽपि काशीस्था ज्योतिःशास्त्रविदः सा... माचरन्ति, अत्र हि समुपयोगिभिर्भूयोभि... साकं प्रत्येकं पक्षेषु वृष्टियोगः, पदार्थानां ... महार्घत्वं च हिन्द्या गिरा निर्दिष्टम् । भारत... प्रत्येकेषु मण्डलेषु प्रसिद्धस्थानेषु च कार्यं ... सोदाहरणा युक्तयोऽत्र प्रदर्शिताः । एतस्य ... पत्राणि च शोभनानि सन्ति । किं बहुना ... पञ्चाङ्गमादाय स्वयं विलोकयन्तु । मूल्यम ...

प्राप्तिस्थानम्—रामनिहोर द्वि...
धर्मकूप—का...

# सुभाषितानि ।

वेदे काञ्चन-पत्तने परिलसद्
वेदान्त-दुर्गो महान्,
मीमांसा परिखा विभाति परितः
शाब्दं लसद् गोपुरम् ।
योगो यामिनि जागरूकनिचयः
सांख्यं विवेकात्मकम् ।
सर्वे स्वार्थवशाद् वसन्तिपरितो
नैयायिकाः कुक्कुराः । —कस्यापि

अशठमलोलमजिह्मं,
त्यागिनमनुरागिणं विशेषज्ञम्
यदि नाश्रयति नरं श्रीः,
श्रीरेव हि वञ्चिता तत्र । —सूक्तिः

अद्यापि दुर्निवारम्,
स्तुतिकन्या वहति कौमारम् ।
सद्भ्यो न रोचते साऽ-
सन्तोऽप्यस्यै न रोचन्ते ॥—कस्यापि.

## पण्डितानां दौर्बल्यम् ।

### उपसंहृतिः ।

( लेखकः—क्रान्तिकारी )

*"सत्ये नास्ति भयं क्वचित्"* ।

प्रभातस्य श्रावणाङ्के प्रकाशितः 'पण्डितानां दौर्बल्य'मितिशिरस्को लेखः सुप्रभात-पाठकानां स्मृतिपथादधुना नावतीर्णः स्यात् । महामण्डलीये सूर्योदये च तदुपरिकृता तापाश्च पठिताः स्युः । आश्विनाङ्के च सुप्रभातस्य, विमर्शिविदुषः समाहितिश्च समालोकिता स्यात् । अथेदानीं मदीयं किमपि वक्तव्यं श्रोतव्यम् । अतः परं यत्किमपि प्रजल्पन्तु मोहाच्छादित-बुद्धयो वराका दयनीया द्वेषिणः, पण्डितपुच्छाः; नोत्तरिष्यामि । एतदपि लेखनं केवलं पूर्वलेखावशिष्टानां तत्सम्बन्धिनाञ्चान्येषां विषयाणाम् स्पष्टीकरणायैव । नैतदर्थं यन्मया विरोधिलेखानामुत्तरं दातव्यमेव, अन्यथा पराजितः स्यामिति । दयनीयानां मुग्धबुद्धीनामेतेषां रोदनेन कोलाहलेन वा किं भवति । तत्तु मया पूर्वस्मिन्नेव लेखे उक्तमासीत् । 'अस्माकं खलु मूढानां वाचमर्थोऽनुधावति ।' यद्यन्मया लिखितमासीत्, तत्तदिदानीमवलोकयन्त्येव मार्मिकाः पाठका यत्—स एव भावः, त एव शब्दाः, सैव सरणिर्वर्तते पण्डितानाम् । प्राचीनसभ्यताप्रचारमिच्छतां तेषां विदुषां ब्राह्मणानामेष सिद्धान्तः साम्प्रतं क्व वर्तते ? यथा—

' ब्राह्मणः सततं मानादुद्विजेत विषादिव ।
अवमानं समीहेत सुधावदिह सर्वथा ॥' इति ।

* एष लेखः पूर्वलेखमनुबध्नातीति क्रान्तिकारिणा प्रकाशितः । अधुनास्मिन् विषये न किमपि खण्डनात्मकं वस्तु प्रकाशितं स्यादिति लेखकैरवधेयम्—
सम्पादकः—

अस्तु तावत्, न वयमधिकं किञ्चिद्वक्तुमभिलषामस्तस्मिन् विषये। येन भवितव्यं तद्भविष्यत्येव। दशवर्षाभ्यन्तर एवैतस्मिन् संस्कृत—समाजे माद्दृशा बहवः क्रान्तिकारिणः समुत्पन्ना भविष्यन्ति। ये खलु सर्वप्रथमं क्रान्तिमुत्थापयन्ति, तेषां कृते स्वार्थमग्नानां मोहान्धीभूतमतीनां विवेकरहितानां राज्ञां लोकानाञ्च महान् दण्डो भवतीति प्रकृतेर्नियम एवैषः। भगवान् श्रीकृष्णः क्रान्तिं कर्तुमवततार, तस्य कियन्तः स्वार्थान्धाः शत्रव आसन्। भगवतो बुद्धस्य का का नाम दुर्दशा न समजनि। क्रान्तिकारी भगवान् यीशूख्रीष्टः स्वार्थान्धैः शूलमारोपितः। भगवतः शङ्कराचार्यस्य कृते स्वार्थान्धैः कियत्यो विपदः समुद्भाविताः। साम्प्रतमपि भारते कियन्तः क्रान्तिकारिणः शासकैः शूलमारोपिताः, आरोप्यन्ते च। क्रान्तिकारी भगवान् तिलकः कथं दुर्दशामन्वभवत्, महात्मा गान्धी च क्रान्तिं कुर्वन् कीदृशमपवादं दुःखञ्चानुभवति। एवमेव सामाजिकीं क्रान्तिं कुर्वन् महर्षि-दयानन्दः समेषामपि विदुषां मृत्युना दण्ड्यः समभूत्। अद्य सर्वत्र भारते तस्यैव विजयवैजयन्ती दोदोल्यमाना दरीदृश्यते। धार्मिकीं मुन्नतिं कुर्वन्तो माननीयाः पूज्यपादा मालवीय—महोदयाः कथं पण्डितानामाक्षेप-भाजनानि सन्तीति सर्वं प्रत्यक्षमेव सर्वेषाम्। साम्प्रतमेव तस्मिन्दिने दरभङ्गाधीशसभायां श्रीमद्भिर्लक्ष्मणशास्त्रिमहोदयै र्मालवीयानां विश्वविद्यालयस्य च निन्दा कृता ऽसीत्। किन्तेन सम्वृत्तम्। मालवीयमहोदयास्तु तथैव कोटिशोहिन्दूनां प्राणभूता विजयन्तेतराम्। अत इदं प्रत्यक्षमेव, यत्, पण्डितेषु नास्ति स्वार्थत्यागः। अत एव तेषां गालिप्र[दानं] निन्दनम् सर्वं व्यर्थमेव। अस्त्वेतत्तु मया [...] प्रलपितम्। साम्प्रतं प्रकृत मनुसरामि। प्रथममिदमस्माकं वक्तव्यं यत, सर्वैरपि विरोधिभिरिदमेव तत्त्वं ज्ञातम्, यत, 'क्रान्[ति] संस्कृतपण्डितान्निन्दन् साम्प्रतिक-नेतृवृन्दं [...] एष तेषां महान्व्यामोहः। एतस्मिन् विषये [...] ज्ञातव्यम्, यत्, नाहं पण्डितानां द्वेषी। [...] लिखित मासीत्, यद्व वयं पण्डितानामनु[...] स्मः (स्थास्यामश्च)। तेषां हितचिन्तका [...] दासा एव स्मः, परं न तेषां दुश्चेष्टितस्य, [...] विशालस्य शास्त्र-तत्त्व ज्ञानस्य"। वयमस्मि[न्] सुदृढ़ा स्मः, स्थास्यामश्च।

अस्माकं लेखस्य प्रधानं कारणमि[दमा]सीत्, यत्, संस्कृतपत्रेषु, हिन्दीपत्रेषु, [...] सर्वत्रैव पण्डितानां श्रूयते निन्दा। संस्[कृते] प्रायः पण्डितानां प्रबोधाय लेखा निस्सरन्ति। [...] कालात् काशीवाससौभाग्यमनुभवन्नहं प्राय[ः] संस्कृत-विदुषां छात्राणां पत्राणां सभानाञ्च [...] मवलोकयामि। मया दृष्टम्, यत्, बहुधा [...] पण्डितैः सभाः कृताः, व्याख्यानानि प्रदत्ता[नि] [...] कृतम्, परन्तु, कुत्राऽपि किमपि न जातम्। [...] पण्डितेषु सनातनधर्मावलम्बिषु श्रीमतां म[हो]पाध्याय लक्ष्मणशास्त्रिणां साधु कृत्यम्, महामहोपदेशकानां मदनमोहनशास्त्रिणां च। [...] स्वपन्ति। अतोऽस्माकमिदमुद्देश्यं यत्, [...] गाक्रान्तस्य रोगिणः कृते विषमौषध-व्यवस्[था] वैद्यो यथा तच्छत्रुमुन्मूलयित्वा तस्यैव [...]

पादयति । तथैव साम्प्रतमस्माभिरपि पण्डिता-
रोगनिवारणाय विषमः प्रयोगो विधेयः । ते प्रति-
गिविधयैव कार्यं कुर्वन्तु, परन्तु, कुर्वन्तु । इत्ये-
स्मन्नेव विषयेऽस्माकं तात्पर्यम् । न द्वेषेण, न वा
लिश्रवणार्थम् । अन्यः खल्वयमाशयो नास्ति कदा-
स्माकं मनसि यत्, आधुनिकाः सुप्रसिद्धा नेतारो-
माकं श्रद्धाभाजनानि । हन्त ! एतत्कथनमपि लज्जा
म् । ये खलु नेतारः कापटिकस्य राज्यस्य कपट-
र्यां सभ्यतां भाषाञ्चाधीयन्ते, ये च वाकील-बार
र परीक्षां दत्त्वा शासकानां न्याय-नाट्यालय
Stage ) स्य 'दलाल'-पदवाच्याः भारतीयेषु
परं वैरमुत्पाद्य, भारतीयं रक्तं पिबन्तस्वार्थसाधन-
ङ्गलानाञ्च स्वार्थ-साधनं कुर्वन्ति, ते खलु नेतारः
सत्याः नेतारः सन्ति । वास्तविकं भारतीयं नेतृ-
तु पण्डितानां हस्ते विद्यते । परन्तु; क्षणं मात्स-
त्सार्य विमर्शनीयं श्रीमद्भिर्विमर्शिभिः, यत्,
ां कपटवृत्तीनां खलानां हस्तात् नेतृत्वग्रहणं
ण्डितानां कार्यं विद्यते न वा ? साम्प्रतं पण्डित
राजस्य या मरणोन्मुखी परिस्थितिः संलक्ष्यते,
पेक्षया तु ते नेतारः साधुकार्यमेव कुर्वते । किं
मर्शी विद्वान् दयानन्दस्य नेतृत्वं दूरदर्शित्वमप-
पितुं शक्नोति ? किं भगवति तिलकमहोदयेऽपि
मपि दोषमारोपयितुं प्रभवति ? किं श्रीमतां माल-
य महोदयानां विविधं कार्यजातमपि निन्होतुं
क्यते विमर्शिणा ; नेहरू-अली-प्रभृतयः सन्तु
पटिकाः, परन्तु कार्यकर्तारोऽपि सन्ति । तथापि
ण्डितानामग्रे दयानन्द-गान्धी-मालवीय-प्रभृतयो
सन्ति किमपि; यदि ते तादृशीमेव सहनशक्ति हृद-
न प्रदर्शयन्तः स्वार्थत्यागं कृत्वा क्षेत्रे समवतरन्तु ।

नोचेत्केवलं लेखस्योत्तरदानेन क्रान्तिकारिणो नि-
न्दया वा किं सेत्स्यति ? न किमपि कस्याप्युच्छिन्नं
स्यात् । हिन्दीभाषायां न जाने कियन्तः सन्ति
क्रान्तिकारिणो ये प्रत्यहं वदन्ति, यत्, कूपमण्डूका-
नां गङ्गायां प्रवाहः कर्तव्य इति । पत्रेषु चैतत् बहु-
धा प्रकाशितम् भवति । तद्दृष्ट्वाऽप्यस्याकं संस्कृ-
ताध्यायिनां छात्राणां जायते महती ग्लानिः, यत् ,
किमर्थमस्माभिर्जन्म गृहीतम् ! किमर्थञ्चाधीताऽस्मा
भिः संस्कृतभाषा ! अस्माकमाचार्यास्तु साम्प्रत-
मेतादृशानां शब्दानामेव भाजनानि सन्ति, अस्मां-
स्तु सत्यमेवेमे गङ्गाप्रवाहे पातयिष्यन्ति ! अस्माकं
गुरवोऽधीतसकलाशास्त्रा अपि पञ्चदशमुद्रामा-
सिकं लब्धुं मूर्खाणां धनिनां द्वारि द्वारि बंभ्रम्यमानाः
सगलहस्तं निःसार्य्यन्ते-इत्यादिकमालोच्यमान-
मस्माकं हृदये वेदनाम्, क्रोधम्, क्षोभम्, लज्जाम्,
भयञ्च समुत्पादयति । यदि वयं तेषां लेखाना—
मुत्तरं दातुं प्रयता भवामस्तदाऽस्माकं लेख प्रकाश-
कानां पत्राणामेवाभावो वर्वर्ति । न तेऽस्माकं ले-
खान् प्रकाशयन्ति । तदा वयमालोचयामो यत्,
हंहो ! अस्माकं पथप्रदर्शकास्तु न किमपि कुर्वन्ति ।
वयं किं करिष्यामः ? यदि त एव पत्रं न निःसार-
यितुं प्रभवन्ति ; तदा तन्नीतिमनुसरमाणा वयं कथं
विरोधिनां मुखमर्दनं करिष्यामः । इत्येतदालोच्य,
पण्डितानामान्तरिकञ्च नग्नचित्रमालोच्य मया
खलु पण्डितानां दौर्बल्यप्रकाशने प्रावल्यमकारि ।
यदि पुत्र एवालसमकर्मण्यं पितरमन्तः स्नेहेन
कलहं कृत्वा कस्मिन्नपि कार्ये नियोजयेत्तदा शास्त्र-
दृष्ट्या, धर्मदृष्ट्या, नीतिदृष्ट्या शोभनमेव ।
अतोऽयमस्माकमभिप्रायः पूर्वं सर्वैः सम्यक् ज्ञात-

व्यस्तदाक्षेपादिकं विधेयमिति प्रथमं निवेदनम्।

अपरमिदं निवेदनम्, यत्, एतस्य लेखस्य सुप्रभाते प्रकाशनात् वराकः सुप्रभात-सम्पादक-महाशयो व्यर्थमेव पण्डितैरपवादभाजनत्वं नीयते। लेख प्रकाशनस्यापराधी सम्पादकः स्यात्, परं लेख गताः विषयास्तु मदीया एव। तेषामपराधकोऽहमेवाऽस्मि। एतस्मिन् विषये बहुधा श्रूयते, यत्, सम्पादकस्यैवाऽयं लेखः, परमस्य मोहस्य नास्ति कोऽप्युपायः। अहमस्मि कश्चन व्यक्तिः काले प्रकटी भविष्यामि, अतः सम्पादकस्य नाऽयं लेखः। नचोपालम्भविषयः स इति सर्वथा ध्येयम्।

तृतीयमिदमावेदनम्-यदहमस्मि कश्चन संस्कृताध्ययनकारी छात्रः। परं संस्कृतच्छात्राणामिव नास्मि निर्जीव इति मया लेखे काश्चनाशुद्धयः कृता इति क्षुब्धविकलमतिभिस्ताः सङ्गृह्य सूर्योदये प्रकाशिताः। तद्विषयेऽपि वक्तव्यम्, यत्, शुद्धिपत्रे प्रकाशिताः काश्चनाशुद्धयस्तु लेखकस्य भ्रमनिष्पन्ना एवासन्, स खलु शुद्धमप्यशुद्धं मत्वा धृतवान्। काश्चनाशुद्धयो मुद्रणस्य विद्यन्ते। यथा तस्मिन्नेव शुद्धिपत्रे सङ्गृहीता अशुद्धयोऽप्यशुद्धा एव वर्तन्ते तथैव। सन्ति सत्यं काश्चन, या लेखकदोषेणैव समागताः। परं ममेदं निवेदनम्, यद्यस्याः संस्कृत भाषायाः शब्दशास्त्रं बृहस्पतिर्हि नामेन्द्रायाध्यापयामास, तदपि न पारं प्राप, तस्मिन् यदि शब्दजाले माद्दृशानामन्येषाञ्च विदुषामशुद्धयस्युस्तदा तेषां भ्रमेणैव; न मूर्खतया। यः सहस्रशः शब्दान् शुद्धतया लिखति, एकञ्चाशुद्धतया तदा न मूर्खतया स गण्यते, परं तस्य दोषान्वेषकाः क्रमेलका इवाशुद्धा एव ताद्दृशाः। लेखको यदालिखितुं प्रवर्त्तते, न शब्दमपेक्षते। भगवान् कालिदासः खलु यां प्रथममास पपात पश्चात्' 'गृहिणी इत्यादि शब्दान्नापैक्षत। साम्प्रतमेव प्रातः यानां श्रीमतामम्बिकादत्तमहोदयानामेव विजये सन्ति व्याकरणाशुद्धयः। किन्तेन ? पाण्डित्यहानिः। तथापि 'बुद्धेःफलमनाग्रह' न्यायमनुसृत्य नाहं पण्डितानामिव गालि करोमि, प्रत्युत तस्योपकारं शिरसा विभर्मि।

चतुर्थमिदं निवेदनम्, यत्, सूर्योदयस्यैक युग्माङ्के सूर्योदय-व्यवस्थापकोऽवधेशशर्मा स्वीयमपि नाम पञ्चस्वश्वारोहिष्वलेख सूर्पो वदति चेद्वदतु, तितउरपि वक्तुं प्रा शतशश्छिद्राणि। मन्ये, मम लेखे महामण्डल पितामहस्य ज्ञानानन्दस्य नाम दृष्ट्वा, तस् र्जनाय क्रान्तिकारिणमाक्रमितुं प्राक्रमदिति खलु किं किं लिखितवानिति सूक्ष्मतया न स्म परन्तु यद्यत्तेन लिखितं तस्योत्तरं स मदी सम्यग् विमृशतु। यत्तु तेनेदं लिखितम् अवच्छेकतावच्छिन्नादिकं निन्दन् क्रान्तिकारी मेत दनभिज्ञ एव इत्यादि। तत्र त्विदमेव वक्त यदहं भवतोऽध्यापनसमर्थमवच्छेकत्वन्तु म्येव। यद्यहं तस्याज्ञानेन निन्दां करोमि चेत् भवानपि तस्य तत्वानभिज्ञ एव तं प्रशंसति भवानेव, भवतां महामण्डलेऽपि ये सुदीर्घो धारिणः सन्ति छात्राः, शास्त्रि-भूषण-मार्तण्ड तयस्तेऽपि न जानन्ति। भवन्तन्त्वहं जा याद्दृशि गभीरे जले वर्तते भवान्। अतो

न्नैतद्रमणीयम् जातम् । यत्तु भवान् मां भीषयति खने यत्रकुत्राप्यशुद्धौ, तत्प्रथमं स्वकीयमेवमुख-वलोकयतु दर्पणे, यत्, सूर्योदय एव भवतः कियत्यो-शुद्धयस्तिष्ठन्ति । येषां प्रचुरं शुद्धिपत्रं प्रका-नाय प्रेषितमप्यस्मन्मित्रैर्न प्रकाशितं सुप्रभात मपादकेन स्वनीतिविरुद्धत्वात् ।

यत्तु भवान् वदति, यत्, अमुकेनैतत् कृतममुके-तत्कृतमित्यादि तदप्यहं तावज्जानामि, यावद्भवा-पि न जानाति, नैतेन मल्लेखस्य कश्चन विरोधः । हन्तु समाजमधिकृत्य सर्वं लिखितवानस्मि । माजिकी वार्ता न सर्वेष्वपि सामाजिकेषु संलग्ना ति । केचन तया मुक्ता भवन्ति, केचन तस्या यीभूता भवन्ति । परं यादृशं यदपेक्ष्यते मया, दृशं तन्न ज्ञातं भवता । भवतु । महामण्डलस्य स्कृतसेवा-विषये न मया लिखितमासीत्, तद्भव-ऽरण्यरोदनमेव, मण्डलेशप्रसादकं वा भवेत् । या यल्लिखितम्, तत्तु सत्यमेव, न तत्र प्रमाणान्त-पेक्षा । नास्ति च मे व्यर्थः समयः । भवता स्व-मि-प्रसादन-प्रसाधनं साधुकृतमित्येव वक्तव्यम् । तः परमपि भवान् यदि लिखिष्यति चेल्लिखतु, हमुत्तरिष्यामि । महामण्डलस्य मुद्रा विद्यन्ते, णालयो विद्यते, तस्यैव लेखनी मसीत्यादिकं यते । मदीयां निन्दां कृत्वा पत्रं पूरणीयम् । तु अन्येषां लेखानामपेक्षया पाठकानां मनोरञ्जक विषयो भविष्यति ।

अन्यदप्येकं वरीवर्ति लेख्यम्, यत्, सूर्योदयस्य स्मिन्नेवाङ्के नारायणशास्त्री खिस्ते क्रान्तिकारिणः र्णमर्दनम् कृतवान् । तदर्थं तस्मै दीयन्ते धन्य-वादाः ! यस्य पार्श्वे यद्भवति, स तदेव ददाति । तत्कर्णमर्दनं तस्यैव महाशयस्य सविधे प्रत्यावर्तते । अन्यदपि विद्यते लोके प्रसिद्धम्, यत् यः खलु सभ्यः कस्मैचन सभ्याय गालिप्रदानं करोति स मूर्खः कथ्यते, यः खलु तस्मै गालिप्रदानेनैवोत्तरं प्रददाति स महामूर्खः कथ्यते । अहन्त्वासमेव मूर्खः, परन्तु, मत्तोऽप्यधिकः समागत इति संतोषः । अस्तु ! 'वयमिह तदभावाद् गालिदानेप्यसक्ताः' । यद्यपि क्रान्तिकारी खल्वहं तस्य वराकस्य गुह्य-गञ्जनं कर्तुं प्रभवामि, तद्विधिविधानञ्चाऽपि जानामि। परन्तु नाहं विवदिषुः । अहन्तु सत्य-हृदयेन दोषाणां विवेचनं तेषामपाकरणं गुणार्जनोपायञ्चाभिल-षामि । नेदृशं मद्यमदमत्तानामिव मातुलानीभक्तानां काशीस्थानां तेषां शुष्कं कलहं श्रुत्वा कालक्षेपं कर्तुम् । मयाऽपि पण्डितानां दौर्बल्ये यथा हृदयो-द्वारा निःसारिताः, तथैवेमेऽपि वराकाः स्वीयमुद्गारं निःसारयन्तु । किमेतेन भवति । विवेकिनां सविधे द्वयोरपि मूल्यं भविष्यति । काकः काकः, पिकः पिकः । चतुष्पादीरचनयैव किं पाण्डित्यं भवति ? अस्तु !

साम्प्रतमहं प्रियसुहृदो विमर्शिविदुषः समाहितौ किञ्चिन्निवेदयामि, यत्, भवता स्वापशब्दस्य परि-ष्कारद्वयं विहितम् । तत्र प्रथमलक्षणन्तु भवदिव न ममाप्यभिलषितम् । द्वितीयं ममाभिलषितम्, तद्भवतामप्यभिलषितमिति प्रतीयते । तत्र भवान् वदति, यत्, अस्माकं कर्तव्यमिदम्, यत्, "शास्त्रीय विषयाणां छात्रेभ्यो वितरणम्, सत्यवसरे तेषाम्प्र-चाराय क्षत्रियाणां पुरतो निवेदनमिति । शासकानां क्षत्रियाणां कृत्यमिदं यत्ते धर्मभावानाम् प्रजासु

शाश्वतिकप्रचाराय नियमान् विदध्युस्तेषामवहेलने च दण्डदानादिकं विदध्युरिति ।" भवानित्येव निवेदनं कृत्वाऽग्रे 'घटं भिन्द्यादित्यादिकं प्रस्तुत्योड्डयनमकरोत् । परमत्रैव स्थित्वा विचारयेद्भवान्,यदिदानीं नास्ति राजा क्षत्रियः, यः खलु ब्राह्मण-निर्मितान् नियमान् प्रजासु प्रचारयेत् । एवं स्थिते ब्राह्मणानां किं कर्तव्यमित्येष विचारस्तु भवता शनैरन्तर्हित एव । यदि राजा क्षत्रियो न स्यात्, नच भारतीयधर्मावलम्बी स्यात्, प्रत्युत स्वीयमेव धर्मं प्रचारयेत्तदा पण्डितैः किं कर्तव्यम् ? तदा—एकोऽपि वेदविदित्यनया नीत्या तूष्णीमवस्थानमुत धर्मप्रचारायान्दोलनं कर्तव्यम्, यदितूष्णीमवस्थानं स्वयञ्च ऋषिप्रणीतनियमानुसरणमेव भवान् वदति, तदा तदेव भवतु पण्डितेषु । तत्तु नास्ति । ऋषिप्रणीतपद्धत्यनुसारं कियन्तो ब्राह्मणाः सन्ति, ये प्रातर्यथानियममेव स्नानसन्ध्याऽग्निहोत्रादीनि कार्याणि कुर्वन्ति, अथवा स्वाध्यायाध्ययनं कृत्वा, छात्रेभ्यस्तया शिक्षाप्रणाल्याऽध्यापनं कारयन्ति, भैक्षेण च वृत्तिं चालयन्ति । बहवस्तु तेषां छात्राः सन्ध्यामपि न जानन्ति । न च शास्त्रीयैः पण्डितैर्वेदस्य धर्मशास्त्रस्य वा पुस्तकमपि कदाचिदवलोक्यते । किमिदं वक्तुं पारयति भवान्, यत्, साम्प्रतं सर्वत्राऽपि घृते सूकराणां गवाञ्च वसां, श्रुत्वा बुध्वा च सर्वैः सादरं नोपभुज्यते ? किं भवान् अस्थिचूर्णमिश्रां शर्करां न प्रत्यहमुपभुङ्क्ते ? भवानित्युपलक्षणम्, ब्राह्मणमात्रस्यैव । यदि वेदाः प्रमाणम्, यदि च सत्यं धर्मशास्त्रम्, आयुर्वेदशास्त्रञ्च तदा एतैर्द्रव्यैर्हव्यं कव्यं भोजनञ्च सर्वथा पातित्यकारकं न वा ? किं ऋषिप्रणीत—प्रणाल्या छात्रेभ्यः परीक्षादापनम्, स्वयञ्च नीचानां सदनेषु अ
ध्यापनम्, गणान्नभक्षणम्, अवन्द्य-वन्दनम्
विहितम् । तत्तु सर्वं क्रियत एव, तदा कि
मेव एकोऽपि वेदविदित्यादिक मुक्त्वा, क्षत्रिया
राज्याभावं प्रख्याप्य, दौर्बल्य-संवरणं क्रियते।

एतदुक्तं भवतां शिरसाऽभिनन्दामि, क्षत्रियाणां राज्ञामुपदेशनं कृत्वा धर्मप्रचारो
णानां कर्तव्य आसीदिति । परं यदि
राजानो न भवेयुः, अथवा क्षत्रिया एव नीच
नुसृत्य प्रजाः पीडयेयुस्तदा ब्राह्मणानां किं क
मिति तु विस्मृतं भवता । यदा क्षत्रियोऽपि
वेणुर्म्लेच्छतामभजत्, यदा क्षत्रियोऽपि विश्वा
ब्राह्मणमतोदयत्, यदा क्षत्रियोऽपि दुर्यो
नीचतामशिश्रयत्तदा ब्राह्मणैः किं विहितम् ?
बौद्धसम्राडशोकः सर्वत्र वैदिकं धर्ममलुम्पत्,
च बुद्धानामेव साम्राज्यमासीत्तदा तदा
ब्राह्मणै वैदिक-धर्म-संरक्षणाय किं कृतम् ?
हायेन ब्राह्मणेन शङ्करेण किं विहितम् ? तदेवे
मपि विधातव्यमिति मदीय आसीदभिप्रा
साम्प्रतमपि यदि ब्राह्मणाः समुत्थाय तदेव
प्राप्नुयुश्चेत्किं धर्मरक्षा न भविष्यति ? मा
स्वीकरोतु । अहन्तु घटभेदनं पटच्छेदनं गर्द
हणं यत्किमपि वा कृत्वा धर्मरक्षणमेव ब्राह्म
कृत्यं मानयामि । आदर्शभूतैः शङ्करभगव
कुमारिलेन च कृतमासीदेतदेवेति सा
वदामि ।

यत्तु वदति भवान्, यत्, नापि वयं 'क्रोश
स्याद्देशोद्धारः' इत्यत्र श्रद्धामावहामः, इति
हन्तु श्रद्धां भवन्तस्तत्र । परं यत्रोद्धारे

मेवमार्गं प्रदर्शयतु । अहमपि तु विवेकविकलो-
स्तपादो प्रक्षिपन्, कमपि मार्गमेवान्वेषयामि ।
भवाँस्तु धूलिप्रक्षेपमिवोत्तरयति, यत्, "न वयं
स्वनामप्रियाः, मिथ्या-दम्भ-प्रख्यापकाः, समाचार-
पत्रादिषु स्वकृत्यं प्रख्यापयितुमीहामहे' इति ।
ममैतदभिलषितं नवेति कथं भवता तर्कितम् ?
भवता स्वीयाभिलाषा तु न कुत्रापि प्रदर्शिता ।
यदीदमेवाभिलषितम्, यत्, एकोऽपि वेदविदि-
यादि, तदाऽपि मया कथितमेव यत्तदपि नास्ति ।
तदा भवतां निरर्थकमसत्यमेव कथनं केवलं प्राण-
रक्षायै प्रतिभाति ।

अग्रे पुनरपि तदेव कथयन्ति भवन्तो यद्
'वयं कस्मिन् क्षेत्रे कार्यं कुर्मः' इति, तदा तु
भवतां सर्वथाऽसामर्थ्यं प्रकटनेनेदं प्रकटितं यद्,
"यद्भवति, तदेव भवतु, वयं यथा वर्तामहे, तथैव
वर्तिस्यामहे"। तदा व्यर्थमेव लेखन प्रयासः स्वीकृतो
भवद्भिः । भवतु, धर्मनाशः, चीत्कुर्वन्तु नेतृवृन्दाः,
प्रचलतु पाश्चात्यपद्धतिः । किमर्थं भवद्भिस्तत्र
भवद्भिर्मध्ये मध्ये धर्मशास्त्रीया मिथ्या स्वार्थपूर्णा
व्यवस्था प्रदीयते । किमर्थं कोलाहलः क्रियते, यत्,
'विनष्टो धर्मः' इति । किमर्थं निन्दया, गालिप्रदाने-
न, द्वेषेण वा कालुष्यमुपनीयते वेदपूतोऽन्तरात्मा ।
एतत्सर्वं तु मया पूर्वस्मिन्नेव लेखे लिखितमासीत्,
तदेव विवृण्वन्तो भवन्तो मदीयमेव समर्थनं
विदधति । यथा भवान् वदति, यत्, 'मण्डूका
यत्र वक्तारस्तत्र मौनं हि भूषणम् ।' इति । तथैवा-
धुनिका नेतारोऽपि भवतो वदति । विनिगमना
विरह एवात्र वर्तते । एवमेव यदा भवन्तस्तेषां
कार्येषु क्रन्दनं विरोधञ्च कुर्वन्ति, तदा, तेऽपि

वदन्ति भवदुक्तमेव, यत्, "गच्छति करिणि भषन्तु
भषकाः" इति । इत्यत्रापि विनिगमना विरह एव ।
परमयि सखे ! गतः स कालः, साम्प्रतं यदि भवता
वेदवित्त्वं स्वीकृत्य कृततूष्णींत्वमेवोररीक्रियते
चेत्, शनैः शनैर्भोजनमपि न लप्स्यते, कर्मयुगेऽ-
स्मिन् वेदपाठिनामकर्मण्यानां गतिर्नास्ति । अग्रे
गत्वा परिस्फुटति भवान्, यत्, "यदा भारतीया
जनताऽधुनिकानां नेत्राभासानां कथनेन विनष्ट-सर्व-
स्वा भविष्यति, इमे नेतारश्च परिश्रान्ता भविष्यन्ति,
तदा पण्डिता उत्थिता भविष्यन्ति, कार्यञ्च करि-
ष्यन्ती" ति ! हं हो ! भवतां दूरदर्शित्वम्, विमर्शि-
त्वञ्च ! तत्तु मया सूत्ररूपेण सर्वं लिखितम्—यत्
"मृते रोगिणि किमौषध-निषेवणैः" इति । किं
भवान् जानाति, यत्, पञ्चसु दशसु वा वर्षेषु
नेतारो मरिष्यन्ति, असफलाश्च वा भविष्यन्तीति ।
भारते प्रतिवर्षं नूतनमान्दोलनं समुत्तिष्ठते नूतनाश्च
नेतारो रक्तबीजवदुत्पद्यन्ते । नेमे श्रान्ता भविष्य-
न्ति, प्रत्युत कमपि प्रबलं विरोधिनं प्राप्य द्विगुणि-
ततया कार्यं करिष्यन्ति । तावज्जनताऽपि तेषामा-
ज्ञया विनाशित-सर्वस्वा भविष्यति । भारते यादृशं
दारिद्र्यं वर्वर्ति, तद्दृष्ट्वा प्रत्यक्षमेवानुमीयते, यत्,
कियत् कालानन्तरं भारते प्रलयो भविष्यति । भवा-
नेव विमृशतु तावद्यद् प्रतिवर्षमर्बुदादप्यधिकं द्रव्यं
विदेशेषु गच्छति । तदुपरि वैदेशिका व्यापारिणः
कत्यर्बुदं रूप्यकाणां लुण्ठन्ति, एवं निर्यातमेव दरी-
दृश्यते । आयस्य तु कुत्रापि छिद्रमपि नास्ति ।
एतादृश्यामवस्थायां भारतमिदं कियन्तं कालं यावत्
द्रव्यं स्थापयिष्यति । तस्य दरिद्रता सुतरां प्रतीयते ।
भवानेवावदधातु 'यत् विंशति वर्षेषु कियती दरिद्रता

भारते समापन्ना । अधुनैव भविष्यति संसारव्यापि घोरं युद्धम् । तत्र कोटिशो भारतीया बुभुक्षिता एव मरिष्यन्तीत्यपि कदाऽपि विचारितम् भवता । यदा पिता मरिष्यति, तदा वृषभाणां वराटनं भविष्यतीत्याभाणकं चरितार्थं करिष्यन्ति भवन्त इति ध्यायं ध्यायं हास्यमायाति । भवतु, यदि जीविष्यामि तदाऽवलोकयिष्यामि ।

यद् भवान् पण्डितानां माहात्म्यं गायति । तत्तु जानाम्येव यदेभिः पण्डिततल्लजैरेव वस्तुतः सनातनधर्मो रक्षित इति । परं स्वयमेव स्वशरीरेण रक्षितः । कैश्चन तद्विरुद्धमप्याचर्यत इत्यपि मन्तव्यमेव स्यादस्माकं प्रियवरस्य विमर्शिणः । अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितमिति तु बहिर्भवतु नाम । अन्तः समाजे पण्डितानां तन्नास्ति । तदपि मया पूर्वलेखे प्रतिपादितमासीत् । पण्डितेषु परस्परं नास्ति विश्वासः । धर्मव्यवस्थासु सभासु, समाजेषु च तेषां व्यवहारो न गभीरो न च सभ्यतायुक्तो भवतीत्यपि जनतायां विद्यते प्रवादः । सर्वे सर्वान् मूर्खान् कथयन्ति, क्रान्तिकारिणो लेख एवोच्छृङ्खलत्वं केषाञ्चन नवीन-पण्डितानां दृष्टं मया निगूढेन ।

पाश्चात्य चाकचिक्यं यन्निन्दति भवांस्तत्तु मयाऽप्यनुमोद्यत एव । परं प्राचीनं कः शिक्षयिष्यतीति नावलोक्यते । मौखिकी निन्दैव तु न पाश्चात्य पद्धति मुन्मूलयिष्यत्येव । तद्विषयेऽपि चाणक्यादीनामुदाहरणानि लिखितान्यासन् ।

यत्तु स्वल्पवेतनेनैव पण्डिताः कार्यं कुर्वन्ति, तत्पिष्टपेषणमेव कुर्वन्ति । यदि तैः प्रचुरं वेतनं लभ्येत चेत्, ते सन्तुष्टान्तःकरणा नूतनमाविष्कारं कर्तुं प्रभवेयुः, शास्त्रवृद्धिञ्च विदध्युः । परं स... तने तु तेषां गृहकृत्यमेव न प्रचलति । यद्यपि... स्तदीयं त्यागप्रकर्षं लिखति, परन्तु, स त्यागो... क एव, अम्ल-मृद्वीकावत् । एतदपि पण्डि... शैथिल्येन सम्पन्नम् । यदि पण्डिताः स... सम्पाद्य, वेतनवृद्ध्यर्थमान्दोलनं कुर्युश्चेत् ... स्यादेव । भवानेतस्मिन् कार्ये प्रवृत्तो भवतु, ... पञ्चाशन्मुद्राभ्यो न्यूनं वेतनं कस्याप्या... कुत्रापि न स्यादिति । नैवमपलापेन कार्यं स... अकरणान्मन्दकरणं श्रेयान् । भवांस्तु पण्डि... चाटुपरोऽकर्मण्य इव दोषान् दुःखानि निगू... नायं निगूहन-समयः । रोगस्य निगूहनं घाताय ... वति । अहन्तु पण्डितानां क्रियमाणमपमानं ... रोदिमि । अतएव लिखामि । ते कुर्वन्तु नाम ... प्रदानम्, आचरन्तु च मयि यथेच्छमत्याचा... परं स्वीयां दशां निभालयन्तु, दोषान् दूरीकु... बालादपि सुभाषितं गृह्णन्तु । त्यजन्तु ... दुराग्रहम् ।

प्रतिग्रह-विषये तु भवानविदितवेद्य इव लि... अहमपि तत्र न किमपि वदिष्यामि । मर्मो... वारं वारं न विधेयम् ।

वञ्चना-विषये भवता यल्लिखितं तन्नितरां ... षास्पदं हर्षास्पदञ्च । एवमेव बहवो मूर्खा... शीस्थ-पण्डितानां प्रतिष्ठापत्रं प्राप्तुं हस्ताक्ष... कारयन्ति, बहिश्च तेषां निन्दां कारयन्ति । प... त्यजन्तु विद्वांसः स्वकीय-गौरवं स्मृत्वा ।

समाज-विषये समाज-सञ्चालकाः प्रतिष्ठ... नाहं कस्मिन्नपि समाजे तिष्ठामि । केवलं स...

मवलोकयामि । परमिदानीं समागच्छन्ति प्रायः ानपण्डिता इत्यपि मुदमादधाति । पण्डितैः ीया बालकाः प्रोत्साहनीयाः । मया कलिकाता ारे वङ्गीय-साहित्य-परिषदि दृष्टम्, यत्, ये युवका ीनाःसाहित्य-सेविन उदीयन्ते, तान रवीन्द्र सदृशा द्धमहारथिनः सस्नेहमुरसा लापयन्ति महति ाजे । अत्र तु यः कश्चनउदेति, वृद्धास्तमुपेक्षन्ते, वकाश्चासूयया तं निन्दन्ति । अतएव न वृद्धि वति । यदि च्छात्राणां युवकानां कार्येषु पण्डिताः ागत्य तान प्रोत्साहयेयुश्चेत् चतुर्गुणितोत्साहेन र्यें व्यापृताः स्युस्ते ।

अस्तु, अन्तिमवाक्यानामुत्तरं पूर्वमेवप्रदत्तमिति म्प्रतं लेखवृद्धिभयाद्विरमामि । प्रार्थये च वन्तं विश्वनाथं यत्पण्डितेषु सामर्थ्यम्, स्नेहम्, रस्परिकं विश्वासञ्च वितरतु । प्रोन्मूलयतु च ां द्रुतं शैथिल्यम्, द्वेषम्, परोत्कर्षासहिष्णुत्वम्, धश्चेति । अतः परं यस्य यादृशी मनीषा भवेत् तद् लिखतु । नाहमुत्तरयिष्यामि । शम् !

सर्वे कुशलिनः सन्तु सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत् ॥

---

## पाणिनीय--प्रकाशः ।

ले०—म० म० श्रीदेवीप्रसाद शर्म्मा शुक्लः, कविचक्रवर्ती

( क्रमागतः । )

र्देशेनाऽत्र पञ्चम्या यत्कार्यं क्रियते हि तत् ॥
न्यवर्णाव्यवहित—परस्य भवति ध्रुवम्॥

३

परस्य यद्धि विहितं तत्तस्यादेर्विबुध्यताम् ॥
परे खरि झलां स्थाने चरः स्युरिति;निश्चितम् ॥२२॥
उत्थानं तेऽहमिच्छामि नोत्थानं स्वं त्वमिच्छसि ॥
नेद मुत्तम्भनं श्लाघ्यं तस्मादुत्तम्भनं त्यज ॥ २३ ॥
अत्र लोपाभावपक्षे थकारस्यैव हि श्रुतिः ॥
चर्त्वम्प्रति थकारस्याऽसिद्धेश्चर्त्वं न जायते ॥ २४ ॥
स्याद्वा पूर्वसवर्णो झयः परस्य तु हकारस्य ॥
अयमस्ति वाग्घरिः खलु मित्र त्वं वागहरिर्नाऽसि २५
पदान्ताज्झयो यःशकारः परोऽस्ति
भवेत्तस्य वा वै परेऽमिच्छकारः ॥
धनंतच्छिवोमेऽवतान्नित्यमेव--
वलंतच्शिवोमेऽवतान्नित्यमेव ॥ २६ ॥
तच्छ्लोकेन स्तुवे ब्रह्म तच्श्लोकेन स्तुवे महः ॥
अमीत्युक्तेर्न दुष्टत्वंवाक्श्च्योतत्यादिके स्थले ॥ २७ ॥
मान्तस्य तु पदस्य स्यादनुस्वारः परे हलि ॥
हरिंवन्दे दयासिन्धुंयः पाति भुवनत्रयम् ॥ २८ ॥
पदस्येतिविनिर्देशाद्गम्यते शम्यते तथा ॥
रम्यमित्यादिशब्देषु नानुस्वारः प्रवर्त्तते ॥ २९ ॥
अपदान्तस्य नकारस्य मकारस्याप्यनुस्वारः ॥
स्याज्झलिपर इत्युक्तं पाणिनिनाम्ना मुनीशेन ॥३०॥
यशांसि तव वर्द्धन्ते शीघ्रमाक्रंस्यते रविः ॥
झलीति कथनात्सिद्धाः प्रयोगा मन्यतेमुखाः ॥ ३१ ॥
भवेत्परसवर्णोऽनुस्वारस्य तु परे ययि ॥
भस्माङ्कितोऽञ्चितश्शान्तो दान्तः पातु सदाशिवः ३२
कुर्वन्तीत्यत्र णत्वं तु पूर्वं प्राप्तं ततः परम् ।
तस्याऽसिद्धत्वतो नूनमनुस्वारे कृते सति ॥३३॥
ततःपरसवर्णो च तस्याऽसिद्धत्वतः पुनः ।
णत्वं न भवतीत्येतद्बोध्यं जिज्ञासुभिर्जनैः ॥ ३४ ॥

भवेत्परसवर्णो वाऽनुस्वारस्य परे यथि ।
पदान्तस्येति वक्ति स्म भगवान्पाणिनिर्मुनिः ॥३५॥
त्वङ्करोषि महत्पुण्यं त्वंकरोषि परां कृपाम् ।
समो मस्य म एवस्याक्किवन्ते राजतौ परे ॥ ३६ ॥
स सम्राड्दत्तचित्तोऽभूद्धर्माराराधने भृशम् ।
मकारस्य मकारो वा हकारे मपरे परे ॥ ३७ ॥
किम्ह्मलयतिपवनोऽयं कुसुमैर्निचितां लतामेताम् ।
किंह्मलयति च विरहिणीहृदयं नितरां विनिर्दयो मदनः
यवलपरे तु हकारे परे मकारस्य वा यवलाः ।
आसित्किय्ँह्यश्चरितं प्रोक्तं किंह्यस्त्वयेति वदमित्र ३८
श्वा किव्ँह्वलयति पुच्छं किंह्वलयति वारणश्च करम् ।
किल्ँह्लादयतीनोऽब्जंकिंह्लादयतीन्दुरुत्पलञ्चापि ४०



## सुलभ-व्याख्यान-माला ।

काशीविद्यापीठस्था अस्माकं गुरुजनाः काशीस्थजनानां सम्यग्बोधाय हिन्दी-भाषायां विविध-विषयानामुपरि सुलभ-व्याख्यान-मालामारब्धुं निश्चयंचक्रुः । अधुना प्रतिमङ्गल-वासरे श्रीनरेन्द्रदेववर्माणः ( एम्. ए. एल. एल. बी. ) इतिहासाध्यापका हरिश्चन्द्र-स्कूल-भवने बौद्धकालिकभारत-स्योपरि; प्रतिशुक्रवासरे च श्रीप्रकाशमहोदयाः (बार. एट् ला.) राजशास्त्राध्यापकाः स्थानीय-महामण्डपे ( टाउन हाल ) राजशास्त्रस्योपरि; व्याख्यानानि दातुं निश्चितवन्तः । श्रीनरेन्द्रदेववर्मणां प्रथमं व्याख्यानं विगत-मङ्गलवासरे, नवम्बरमासस्य प्रथमे दिवसे, विद्यापीठ-पीठस्थविराणां बीरबलसिंहमहोदयानां सभापतित्वे समभूत् । श्रीप्रकाश महोदयानां च राजशास्त्रस्योपरि प्रथमं व्याख्यानं पीठस्थविराणां सभापतित्वे विगत-शुक्रदिनेऽस्य मासस्य चतुर्थे दिवसेऽभूत् । अस्य सारांशः सुप्रभात-पाठकानां मनोविनोदायाऽधो दीयते ।

"लोकसत्तात्मकं राज्यं हि श्रेयस्करमिति प्रचलितम् । राजसत्तात्मकं राज्यं न बहुमन्यते; प्रजासत्तात्मकम् । अधुना सर्व एव जना मत-दातारः अत्मांशेन राज्य-शकटवाहिनः सन्ति । इदानीम् अन्ये नियमान् संघटयन्ति; अन्ये तान् परिपालयन्ति; नियम-विलङ्घयितृन् दण्डयन्ति । ये च नियमाः जनैः ते तैरेव परिपाल्यन्ते । अतो न कोपि नियम कीदृशान् नियमान् संघटयेयुः, कथं च जनास्तान् परि कीदृशा दण्डाः प्रयोज्याश्चेत्यवबोधयितुं राज ज्ञानं सर्वेषामप्यत्यावश्यकमिति, सुनिश्चितमेव केवलं राजानो राजपुत्रा वा शास्त्रमिदं पठेयुः; किन्तु सर्वे राजशास्त्रान्तर्गत 'राज' शब्दः 'स्टेट' शब्दार्थकं 'स्टेट' शब्देन स भूमिखण्डो ज्ञातव्यो यत्र नियमावली संघः प्रतिवसति । राजशास्त्रमर्थात् तत्रस्थ-नियम शास्त्रमिति । अस्य शास्त्रस्य ज्ञानेन वयं 'स्टेट' सर्वमतिसरलतया बोधयिष्यामः । तदधुनास्माभि यत् समाजोत्पत्तिरपि कथमभवदिति ।

समाज-संघटन-विषयकानुमाने द्वौ पक्षौ प्रचलितौ केचन विद्वांसो मन्यन्ते, यत, प्रथमं जना विहङ्ग प्रतिवन्तिस्म । भक्ष्यार्थमितस्ततोऽटतां तेषां भूम्याः सुसमृद्धतामवलोक्यैकत्रस्थिता, अन्ये एवं भिन्न-भिन्न-समाज-संघटनमभूत् । एतदनुमान भणन्ति, यथा भक्ष्यसाधनीभूतस्वाभाविकन धहीनाः सन्ति तथैवासन् । तस्मात्ते सर्वे मेकत्रीभूयैव वर्तन्तेस्म ।

केचिच्चास्माद् विपरीतमेव मन्यन्ते । ते वदन्ति सिंहव्याघ्रादिवदेकत्वमवलम्ब्यप्रतिवसन्तिस्म । स्त्री पुरु विकाकर्षणात्तेपारस्परिकसंघटनकार्यम् चक्रुः । अनन्तरं एवं समाजोऽभूत् । अनेन कुटुम्बा अस्तु । येन केन समाजः संस्थितः । एवमेव एकत्रीभूतास्ते स्वरूप कृते मुहुर्मुहुः पारस्परिकं युद्धं कुर्वन्तिस्म; तेन केषाञ्चि मानां, नियम-द्रष्टॄणां, दण्ड-दातॄणामावश्यकता बभूव

अथ भारतेऽन्यत्र चेमामेव सरणि मनुसरन्ति भारतीयानां कृते आंग्लदेशस्था ' पार्लमेण्ट ' संस्था

( १७१ पृष्ठस्याधस्तात् )

# आयविवरणम् ।

| | माघः, ८३ | फाल्गुन ८३ | चैत्रः, ८३ | सर्वयोगः |
|---|---|---|---|---|
| ाधारणसदस्येभ्यः | ५८॥=) | ७६॥=) | ८०।।-) | २१६।-) |
| हायक-सदस्येभ्यः | १५) | २१) | १२।=) | ४८।=) |
| कीर्ण आयः | २॥-) | ३॥=) | × | ६।≡) |
| विज्ञापनेभ्यः | १३॥-) | × | × | १३॥-) |
| पृत सर महाराणा रणजीतसिंह महोदयेभ्यः ( वडवानीस्टेट ) | ५) | × | × | ५) |
| थायिकोषस्य कुसीदात् | १२।।)। | × | × | १२।।)। |
| विङ्गवैङ्क कोषात् ( विगतमासावशिष्टम् ) | २५) | × | २५) | ५०) |
| ाननीय श्रीमद्दरभङ्गाधीश्वरीमहोदयाभ्यः | × | ३) | × | ३) |
| सूर्यनारायणव्यास-महाशयेभ्यः | × | ३) | × | ३) |
| ीमदनन्तरामशास्त्रि महोदयेभ्यः ( ऋणंगृहीतम् ) | × | × | १००) | १००) |
| पं० रुद्रदेवशर्म्मभ्यः ( विशिष्टं साहाय्यम् ) | × | ५) | × | ५) |
| रायन्त्रालयाय देयम् | × | १५८॥=) | ८६॥) | २४५=) |
| ह्मदत्त-जिज्ञासु-महाशयेभ्यः (विशिष्टं साहाय्यम्) | × | २) | + | २) |
| विशिष्टाङ्के विशिष्टसाहाय्यात् | × | × | २॥) | २॥) |
| सर्वयोगः— | १३२।॥)। | २७३=) | ३०७≡) | ७१३-)। |

यमान् कृतवती;ताननुसृत्य चात्रस्थाः कौंसिलासेम्बली-दिसंस्था नियमान् कुर्वन्ति । ते नियमा जनैः परिपाल्यन्ते नेति पश्यन्त्यधिकारिवर्गाः । दण्ड-दातारश्च नियमोल्लङ्घयि- दण्डयन्ति ।

पुराणकाले राजा नियमान् करोतिस्म; स च प्रजा निय-न् पालयन्ति वा नेति पश्यति स्म; स एव नियमोल्लङ्घयितॄन् डयति स्म । तेन बहुविनाशोऽभवत् । यथा कश्चित् धनाढ्यः भृत्यं द्वित्रिवारमाह्वयति; स चाश्रुत्वा न सत्वरमागच्छति; लन्तरमागतं तं स क्रुद्धः स्वामी गालीप्रदानं करोति, कदाचित् पादत्राणेनापि ताडयति । पश्यन्तु भवन्तो भृत्यापराध-स्वरूपं प्रभुताडनप्रकारं च । एवं राज्यनियन्त्रणे न कदाप्य-पराधरूपो दण्डो भवतु, तस्मान् नियम-कर्त्तारो नियमद्रष्टारो नियमोल्लंघयितृदण्डिनो भिन्ना एव भवेयुः ।

द्वितीयव्याख्यान-समये एतेषां परस्परसंबन्धं च निदर्शयिष्यामः । इत्युक्त्वा ते स्वस्थानापन्ना बभुवुः । अनन्तरं सभाविसर्जनमभूत् । इति शम् ।

त्र्यं० वि० मोहरिर—
काशीविद्यापीठीयः



# व्ययविवरणम् ।

| | माघः ८३ | फाल्गुनः ८३ | चैत्रः ८३ | सर्व |
|---|---|---|---|---|
| कार्यालय व्ययः | ॥) | ११॥।≡) | ३≡)।॥½ | १५॥ |
| कर्मचारि वेतनम् | २३॥) | १३) | | |
| सुप्रभात प्रकाशने | ४७॥=) | ६५।) | ५५॥=) | १६ |
| सुप्रभात कागजे | ६७॥)॥ | ४७॥) | २७।=) | १४ |
| प्रेस यान व्ययः | १-) | १-) | ।)॥ | |
| चिटिका ( स्टाम्प ) व्ययः | २१-) | २३) | १८।-) | ६ |
| कमीशन व्ययः | ... | ।।।-) | -) | ॥ |
| विशिष्टाधिवेशन व्ययः | ... | ३३।-)। | ७॥) | ४० |
| बनारस ( बैङ्क ) कोशे निहितः | १२।।।)। | .... | ... | १२ |
| सेविंग कोशे निहितः | २६) | .... | २८) | |
| प्रचार व्ययः | ... | ॥) | .... | |
| तारायन्त्रालयाय प्रदत्तम् | ... | ५५) | ९०॥) | १४ |
| श्रीमदनन्तरामशास्त्रिभ्यः ( ऋणं प्रदत्तम् ) | | | ५०) | |
| सर्वयोगः | २००)।।। | २८१।=)। | २८०।।।=)।½ | ७६ |

| | |
|---|---|
| पूर्वविशेषः | १४८-)। |
| १९८३ वत्सरस्य आयः | ७१३-)। |
| सर्वयोगः | ८६१=)॥ |
| व्ययः | ७६२-)।½ |
| अवशिष्टम् | ९८।।।-)½ |

मदनगोपाल शर्म्मा,
( कार्याध्यक्षः )

श्रीगिरीशशुक्लः, न्या
( व्यवस्थापकः )

१—बहवः सुप्रभात-पाठकाः 'सुर-भारती'-पत्रिका विषये, सहस्रांशु-विषये च सुप्रभात कार्यालयतो विविधा जिज्ञासाः कुर्वन्ति। तयोर्विषये नास्ति विशिष्टं ज्ञानमस्माकमिति कृपया तद्विषये किमपि ग्राहकैरन्यैर्वा न प्रष्टव्यम् ।

२—केचन वैदिशिकाः कार्यकर्तारः काशी केचन संस्कृत-कार्यकर्तारः सुप्रभात-का स्वकीय-पत्रप्रेषणसङ्केतं विदधति । तैः सह भात-कार्यालयस्य नास्ति कश्चनाऽपि सम्बन्ध सर्वथा ध्येयम् पाठकैः ।

## संस्कृत-साहित्य-महाविद्यालयः ।

हरिप्रबोधिन्यामेकादश्यां सायं ५ वादन समये शारदामठे संस्कृत-साहित्य-विद्यालयस्योद्घाटनमहोत्सवो महता समारम्भेण सम्पन्नः । यथासमयमेव सभापतिमहोदयाः पूज्यपादाः पण्डितसम्राजो महामहोपाध्यायाः श्रीमत्प्रमथनाथ-तर्कभूषण-भट्टाचार्य-महोदयाः सभास्थलमलमकार्षुः । उपस्थितेषु च--श्रीरामदास गौड़ एम०ए० महोदयाः, श्री पं० रामनारायण मिश्र महोदयाः, श्री पं० मदनमोहनशास्त्रिणः, श्री पं० गोपालशास्त्रिमहोदयाः, श्री पं० गिरीशशुक्ल न्यायाचार्य-महोदयाः, श्री पं० दुर्गादत्तशास्त्रिणः आयुर्वेदाचार्याः, श्री पं० सत्यनारायणकविरत्न-महोदयाः, साहित्याचार्य-श्रीगौरीनाथपाठकाः, हिन्दीभूषण-श्रीशिवपूजनसहायमहोदया अन्ये च शतशश्छात्रा आसन् ।

श्रीमता रामसिंहासनशर्म्मणा कृते मङ्गलाचरणे, संस्कृत-छात्र-सङ्घस्य प्रधानमन्त्रिणः सुप्रभातसम्पादकाः श्रीकेदारनाथशर्म्माणो वर्तमान-संस्कृतसमाजस्य शिक्षापद्धतेश्च सुविशदं विवेचनं कुर्वन्तो विद्यालयस्योद्देश्यान् पाठ्यविषयाँश्च सुगम्भीरं सुविशदञ्च व्याख्यापयन् । ततश्च विज्ञानाचार्याः श्रीरामदास गौड़ एम० ए० महोदया विद्यालयस्यावश्यकतां प्रदर्शयन्तो गणितविज्ञानाध्ययनप्रबन्धमप्यावश्यकं प्रदर्शितवन्तः ।

ततश्च सभापतिमहोदया विद्यालयस्योद्घाटनं प्रशंसन्तो शुभाशीर्वादपुरस्सरं विद्यालयोद्घाटनमकुर्वन् । ततश्च प्रधानमन्त्रिणा विद्यालयाय स्वकीयस्थानं वितरद्भ्यः श्रीमता पं० गौरीनाथपाठकमहोदयेभ्यः, सभापतिमहोदयेभ्यः उपस्थितेभ्यश्च विशिष्टमहानुभावेभ्यः सहर्षं धन्यवादाः प्रदत्ताः । सभाविसर्जनञ्चाभूत् ।

विद्यालयस्य विशिष्टं विवरणमग्रिमाङ्के प्रकाशितं स्यात् ।

संस्कृतच्छात्रसंघकार्यालयः, शारदाभवनम्, काशी । | श्रीहरिचरण शर्म्मा, सहायक मन्त्री ।

( विज्ञापनम् ) ।

## मातृशोकः ।

वेदनागाङ्कभू ( १९८४ ) वर्षे
शुक्रमासे सिते दले ।
तिथौ दशम्यां पुण्यायां
मृता माता स्ववेश्मनि ॥

मदीययाम्बया सत्या कृतो धर्म्मो मुहुर्मुहुः ।
सती नाम्नीति विख्याता माता स्वर्गं गताधुना ॥
किं करोमि क्व गच्छामि को मे शान्तिं प्रदास्यति ।
मातृशोके निमग्नोऽस्मि राम नाम स्मराम्यहम् ॥

हे राम, हे राघव, रामचन्द्र,
सीतापते, लक्ष्मण-ज्येष्ठभ्रातः ।
दीनेश, विश्वेश, नृपेश, रक्ष,
शोकातुरं दीनमिमं वराकम् ॥

श्री पण्डित अमलानन्दशर्म्मात्मज—
ज्योतिर्वित् हरिकृष्ण शर्म्मा
द्राविडीयः
विरौ देवल, ( बदरिकाश्रम ) ।

शुभसन्देशः ! अपूर्वोऽवसरः !! अद्भुतं वस्तु

# काशी-संस्कृत-ग्रन्थमाला ।

विदितमेव सर्वेषां संस्कृतज्ञानां यत्साम्प्रतं संस्कृत-पुस्तकानां सम्पादन-प्रकाशन-मुद्रणादिकार्यं प्रायः संस्कृतानभिज्ञानां मूर्खाणां व्यापारिणां हस्ते विद्यन्ते, येन पुस्तकानां दुर्दशा भवति । ते च व्यापारिणो यतस्ततो टीकादिकं कारयित्वा छात्राणां लुण्ठनायैव सततं प्रयतन्ते । एतदर्थमत्र काशीस्थ विदुषां नवीना ग्रन्थमाला संस्थापिता विद्यते । अत्र प्रथम-मध्यम-शास्त्र्याचार्यादिपरीक्षाणां सर्वे ग्रन्थाः, टीकादिभिः समलङ्कृताः परिष्कृताः शुद्धाः प्रकाशिता भविष्यति । प्रत्येकस्य ग्रन्थस्य सम्पादनं तत्तद्विषयस्य प्रधानाः पण्डित-प्रकाण्डाः करिष्यन्ति । सर्वैरपि संस्कृत विद्वद्भिश्छात्रैश्चास्या एव ग्रन्थमालायाः प्रकाशितानि पुस्तकानि ग्रहीतव्यानि । मूल्यं सुलभं स्यात् । पत्रमेकं प्रेषयित्वाऽस्या मालाया ग्राहकत्वं स्वीकर्तव्यम् ।

अस्याः ग्रन्थमालायाः प्रथमं रत्नम्—

## तर्क सङ्ग्रहः ।

अभिनव-परीक्षोपयोगिटीकासमेतः ।

*टीकाकारः—श्रीकेदारनाथ शर्म्मा, सारस्वतः ।*

मासेनैकेन मुद्रितः स्यादयं ग्रन्थः । मूल्य-सूचना पुनः ।

## महाकवि बाणभट्टः ।

*लेखकः—सुप्रभात-सम्पादकः श्रीकेदारनाथ शर्म्मा*

हिन्दीभाषायामयमपूर्वो निबन्धः । अत्र बाणभट्टस्य जीवनविषये महत्वपूर्णा, मननीया च गवेषणा वरीवर्ति । छात्राणां कृते नितरामुपकारकोऽयं निबन्ध-बन्धः । मूल्यम् =) मार्गव्ययः -)

## राष्ट्रभाषाभूषणम् ।

ले०—श्रीगोपाल शास्त्री, दर्शनकेशरी, साहित्याचार्य

एतत् पुस्तकं हिन्दीभाषायां विद्यते । संस्कृतज्ञानां हिन्दीज्ञाने नितरामुपकारजनकम् । सर्वैरपि संस्कृतज्ञैरेतद् व्याकरणम् पठनीयम् । एतेन हिन्दीभाषायां निबन्धलेखन-अनुवादादिज्ञाने महत्साहाय्यं स्यात् । मूल्यम् आणकचतुष्टम् । मार्गव्ययः—

सर्वेषां प्राप्तिस्थानम्—

व्यवस्थापकः—काशी-संस्कृत-ग्रन्थमाला, C/o. सुप्रभातम्, काशी ।

Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

सौर मार्गशीर्षः, [ धनमासः ] १९८४

[ अष्टमी संख्या

# सुप्रभातम् ।

## संस्कृत-साहित्य-समाजस्य मासिकं मुखपत्रम् ।

जाड्यं निर्द्दलयत्, भ्रमं कवलयत्, मोन्मूलयन्मूर्खताम्,
चित्तं निर्मलयत्, रुचिं प्रबलयत्, धीरोगमुत्सादयत् ।
निःशेषञ्च रजस्तमः प्रशमयत्, सत्वं समुत्साहयत्,
काश्यां सिद्धरसायनं विजयते श्रीसुप्रभातं सदा ॥

त्रिताप-पूर्णा विगता त्रियामा,
तिरोदधे पापचयोऽन्धकारः ।
सुखैकहेतुः समुदेति सूर्य्यः
समागते सम्प्रति सुप्रभाते ॥

—श्रीकिशोरीलाल गोस्वामी ( काशी )
( हिन्दी-साहित्य-सम्राट् )

सम्पादकः—
श्रीकेदारनाथशर्म्मा, सारस्वतः

...मूल्यम् ३)
...भ्यः १॥)

माननीयेभ्यः १२)
वैदेशिकेभ्यः ६)

व्यवस्थापकः—
श्रीगिरीशशर्म्मा, शुक्लः, न्यायाचार्यः

...प्तिस्थानम्—

सुप्रभातकार्यालयः, काशी ।

# लेख-सूची



# सुप्रभातम् ।

विविध-विषय-विभूषितम्, अद्वितीयम्, संस्कृत-मासिक-पत्रम् ।

र्थ-वर्षं | वाराणसी, सौर मार्गशीर्षः, (धनमासः), १९८४ वैक्रमाब्दाः | अष्टमी संख्या

## विज्ञप्तिसारः ।

महाकवि श्रीगुमानीपन्त-विरचितः

सम्पादकः-श्रीतारादत्त पन्तः, साहित्याचार्यः ।

र्ममवगच्छतो हितमपि प्रवृत्तिर्न मे,
र्ममपि चाहितं नहि निवृत्तिरस्वैरिणः ।
नमिह हृद्गतान्यभवतोऽपरं भाति मे
कुहकवाञ्छया कपट-नर्तकी चेष्टते ॥ १ ॥

गकरणाद्धते भवति संक्षयः कर्मणा-
श्रुतय ऊचिरे न वितथं तदुद्घोषितम् ।
दुरितापहस्त्वमपि सत्यमित्यद्भुतम्
न्ति हि महाशयाः परदुरापगूढाशयाः ॥ १२ ॥

अमुं भव-सवासनं वितत-कर्मणामाशयम्
विधास्यति न भस्मसात्त्वदनुवृत्तिरेकैव किम् ।
नमद्विषयमस्तु तच्छ्रुतिवचस्त्वदादेशतो
निदेशमवमन्यते क इव नाम ते जीयताम् ॥ १३ ॥

तवोज्ज्वलितवैभवां भुवनधाममूर्तिं विशत्
वपुः शुचि न केवलं परमयोगसिद्धात्मनाम् ।
गुहाद्यधमजन्मनामपि जगाम तद्रूपतां
मिलत्सपदि गङ्गया सकलमेव गाङ्गं जलम् ॥ १५ ॥

अनागसमपास्यतः कपिपतेर्मुदे वालिनम्
व्यलोकि भवतो मया परमभक्तवश्यात्मता ।
इह ध्रुवमनौचितीं त्वयि वदन्ति दुर्बुद्धयः
करः खलु निवार्यते प्रहरतो न वक्तुर्मुखम् ॥ १५ ॥

जगत्त्रयविभावनः श्रुतनिजप्रभावो भवान्
अनाकलयतो जनान कृतधियोऽप्यनुध्यायतः ।
समं समनुकम्पते स्वहृदि निर्विशेषं दधत्
पुरेऽपि विपिनेऽपि वा भवति तुल्यवर्षी घनः ॥ १६ ॥

इमं जितभवश्रमं त्रिभुवनैकनाकद्रुमम्
त्वदङ्घ्रिमनुकम्पिता अपि न संश्रयन्ते खलाः ।
अतः सततवेदनं भवममुत्र विन्दन्ति ते
तरोरनुपसर्पणात्कथमपैति चण्डातपः ॥ १७ ॥
अहो भगवता त्वया निजभुजिष्यकोटिष्वहम्
विभाव्य इति दीनधीर्व्यवसितोऽपि वक्तुं त्रपे ।
क नूनमिह मादृशोऽधिकृतिमीदृशोमाप्नुया-
न्नशुल्वमुदधेः स्फुरन्मणिगणेषु रत्नायते ॥ १८ ॥
धियं प्रणयशालिनीं प्रणयता किमाकस्मिकीं
जगेऽयमनतोऽपि सन्ननु गृहीत एव त्वया ॥
रिरंसति यतस्त्वयि प्रहितवृत्तिमन्मानसं
निगूढमपि कारणं सदनुमीयते कार्य्यतः ॥ १९ ॥
इदं हि महदद्भुतं त्वयि कृपाकरेऽपि स्थिते
दुनोति विषवन्मनो विषयभोगचिन्ताभरः ॥
न किन्तु तदसम्भवादिति वचोऽपि सङ्गच्छते
क चण्डकिरणो रविः क च मृदुस्तुषारोच्चयः ॥ २० ॥

( क्रमशः )

—:※:—

## श्रीविश्वेश्वर-वन्दनम् ।

श्रीविश्वनाथ ! भवदीय-पदारविन्दे
येषां रतिर्न समुदेति मुदेऽातकाम्या ।
तेषामहो तनुभृतां दुरितान्वितानां
का दुर्गति र्भवति सत्यमहं न जाने ॥ १ ॥
त्वामेव देव मुनयोऽनुनयोपपन्नाः
सन्नारदप्रभृतयो भृतयोग-योगाः ।
रागादिरोग-रहिता महिता महान्तः
स्वान्तस्थितं समभजन्त मुदाऽयजन्त ॥ २ ॥
स त्वं शिवोऽप्यशिवभावमभिप्रयातः
सर्वेश्वरोऽपि भगवन्भूतभिक्षुभूयः ।
दोषाकरेण सहितोऽपि न दोषयुक्तो
नीलोऽपि लोहित इति प्रविलक्षणोऽसि ॥ ३ ॥
गामुच्चशृङ्गमचलं च समाश्रितस्त्वं
गङ्गां सुधाकर-कलाश्चवलादुदञ्चन् ।
शल्योज्झिताननु शरांश्च सुरांश्च बिभ्र-
द्विज्यं पिनाकमपि नाकमहो पिपर्षि ॥ ४ ॥
भास्वद्भोग-भुजङ्ग भूषणविभा-सम्भार-सम्भ
भ्राम्यद्भानुभूतप्रभूतभसित-प्रोद्भासित-श्रीभ
भङ्गोद्यद्भवभीत भक्त-भयभिद्भूरिप्रभावप्रभुवम्
भालभ्राजि-भराज-भासुरमहं वन्दे भवन्तं विभ

—श्रीदेवीप्रसाद शुक्लः, कवि
( महामहोपाध्यायः )

———

## 'पुराणतत्त्वम्'
( समीक्षा )

ले०—श्रीमान् श्रद्धेय-पं० चण्डीप्रसाद
प्रधानाध्यापकः, गोयनका-महाविद्यालयस्य



सुप्रभाते संस्कृते काशिके
पत्रेऽत्रभवतां रामावत
णामेको लेखः 'पुराणतत्त्व'
लोकोपकारिबुद्ध्या प्र
यदि अस्य लेखस्
एयं पुराणतत्वन्न भवेत्; किन्तु प्राचीनधर्म

ीव्यदार्शनिकविज्ञानम् वा अधुनातनधर्म्मविज्ञानं वेत्, तदा कथमपि सुलेखिन्यास्समुद्गारोयमिति येत हृदयम् ।

"यदा समस्ते जगति वा, महापरिमाणे आकाशे ा, पुरुषं शुक्तौ रजतवज्जना अध्यस्यन्ति, तदा ईश्वर ति पूजयन्ति कथयन्ति च" "ज्ञाने (क्षणिकवि-ाने) इन्द्रियाध्यक्षं शिवं विष्णुमेकरूपमनेकरूप-ाऽध्यस्यन्ति" इत्यादिशर्म्मीयलेखांशस्यायमेवा-ो यद्, मूढा मनुष्यास्सृष्ट्यारम्भकाले, आकाशे ने वा ईश्वरं जीवम्वाऽऽरोपयन् । किन्तु विद्वद्वृ-ा एव नरोवर्त्तते जीवो वा देहादिसंघात् पृथङ् स्तीति ।

अधुना भवन्तो विचारयन्तु, यद्, इदमाक्रमणं नातनधर्म्मस्य ईसाई-महम्मदादिधर्म्मस्य सर्वस्यो-रि, अथवा केवल पुराणस्योपरीति; ततः शीर्षएय-य युक्तता, अस्य लेखस्योपकारिता च स्फुटीभवि-ति। इतिहासदर्शनेनानुमीयते, यद्, ईश्वरोस्तीति ! रीरात्पृथक् स्थिरो जीवो वर्त्तते इति विदुषां धार-ऽनादिरिति । पश्चात् चार्वाक-बौद्धादिभिर्धा-काक्रमणे धर्म्माचार्य्यैरेतानि तत्त्वानि युक्त्या ापितानि । अस्मिन्नेवावसरे कुसुमाञ्जलिबौद्ध-क्कारादयो ग्रन्थाः प्रणायिषतेति ।

अत्रभवतो रामावतारशर्म्मणो दृष्ट्या जगति आकाशे वा ईश्वरः, तथा क्षणिकविज्ञाने नित्यो जी-व शुक्तौ रजतवदध्यस्तो वस्तुभूतं जगत् आकाश-वेत्युक्तिः स्वभावोक्तिः । तथा "आत्मा वा इदमग्र ासीत्" इत्यौपनिषदुक्तौ रूपकरूपा । तथा समस्यास्यैवरूपकस्य पुराणेषु सृष्टिस्थितिसंहार-पातिशयोक्तिः कृतेति ।

"इदानीमज्ञानां हस्ते पातेन पुराणस्य महती दुर्दशेति शर्म्मीयलेखेनेदं ज्ञायते, यत्, पुराणप्रणेतारो मुनयस्ताः स्वाभावोक्तीरज्ञासिषुः । या सुलेखक-मनोमोदकभूतासु अतिशयोक्तीरकार्षुः । याम् अधु-नातनाः पण्डिता अजानन्तः पुराणानि गर्हितानि कुर्वन्ति । अतएव शर्म्मा-महोदयो व्यासंदेवं भगवा-निति कथयति ।

अत्रायं प्रश्नस्स्वभावादुदेति, यत् मुनयः स्वभा-वोक्तीरतिशयोक्तितमसा केन प्रयोजनेनच्छादयामा-सुः । किं सत्यतिरोधानकरणे पुण्यम्भवति, अथवा स्वभवोक्तिर्भयावहाऽथाऽतिशयोक्तिः सुखावहा । परन्तु सत्ये कुतो भयम्, असत्ये कुतः सुखम् । अयि शर्म्ममहोदय ! यथा भवान् अधुनातनान् पण्डितान् अज्ञानिनो ब्रवीति, तथैव व्यासदेवमप्यज्ञानिनं ब्रवीतु, तेषां सत्यस्यासत्येनाच्छादने वा कारणं ब्रवीतु ।

भवादृशां पण्डितप्रकाण्डानां मुखादीदृशी नि-र्मूलादुरुक्तिर्न शोभते ।

नृसिंहोपाख्यानं केवलं भागवत एव न वर्त्तते, किन्तु विष्णुपुराणादिषु प्रायः सर्वत्रैव वर्त्तते । तद् अतिशयोक्तिरत्र किं प्रमाणम् ? स्तम्भम्विदार्य्य नृ-सिंहाकार-दिव्यशक्तिप्रादुर्भावासम्भव एव प्रमाण मिति चेत्तर्हीदं विचारयतु भवान्, यत, यदि बीजात् वृक्षः, स्त्रीगर्भस्थितरजोवीर्य्यात जीवशरीरन्नभ-वेदधुना, तदा पूर्वमेवमासीदितिवादिनोऽपि परिहा-समवश्यं कुर्य्यात भवान् । एवं धूमयान-धूमपोत तड़ित्संवादादिविषयेऽपि । अमोघशक्तिरीश्वरो जगन्निर्माति चेत्तर्हि तस्य जगत्पालनया पूर्वरूपेण

प्रादुर्भावः कथङ्कारमसम्भवभूमिर्भवेत् । भागवते पुरञ्जनोपाख्यानं रूपकरूपं वर्णितम्, परन्तु अग्रिमाध्याय एव तस्य मूलमपि स्पष्टीकृतम्, यदि हि नृसिंहोपाख्यानं रूपकम्भवेत्तदाग्रिमाध्यायेऽवश्यमेवस्पष्टीकुर्य्यात् ।

अधुनेदं ब्रवीतु भवान, यद्, नृसिंहोपाख्यानरूपाया अतिशयोक्तेर्मूलं का रूपकोक्तिः, या भवद्दृष्ट्या वेदोक्तिः । यत्प्रमाणाल्लोको नृसिंहोपाख्यानमतिशयोक्तिं भवद्दृष्ट्यात्वप्रमाणं मन्येत । यद्धि अस्या मूलं भवान ब्रवीति, तद् न वेदे क्वचिदप्युक्तम्, भवद्बुद्धिकल्पितं तु मूलं मन्तुं कथं कोऽपि समर्थः स्यात् ।

अधुना तु भवता नृसिंहोपाख्यान-मूलतयोक्तस्वभावोक्तिर्विचार्य्यते भवद्दृष्ट्या विषयी धनी लोक एक हिरण्यकशिपुः आनन्द एव, तस्य प्रियः पुत्रः उपदंश-प्रमेहादिरेव नृसिंहस्स आनन्दरिरत्तया धनिविषयिणं हिरण्यकशिपुं मारयतीति । न चेयं कल्पना विचारपद्धतिमवतरति ।

'यदा तमेवाकाशं स्त्रियं मन्यते लोकस्तदा चन्द्रसूर्य्य-कुण्डलां कालीं कल्पयतीति; लिखित्वाऽग्र वर्षाकालिकनीलमेघाछन्ननभस्थलीं कालीं कथयतीति लिखित्वा राज्यशक्तिरेव भगवती दुर्गेति त्रिचतरासु पङ्क्तिषु परस्परविरुद्धोक्तिः कथन्नाश्चर्य्यसमुद्रे निपातयेत्पुरुषम् । इयमपि कल्पना कथन्न मृषेति ।

भगवती दुर्गा न राज्यशक्तिरपितु प्रजोत्पीड़िनीं पापमयीं राज्यशक्तिं नाशयितुमवतीर्णा भगवच्छक्तिरेव । महिषो हि पुराकालिकः पापीयान् राजा-प्रजोत्पीडकः । इत्येव देवी भागवतादि पुराणतत्त्वम् ।

विन्ध्याचलस्य पशुकीटसरीसृपा एव महि... दयः । आर्य्यजाति शक्तिरेव दुर्गा । दुर्गा स... कल्पितोपन्यास इत्याद्यनर्गलप्रलापो वि... शोभाप्रदः ।

"अथाधरारणिं निदधाति, उर्व्वश्यसीत्य... रण्याज्यविलापिनीमुपस्पृशत्यायुरसीति ... ति दधाति पुरूरवा असीति" "उर्वशी अप्सरा... रवाः पति" रित्यादिशतपथ वचनात् । तथ... क्ते उर्वशीपदनिर्वचनकाले तस्यादर्शनान् "... वरुणयोरेतश्च स्कन्दे " त्यादिवचनाच्च ... नामाप्सराः पुरुरवा राजा तस्याः पतिरितिप्र... तथा " इन्द्र आगच्छ हरिव आगच्छ मेधा... षवृषणश्वमेने गौरावरक्तन्दिन् अहल्यायै... इत्यादि शतपथादहल्यामुनिपत्नीति प्र... उषा काल एव उर्वशी अहल्या च । सूर्य्य एव... इन्द्रश्चेति निर्मूलैवोक्तिः । मध्यस्थानीय... कथङ्कारमुत्तमस्थानीयस्सूर्य्यस्स्यादित्यपि ... णीयम् ।

अचिन्त्यैश्वर्य्यं परमेश्वरं यो न स्वीकरोति... बुद्धौ " क्षुवतश्चमनोरिक्ष्वाकुरिति "कथमव... ते यदि क्षुवत इत्यादि वाक्यमुपहसेयुः... चित्रम् । इदन्तु चित्रं यत्, शर्म्मामहोदयः, पुरा... मतिशयोक्तिं जानन्नप्युपहसति, न च तन्... स्वभावोक्तिमुन्नीयप्रशंसतीति । स्वाभिमतपु... कर्तुःपाण्डित्यम् विस्मृतवान् इति च मह...

ये हि सृष्टिं परमेश्वरनिर्मितां मन्यन्ते, तै... श्यमेवादो मानसीसृष्टिरभूत्, पश्चाच्छनैर्यो... न्नेतिमन्तव्यम्, नैवं सति उक्तवचनं बुद्धौ... नावरोहति ।

स्थालीपुलाकन्यायेनास्य लेखस्य समीक्षा कृता यदि शर्म्मा महोदयोऽन्यो वावसरं दद्यात्तदा महतीमपि समीक्षां कुर्य्यामिति ।

## सम्पलब्धाः कोषग्रन्थाः ।

विदितमेव स्यात् संस्कृतविदुषाम्, यत् १५ वर्षेभ्यः विद्याः श्रीरामावतारशर्म्ममहोदयाः, नवीन संस्कृतकोषनिर्माणे बद्धपरिकराः सन्ति । स च कोषः साम्प्रतं विनिर्मित प्राय एव तेषां सङ्ग्रहे त्रिशतकोषाणां नामानि सन्ति । तेषु च साम्प्रतं यावत् समुपलब्धानां मुद्रितप्रायाणां कोषाणां नामानि प्रकाश्यन्ते । यदि तत्र विषये केषाञ्चन विदुषामधिकं ज्ञानं स्यात्, जिज्ञासितव्यं वा भवेत्ते सुप्रभात-कार्यालयतो विज्ञापयितुं ज्ञातुं च शक्नुवन्ति ।

सम्पादकः,

| | | |
|---|---|---|
| १. | अनेकार्थध्वनिमञ्जरी | गदसिंहकृता |
| २. | अभिधानचिन्तामणिः | हेमचन्द्र कृता |
| ३. | अभिधान चिन्तामणिः | शिलोञ्छ कृता |
| ४. | अभिधान रत्नमाला | हलायुधकृता |
| ५. | अमर-कोषः | |
| ६. | आख्यातचन्द्रिका | भट्टमल्लरचिता |
| ७. | एकाक्षरकोषः | |
| ८. | कल्पद्रुकोषः ( केशवः ) | केशव-प्रणीतः |
| ९. | कविकल्पद्रुमः | वोपदेव-रचितः |
| १०. | कविरहस्यम् | हलायुधप्रणीतम् |
| ११. | तन्त्राभिधानम् | |
| १२. | त्रिकाण्डशेषः | पुरुषोत्तमदेवस्य |
| १३. | दशललकारिका | |
| १४. | देशीयनाममाला | हेमचन्द्रप्रणीता |
| १५. | द्विरूपकोषः | |
| १६. | धनञ्जयनाममाला | |
| १७. | धन्वन्तरिनिघण्टु | |
| १८. | धातुपाठः | |
| १९. | नक्षत्रकोषः | |
| २०. | नानार्थार्णवसङ्क्षेपः | |
| २१. | पर्यायमुक्तावलिः | |
| २२. | पर्यायरत्नमाला | माधवकर-कृता |
| २३. | पैयालच्छीनाममाला | धनपालः |
| २४. | मङ्खकोषः | |
| २५. | मदनपालनिघण्टु | |
| २६. | मेदिनी कोषः | |
| २७. | मातृका कोषः | |
| २८. | राजनिघण्टु | |
| २९. | राजवल्लभ निघण्टु | |
| ३०. | राशीकोषः | |
| ३१. | लिङ्गानुशासनम् | |
| ३२. | विश्वप्रकाशः | |
| ३३. | वैजयन्ती | |
| ३४. | विश्वलोचनकोषः | |
| ३५. | वैदिककोषः | |
| ३६. | शाश्वतकोषः | |
| ३७. | शारदीनाममाला | |
| ३८. | श्रीशब्दरत्नमाला | |
| ३९. | साङ्ख्यकोषः | |
| ४०. | हारावलिः | पुरुषोत्तमकृता |
| ४१. | हैमानेकार्थसङ्ग्रहः | हेमचन्द्रप्रणीतः |
| ४२. | हैमनिघण्टुशेषः | |
| ४३. | निघण्टु | |



# रघुवंशमहाकाव्यम् ।

## चोरपक्षीया टीका ।

स्वर्गीय-महाकवि-श्रीदुःखभञ्जन-कवीन्द्रकृता ।

स्थितः स्थितामुच्चलितः प्रयातां
निषेदुषीमासनवन्धधीरः ॥
जलाभिलाषी जलमाददानां
छायेऽवतां भूपतिरन्वगच्छत् ॥ ६ ॥

अनु यथातथा स चौरः तां अगच्छत, कीदृशः जलाभिलाषी,अतएव स्थितः, अतएवस्थितामुत्‌विद्यमानहर्षाभावः, अतएव चलितः चलीकृतः, पिपासयेति यावत् । अतएव इमासनबन्धधीरः, एः कामस्य मां लक्ष्मीं अस्यतिकर्तरिल्युः, तादृशश्चासौ बन्धश्च तस्य तत्र वा धियं राति ईरयति वा तादृशः अतएव भूपतिः भवत्पतिः,भवतीतिशत्रर्थेक्किप्, क्वसति, प्रयातां प्रगच्छतां आददानां परेषां भोजनहराणां स्वकीयानां भोजनप्रदानां जलमवतां वारिरक्षतां छाये छायावाटुल्ये, अथ प्रतिविम्बे, अथ साहाय्ये निषेदुषि स्थितवति सति,प्रतिविम्बे च साहाय्ये छायंछायाकदम्बके इति कोषः ॥ ६ ॥

संन्यस्तचिह्नामपि राजलक्ष्मीं
तेजोविशेषानुमितां दधानः ।
आसीदनाविष्कृत-दानराजि-
रन्तर्मदावस्थ इव द्विपेन्द्रः ॥ ७ ॥

स चौरः अनाविष्कृत-दानराजिः आसी... नानां खण्डनानां राजिः परम्परा आविष्कृ... तथा विधो न भवति तादृशः, अथ आविष्कृ... तादृक्, अनराजिः अमनुष्य संग्रामः तादृक्... अथ अनराजस्य अपत्यं आनराजिः अनावि... श्चाऽसावानराजिश्च सः, अथ आनं अननं... दृश आजिः अनाविष्कृतं गुप्तं यति तादृक्... जिर्यस्य स, कीदृशः अपिराजलक्ष्मीं... अपिराति इति अपिरम् अल्लोपे पिरं न पिरं... वा, आजं अजमांसं अजसमूहो वा यस्यां ता... विभ्रत्, कीदृशीं, संन्यस्तचिह्नां त्यक्तचौ... तथा तेजसः अविशेषेण साधारण्येन अनुमि... इव; द्विपेन्द्र इव, कीदृशः द्विपेन्द्रः, अन्तर्मदा... मदं आप्नोति क्विप् मदाप् सा चासौ अव... स्था च अन्तः मदावस्था यस्य सः, द्वे मूत्रजं... द्विपः, छागप्रभृतिः, तेषामिन्द्र इतिवा ॥ ७ ॥

लताप्रतानोद्ग्रथितैः सकेशै
रधिज्यधन्वा विचचार दावम् ।
रक्षापदेशान्मुनिहोमधेनो
र्वन्यान्विनेष्यन्निव दुष्टसत्त्वान् ॥

स दावं विचचार कीदृशः, लताप्रताने... केशैः उपलक्षितः, तथा अधिज्यधन्वा... मुनिहोमधेनोः रक्षापदेशात् रक्षापदेशं अचि... किं कुर्वन् इव, वन्यान् दुष्टसत्वान् विना... आत्मनः ई कामं इच्छन् इव, अथ दुष्टसत्वा... ष्यन्, अथ वन्यान् वन्यां वन संहतौ, आसे... अनिति क्विप् , तादृशः, अथ वन्यैः जन्तुभिः... फलादिभिः, अनिति तादृशो वा ॥ ८ ॥

विसृष्टपार्श्वानुचरस्य तस्य
पार्श्वद्रुमाः पाशभृता समस्य ॥
उदीरयामासुरिवोन्मदाना
मालोकशब्दं वयसां विरावैः ॥ ६ ॥

उन्मदाः उन्मत्ताः, वयसां विरावैः, पक्षिणां कलैः, सह तस्य चौरस्य नामालोकशब्दं नाम-वनायां दर्शनशब्दं उदीरयामासुरिव । कीदृशाः दाः, पार्श्वद्रुमाः पार्श्वद्रून् भान्ति, आतोनुपसर्गे तथाविधाः, कीदृशस्य चौरस्य, विसृष्टपार्श्वानु-स्य पार्श्वयोः अनु यथातथा चरन्ति, तादृशास्ते सृष्टाः येन तस्य, तथा पाशभृतासमस्य श्वपचेन-स्य, अथ पाशेनभृतः पुष्टः, अतएव असमः मः तस्य ॥ ६ ॥



## परमेश्वरस्तवः ।

लेखकः—महामहोपाध्यायः गणपतिशास्त्री वेदान्तकेसरी ।



( १ )

भूतादिनाथ ! परिणूतावतीव
तव भीतानि यस्य निगम
यातानि चापि गिरिजातापते !
सपदि यातानि खेदमतुलं ।
एतादृशन्नवितुमाताम्रपादयुग !
का तावदस्य मम गीः !
पोतायितस्य तव पूता भवे
दिति शिवैतावदेव हृदयम् ॥

( २ )

श्रीकार्मुक-द्रुहिण-पाकाहित-
प्रभृतिनाकालयौघविनत !
स्तोकायितप्रभवराका-निशा—
दयित-भा कान्त दिव्यवदन !
कोकारिभूष शुभपाकावनम्रतर
लोकार्तिकारि भवभी-
शोकातुर स्वहृद्रुमाकान्त मां
कलय शोकात् बहिर्नटपते ! ॥

( ३ )

यत्तावकं गिरिश ! चित्ताम्बुजे
विमलवृत्ताश्रयो विरचयन्,
वित्ताधिपो जगति मत्तान् गजा-
नपि च सत्तां पराञ्च लभते ।
मत्ताभ, देव, हर, मत्तात !
देववर ! धत्तां पदाब्ज युगले
नृत्ताधिनाथ ! तव तत्तादृशे
झटिति कृत्ता शुभव्यति करे ॥

( ४ )

नालीक-तुल्य-पद-धूली-लवं
यमधि मौलीश संकलयितुम्
नालीकजादिसुरपाली सदा
विनति-केलीं नितान्तमयते ।
स्वालीकजाग्निकण-केली-प्रदग्ध-
शठ नालीकरोप ! भगवन् !
काली-सनाथ ! विधुहेलीक्षणैष
मम चूलीं कदा नु पविता ? ॥



# सामुद्रिक-विज्ञानम् ।

श्रीकालिकाप्रसाद शर्म्मा, काशीराज-ज्योतिषी



रम-पित्रा परमेश्वरेण संसारं विरच्याखिल प्राणिनां हितार्थमावश्यकीया समग्रा सामग्री तच्छरीरेष्वेव विनिर्मिता । यथा पञ्च-ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च यैर्लौकिकं पारलौकिकं च कार्य्यं सम्यक् संसाध्यत इति ।

भगवता येषां नख-शिरा-रोम-रेखाणां लघुदीर्घता, उन्नतावनताऽवयवानाम् ,रक्तपीतवर्णाद्यनेकरूपविविधाकृतिः शरीराणाम् , इति यन्निर्माणं कृतम् तत् सर्वं विज्ञानपरिपूर्णमित्येतत्प्रत्येक विषयपर्यालोचनया भगवतोऽनिर्वचनोयाद्भुतशक्तेर्दृश्यं दृष्टिगोचरं भवति ।

अवयवानां निम्नोन्नतत्वादिना मानव-जीवन-चरित्राणां तत्सुखदुःखादीनाञ्च यथा ज्ञानं भवति, शास्त्रोक्तं तत्प्रकारं प्रदर्शयामि । यथा—

"पञ्चदीर्घं चतुर्ह्रस्वं पञ्चसूक्ष्मषडुन्नतम् ।
सप्त रक्तं त्रिगम्भीरं त्रिविस्तीर्णं प्रशस्यते ॥

पञ्चदीर्घंयथा—हनु-लोचन-बाहु-नासिका-स्तनयोरत्र सुदीर्घं पंचकम् । इतिदीर्घमितं तु पञ्चकं न भवत्येव नृणामभूभृताम् ।

चतुर्ह्रस्वं—ह्रस्वानि चत्वार्यथलिङ्गपृष्ठे ग्रीवा च जंघे च हितप्रदानि ।

पञ्चसूक्ष्मम्—सूक्ष्मानि पञ्च दशनाङ्गुलिपर्वकेशाः, साकं त्वचाकररुहैश्च न दुखितानाम् ।

षडुन्नतं—वक्षोऽथ कुक्षिद्वयनासिकास्यकृकाटिका चेति षडुन्नतानि ।

सप्तरक्तं—नेत्रान्त-पाद-करताल्वधरोष्ठ-जिह्वा-रक्ता-न खाश्च खलु सर्वसुखप्रदानि ।

त्रिगम्भीरं—नाभि स्वरं सत्वमिति प्रशस्यं गा[…] त्त्रितयं नराणाम् ।

त्रिविस्तीर्णम्—उरो ललाटो वदनं नराणां [...] मेतत्त्रितयं प्रशस्तम् ।

प्रशस्तान्येतानि शुभफलप्रदानीत्येतद्विप[…] शुभफलावबोधकानीति ।

यदि कतिपयान्यङ्गानि शुभलक्षणैः शेषा[…] लक्षणैर्युक्तानि स्युस्तर्हि मनुजजीवनस्य शु[…] फलान्येवं ज्ञातव्यानि ।

प्रथमत आयुष्यनिर्णयन्तत्पूर्णपरिज्ञानं च[…] वर्षाणि निश्चेतव्यानि ( एतन्निर्णय-प्र[…] मदीयाभिनवविरचिते सचित्र-सामुद्रिक-र[…] ग्रन्थे सुस्पष्टं वर्तते ) तानि वर्षाण्यधोङ्कित [...] गेषु विभाजितव्यानि । यथा—

"पादे सगुल्फौ प्रथमं प्रदिष्टौ
जङ्घे द्वितीयं च सजानुचक्रं ।
मेढ्रोरुमुष्कं च ततस्तृतीयं-
नाभिः कटिश्चेति चतुर्थमाहुः"

उदरं कथयन्ति पञ्चमं हृदयं षष्ठमथस्तनान्वि[…] अथ सप्तमं सजत्रुणी कथयन्त्यष्टममोष्ठकन्धो[…] नवमं नयने च सभ्रुवौ स ललाटं दशमं शिरस्[…] अशुभेष्वशुभं दशाफलं चरणादेषु शुभेषु शोभ[…]

सजत्रुणीति--अंसकक्षयोः सन्धिसहितं[…] सप्तममित्यर्थः । शेषं सुस्पष्टमेवेति चरणादार[…] पर्यन्तेषु दश भागेषु विभज्य, परस्मिन्भागे [...] शुभाशुभानि लक्षणानि दृष्टानि स्युस्तस्मिन्व[…] तदङ्गस्य शुभाशुभं फलं ज्ञातव्यम् ।

यान्यङ्गान्युक्तशुभाशुभफलेष्वत्रानुक्तानि ते[…] मप्युक्तग्रन्थेन कर्तव्यमित्यादि केवला[…] निम्नोन्नतत्वेन वर्णेन च शुभाशुभविचारोभव[…]

एभिरेवाङ्गैर्जन्ममासपक्षतिथ्यादीनामपि [...] भवतीति यथावकाशं पाठकमहोदयानां सेवा[…] शिरा-रोम-रेखादीनामपि दिग्दर्शनं भविष्यती[…]



# पण्डितेभ्यो निवेदनम् ।

अयि ! संस्कृत-साहित्य-समाज सदस्याः ! तथा काशी-
...डत-सभा-नायकाः ! एवं काशी विद्वत्परिषत्प्रवर्तकास्तथा-
काशीस्थाः, बहिस्थाश्च विद्वांसः !

...ान्ध्राः । भागवतेऽस्मा ...स्मिन्विषये एवं श्रूयते, यत्—

"किरात-हूणान्ध्र-पुलिन्द-पुक्कसाः,
आभीर-कङ्का यवनाः खसादयः ।
येऽन्ये च पापा यदुपाश्रयाश्रया—
च्छुद्ध्यन्ति तस्मै प्रभविष्णवे नमः ॥"

...च,—

"ते वै विदन्त्यतितरन्ति च देवमायाम्
स्त्रीशूद्रहूणशबरा अपि पाप-जीवाः ।
यद्यद्भुत-क्रम-परायण-शील-शिक्षा-
स्तिर्यग्जना अपि किमु श्रुतधारणा ये ॥"

इत्यादिवचनैः, आन्ध्र-हूणादयः पापयोनय इति कथि-
...। यदि एवं आन्ध्रादयः पापाः, तेषां शुद्धिः कथम-
...। अस्माकं तु हिन्दूनां श्रुतिस्मृतिपुराणानि प्रमाणम् ।
कुत्रचिदपि अनेन अवश्यमेव भवितव्यम्, यद् पापा अपि
...यनन्तरं हिन्दवो भवितुमर्हन्ति इति । श्रूयते खलु
...य ब्राह्मणे—

"तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः
...शदेव ज्यायांसो मधुच्छन्दसः पञ्चाशत् कनी-
यांसस्तद्ये ज्यायांसो न ते कुशलं मेनिरेताननु-
व्याजहारान् तान्वः प्रजा भक्षीष्टेति त एतेऽन्ध्राः
पुण्ड्राः शबराः पुलिन्दा भूतिवा इत्युदन्त्या बहवो
भवन्ति वैश्वामित्रां दस्यूनां भूयिष्ठाः"
(सप्तपञ्चमिका, अध्याय ३, खण्ड ६, मंत्र १०)

एवं विश्वामित्रस्य एकशत-संख्याकाः पुत्रा आसन् । तेष्वेकशतपुत्रेषु मध्ये ये मधुच्छन्दसादयो ज्येष्ठाः, विश्वामित्रेण कृतं शुनःशेफस्य पुत्रस्वीकरणं समीचीनमिति न स्वीचक्रुः, ते विश्वामित्रेण, "हे ज्येष्ठ पुत्राः, यूयं अस्मन्मतं नाङ्गीकृतवन्तः इति युष्माकं प्रजाः,चाण्डालादि-नीचजाति विशेषत्वं प्राप्नुयुः" इति शप्ताः, एवं ते मधुच्छन्दसादयो ऽभिशप्ताः सन्तः, आन्ध्र पुण्ड्र-शबर-पुलिन्द-भूतिवेत्यादिनीचजातिविशेषाः सञ्जाताः । श्रीमत्सायणाचार्य-विरचित-भाष्ये एतदपि उक्तं यत्ते अनेक विधा विश्वामित्र संततिजाः दस्यूनां मध्ये अधिका बभूवुः इति ।

अधुना तु दक्षिणापथे आंध्र द्रविडादिषु वर्णाश्रम विभागो विद्यते । तेऽपि हिन्दव इति सर्वैरपि अङ्गीकृतम् । कथं तर्हि तेषां शुद्धिः समजनि । यदि केनचिदपि प्रकारेण तेषां शुद्धिर्निर्वर्तिता, कः पुनः स प्रकारः, येन ते पापयोनय आंध्र-द्रविड-हूणादयः शुद्धा हिन्दवः संवृत्ताः । तद्विधानं श्रुतिचोदितम्, स्मृतिसमर्थितं च किम् ? यदि श्रुति स्मृत्यनुकूलैव तेषां शुद्धिरभूत्, तदा इदानीमपि ये विधर्माण स्तेषां शुद्धिः केन कारणेन पापमिति ब्रुवन्ति विद्वांसः ।

सर्वं प्रथमम् मनुष्योत्पत्तिर्भरतखंडे हि अभूत् । तदा सर्वं जगत् ब्राह्ममेव प्रादुर्भूतं । तदनन्तरमपि ये ये पापयोनयः, ते आर्येभ्य एव प्रवृत्ताः । मनुनाप्युक्तं,

"शनकैस्तु क्रिया लोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च । ४३-१० अ.
पैण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः ।
पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः ।
मुख बाहूरुपाज्जानां या लोके जातयो बहिः ।
म्लेच्छवाचश्चार्यवाचः सर्वे ते दस्यवः स्मृताः ॥
४५ श्लो १० अ. मनुः

अपरं च

"वैदेहिकादान्ध्रमेदौ बहिर्ग्राम प्रतिश्रयौ" ३६-१०अ.
इति च ।

यदि एतत्सत्यमेव तर्हि संसारेऽस्मिन् अधुना ये ये जात्युपजाति-भेदाः, यावन्तो अनार्यधर्मास्सन्ति, ते सर्वे ब्राह्मणाऽदर्शनादेव आर्येभ्यो हि संभूताः । अद्य ये अनार्यास्तेऽप्येकदा सनातनधर्मानुसारेण आर्या एव आसन् । तर्हि तेषां शुद्धिरधुना आंध्र-द्रविडशकादिशुद्धिरीत्या किमिति न भवितु मर्हति ।

अयि पण्डितप्रवराः ! ममेयं शंका समुत्पन्ना । एवं शिष्यमनुग्रहबुद्ध्या यूयं विशंकं कुरुध्वमिति प्रार्थयमानः ।

—वेंकटेश्वरः ।

काशीविद्यापीठच्छात्रः ।

## सारस्वतम्-(शारदालहरी) ।

कल्याणं त्वत्पराणां किमपि, गणपतिर्मङ्गलानां विधाता,
दूरे दैन्यानि, लक्ष्मीः कनक कमलिनीवल्लभा सन्निधत्ते ।
तस्मादभ्यर्थनेयं भगवति भवती सावधाना मयि स्या-
न्नो किञ्चित्काङ्क्षणीयं स्फुटतर कवितालोचनं मोचनं नः॥
उद्भूतं भूतलेऽस्मिन् प्रथमरममरद्मास्तु, दिक्षु प्रकीर्णं
शाखाभिः,सिद्धिभाजां कुसुमितमसकृत्सर्वथासाधुवादैः
पान्थैरास्वादयद्भिः फलित मथ घनच्छायया सेव्यमानं
सानन्दं ते दयातः कमपि किल यशःपादपं कल्पयन्ति॥
भूयांसः सन्ति देवा विहित परिकराःकाङ्क्षणीय प्रदानेऽ-
साम्नस्यादमीषां मयि जननि परं त्वन्मयी भावना मे
सेवाभिः सावधाने प्रभवति, सहसाऽऽकूतविज्ञानपूर्व-
गैर्णैः संपादनीयं स्वयमनुचरणं पादपङ्केरुहस्य ॥
विद्वांसः संश्रयन्तां सुररिपुगृहिणीपादपाथोजरेणून् —
सेवन्तां शैलकन्यामपि च कतिपये नस्तु मातस्त्वमेव ।
कल्यं कल्याणभाजां प्रकृतिपरिचयैर्लोचनैर्मे
ज्ञानाम्भोधे रियत्तानियमननिपुणा शारदाऽऽ
आनासाग्रं निमग्नो व्यसनजलनिधावस्मि, मा
सानन्दं चक्रपाणे श्चरणकमलयोस्त्वं च, नो मे
वीणायां कुञ्चितभ्रूः,सदसि दिविषदां चेद्भि
जङ्घाला ते जनेऽस्मिञ्जननि जयकरी जायता
श्रीकाशीनाथ शर्मा

## लावण्यमयी ।

( आख्यायिका )

[ ले०–हिन्दीसाहित्य सम्राट् श्रीकिशोरीलाल गो

### एकादशः परिच्छेदः ।

*सुन्दरी-संलापः ।*

एकान्त-सुन्दर-विधान-जडः क वेधाः
सर्वाङ्गकान्तिरुचिरं क च रूपमस्याः ?
मन्ये, महेश्वरभयान्मकरध्वजेन,
प्राणार्थिना युवतिरूपमिदं गृहीतम् ॥



प्रातरेव कृत-नित्यक्रियः कुमारः लावण्यमयीमन्वेष्टुं तस्याः ... प्रविष्टः । तस्मिन् मन्दिरे ना... मयी, किन्तु, तस्याः सहचरी ... तत्र गृह-साहित्य-संस्कारे सं... तामेकाकिनीमवलोक्य, सहासमुवाच सुधाक... क्वास्ते साम्प्रतं ते कनिष्ठा' ।

सुधाकरमवलोक्य, स्वगात्रवस्त्राणि यथास्थानं संस्थाप्य, नम्रमुखी भूत्वा च समन्दस्मितमुवाच सा रजनी—...ो ! नास्त्यत्र सा मे मान्या प्रियसखी लावण्यमयी । ...सने तिष्ठतु भवान्, अहमधुनैव तामत्रैवानेष्यामि ।"

सुधाकरः—ननु सुन्दरि ! स्वक्रीतदासं त्वमिदानीं ...' रिति वदसि । विगतरात्रौ यं त्वं 'क्रीतदास' इत्यवादीः, ...व प्रातः प्रभुरिति वदसि । इत्यवसरे कान्तर्हिता सा ते ...भाविकी मुखरता ?

रजनी—(लज्जां विधाय) प्रभो ! क्षन्तव्यो मेऽपराधः, ...तु ते क्रीता किङ्करीव कर्मकरी संवृत्ता । ( इत्युक्त्वा ...न्तुमुद्यता )

सुधाकरः—( प्रतिवार्य ) तिष्ठ क्षणम् । शृणु सुन्दरि, ...वार्त्ताः । रात्रौ स्वसखी-सम्मुखं त्वया यद् यद् प्रोक्तम्; ...र्वमेव मया स्वकर्णाभ्यां श्रुतम्, इदानीं त्वमेव वद ! ते ...या मुखरतायाः कीदृशो दण्डो विधेयः ?

रजनी—स त्वधुना दण्डयितुरिच्छाधीन एव वर्तते । ...ो येन भवतो मनस्तुष्टिर्भवेत् स एव दण्डः सहर्षं प्रदेयः । ...लकया मया स एव सबहुमानं ग्रहीष्यते ।

सुधाकरः—सत्यमुक्तम् । अतः शृणु । पूर्वं तु त्वामहं ...पाशाभ्यां बध्नामि । ततः परं सुविचार्य, अपराधानु-...दण्डं दास्यामि ।

रजनी—ननु देव ! सावधानतया तिष्ठतु भवान् । अत्र-...मस्ति ।

सुधाकरः—किं रूपमत्र कारणम् ?

रजनी—नन्वहं कुमारी, अतः पर-पुरुष-स्पर्श-पराङ्-...ी ।

सुधाकरः—अतो वद, कौमारे गते किं त्वं मदिच्छित-...ग्रहणे समर्था भविष्यसि ?

इति श्रुत्वा सा रजनी यावदेव तस्मात् स्थानात् ...यितुमुद्यता, तावदेव स्मेरानना लावण्यमयी तत्रैवागत्य, ...वाच, अहो ! अत्र एकान्ते प्रकोष्ठे युवयोरेकत्रावस्थिति-...ा न ज्ञाता, ज्ञाते सति अत्रागमने विरक्ता भूत्वाऽन्यस्मिन्नेव ...ने गत्वा स्वपिमि ।

सुधाकरः—ननु प्रिये ! दिवाऽपि स्वापो विधेयः ?

लावण्यमयी—किं करोमि ? रात्रिजागरणवशादिदानीं नावस्थातुं शक्नोमि । ( रजनीमवलोक्य ) त्वमत्र स्थिता एकान्ते मत्प्रियपतिमादाय, किङ्करोषि, ज्येष्ठे !

रजनी—विश्रम्भालापं करोमि । शृणु सखि । तवाऽयं प्रियः प्राणनाथो मां स्वभुजाभ्यां सुदृढं बद्ध्वा, किमप्यनिर्वचनीयं दण्डं दातुमुद्युक्तः । (इत्युक्त्वा, सुधाकर-कथितामखिलां वार्तां पुनरुवाच) इदानीं प्रियसखि, देह्यनुज्ञाम्, नाहमत्रावस्थातुं शक्नोमि ।

लावण्यमयी—ननु मा भैषीः । मत्सम्मुखे किमपि भयं न कार्यं त्वया । (सुधाकरं प्रति) ननु लम्पट ! मत्प्रियसखीं कामयसे ?

सुधाकरः—अत्र कोऽपराधो मम ?

लावण्यमयी—इति कथम् ?

सुधाकरः—इयम् रजनी, अहन्तु सुधाकरः । तस्मादावयो र्विद्यते स्वाभाविकः सम्बन्धः ।

लावण्यमयी—आदर्शे तावत् स्वमुखं पश्य ।

सुधाकरः—कस्मै प्रयोजनाय ?

लावण्यमयी—रजनी-समागमाय !

सुधाकरः—दृष्टं तावत् स्वमुखम्, अधुना वद, कीदृङ् मम मुखम् ? प्रिये !

रजनी—इदानीं सुधाकरो दिवसधूसरः सम्वृत्तः ।

सुधाकरः—ननु मुखरे ! साम्प्रतं दिवसभिया रजन्यपि कोणकुहरे लुक्कायिता । तामुद्धर्तुंकाम एव सुधाकरोऽत्र समायातः ।

रजनी—त्वन्तु, 'प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः' एव । ( इत्युक्त्वा सा तस्मात् स्थानात् पलायिता ) ।

ततो लावण्यमयी तं दान्तासने निवेश्य, स्वयमपि तस्य वामपार्श्वे स्थित्वा, गृहीत्वा च तस्य दक्षिणं करम् स्वकरेण, समन्दस्मितमुवाच-जीवितेश ! इदानीं नाहं विस्मर्त्तव्या ।

**सुधाकरः**—(तस्याश्चिबुकं विधृत्य सहासम्) इति किं वदसि प्राणेश्वरि !

**लावण्यमयी**— नन्विदानीं रजन्यामासक्तः ।

**सुधाकरः**—तस्यास्तु सुधाकरेण नित्यसम्बन्धः ।

**लावण्यमयी**—तर्हि मे का दशा भविष्यति ?

**सुधाकरः**—लावण्यमयीं विना क्व सुधाकरस्य सुधा-सम्पत्तिः ? क्व च रजन्या रमणीयता-सम्भारः ।

**लावण्यमयी**—ननु रे धृष्ट ! नाऽहं सपत्नीज्वालां सोढुं समर्था ।

**सुधाकरः**——मानिनि, मानं मा कुरु । त्वां विहाय सुधाकरः कस्या अपि क्रीतदासो न भविष्यति ।

**लावण्यमयी**— ( स-हर्षम् ) त्वन्तु मम प्राणेश्वरः, प्रियात् प्रियतमः, जीवननाथः, जीवितेशश्च ।

**सुधाकरः**—इदानीं क्व मे माता ?

**लावण्यमयी**—सा देवी, श्रीहरिमन्दिरे स्व-स्वामिना सार्कं श्रीमद्भगवदर्चनं करोति ।

**सुधाकरः**—अधुना ते धात्र्याः कीदृशी अवस्था ? ।

**लावण्यमयी**—सा तु हतचेतना एवाऽस्ति । अधुनैव वैद्यराजेनागत्य, यथायोग्यं दृष्टम्, उक्तञ्च 'दोषदुष्टोज्वरः सञ्जातः, तेन प्राणहानिरपि भविष्यति आरोग्यलाभोऽपि च । सिद्धान्ततया रोगस्तु कष्टसाध्यः संवृत्तः । यदि कतिपयै-रहोभिरसाध्यो भवेत्तर्हि मृत्युञ्जय एव प्रमाणम् ।' इत्युक्त्वा राजतीं मुद्रां च गृहीत्वा वैद्यराजः प्रयातः । ततः औषधिव्य-वस्थां विधायाहमत्र समायातः ।

**सुधाकरः**—ननु प्रिये ! अपराह्ने पूर्ववदेव उद्याने त्वया गन्तव्यम् । तत्र लतामन्दिरे स्थित्वाऽहं तवागमन-चिन्तां करिष्यामि ।

**लावण्यमयी**—शृणु प्रियतम ! इदानीं माता तवात्रैव-समागता । एतावता अधुना उद्यान-विहारः कथं कर्तव्यः ।

**सुधाकरः**—स्वातन्त्र्येणैव कर्तव्यः । मन्मातुरियमेवाऽज्ञा । सा तु त्वामेव एवमेव वदिष्यति, पुष्पोद्याने प्रेषयिष्यति च ।

इत्यवसर एव किमपि भोज्यं पानीयञ्च आ[illegible] तत्रैव समागता । ततस्ते त्रय एव मिलित्वा [illegible] व्यापारं ससंलापं चक्रुः । तदनन्तरं सुधाकरः समीपं जगाम । लावण्यमयी शयनीयञ्चाभजत् ।

## इत्येकादशः परिच्छेदः ।

---

## सुप्रभातोत्सवः ।

( ले०—चक्रधरशर्मा शास्त्री, बहुगुणः

उदयति महिमानं, मानसे मुद्विलासम्,
दिशति तिमिरनाशं, ज्ञानभानोः प्रका[illegible]
सकल-नव-कलाभिः सर्वतन्त्रस्वतन्त्रम्
जयति किमपि भव्यं, भारते 'सुप्रभा[illegible]

नान्द्यन्ते—

**सूत्रधारः**—अहह ! चिराय सफलितं जन्म, आ[illegible] पूरितमिवान्तःकरणम्, सुधासार-[illegible] मिव शरीरम्, यदद्य यवन-दुर्नी[illegible] सकल-विज्ञान-विनाश-विचेतन [illegible] भारते वर्षे, पूर्ववत्सुरभारत्या विला[illegible] मिव विविधभाव-भासुरं 'सुप्रभातं' [illegible]

यस्मिन्नेकतः कविकादम्बानां काकली, अपरतो मधुकराणां गुञ्जितम्, अन्यतश्च छात्रचटकानां इतश्च कर्मकाण्ड-पण्डित-प्रकाण्डानां शास्त्रवाद-[illegible] सर्वतश्च "जय जय, जीव जीवे" ति जनताया[illegible] गीतम् ( कर्णंदत्वा ) आर्ये । किमेषः श्रूयते शब्दः । यः—

कम्पयति भूधरान्, धरणिमण्डलम् दिग्गजम्,
भीषयति मानसम्, बधिरयत्यसौ मे श्रुतिम् ।
दृष्टघर्घरध्वनिगभीर-चण्डः क्वचित्,
डमड्डमरुडिण्डिम प्रतिरवानुकारी रवः ॥ २ ॥

( इति भयं नाटयति )

—आर्यपुत्र ! न भेतव्यम्, न भेतव्यम् । 'सुरभारती' भारत—भाग्येन सह स्वर्गाद्भिमाववततारे' ति यः स्वप्नो भवता गतरजन्यां दृष्ट आसीत्स सफलीभूत 'इवानुमीयते यतः किमप्येकं देवयानमित एवायाति, तत्पश्य इति—दर्शयति ।

धारः—सत्यमभिहितं भवत्या । तथापि—

थल-पत्र-पद्धतिभवैरुत्पाटयन् वारिदान्,
कारै रतिखेचरान् विधुरयन्वाचालयन् दिङ्मुखान्
चङ्क्रमणैः, समेति नभसः पातप्रपातैः क्वचित्,
वात इव प्रकम्प-बहुलो मूर्तो विमानः क्षणात् ॥३॥

नटी—आर्य । 'तत्सत्यमिति' ज्ञातमस्तु ।

धारः—हन्त ! ज्ञातम् । 'प्राभातिकःस्वप्नः सत्यो भवतीति' सम्पन्नम् । आर्ये ! तदत्रावस्थानमसाम्प्रतं साम्प्रतम् । एहि । अतोन्यत्र गच्छावः ( इति क्रान्तौ )

॥ इति प्रस्तावना ॥

( ततोऽवतरतः सुरभारती भारतभाग्यञ्च )

त-भाग्यम्—अम्ब ! सुरभारति ! सत्यमद्य मे पुनर्जन्म । धन्यासि भवती । धन्यस्ते महिमा । धन्यो विधिः । यज्जीवन-संज्ञा-शून्य-प्रायेऽत्रार्यावर्ते पुनरपि विविध-विद्या-वाटिकासु दृश्यते विचित्रभावाङ्कुराणामुद्भेदकरं ' सुप्रभातम् ' । तथाहि—

"नभसि जयति जातं 'सुप्रभातं' चिरेण, *
यदनु झटिति यातं तेन 'सूर्योदयेण' ॥
तदुपरि विषमाभिः प्रोच्छलद्दीप्तिभाभि-
'र्दशशतकर' भाभी राजते तद्विचित्रम् ॥ ४ ॥

सुरभारती—पुत्रका ! भारत भागधेय ! सुचिरेणाद्य भगवता वेदपुरुषेणानुगृहीतास्मि । मया तु दुर्यवनराज्यसमयादेव स्वावमाने दृष्ट्वा, निजभाग्यस्यावसानञ्चाकलय्य, इतोगत्वा सुरलोक एव सशोकमुषितं, परित्यक्तञ्च भारतीयानाँ प्रेम । परमिदानीं भारतवालानां "अम्ब ! आयाहि-आयाहि, पाहि-पाहि, पायय-पायय चास्मानमृतसोदर्यं स्तन्यम्" इत्यार्तनादं श्रुत्वा, पुत्रवात्सल्येन भृशद्रवित मानसाऽत्र समागतास्मि ॥

भारतभाग्यम्—आम् धन्यं भवत्या वात्सल्यम् ।

सुरभारती—( सहर्षम् ) हन्त भोः । दृश्यते किमपि विलक्षणं परिवर्तनं भारते । अपि च—

"उत्साहः सर्वकार्येष्वहमहमिकया-
देशसेवानुरागः
शास्त्राणां स्वात्मवादो ह्यभिरुचिरुचिर-
श्चानुरम्भः कलानाम् ।
श्रद्धामावाभिबुद्धो नियतिनयविदा-
मादरः पूर्वजानाम्,
दीने सद्भ्रातृभावो निवलसमुदये
वीरदीक्षा—प्रचारः ॥ ५ ॥

अहो प्रीतास्मि संवृत्ता । प्रफुल्लितं मेऽन्तःकरणम् । ( शयानं भारतं प्रति ) वत्स !

टिप्पणी—*वाराणस्यां प्रथमं 'सुप्रभातं' ततः 'सूर्योदयः', तत्रश्च सहस्रांशुरिति विचित्रमेव पत्राणां नामकरणमुदयश्च । एतदपि चोक्तश्लोके दर्शितम् । —लेखकः

भारत ! उत्तिष्ठ, उत्तिष्ठ ! विषादं मागाः । त्वामधुनैव भारतीयाः स्वपुरुषकारेणावश्य-मुद्धरिष्यन्ति । एषाऽऽयातीव ते सम्पत् । भविता च ते समुन्नतिः । ( श्रुत्वा ) किं किं, कस्यचिदार्तनादः श्रूयते ( भारत भाग्यं प्रति ) वत्स ! शृणोसि ?

भारत भाग्यम्—अम्ब ! न जाने कस्यायं रोदन-शब्दः । परं यस्य कस्यापि भवतु, गच्छामि गवेषणार्थं पृच्छामि च तत्कारणम् ।

( इति गन्तुं व्यवस्यति )

—— :*: ——




( ले०—अध्यापकः—श्रीबालमुकुन्द शर्म्मा, सारस्वतः )




तुर्थवर्षस्य प्रथमाङ्के विरामचिह्नानामावश्यकता, नामानि च प्रकाशितान्यासन् । साम्प्रतं तेषां कुत्र, कथञ्चोपयोगः कर्तव्य इति निर्दिश्यते ।

अत्र प्रथममयं प्रश्नः समुपतिष्ठते, यत्, कस्य कस्य विरामचिह्नस्य प्रयोगो लाभजनकः, कस्य कस्य च निरर्थक इति, द्वितीयोऽयं प्रश्नो यत्, कस्य कस्य विरामचिह्नस्य प्रयोगो भविष्यत्काले समुचित —इति, तृतीयश्चाप्ययं प्रश्नो यद्विरामचिह्नानां प्रयोग-नियम आँग्लभाषा ( English ) नियमानुसारं कर्तव्यः, स्वयं वा नियमानां स विधेयमिति ।

प्रथमद्वितीययोः प्रश्नयोरुत्तरदानात् तृतीयप्रश्नस्योत्तरे केवलमिदमेव वक्तव्यं य आँग्लभाषायाः संस्कृतभाषायाश्च रचना महदन्तरं विद्यते । अत आँग्लभाषानियमा शो न संस्कृतभाषायामुपयुक्ता भविष्यन्ति । स्माभिः स्वयमेव नियमानां सङ्ग्रन्थनं वि अवशिष्टयोः प्रश्नयोरुत्तरं प्रत्येकचिह्नस्य स्पष्टी भविष्यति ।

(१) अल्प विरामः (Comma) (,)—यामेतस्य चिह्नस्यप्रयोगो नितरामावश्यकः, युक्तश्च । आँग्लभाषायामल्पविरामयोजनाया सर्वतः कठिना वर्तन्ते तथा तस्या भाषाया समुन्नतिः सञ्जाता, यत्, अल्पविरामस्य स्था करणेऽर्थेऽपि वैशिष्ट्यमुत्पद्यते । अस्य चिह्नस्य प्रधानतस्त्रीणि कारणानि सन्ति । (१) अभि तशब्दानां योजनाय, (२) भेदान्वितशब्दा करणाय, ( ३ ) शीघ्रतया पठने यस्य वाक्यांशस्य वा अर्थः, भावः, शक्तिर्वा न्यूना वा भवेत्, तेषां स्पष्टीकरणाय । एतदतिरि

( क ) यस्मिन् स्थाने एकस्योच्चार यावत् विरामस्यावश्यकता स्यात्, चिह्नस्य योजना कर्तव्या । यथा–गङ्गा, यमु सिन्धु रिति भारतस्य महानद्यः सन्ति ।

( ख ) यदा साधारणवाक्ये, संक्षिप्तवा गच्छेत्, येन साधारणवाक्यस्यार्थः स्पष्ट तदा तस्य सङ्क्षिप्तवाक्यस्य पूर्वं पश्चाद्वा,

योजना कर्तव्या । यथा-वार्तालापसमये सर्व-
येयम्, यत् कोऽयम्, केनसह, कुत्र, कदा,
मर्थम्, कथञ्च वार्ता करोमीति ।

(ग) यदा कस्मिन्नपि वाक्ये एकस्यैव वाक्यस्य
हवः शब्दाः स्युः, येषां मध्ये उभयान्वयिनोऽव्यया
समागताः स्युः, तदा प्रत्येकस्य शब्दस्य पश्चात्
ल्पविरामयोजना विधेया । यथा-देवदत्तः,
विष्णुदत्तः, यज्ञदत्तस्तथा वासुदेवः ।

(घ) यदा वाक्ये द्वौ शब्दौ, अथवा वाक्य
योजकैरव्ययैस्तौ युक्तौ भवेताम्, तदा तत्र नास्त्य-
विरामस्यावश्यकता ; किन्तु यदि ते वाक्यांशाः
र्घाः स्युस्तदाऽल्पविरामयोजना कर्तव्या । यथा-
माभिर्यदि संस्कृत भाषा शिक्षणीया चेत् प्रथमं
स्यभाषा शिक्षणीया ? ऋग्वेदस्य बुद्धस्य वा,
मङ्गले वाणभट्टस्य वा, वाचस्पतिमिश्रस्य गदा-
स्य वा पञ्चतन्त्रस्य पण्डिताभिमानिनां वा ।

(ङ) प्रधानवाक्याद्गौणवाक्यस्य पृथक्करणेऽस्य
हस्यावश्यकता वर्तते । यथा-यदि किञ्चित्
ते चेत्, स, अक्षराणामभावः, वर्णविन्यासव्यति
स्तथा उच्चारणस्य विश्रृङ्खलता ।

(च) यदा कस्मिन्नपि सामान्यविषये
शेषतो ध्यानमाकर्षणीयञ्चेत्, तदा तस्य वाक्या-
थक्करणाय, अल्पविरामस्य योजना विधेया । यथा
स्य, सावधानो भव,

(छ) येषामव्ययानां पश्चादपूर्णा क्रिया भवति,
षामन्तेऽस्य चिह्नस्य योजना भवति । एतेष्वव्ययेषु
प्राय इमे भवन्ति । परन्तु, अवश्यम्, तदा, तर्हि,
परम्, अस्तु, अन्यथा, यत्, न्यूनतः, यतः, इत्यादि ।

## छात्रनियमाः ।

( ले०—वी० जोशी, चूरू )

भो प्रियच्छात्राः, सम्प्रति भवल्लाभायाहं छात्रनियमान्-
लिखामि, आशास्यते, यदेभिर्युष्माकम्महांल्लाभो भविष्यति ।

(१) सर्वदा सत्यं वक्तव्यम् । सत्यं वीरस्य लक्षणम्—
अनृतञ्च नपुंसकस्य । न काचिदपि वार्तेदृशी वक्तव्या, यया
लोके सन्देहो भवेत । मिथ्याभाषिणो नरस्य, लोकः कदापि नो
विश्वासं विदधति, यदा च स सत्यमपि सम्भाषते ।
सत्याश्रयो मानवं विजयिनं विदधाति ।

(२) मा शपथं कदापि ब्रूयुः। एतादृशैर्मनुष्यैः सह कदापि-
न वक्तव्यम्, ये परुषवादिनो दुष्टाश्च सन्ति । विद्यालये वा
पाठा लयान्निवर्तनसमेय वर्त्मनि कदापि न योद्धव्यम् ।

(३) कदाचिदपि असभ्या वार्ता, क्रिया च न विधेया
शिष्टाचारो गृहे पाठालये तथा अन्यत्रान्यत्रापि सदा सर्वैः सह
सर्वथा कुर्युर्भवन्तः । अतिशीघ्रचलनम्, कपाटत्रोटनम्, निर्ल-
ज-गानम्, बहुसम्भाषणम् मूर्खतालक्षणानि सन्ति ।

(४) मातृ-स्वसृ-पितृ-भ्रातृ-गुरु-सहपाठिभिस्तथाऽपरि-
चितैः साकं विनम्रतया सरलतया च भाषणं कर्तव्यम् । निजशि-
क्षकेषु तथा महत्सु पूज्येषु च प्रणामा विधेयाः । यदा भवन्तः
कस्मिंश्चित् कार्ये सहायतेच्छुकाः स्युस्तदा सविनयेन कथनीयं
यत्—"कृपयेदं कार्यं मम श्रीमन्तो विधास्यन्ति तर्हि महानतुग्र-
हीतो भविष्यामि भवताम् ।" कार्यसिद्धौ च तस्मै धन्यवादा
दातव्याः । एवं विधानेन भवद्वाण्यां अति मधुरता सरलता
च समागमिष्यति ।

(५) कस्यचिदपि-आज्ञानोल्लङ्घनीया । कदापि द्विधा
कथनस्यावसरो न विधेयः । दीन वृद्धेभ्यो मार्गनिर्देशोऽपि कर्त-
व्यः, सत्वरं चलित्वा तेषु च दया विधेया, यूयं सम्प्रति बाल-
का एव, अतः कांश्चिन्महतीं सहायतां नो कर्तुं शक्नुथ । परन्तु

युष्मासु प्रत्येकञ्छात्रो दयाकार्यं कर्तुं शक्नोति । इदमेव च कृपाकार्य्यं युष्मज्जीवनस्योन्नतिरेखा भविष्यति ।

६) अपरैः सार्द्धं तादृगेव व्यवहारो विधातव्यो यथा यूयमिच्छथ, यल्लोका युष्माभिः सह कुर्युः ।

(७) अन्येषां हृदयानि मा सीदत । सत्पुरुषः स एवास्ति योऽपरेषामानन्दे स्वयमेव हर्षवान् भवति, तथा, दयालु स्वार्थहीनश्चास्ति ।

(८) यदि यूयमिच्छथ यल्लोको युष्माभिः साकं सत्यव्यवहारं समाचरेत्तर्हि भवन्तोऽपि सत्यवक्तारो भवन्तु । अनेन सह च सत्यव्यवहारं विदधतु ।

(९) सर्वदा सर्वथा च साधारणं भोक्तव्यम् । सर्वमादक द्रव्येभ्यो दूरे स्थातव्यम् । न कदापि सेवितव्यं मादक-द्रव्यम् ।

(१०) यदि कोऽपि युष्मभ्यं कथयेत, यत् "ममेदं कार्यं कुर्वन्तु भवन्त" स्तदा च नावकाशो लभ्यते भवद्भिस्तु सरलतया सम्यक्-अवबोधनीयः स जनः । संसारेऽतिकठोरमपि मनुष्यं मधुरशब्दाः प्रेम्णि द्रावयन्ति । विनम्रउत्तरः क्रोधं दूरीकरोति ।

(११) यदा द्वौ मानवौ परस्परं वार्तालापं कुरुतस्तदा युष्माभिस्तन्मध्ये कदापि नो गन्तव्यम् । यत एष एको महान् दोषोऽस्ति ।

## पाटलिपुत्रमण्डले संस्कृत कालेजोद्घाटनम्

प्रागयं महाविद्यालयश्चिरकालात् पाटलिपुत्रमण्डलान्तर्गते धानामठे श्रीकृष्णानन्द-संस्कृत-विद्यालयेति नाम्ना प्रख्यात आसीत् । अत्रस्थेभ्यश्छात्रेभ्यो वृत्तिप्रदानं श्रीगोस्वामि माधवानन्द-महोदयः करोतिस्म । अत्र प्रधानाध्यापकस्थानं, १९११ वर्षे जनवरीमासस्य प्रथमदिने, लब्ध-व्याकरण-साहित्याचार्य्य-पदवीकेन श्री परमेश्वरशर्मत्रिपाठिना समलङ्कृतमभूत् । तदारभ्य समुन्नतिमेवायं विद्यालयोऽहरहो विदधातिस्म । अद्य ६।११।२७ दिने श्रीमन्तो मण्डलेश्वराः- ( कलक्टर ), विहारोत्कल-संस्कृत-समिति-प्रधान-कार्य-सम्पादकाः ( सुपरिन्टेन्ट ), श्रीमन्तोमान्यवराः सुरेन्द्रनाथ मजुमदार शास्त्रिणः, तत्सहायकाः (असिस्टेन्ट सु[illegible] श्रीमन्तो हरिशङ्करशर्मपाण्डेयाः, तथा श्रद्धेय-श्रीपं[illegible] शर्माणः, श्री पं० धर्मराज ओझाः, आयुर्वे[illegible] भिषगाचार्य्याः, श्रीब्रजविहारी चतुर्वेदाः, श्री पं० [illegible] पाठिनः, श्रीपं० रङ्गनाथशर्म-पाठकाः, इत्येतत्प्रभृतयो[illegible] ऽन्ये च विपश्चित्प्रवराः श्रीगोस्वामिनः समुत्साहेन[illegible] विद्यालय-विषये श्रीगोस्वामिन उदारतामध्या[illegible] शैलीम्, छात्राध्ययनक्रमञ्चावलोक्य महाविद्याल[illegible] नाम चास्य महाविद्यालयस्य "श्रीकृष्णाना[illegible] संस्कृतमहाविद्यालयः" इति स्थापितवन्तः । [illegible]स्य तदेवास्ते । साम्प्रतमत्र चत्वारोऽध्यापका[illegible] नियुक्ताः वर्तन्ते । ज्यौतिषदर्शनाध्यापकावपि[illegible] नियुक्तौ भविष्येतः । प्रधानाध्यापकास्त एव स[illegible] वृन्दशिरोमौलीभूताः श्री पं० परमेश्वरशर्म त्रिपाठि[illegible] इदानीं प्रायः शतसंख्यकेभ्यो विद्यार्थिभ्यो भोज[illegible] प्रतिवर्षं परीक्षोत्तीर्णेभ्यश्छात्रेभ्योऽग्रिमपाठ्यपुस्त[illegible] प्रयच्छता श्रीमता मठाधीशेन राजकीय-नियमा( [illegible] नुसारतो निजवित्तेभ्यः प्रतिवर्षं षट्सहस्र ( ६० [illegible] णि रौप्यकाणि प्रदाय चाचलास्थितिरस्य महा[illegible] विहिता । येन भाविनोपि गोस्वामिनो नास्य स्थि[illegible] यितुं शक्नुयुः । किं वहुना, प्रतिवर्षं पाटलिपुत्र[illegible] दातुं समागतेभ्योऽखिलेभ्यो विद्यार्थिभ्यो जल[illegible] निमित्तो व्ययश्चानेनैव गोस्वामिना क्रियते । अतो[illegible] सभ्यैः, कुलपतीत्युपाधिना भूषितोऽयमभूत् । [illegible] गोस्वामिनो माधवानन्द-महोदयस्य शरत्कालीन[illegible] मरीचिरिव जगतिप्रसृतं शुभ्रं यशो न वयं वर्णितुं [illegible] अशासे, यदेनं दानदत्तमनस्कं श्रीमन्तं मठा[illegible] गोस्वामिनोऽनुकुर्युस्तदात्वरितमेव भूयोऽपि [illegible] सुरभारती युवावस्थां लभेतेति समालोचयन्तु पाठ[illegible]

श्रीविद्याधर त्रिपाठी



## संस्कृत-समाचाराः ।

### गोस्वामि सम्मेलनम् ।

आश्विनमासस्य सिते सप्तम्यामष्टम्याञ्च तिथौ [ ३, ४-...७६ ] वाराणस्या नेदीयसि श्रीमार्कण्डेयस्थाने ...ामि-सम्मेलनं समभूत् । विहार-प्रदेशात् संयुक्तप्रान्ताच्च ...ं गोस्वामिप्रतिनिधयः समवेताः । विपक्षिभिः शास्त्रार्थ...रं प्रतिश्रुत्यापि पराङ्मुखतया स्वीयः पराजयः प्रक...। सम्मेलनाध्यक्षेण सर्वतन्त्रस्वतन्त्रेण श्रीयुत गोस्वामि...दर शास्त्रिणा स्वाक्षराङ्कितं मुद्रितमधोविन्यस्तं श्रीका...-धर्म्मसभायाः व्यवस्थापत्रं वितीर्णम् । गोस्वामि...भरितैर्विद्भिरुपदेशकैः परिषत्पतिमहोदयैश्च गोस्वामि...नयनसंस्कारस्य वैधता, नितान्तमावश्यकता च ...ग्घुद्घोषिता । प्रातःस्मरणीयानां श्रीयुत मदनमोहन...ीयानाम्, विद्वद्धुरीणानां श्रीयुक्त भगवानदास-श्रीम...राजाधिराज-काशी ( रामनगर ) नरेश-महानुभावानाञ्च ...स्थतायै गोस्वामिभिर्भूरिशः प्रार्थिता अपि विपक्षिविद्वांस...ं मध्यस्थतामस्वीकृत्य संकुचन्नासिका जोषमवतस्थिरे ।

### व्यवस्थापत्रम् ।

...र्मो जयति नाधर्मः सत्यं जयति नानृतम् ॥
...वदेव्यास्तपोमूर्त्तैर्मातुः पादाब्जजन्मनः
...तुः श्री१०६ विश्वनाथस्य कर्णाल्लेह्यादरान्मुहुः ॥

सम्प्रति काषायवस्त्रधारिणो गोस्वामिनः श्रीशङ्कराचार्य्य...रित-( तीर्थाश्रमवनारण्य-गिरिपर्वत-सागराः । सरस्वती ...ी च पुरी नामानि वै दश ।) इत्यादिमठाम्नाय-यतिध...सुश्चयाद्युक्ताभियुक्तवाक्यस्थगिरिपुर्य्यादिपदव्यवह्रियमा... केचन चिरादुपवीतधारिणः, केचनोपवीतधारणं श्रेयस्करं शास्त्रसम्मतञ्च मन्यमानाः कामयन्त उपवीतादिधारणं ...तेषामुपवीतधारणं धर्म्मशास्त्रसम्मतिमावहति नवेति ..., काशीस्थधर्मसभासदां विदुषामुत्तरम्—

("अत्रेयं व्यवस्था—यस्योपनेत्राद्यभावेन तत्कालाति...स्तस्य याज्ञवल्कीयव्रतान्तमन्यतमं शक्त्यपेक्षया भवति । ...पद्यतिक्रमे तु मानवं त्रैमासिकम् । तत्रैव पञ्चदशवर्षादूर्ध्वमपि कियत्कालातिक्रमे तूद्दालकव्रतं व्रात्यस्तोमो वेति । येषां तु पित्रादयोऽप्यनुपनीतास्तेषामापस्तम्बोक्तम् । यस्य पितृपितामहावनुपनीतौ स्यातां तस्य संवत्सरं त्रैविद्यकं ब्रह्मचर्य्यम् । यस्य प्रपितामहादेर्नानुस्मर्य्यते उपनयनं तस्य द्वादशवर्षाणि त्रैविद्यकं ब्रह्मचर्य्यमिति )-इत्यादि मिताक्षरा दिव्यवस्थानुसारेण पूर्वोक्तप्रायश्चित्तं विधायोपयमादिसंस्कार-पुरस्सरमुपवीतादिधारणं धर्म्मशास्त्रादिसम्मतमेवेति ॥

| | |
|---|---|
| योगाश्रमः, रिविलगंज, सारन, ( बिहार ) | —गोस्वामी शिवदयालुगिरिः सम्मेलनकार्य-सम्पादकः |

* * * *

### सूर्यपुरे संस्कृत-व्याख्यानम् ।

अस्मिन् सूर्यपुरे ( सुरत ) अचिरात् "संस्कृत विनोद मंडल" मिति नामकं मंडलं प्रतिष्ठितमास्ते । वटोदर-पुर-( वडोदरा ) वास्तव्य-तर्क-वेदान्त-वाचस्पतिश्रीछोटु महाराजशास्त्रिषु प्रयोजनवशादिह समायातेषूक्तमंडळेन संस्कृतव्याख्यानाय प्रार्थित मासीत् । ततश्चाश्विन-कृष्ण-चतुर्थ्यां भृगौ संमीलिताभूत् सभा । तद्दिने नातिचिरात् ब्रह्मभूयं गतानां श्रीमदात्मानंद सरस्वती-स्वामिपादानां पुण्यतिथिरपि सभाया निमित्ततामधिकृतवती । सभायामनेके संस्कृतानुरागिणो नागरिकाः समुपस्थिता आसन् ।

आरम्भे ज्योतिर्विद्भिः कृष्णशङ्करशर्मभिः कृते श्री स्वामिपादानां माहात्म्यनिरूपणे, श्रीछोटु महाराजशास्त्रिभि" र्भगवद्गीतासिद्धान्तान् " अधिकृत्य संस्कृतेन रमणीयं व्याख्यानं व्यधायि । तदनु श्री निगमशङ्करशास्त्रिभिः कृते वक्तुः कृतज्ञताऽऽवेदनप्रस्तावे जाते च श्रीमनःसुखरामशास्त्रिणां विवेचने स्वामिपादानां शास्त्रिपादानां च पुष्पमाल्यसमर्पणानन्तरं समासिमगात् सभाकार्यम् ।

| | |
|---|---|
| सुरत ( गुजरात ) | रैक्वकुलोत्पन्नः श्रीगङ्गाशङ्कर शास्त्री संस्कृत-विनोद-मंडलस्य मंत्री |

* * * *

## शोक–सभा ।

पेटलाद-राजकीय-संस्कृतपाठशाला-प्रधानाध्यापक-मणिशङ्करशास्त्रिणां योजनया अस्यामेव पाठशालायां वर्तमानमार्गशीर्ष-शुक्लपूर्णिमायां बटोदर (बड़ोदा) राजपंडित वे० शा० सं० महामहोपाध्याय-तर्कवाचस्पति-बद्रीनाथशास्त्रिणामवसाननिमित्तं शोकप्रदर्शनार्थं रा०रा० जयशंकर-प्रेमानन्द-महाशयानां सभापतित्वेऽत्रत्यविद्वन्मण्डलस्याधिवेशनं जातम् । यत्र मङ्गलरामशास्त्रिणः, गिरिजाशङ्करसोमयाजिनः, भद्रशङ्कर ज्योतिषाचार्याः, जीवणरामशास्त्रिणः, गङ्गाधरशास्त्रिणः, मगनलाल शास्त्रिणो वैद्यभूषणानि, केशवलालपण्डिताः, झवेरीलाल वैद्य-चुन्नीलाल वैद्य-प्रभृतयश्चान्ये च भूयांसो विद्वांसो बद्रीनाथशास्त्रिणां गुणकथनमचीकथन् । तदनन्तरं प्रस्तुत-प्रासङ्गिकप्रस्तावा समाप्तिमयासीत्परिषदिति शम् ।

—पुरुषोत्तमशर्म्मा ।
पाठशालीयश्छात्रः ।

* * * *

## सरवार-पाठशाला-ब्रह्मचर्य्याश्रमोत्सवः ।

गोरखपुर–मण्डलान्तर्गत–सलेमपुर–समीपवर्ति "किशोरगञ्ज" नाम्नि स्थाने श्रीसरवार-संस्कृत-पाठशाला-ब्रह्मचर्य्याश्रमो द्वादशवर्षात् संस्कृत सेवां कुर्वन्नाऽऽस्ते । साम्प्रतमत्र संस्कृत-विभागः, हिन्दीविभागश्चेति, विभाग-द्वयं विद्यते । प्रथम विभागे शिक्षकद्वयम्, हिन्दीविभागे च शिक्षक पञ्चकं वर्तते । बहुभिः संस्कृतप्रेमिभिरत्र विद्यालयः, छात्रावासः, कूपः, शिवालयश्च निर्म्मिताः सन्ति । तमकुहीनरेशेन सार्धद्विसहस्रमुद्रा यज्ञशालाऽपि निर्मापिता विद्यते ।

तस्य च द्वादशतमो वार्षिकोत्सवः शुक्ल-पञ्चम्यां रवौ श्रीमतां स्वामि पूर्णानन्द यानां सभापतित्वे महता समारम्भेण आश्रमीयब्रह्मचारिभिर्विहिते मङ्गलाचरणे व्याख्यातृणां व्याख्यानानि समभूवन् । सभापतिमहोदयानां सुरसरस्वतीमुद्दिश्य, भाषणं समभूत् । ततश्च पण्डित कुञ्जविहारि कमलाकरचतुर्वेदिमहोदयैः वाकीलैः, तमकु निर्म्मितयज्ञशालाऽवशिष्टांशं पूरयितुम्प्रति

श्रीनिरीक्षणपालि मि

* *

## शोकसभा

बीकानेर-राज्यान्तर्गत-रत्नदुर्गस्थ "श्री दत्त-विद्यालय-रतनगढ (बीकानेर)—संस्कृ तत्र भवतां रुंथलोपाह्व पं० जयदेव शर्मणां शुक्ले चतुर्थ्याममरलोकावाप्तिरभूदिति शोक-संवादविषयः । पं० जयदेव शर्माणो एव देशोपकारकर्तारो जात्युपकृतिवन्तः तेषु स्वर्गतेषु स्थानीयजनतायाः "शोक समजनि । तत्र पं० कृष्णचन्द्र व्याकरण राजपण्डित–केशरीचन्द्रशास्त्रि—पं० साहित्योपाध्याय-प्रभृतिभिर्व्याख्यानदा तम् । जयदेवशर्मणां कुटुम्बैः सह प्रकटिता—

—"सूर्यः" रतनगढ़

## श्रीसनातन-धर्म-सभा, चूरू ।

चूरू-नगरस्थ-श्रीसनातनधर्म-सभायाः सप्तदश वार्षिकोत्सवो भाद्रशुक्ल १०-११-१२ तिथिषु महता समारोहेण समभूत्। प्रथमदिने विद्यावाचस्पति पं० देवीप्रसादशास्त्रिमहोदयाः, सभापतिपदमलं चक्रुः। काशीस्थ-पं० तपेश्वरीप्रसादस्य च सनातनधर्म-महत्वे ललितं भाषणमभूत्। द्वितीये दिने पूर्णानन्दाग्निहोत्रिमहोदयाः सभापति पदमलं कृतवन्तः। तथा विद्वद्वराणां देवीप्रसादशास्त्रिमहाभागानां विधवाविवाहविषये वक्तृता सुमधुराऽभूत्। तृतीये दिने काशीस्थ—पं० कुञ्जबिहारीलाल वाजपेयिमहोदयः सभापति पदं लेभे, तथा कतिपयविद्वत्सज्जनानामनेकविषयेषु ललितानि व्याख्यानानि समभूवन्।

मंत्री, सनातनधर्म-सभा, चूरू (बीकानेर) } बी० जोशी

## विहार-परीक्षाः ।

विहारोत्कल-प्रान्तीयाः सर्वाः परीक्षाः, मार्चमासस्य द्वितीय-दिवसादारब्धाः भविष्यन्ति।

मन्त्री, परीक्षासमितेः।

* * * *

## अध्यापकावश्यकता ।

मुजफ्फरपुरीय-धर्मसमाज-संस्कृत-कालेजे वेदान्ताध्यापकः समपेक्ष्यते। मासिकं प्रारम्भिकं वेतनं ४०) मुद्राः, प्रतिवर्षं वृद्धिः ४), अन्तिमं वेतनम् ११०)।

प्रार्थनापत्रम्—'प्रिन्सिपल, धर्म-समाज-संस्कृत कालेज, मुजफ्फरपुर' इतिसङ्केतेन प्रेषणीयम्।

अध्यापको विहार-प्रान्तीयः, वेदान्ते निष्णातः, अध्यापनदक्षः, कृतानुभवश्च स्यादिति। प्रार्थनापत्रेण सह अवस्था, अध्ययनकालः, अध्यापनकालश्चेत्यादिकं सुस्पष्टं लिखेलिमम्।

*एस० एन० मजुमदार, शास्त्री*

मन्त्री, विहारोत्कल-संस्कृत-परीक्षा-समितेः

* * * *

## अध्यापकावश्यकता ।

सुयोग्यस्यैकस्य विदुषो वेदपाठिन आवश्यकताऽस्ति, यो हि सस्वरं यजुर्वेदमध्यापयितुं समर्थः स्यात्। धर्मशास्त्र-कर्मकाण्डयोरपि ज्ञानमपेक्षितम्। व्याकरण-मध्यमोत्तीर्णश्चेत्समीचीनं भवेत्, किन्तु वेदमध्यमाया योग्यता नितरामपेक्षिता। योग्यतानुरूपं वेतनम्।

हिराजपट्टी, पो० मधुवन, जि० आजमगढ | श्रीवीरबहादुर साहिः, प्रवन्धकः, संस्कृत-पाठशालायाः

* * * *

## प्रश्नः ।

विदाङ्कुर्वन्तु विमत्सरा विद्वान्सः, यत्खलु समस्तनिगमागमेषु निखिल-पद-पदार्थानां परमकारणत्वेनाभिधीयमानं वाच्यवाचकत्व-बोध्य-बोधकत्वादिसम्बन्धेन व्यवह्रियमाणमोङ्काराख्यपदमिति, तत्तज्जाने किमर्थं मनसि निधाय ब्रह्मर्षिव रिष्ठेन श्रीवाल्मीकिनाऽदिकविनेदम्पद्यं व्यरचि-"वेदाब्राह्मणरूपेण गायत्री सर्वरक्षणी। ओङ्कारोऽथ वषट्कारः सर्वे राम मनुव्रताः"॥ वा०,उ०,१०६ स०,

८ श्लो० ॥ कोऽयं रामः, यस्यानुव्रजनम् पद्योक्तैः सर्वैः पदपदार्थैः कृतमिति जिज्ञासया बाध्यमानेन विदुषां दयां काङ्क्षमाणेन मया गयाप्रसादशर्मणोत्तरयितुं विद्वान्सः प्रार्थ्यन्ते ।

[ २ ]

'मुद्राराक्षस' नाटके प्रधानामात्यस्य, प्रथितराक्षसेतिनामकस्य, भूसुरोचितं प्राक्तनं सुबुद्धिशर्मेति नाम अपहाय, क्रूरकर्म निरताहरराक्षसेत्यभिधया किं हेतुका व्याहृतिः कवेः ।

रणचातुरीधुरीणत्वादसौ तदभिधामभजत्, इति केषाञ्चनोक्त्या तु नायाति तुष्टिं हृदयम् । यतो वीराग्रेसरद्रोणादनामपि तथात्वापातात् । इति सन्देहं दूरीकर्तुं सुप्रभात-पत्रे समुचितोत्तरं प्रकाशयन्तु भवन्तः ।

—ब्रह्मदत्त शर्म्मा ( छात्रः )

रामनिरञ्जनदास-मुरारका- विद्यालय, चौक, पटना ।

* * * *




समुपैत्यहो ! शरच्छ्री हंसालिमालिकायाः ।
मन्येऽवधूतवर्षा वरिवस्यतीय मार्या ॥ १ ॥
अतएव पुष्पमाला नवयौवनेव बाला ।
बहुदीप-मालिकाला समुदेति दिव्यकाला ॥ २ ॥
सुसमीरनीरभङ्ग्या पाद्या ऽमाह्वयन्ती ।
मकरन्दवृन्दवृद्धा मधुपर्कमाचरन्ती ॥ ३ ॥
फलमूलसत्समृद्ध्या सम्भोगमर्पयन्ती ।
'देवीप्रसाद' सिद्धीः सम्यक् प्रदर्शयन्ती ॥ ४ ॥
नवशालिशालिनीया कमलालिमालिनी वा ।
जयतीय मत्रभवती देवी शरत् सुसिद्धिः ॥ ५ ॥

—श्रीचन्द्रः,
प्रिन्सिपल, संस्कृत[...] ( C. I.
वडवानी

## बहिर्लापिका ।

( ले० नारायण शङ्कर शर्मा हेब्बालकरः [...]
निजामराज्यम् )

कः श्रीकण्ठसुहृत्किमिच्छति नरः, कः सेव्यते [...]
कस्तिग्मांशुरनल्प कृत्यकरणात्कां धोः समाल[...]
किं देयं तृषितस्य, किं नुतिकरं किं नाम धा[...]
मत्पृच्छोत्तरपूर्ववर्णमिलितं वाक्यं बुधैः पठ्य[...]

## सूक्तिः ।

साम्राज्य-भानावथ भारतीये, दिशं प्रतीचीमवलम्ब[...]
युगे कलावृद्धिमति प्रदोषे, गाढं तमोऽधर्म इहा[...]

—श्रीकृष्ण शर्म्मा, आहिता[...]

## कुङ्कुमतिलक वर्णनम् ।

इयं हरे पश्य परम्परा परा
न कस्य चित्तं वितनोति विस्मितम्
महीसुतः कुङ्कुमविन्दुकैतवा-
न्निशापतेर्हन्त ! तनौ निषीदति ॥ [...]

—गणेशीलाल सारस्वतः, साहित्यो[...]

## विनोदतरङ्गः ।

( ले०—श्रीनिवासकेदलायः, रम्भापुरमठः )

पाध्यायः—बालक ! किमालोच्यते भवता ?

ालकः—गृहं गन्तु कियान् समयो वर्तत इति ।

———

ाधः—अहमद्य रणाङ्गणे सर्वेषां करचरणानि ऽऽगमम् ।

न्यः—ततः शिरः कृन्तनमेव वरं खलु ।

ाथः—एवमेव । मत्छेदनात्प्रागेव विहितं केना- शिरः कृन्तनम् । अतो मया कर्तितं करचरणा- म् ।

———

शिक्षितः—प्रौढविवाहेन किं भवति ?

ुधारकः—अचिराद्भविष्यति पञ्चमः संवत्सरः

———

ीदराऽचार्यः—किं भवद्भिरपि सेव्यते नस्यम् ?

ामानन्दस्वामी—किमाचार्याः ! वेदविहितं तिरस्कुरुथ ? अस्माकंतु श्रुतिप्रामाण्यत्वादिद- तम, यतः पुरुषसूक्तेऽपि ए तावान्नस्यमहिमा, ति ।

———

कश्चित्—मम गृहनिर्माणसमये वह्वयस्तन्त्र्यः लब्धाः, तस्मात् बहोः कालात्प्रागेवाऽऽसी- न देशे तन्त्री प्रचार इति ज्ञातुं शक्यते ।

अन्यः—मम निलयनिर्माणावसरे न किमप्यु- पलब्धम् । अतः न किमप्यासीत्पूर्वकाले इति वक्तुं पार्यते ।

———

सखी—( विधवां स्वसखीमुद्दिश्य ) सखि किं कथ्यते मुधा भवत्या? विद्यमाने पतौ नार्पितं प्रेम !

स्वामिनी—( सास्रम् ) किं कर्तव्यं सखि ! पतौ सति नास्ति बुद्धिः, बुद्धौ सत्यां नास्ति पतिः ।

( पुनः )

### सूक्ती ।

( १ )

कृष्णो वर्णे कृष्णः  
सुदाम्ने ददाति सर्वस्वम् ।  
अत्र विलोकय मित्र,  
कृष्णा वर्णे भवन्त्यकृष्णहृदः ।

( २ )

वंशी छिद्रैः पूर्णा  
तथापि मधुरं रवं कुरुते ।  
किं जानासि न बन्धो,  
छिद्रेषु गुणा वसन्त्यमिताः ।

—सोहनलाल द्विवेदिनः

### क्रान्तिकारिणे शुभाशिषः ।

अयिवत्स क्रान्तिकारिन् ! चिरंजीव । पण्डितानामस्माकमुपरि क्रान्तिं कुर्वता त्वया स्वनाम सार्थकं कृतम् । महान्पराक्रमः प्रकटीकृतः । दृढा निर्भीकताऽऽविष्कृता च । अतस्तुभ्यमहमिदं मधुरमन्नं पारितोषिकं वितरामि । गृहाण । भुक्त्वैत सुप्रसन्नो भव, बालचापलं जहीहि—

—देवीप्रसाद शर्मा शुक्लः, कविः,

[ महामहोपाध्यायः ]







विगते सुप्रभाताङ्केऽस्माकमनौचित्यद्वयं समजनीति चेखिद्यतेतराम् चञ्चलं चेतः। प्रथमन्त्विदमनौचित्यम्, यत्, क्रान्तिकारि लेखे श्रीमतां नारायणशास्त्रिणां विषये कश्चन शब्दो नितरां लज्जां जनयत्यस्माकम्। यद्यपि-'श्लिष्टैः पदैः पिशुनयेच्च रहस्यवस्तु' इति विद्यते, तथाप्यावेशविलसितमिति स्फुटमेव प्रतीयते। कर्णमर्दनेनोष्णयं गतः क्रान्तिकारी सर्वथाऽनुचितमाचचारेति वयं भृशं निन्दामः, निन्दन्ति च सर्वे। सुप्रभातप्रचाराय वहिर्गतेन मया कश्चन नियुक्त आसीत् छात्रः सहायकत्वेन, तेन च मदनुमत्या प्रकाशिते क्रान्तिकारिलेखे श्रीमतां शास्त्रिमहोदयानामुपरि ध्यानं न दत्तम्। मदागमनानन्तरं मुद्रितप्रायमेवासीत् सुप्रभातम्। श्रीमन्तः शास्त्रिमहोदया अस्माकं परमहितचिन्तकाः, श्रद्धास्पदाः, प्रणयिनश्च सन्ति। ते प्रौढाः सुपरिस्कृताः कविवराः, सहृदयधुरीणाश्च सन्ति। संस्कृत-वाङ्मय-गवेषका अपि सन्ति। तेषामिममपराधमगत्या शिरसावहन्नहं कैः शब्दैः क्षमाप्रार्थनं कुर्यामिति न जानामि। सुप्रभातेन शास्त्रिमहोदयानां घनिष्ठः सम्बन्धः, स्नेहश्चास्ते। तद्दी... चिरमनुग्रहीताः स्मः।

अपरमिदं यत्, सूर्योदय-विषये निवेदनं कृतवता मया विन्ध्येश्वरीप्रसादशास्त्रिणां सम्बन्धे विलिखितमासीत् "यत्तैः सुप्रभातस्य शतशो ग्रा... हानिः सम्पादिता" इति। तत्तेषां जाते स... ज्ञातम्, यदयं समाचारो भ्रममूलक एव... मपि सुप्रभातेन स एव सम्बन्धः, यो... समाजिकत्वेन, व्यक्तित्वेन च तेषामस्मा... शाश्वतः सम्बन्धः। स च न कदाचिदपि... मिष्यतीति निश्चितमेव। कैरपि धूर्तैश्चा... प्रचारकैर्बहिर्लोकानां मनसि वैमत्यं व्यवस... मासीत्। अतएव तेषां समाचाराणामा... मया लिखितमासीत्। तत्साम्प्रतमवगत्य... शब्दान् सखेदं परावर्तयामः। नीतिविषये... विषये भवतु वैमत्यम्, परमान्तरिकः स्नेहो... न केनापि विचलयितुं शक्यः।

* * *

## गोरक्ष-सहस्रनामस्तोत्रम्।

——****——

संस्कृतभाष्यसहितम्, हिन्दीभाषास... मुद्रितमास्ते। समस्तैः सनातनधर्मावल... साहित्यप्रेमिभिरवश्यमेव संग्रहणीयम्। ... नितरां प्राचीनः, सरलेन, सुविशदेन च ... सहितो गोरक्षनाथ-भक्तानां कृतेऽपूर्व... मूल्यम् १॥) स... मुद्रा।

प्राप्तिस्थानम्—

पं० रामचन्द्र शर्म...

हजूरी दरवाजा के बाहर, चौपटी, ...

(राजपूता...)

—:o:—

Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

सौर पौषः [ धनुर्मासः ] १९८४

र्थवर्षं ] [ नवमी सङ्ख्या

# सुप्रभातम् ।

संस्कृत-साहित्य-समाजस्य मासिकं मुखपत्रम् ।

तिमिरततिमुदस्यद्,
भेदतारा विलुम्पन्,
नयदधि सुरभाषाभाषि-
जागर्तिभावम् ।
विबुध-विहग-वादै-
राह्वयद् भाग्य-भानुम्,
विलसतु भुवनेऽस्मिन्
सर्वतः 'सुप्रभातम्'

सम्पादकः—

श्रीकेदारनाथशर्म्मा, सारस्वतः

कमूल्यम् ३)
भ्यः १॥)

माननीयेभ्यः १२)
वैदेशिकेभ्यः ६)

व्यवस्थापकः—

श्रीगिरीशशर्म्मा, शुक्लः, न्यायाचार्यः

प्राप्तिस्थानम्—

सुप्रभातकार्यालयः, काशी ।

# लेख-सूची ।

# सुप्रभातम् ।

विविध-विषय-विभूषितम्, अद्वितीयम्, संस्कृत-मासिक-पत्रम् ।

र्थ-वर्षे | वाराणसी, सौर पौषः (धनमासः), १९८४ वैक्रमाब्दाः | नवमी संख्या

## विज्ञप्तिसारः ।

महाकवि-श्रीगुमानीपन्त-प्रणीतः ।

सम्पादकः—श्रीतारादत्तपन्तः, साहित्याचार्यः

कशरणं गताश्रममसौ विमोहश्चिरा-
र्मुहुरपह्नुतस्तुदति मामकीनं मनः ॥
दय तदुपेक्षसे तव किमेतदात्मोचितं
हि पुरतोरवेर्मुकुलयेद्विधुर्वारिजम् ॥ २१ ॥
ाय विहितास्पदैः स्वहृदि कामशेषादिभि-
स्मृतिरयञ्जनोऽनवहिततत्वमाप्नोति यत् ॥
तदेव तवसेवनस्तवनिवृत्तिवीजध्रुवम्
विना निशित-धारया दलयितुं न खड्गः क्षमः ॥ २२ ॥
नितान्तमविवेकिनी समधिरूढदोषोत्करा
न बुद्धिरनधिष्ठित-प्रचुर-शुद्धिरुज्जृम्भते ॥
अतो बत न भूयते खलु तयोदितज्ञानया
रजश्चयमलीमसे न मुकुरे मुखम्भासते ॥ २३ ॥
कथञ्चन कुतश्चन क्वचन किञ्चनाहं यदि,
स्मरामि करणैर्भवच्चरणपद्ममाभ्यन्तरैः ॥
जनुर्मम न किन्तदा भवति तावतैवोर्जितं,
मनागपि सुधाशिता दिशति निर्जरत्वं क्षणात् ॥२४॥
अनेन विषयैषिणा हृदि जनेन चिन्ताकुले
स्मृतं किमपि नाम ते यदि घुणाक्षरन्यायतः ॥
तदेव महतोऽखिलानलमपासितुं पाप्मनो
वनानि खलु वह्निषस्तनुरपि स्फुलिङ्गो दहेत् ॥ २५ ॥

स को नु भविता त्तणः त्तणकृतानुकम्पस्त्वया
जनोयमुपनेष्यते सपदि यत्र धन्यात्सताम् ॥
इति प्रणयता मया हृदि समाकलय्य स्थितं
मनोरथ-पथं गतः किमिव नेहते दुर्गतः ॥ २६ ॥
विभाव्य सदयं मनस्तव वृतोऽस्मि भव्याशया
स्वयं प्रभुरपावृतस्त्वमसि किन्तु भीतं मुदा ॥
अकृत्यमपि कर्म ते जगति नापवादाय य
न वह्निरिव शर्वभुग् विपथगो महान्दुष्यति ॥ २७ ॥
त्वमात्मशरणात्मने सकरुणत्व-सार्द्रात्मना
प्रसीदसि मनोगतं स्वयमनोदितोऽर्थं दिशन् ॥
तदेष रसमग्रतस्तव मदीय-विज्ञापनै-
र्विकाशयति केन वा कुमुदमिन्दुरभ्यर्थितः ॥ २८ ॥
नमो जनकनन्दिनी-परमवल्लभाय स्वयम्-
प्रभाय रमित-प्रभाकर-कुलाय रामाय ते ॥
गृणन्तमिति मामहर्दिवमुपासता सिद्धयो
जनाय कृतभक्तये किमिव न प्रदद्यात्प्रभुः ॥ २९ ॥
भवतु भवभयघ्नो वाचमाकर्ण्य दीनां
रघुपतिरति तुष्टः सर्वदः सर्वदेति ॥
सुचिरमनु विविच्य त्रिंशता पद्यराजै
रिममकृत गुमानी नाम विज्ञप्तिसारम् ॥ ३० ॥

समाप्तम् ।

—:*:—

## मंगलम् ।

विनाशाय त्रिलोकानाम्
यो ह्यभूद्वै त्रिलोचनः ।
त्राणाय त्रय तापात्तम्,
त्रिपुरारिं नमाम्यहम् ॥

—सोहनलाल द्विवेदी ।

## कम्बोजीयः ।

( अनुवादकः—श्रीबहादुरचन्द्र गुप्तः, शास्त्री

श्रीरवीन्द्रनाथ ठाकुरस्यैकतमायाः कथाया अनुवा



म पञ्चहायनी तनया मिनी अजल्पि
सितुं न शक्नोति । आजन्मनस्तया
मपि तूष्णीं न स्थितमिति दृढं वि
मि । तस्या माता प्रायोऽनेन
जल्पनाच्च तां वारयितुमिच्छति, परन्त्वहं नेद
मौनं मिनीकृते नितान्तमस्वाभाविकम्, अहं
श्चाप्येतच्चिरं सोढुं न शक्नोमि । तस्मादेव
सह मदीयः स्वकीयः संलापः सदा
भवति ।

उदाहरणतया, एकदा प्रातः स्वस्य नू
पन्यासस्य सप्तदशं परिच्छेदं लिखतो मम
वत्सा मिनी निभृतं मन्निकेतनं प्राविशत्,
हस्तं च मदीये निधायाशंसीत्—'तात !
रामदयालुः काकं कागं कथयति ! मन्येऽसौ न
पि जानाति, जानाति किमु ? इति ।

अथो तस्यै 'भाषां भाषामन्तरा लोके
शेषः' इति विशदीकर्तुकामस्य मे साऽकस्मा
न्तरकल्लोलमभ्यप्लवत —'तात ! तव कस्तक
लस्तु कथयति यज्जीमूतेषु हस्ती वसति, स
एडातो जलानि मुञ्चति, तदियं वर्षा भवतीति

अथ यावत्किञ्चिदुत्तरं चिन्तयन्नहं जोषमासे, ित्रं सा भूयः परिप्रष्टुमुपाक्रमत—'तात ! तेऽस्वया संवन्धः ? ' इति ।

ततोऽहं गम्भीरवक्रेण कथमप्यवोचम्—'याहि ति! भोलेन सह खेल च, अहं व्यापृतोऽस्मि ।' ति।

मम निकेतनस्य गवाक्षो रथ्याभिमुखमासीत् लिका चोपचतुष्किकं मम चरणयोरासीना जानुनी ताडं ताडं मधुरं क्रीडति स्म । अहञ्च सप्तदश-परिच्छेद-लेखने मग्न आसम् । तत्र खलु यकः प्रतापसिंहः काञ्चनलतां नायिकां स्व-बाहो-नाय दुर्गहर्म्यतृतीयप्रकोष्ठाद् गवाक्षमार्गेण सद्यः ायितुमना आसीत् । तावदेव मिनी सहसा खे-महासीत्, ' हे कम्बोजीय ! हे कम्बोजीय !' इति न्दन्ती च वातायनाभिमुखमधावीत् । वस्तुत ाधस्तात्प्रतोल्या[1] मलसं परिभ्रमन्नेकः कम्बोज सी पुमानासीत् । स स्वदेशवेशानुरूपं शिथिलं लीमसं निचोलं[2] तुङ्गमुष्णीषं च पर्यधत्त; किञ्च देशेनैकं प्रसेवं[3] पाणिना च मृद्वीकापिटकानवोढ ।

नास्मि शक्नोमि कथयितुं के नाम भावा आ-रासन्ममदुहितुः स्वान्ते यदा सेमं पुरुषमालोक-ति, परं सा तं तारस्वरं क्रन्दितुमारभत । अथाहं पचिन्तयम् हन्त ! स चेदन्तरेष्यति, मम सप्तदशः रिच्छेदः समाप्तिं नैष्यति ' इति । तत्क्षणमेव स म्बोजीयः परावर्तत, बालिकाञ्चाभ्यपश्यत् । अथैत-वलोक्य स साध्वसाभिभूता मातरं शरणमुपधा-न्ती कापि न्यलीयत । तस्या ह्यन्धविश्वास आसो-द् यन्नूनं तस्मिंस्तेन भीमेन पुंसोह्यमाने प्रसेवे मत्तुल्या छिन्ना इतरेऽपि बालाः सन्तीति । एतस्मि-न्नन्तरे स पण्याजीवः प्रतीहारभूमिं प्राविशत्, मां च सस्मितमनंसीत् ।

इतस्तावन्मम नायकयोः स्थितिस्तथा दोलाय-मानाऽऽसीत्, यथा विवशं मया तत्रैव विरम-णीयं किमपि क्रयणीयञ्चाभवत्'। मिन्या हि स पुरुषो गृहं प्रतिसमाहूयत । अथाहं क्रयं स्तोकमकरम्, ततश्च तेन साकमन्दुर्रहमान-रशियन- इङ्गलिश-सीमान्त-राष्ट्रनीतिसम्बन्धिनं वाकोवाकमारभे ।

अथ प्रस्थातुमुद्यतः स पर्यपृच्छत्-' नन्वार्य ! कास्ति सा बालिका ? ' इति अथाहं तदानीं मिनी-मानोनयमियमियमलीकभयं मुञ्चेदिति ।

यावत्सा [4]मदासन्दीसन्निधौ स्थिता तं कम्बो-जीयं तदीयं स्यूतं च न्यरूपयत्, तावत्स तस्यै सशुष्कमृद्वीकान् कन्दरा[5]लानुपाहरत्, परं सा नासीदुपच्छन्दिता, केवलमुपचीयमान-संशय-सङ्कुला भूयोऽपि मामुपाश्लिष्यत् ।

इदं तयोः प्रथमं सम्मेलनमासीत् ॥

परन्तु कतिपयदिवसानन्तरं गृहान्निष्क्रामन्नहं मिनीं द्वारोपकण्ठे मञ्चमध्यासितां पादयोरुपविष्टेन विशालकायेन तेन कम्बोजीयेन सार्धमालपन्तीं हसन्तीञ्च लोचित्वा भृशमचित्रीये । एवं किल प्रत्यभासीत्, यद् आजन्म मे वत्सा स्वपितुःपृथक् तादृशं सहिष्णुं श्रोतारं नासीसददिति । तदानीं च तस्याः शाटिकाञ्चलं तदागन्तुकार्पितेन वाताद (वादाम) शुष्कद्राक्षामयेनोपायनेन संपूरितमा-सीत् । अथाहं कम्बोजीयं किमिति त्वं तस्यै तान्यदाः? इति ब्रुवन्नेकामष्टाणकीं निष्कास्य तस्य पाणौ न्य-

टि०—१ रथ्या-गली, २ चोला, ३ झोला ।

दधाम् । स च विप्रतिपत्तिमन्तरेणैव तद्धनं प्रतिपद्य निचोलविले न्यधत्त ।

हन्त ! द्विगुणीकृतनिजायासामपश्यं तां वराकीं मुद्रां मुहूर्तात्पश्चात्प्रतिनिवृत्तोऽहम् ! कम्बोजीयो हि तां मिन्यै प्रादात् । तस्या माता च भास्वति गोलाकृतौ पदार्थदृष्टिं क्षिपन्ती ।'कुतस्त्वमेतामष्टाणकीमलभथाः ?' इत्युदीरयन्ती च श्येनपातं कन्यकामभ्यपतत् ।

मिनी सोल्लासमाचष्ट—'कम्बोजीय इदम्मेऽदत्त' इति

अथ भृशं क्रुद्धा तदम्बाऽदात् ! अये मिनि ! कथं नु त्वं तस्मादेनत्प्रतिग्रहीतुमार्हीः ?' इति

तत्क्षणमेवाहं प्राविशम्, आपिपतिषन्त्या विपदश्च तां परिरक्षन्निजानेव संप्रश्नान् कर्तुमुपाक्रमे

नाहं सकृद् द्विर्वा द्वौ मिलितावपश्यम् । कम्बोजीयो हि समञ्जसेनाक्षोटबातादमयेनोत्कोचेन कन्यकाया आदिमं साध्वसं परास्यत्; साम्प्रतं च द्वौ परमे मित्रे अभूताम् ।

विचित्रैः परिहासै स्तावन्योऽन्यमरञ्जयताम् । मिनी तस्याभिमुखं वीक्षत, स्वबालगौरवं च साधु विवृण्वती तदीयमायतं कलेवरं निरवर्णयत्, हासोल्लसद्वलिबन्धुरेण वदनेन च व्याहर्तुमुपाक्रमत— 'अयि कम्बोजीय ! कम्बोजीय ! किमिदं नूह्यते त्वयाऽस्मिन्स्यूते ?' इति

अथ स नासिकोनपर्वतीयस्वरेण प्रत्यवोचत— 'कुञ्जरः' इति । नासीदयं मोदाय-अलंहेतुः; किन्त्वहो ! कथं स्वादुङ्कारं तावुभौ हास्यानन्दमन्वभूताम् ! बालिकाया अस्मिन् प्रवयसा पुरुषेण संलापे मत्कृते तु सदैव किमप्यपूर्वमाकर्षणमविद्यत ।

अथ कम्बोजीयस्तदानीं 'माऽधरी भूवम्' स्वं वारं प्रत्यपादि—'साधु ! अथ वत्से ! त्वं स्वं श्वशुरालयं गन्तासि ?' इति

अद्यत्वे प्रायः प्रत्येकं वङ्गीया कुमारी वैवाहिकात्प्राङ्निजश्वशुरालयोदन्तं श्रुतवती विद्यते । वयं किञ्चिन्नवयुगीना आस्म, तादृशानि वस्तूनि स्वस्याः कन्यकाया नित्यमगोपस्म; अतस्तेन मिनी नूनं किञ्चिदिवोदभ्रमीत् । किन्तु न सा ... चीकटत्, प्रत्युत्पन्नमत्या तु प्रत्यवादीत्—'अपि जिगमिषसि तत्र ?' इति

कम्बोजीयपुरुषाणां मध्ये तु 'श्वशुरालयः' शब्दोऽर्थद्वयं वकीति प्रथितमस्ति । एष श्रुति संज्ञान्तरमस्ति कारावासस्य, यत्र निजव्ययेन ... स्माकं सम्यक्प्रतिपालनं भवति । एतत् मनसिकृत्याऽसौ पीवरः पण्याजीवो मम सु... प्रश्नमग्रहीत् । ततश्च हुं कृत्वा परोक्षं राजपुरुषं मुष्टिं धुन्वन्नवादीत्—'अहं स्वं श्वशुरं कुट्टयिष्यामि !' इति । एतदाकर्णयन्ती, धर्षितं वराकं सम्बन्धं च ध्यायन्ती मिनी अट्टहासपुरःसरं दूरं पल... स प्रचण्डस्तत्सखा चापि तामनुप्राहसीत् ।

( क्रमशः )

---

## 'सुलभ-व्याख्यान-माला'

श्रीप्रकाशमहोदयानां राजशास्त्रविषयकं व्याख्यानं समासतोऽत्र लिख्यते । सुप्रभात-पाठकवृन्दास्तत्पठन्तु गृह्णन्तु ।

'प्रथमे व्याख्यानेऽस्माभि र्दृष्टं यत् समाजोत्पत्तिः कथ-[त्]; कथं च तस्य सुसंघटित-व्यवस्थापने नियमानामाव-[श्यक]ता बभूव; कथं च नियमकर्तारो नियमद्रष्टारो नियमोल्लङ्-[घकाः] दण्डदातारश्च भिन्नाः स्युरिति ।

इदानीं तावत् राजसंघटनं कथमभूदिति प्रथमं विचार-[णीय]म् । तद्विषये तु सन्ति त्रयः पक्षाः । केचित् मन्यन्ते, [ब्र]ह्मा स्वयमेव स्वप्रजारक्षणाय भूम्यामवततार; तेन च [राज]संघटनं कृतमिति । अन्येच, केचित् जना एकत्रीभूय कांश्चित् [नियमा]न् कृतवन्तः; ताननुसृत्येतरे जना वर्तन्ते स्म; अनेन [राज]संघटनमभूदिति । अपरे च केचित् वदन्ति, यत् यो ह्यस्माकं [...]मानासीत, स एव राजा भूत्वा राजसंघटनं चकारेति ।

[ए]तेषु द्वितीयः पक्षः श्रेष्ठतमः । तमेवानुसृत्येदानीं सर्वा [राज]व्यवस्था क्रियते । प्रान्तप्रतिनिधयः एकत्रीभूय नियमान् [रचय]न्ति; जनैश्च तान् परिपालयन्ति; नियमोल्लङ्घयितॄन् दण्डंच [दद]न्ति । राज्यस्यैतदेव मुख्यं स्थानम्, यत्रैते प्रतिनिधयः [सम्मि]लिताः सन्ति । कौन्सिलादिसंस्था स्तान्येव स्थानानि [सन्]ति । अत एव राजकार्यधुरंधराणां कौन्सिलादिप्रवेशेऽ-[भिला]षः । किन्तु नास्ति तत्र सर्वेषामधिकारः । ये धनवन्तो [विद्या]वन्तश्च तेषामेव प्रवेशाधिकारः । मतप्रदानेऽपि सन्ति न [सर्वे अ]धिकारिणः । तेषामेव मतप्रदानाधिकारो ये धनवन्तः । [...]वृद्धवनितानां नास्ति मतदाने प्रवेशे चाधिकारः । एत-[दनुचित]म् । यदि सर्वेषां नियमपालनमावश्यकं तदस्तु सक-[लाना]मपि मताधिकारः । विदुषीणां स्त्रीणां कौन्सिलादिप्रवेशेऽ-[प्य]नधिकारः । अनेन, सर्वेषामपि जनानां नियमपालनं [यदि] भवेद्यतस्ते तानेव नियमान् संघटेयुः, यान् ते सुलभतया [परि]पालयितुं शक्नुवन्ति ; अन्यच्चाधुना दृश्यमानः प्रकारः [कौ]न्सिलादिषु न भवेत् ।

इदानीं कौन्सिलादिषु सन्ति सर्वे धनवन्तः । प्राकृतिक-[नि]यमानुरूपं हि तत्, यत् ते न जानन्ति धनहीनदुःखानि, । [स्वी]यान्येव दुःखानि बहुमन्यन्ते, अर्थात् ते नियमकरण-[स]मये नास्माकं दुःखानि संकटानि च विस्तृततया विचिन्तय-[न्]ति । तस्मान्न तत्र सर्वे धनवन्तः स्युः । तथैव स्त्रीणां [वि]षयेऽपि । न वयं पुरुषास्तासां दुःखानि यथा तथा [ज्ञा]तुं प्रभवामः ।

अस्मिन् समये ये नियमाः सन्ति तत्राल्पा एव स्त्रीविषयकाः । एतदपि न युक्तम् । अस्तु ।

तदेतत्सिद्धमेव यदस्तु सर्वेषां विदुषां धनवतां धनरहितानां च मतप्रदाने, कौन्सिलादिप्रवेशे चाधिकारः, राज्यकार्ये चास्तु तेषां हस्तक्षेपः । किन्तु नास्त्येवम्; एतत्तु दुःखस्थानम्। पाश्चात्यदेशविशिष्टेषु चास्ति स्त्रीणां मतदाने; कौन्सिलादिप्रवेशे चाधिकारः । अस्तु । जगति सन्ति सर्वे भिन्नप्रकृतयः । केचित् परिवर्तनवादिनः, केचिदपरिवर्तनवादिनः, अन्ये च केचिदतीतवादिनः, भारतेऽस्मिन्नपि सन्ति बाहुल्येन पक्षविपक्षाः । केचित् स्वराज्यवादिनः, केचित् स्वान्यवादिनः, केचित् साम्राज्यान्तर्गतस्वराज्यवादिनः, केचित् सहकारिणः, केचिदसहकारिणश्च । एतेषां प्रतिनिधयः कौन्सिलादिप्रविष्टाः स्वमतानुरूपान् नियमान् घटयन्ति, परमतानुरूपान् नियमान् विघटयन्ति च । अल्पाःसन्त्येतादृशा नियमाः ये सर्वैर्मैतैर्नियमत्वं गताः, किन्तु विपुलाः सन्त्येतादृशा येऽधिकैर्मतैर्नियमत्वं प्राप्ताः ।

एतैर्नियमैर्वयं बद्धाः स्मः । अस्माकमेतेषां नियमानां पालनं सर्वथाऽऽवश्यकम् । तस्मान्मतदातृभिरस्माभिस्तेभ्यः पुरुषश्रेष्ठेभ्यो मतानि दातव्यानि, ये खल्वस्माकं दुःखानि संकटानि च जानन्ति, ये च खलु तत्र गत्वास्माकं श्रेयस्करानेव नियमान् संघटयन्ति; अन्यांश्च विघटयन्ति; ये च न केवलं स्वमतानुरूपनियम-संघटनाय तत्र गच्छन्ति, किन्तु स्वबान्धव-नियमसम्बन्धि-दुःखदूरीकरणाय ।

यदि सर्वे मतदातार एतादृग्भ्यो मतानि वितरेयुः, यदि तेषामेव तत्र प्रवेशो भवेत्, तर्हि ये नियमाः संघटिता भवेयु स्ते कदापि दुःखदायका न स्युः ।' इति ॥

श्री त्र्यं० वि० मोहरीर.

# उमारमयोः श्लेषेण वर्णनम् ।

अब्जाऽऽयतेक्षणलसद्वदनापिनाक—
भृन्मौलिना मिलितपादसरोरुहश्रीः ।
गोत्रेश्वरादरनिदानमसौ विदध्या—
द्वामा मनोभवकृतः शमुमारमा वा ॥१॥

—भूपनारायणझा, शर्मा ।

# सत्कवि-विठोबा-अण्णानां जीवनचरितम् ।

लेखकः—श्रीहरि-गोविन्द-बोरवणकरः छात्रः, श्रीकाशी-विद्यापीठस्य ।



अस्माकमुत्तरापथनिवासिनां जनानां नास्ति दक्षिणभारतीयगीर्वाणवाणीप्रवीणानां चरितैः सह सुपरिचयः । इदं हि महद्दुःखस्थानम् । अतो वयं सुप्रभातपाठकानां कृते, ये दाक्षिणात्यपण्डितप्रवराणां चरितानि न जानन्ति, निम्नलिखितं जीवनचरितं प्रेषयामः । तत्पठनेन केनापि वाचके नान्यदेकमप्यप्रकाशितपूर्वचरितं सुप्रभाते प्रकाशनार्थं प्रेषितं भविष्यति चेद्वयं कृतार्था भविष्यामः । तदेवास्मल्लेखनस्य महत्पारितोषिकम् ।

अस्ति च दक्षिणेषु विषयेषु 'निजाम' नाम प्रसिद्धमेकं संस्थानम् ( Nizam State ) । तस्मिन्न 'करहाटक' नामकमेकं सुविख्यातं तीर्थस्थानं कृष्णा-कोयन्नानद्योः सङ्गमे वर्तते । तत्रैको ब्राह्मणः 'पन्तमहादेव' आसीत् । स च स्नानसन्ध्यादिब्रह्मकर्मनिरतः सत्त्वशीलश्च । 'रामचन्द्र' नाम्नस्तस्यपुत्रस्य पञ्चदशवर्षदर्शनात्प्रागेव मृत्युः समजनि । प्राणप्रियपुत्रनिधनेन व्याकुलः स यथा कथंचित् कालं यापयितुं निश्चिकाय । तस्यासन्बहवस्तनयाः किन्तु नैकोऽपि तेष्वेवम्भूतो यो कालान्तकयमेन नापहृतो भवेत् । इदमेव सर्वसुखसम्पन्नस्य तस्य प्रा... दुःखस्थानम् । रात्रिंदिवं सोऽखिलभुवनदुः... दैत्यदानवेन्द्रपौलस्त्यविदारकस्य दाशरथे... निमग्नोऽभूत् । स्वदासवशमानसः स करुणा... लयो भगवान्कथं न स्वाश्रितजनमनोरथान् पू... वदान्यजनसद्गुरुणा तेन भगवता राम... स्वसेवानिरताय तस्मै पन्तमहादेवाय १७... शाकाब्दे ( तदनुसारेण १८७० तमे वैक्रमीये ... कृष्णामावास्यायामेकं पुत्ररत्नं प्रदत्तम् । ... पुत्रकस्य तस्य प्रभूत आनन्दः, प्रभूतं दुःखं ... भवताम् । आनन्दो बहुकालानन्तरपुत्रप्राप्तौ ... च स्वाभाविकपूर्वक्रमानुवर्तिबालकस्याल... तर्कितनिधने । तत्रापि चामावास्यासदृशमभद्र... स्थानमिति तद्दुःखस्य कारणविशेषम् । ... तर्कातीता भगवल्लीला केन ज्ञायते ? अमाव... जातेन तेनैव बालकेन स्वकीर्तिश्चिरस्थायिनी ... स्मिन्भूतले । तस्य 'विठ्ठल' इति नामाका... केन पन्तमहादेवेन ।

वर्द्धमानस्य तस्य बालकस्य हृष्टा पुष्टा यष्टिर्दिने दिने सुदृढा बभूव । न कोऽपि ... कुप्यति यद्यपि किञ्चिदपि श्रोतव्यं स न श्र...

भिन्नभिन्नोपायाः कृतास्तं पाठशालायां प्रहेतुं, न ते सफलीभूताः । 'बाल एवायमद्यापि' विचिन्त्य जनकस्यापि तत्र उपेक्षाभावोऽभवत् । दशवर्षस्यास्य बालकस्य नाद्याप्युपनयनसंस्कारोऽ-... । विजयादशम्यांतिथौ पन्तमहादेवेन सहादर-... कारविहीनोऽयं विठूठलः कस्यचिच्छ्रीमतो मण्डपं आसीत् । मनोमोहकमस्य वदनं दृष्ट्वाऽऽकृष्ट-... तेन धनिना पृष्टानां केषाञ्चित्प्रश्नानां चातुर्यपूर्णा-न्युत्तराणि विठूठलेन दत्तानि । तानि श्रुत्वा ... तदा स पृष्टो यत् 'कस्यां पाठशालायां पठसि त्वं' । विठूठलेन न किमप्युत्तरं दत्तं परञ्च लज्जया अधः कृतम् । मनसि च तेन स्वमूढता सहस्रशो ... कृता निश्चितं च विद्याभ्यासपारङ्गततां प्राप्तुम् । ... मेव परिवर्तनकालस्तस्य चरितस्य । षण्मा-साभ्यन्तर एव तेनेदृश्युन्नतिः कृता यां दृष्ट्वा सर्वे गुरु-... आश्चर्यचकिता बभूवुस्तस्य चातीव प्रशंसां ... । यदा तेन श्रीमता महाशयेन पारितोषिक-... तेन तस्य कौशल्यमभिनन्दितं तदैव तस्य ... धानमभवत् ।

द्वादशतमे वर्षे तस्य विवाहः सञ्जातः । अस्मि-न्वयसि व्यायामविषये तस्य रतिरुद्भूता । यद्यपि व्यायामविषयेषु तेनातिकौशलं प्राप्तं तथापि तरण-... यां तु तस्य वैशिष्ट्यमेव । मित्रवृन्देन सह ... णां तीर्त्वा तेषां साहाय्येन प्रतिसमयं स पञ्चषान् ... आनीतवान् । तेषां संगृहीतग्रावणामेकं हनु-मन्दिरं तेन रचितमद्यापि कृष्णातटे दृश्यते ।

'आप्पा पुराणिका' नाम्नां विदुषां समीपे विठूठलेन गीर्वाणवाणीविज्ञानं प्राप्तम् रघु-किरात-कुमार-माघ-नैषधानां प्रख्यातपञ्चकाव्यानामध्ययन विषयकञ्च पाटवम् । एकस्मिन्दिवस आप्पाशा-स्त्रिणः पुराणं वाचयितुं पन्तमहादेवस्य गृहं गताः । असमापित एव पुराणे ते व्यासपीठादवातरन्नकथ-यंश्च यदवशिष्टान्दशद्वादशश्लोकानयं विठूठलः श्रावयिष्यतीति । न स्वसुतस्य संस्कृतभाषापाटवं पन्तमहादेवस्य ज्ञातपूर्वम्, अतः स पुराणश्रावणे विठूठलस्यस्खलितवाग्धाराप्रवाहं दृष्ट्वाऽऽश्चर्ययुक्तो बभूव । अनन्तरं तेन स्वगृहे आप्पाशास्त्रिभ्यो वसितुं स्थानं दत्तं तेषां चोचितादरातिथ्यं कृतम् । विठूठलस्यागाधं बुद्धिसामर्थ्यं दृष्ट्वाऽऽप्पाशास्त्रिणोऽ-पर्याप्तमतयोऽभवन् । स्वशिष्यशङ्कानिरसनमशक्य-मिति बुद्ध्वैकस्यां रात्रौ त एकाकिनेऽकथयित्वैव कुत्रचिदपि गताः । न चापि तेषां शोधने कश्चित् प्राप्तयशा बभूव । सर्व एव तेषां गमनेन परमदुःखि-ता बभूवुः । विठूठलस्य तु शोकस्य पारो नाभूत् । आप्पाशास्त्रिभिर्विठूठलो 'अण्णा' इति नाम्नाऽऽ-कारितस्तस्मात्तस्य 'विठोबा अण्णा' इति नाम प्रसिद्धम् । अतो वयमपि तमनादरसूचकैरेकवचन-शब्दैः प्रतिपाद्य आदरवाचकैर्बहुवचन-शब्दैः प्रतिपा-दयिष्यामः ।

यद्यपि तैः ( विठोबा अण्णाभिः ) आप्पाशा-स्त्रिसकाशे व्युत्पत्तिज्ञानं सम्यगधीतं तथापि व्याक रण-न्याय-वैद्यक-सङ्गीतादिविषयाणां तेषामध्ययनं तत्तद्विशिष्टगुरुसमीपे समाप्य तेषु तेषु विषयेषु तैः प्रावीण्यं सम्पादितम् । सर्वमिदं विंशवयसः पूर्वमेवाधीतमिति खलु महदाश्चर्यकारणम् ।

अष्टवर्षानन्तरं दुःखराशयस्तेषामुपर्यपतन् । तेषां वयसोऽष्टाविंशतितमे वर्षे जनकस्य पन्तमहा-देवस्य निधनमभवत् । वर्षद्वयाभ्यन्तरे तेषां पत्नी

‘ गयाबाई ’ नाम्नी पार्थिवं शरीरं त्यक्त्वा सुरलोकं गतवती । पत्न्या निधनस्यानतीते संवत्सरयुगल एव तेषां सदया जननी स्वपतिनिधनदुःखमसह्यं ज्ञात्वा तत्समीपे चिरं निवसितुं जगाम ! संसृतिशीलं संसारमसारं विज्ञायाण्णाशास्त्रिभिः स्वचित्तौघेोऽनश्वरं परिपूर्णं च श्रीरामचन्द्रपदकमलं गन्तुं भक्तिमार्गेण नियोजितः । साग्रहेण वारं वारं द्वितीयं विवाहं कर्तुं विज्ञापितानां तेषां मतिर्न निश्चितमार्गतः किञ्चिदपि विचलिता बभूव । जननीनिधनकालतस्तैरुष्णीषधारणं त्यक्तम् । आमरणान्तं तैर्न कदापि पुनः शिरस्युष्णीषं धृतम् । मातृमरणसमय एव तेषां वेदाभ्यासप्रारम्भकालः । आपाशास्त्रिणां समीपे तेषां वेदाध्ययनमभवत् ।

अर्धाङ्गवायुविकारेणाण्णाशास्त्रिणोऽत्यन्तं पीडिता आसन् । यथानियमं तै रामनवम्युत्सवो महता समारोहेण पारं नीतः । न कस्यापि कल्पना लेशो यदयमेवाण्णानामन्तिम उत्सवो भवेदिति । शकीयसम्वत्सरे १७८५ तमे ( तदनुसारेण १९३० तमे विक्रमीयवत्सरे ) चैत्रमासि कृष्णपक्षस्य या दशमी तिथिः तस्या मध्यरात्रावेषां सत्पुरुषाणां पृष्ठेऽतीव पीडोदभवत् । तथा पीडितैस्तैः कथञ्चिदपि सा रात्रिरतिक्रामिता । अन्यस्मिन्प्रभाते पिपासया तेषां कण्ठावशोषः समभवत् । परन्तु नित्यविधिसमाप्तिं विना कदाचिदपि कर्हिचिदपि यैर्जलमपि न पीतं, कथं तैर्हरिदिन ( एकादशी ) सदृशशुभावसरे नित्यविधिपरिसमाप्तेः प्राग्जलसेवनं कर्तुम् शक्यम् ? असह्यकष्टान्यप्यगणयित्वा तैः स्नानध्यानादिनित्यकार्याणि समाप्य दाशरथिरामचन्द्राय [1]राजादन-क्षीरनैवेद्यमर्पयित्वापरा
पठितं तुलसीपत्रं च स्वीकृतम् । अनन्तरं क्षी
भक्षयित्वा पिपासा-शामक-जल-प्राशनार्थं
पात्रमादाय नित्यनियममनुस्मृत्य‘श्रीराम’ इति
मुखे जलं गृहीतम् । तदेव तेषामन्तिम
तेषां पञ्चप्राणाश्चित्स्वरूपे विलीना देहस्त
भूमाववशिष्टः । विना क्लेशैस्तेषां निधनम

तेषामपत्यानि त्रीणि द्वौ पुत्रौ कन्या च
द्वितीयेन रघुवीरेण स्वजनककृतगजेन्द्रच
ग्रन्थानामुपरि संस्कृतटीका रचिताः ।

‘ विठोवा अण्णा ’ कृतानि पद्यानि द
विषयेषु विशेषरूपेण प्रख्यातानि ।

शुद्धब्रह्मपरात्परराम । कालात्मकपरमे
लीलाकल्पित जगदभिराम । शेषतल्पसुख-नि
ब्रह्माद्यमरप्रार्थित राम । शिष्टाश्रितजनरक्षि
चण्डकिरण-कुलमण्डनराम । श्रीमद्दशरथन

* ४ * ( नामरामायणम्

इयं सुमधुर पदलालित्ययुक्ता रचनैते
एतेषां ‘ आनन्दाचा कन्द हरि हा देवकिनन्दन
इदं सुमधुरं भक्तियुक्तान्तः करणेत कृतं
मराठीभाषाभिज्ञानां विदितचरमेव ।
कारिहरिदासानांत्विदं, विशेषतः प्रियं
निम्नलिखिताः प्रवन्धास्तै रचिताः—‘ सुश्लो
घवम् ’, ‘ हेतुरामायणम् ’, ‘ प्रबोधोत्सवला
‘ प्रयोगलाघवम् ’, ‘ नित्यक्रमलाघवम् ’, ‘श
‘ रामतापिनी ’, ‘ विवाहतत्त्वम् ’, ‘ साधुपा
घवम् ’. ‘ एकादशी विचारः ’, ‘ गजेन्द्र
आदयः ।

१ ‘चिरौंजी’ इतिभाषायां प्रसिद्धम् ।

एतेषां काव्येषु मुख्यतया श्रेष्ठौ गुणौ भक्ति
ादौ वतते । 'सुश्लोकलाघवे' ग्रन्थे काव्य-
टवं रचना-चातुर्यं कल्पना-कौशलं च प्रति-
दं दृश्यन्ते । सुश्लोक-लाघवरचनाहेतुस्तेषामेव
ान्दैर्दीयतेऽस्माभिः—

विचित्र वाक्यरचनं सुजनाः सुश्लोकलाघवं शृणुत ।
एं नृणां प्रतिष्ठा दृष्टा नूनं यशो जनस्थाने ॥
स्य ग्रन्थस्य माहात्म्यमपि तेषामेव शब्दैः शृणुत-
श्लोकलाघवश्लोकं विचित्रानन्ददायकम् ।
कलाः स्पृहयन्त्येव हरिदासा विशेषतः ॥ १ ॥
श्लोकलाघवश्लोकः प्रस्तुतो जनसंसदि ।
कस्मै रोचतां नूनमेकां खरचमूं विना ॥ २ ॥

सुश्लोकलाघवस्य श्लोकाः सकलानां स्पृहणीया
शेषतस्तु स-कलानाम् । हरिदासानां कृते भगव-
गुणवर्णनेन ते प्रसन्ना भवन्ति रचना कौशलेन
हरिदासानां (कीर्तनकीर्तन् महाराष्ट्रदेशेषु 'हरि-
स' इति संज्ञया जानन्ति जनाः । भगवत्कथाकी-
मेव तेषां वृत्तिसाधनम्) प्रियतरा भवन्ति ।
श्लोकलाघवश्लोक एकां खरचमूं खलचमूं वा
ना कस्मै न रोचते । सर्वेभ्य एव ।

ग्रन्थस्यास्यान्तिमभागे कविवरेणानेन स्वयमेव
खितम् यद्यथा मे कुलदैवतं श्रीरामचन्द्रः प्रेरये-
थैवाहं समग्रमवोचम् इति । स्वनामपि तेनैवं
खितं—

स्य श्रीकरहाटकाभिधमहाक्षेत्रे निवासो महा-
वा यस्य पिताऽच्युताङ्घ्रिनिरतो माता च गीताह्वया
र्वस्वं रघुनन्दनाङ्घ्रियुगलं यस्यैहिकामुष्मिकं-
न्थोऽस्मिन्स निमित्तमात्रमभवत्पन्तादिमो विठ्ठलः



ग्रन्थग्रथनकालोऽपि दत्तः पण्डितप्रवरेणानेन यथा-
शालिवाहन भूपालशकेऽत्राश्वाश्वभूमिते [ १७७५ ]
ग्रन्थोऽयं ग्रथितः सन्तः पन्तविठ्ठल शर्मणा ॥





# सुप्रभातोत्सवः ।

( ले० —श्रीचक्रधरशास्त्री, बहुगुणः )

[ अवशिष्टांशः ]



(ततः प्रविशति ज्ञान-विज्ञानाभ्यां निगड़बद्धमज्ञानम्)

*अज्ञानम्—त्राहि! त्राहि! रक्ष! रक्ष! नास्ति मे शरणम् । किं करोमि? क्व गच्छामि? एताभ्यां दृढं निगड़बद्धोऽहं स्वेच्छया विचरितुं न शक्नोमि । हा दैव! दुर्विदग्ध! नष्टं मे स्वातन्त्र्यम्, नयनविहीनस्येव न किमपि मे भाति । यवनसमयान्मे निरर्गलमासीत् राज्यम् । तन्मध्य एव सहसा भग्नम् । ( इति वहुलं विलपति )

**भारतभाग्यम्**—को भवान्? किं निमित्तं रोदिसि? किं कष्टं वर्त्तते?

**अज्ञानम्**—अहमस्मि, हतभाग्यधेयमहमस्मि । ( पुनर्विलपति )

**भारतभाग्यम्**—वद-वद! स्वदुःखस्य, रोदनस्य कारणम् । विश्रब्धम् कथय स्वकीयोदन्तजातम् । कोऽस्ति भवान्?

**अज्ञानम्**—अरे अहमस्मि । यस्य भारते निष्कण्टकं राज्यमासीत् । यस्माद्भारतभाग्यमपि पलायिता । यस्य समये मुसलमानानां मुसलस्येवाधिपत्यमासीत् । सोहं सकल चराचर विदितोऽज्ञानोऽस्मि । अद्य दौर्भाग्यादेतयोर्महाधूर्तयोर्हस्ते पतितोऽस्मि । अतएव विलपामि ।

* अज्ञानत्वादशुद्धि वहुलं वक्ति ।

**भारतभाग्यम्**—(सभ्रूक्षेपम्) तिष्ठ धूर्त ! तिष्ठ । त्वमेवासि भारतदैन्यस्य निदानम्, दुर्विदग्धतायाः कारणम् ! तिष्ठ ! करोमि ते चिकित्साम् । (भारतीमवलोक्य) एतच्चिरायाद्य मे भुजपञ्जरे पतितं, तत्करोम्यस्य शल्यम् । (इतिकरेणदृढं गृह्णाति) वद रे वद !, किन्ते करोमि ? (दृष्ट्वा) अहो ! एतत्तु 'सुप्रभातालोके' ऽन्धं जातम्, न जाने सूर्योदये काऽस्य-गतिर्भविता । तन्मुञ्चामि । परं नहि, दुष्टस्य वधोऽवधः । ताड़नमेव हितम् । (इति ताड़यितुमिच्छति) ।

**अज्ञानम्**—कोर्भवान् ! मा मा मारय । दयनीयोस्मि-सोयम् । यतः 'सुप्रभात' स्यालोकेन मे हृदयं नितरां कम्पते । नयने च क्षीणक्षीणे । परन्तत्प्रभातं सूर्योदयेनानुगतमिति, श्रावं श्रावं मृतप्रायोऽस्मिसंवृत्तः । एताभ्याञ्च दुष्टाभ्यामहं-निगड़े पातितः । तत्प्रणतोऽस्मि शरणाय । प्रार्थयामि चाभयम् ।

**भारत भाग्यम्**—( भारती मुद्दिश्य ) अस्ति कृपा-पात्रं यदेतदन्धम् । अन्धस्य वधाय नास्ति शास्त्रानुज्ञा । न चायं ममात्मा प्रभवति । ( अज्ञानं प्रति ) तन्मुञ्चामि गच्छ ! मूर्ख ! गच्छान्यत्र !

**सुरभारती**—तात ! भारतभाग्यधेयम् ! प्रीतास्मि तवात्मन औदार्येण धर्मपरायणतया च ।

**अज्ञानम्**—भगवन ! भवतां सङ्गमात्रेणैव मे चेतसि प्रकाशं जातम् । तत्क्षमस्व मां । प्रसीद ! मयि प्रसीद ! परमानुकम्पयोपदिश यां स्वनामधेयपुरःसरम् ।

**भारतभाग्यम्**—आः ! ते भाषणेनैव ज्ञायते यदीश्वर स्त्वयि प्रसन्नो जातः । तच्छृणु 'भारतभाग्य' मिति जना मे नाम कथयन्ति । सम्प्रति तुभ्यमुपदिशामि यत्त्वमितो भारतात् स्वकुटुम्बीयैः कुटिलता-जड़ता-दुर्जनता-आदिभिः सह ताम्रकूटगुहासु गत्वा स्वदुराचारस्य पश्चात्तापं कुरु, स्फटिकाच्छहिमराशौ स्वात्म-विसर्जनं विधेहि । येन ते भावि जन्म उज्वलं विशुद्धञ्च भवेत् ।

**अज्ञानम्**—क्षम्यतां भगवन् ! ममापराधान् । मया तु दुर्विनीतेनाखर्वगर्ववशादनेकदुराचारैर्भवतामन्तःकरणमतीव क्लेशितम् । तस्मात्ते शतशः क्षमामभ्यर्थयामि । ( इति पादयोः पतति )

**भारतभाग्यम्**—सर्वं मया विस्मृतम् । त्वं धर्मपरो भूत्वा दिवसान् यापय ।

**अज्ञानम्**—यथोपदिशति भवान् । ( इति नि-ष्क्रान्तम् )

**सुरभारती**—( ज्ञानविज्ञाने प्रति ) पुत्रके ! भारतं निवोधयतम् । तस्य साहाय्यं कुरुतम् । अ-पुनस्तिलकोत्सवायोपस्करणं आनयतम् ।

**उभे**—यथाज्ञापयति भवती । ( इति निष्क्रान्ते )

( ततः प्रविशति भारतं, सोपस्करणे विज्ञाने च )

**भारतम्**—सुरभारत्याः पादयोः प्रणि-अम्ब ! चिरस्यानुग्रहीतोऽस्मि ।

**सुरभारती**—पुत्र ! उत्तिष्ठ ! अवलोक-भारतभाग्यम् । ( परस्परं मिलित्वोभे परिष्वजतः ।

( सर्वाणि सुरभारतीञ्च स्तुवन्ति )

"सद्भावा, शुचि रुज्वलामितरसा, सद्गन्ध-सन्मात्रिक
सद्वर्णा मृदुरीतिमोहनरता, स्वच्छावगाहा स्थिरा ।
जाड्यध्वान्त-निरास-रास-रसिका यालंकृता सर्वदा
सा पायात्परदेवतेव भवती श्रीभारती नः सदा ॥ ६ ॥

**सुरभारती**—अये ! सुतरां प्रसन्नाऽस्मि । चेच्छामि पुना राजतिलकं स्वहस्तेन कर्तुम् ।

**भारतम्**—यथाभिमतं भवत्यै ।

**सुरभारती**—( स्वहस्तेन भारतभाले विधाय ) वत्स ! सम्प्रति कृतयुगसमयवदद्यापि प्र-विधेहि । भारतभाग्यञ्च स्वेच्छया विहरतु । ज्ञान-चिरं विजृम्भेताम् ।

**सर्वाणि**—यथाभवत्या आशिषस्तथैव भविष्य-

**सुरभारती**—किं ते भूयः प्रियमुपकरोमि ।

**भारतम्**—अतः परमपि प्रियमस्ति ? यदि प्रियं कर्तुमिच्छसि तर्हीदमस्तु—

"प्रजा हृष्टापुष्टाः किमुत शरदां नन्दतु शतम्
प्रवर्तन्तां विश्वे प्रकृतिसुहिताय क्षितिभुजः ।

नृणां भक्तिर्भूयाद्भगवति भवे द्वैतगलिता
समान्तस्तापं ते शमयतु च मन्दस्मितमदः ॥ ७ ॥

सुरभारती—तथास्तु ।

( इति निष्क्रान्ताः सर्वे । )

॥ *समाप्तश्चायमुत्सवः* ॥

---

## सिंहदिलीपयोः सम्बादः ।

### छात्राणां कृते

---

गुरोराज्ञां स्वीकृत्य, सम्राट् दिलीपः, प्रातःकाले त्थाय, जायाप्रतिग्राहितगन्धमाल्याम्, पीतप्रति-बद्धवत्साम, वशिष्ठधेनुं नन्दिनीं वनाय मुमोच । च—'स्थितः स्थितामुच्चलितः प्रयातां निषेदुषो-मासनबन्धधीरः । जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत् ' ।

एवं आस्वादवद्भिः तृणानां कवलैः, कण्डूयनैः, मक्षिकापसारणैः, निःशङ्क—स्वच्छन्दगमनैश्च विंशतिदिनानि यावत् समाराधयामास ।

अन्येद्युः—आत्मानुचरस्य भावं जिज्ञासमाना नन्दिनी, गङ्गाप्रपातान्तविरूढशष्पां हिमालयस्य गुहां प्रविवेश । सा हिंस्रैर्मनसाऽपि दुष्प्रधर्षा—इति ...ः पर्वतस्य प्राकृत-सुषमायाः विलोकने संली-नोऽभवत् । अपरतश्च गुहाशयः सिंहो हठात् नन्दि-नीमाक्रमत् । ततश्च धेन्वाः कातरं दीन-दीनमा-क्रन्दनमाकर्ण्य, राजा तत्र दृष्टिं निचिक्षेप । नान्दन्या उपरि स्थितं सिंहमालोक्य विस्मय-क्रोधाविष्टो राजा सत्वरं तूणीरात् शरं निष्कासयितुं प्रायतत्, परं तस्य दक्षिणो हस्तः सायक-पुङ्ख एव चित्र-लिखित इव तस्थे ।

ततो हस्तावरोधेन क्रोधाभिभूतं चकित-चकितं राजानमत्यन्तं विस्मापयन् सिंहो मनुष्यभाषायां तमुवाच—

"हे राजन् ! परिश्रमं मा कुरु । मयि तव बाण-प्रक्षेपण-प्रयासो व्यर्थ एव । अहं खलु कुम्भोदरना-मा शिवस्य गणोऽस्मि । शिवो मत्पृष्ठे पादन्यासं कृत्वा वृषभमारोहात । यं खलु पुरस्तात् देवदा-रुवृक्षमवलोकयसि, असौ शिवेन पुत्र इव स्वीकृतः, पार्वत्या स्वयं जलसेकेनाऽयं संवर्धितः । एकदा कटं कण्डूयमानेन वन्येन गजेन अस्य त्वक् समुत्पादि-ता । तदा पार्वती नितरामेनं स्वपुत्रमिव शुशोच । तत एव कालादारभ्य शिवेन सिंहत्वं विधाय, अह-मस्य रक्षायै पर्वत-गुहायां नियुक्तः । अहमङ्कागत-सत्ववृत्तिरस्मि । तदियं धेनुर्बहुकालानन्तरमत्र समागता मम पारणा भविष्यति । अतस्त्वं लज्जां विहाय निवर्तस्व ! नात्र ते परिवादः । अत्र दैव-कार्ये शस्त्राणां पौरुषस्य च प्रभावो नास्ति ।"

इति सिंहस्य वचनं श्रुत्वा राजा लज्जां तत्याज । जगाद च हे सिंह ! यद्यपि मदुक्तं हास्यं भवेत् तथापि वाच्यम् । यतो भवान् सर्वेषां हृदयस्या-भिप्रायं जानासि, अतो वदामि । सः खलु शिवो मे मान्यः, इदमपि च गुरोर्धनं नेत्राणां समक्षं विन-श्यन्नोपेक्षणीयं भवति, अतस्त्वमिमां वराकीं त्यज ! तत्स्थाने मम शरीरेण स्व-शरीरवृत्तिं निर्वर्तयस्व । तत्स्थाने मां मेव भुङ्क्ष्व ।"

ततःसिंहः प्रत्युवाच—

"हेनृप! एकातपत्रं जगतः प्रभुत्वम्, नवं वयः, इदं सुन्दरं शरीरञ्चेति, एकस्या धेनोः कृते एतत्सर्वं त्यक्तुमिच्छन् भवान् विवेक-विकलोऽसीति प्रतीयते। त्वं हि कोटिशः घटोघ्नीः गाः दत्त्वा अस्याः क्षतिं पूरयिष्यसि। परन्तु त्वन्तु जगतामधीश्वरः, तव विनाशे जगतः सर्वस्वं विनष्टं स्यात्। तत्स्वदेहं रक्ष। इमां जहीहि।"

ततो नन्दिन्या कातरतया निरीक्ष्यमाणो दिलीपः पुनरुवाच—

"अयि मृगाधिराज! क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः। राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा। इयं खलु न सामान्या गौः। इयं कामधेनोः सुता कामधेनुरेव। न साधारणा हिंस्रा एनामाक्रमितुं शक्नुवन्ति। त्वया तु शिवप्रभावेणास्यां प्रहृतम्। तदहमस्या निष्क्रयेण स्वदेहं ददामि। एवं तव पारणा विहता न स्यात्, मुनेश्च क्रियार्थो न लुप्तः स्यात्। परवान् भवानपि जानाति यत् रक्षकः स्वयमक्षतो नियोक्तुरग्रे रक्ष्यं विनाश्य न स्थातुमर्हति। एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु-इति त्वं मे प्रणयं स्वीकुरु।"

इत्युक्त्वा दिलीप आमिषस्य पिण्डमिव स्वदेहं हरये समुपानयत्। ततश्च तस्य अवाङ्मुखस्योपरि विद्याधर-हस्तमुक्ता पुष्प-वृष्टिः पपात। ततश्च—

"उत्तिष्ठ वत्सेत्यमृतायमानं वचो निशम्योत्थितमुत्थितः सन्। ददर्श राजा जननी मिव स्वां गामग्रतः प्रस्रवर्णी न सिंहम्।"

तदनन्तरं प्रीता नन्दिनी तस्मै वरप्रदानम... कृतार्थो राजा तया सह वनान्तादाश्रम... गुरवे सुदक्षिणायै च वरप्रदानवृत्तान्तं निवे... नन्दमविन्दत।

—:०:—

## श्रीभारतगुणसंवर्द्धना।

'ग़ज़ल' गीतिः [ रेख़्ता ]

अहो श्रीभारताभिख्योऽतिमुख्यो दिव्यदेशोऽ...
अपि ध्यायेत्सुरेशो यं स भूमेः संनिवेशोऽय...
जगज्जीवातवे जाताऽनुयाता जाह्नवी यस्मि...
प्रसर्पत्पुण्यपीयूष-प्रवेशो भू-प्रदेशोऽयम्॥ १
त्रिलोकाधीश्वरो यस्मिन् हरो वाराणसी-वा...
प्रहासी स्वर्गसौख्यानां विभासो भूनिवेशोऽय...
हरिर्यस्मिन् बहून् वारान्समादध्रेऽवतारांस्ता...
ध्रुवं मन्ये महिम्ना नाकलोकस्यापदेशोऽयम्॥
अमुष्मिन्वर्द्धितानन्दो मुकुन्दो मोदमातेने।
तदीयाऽलङ्घ्यलीलाभिविलीनाऽलोक-क्लेशोऽयम्...
हिमाद्रिः प्रोन्नते मौलौ चकासच्चामरं धत्ते...
उदन्वद्धौतपादाग्रो नरेशानां नरेशोऽयम्॥ ५
विराजत्कुङ्कुमक्षेत्रे त्रिजैत्रोऽशेषदेशानाम्।
स वै काश्मीरदेशोऽस्मिन् समिन्धे स्वर्गशेषोऽ...

महिमद्वारा स्वर्गलोकस्य व्यपदेश इत्यर्थः॥३ अलीकम् पातकम्॥४ अस्य देशस्य उन्नते ... हिमाद्रिः चामरं धत्ते। राजचिह्नमेतेन॥५ विराजन्ति ... क्षेत्राणि ('केसरके खेत') यस्मिन्। शोभया ... विजेता। समिन्धे दीप्यते रुट्॥६

विद्या-गृहं यस्मिन् जयाद्यं तत्पुरं रम्यम् ।
मान्मानसिंहाख्योऽधितिष्ठत्यस्वरेशोऽयम् ॥७॥
तेऽस्मिन्निधिप्रख्याः सुविख्याता अमी वेदाः ।
भूमण्डले ख्यातोऽवदातो यन्निदेशोऽयम् ॥८॥
स्मिन्नुष्णशीताद्याः प्रतीताः स्युर्यथाकालम् ।
क्रीडास्थलं देव्याः प्रकृत्याः पुण्यवेषोऽयम् ॥९॥
नानाविधैर्धान्यैः किलान्यैर्यानि नीयन्ते ।
सर्वानुजीव्यानन्तसंपत्संप्रवेशोऽयम् ॥ १० ॥
लाद्गोटनारङ्गाऽम्बुजद्राक्षेक्षुजम्बीरम् ।
यस्मिन्नलं सिध्येत्स कश्चिद्भूविशेषोऽयम् ॥११॥
भ्यो हीरकं सूते, प्रभूतेलासनाथोऽयम् ।
नानाऽऽकराधीशो धनेशानां धनेशोऽयम् ॥१२॥
ष्मिन्नेव सर्वादौ दिदीपे ज्ञानदीपोऽयम् ।
ह्याध्यात्मविद्यायां बुधानां श्मश्रुकेशोऽयम् ॥१३॥
माद्रिर्मस्तकम्, बाहू इमौ पूर्वापरौ देशौ ।
ध्येयाङ्गसंस्थानं दधानोऽस्मत्परेशोऽयम् ॥१४॥
माद्रौ मस्तके गङ्गा, भुजङ्गा भूरि जृम्भन्ते ।
धर्मानुयातोऽवदातो व्योमकेशोऽयम् ॥१५॥

जयाद्यं पुरं जयपुरम् । आम्बेर राजधान्याः ईशः ॥७ तः पवित्रः । येषां वेदानां निदेशः (आज्ञा)॥८ सर्वैर्वेशैः जीव्यः अनन्तः संपत्प्रवेशो यस्य ॥९॥ अन्नादिकं फलं मन् पर्याप्तम् उत्पद्येत, सोऽनिर्वचनीयो भूविशेषः ॥११ ता या इला ( पृथिवी ) तत्सनाथः । विस्तृत इत्यर्थः । नाविधानाम् लोह-सौमाङ्गारसमर्मराद्याकराणाम् (खनीनाम्) शः ॥१२ श्मश्रुकेशः ( 'मूछों का बाल' ) । लोकोक्त्य-रः ॥१३ वङ्गादिः पूर्वदेशः, सिन्ध्वादिः पश्चिमदेशश्चेति विमौ बाहू परेशः परमेश्वरः ॥१४
हिमाद्रिरूपे मस्तके गङ्गा भातीति व्यस्तरूपकम् भुजङ्गा रसादकाः सर्पाः धर्मानुगामी, व्योमकेशस्तु धर्मेण वृषेण यातः । शुद्धाङ्गः, श्वेताङ्गश्च । व्योमकेशः शिवः ॥१५

कियद्व गीतानि गायामो न तृप्यामो गुणैः, किन्तु ।
करेणाऽऽपाद्यतेदानीं स्वदेशो हा विदेशोऽयम् ॥१६॥
सखे ! हे मञ्जुनाथालं मुधा मा यापयेः कालम् ।
अहो ते संस्कृतोपेनो न रोचेतोपदेशोऽयम् ॥ १७ ॥

*—भट्ट श्रीमथुरानाथ शास्त्री [ साहित्याचार्यः ]*

[ 'संस्कृतरत्नाकरस्य भूतपूर्वः संयुक्त-सम्पादकः ]

जयपुरम् ।

जनैः करेण स्वहस्तेन, स्वदेशोऽप्ययं विदेशः आपाद्यत ( लङ् ) विहितः । तथात्रष्टीयते सर्वैः यथा विदेशवदस्माकं स्थितिः स्यादित्याशयः । करेण राजदेयद्रव्येण प्रियोऽस्माकं स्वदेशोऽपि विदेश इदानीं जात इति त्वर्थो नास्ति । ॥१६




त्वमधुनाऽसि कथं मलिनानना ।
कथय मानमदोन्नतमानसे !
नयन-गोचरतां क्वचिदञ्चिता ।
"कमलिनी मलिनी कमलाकरे" ॥१॥
सरसि लोलमरालकुले भ्रमद्—
भ्रमर-पुञ्ज-सुगुञ्जन-मञ्जुले ॥
विधिवशादहहाऽस्तमुपागते
"कमलिनी मलिनी कमलाकरे" ॥२॥

*—श्रीभूपनारायण झा ।*

**सुप्रभात-ग्राहकैः पत्रलेखनावसरे ग्राहकसङ्ख्या नूनं लेखनीया । सम्पादकीयपत्रेषु च पूर्णः स्व-सङ्केतो लेख्यः । —व्यवस्थापकः ।**

# मद्रास-भारतीयमहासभा ।

## हिन्दूयवनैक्यस्य अपूर्व दृश्यम् ।

## श्रीमालवीयचरणेषु अलीमहम्मदस्य मस्तकम् ।

महादेव शास्त्री, पाण्डेय ।

### मद्रासे भारतमहासभा-साफल्ये गान्धीमहात्मनो विचाराः ।

गान्धीमहोदयोऽद्य सायंकालेऽत्र समागतः । मद्रासे भारतमहासमायाः सम्बन्धे "डेलीमेल" पत्रप्रतिनिधेः प्रश्ने महात्मना उक्तं यत्, मद्रासमहासभया हिन्दूयवनैक्यस्य शिलान्यासः कृतः । अतएव वक्तुं शक्यते, यत्, भारतमहासमितेरिदमधिवेशनमपूर्वं साफल्यमलभत । प्रस्तावदृष्ट्या मया नेदमुच्यते किन्तु प्रस्तावा येन प्रकारेण उपस्थाप्य स्वीकृताः तद्बुद्ध्वा इदमुच्यते । हिन्दूयवनैक्यसम्बन्धिनि प्रस्तावे भाषमाणेन पण्डितमदनमोहनमालवीयेन ये भावाः प्रकटिताः, तत्र च अलीबन्धुभ्यां यथा आदरः प्रदर्शितः तत्सर्वं भाविशुभलक्षणम् । मालवीयमहोदयैर्भाषणे परिसमापिते मान्यालीमहम्मदो हर्षातिरेकेण तदीयचरणयोः पपात—मौ० अलीशौकतश्च तालवृन्तं चालयामास । तदानीं सभायामनुपस्थानात् तदपूर्वदृश्यावलोकनस्य मम सौभाग्यं नाभूत् । परन्तु राष्ट्रपतिः डा० अन्सारी तद्दृश्यवर्णनं माम् अश्रावयद् । यतो मम महान्प्रमोदो जातः, मन्मनसि च बृहती बृहती आशा समुद्भवत् । अहं सम्भावयामि यद् परस्परस्नेहस्य सद्भावाः समस्ते भारतवर्षे प्रसरेयुः, सर्वेषु दलेषु च आदरपात्रं भवेयुः । एतदपूर्वभावोत्पत्तिहेतोः डा० अन्सारी श्री श्रीनिवास ऐयंगरश्च भारतस्य कृतज्ञताभाजने स्तः ।

### पूर्णस्वतन्त्रतायाः प्रस्तावः ।

प्रतिनिधेः प्रश्ने यत् पूर्णस्वतन्त्रताप्रस्तावे विचारस्य समये महासभायां भवान् किमिति नोपातिष्ठत ? महात्मना उक्तं यत् स्वास्थ्यस्य असौष्ठवात् कस्यांचिदपि सभायां ममोपस्थानं न सम्भूतमासीत् । चिकित्सकैर्मित्रैश्च मद्रासमहासमायां मम गमनं निषिद्धं समभूत् । परन्तु तदुक्तमनादृत्य अहं तदभिप्रायेणैव महासभामागतो यत् महासभाया साहाय्यमाचरेयम् ।

अस्मिन्प्रश्ने यत् पूर्णस्वाधीनताप्रस्तावं भवा[न्]र्थयते ? महात्मा अवोचत्, यत् अहं न समर्थये पर चरणस्य नायं हेतुर्यत्तत्प्रस्तावविरोधिनः कथयन्ति । पूर्णस्वाधीनतायाः प्रस्तावः उपस्थापितः, तदानीं तत्समर्थनाभावस्य कारणमुक्तम् । मद्वचनस्य अर्थो ना यदहं भारतवर्षं पूर्णस्वाधीनतायोग्यं न मानयामि । पूर्णस्वाधीनतायोग्यम् अद्यापि नास्ति' अयं विचारो कदापि उत्पन्न एव न भवति ।

* * *

### हिन्दूयवनानामेकता ।

#### मालवीयमहोदयस्य गौरवपूर्णं भाषणम्

साधारणतया जनताधारणा इयमेव वर्तते यन्मह पण्डित मदनमोहन मालवीय-भाषणेनैव हिन्दूयवनैक्य वस्य विरोधा अवरुद्धाः । पण्डितवर्यस्य भाषणप्रभा मौ० अलीमहम्मदस्योपरि पतितः । यतः तत्रभवता णमद्भुतमभिहितं गौराङ्गेभ्यश्चैतद्वक्तुमारब्धं यद्भार संख्यकानां रक्षकः पण्डित मदनमोहनमालवीयोऽस्ति ।

पण्डितवर्यः स्वभाषणे उक्तवान्—भवद्भिः एत म्बन्धे बहु श्रुतम् । अहमपि एकं द्वे वा वचः भवद्भ्य ष्यामि । अस्य प्रस्तावस्य उद्देश्यं मतभेदनिवर्त्तनम् प्रशमनम् सम्भूय स्वराज्यपथप्रवर्त्तनं चास्ति । पृथग्वि वार्त्ता परित्यक्ता । अहं श्रीगौरीशङ्करमिश्रेण एक

...त्व विशेषप्रतिनिधित्वपरित्यागम् । वयं सर्वप्रयत्नेन करिष्यामः, अन्ततश्च मतविभेदे उपस्थिते तं निवारयि-... । हिन्दुयवनैक्यव्यवस्थापक सभाया एकप्रतिनिधिनिर्वाचने ...ना प्रकल्पनीया । स प्रतिनिधिः हिन्दूः, यवनः, पारसीकः ...भारतीयो, एव वा, किं न भवतु स इदमेव विचारयतु, यद्, ...भारतीयोऽस्मि, मया भारतस्य आवश्यकता पूरणीया । इति ...प्रस्तावे उक्तमस्ति यदुत्तरपश्चिमसीमाप्रान्ते न्यायकार्यं भवतु, यथा अन्यप्रान्तेषु भवति । भाषाभेदमाश्रित्य ...विभाजनविषये केवलमेतदेव कथितं यत् प्रान्तस्तदैव पृथक् यदा प्रान्तनिवासिनस्तथा अभिलषन्ति । देशस्य ...कृत्यैव प्रान्तस्य विभागो भवितुमर्हति । ईदृ...शां महासभा प्रान्त-विभागे न विरुद्धा भविष्यन्ति ।

हिन्दूयवनैकतासम्बन्धे महात्मना कथितं यत्, हिन्दवो मन्दिरसमक्षं वाद्यानि न वादयन्तु, यवनाश्च गोवधं मा... । यवनाः कथयन्ति अस्माकं गोवधे अधिकारोऽस्ति । भारतवर्षस्य इतिहासः कथयति यत्, गोवधेन हिन्दूहृदयानि ...तीव्रपीडामनुभवन्ति । कश्मीरस्य एकनरेशः गोवधमन्या-यं कथयत् । वावेरेण वसीयतनामपत्रे एवमेव लिखितम् । ...नीतिः यावद् अकबरराज्यसमयं कार्ये परिणता, परन्तु ...प्रभृति लण्डननिवासिनाम् आगमनं तदाप्रभृति भारते गोवधप्रचार अवर्द्धत । गोवधविषये यवनैर्हिन्दुभावानाम्, मन्दिरेषु वाद्यविषये हिन्दुभिः यवनभावानाम्, समादरः ...। एवमनुष्ठिते गोवधस्तत्फलीभूतो हिन्दूयवनविरोधश्च उन्मूलितौ भवेताम् ।

यवना वाञ्छन्ति यत्तेषां जमायतीनमाजसमये विघ्नो ...। हिन्दुभिस्तदिच्छाया आदरः करणीयः । गोवधस्य मन्दिरसमक्षं वाद्यवादनस्य च निरोधाय न्यायालयशरणाश्र-...लोष्ठमुद्गरादिप्रहारो वा निषेध्य एव भवतु । अयं प्रस्तावः ...नां एकपदमग्रे वर्द्धयति । न्यायालया अस्माकं वास्तवि-...सहायतां नाचरन्ति, किन्तु ते पर्यायेण जातिद्वयस्य साहायकं ...केवलं विभेदं जनयन्ति ।

...यदा प्रभृति शासनसुधारः समारब्धः तदाप्रभृति केचन ...इमान् विरोधान् महतीं काष्ठामारोप्य वर्णयन्ति । ...इदं वक्तुमिच्छन्ति यद् वयं परस्परमेव कलहायामहे स्वराज्ययोग्या न स्मः । अस्माभिरल्पाल्पमतभेदा नैव कर्त्तव्याः । अस्माभिः स समयो ध्येयः, यदा आस्माकीनाः पोताः, अस्माकैरेव लोकैः संचाल्यमानाः, अस्मदीयाः पताकाः स्फारयन्तः, भारतमहासागरे विचरिष्यन्ति । वयमिच्छामो यत् अस्माकं स्वकीया सेना भवतु, यत्र अस्मदीया एव मनुष्याः सेनापतयः सेनाधिपतयश्च भवन्तु । वयमिच्छामः, यत् अस्मद्देशविभागे पारेलक्षसमुद्रं पारेत्रयोदशसरिच्च मनुष्या न प्रविशन्तु । वयमिच्छामः, यत् व्यापारेषु, राजनीतिषु, जलसेनासु, स्थलसेनासु प्रत्येकं कार्येषु च भारतीया एव भवन्तु । इदं सर्वम् एकेन सम्प्रदायेन साधयितुं दुःशकम् इति सम्भूय सर्वैः सम्प्रदायैः साधयितव्यम् । डा० अनसारी सेनापतिर्भवितुं शक्नोति, मदनमोहनमालवीयश्च शिक्षासचिवो भवितुं शक्नोति । देशे प्रेम शान्तिश्च भविष्यति, हिन्दवो यवनाश्च एकस्यैव ईश्वरस्य उपासकाः । ते एकस्या एव भारतमातुः सन्ततयः । मुष्टिपरिमाणा गौराङ्गाः क्रोशत्रिसहस्राद् दूराद् आगत्य अस्मान् शासति । भवद्भिरेष कलङ्कः प्रक्षाल्य प्रोन्मूलनीयः । यदि हिन्दवो, यवना ईसवीयभारतीयाश्च सर्वे सम्भूय एकमतीभवन्तु यत् सर्वेषाम् एक एवेश्वरः अस्ति, सर्वेषाम् एकैव माता भरतमाता तर्हि लण्डनसमाजे एतावती शक्तिर्नास्ति यद् एकमासमपि अस्माकमुपरि शासनं कुर्यात् ।

* * * *

## भारतमहासभायाः सफलता ।

### डा० अनसारिणो विचाराः ।

### देशदुर्लभदृश्यदर्शनम् ।

डा० अनसारिणा भारतमहासभाकार्यसम्बन्धे असोसिएटेड-मुद्रणालय प्रतिनिधिप्रश्ने राष्ट्रपतित्वेन स्वीया विचाराः प्रकटिताः । यद्यपि तेषां वदने कार्याधिक्यश्रान्तिसूचकानि चिह्नानि दृश्यन्तेस्म, तथापि ते प्रसन्नचेतस आसन् । तैः स्वप्रकाशमानमुखेन कथितम्—

अस्माभिस्तत्प्राप्तं यत्, सन्देहवादिनः असम्भवं वर्णयन्तिस्म । मया तदभूतपूर्वं दृश्यं कदापि न विस्मर्येत, यत्र सर्वसम्प्रदायानां विंशतिः सहस्रामिताः सत्या भारतीया एकीभूय

सम्प्रदायकलहं प्रशमयितुं स्वीयं निर्णयं घोषितवन्तः, येन अद्यत्वेऽपि अस्माकं मातृभूमिर्मलिनीकृता । एकतायाः प्रस्ताव इतरप्रस्तावानुसारं न केवलं स्वीकृतः, किन्तु यदा स स्वीकृतः, तद् वातावरणम् अदृश्यत तदा यद् अद्यत्वे दुर्लभो बोभूयते । इदं विलोक्य अस्माकं बहवो निराशावादिनो विश्वस्युर्यत्, साइमनकमीशननियुक्तिद्वारा भारतस्य योऽपमानः कृतः, तद्विरोधे अयं प्रस्तावः वस्तुतो राष्ट्रनिश्चय आसीत् । सम्राड्-अमानुल्लाखानस्य अस्मद्देशे आगमनसमयस्य हार्दिकं क्षोभकं च भाषणं, साधुचरितस्य गान्धीमहात्मनः प्रभावः, श्रीश्रीनिवासैयंगरस्य स्फूर्त्तिः, भारतीयस्वाधीनतायै महद् युद्धं कुर्वाणस्य पण्डित मदनमोहनमालवीयस्य देशभक्तिः, तथा तेषामेकतासम्बन्धिनी गौरवपूर्णा वक्तृता च सर्वमिदं सहनशीलतायाः सद्भावस्य च सत्यं वातावरणमुत्पादयितुं संजघटे ।

अस्माभिः साधु सम्यक्प्रकारेण आरम्भः कृतः, परन्तु विगताभिः कियतीभिदुर्घटनाभिर्जनितं विभेदं पूर्णतः प्रशमयितुं बहुकर्त्तुमवशिष्टम् । महासभया शान्त्यर्थं अमूल्योऽयमवसरः प्रदत्तः । ततोऽस्माभिर्लाभो ग्रहीतव्यः । अहं प्रत्येकं भारतीयं प्रार्थये, यत् स समस्तसाम्प्रदायिकेषु एकतां जनयितुं स्वकर्त्तव्यं जानातु, देशस्य सर्वस्मिन् राजनीतिककार्ये एकताया इदमपूर्वमुदाहरणं समक्षमादधातु । अहमाशासे, यद् वयं साइमनकमीशनबहिष्कारसफलतायै देशार्थम् पृथक्शासनयोजनायै च समर्थयामहे ; या सर्वस्य देशवासिनः प्रार्थनां पूरयिष्यति । अहं पूर्णाशया उत्साहेन परावर्त्ते अहं विश्वसिमि, यत्, अग्रिमं वर्षं अस्माकं देशस्य इतिहासदृष्ट्या महत्वपूर्णं भविष्यति, महासभा चेदं स्मरणीयं विधास्यति ।

—:०:—

## सुप्रभातस्य विशिष्टाङ्कः ।

सुप्रभातस्य चतुर्थवर्षीया प्रथमसंख्या विशिष्टाङ्क रूपेण प्रकाशिता भविष्यति । एतस्मिन् विशेषाङ्के त्रिवर्णचित्राणि, साधारणचित्राणि, प्रचुराणि पत्राणि च भविष्यन्ति । लेखाश्च महतां विदुषां स्थास्यन्ति । एष समारम्भो सर्वथा-नवीन एव । एतस्य व्ययो न्यूनतः २९०) मुद्रामितः स्यात् । एतदायोजनस्य भारः सुप्रभात-पाठकानां सहृदयतामेवावलम्बते । तैर्यथाशक्ति प्रत्येकं सर्वविधं साहाय्यं प्रेषणीयम् ।

—व्यवस्थापकः



# सम्पादकीयम् ।

वाद्य-प्रश्नः ।

मद्रासनगरे राष्ट्रिय-महासभाया वार्षि... त्सवे हिन्दूनां यवनानाञ्च स्नेह-सम्बन्धस्य... करणाय माननीयैर्गान्धि-मालवीय-प्रभृतिभि... यत्, यवना गोवधं त्यजन्तु, हिन्दवश्च त... णामग्रे वाद्य-वादनं माकुर्युरिति । सर्वैरपे... वो मालवीय-महोदयानामाग्रहेण स्वी... माननीयैर्मालवीय-महोदयैश्च गान्धिवत्... शतिमासाभ्यन्तरे स्वराज्यप्राप्तिरुद्घोषिता... स्माकमल्पज्ञानां संस्कृतज्ञानां विचार-प्र... शोभते, तथापि वयमनुमिनुमः, यत्, रा... सङ्घस्य ( रायलकमीशन ) महति विप्लवे दे... सम्पादनाय नेतारः कुर्वन्तु नाम सभा-मङ्ग... भिनयम्; परं 'प्राप्ते वसन्तसमये काकः... पिकः पिक' एव भविष्यति । नाद्यावधि... मन्दिराणां सविधे वाद्यवादनस्य प्रतिबन्धः... समाकर्णित आसीत् । तच्च हिन्दूनां देशे... कर्तव्यमेव । तत्र यदि विधर्माणः काम... माचरेयुस्तदा सुखमाचरन्तु । हन्त ! ... सङ्ख्यकानाम्, स्वं विदेशीयं मन्यमा... दरिद्राणां यवनानां भिया वयं स्वदेशेऽपि ... महोत्सवानवरोत्स्यामः ? अन्येषु देशेषु ... सङ्ख्यका वैदेशिका यथा निवसन्ति, तथैव...

ु नाम मोहमदा अस्माकं देशे । अस्माकं देशे, ाकं रक्तैः पुष्टानां दरिद्राणां दासानां वर्वराणा-ाकमुपरि निर्भयं मूर्खताप्रयुक्तञ्च शासनं ावेदस्माकं हिन्दूनां जनिरेव व्यर्था । यदा ं सर्वतः सर्वथा च समुन्नतिमारूढाना ूल्लानां हस्तात् स्वं देशमाक्रष्टुमीहामहे, तदा ाम मुष्टिमेया दासप्राया यवनाः ! अस्माभिस्तु ते सर्वेषां भारत-प्रवासिनां विधर्मिणामुपरि यत्वेन पोषकत्वेन च स्थातव्यम् । वयम्; माकं देशः, अस्माकं धनम्, सर्वं हिन्दूनां विद्यते। तावदस्माकं छत्रच्छायायां निवसन्ति ते म्मद-पारसीक-ईसवीय-धर्मावलम्बिनोऽस्माक-जीव्याः । त एव यदि हिन्दूनामुपरि शासनं न्ति चेत् कृतं स्वाराज्य-योग्यतया । मोहम्मदीयै-वीयैः पारसीकैः भारतीयैर्हिन्दूभिः सह तथा तव्यम्; यथा अन्येषूपनिवेशेषु वैदेशिका ष्ठन्ति । हिन्दवस्तु स्वोपजीविनां सर्वासां ल्पसंख्यकानां जातीनां प्रेम्णा, धनेन, अन्यैश्च ारैः पोषणं कुर्वन्ति, ते तु दुष्टाः विषमुद्गिरन्तीति नीतिकदृष्ट्या, नैतिकदृष्ट्या, सामाजिकदृष्ट्या हिन्दूनां कृते नितरां हानिजनकम् । अस्माभिस्तु पामेव स्वतन्त्रदेशानां पुरः सर्वेषां विध-र्मिणां स्वाङ्केषु निवेशनं कृत्वा, केवलं हिन्दुत्वेना-स्थातव्यम् । तदा हिन्दूनां नैतिकी योग्यता मस्तेऽपि भूमण्डले प्रत्यक्षं प्रतीयेत । अत्रतु वयं जन्मसिद्धमधिकारं त्यक्त्वा सहजशत्रूणां यवनानां ादुकारा भवामः इति न कदापि कल्याणक-स्माकमिति सुधीरं विवेचनीयोऽयं प्रश्नः ।

* * *

*गोवध-निषेधः ।*

गोवध-निषेध विषये माननीयैर्मालवीयमहो-दयैर्यवनाः प्रार्थिताः, यत्ते 'गोवधं मा कुर्वन्तु'। एकतः ख्वाजाहसननिजामी प्रभृतयो बहवो गोवध-प्रचाराय सततं प्रयतन्ते, अन्यतो मालवीय-महोदयाः पञ्चष-यवनानां विश्वासेन गोवधनिषेधं कुर्वन्ति । हिन्दवस्तु पूज्यपादानां मालवीय-महोदयानामाज्ञया वाद्यं न वादयिष्यन्ति, परन्तु यवनाः मोहम्मद-अली प्रभृतिनां कथनेन न गोवधं रोत्स्यन्ति । प्रत्युत ख्वाजाप्रभृतीनां कथनेन विशिष्टतया करिष्यन्ति । एतेनास्माकं हानिरेव भविष्यति । गोवधस्य निषेधोऽपि न भविष्यति । यवनास्तु निभृतं शून्यमन्दिरेषु सुखं स्वच्छन्दं गोवधं करिष्यन्त्येव, परन्तु वराका हिन्दव एव वाद्यं वादयितुं न प्रभविष्यन्तीति प्रत्यक्षं प्रतीयते । दैववशात् यदि यवनाः गोवधं त्यक्ष्यन्त्यपि, तदापि आङ्ग्लास्तु करिष्यन्त्येव । यवनास्तु स्वल्पमेव गोवधं कुर्वन्ति, आधिक्येन तु आँग्ला एव । एवं स्थिते नैतावता कार्यं सेत्स्यति । गोवधविषये प्रान्तीयासु व्यवस्थासभासु, प्रधान-व्यवस्थासभायाञ्च हिन्दुभिर्यवनैश्च मिलित्वा प्रस्तावाः स्वीकारयितव्याः, यत्, "दुग्धेन, घृतेन च विना भारतीयानां पुंस्त्वमेव शनैः शनैर्व्यपगच्छति । बालाः, युवानश्च प्रत्यहं क्षीणतां भजन्ते । भारतीयं सर्वस्वं कृषि र्हि नाम गवां विना न भविष्यति चेद्, वयं बुभुक्षिता एव मरिष्याम इति भारते स्वास्थ्यदृष्ट्या, आर्थिकया च दृष्ट्या सर्वथा गवां संरक्षणं विधेयम् ।' भारते गोवध एव न स्यादितिराजकीयनियम एव भवेत् । भारतीयं स्वास्थ्यं गवां संरक्षणेन,

सम्वर्द्धनेन च स्यादिति गोचिकित्सा-शास्त्रस्य गोपालन-पद्धतेश्च प्रचाराय महानारम्भो विधेय इति । यदि सर्वेऽपि भारतीया व्यवस्थासभासु ऐकमत्येन प्रस्तावमिमं सन्निवेशयेयुः, सर्वत्र भारते सर्वधर्मिणाश्च महदान्दोलनं कुर्युश्चेत् गोरक्षा भवितुमर्हन्ति । नो चेत् प्रस्तावैर्भाषणैर्वा गोवध-निषेधो दुर्वार एव ।

*  *  *  *

*हिन्दू सम्मेलनम् ।*

तत्रैव कांग्रेसनगरे हिन्दूमहासभाया हिन्दूसम्मेलनं माननीयानां श्रीमतां मालवीय-महोदयानां सभापतित्वे सम्पन्नम् । तत्र च महामान्यानां मालवीयानामयं निदेशो नितरां स्पृहणीयः, समादरणीयः, समाचरणीयश्चासीत्, यत्, हिन्दुभि र्हिन्दूधर्म प्रचाराय ईशवीय-प्रचारकाणां ( पादरी ) नीतिरवलम्बनीया । धार्मिक-प्रचाराय यादृशी नीतिः साम्प्रतमीशवीयानां विद्यते, तादृशी न कुत्रापि । ईशवीयैः प्रचारकैः शतवर्षाभ्यन्तरे शान्त्या धर्म-प्रचारः कृतः, तथा च साफल्यमनुभूतं यथा नान्येन केनापि । आर्यसमाजस्य संस्थापनमेतेषामेव निरोधायाभूत्, परन्तु नाद्यावधि यत्रकुत्राऽपीशवीयधर्मप्रचारकाणामन्यधर्मिभिः सह विवादोऽपि श्रुतः । तैः शतवर्षाभ्यन्तरे निभृतं शनैश्च यावत् साफल्यं लब्धम्, तावत्सप्तशतवर्षाभ्यन्तरे यवननृपतिभिरत्याचारेण, भयानकैश्चोपायैर्न प्राप्तमासीदिति प्रत्यक्षमेव । परमेतस्य कृते तादृशा एव ब्राह्मणाः, सन्यासिनश्चापेक्षन्ते ये खिष्टधर्मप्रचारकाणामिव, सहनशीलाः, सदाचाराः, स्वधर्म-दृढव्रताः, स्निग्धहृदयाः, तितीक्षवश्च स्युः । नोचेदनर्थ एव । एतादृशस्य हिन्दूसङ्घस्य ( मिशन ) संस्थापनाय सुधीरमालोचनीयम् नियमाश्च पालनीयाः, सुदृढाः, सत्याश्च स्युः प्रचाराय व्ययश्च प्रचुरः स्यात् । यत्रत शुद्धिसभा-हिन्दूसभाप्रभृतीनां विविधानां स मेकीकरणं विधाय प्रतिनगरं प्रति ग्रामं हि स्यैव ( Hindu Mission ) संस्थापनं स सर्वेषां सङ्घानां सञ्चालन-प्रचारण-नियमनादि समान एव स्यात् । एकैव कार्यप्रणाली सर्वत्र व्यवहृता भवेत्तदाकार्यमिदं सम्यक् प्रचलि सम्भाव्यते । अत्र सर्वैरपि प्रचारकैरवधेयम्

*  *  *

*यवन-सम्मेलनम् ।*

दिसम्बरमासस्यान्तिमे सप्ताहे लवपुरे कालि यांञ्च यवन-सम्मेलन-द्वयमभूत् । यवनेषु दलद्वयमभूत वर्तन्ते, ये खलु सर्वथा धर्मान्धाः साम्प्रदायिकता- ग्रस्ताः, भारते यवनशासनं पुनरप्यानयितुमीहमाना काराः शफी-मोहानी-प्रभृतयो यवननेतारः । राष्ट्रवादिनो यवना अन्सारी-जिन्ना-मोहम्मदअली कलिकातायामस्य नवीनदलस्य सम्मेलनम्, लवपुरे नदलस्य जातम् । द्वयोरपि प्रस्तावास्तत्तद्भावानुरूपा यद्यपि यवनसमाजस्य कृते मतभेदोऽयं भयजनकस्तथा नां कृते राष्ट्रिय-हितदृष्ट्याऽपि दलद्वयमिदं भयजनक द्वैधे संस्थापिते कांग्रेस-महासभायाः साफल्यं वैफल्ये न स्यादिति विभीमः ।

*  *  *

माघमासस्याङ्कोऽपि मुद्रितप्रायएव, स समयात् प्रागेव ग्राहकाणां सविधे प्रहीयेत । काङ्क कृते लेखकैः शिवरात्रितः प्रागेव लेखाः प्र

…नधर्म महासभा ।

श्रीमतां माननीयानां मालवीय-महोदयानां …ति माघ-शुक्लैकादशीमारभ्य सप्तदिवसानि-…प्रयागक्षेत्रे त्रिवेणीतटे सनातनधर्म-महास-…सम्मेलनस्य च पुनः सङ्घटनाय, प्रतिनग-प्रतिग्रामम् च सनातनधर्मसभा-शाखा-संस्था-…य, सनातनधर्मिषु विलुप्तप्रायाणां धार्मिकभा-पुनः समुद्बोधनाय महान् समारम्भो भविष्य-…विदितचरमेव स्यात् प्रायःपत्रपाठकानाम् । एतस्य विशिष्टान् समाचारान् पुनः प्रकाशयि-…। साम्प्रतमिदमेव वक्तव्यमस्ति यत्, ये …तनधर्मानुयायिनां नेतारः सन्ति ब्राह्मणाः …स्ते समुचित-साहाय्याभावेन चिरं भाग्यमा-…मानाः सन्ति । साम्प्रतं ते सोत्साहं सभायां …य सनातनधर्म-प्रचारे प्रबलं प्रयत्नं विधातुं परिकरा भवन्तु ।

अस्माकमालस्येनैवैतत्सर्वमधःपतनमभूत् । अभिलषामो यत् कश्चिदागत्यास्मान् प्रार्थयेत्, …व, दापयेत्, प्रशंसां कुर्यात्, कार्य्यञ्च कुर्य्या-…। एतस्मादेव कारणात् पण्डितानां कार्यं न …ति। साम्प्रतं कर्मयुगे स्व-हस्तेनैव सर्वं सम्पा-…यम् । अतएवाऽस्मिन्नवसरे सर्वै संस्कृतज्ञैः …तनधर्मावलम्बिभिः पक्षपातं मात्सर्यं च …य विशुद्धहृदयेन सनातनधर्मप्रचारोपाया-…तनीयाः, समाचरणीयाः प्रचारणीयाश्च । …व ज्ञानस्य फलं यत्तस्य सर्वत्र वितरणम्, प्रचा-…। अस्मिन् महति कार्ये सहस्रशः संस्कृतज्ञाः …रकाः, कार्यकर्तारश्चापेक्ष्यन्ते । एतेन जीविका …त्यं हि नाम महान् दोषोऽस्माकमपनीयेत । …स्परं प्रेम-सम्बन्धश्च सुदृढो भवेत् । हार्दिकी …र्णता च दूरीभवेत् ।

---

…दिति । मन्ये सुधा-सम्पादकाः समुचितं …यिष्यन्तीति ।

सुधा ।

श्रावणमासात् 'नखलऊ'-नगरतः 'सुधा' नाम्नी सुन्दरी, सुवेषा, सुमनोहरा, सुरुचिपूर्णा, सुव्य-वस्थिता, सु-वर्ण-सन्निहिता, सुप्रकाशिता हिन्दी मासिकी पत्रिका प्रकाश्यते । तस्याः प्रथमां विहाय, पञ्च सङ्ख्याः सादरं सस्पृहं सामोदं समवलो-किता सत्यं सुधा-स्वादमासदयन्तीति वक्तुं सर्वथा-समुत्सहामहे । एतस्याः सञ्चालकः स एव कर्मवीरः सुशिक्षितः श्रीदुलारेलालभार्गवमहाशयो वर्तते, यः पूर्वं माधुरीं सञ्चालयाञ्चकार । अस्याः स-म्पादकौ-श्रीभार्गवमहाशयः श्रीरूपनारायण पाण्डेय महोदयश्च, इमावाश्विनेयौ हिन्दीसाहित्य-संसारं सुधां पाययितुं प्रवृत्तौ महतीं समाज-सेवां साहित्य-सेवाञ्च सम्पादयत इति परं प्रमोदमश्नुतेऽ-न्तरात्मा । यद्यपि व्यापारप्रचाराय महानार-म्भोऽयमिति केचन महात्मानः प्रलपन्ति, परन्तु भोजनं विना न कोऽपि किमपि कर्तुं क्षमः ! व्यापारस्य फलं समाज-सेवा, साहित्य-सेवा च । धनं विना कः किमपि कर्तुं प्रभविष्यति ? । अतोऽयं सर्वथा सभाजनीयः, समादरणीयश्च समारम्भः ।

अस्या मुद्रणम्, प्रकाशनम्, लेख-सौष्ठवम्, चित्र-चातुर्यम् चेत्यादिकं सर्वं सुधा सममेव । श्रद्धेयानां आचार्य-श्रीरामावतारशर्म्ममहोदया-नाम्, श्रीमतां सहृदय-धुरन्धराणां श्रीशालग्राम शास्त्रिमहोदयानाम्, श्रीरामदास गौड़ एम० ए० महोदयानां लेखाः विज्ञान-साहित्य-दर्शन-विषये परं महत्वमावहन्ति । अन्ये च लेखाः पठनीया भवन्ति, माधुरी-समुन्नतौ कृत-शक्तिव्ययानां सञ्चा-लकानां सत्वरमियती समुन्नतिः सभाजनीया वर्तते । अस्या मेकः "सुर-भारती" अथवा "संस्कृत-सुधा" नामकः कश्चन स्तम्भो नूनं भवेदिति सम्पादकान् प्रार्थयामः । यस्मिन् स्तम्भे संस्कृतकवीनां चरित्र-चित्रणम्, पुस्तकानां काव्यानामालोचनम्, अन्ये-षाञ्च संस्कृतसम्बन्धिविषयानां प्रकाशनमावश्यकं

## कामनापञ्चकम् ।

१

मिलिन्द-महिला मदीय-हृदयाम्बुजस्यासि चेत्
सदा च रसना-सुधा-सरसिकारसा सारसी ।
विलोचन-चकोरयो र्विबुधवाणि ! वा चन्द्रिका
सुरेश-विभवे भवेऽपि मम नैव भावो भवेत् ॥

२

श्रुतौ तव मम श्रुतिर्यदि महोत्सवं मन्यते
तवैव वदनं मदीयवदनं ब्रूतं वेद वा ।
तवैव परिचर्यया भवति धर्मचर्याऽथवा
धनाधिप-धनाधिपत्यमपि धन्यतायै न मे ॥

३

त्वयव रमणीमुखेन्दु रमणीयता तन्यते
त्वया यदि कलीकृता सकलकालिका काकली ।
त्वया भुवि कुमारका अमरवाक् ! कुमारन्ति वा
न कश्चिदपि किञ्चन क्वचिदकिञ्चनोऽप्यर्थये ॥

४

त्वयीह कलयन्ति मे बहु कुतूहलं किङ्कराः
त्वदीय पद सेविकाऽस्त्यशिव-शारिका शारिका ।
तवाऽभ्यसनतः सुखी शुकति गामको वा शुकः
शिवाय न शिवं शिवां च मनसापि सम्मानये ॥

५

त्वमेव परिपठचसे निखिल-पाठशालासु चेत्
सभासु च मनीषिणामुत सभासु सम्भाष्यसे ।
त्वमेव यदि भारती भवसि भारती भारति !
स्वराज्यमपि सार्वभौम मयि ! नैव सम्भावये ॥

—श्रीईश्वरीदत्तः दौर्गादत्तिः

## संस्कृत-समाचाराः

### श्रीगीता जयन्ती ।

राजस्थानप्रान्तस्य प्रसिद्धे नगरे श्रीगीताजयन्ती महोत्सवो शीर्ष-शुक्लैकादश्यां विशाले मन्दिरे महता समारम्भेण सु समभूत् । उपस्थितिः प्राय एक न्वितासीत् । सर्व प्रथमं चू स्थ विद्याभास्कर-श्री पं० क शर्मढएढोपाह्वाः श्रीगीतापूज श्च विदधुः । तत एतेषामेववि वृद्धविद्वद्धुरीणानां गीताविषये भाषणं समभवत् । पुनः जयपु सिद्धवक्तृनेतृस्वामिनृसिंहदेवस महोदयानाम् प्रभावशालि सिंहगर्जनमिव गातायाः विषये—एक वादनतश्चतुर्वा न्तम् समजनि । पश्चात् प्रसा दानान्तरं महोत्सवो विसर्जि

स० मंत्री, सनातन धर्म सभा, चूरू (बीकानेर) } श्रीवासुदे

### श्रीराजस्थान ऋषिकुल ब्रह्मच

श्रीराजस्थान-ऋषिकुल-ब्र श्रमस्य नवमो वार्षिकोत्सवः न्याश्विनमासे शुक्लपक्ष ९-१०-१ षु भविष्यति । चैत्रे वैशाखे च आधिक्यात् वाह्यसज्जनानामुप सम्यग्भविष्यतीति परिवर्तनमि तम् । नूतनाः ब्रह्मचारिणस्तु १ ता० चैत्र शु० १५ पर्यन्तमेव भविष्यन्ति । नूतनपाठ्यस्या तदैव भविष्यति । ५ ब्राह्मणबा

## घनश्यामदास-बिडला-महोदयस्य,

[ एम० एल० ए० ]

द्वीपान्तरात्परावृत्तौ—

# अभिनन्दनम् ।

—◆◆◆—

र्तिं विशदां जगत्सु ललितां लोका विलोक्यातुलाम्,
लीमथवा मृणालपटलीं लोके स्थितां मन्वते ।
भारत मर्थचिन्तनचणो हिन्दुत्व-संरक्षकः,
ज्ञान-विशारदो विजयते सौभाग्यभूतो भुवः ॥
तं नोऽजनि जनिमतां दर्शनीयो महीया-
तोऽयं नयनपदवी मद्य पुण्यैः सुदीर्घैः ।
नस्तम्भं सुदृढमतुलं तत्र देशे निचरुनन्
वीरः सुविदितयशाः श्रीघनश्यामदासः ।

श्री गोपिकाजनवृतो मुरमर्दनोऽसौ,
मान् यस्य सर्वजगतां तव शं विदध्यात् ।
घ स्यैव साम्यमधुना विकिरन् धनानि,
न श्याममेघसमतां लभतां कथञ्चित् ॥
श्या मोऽप्ययादवकुलोद्भव एष धीरो
म श्चापि दिग्वसनतामुपलभ्यते नो ।
दा सोऽपि भारतभुवोऽखिल-भारहर्ता
स न्तानवर्गसहितो भवताच्चिरायुः ॥
वि धुन्निभो हि जडता भवतः शरीरे,
ड श्चाप्यडो रिपुगणस्य च डो जयस्य ।
ला भार्थिनां भुवन-भूषण-कल्पवृक्षः
लोकत्रये विजयतां सह पुत्र-पौत्रैः ॥

पुर-संस्कृत-विद्यालयः,
पुर, (पटना) } —श्रीगिरिजानन्दमिश्रः

—❧:*:❧—

क्षत्रियबालकाः, ५ वैश्यबालकाश्च प्रवेद्यन्ते । मासिकं शुल्कं ८) रुप्यकाः भविष्यन्ति । त्वरितमेव प्रार्थना-पत्राणि प्रहीयन्ताम् स्वबालकान् प्रविवेशयिषुभिः ।

रतनगढ़ } अधिष्ठाता क्षेमचन्द्रः
बीकानेर } ऋषिकुल

### अलवरनगरे सुप्रभातम् ।

शीतावकाशे दिसम्बरमासस्य २८ तमे दिवसे रणवीर-पाठशाला ( हिन्दूविश्वविद्यालय ) अध्यापकाः सुप्रभात-सम्पादकाः श्री केदारनाथशर्म्माणः सारस्वत-महोदयाः संस्कृत-महत्त्व-प्रचाराय सुप्रभात-प्रचाराय च अलवरनगरे समागमन् । तत्र च पूज्यपादानां योगिवर्य्याणां महात्मनां श्रीमथुरानाथ-महोदयानां प्रशान्त-पावने आश्रमे स्थितिमकुर्वन् । २९ तमे दिवसे श्रीजगन्नाथमन्दिरे सनातन-धर्म-सभाद्वारा तेषां भाषणमभूत् ।

सभायाञ्च सर्वेषामेव शिक्षितानामलवर निवासिनां स्थितिरासीत् । प्रधानराज-कर्मचारिणश्च समागता आसन् । प्रधानन्यायाध्यक्षाः ( अपीलाएट ) माननीय रामभद्रओझा एम० ए०, एल्० एल्० बी० महोदयानामुपस्थितिर्विशेषत आसीत् ।

प्रारम्भे राजपण्डितैः श्रीचन्द्रदत्तशास्त्रि-महानुभावैः प्रदत्ते सभापरिचये प्रधान व्याख्यातॄणां भाषणं ६ वादनतः ७½ वादनं यावत् समभूत् । व्याख्याने च सुप्रभात-सम्पादकेन संस्कृत भाषाया महत्वम्, तस्या आवश्यकता,

प्रचारोपायाश्च प्रदर्शिताः। काश्यां संस्थापितस्य संस्कृत-साहित्य-समाजस्य, संस्कृतच्छात्रसङ्घस्य, संस्कृत-साहित्य-विद्यालयस्य, सुप्रभातस्य च पवित्रा उद्देशाश्च वर्णिताः। संस्कृत-महत्व-विषये तत्प्रचार-विषये च अलवरराज्ये भाषणमिदं प्रथमं सुस्पष्टम्, सरलम्, हृदयङ्गमञ्चासीत्। ग्राम-पण्डितेषु विशुद्ध-संस्कृतोच्चारणकृते, संस्कारशुद्धौ च विशेषतस्तैर्ध्यानमाकृष्टम्।

अन्ते च माननीयै राजपण्डितमहोदयैः तेषां भाषणस्य सारांशः, सरल-सङ्क्षिप्ततया प्रदर्शितः। सभाविसर्जनञ्चाभूत्।

व्याख्यान-प्रबन्धे मानन यानां न्यायाधीशानां रामभद्र-महोदयानां, पुलिस सुपरिन्टेण्डेन्ट-महोदयस्य, श्री रामचन्द्रशर्म्ममहोदयस्य च सदुत्साहः प्रशंसनीय आसीत्। अतस्ते धन्यवादार्हाः।

निवेदकः—

श्री दुर्गादत्तशर्म्मा, (अलवरस्थः)

---

## आरा-विद्वत-समिति-परीक्षाः

वर्षेऽस्मिन् आरा-विद्वत्समितिसंस्कृतोपाधि-परीक्षा आगामिवैशाखमासस्य कृष्णद्वितीया शनिवारतः- (ता० ७—१० अप्रिल १९२८ ई०) कृष्ण-पञ्चमी भौमवारं यावद् गृहीता भविष्यन्ति। तत्र परीक्षार्थिभिर्माघमासस्य पूर्णिमातिथेरर्वागेवावेद-नीयम्। मुद्रितान्यावेदनपत्राणि जिज्ञासया त्वरितं कार्यालयत प्रहितानि भविष्यन्ति। तानि च यथा-स्थानं परीक्षानियमानुसारतः शीघ्रं कार्यालये प्रेषणीयानीति—

आरा
५।१।२८

श्रीयुगलकिशोर झा शर्मणः
उपमन्त्रिणः
विद्वत्समितेः

## राष्ट्रभाषाभूषणम्।

ले०—श्रीगोपाल शास्त्री, दर्शनकेशरी, साहि...

एतत् पुस्तकं हिन्दीभाषायां विरचितं ... ज्ञानां हिन्दीज्ञाने नितरामुपकारजनकम्। संस्कृतज्ञैरेतद् व्याकरणम् पठनीयम्। ... भाषायां निबन्धलेखन–अनुवादादिज्ञाने ... स्यात्। मूल्यम् आणकचतुष्टम्। मार्ग...

## सूर्यचरितम् वा ऋतुचरितम्

### नूतनं महाकाव्यम्।

ले०—श्रीमान् तारादत्तपन्तः, साहित्याचा... व्याकरण-काव्य-तीर्थः

### गोलविद्या-विषयकं नूतनं महाकाव्य...

अतिसरलम्, भारतस्य विभिन्नदेशा... पर्वतानां ऋतूनां चात्र परिचयो कविना ... सरण्या समुपवर्णितः। गोलविषये नूतनं महाकाव्यम्। सर्वथा द्रष्टव्यम्। सुप्रभा... कानां कृते मूल्यम्—॥) मार्गव्ययः पृ...

## गोलविद्या गोलसूत्रञ्च

ले०—श्रीतारादत्तपन्तः, साहित्याचार्यः, काव्य...

संस्कृते भूगोलज्ञानस्य प्रधानं प्रथम... कम्। अत्र हिन्दी-भूगोल-पुस्तकवत् भा... समस्तो भूगोलः सरलतया बालानां ज्ञाना... वर्णितोऽस्ति। संस्कृत काव्येषु नाटकेषु पु... केषु च समागतानां देशानां नदीनां स्था... तानाञ्चाधुनिकीस्थितिस्तेषां नामानि च। सर्वथा द्रष्टव्यमिदं पुस्तकम्। मूल्यम् ग्राहकेभ्यः—।-) आनकाः

C/o. सुप्रभातम्, काशी

Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

माघ-फाल्गुनौ १९८४

...र्षवर्षे ] [ दशमी, एकादशी च सङ्ख्या

# सुप्रभातम् ।

संस्कृत-साहित्य-समाजस्य मासिकं मुखपत्रम् ।

तिमिरततिमुदस्यद्,
भेदतारा विलुम्पन्,
नयदधि सुरभाषाभाषि-
जागर्तिभावम् ।
विबुध-विहग-वादै-
राह्वयद् भाग्य-भानुम्,
विलसतु भुवनेऽस्मिन्
सर्वतः 'सुप्रभातम्'

...कमूल्यम् ३)
...केभ्यः १॥)

माननीयेभ्यः १२)
वैदेशिकेभ्यः ६)

सम्पादकः—

श्रीकेदारनाथशर्म्मा, सारस्वतः

व्यवस्थापकः—

श्रीगिरीशशर्म्मा, शुक्लः, न्यायाचार्यः

प्राप्तिस्थानम्—

सुप्रभातकार्यालयः, काशी ।

# लेख-सूची।



—:०:—

# सुप्रभातम्।

विविध विषय-विभूषितम्, अद्वितीयम्, संस्कृत-मासिक-पत्रम्।

...र्ष-वर्षे | माघः, फाल्गुनश्च। १९८४ वैक्रमाब्दाः | १०-११-संख्ये



## आशंसा।

कियच्चिरं भारति! भारतं तव प्रसादमासादयितुं प्रतान्तताम्।
पुना रसज्ञासु निषिच्यतां सुधा यया बुधाः स्युर्विविधाऽबुधा अपि ॥ १ ॥

भवन्तु वल्मीकभवा भवान्तरे गिरश्च कल्याणकरीः किरन्तु ते।
यथा शरै रामधनुर्विनिर्गतैः शिरांसि भूमौ विलुठन्तु रक्षसाम् ॥ २ ॥

पुनश्च पुत्राः पितृशासने स्थितास्तृणाय मत्वा निजसौख्यसंपदः।
जिगीषया यान्तु विदेशमम्भसां निधिं च मथ्नन्तु बलैर्महोर्जितैः ॥ ३ ॥

पुनः शवर्यस्तु जनेन मानिता लभेत गृध्रोऽपि निवापसत्क्रियाम् ।
न ना निषादोऽपि विषादमुद्वहेत्तिरस्कृतः किन्तु पुरस्कृतो भवेत् ॥ ४ ॥

भवन्तु मित्राणि न केवलं नराः स्ववानरा अप्यनुकूलचारिणः ।
यथा जयः स्यात् सकले महीतले पुनः पुनर्भारतभूमिजन्मनाम् ॥ ५ ॥

सहस्रशः सन्तु विशालबुद्धयो विवेकिनः सत्यवतीसुताः पुनः ।
यदीयवाग्वीर्यनवीकृता जना भवन्तु सर्वे दृढकर्मयोगिनः ॥ ६ ॥

पुनः कलं कूजतु कालिदासवाग् वदावदानानि च वाणवाणि ! नः ।
दलन्तु भूयो भवभूतिभाषितानुभावभूम्ना हृदयानि भूभृताम् ॥ ७ ॥

पुनर्गृहं स्वर्ग-समानतां व्रजेत् प्रवर्धतां बन्धुषु हार्दमच्छलम् ।
समादरः स्यादुचितः कुलस्त्रिया विनाशमभ्येतु कलेर्विडम्बनम् ॥ ८ ॥

न मानभङ्गः पुरुषस्य जातुचिन्न धर्षणं स्यान्महिलाकुलस्य नः ।
न कोऽपि निक्षेप्तुमलं बलाधिकः प्रसह्य संरोषकषायितां दृशम् ॥ ६ ॥

भवन्तु भूयो वृषभा धुरन्धराः प्रमोदमेदस्वि च दोग्धृधेनुकम् ।
निकामवृष्टिः फलिना कृषिस्तथा समृध्यतात्तत्फलभोगयोग्यता ॥ १० ॥

न धर्मभारुत्व मपेतसाहसं विवेक-विश्रान्त मर्भाप्सितं भवेत् ।
जनाः पुनर्धर्मविधानकोविदा भजन्तु लोकद्वयसिद्धिहेतुताम् ॥ ११ ॥

तपस्विता तिष्ठतु सिद्धिकामुके सुशिष्यवर्गे विनयादिभूषिता ।
यथा विहायानुकृतिं परस्य स प्रवर्त्तयेदुन्नतिनूत्नपद्धतिम् ॥ १२ ॥

स्वयं प्रदुग्धां गुरुमण्डली धियं स्वशिष्यवत्सोत्सुकता मुपागता ।
न बुद्धिपण्या वणिजो भवन्तु ते न चेतरो वृत्तिमिमां कदर्थयेत ॥ १३ ॥

अधीत्य विद्यामिह शिक्षिता जनाः समस्तबुद्धीन्द्रियकर्मपेशलाः ।
श्ववृत्तिमुत्सृज्य नितान्तगर्हितां स्ववृत्तिमालम्ब्य विहर्त्तुमीशताम् ॥ १४ ॥

परोपकारैकपरायणाः परात्परे निमग्नाश्च भवन्तु लिङ्गिनः ।
न पूपसंयावपयस्यभक्षणात् पिचण्डिला दारधनापहारकाः ॥ १५ ॥

मधु क्षरन्त्यः प्रवहन्तु सिन्धवः प्रजायतां नो मधुमान् वनस्पतिः ।
पुरेव भूयान्मधुमच्च पार्थिवं रजः परानन्दरसज्ञताऽस्तु नः ॥ १६ ॥

—श्रीकेशवप्रसाद मिश्रस्य ।



## सम्पादकीयम् ।

...व-विनिवेदनम् ।

सुप्रभातस्य माघाङ्को न निःसृतः। एतस्य प्रधानं कारणमस्माकं समयाभाव एवासीत्, माघमासस्य का कथा ? फाल्गुनेऽपि नासीत् समयः । यन्त्रा-...ध्यक्षाणामुत्साह प्रदर्शनेन केवलमेकस्मिन्नेव ...हे यथाकथमपि मुद्रापितमिदम् । बहवः प्राथि-...पि होलिका लेखा न प्रकाशिताः । तत्तैः क्षन्त-...। अन्यच्चापि-अस्य युग्माङ्कस्य सम्पादनं प्रका-...शा न जातम् । केवलं मुद्रापणमेवेति यदत्र ...नाशुद्धयस्युश्चेत्तदा क्षन्तव्यम् , संशोधनीयश्च । ...वयं प्रतिभुवः । चैत्राङ्कोऽपि शीघ्रमेव प्रकाशितः ...। वयमपि छात्रा एव । पठने, पाठने, जीवि-...ने, परीक्षायाम्, गृहकृत्येषु संलीनानामस्माकं ...न् समयोऽवशिष्येत इति जानन्त्येव भुक्त-...नः ।

* * * *

...ज-परीक्षाः ।

जानन्त्येव विद्वांसो यत्, मार्चमासस्य १२ ...तारिखादारभ्य काशीस्था राजकीयाः परीक्षाः ...स्याः भविष्यन्तीति । समयविषये तु परीक्षा-...धिकारिभिः सहृदयता सम्पादिता । अस्माकं प्रार्थनं स्वीकृत्य तैरेकमासात्मकः समयः परिव-र्द्धितः । तदर्थं तेभ्यो धन्यवादान् वितरामः ।

परमिदानीं प्रश्नविषयेऽपि वर्तते वक्तव्यमस्मा-कम्, यत्, साम्प्रतं नूतना आँग्लशिक्षादीक्षिताः परीक्षका भवन्ति । ते च प्रथमायां मध्यमायाञ्च कविसमयम्, अलङ्कारान्, समालोचनम् अन्यांश्च विविधान् विषयान् पृच्छन्ति । यद्यपि कलिकातादि परीक्षासु प्रथमत एवैवंविधाः प्रश्नाः समायान्ति, अत्र तु ग्रन्थज्ञान-विषयज्ञान विषयेष्वेव प्रश्नाः समागच्छन्ति स्म । अत्रत्याश्छात्रा अपि न तेषु व्यापकविषयेष्वभ्यासमाचरन्ति । छात्राणां का कथा ? तेषां गुरवोऽपि नैतस्मिन् विषये श्वेतं कृष्णं वा किमपि जानन्ति । प्रथमं सहृदयैः परीक्षाध्यक्ष-महोदयैरेतेषां विषयाणां पुस्तकप्रबन्धः, पाठनप्रब-न्धश्च विधेयः । गतवत्सरे प्रथमायाम्—रामगिरेः परिचयः, मध्यमायाः प्रथमखण्डे—भट्टिकवेः परि-चयः, एवं विधाः प्रश्ना आसन् । रामगिरिनिर्णयः, भट्टिकवेः कालनिर्णयश्च परीक्षक-महोदयेनापि कर्तुं दुःशक एव । जानन्त्येव सर्वे शिक्षामर्मविदो यत्, कथं पाठनं भवति छात्राणाम् । प्रथमपरीक्षया श्छात्रास्तु नितरामल्पज्ञा भवन्ति । अस्यामव-स्थायामेवंविधाः प्रश्नाः कथं परीक्षाध्यक्षाणां मनो मोद मावहन्तीति परमाश्चर्यम् ।

साम्प्रतं परीक्षाध्यक्षैरेतस्मिन् विषये दीयमान-मवधानमपेक्ष्यते । छात्राश्चैवंविधानां प्रश्नानां विरोधं बहिष्कारञ्च महता बलेन कुर्युरिति ।

* * * *

## सुप्रभातस्य विशिष्टाङ्कः ।

सुप्रभातस्य विशिष्टाङ्को वैशाखमासस्यान्तिमे सप्ताहे मुद्रितो भविष्यति । तदर्थं चैत्राङ्कः स्वसमयात् प्रागेव प्रकाशितो भविष्यति । विशिष्टाङ्ककृते याचितं साहाय्यं सर्वैरपि ग्राहकैरवश्यं प्रेषणीयम् । सुप्रभातस्यार्थव्यवस्था विदितैव ग्राहकानाम् । तथाप्येष समारम्भ एतदर्थमेव क्रियतेऽस्माभिर्येन सुप्रभातस्य सम्पादनत्रुटयो दूरीभवन्तु । एतस्मिन्नुत्साहे सुप्रभातस्यावरणपृष्ठं चिराय पञ्चवर्ण-चित्र शोभितं भविष्यति । बहवश्च स्तम्भाः सुप्रभाते स्थायिरूपेण प्रकाशिता भविष्यन्ति । संस्कृतसमाजे समुत्साहश्च जागृतो भविष्यतीति बहूनि कारणानि सन्ति । तत्राहक-महोदयैः स्व-वार्षिक मूल्यप्रेषणावसरे, सुप्रभातस्य वी० पी० ग्रहणावसरे वा यथाकथमपि यथेप्सितं साहाय्यं प्रदेयम् । अस्मिन्नङ्के विशेषतः प्राचीनानां संस्कृतविदुषां परिचयः, चित्राणि च स्थास्यन्तीति ग्राहकैः स्व-स्व-परिचितानां सुप्रसिद्धानां विदुषां चरित्राणि चित्राणि च प्रेषणीयानि । एतस्य साफल्यविषयेऽपि वयं प्रबोधनीयाः । के के स्तम्भाः स्थास्यन्तीत्यपि लेख्यम् ।

* * * *

## विषादः ।

साम्प्रतमेव समागतेन पत्रेण विज्ञातम्, यत्, वङ्गीय-संस्कृत-साहित्य-परिषदः प्रधानस्तम्भरूपो महान् कार्यकर्ता पण्डितवरेण्यः श्रीमान् पशुपतिनाथशास्त्री एम० ए०, पी-एच्० डी० महोदय अकाल एव कालकवलितोऽभूदिति । यद्यपि वयं तेषां न परिचिताः स्मः, तथापि सुरभारतो सेवकत्वेनाऽस्माकं तैः सहासीत् महीयान् सम्बन्धः, संस्कृ… त्य-परिषदः कार्यं जातमत्रलोक्य वयं प्रस… परिषत्सञ्चालकेभ्यः स्पृहयामः । तेष्वेको … साम्प्रतं कथा शेषतामगमदितिपरं शोकस्था… संस्कृत प्रणयिनाम् । अद्यत्वे द्वित्रा एव का… संस्कृतक्षेत्रे कार्यं कुर्वन्ति । तेष्वपि ह्रास इति … दुर्दैवविलसितं संस्कृत साहित्यस्येति नात्र… वयं पारिषदेभ्यः समवेदनां सहानुभूतिश्च प्र… नितरां विषीदामः । प्रार्थयामश्च तस्य सु… प्रणयिनः प्रियवरस्य सद्गतिम् ।

* * * *

## भ्रम संशोधनम् ।

विगताङ्के विहारपरीक्षासूचनावसरे… मासीत, यत्, संस्कृतपरीक्षा मार्च मासस्य … दिवसादारब्धा भविष्यन्ति । परमिदानीं … ध्यक्षैः सूचितम्, यत् मार्च मासस्य १५ दि… रभ्य क्रमशः प्रथमादिपरीक्षा भविष्यन्तीति… भात-पाठकै रेषभ्रमः संशोधनीयः ।

## हिन्दू-विश्वविद्यालयस्य शिक्षण म…

हिन्दू-विश्वविद्यालयस्य वार्षिक-महोत्… सरे तत्रैव मण्डपे हिन्दी कविसम्मेलनमूव… चास्माकं पूज्यपादैर्गुरुवरैर्महामहोपाध्या… देवीप्रसादकविचक्रवर्तिमहोदयैः सभापति… ङ्कृतमासीत् । तत्र कैश्चन आँग्ल शिक्षितैः… प्रवरैराङ्ग्ल च्छात्रैर्भूयानसभ्यः कोलाहलः … एका महिला यदा कवितां श्रावयितुम्… तदा तैर्नितरां घृणार्हो व्यवहारः समाचरि…

पि तेषामध्यापकैरयोध्यासिंहमहोदयैः सभा-
महोदयैश्च वारं वारं प्रार्थितास्ते दुष्टा श्छात्रा-
ापि ते न लज्जिताः । आचार्यध्रुवमहोदयाः
वाचार्याः समुपस्थिता आसन् । तेषां समक्ष
छात्राणां प्रचण्डामुद्दण्डतां दृष्ट्वा नितरां खिन्नं
ला । एवमेव तस्मिन्दिने वेणीसंहारनाट-
य संस्कृताभिनयेऽपि छात्रैरेवमेव महान्
ाहलः कृतः ।

एतदवलोक्य वयं निर्धारयामो यत् वयमेव
कृतज्ञास्तेषामपेक्षया नितरां सभ्या मनुष्याश्च
। ते खलु राजभाषामधीत्य केवलं प्रभावबलेन
वाकचिक्यैन च प्रभावं पातयन्ति । वस्तुस्ते
सावृताः, आर्य सभ्यताशून्याः प्रोद्दण्डा दुरा-
रिणश्च भवन्ति ।

आँग्लाः शिक्षकाः सर्वानपि दुराचारान् कुर्वन्ति,
छात्रा अपि तादृशा एव भवन्ति । आँग्लाः
यास्तेषां दोषान्निगूहन्ति, प्रत्युत तेषां दोषानपि
त्वेन प्रख्यापयन्ति । अस्माकं संस्कृतज्ञानां
ालभक्षणमपि निन्दन्ति, सडिण्डिमघोषं प्रख्या-
न्ति च । जीविकादिदाने महान्तं संशोधनञ्च
न्ति । मालवीय महोदयानामादर्शं हिन्दूविश्व-
ालयेऽपि पिशाचिन्या आँग्लसभ्यताया नग्नं
त्यं नितरां दुनोति ।

—:o:—

## नतिः

वृन्दावने शाद्वलरम्यभूमौ
　गाश्चारयन्तं बहु गोपबालैः ।
वंशी निनादैर्मधुवर्षयन्तम्
　राधाप्रियं माधवमानतोस्मि ॥

—सोहन लाल द्विवेदिनः ।

## पुस्तकपरिचयः ।

### रस-कामधेनु-संहिता ।

चूड़ामणि विरचिता । तस्य चतुर्थभागश्चिकित्सा पादः श्रीमद्भिर्वैद्यप्रवरैः श्रीजीवरामकालिदासशास्त्रिभिः, आयुर्वेदाचार्यैः सम्पादितः, संशोधितः, प्रकाशितः, मुद्रितश्च । प्राप्तिस्थानम् रसशाला औषधाश्रमः, गोंडल, काठियावाड़ । मूल्यम्- चत्वारो रूप्यकाः ।

एतस्य प्रथम उपकरणपादः, द्वितीयो धातु संग्रहपादः, तृतीयो रसकर्मपादश्चेति खण्डत्रयं यादवजी त्रीकमजीमहोदयैः सम्पाद्य, प्रकाशित मासीत् । चतुर्थोयं चिकित्सापादः श्रीमद्भिर्जीवराम महोदयैः प्रकाशितः । अस्मिन् ग्रन्थे ६० अधिकाराः सन्ति । विविध रोगाणामुपरि सहस्रशो रसानां निर्माणविधिश्च वर्तते । ग्रन्थोऽयं रसनिर्मातॄणां वैद्यानां कृते वस्तुतः कामधेनुरेव । वैद्यैरवश्यं संग्राह्योऽयं प्रबन्धः ।

### मन्त्रखण्डः—

पार्वतीपुत्र–नित्यसिद्धनाथ–विरचित– रसरत्नाकरान्तर्गतः पञ्चमो मन्त्रखण्डः । सम्पादकः–रसशास्त्री जीवरामकालिदास शास्त्री, आयुर्वेदाचार्यः । स एव प्रकाशको मुद्रकश्च । मूल्यम्- मुद्राद्वयम् ।

अस्मिन् ग्रन्थे विविधा मारण–मोहन–वशीकरण स्तम्भनादिमन्त्राः वज्रास्त्र-वरुणास्त्र-ब्रह्मास्त्रादीना ञ्चमन्त्राः संग्रहीताः सन्ति । विचित्रोऽयं मन्त्रात्मको ग्रन्थः । मान्त्रिकैस्तान्त्रिकैश्च नूनमयं स्व-पार्श्वे स्थापनीयः ।

## द्रौपदीवस्त्राहरणम् ।

शास्त्री मणिशंकर भाई शंकर शर्मा, प्रधानाध्यापकः — राजकीय संस्कृत पाठशाला, पेटलाद । मूल्यम्--आनक द्वयम् । प्राप्तिस्थानं तदेव ।

कौरवसभायां दुःशासन कृतं द्रौपदी-वस्त्राहरण मुद्दिश्य विरचितमिदं लघुकाव्यम् समीचीनं सहृदयानां कृते मनोरञ्जकम् वर्वर्ति । कविता सरला सुबोधा च ।

## श्रुतबोधः—

काव्यतीर्थ-–विशारद–सरयूप्रसाद–पाण्डेय–विरचिताभ्यां टिप्पणी-सान्वयभाषाटीकाभ्यां संबलितः । प्रश्न-परिशिष्टादि सहितः । मूल्य मानकत्रयम् ।

प्रथम परीक्षार्थिनां छात्राणां कृते नूनमियं साहाय्यप्रदा टीका । सरला स्वल्पमूल्या च । यद्यपि श्रुतबोधस्य विविधानि संस्करणान्यभूवन्, तथपीदं संस्करणं संक्षिप्तं समुचितञ्च ।

## आत्रेयवचनामृतम् ।

महर्षिणा अत्रिणा प्रणीतम् । प्रकाशकः—श्रीविश्वेश्वर दयालुः वैद्यराजः । प्राप्तिस्थानम्—मेनेजर- अनुभूतयोगमाला कार्यालय, वरालोकपुर, इटावा । मूल्यं नास्ति ।

अत्रिमहर्षेर्वचनान्यत्र हिन्दीभाषाद्वारा सर्वेषामुपकारकाणि कृतानि वैद्यराजेन । अत्र पुरुष-पुनर्जन्मप्रमाणादीनां विषये संक्षिप्तनिरूपणं दृश्यते । पुस्तकमिदं समीचीनम् ।

## शङ्कराचार्यचरित्रम् ।

मधुरानगरस्य-आङ्गल-महाकला-शाला-संस्कृताध्यापकेन के० वै० सुब्रह्मण्य शास्त्रिणा विरचितम् । प्रकाशकः—प्राप्तिस्थानञ्च—ई० एम० गोपालकृष्ण कोने, बुकसेलर, Padu-madapam, Madura. मूल्यमष्टौ आनकाः ।

गद्यपद्यमयं श्रीमच्छङ्करपादाचार्याणां बद्धं जीवनचरित्रम्, तच्छिष्याणाञ्च परिचयोऽत्र मधुरललितया संस्कृतभाषया [केन] निबद्धम् स्पृहणीयम् विद्यते ।

## पत्राणि ।

## उद्यान पत्रिका ।

संस्कृत-मासिक-पत्रिका । सम्पादिका-समितिः । स्थानम्—डी० टी० ताताचार्यः शिरोमणिः, तन्[...] तिरुवादी, तञ्जौर,( मद्रास ) । वार्षिकं मूल्यमेका मु[...]

पत्रिकेयं स्वल्पकाया छात्राणां कृते नि[...] कारकारिणी । छात्रानुद्दिश्य प्रायोऽत्र बहवो[...] प्रकाशमायान्ति । वस्तुस्ते छात्रोपयोगि[...] भवन्ति । अस्याः संस्कृतम् सरलं मञ्जुलं प्रा[...] भवति । एतस्मिन् विषये तु मद्रमण्डलीयाः [...] हस्ता एव सन्ति । साम्प्रतमेतेषां दृष्टिः [...] सम्पादने समागतेति सुप्रभातं मन्यामहे । [...] सरल-संक्षिप्त-संस्कृतमयानां पत्राणां वर्वर्ति [...] मावश्यकता, येन प्राथमिकाश्छात्रास्तत्र स[...] पुष्टा भवेयुः । संस्कृत लेखन—भाषणादिषु [...] छात्राणां महान्तं दौर्वल्यमपसारयितुमेष एव [...] उपायो यत् हि सरल-संस्कृत-पत्रिका प्र[...] सैषा महती त्रुटिरनया पत्रिका पूर्णाति वयं [...] मस्याः सख्याः स्वागतमाहरामः, अस्या श्चिर[...] त्वञ्च कामयामः ।

## संस्कृत-महापाठशाला-पत्रिका ।

श्रीमन्महामहिम-महिसूर-महाराज-संस्थापित-[...] महाविद्यालयस्य त्रैमासिकी मुखपत्रिका । सम्पा[...] महामहोपाध्यायः, पण्डितरत्नम्, लक्ष्मीपुरम्, श्रीश्री[...] चार्यः । राजकीय यन्त्रालयात् प्रकाशिता मुद्रिता च ।

प्राप्तिस्थानम् श्रीरामानुजजय्यङ्गरः,
श्रीमन्महाराजाधिराज-संस्कृत-महाविद्यालया-
..., मैसूर, वार्षिकम्मूल्यम्—सार्द्ध मुद्रा ।
...स्य एकामुद्रा ।

पत्रिकेयं प्रतितृतीयमासं प्रकाशिता भवति । ...पुटस्य, प्रथमा सञ्चिका प्राप्तास्माभिः । अत्र ...त्रयं विद्यते (१) कविकाव्यविचारः, (२) कालि-...सोपस्करसज्ञता (२) मीमांसाभाष्य-भूषणमिति ...ऽपि लेखा विचार्य्यमाणा नितरां गौरवमुत्पा-...न्ति पत्रिकायाः । भाषा सरणिः, लेख प्रौढ़िः, ...लम् सम्पादन-सौन्दर्यम्, प्रकाशनपरिस्कृतिः ...मपि हृदयग्राहि विद्यते ।

## ...लसूत्रम्-गोलविद्या च ।

प्रणेता-श्रीतारादत्तपन्तः, साहित्याचार्यः, व्याकरणतीर्थः ...स्थानम्-सुप्रभात-कार्यालयः, काशी । मूल्यमष्टावाणकाः। ...भात-ग्राहकेभ्यो मासपर्यन्तं ।-) दीयेत ।

पुस्तकमिदं गोलविद्याविषयकं विद्यते । प्रथमं ...विद्यायां गोलशास्त्रस्य परिभाषा, ज्ञातव्याश्च ...षया: प्रतिपादिताः सन्ति ।

ततश्च गोलसूत्रेषु सकलोऽपि भूगोलः सरल-...प्रतिपादितः । एतस्मिन प्राच्य-पाश्चात्ययो ...लशास्त्रयोस्तथा पुराणानाञ्च मतानि संकलय्य ...रूपेणायं प्रबन्धो विरचित इति परं महत्वमाद-...ति पुस्तकमिदम् । संस्कृत-वाङ्मये गोलविद्या ...षयकोऽयं नूतन आरम्भः । राजकीय परीक्षासु ...माजिकीय-परीक्षासु चायं ग्रन्थोऽवश्यमेव स्था-...नीयः । भूगोल-शिक्षायाः संस्कृतज्ञेषु नितरामा-...वश्यकता वर्तते । यदि संस्कृतज्ञाः सहृदयतां व्ययी...त्यामुं नवीनं ग्रन्थमालोक्य स्वसम्मतिप्रदानं कृत्वा लेखकमुत्साहयिष्यन्ति चेत्तदपि सुरभारत्याः सौभाग्यमाकलयिष्यामः ।

## श्वासरोग-चिकित्सा—

स्वर्गीय मनोहर दास—राजवैद्य-विरचिता । प्रकाशकः-पं० विश्वेश्वर दयालु शर्म्मा वैद्यराजः । हरिहर औषधालयः, बरालोकपुर, इटावा ।

पुस्तकेऽस्मिन् श्वास रोगस्य पूर्णः परिचयः, तस्य चिकित्सा, चिकित्साविधिश्चेति वैद्यानां बहवो ज्ञातव्याः विषयाः सन्ति । वैद्यानामुपकार-कोऽयं ग्रन्थः । मूल्यमाणकचतुष्टयम् ।

## व्रणोपचारपद्धतिः ।

लेखकः—महावीरप्रसादः, मालवीयः । प्रकाशकः—भूत-पूर्वः, प्राप्तिस्थानमपि तदेव । मूल्यमानक षट्कम् ।

अत्र सर्वेषां व्रणरोगानां परिचयः, तेषां चिकित्सा, चिकित्सा विधिः, औषधिप्रयोग इत्यादिकं सर्वे समीचीनया सुबोधिन्या सरण्या प्रतिपादिताः । पुस्तकं वैद्यानाम्, अन्येषाञ्च कृते नितरामुप-कारजनकम्, संग्राह्यञ्च ।

## गीर्वाणभाषा द्वितीयपाठः ।

सम्पादकः—को० वै० सुब्रह्मण्य शास्त्रियर महोदयः । संस्कृताध्यापकः–मदुरा कालेजस्य । प्रकाशकः– ३० एम० गोपालकृष्ण कोने । प्राप्तिस्थानम्–३० एम० गोपालकृष्ण-कोने, बुक्सेलर एण्ड एजेण्ट्स–गवर्नमेन्ट पब्लिकेशन्स पुदु-मण्डपम् ( Pudumandapam ) मदुरा । मूल्यम् षडनकाः ।

पुस्तकमिदं संस्कृत-लेखन शिक्षार्थिनामनुवाद शिक्षार्थिनाञ्च छात्राणां कृते नितरामुपयोगप्रदम् । अस्य प्रणेता श्रीमान् श्रीमताम्प्पय्यदीक्षितानां श्रीमतां नीलकण्ठदीक्षितानाञ्च वंशज इति पठित्वा वयं परं प्रमुदितमानसाः स्मः । पुस्तकमिदमतिसरलम् ।

## भङ्गातरङ्गाः ।

महामण्डलमठेशो बाबा ज्ञानानन्दो महामण्डलीयं सर्वस्वमुदरे कृत्वा शेते स्म । मध्ये मालवीय-महोदयैः सनातनधर्म-सभा-घोषेण तस्य निद्रा निर्वतिता । साम्प्रतं भाग्यमाक्रोशन् वराक इतस्ततः प्रोच्छलति । साम्प्रतं तेन हस्त-क्रियो-कुशलस्य जरद्गवस्य जीर्णवैद्यस्य दीनदयालु महाशयस्य कश्चनानुभूतो योगः सेवितव्यः । नो चेत् विद्या-वैधव्य-योगः सत्वरं समीयात् ।

* * *

काश्यां रघुवीरमिश्र महोदयस्यौषधालये बहूनां पण्डितानां प्रत्यहं सम्मेलनं भवति । तत्र तैर्मनोरञ्जनाय विविधाः सामग्रीरुपस्थापिता विद्यते । श्रूयते होलिकावसरे सर्वेषां विनोदाय ते कमपि विशिष्टं प्रबन्धं विधास्यन्ति । तदा तु सुप्रभातम् भङ्गाभट्टस्य । कदाचिदस्यापि महा ब्राह्मणस्य चिरलालसा पूर्णा भवेत् ।

* * *

श्रूयते "साम्प्रतं सनातनधर्म धुरन्धराः बहवः काशीस्था विद्वांसो जराजर्जरिता अपि काम-मर्मरिता पौत्री-समवयस्काभिः कन्यका पाणिपीडनं विधाय वृद्धस्य सनातनधर्मस्य शिरसि नग्नताण्डवं कुर्वते इति । अत्र का हानिः ? यदि ते एव न करिष्यन्ति चेत्, तेषां शिष्याः कथं मार्गमिमं ज्ञास्यन्ति ।

* * *

श्रूयते कश्चन क्रान्तिकारी नामा लेखकः काशीस्थ विदुषां रहस्यपिटकमफोस्टयत् । ततश्च प्रसूतो भूयान् विकारः । ज्ञानानन्दस्य प्रपौत्रास्तमेवालिह्य वारं वार मास्वादयन्ति । भवतु ! एका क्रिया द्व्यर्थकरीप्रसिद्धा' इतः पण्डितानां पीड़ा न्यूनता गता, ततश्च ज्ञानानन्दीयानां भोजनं जातम् । 'आम्रश्च सिक्तः पितरश्च तृप्ताः' ।

* * *

सुरभारती पत्रिका सञ्चालकस्य वराकस्य श्रीगुरुप्रसाद शास्त्रिणस्तु भ्रूणहत्यैव समजनि । यद्यप्यासन् चिकित्सकाः सुप्रसिद्धाः श्रीगोपीनाथ कविराज-महोदयाः, प्राच्य-पा[...] विधानविदस्तथापि किङ्कर्तव्यम् ? ईश्वरेच्छा ग[...]

* * *

साम्प्रतं पुनरपि तेन प्रसवलालसेन शास्त्रिणा [...] गर्भाधानं कारयितव्यम् । एतस्मिन् कार्ये तु चि[...] भङ्गाभट्ट एव समुपयुक्तः स्यात् । कुमारभृत्यायां [...] मनीषानन्द स्वामिनः सिद्धहस्ताः सन्ति ।

* * *

'सूर्योदय' सम्पादकेन विन्ध्येश्वरीप्रसाद[...] विधुराणामुपरि महती दया दृष्टिः प्रदर्शिता । सा[...] 'मतवाला'-बिविध-पत्र-सम्पादकस्य शिवपूजन स[...] विधुरस्य पाणिपीडन-व्यवस्था स्वग्राम एव सम्पा[...] साम्प्रतं भगवान् सूर्योदयसम्पादकश्चिरविरहिणो [...]स्यापि चिर-कौमारं विनाशयतु । गृह्णातु शुभाशिषः ।

* * *

सुप्रभातस्य युग्माङ्क प्रकाशनं जातम्, सम्पा[...] वैधुर्याद्विमुच्य युग्ममलभत् द्वावपि द्विगुणितौ [...] अहमपि द्वयोर्द्विगुणितमाशीर्वादं ददामि । न जाने [...] कदा द्विगुणितो भविष्यति । वैधुर्य्य-विनाशधुर्य्याणां सम्पादकानां दृष्टि रपेक्ष्यते ।

* * *

महामहोपदेशकानां मदनमोहनशास्त्रिणां [...]तनधर्म-सभा बहून् डिम्भानुत्पाद्य साम्प्रतं [...] गणयति । डिम्भाश्चेतस्ततः संजाताः । [...] प्रार्थयामि यत्, कश्चन सुपुत्रः पित्रोरस्या [...] समुद्धरेदिति । वर्तते कश्चन सुपुत्रः ?

---

## वसन्तवीरः

शिलीमुखालिङ्गित-सद्गुणोल्लस-
द्रसालचापस्थित चारुविक्रमः ॥
स्मरस्य मुख्यः पृतनाधिनायको-
वसन्तवीरो विजयी विराजते ॥

श्रीमान म० म० देवीप्रसाद शु[...]
कवि च[...]

# पञ्च-पञ्चाशिका ।

## [ गुमानीगीता ]

प्रणेता —महाकविगुमानी पन्तः ।



सम्पादकौ—

श्रीतारादत्त पन्तः, व्याकरणाचार्यः ।

श्रीहीरावल्लभ पन्तश्च [ कविप्रपौत्रः ]

स्वयं विशुद्धस्त्रिगुणोपाधिप्रधानसंसर्गात् ।
ति तत्स्वरूपः प्रसूनयोगादिव स्फटिकः ॥ १ ॥
यसन्निकर्षात् मायासम्भूतभूतनिकुरम्बम् ।
दपि चलति विचित्रं चुम्बकसामीप्य लोह इव ।२।
दौ प्रतिफलितं प्रविष्टवद् भाति तत्र चैतन्यम् ।
वस्तुतः प्रविष्टं वदनमिव द्रष्टुरादर्शे ॥ ३ ॥
चेषु भूतेष्वेकाकारोऽपि तत्तदाकारः ।
सतेऽयमात्मा दारुषु विविधेषु वह्निरिव ॥४॥
पशक्तियोगाज्जगदाकारेण चित्तदध्यस्ता ।
सति विवर्तमाना सर्पाकारेण रज्जुरिव ॥ ५ ॥"
ष्ट्वा जगत्समन्तात् ब्रह्म यथावत्स्वमायया सर्वम् ।
स्वयं प्रविष्टं पटमिव सूत्रं स्वरूपेण ॥ ६ ॥'
ष्वखिलेषु प्रतिबिम्बित एक एव सन्नात्मा ।
सति बहुविधरूपो हिमकर इव नीरपात्रेषु ॥५॥
प्रतात्प्रधानाद् भिन्नोऽप्यभिन्न एवेति ।
ति प्रतीयमान स्तप्तायः पिण्डतोऽग्निरिव ॥ ६ ॥



छेदविशोषणदाहाद्यविषयप्रसक्तमस्पृश्यम् ।
सूक्ष्मं सर्वगमचलं भवति ब्रह्मान्तरिक्षमिव ॥ ७ ॥
स्फुटदृश्ये क्षणनाशिनि विश्वे मायामये न्वस्मिन् ।
तादात्म्यतो निगूढं ब्रह्म ततं क्षीर इव सर्पिः ॥ ८ ॥
अन्तः सुदुर्विभाव्यं वस्तु समस्तस्य भुवनकोशस्य ।
आधारभूतमेकं मुक्ताहारस्य सूत्रमिव ॥ ९ ॥
शून्यो गुणरहितत्वे गुणवत्वे संस्थितश्च परिपूर्णः ।
अन्तर्बहिरयमात्मा कलश इव व्योम्नि वारिणि च ।१०
जगतः स एक एव स्वमुपादानं निमित्तरूपश्च ।
कारणमयमात्मा तन्तुचयस्योर्णनाभ इव ॥ ११ ॥
अज्ञानसंवृता धीः स्वयं सती तं दुरन्तमात्मानम् ।
जानाति तं निगूढं दृष्टिरिवार्कं घनच्छन्ना ॥ १२ ॥
विक्षेपशक्तियोगाज्जगदाकारेण चित्तदध्यस्ता ।
विलसति विवर्तमाना सर्पाकारेण रज्जुरिव ॥ १३ ॥
सृष्ट्वा जगत्समन्तात् ब्रह्म यथावत्स्वमायया सर्वम् ।
तदनु स्वयं प्रविष्टं पटमिव सूत्रं स्वरूपेण ॥ १४ ॥
प्रकृतिर्ब्रह्मणि दूरादपरिच्छिन्ने स्वतः परिच्छिन्ना ।
स्फुरति क्वापि कदाचित्सुरवर्त्मनि मेघलेखेव ।१५।
स्वगुणैः पुरुषमाद्यं वशमानीयानुवर्तिनी माया ।
आनन्दयति विहारैर्नारी साध्वीव भर्तारम् ।। १६ ।।
ब्रह्मणि कारणभूते मुहुर्मुहुः प्रोद्भवन्ति लीयन्ते ।
बहवो गुणवति जीवा अलाम्भसीवोर्मयः सरसि १७
रूपाभिधानभूतं भेदोपाधिं निरस्य तत्कालम् ।
ब्रह्मत्वमेति जीवः कनकत्वं कुण्डलादिरिव ॥ १८ ॥
ईश्वरजीवविभेदाद् ब्रह्मोपहितं प्रकृत्यविद्याभ्याम् ।
भाति द्विधैकरूपं ह्याकाशं घटाकाशमिव ॥ १९ ॥
विहितास्पदौ शरीरे मिथः सखायौ सनातनौ सयुजौ ।
वसतः परात्मजीवौ खगाविव द्वौ महावृक्षे ॥ २० ॥

भानेऽपि भिन्नताया जगदिदमखिलं चितो विनिष्पन्नम् ।
तत्वात्ततो न भिन्नं मृद इव तत्तद्घटाद्यखिलम् २१
निर्धारितोऽपि तत्त्वाद् वितथः सुतरां जगत्प्रपञ्चोऽयम्
सत्वेन भाति साक्षाद् मृद्गज इव सद्गजत्वेन ॥२२॥
कर्तृत्वाद्यविवेकादज्ञानस्यार्थतः क्रियाशून्ये ।
आरोप्यते परात्मनि गिराविवादृणः परिभ्रमणम् २३
दृग्गोचरोऽन्तरस्थः सुमृग्यमाणः प्रमत्तया बुद्ध्या ।
नासाद्यते चिदात्मा मणिरिव कण्ठोपकण्ठस्थः ।२४।
पुरुषस्य बन्धमोक्षौ परस्य परितः प्रकाशरूपस्य ।
द्वावप्यतथ्यरूपौ रजनी दिवसाविव द्युमणेः ॥ २५ ॥
घनकोशपञ्चकान्तर्गतस्वरूपा स्वयं प्रकाशापि ।
न बहिः प्रकाशते चित् घटगर्भस्थेव दीपार्चिः ॥२६॥
प्रभवन्नप्यसमर्थो मोहग्रस्तः स्वमाशु मोचयितुम् ।
आत्मैति पारवश्यं ग्राहगृहीतो गजेन्द्र इव ॥ २७ ॥
अस्वस्थोऽप्ययमात्मा कामाकुलितो मुहुः परिक्लिश्यन् ।
अनवस्थितिमधिगच्छति वृश्चिकदष्टः प्लवङ्ग इव २८
इन्द्रियवृत्तिभिरभितः स्वार्थान् सर्वाभिरर्थयन्तीभिः ।
आकृष्यतेऽन्तरात्मा, पतिरिव बहुभिः सपत्नीभिः॥२९॥
चित्त्वं जडे जडत्वं चिति पुनरविवेकसंवृतो मुह्यन् ।
वेत्ति विपर्ययमात्मा पुमानिवोन्माददोषार्तः ॥ ३० ॥
फल्गुविषयसुखमात्मा, प्रतीयमानं सदित्यसत्प्रायम् ।
अभिधावति बहुतृष्णो, मृग इव मृगतृष्णिकासलिलम् ३१
कृतयोर्धिया विभाव्यं, स्वकृतत्वं कर्मणोः शुभाऽशुभयोः।
भुङ्क्ते तत्फलमात्मा नृप इव चम्वा जयाऽजययोः ३२
चिरमानन्दमयेऽन्तर्विहरन् कोशेऽजया समं मुग्धः ।
विसरति सर्वमात्मा विजने कामीव कामिन्या ॥३३॥
भोगार्पणोपहारैः पृथगिन्द्रियदैवतैः परः पुरुषः ।
समुपास्यतेऽत्र देहे सामन्तैः सार्वभौम इव ॥ ३४ ॥

भोगेच्छया हृषीकैः सह निर्यत्सत्वरं मनो दूरम्
हरति प्रसह्य बुद्धिं पयसि तरीं मातरिश्वेव ॥
जाग्रत्स्वप्नसुषुप्तिप्रभेदतो वृत्तयो धियस्तिस्रः।
सम्भाव्यन्त इहात्मनि मुधैव तन्वा इहावस्थाः
परितस्ततेन गूढं तत्वस्तोमेन मुग्धमात्मानम् ।
द्रुतमावृणोति माया विहगं भिल्लीव जालेन ।
अज्ञानमात्मनोऽन्तः कोशनिरुद्धस्य बहिरवस्था
स्वसरूपतां प्रयुङ्क्ते पेशस्कारीव कीटस्य ॥
उपलक्षितोपचाराद् ब्रह्मात्मत्वेन लक्षणैस्तैस्तैः
प्रकृतिः स्फुरति समक्षं रजतात्मत्वेन शुक्तिरिव
भासा विसृत्वरेण व्यवधानेऽप्यन्तरात्मना क्रम
बहिरञ्चितं शरीरं स्थाल्योदनमग्निनेवेद्धम् ॥
सहसोपचयापचयौ संहततत्वात्मनः शरीरस्य
अध्यस्तौ परमात्मनि कलाकलापस्य शशिनीव
देहो यथा स्वभागाज्जनितः सम्भूय भूतसंहत
तत्रैव लीयतेऽन्ते मृदानुघटितो मृदीव घटः ॥
मायोपाधिरधृष्यः परमात्मानं प्रकाशमानमिव
द्राक्पिदधाति समन्तात् स्वर्भानुश्चण्डभानुमिव
भिदयापि भासमाने ब्रह्मणि तादात्म्यतो जगत्
संलीय पर्यवस्यति बुद्बुदनिकुरम्बमिव नीरे
आपाततः प्रधानं निजधर्मैर्व्याप्नुवत् परं ब्रह्म
स्प्रष्टुं न शक्यतेऽन्तः पद्मं पद्माकराम्भ इव ॥
विभुना यथा नियुक्तं कूटस्थेनात्मना तथा वे
स्वहृषीकाणि नियुङ्क्ते रथिना यन्तेव युग्यानि
आत्मानं विपरीतेष्वर्थेष्वभिनोदयन्नहंकारः ।
भ्रंशयति स्वविवेकान् मुग्धं भूपं कुमन्त्रीव ॥
त्रिगुणैः कर्मभिरन्तः संकलितान् देहिनः परे
व्यापारयति यथेष्टं सूत्रैरिव पुत्तिकाः कुहका

...द्भवं शरीरङ् कर्म ब्रह्मोद्भवम्परीवृत्या ।
...न्यजनुरुभयो रनयोरिव वीज-भूरुहयोः ॥४९॥
...कर्म कार्यभूतङ् कारणमज्ञानमात्मनः सद्यः ।
...ति हि समूलकाषं दारु तदुत्थः कृशानुरिव ५०॥
...दा विनश्वरोऽयं सनातनाल्लिङ्गलक्षणाज्जीवात् ।
...न्योऽपि विभिन्नः परिहित इव कञ्चुको देहात् ५१
...याविलमन्तःकरणं सत्कर्मणा सुनिर्णिक्तम् ।
...लत्वमेति जीवो नूत्नं निकषेण रत्नमिव ॥५२॥
...ते विधूतदोषे विमलीभावाद्दु विसारि विज्ञानम् ।
...साभ्युपैति भास्वन् निर्धौत इवांशुके शौक्ल्यम् ५३
...सा परेण युक्ता सृष्टुमविद्या जगन्ति धीतत्वम् ।
...विनाशवीजभूतं सूतेऽश्वतरी स्वतोकमिव ॥५४॥
...मा प्रयत्नलब्धात् त्रिविधोपाधिक्षयात् क्रमेणैव ।
...लभते स्वरूपं त्रिदोषनाशाद्दु गदार्त्त इव ॥५५॥
...माधिविधिमन्तरा त्वरितमात्मबोधैषिणाम्
...न्तमुपकारिणी कृतधियाम्मनोहारिणी ॥
...पनिषदर्थसञ्जनिततत्त्वविद्योतिनी
...निरचिता चिरं जयति पञ्चपञ्चाशिका ॥५६॥ *

—:o:—

## कम्बोजीयः ।

कवीन्द्र-रवीन्द्र-कथानुवाद-रूपः ।

( अनुवादकः-बहादुरचन्द्र गुप्तः, शास्त्री )

[ क्रमागतः ]

...अथेमे शिशिराहा आसन्, अर्थात् संवत्सरस्य ...एव काल आसीत्, यत्र किल प्राचीना राजानो विजयार्थमभिनिर्यान्तिस्म; अहञ्च, कलिकातायां स्वकीयक्षुद्रकोणादचलम्, मनसैव विश्वं जगत् परिभ्रमामिस्म*। देशान्तरनाम श्रावंश्रावं मम चित्तं तत्रैवाव्राजीत्, रथ्यासु च कस्यापि विदेशीयस्य दर्शनमात्रेणैव शिखरिणः, उपत्यकाः, विदेशीयकुटीराधिष्ठितमध्यभागं विप्रकृष्टकं काननम्, निर्बाधं स्वतन्त्रं च वन्यं जीवनम्—इत्येवमादिध्यानपरम्परायां न्यमज्जम्। तानि नाम यात्रादृश्यानि मत्पुरस्तात्सङ्कलितानि भवन्ति, मम मनस्कारे चोत्तरोत्तरं स्फुटतरमागमापायं कुर्वन्ति; अहं हि तथा शाकजीवं जीवामि यथा व्रज्यार्थमाहूतिर्मय्यशनिपातं पतति । अस्य कम्बोजीयस्योपस्थित्याम्, अहं सपदि वहिरन्तः-सरीसृप्यमाण-नानानिविडसरणीकोतुङ्गशृङ्गानां रूक्षशिलोच्चयनितम्बानां पादान् अनीये । तत्राहमुदूढभारामुष्ट्रपङ्क्तिम्, समतलभूमिं प्रति प्रयातां केषाञ्चिद्दु विलक्षणानि पुरातनान्याग्नेयानि शस्त्राणि दधतां केषाञ्चित्कुन्तान्वहतामुष्णीषिणां सार्थवाहानां सङ्घञ्च साक्षादकरवम्। अन्यच्चापीक्षितुं आसीत्। किन्तु, अस्मिन्क्षणे मिन्या माताऽऽगत्य विच्छेदमाधात्, प्रार्थयच्च—' तस्मिन्पुरुषेऽवहितो भव ' इति ।

दौर्भाग्यान्मिन्या माताऽतीव भीरुरस्ति । यदा कदाचित्सा प्रतोल्यां कमपि कोलाहलंशृणोति, गृहाभिमुखमागच्छतो जनान्वाऽवलोकते, तदा सर्वदैवं साऽवधारयति, यन्नूनं ते चैारा वा, मद्यपा वा, सर्पा वा, व्याघ्रा वा, ज्वरा वा, दंशका वा, वृश्चिका वा, स्युरिति । एतावतीः शरदोऽनुभूत्वाऽपि, सा स्वकं साध्वसं पराभवितुं न प्रभवति । तस्मात्सा

*अस्य पुनर्मुद्रणे भाषादिकरणे च सम्पादकत्रयभिन्नस्य ...धिकारः । —तारादत्तपन्तः ।

*मनस्कारमग्नस्यपरोक्षता ।

कम्बोजीयं प्रति नित्यं व्यचिकित्सत, माञ्च तस्मिन् सततमवहितं चक्षुः स्थापयितुमयाचत ।

यद्यहं दाक्षिण्येन तदीयामेतां भीतिं परिहासेन विधूनयितुमभ्यवास्यम्, तदा सा गम्भीरभावमापद्यत, रहस्यपूर्णांश्च प्रश्नानपृच्छत –

'अपि बाला नैवाह्रियन्त ?'

'अपि नैतत्सत्यं यत्कम्बोजे दासभूयमासीद् इति ?'

'किमेतत्सर्वथा निर्मूलमेव यदयं विपुलः पुरुषस्तन्वङ्गीं बालामपहर्तुमकल्पतेति ?'

ततोऽहं प्रत्यवादिषम्—'कामं नैतदसंभवम्, किन्तु नितान्तमनाशङ्कनीयमिदम्' इति । परन्त्वेतावन्मात्रं पर्याप्तं नाभवत्, तस्याः साध्वसमतिष्ठदेव । इदं निःसारं साध्वसमासीत्, अतस्तस्य पुरुषस्य गृहाद्वारणं न साम्प्रतं प्रत्यभासीत् । तेन तत् सख्यं निर्वाधमुपाचीयत ।

वर्षस्य सकृद्, माघमासारम्भे रहमान नामासौ कम्बोजीयः स्वकं जनपदं प्रति निवर्तते । यथा यथा समयः प्रत्यासन्नोऽभवत् तथा तथा स गृहाद्गृहं पर्यटन् स्वानि-ऋणानि संगृह्णन् भूयः प्रसितो बभूव । परन्त्वेषमः स मिनीमुपगन्तुं वीक्षितुञ्च नित्यं वेलामविन्दत । कस्मैचिदागन्तुकायत्वेवं प्रत्यभास्यत; यन्नूनं तयोः कापि मिथो मन्त्रणा संजायते ' इति स हि यदा प्रातरागन्तुं नाशक्नोत् तदा सायमागात् ।

मत्कृतेऽपि प्रायस्तमसावृतस्य वेश्मनः कोणमध्यासीनस्य विपुलाकृतेः शिथिलवाससः पृष्ठोदूढप्रसेवस्यास्य पुरुषस्याकस्मिकं दर्शनं मनागुद्वेजकं समजायत; किन्तु यदा मिनी स्मयमाना यथापूर्वं च ' अयि कम्बोजीय ! कम्बोजीय!' इति चक्षाणाऽधावीत्, यदा च वयसा तथातिभिन्नौ तौ द्वौ स्वं प्रतनं प्रहासं स्वानि प्रत्नानि नर्माणि च व्यरंसिष्टाम्, तदाहं निरुद्विग्नोऽभवम् ।

अथ यदाऽसौ प्रस्थातुं निश्चिकाय, ततः कतिपयैरहोभिः पूर्वमहमेकदा प्रातः स्वाभ्यासवेश्मनि निषण्णो मुद्रितपत्राणि समं । ऋतुरतीव तुषार आसीत् । गवाक्षा रश्मयो ममाङ्घ्री अस्पृशन् । मनाक् सौ परं सुभग आसीत् । आसन्नाष्टवादनसमय प्रातरित्वानश्च प्रच्छन्नैः शिरोभिर्गृहान् प्रति न्ते स्म । अकस्मादहं रथ्यायां कोलाहलमश्र अथ बहिश्चक्षुश्चारयन् द्वयो राजपुरुषयो नीयमानं सन्दानितं रहमानं, तदनुपदं चान्वे राणां माणवकानां व्रातमलोकिषि । तस्य शोणितबिन्दव आसन्, एकतरश्च राजपुरु पुत्रमबिभः । अथाहं ससंभ्रमं निरगाम्, रुन्धन् समपृच्छे ' किमेतदिति ' । किञ्चिदितः श्चित्ततश्चाहमेतावन्मात्रमवागच्छम् यत् कश्चि वेशी तस्मै पण्याजीवाय रामपुरीयकम्बला धारयाञ्चकार, परं पश्चात्स तत्क्रयणमेवा अथ कलहे जायमाने रहमानस्तमाजघान ' इदानीं समुत्तेजितः सन् स बन्दी स्वं प्रति बहुविधं दुर्वक्तुमारभत । तत्कालमेव मम मिनी यथापूर्वं ' अयिकम्बोजीय ! कम्बोजीय शब्दायमाना सहसा गृहवितर्द्यामाविरासीत् विलोक्यैव रहमानस्याननं व्यद्योतिष्ट । अथ बाहुतले प्रसेवादिकं नासीत्, फलतः सा त विषयकं वाकोवाकं कर्तुं न प्राभवत् । अस्य

...पदि प्रश्नानन्तरं प्राक्रमत ‘ कच्चित् स्वकं श्वशु-
...गच्छसि ? ’ इति । रहमानः प्रहसन्नब्रवीत्—
...तत्रैव गच्छामि वत्से ! , । ततश्च ‘ तदुत्तरं
...नाह्लादयद्’ इति भावयन्नसौ स्वौ बद्धौ
...उन्नमय्य, उच्चकैः ‘ आः !’ कुर्वन् व्याहरत—
...तं स्थविरं श्वशुरमकुट्टयिष्यम् , किन्तु
हस्तौ निगडितौ स्तः ’ इति ।

...वधात्मकस्याक्रमणस्यापराधे, रहमानोऽ-
...शरदः कारावासं दण्डितोऽभूत् ।

* * *

...तियर्यौ, स च विसस्मरे अस्माभिः । अस्मा-
...लितं कार्यं शीलिते प्रदेशे प्राचलत्, तस्य चा-
...तन्त्रतानन्दयोः कारावासे वत्सरान्गमयतः
...वयं जातुचिदस्मराम नैव वाऽस्मराम ।
...मृदुमना मम मिन्यपि (कथयन्निह्रेमि)
...चिरन्तनं सखायं व्यस्मरत् । अभिनवानि
...तस्या जीवनमपूरयन् । यथा-यथा साऽऽ-
...वर्धततराम्, तथा-तथा सा कन्याभिः सार्ध-
...तरं कालमनैषीत । यत्सत्यं तावन्मात्रं सा
...सह समयाऽकरोद्, येन पितुर्निकेतमपि
...पूर्वं नोपासरत् । तस्मात्तया साकमालपितुम-
...मे दुर्लभ आसीत् ।

...समा व्यतीयुः । सकृत्पुनः शिशिरागमः प्रावर्तत
...च मिन्याः परिणयाय विविधान्संभारान्निरव-
...याम । परिणयः पूजावकाशाहेषु भवितुं निश्चित
...सीत् । कैलासं प्रति निवर्तमानया दुर्गया सह,
...दुहितुरपि निजभर्तुः कुलाय प्रस्थातु
...चाऽवकाशो दातुं मगुणाऽऽसीत् ।

प्रातः कमनीय मासीत् । वर्षानन्तरं समीरणः प्रक्षालित इवाभासीत्, सहस्रांशोररश्मयश्च निष्टप्तहेम-प्रभा इव भासमाना मलिनान्यपि कलिकाताप्रतोली-नामिष्टकाकुड्यानि समुज्ज्वलयन्तिस्म । आप्रभातं वैवाहिकानि तूर्याणि अशब्दायन्त, प्रतिशब्दाघातश्च मम हृदयं प्राकम्पत । उपनंस्यद्वियोगपीडा मुद्गल-यन्तीव भैरवीतालस्य काकली अक्वणीत् । तस्यां रजन्यां मम मिनी परिणेयाऽऽसीत् ।

आ प्रातःकालात् तुमुलः कोलाहलः सदनमपूर-यत् । प्राङ्गणे वंशाग्रेषूल्लोचः प्रतननीय आसीत, प्रतिशालञ्च वितर्द्यश्च क्वणत्किङ्किणीका दीपवृक्षा आसञ्जनीया आसन्, वगाहः स्फूर्जथुश्चातिसीममा-स्ताम् । अथाहं स्वस्मिन्नभ्यासवेश्मनि व्ययविवरणं निरीक्षमाण आसे, यावत्कश्चिद्विनयपुरः सरं नम-स्यन्नन्तरागात्, मत्पुरस्तादतिष्ठच्च । अयं स एव कम्बोजीयो रहमान आसीत् । पूर्वमहं तं नाभ्यजा-नाम् । स प्रसेवं नावोढ, तस्य दीर्घाः केशाश्च लघू-कृता आसन् , तत्प्राक्तनं बलञ्चापि प्रनष्टमिवाभ-वत् । किन्त्वसावस्मयत, अहञ्च तं पर्यचिनवम् । अथाहं तमपृच्छम्—‘ कदाऽऽगतोसि रहमान ! ’ इति स प्रत्यवोचत्—‘ ह्यः सायं कारावासान्मुक्तोऽ-भूवम् ’ इति ।

ते शब्दा मम कर्णौ परुषमतीतपन् । नाहं पुरा कदाचिदपि स्वजातीयं पुरुषं घातुकेन पुरुषेण सा-कमालापमकरवम् । अथ तदनुसंधानस्य मे मनः स्वस्मिन्नेव समकुचत्; अहं हि व्यचिन्तयम्, यत्—‘स दिवसः शुभशकुनोऽभविष्यत्, स चेद् दृष्टिगोचरं नाभविष्यत् ’ इति ।

अथाहं व्याहरम्—'गृह उत्सवस्तायते, अहञ्च व्यापृतोऽस्मि । अतस्त्वमन्यदा कदाचिदागच्छेः' इति ।

स तत्क्षणं गन्तुं न्यवर्तत, परं यावदेव द्वारमासीदत्, तावत्किमप्यतर्कयत्, अकथयच्च—'नन्वार्य ! क्षणं बालिकां द्रष्टुं न पारये ?' इति । तस्य विचारे मिनी पूर्ववदेवासीत् । स तां यथापुरा 'अयि कम्बोजीय ! कम्बोजीय !' इति क्रोशन्तीं स्वाभिमुखं धावन्तीञ्चाऽऽध्यायत् । स तु 'आवां परस्परं यथा पूर्वं हसिष्याव आलपिष्यावश्च' इत्यपि व्यचारयत् । तत्वतश्च स भूतपूर्वदिवसानां स्मृतौ पत्रके संवेष्टितान् कतिपयान् वातादान् शुष्कद्राक्षां मृद्वीकाश्चानीतवानासीत् । सर्वं तद् वस्तुजातं स यथाकथं कस्माच्चित्स्वदेशीयजनाद् आहरत्, तस्य सविधे हि यत्किमपि धनमासीत् तत्सर्वं समाप्तिमगात् ।

अथाहं पुनरवोचम्—'गृह उत्सवस्तायते, त्वञ्चाद्य कमपि द्रष्टुं न शक्यसि' इति । एतेन तस्य वदनं विच्छायमजायत । क्षणं यावत्स मां साकूतं निरवर्णयत, ततश्चाब्रवीत्—'अभिवादये भोः !' इति । अथ निरगात् ।

अहं किञ्चिदिव पर्यशोचम, तञ्च पुनराह्वास्यम्, परन्तु स्वेच्छयैव निवर्तमानं तं व्यलोकयम् । अथासौ मामुपसीदत्, तमुपहारं पुरोऽधाद्, अभ्यधाच्च—'इदं वस्तुस्तोकं बालिकार्थ मानीतवानस्मि, भोः ! तत्किमस्यै दास्यसि त्वम् ?' इति ।

अहं तत्प्रत्यैच्छम् । अथ यावदहं किञ्चित्प्रतिदातुमकामये, तावत्स ममहस्तमग्रहीद्, अगादीच्च—'परं कारुणिकोऽसि भोः ! जातु स्मरणीयस्त्वयाऽहम् । न मे द्रव्यमुपहर ! तवेयं दुहिताऽस्ति व्यस्ति गृहे तया तुल्यैका । तस्याः स्मर कन्यकायै इदमुपायनमिति कृत्वा ददामि लाभाशया' इति ।

एवमाचक्षाणः स स्वकं हस्तं विपुल-शि निचोलस्यान्तर्न्यधत्त, एकं क्षुद्रं मलीमसं शकलञ्च निरकासयत् । अथ महताऽवधाने अपावृणवन् मम चतुष्किकायां निधाय स हस्ताभ्यां पर्यमार्ट् । तस्मिंश्च पत्रकखण्डे एक पाणेः प्रतिलिपिरासीत् । नासीच्छायाचित्रम्, लेख्यम्, केवलं मसीछुरितस्य पत्रके विततं नि पाणेः प्रतिलिपिरासीत् । इदं निजायाः दारिकायाः पाणेः स्पर्शनकं स सर्वदा हृदये यदा प्रतिवर्षं स रथ्यासु पण्यानि विक्रेतुं कातां प्रति समाजगाम ।

अथ मम नेत्राभ्यामश्रूण्यस्रवन् । अहं यत्सोऽकिञ्चनः कम्बोजीयः फलविक्रे अहञ्च....। परन्तु नहि, कोन्वहं तस्मादधि असावपि पिताऽऽसीत् ।

विप्रकृष्टके पर्वतीये गृहमधिवसन्त्याः मार्याः पार्वत्या हस्तस्य सा प्रतिलिपिर्म याया मृद्व्या मिन्या अस्मारयत् ।

अथाऽहं सद्यो मिनीमन्तः पुरादुपाति प्रचुरा बाधा उदभवन्, परन्त्वहं सर्वा व्यक्षिपम् । परिणय-कालानुकूल-माञ्जिष्ठदुकूल चन्दनतिलकाङ्कितललाट-कलिका, नवबधूरि कृता मिनी समागात्, प्रश्रयानता च मम दतिष्ठत् ।

अथ तथाभूतां तां निध्याय, कम्बोजीयः परं ...त इवालक्ष्यत । नासौ पुरातनसख्यजीवातवे ...र्थोऽभवत् । अथावभृथे स आचष्ट—'कच्चि-... श्वशुरालयं गच्छसि वत्से ? इति ।

...पाल्विदानीं मिनी श्वशुरालयशब्दस्यार्थमवा-...त्, ततश्च यथापूर्वं प्रतिवक्तुं नाकल्पत । तस्याः ...लौ शोणिमानमापद्येतां तेन प्रश्नेन । वधूरिव ...नम्रेण मुखेन सा तस्य पुरस्तादवातिष्ठत ।

...अहं तस्य दिवसस्यास्मरम् ; यत्र कम्बोजीयो ...या मिनी च प्रथममिलताम्, उन्मनाश्चाभवम् । ...निष्क्रान्तायां तस्यां रहमानो दीर्घं न्यश्वसीत् ...मे च न्यषीदत् । तस्य मनसि सहसा विचार ...विरासीत्, यन्नूनमेतावन्तं कालं दूरं तिष्ठतो मम ... संप्रति वयस्का संवृत्ता स्यात्, तया साकञ्चा-...सख्यं पुनर्बन्धनीयं स्यदिति । यथाभूतां स ताम-...सीत्, तथाभूतां स तां द्रष्टुं नाशक्यदिति तु निश्च-...व । किञ्च, आस्वष्टासु शरत्सु किं किं नाम न ...चं स्यात्तस्याः ?

वैवाहिकानि वाद्यान्यशब्दायन्त, सुभगः ...रः सैरतापश्चास्मान्परितः पर्यपतत् । ...मानस्तु कलिकातायाः शुद्धायां वीथ्यामुपविष्टः ...पुरस्तात् अफगानस्थानस्य नग्नान् गिरीन् ...नादकरोत् ।

अथाहमेकं करन्सीनोटं ( Currency:Noty ) ...कासयम्, अस्मै चादाम्, अकथयञ्च, याहि भो ...मान ! स्विकां तनयां प्रति निजं जनपदम्, ...योः परस्परसम्मेलनसम्मदश्च मम पुत्र्यै ...साय-सम्पदं जनयतात्' इति ।

इमामुपदां दत्तवता मया कतिपया उत्सवाः स्थगनीया अभवन् । सङ्कल्पितपूर्वान् विद्युत्प्रदीपान् आहर्तुं नाशक्नवम्, नापि सैनिकं वादित्रिकम्, गृहमहिलाश्चास्मिन् विषये नैराश्यमभजन् । किन्तु मत्कृते स विवाह-महोत्सवो भूयोऽपि भास्वान-भासीत् । एकश्चिरविरहितः पिता विप्रकृष्टके देशे पुनः स्वमेककमपत्यं सममिलदिति ।

॥ इति कम्बोजीय कथा समाप्ता ॥

---

## सरस-सूक्ति-संग्रहः ।

[ संग्रहीता-सम्पादकः ]

( १ )

होलाका-दिवसेषु मञ्जुलरसेष्वादेशतो गोकुला-
धीशस्यातुल-वत्सलस्य नियमं सन्त्यज्य गोचारणे ।
निःशङ्कं कुलकन्यकाभिरभितः कुर्वन् कलिं कौतुकी
राधा-वर्ग-जितो हरिर्विजयते वृन्दाटवी-चन्द्रमाः ॥

( २ )

मूकीभूय कियत्, कियन्ननगिरा, नाद्येतिवाक्ये कियत्,
नेदानीमपि भाषणैरपि कियत्, कालं नयन्त्या तया ।
अत्रान्तेन मया च नीव्युपहिते पाणौ कुरङ्गीदृशः
किन्नाकारि नवं नवं नव-नवं नूत-प्रसङ्गे नवे ॥

( ३ )

कृतान्तः कान्तो वा समजनि न भेदः प्रथमत-
स्ततो द्वित्रर्मासैर्मनुज इति जग्राह हृदयम् ।
ततोऽसौ मे प्रेयानहमपि तदीया सहचरी
ततो जाते वर्षे जगदिद मभूत्तन्मयमिति ॥

( ४ )

धन्यस्त्वं भुवि यस्य राजति महाराष्ट्री-कुचोच्चं कुलं,
लाटीवाङ्मृदु नर्म, चेदिवनिता-नाभी-गभीरं वचः ।
काश्मीरी-कटि-विस्तृता मतिरसि गौडी-कच-श्यामलः
कार्णाटी-रत-निष्ठुरो रण-रसः, कीरीमुखोत्थं यशः ॥

# होलोत्सवगीतयः

हिमसमयोत्थो व्रण इति मातरि कृपया कृतोपचारायाम् ।
दयितादलितौष्ठपुटो व्रीडा-विनतो व्रजे विधुर्जयति ॥ १ ॥

दत्वाञ्जनं नयनयोः, प्रसाध्य केशान्, पटं च परिधाप्य ।
बद्धो बलाल्ललितया पुन र्हरिर्लसति मोहनीभूतः ॥ २ ॥

भङ्गारङ्गतरङ्गैर्नग्नं नटतो महानटेशस्य ।
वामाङ्गसङ्गिवामा-विशद-विलास-स्मितं पटीभवति ॥ ३ ॥

एकोऽस्ति नाभिजातः, शिरसाऽन्यो निम्नगामिनीं वहति ।
इतरश्च चोरजाराग्रणी, नैकोमीषु होलिकाराध्यः ॥ ४ ॥

उपनीतचूतकलिका, नवमधुमत्ताऽन्यपुष्टवाचाला ।
धृतवहुसाधनयोगा सुभगा होला विलासिनी जयति ॥ ५ ॥

सल्लिङ्गवृद्धिविदुरा, व्यभिचारज्ञा, रसैकनिष्ठधियः, ।
सद्वेशविधृतरुचयो विदो नमस्या न कस्य होलायाम् ॥ ६ ॥

चतुर-नव-सूक्तिसङ्गत मधरीकुर्व "त्सुपत्रिकाः" सकलाः ।
समुदञ्चितरस मेतन्मधुमनुगृह्णाति "सुप्रभात" मपि ॥ ७ ॥

विबुधो वैधेयो वा बाला बालो युवा प्रवृद्धो वा ।
सर्वे तपस्यदेशिकदीक्षां लब्ध्वा त्यजन्त्यहो द्वैतम् ॥ ८ ॥

मधुरेष कोऽपि शिल्पी, विहितं येनाशु कामिमिथुनानाम् ।
सदने, वसने, नयने, वदने, हृदये, च रागसान्द्रत्वम् ॥ ९ ॥

मासेषु फाल्गुनोऽयं परं महत्वं बिभर्ति, यद्यस्मिन् ।
यूनां सरागमनसां "जीवनमुक्तिः" करोदरे स्फुरति ॥ १० ॥

अतिमसृणशोणचूर्णं संवितरन्तः परस्परं सुहृदः ।
स्वं स्वमनुरागपूरं भान्ति समोदं समर्पयन्त इव ॥ ११ ॥

मधुमन्दसञ्चरोऽयं लताः सपुष्पाः सलीलमालिङ्गन् ।
मृदुकुसुमरेणुचूर्णं क्षिपति दिगास्येषु दक्षिणः पवनः ॥ १२ ॥

प्रविकीर्णशोणचूर्णैं रुपनतरागां स्फुरत्पिकालापाम् ।
कुसुमेषुकान्ति मुच्चैर्दधतीं जगतीं वसन्त उपचरति ॥ १३ ॥

अपहाय दक्षिणाशां रविरपि निभृतं कृतोत्तरासङ्गः ।
　　मधुनोल्लासित एव द्यावाभूमी सुखैः करैः श्रयति ॥ १४ ॥

दरचलदलाङ्गुलीभिर्मधुरनिषेधं प्रकाशयन्त्य इव ।
　　लतिका नवाः सपुष्पा मधुकरयुवभिः प्रसह्य भुज्यन्ते ॥ १५ ॥

पुरहर-नयन-हुताशन-हव्यीभूतं मनोभवं भूयः ।
　　संगत्य भुवनलक्ष्म्या माधव एषो धुनाऽवतारयति ॥ १६ ॥

मधुसहचारिणि मदने धुन्वति जैत्रं शरासनं स्वस्य ।
　　श्रृङ्गारसमरवीराः कम्पं पुलकं च के न कलयन्ति ॥ १७ ॥

युगपद्भुवनत्रयजनितां श्रान्तिं विनेतुकामेन ।
　　कामेन वसतिरिष्टा, "सरसे" वदने कुरङ्गनयनानाम् ॥ १८ ॥

माकन्दकाण्डविनिहितदोलाभाजां नवीनतरुणीनाम् ।
　　आकर्ण्य किमपि गीतं कलकण्ठाः कुण्ठकण्ठतां दधते ॥ १९ ॥

बहलपटवासपटलैर्विततै तमसि प्रगलभरमणीभिः ।
　　सविलाससमाहतानां यूनां पुण्यानि मन्यते मदनः ॥ २० ॥

चञ्चलचेलाञ्चलचलनिबिडकटाक्षालिभिर्वृतो·वध्वा ।
　　सिक्तश्च शोणसलिलैः सत्य "मशोकत्व" मेति कोऽपि कृती ॥ २१ ॥

उद्धुरविषमशरज्वरभरहरणायैव कोप्युपायज्ञः ।
　　जलयन्त्रमुक्तसलिलैः स्नपयति "शीतांशुशेखरद्वितयम्" ॥ २२ ॥

चिन्ताशत-हत-हृदया जनता प्रत्नं स्व "मैक्यसर्वस्व" म् ।
　　लुप्तं पुनरपि लभता मिति होलाख्या हरेर्दयाऽभ्येति ॥ २३ ॥

आराध्य होलिके ! त्वां याचे, साकं त्वयैव भरतभुवः ।
　　दुर्भिक्ष-दैन्य-दुर्गद-दुःखदशा देवि ! भस्मसाद्भवतु ॥ २४ ॥

उत्सवमयेऽत्र समये रसिकसमाजः सभाजनीय इति ।
　　अलवरवसति गिरिधर-शर्म्मा निर्म्माणसाहसं श्रयते ॥ २५ ॥

ॐ स्वस्ति सर्वेभ्यः ।

अलवरस्थ भट्ट गिरिधारीशर्म्मा—

" कविकिङ्करः "

(१०) जीवनं जलं जीवितं च (१३) कुसुमेषु पुष्पेषु कान्तिं शोभाम्, पञ्चेषुजनितामिच्छाञ्च । (१४) मधुना वसन्तेन ...न च । दक्षिणोत्तरयोर्द्यावाभूम्योश्च सम्बन्धेन वहुवल्लभता द्योत्यते । (१५) मधुरनिषेधः अन्तरिच्छासत्त्वेपि बाह्य एवेत्याशयः ...) माधवो वसन्तो विष्णुश्च । (१८) श्रान्तिविनयनेच्छायां सरसत्वं हेतुः । (२१) कटाक्ष एवालयो भ्रमराः कटाक्षाणामा-...ो वा (२२) शीतांशुशेखरशब्दो रसैकगम्यः ।

३




( ले०—वासुदेवशर्म्मा, चूरू )

[ अवशिष्टांशः ]

१३ प्रत्येकवस्तुस्थापनार्थं एकं स्थानं नियमितं विधातव्यम्, वस्तु च तस्मिन्नेव नियोक्तव्यम् ।

१४ यदा कोऽपि जनो लिखति वा पठति, तदा कदापि तत्पार्श्वे स्थित्वा तल्लेखनं पठनं च न पठितव्यम् । यतः स काश्चिदपि वार्ता ईदृशीः लिखेत्; या न द्रष्टुं योग्याः । अन्येषां पत्राणां पठनं महत्पातकम् । चेद्यूयमविचार्य्यैवं करिष्यथ; तर्हि-लोका युष्मान् मूर्खासभ्यादिपदवीकान् विधास्यन्ति ।

१५ नियतसमय एव सर्वाणि कार्याणि विधेयानि । यो मनुष्य उचितसमये कार्यं नो विधत्ते, स स्वस्यान्येषां च समयमपि नाशयति । अत्यल्पकार्यमपि दक्षतया कर्त्तव्यम् । यत्कार्य्यं द्वितीयदिवसे निर्भरं कृतं तदद्यमेव विधातव्यम् ।

१६ स्ववस्त्राणि शुद्धानि स्वच्छानि च कर्त्तव्यानि । वासांसि युष्माकं भवेयुरथवाऽपरेषां कदापीत्थं न विचारयन्तु भवन्तो यत् वयं तु सुन्दर-वस्त्राभरण-भूषिताः स्मोऽपरे च मलिन-दरिद्र-वेषाः सन्ति ।

१७ देहमपि स्वच्छं विधेयम्, यतः "शरीरमाद्यं खलु सर्वसाधनम् । रुग्णो जनः संसारे कदापि सुखेन नो वसति। अतएवारोगिता प्रतिक्षणं विचारणीया । नीरोगतैव संसारे सुखस्य प्रथमं परमं साधनम् ।

१८ सर्वदा प्रसन्नचेतसः सन्तुष्टाश्च भवन्तु । यो जनोऽसंतुष्टः प्रतिपद्यते, स महान् दुःखी सञ्जायते । योऽपरेभ्यो गर्तं खनति स स्वयमेव तस्मिन् पतति ।

१९ लाभः कदापि न कर्त्तव्यः । अपरेषां वस्तूनां रक्षा तथैव विधेया यथा युष्मद्वस्तूनां क्रियते । न कदापि परवस्तुषु स्वत्वाधिकारो विधेयः ।

२० सर्वदा स्वाचरणानि मन्तव्यानि च सर्वथा विधेयानि । सत्सङ्गो विधेयोऽसत्संगेषु दुर्जनसमूहेषु च नो स्थातव्यम् ।

२१ क्रोधो महान् दुर्गुणः, एकप्रकारस्स ज्वर एव वर्त्तते । अग्निः प्रथमं तद्वस्तु एव दहति, यस्मिन् स प्र... चेद्यूयं क्रोधिनो भविष्यथ, तर्हि क्रोधः पूर्वं युष्मा... रक्तं पास्यति। यूयं च कृश-काया दुर्बला मृतप्राया भवि... अतएव क्रोधस्य त्याग एव श्रेष्ठः । यतो गीतायां—

क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥

२२ पिशुनेभ्यो धूर्तेभ्यश्च सर्वदा दूरे स्थातव्यम् । ... युष्मान्मूर्खान्कृत्वा युष्मद्बुद्धिं समयं विवेकञ्च नाश...

२३ विपत्तौ धैर्यं विधेयम् । विपत्तिषु व्याकुला... न्तु, अपितु धैर्येण तस्यावलम्बनं विदधतु । विप... मेव सफलताया आदिकारणम् । विपत्तिष्वधीरो जन... महत्कार्यं कर्तुं न शक्नोति ।

२४ तदेव कर्त्तव्यम् यदुचितं वर्तते, कार्यं कुरुत... परमात्मनि त्यजत । ईश्वरो यत्किञ्चिदपि विधत्ते ... प्रीत्यै श्रेयसे साधीय एव करोति ।

२५ ईश्वरस्य प्रेम सहृदयेन कर्तव्यम् । यथा यू... शरीरं प्रीणीथ, तथैवापरानस्माकं भ्रातॄनपि प्रेमदृष्ट्या...




हेमन्त ! त्वं तरलयसि किं गन्तुमन्तः समन्ता-
न्मागा मागा वस वस पुनर्द्वित्रमासानपीह ॥
श्रुत्वैव त्वद्गमनमधुनाऽनारतैकान्ततान्ताः
कान्ता नूनं त्वयि गतवति स्युर्भवज्जीवितान्ताः ।
रोरुद्यन्ते रहसि सुभगा निश्चितत्वद्वियोगा-
भोगानेहस्यपि कतिपयाः स्वामिनोऽङ्के रुदन्ति ।

* संकलिताः ।

…र्गी काश्चिद्विरदविधुरं बोधयन्त्यो व्यथन्ते
…हन्तोद्वेगस्तदपि वद हेमन्त ! गन्तुं कथन्ते ॥ २ ॥
…मन्त ! त्वयि गतवति स्यन्दमानैस्तुषारै-
…स्सीत्कुर्वाणास्तरुणिममदोन्मत्तचित्ता अपीह ॥
…मुक्त्वा स्वयमुपगतास्तूर्णमुत्सङ्गमङ्गा-
…ऽऽसङ्गाकाङ्क्षां कथमनुनिशं कान्तमुद्बोधयेयुः ॥ ३ ॥
…न्त ! त्वयि वत ! गते शीतसंचोकुचन्तः
…सन्यस्यन्तः सपदि च शिरश्चञ्चलाक्ष्यञ्चलान्तः ॥
…त्तुङ्गस्तनयुगमुरस्यञ्जसाऽऽसञ्जयन्तः
…सानन्दाः स्युः कथमविरतं कामिनो यामिनीषु ॥ ४ ॥
…न्त ! त्वं प्रियविरहिणीहृद्द्वयधामात्मसत्त्वे
…मत्वेच्छुश्चेद्गलनविधये, कर्हिचित्तर्हि मागाः ॥
…वामस्तदुपरि, न ते कश्चिदस्तीह दोषो-
…दोषो नाम्भोमुच इह हि यच्चातको नैति विन्दुम् ॥ ५ ॥
…न्त ! त्वं विधुरमधनानामिदानीं स्वसत्त्वे-
…ऽसत्त्वेनाङ्गावरणवसनस्यानुमायापि मागाः ॥
…स्त्वरिभिर्विरचितकटेनावृताङ्गा मृगाक्षी-
…वक्षोजाग्निक्षपितशिशिरास्तेऽपि निश्युल्लसन्ति ॥ ६ ॥
…मन्त ! व्रजनमथचेन्निश्चितन्ते तदानीं-
…सानन्दम्प्रव्रज, कथमपि स्वैरिणं कोऽनुरुन्ध्यात् ॥
…य स्वप्रतिनिधिमृतुं प्रेषयन्नात्मतुल्यं
…शल्यं सम्यङ् निजविरहजं नूनमुत्पाटयेथाः ॥ ७ ॥

—श्रीभूपनारायणझा शर्मा ( व्याकरणाचार्यः )

—:*:—

## उपाधि कौतुकम् ।

मातर्भारति ! भारतावनिरियं
सौभाग्य-सीमोन्नतिं
प्राप्ता प्रागनुपाधिभिर्बुधशिरो-
रत्नैः प्रकाशोज्ज्वलैः ॥

यन्नामाऽप्यभिधीयमानमधुना
शून्यं किलोपाधिना
मूर्द्धानं नमयत्युदित्वरवर
श्रद्धा-निबद्धाञ्जलिः ॥ १ ॥

हा हा सम्प्रति ते न सन्ति विबुधाः
कालेन नीताः कथा—
शेषत्वं निज-शिष्य-वर्ग-निहित-
स्वौजःप्रकर्षाः क्षितौ ॥

शिष्यास्तेऽपि गुरूपमास्तृणमिवो-
पाधिं विधूय क्षणा—
त्सायुज्यं निरुपाधिनाऽभ्युपगताः
स्वैरं किल ब्रह्मणा ॥ २ ॥

दुर्दैवादिह तत्क्रमागतसदा-
चारा अपि प्रायश—
स्तच्छिष्या वितथाभिमानमलिनाः
पाण्डित्य-चण्डाशयाः ॥

पापानां धनिनां सदा मदजुषां
लालाटिकास्तत्कृपा-
द्वारा हन्त ! वहन्त्युपाधिमलघुं
भारं यथा रासभाः ॥ ३ ॥

शास्त्राण्याकलितानि, जन्म गमितं
वेदान्त-वादादरै—
र्व्याख्यानेऽप्युपदिश्यते वत
सदोपाधिप्रहाणे मतिः ॥

गूढं वित्तवदाश्रयाद्बहुविधो
यत्नो मुहुस्तन्यते
हा हा लब्धुमुपाधिमद्य विदुषा-
मेषाऽस्ति शोच्या गतिः ॥ ४ ॥

उद्दण्डावलिमुण्ड-खण्डनचणै-
श्चण्डैः कृपाणैः पुरा
येषां राजपद-प्रशस्तिरुदिता
लोकैः स्वयं घोषिता ॥
राजानः खलु ते, तृणादपि भयं
येषां, कथञ्चिद्वहु—
व्याजासादितराजराजपदवी-
मन्ये वहन्त्युच्चकैः ॥ ५ ॥
लोकान् रञ्जयते गुणैरगणितै-
र्यो दानपाथःप्लवै—
र्दैन्यं मज्जयते सदैव विदुषां
राजा स एव ध्रुवम् ॥
यन्नामग्रहणं प्रभातसमये
लोकोऽशुभं मन्यते
राजाऽप्येष न राजते कृपणता
पाणिग्रहीता (?) यदि ॥ ६ ॥

श्रीनारायणशास्त्री, खिस्ते,
साहित्याचार्यः ।

—:*:—

## सतीर्थ्य विनोदः ।

प्रथमः —( द्वितीयं प्रति ) सखे ! विद्यालयेऽस्मिन्पठतामन्तेवासिनां कतमं श्रुतग्रहणधारणपटुम् वटुम् मन्यसे ?

द्वितीयः—( स्वगतं ) दृप्यत्ययमात्मनः पाण्डित्येन । भवतु । अपनेष्यामि तावत् वाचोयुक्त्यास्य दर्पम् ( प्रकाशम् ) वयस्य ! यदि सर्वेऽपि विद्यार्थिनः सति पाठसंशये भवन्तमेव निर्णयाय समाश्रयन्ति ; तर्हि कथमयं प्रश्नावकाशः ? यत्सत्यं पाणिनीयानुशासने तु भवान् दीक्षितायते ।

प्रथमः—( सहर्षं ) सखे ! साधु पश्यसि

द्वितीयः—( क्षणं विलम्ब्य ) सखे ! त
दिवसे प्रसंगात् भवत्पूर्ववृत्तमाख्यातुमारब्ध
त्वयि भवत्तातपादनिधनं यावदाकर्ण्य, गुरुणि
द्वहिर्गतेन मया न तदासमाप्तेरश्रावि । तद्यदि
वकाशो भवांस्तदा कथाशेषश्रवणकौतुकं मे पूर

प्रथमः—श्रूयताम् । ननु उक्तमेव मया
यदस्मत्कुलं पद्मा-प्रसन्न-कटाक्ष-क्षेप-पात्रं ना
ति । स्वल्पंच कथंचित्संगृहीतं वित्तमपि
तच्चरणानाम् औषधोपचारादिकृत्ये निःशेषतां
ततश्चोपरतेषु तातपादेषु अस्मासु च बालेषु
चना नो जननी बहु विमृश्यापि उपायान्
श्यन्ती प्रतिगेहं भैक्षं चरित्वा कथंचिदस्म
यानवीवृधत् ।

द्वितीयः—( स्वगतम् ) लब्धावसरोऽस्मि
तम् । (प्रकाशं) हन्त शोचनीया सा वराकी कु

प्रथमः—( सामर्षम् ) आः पाप ! कथं
णीयशीलामपि मज्जननीं कुलटां ब्रवीषीति
प्रहर्तुमुद्युङ्क्ते ) ।

द्वितीयः—( स्मित्वा ) काल्याणिनेय !
भूत भवान् मयि उग्रंपश्यः । किल स्मरति
कुलटायावेति सूत्रव्याख्याने श्रीमद्दीक्षितार्क
भिक्षुक्यत्र कुलटेति ? तत् भिक्षुकीं भव
कुलटां ब्रुवता मया किं तवापराद्धं ? येन वैया
प्रकाण्डोऽपि मयि कोपनः संवृत्तः ? ।

प्रथमः—(सानुतापं) लब्धं दर्पस्य सद्यः फ

सूर्यपुरम् । ( सूरत ) { —निगमशङ्कर शर्मा,

## पद्मान्योक्तिः

हा हा पद्म ! वृथैवपल्वल-जले
जातोऽसि वद्धादरः,
भेकाजा-वक-गो-वराह-महिषी-
पङ्कैः परं वेष्टिते ।
ते भृङ्गा मधुपानमत्त-मुखरा
हंसा गुण-ग्राहिणः,
सन्ति क्वात्र सुगन्धशुद्धपयसा
श्लिष्टास्तथा वायवः ॥

—कालीप्रसाद शास्त्रिणः
( श्रीकरस्य )

## रघुवंश-महाकाव्यम् ।

### चोरपक्षीया टीका ।

—:*:—

( प्रणेता-महाकवि श्रीदुःखभञ्जनकवीन्द्रः )

शृतोप्यस्य दयार्द्रभाव-
माख्यातमन्तःकरणैर्विशङ्कैः ॥
विलोकयन्त्यो वपुरापुरक्ष्णां
प्रकाम-विस्तार-फलं हरिण्यः ॥ ११ ॥

अर्थनिश्चयार्थं धनुर्भृतः चैारस्य, अवपुः न वपुर्यविलोकनकर्मणि तद्यथा तथा अस्यदर्याद्रभावं असिना करवालेन उपलक्षितम् अदयार्द्रभावं अति शयितहिंस्रभावं विलोकयन्त्यः सत्यः हरिण्यः अक्ष्णां प्रकामविस्तारफलं आपुः, प्रकर्षेण कं सुखं नमाति तादृशः विस्तारः तत्फलं प्रापुः, अथ कं प्रकाशं न माति किन्तु मीलित्वा अन्धकारमेव तादृक् विस्तारो यस्मिन् फले तत्फलम्, अर्थात् अक्ष्णां विस्तारे सत्यपि तस्य क्रौर्यं द्रष्टुं न शेकुः, मीलयित्वा पलायन्तेस्म, अथ नेत्र-वैपुल्य-फलं न प्रापुः, कीदृशं अस्यदयार्द्रभावम्, विशङ्कैः विशेष शङ्कैः स्वान्तैः आख्यातम्, करवाल-दर्शनेनैव सञ्जातशङ्कैः मनोभिरेव परिचायितम् ॥ ११ ॥

सकीचकैर्मारुतपूर्णरन्ध्रैः
कूजद्भिरापादितवंशकृत्यम् ॥
शुश्राव कुञ्जेषु यशः स्वमुच्चै-
रुद्गीयमानं वनदेव ताभिः ॥ १२ ॥

हे आपादित आसमन्तात् संजातपाद ! तारकादेराकृतिगणत्वात् इतच, अथ आपादः अकारि इतिनामधातोः क्तः आपादीकृत इति यावत्, तत्संबुद्धौ । स चैारः कूजद्भिरिव कूजनं कुर्वद्भिरिव मारुतपूर्णरन्ध्रैः कीचकैः उद्गीयमानं यशस्सु कीर्तिषु वंशकृत्यं वेणुकर्म शुश्राव अशृणोत्, केषु काभिः कं का इव, कुञ्जेषु लतादिपिहितोदरेषु ताभिः प्रसिद्धाभिः गोपीभिः उद्गीयमानम् अं कृष्णं वनदा इव उच्चैरतिशयार्थे वनदा अवगतः तिरस्कृतः नदो यया अल्लोपे वनदा नद मुतीर्य कृष्णमागता ततो वनदेति संज्ञां लब्धवती, एका वनं जलम् आलवाले दत्वा इति संज्ञां प्राप, इति पैाराणिकी कथानुसर्तव्या ॥ १२ ॥

पृक्तस्तुषारैर्गिरिनिर्झराणा-
मनोकहाकम्पितपुष्पगन्धी ॥

तमातपक्कान्तमनातपत्र-
माचारपूतं पवनः सिषेवे ॥ १३ ॥

अथ पवनः वातरोगविशेषः, तं सिषेवे भेजे, कीदृशं तम्, आतपक्कान्तं घर्माभितप्तं, तथा अनातपत्रम्, अतनमातः सातत्यगमनं न आतो यस्य तादृशं पत्रं वाहनो यस्य, तम्, अथ अच्छत्रं तथा आचारपूतं समन्तात् चारः संचारो यस्य तादृक् पूतं पूतिः दुर्गन्धिः यस्य तं कीदृशः पवनः तुषारैः पृक्तः तुषाः अराणि इव उपमितसमासः, तैः पृक्तः छुरितः, तथा अनोकहाकम्पितपुष्पगन्धी, अनोकहानां अकम्पितानि पुष्पाणि तेषां गन्धः तद्वान्, कस्यां सत्याम्, निर्झराणां निर्गताः झराः येषां येभ्यो वा दूरीभूतवारिप्रवाहा इति यावत्, तेषां गिरिवाण्यां सत्यां अर्थात् दूरेऽस्ति प्रवाहः दूरे त्यक्तः वारिप्रवाहोऽस्माभिः इति उक्तवत्सु मिलितेषु जनेषु सत्सु इत्येतद्रूपायां तेषां वाण्यां सत्याम् ॥१३॥

---

## श्री गीताजयन्ती ।

"सुप्तान् सम्बोधयन्ती, शुभपथ-विमुखान्
दर्शयन्ती च मार्गम्,
दीनान् प्रोत्साहयन्ती, तदनु च ददती
कर्मयोगस्य दीक्षाम् ॥
शब्दाख्यस्यापि बोधं त्रिगुणपरतरं
ब्रह्मणो भावयन्ती,
आनन्दे प्लावयन्ती, जयतु जगति सा
कापि गीताजयन्ती ॥ १ ॥"

ले० चक्रधर शर्मा "बहुगुणः" ।
सनातनधर्म कालेज, लाहौर ।

## पाणिनीयप्रकाशः ।

ले०—म० म० श्रीदेवीप्रसादशर्म्मा, शुक्लः, कविच...

मकारस्य नकारो वा ह्कारे नपरे परे ।
किंह नुतेऽसौ बलं स्वीयं किंह नुतेऽयं निजं...
ङात्परस्य सकारस्य वा धुडागम इष्यते ।
यस्योक्तौ टितिकतौ तस्य ह्याद्यन्तावयवौ क्रमा...
षट्त्सन्तो नात्र विद्यन्ते षट्सन्तोऽत्र वसन्ति...
कुक्टुकावागमौ स्यातां वा ङकार-णकारयो...
परे शरि तथा जश्त्वमसिद्धत्वात्तयोर्नहि ।
परे शरि द्वितीयाःस्यु श्चयः स्थाने विकल्पत...
प्राङ्ख्षष्ठो भात्ययं दूरात्प्राङ्क्षष्ठोऽसौ समा...
प्राङ्षष्ठो हर्षदोऽस्माकं सुगण्ठ्षष्ठोऽयमीद्य...
सुगण्ट्षष्ठो हितो नृणां सुगणषष्ठोऽर्च्यते ज...
नकारान्तात्सकारस्य वा परस्य धुडागमः ॥...
सन्त्स किन्नागतो मित्र सन्स किम्बा पलायि...
पदान्तस्य नकारस्य शकारे तु परे सति ॥ ४...
स्याद्वा तुगागम इति प्रोक्तवान् पाणिनिर्मु...
सञ्छम्भुस्सृष्टिकर्तास्ति सञ्च्छम्भुस्सृष्टिपाल...
सञ्चशम्भुस्सृष्टिहर्ता च सञ् शम्भुः परमेश्वर...
एकं ज्छान्वितं रूपं द्वितीयं ञ्चछान्वितम् ॥...
तृतीयं ञ्चशैर्युक्तं चतुर्थन्तु ञशान्वितम् ।
विज्ञेयमिह तुक्छत्वचलोपानां विकल्पनात् ॥...
परो ह्रस्वतो यो ङकारो णकारो-
नकारस्तदन्तं पदं यद्धि तस्मात् ।

...क्रमाद् ड्ढुट् तथा णुट् तथा नुट्
...गमोऽचः सदेत्युक्तमार्य्यैः ॥ ५१ ॥
...हात्मा सुगणीशः सन्नच्युत इहेज्यते ।
...स्यात्तुटि परे पाणिनिः प्रोक्तवानिदम् ॥५२॥
...हि रुप्रकरणे रोः पूर्वस्याऽनुनासिको वा स्यात्
...नुनासिकं रोः; पूर्वात्पर आगमोऽस्त्वनुस्वारः।
...स्यात्पदान्तस्य रेफस्य तु परे खरि ॥
...ने तथेत्याख्यन्महर्षिः खलु पाणिनिः ॥ ५३ ॥
...नां विसर्गस्य सकारो भवति ध्रुवम् ।
...स्यहमेतस्य सँस्स्कर्त्ताऽसि त्वमस्य च ५४
...करणे लोपमिच्छन्त्येके समस्त्विह ।
...स्य द्वित्वं स्यात्खयश्चाऽथ खयो भवेत् ॥५५॥
...च शरो द्वित्वमेतत्पक्षद्वयं स्मृतम् ।
...सँस्स्कर्तृ शब्दस्य रूपाण्युक्तानि पण्डितैः ।५६।
...शतं वै वा लोवद्वित्वानुनासिकैः ॥
...कौतुकं तत्तु विज्ञेयं बालकैः खलु ।५७॥
...व्ययपरे रुस्स्यात्पुम एतन्मुनेर्मतम् ।
...किलः कलं रौति भाति पुंस्कोकिलः किल ॥५८॥
...व्ययपरे चेति निर्देशात्तु न दुष्टता ॥
...स्ति पुंक्षीर पुंदासादिष्विति ध्रुवम् ॥५९॥
...व्ययपरे ख्याञादेशे रुर्न पुमो भवेत् ।
...नमुत्तमभ्भाति कच्चित्ते रोचते न वा ॥ ६० ॥

( क्रमशः )



# त्वं सैव सैव जननि !

( श्रीमूलशंकर केशवराम शास्त्री )

त्वं सैव सैव जननि, प्रथितप्रतापा
द्वीपेषु खण्डनिवहेषु सनातनी त्वम् ।
दीना वयं विभव-कीर्ति-सुविक्रमेषु,
हीना विषादमुपयाम इव प्रमत्ताः ॥ १ ॥
ईड्या सवित्रि ! महतां महता महिम्ना,
विश्वस्य सम्प्रति तथैव; वयं हि तुच्छाः ।
अद्य स्थितिः स्वभवने भविके परेषां,
पापेन केन जगदम्ब विजृम्भितं तत् ॥ २ ॥
नीले त्वदीयगगने विमलेऽधुनापि
मार्तण्ड-तारक-सुधाकर-सुप्रकाशः ।
प्रक्षालयँश्चरणपङ्कजमर्णवस्ते
गर्जत्यमर्त्यशुभदुन्दुभिमन्द्रमम्ब ! ! ॥ ३ ॥
भित्वा तुषारगिरिनिर्मलदीर्घजङ्घां
दिव्यं पयो वहति सूरसुता † च गङ्गा ।
वक्षःस्थले परिवहन्ति सुधाप्रपूर्णं
स्नेहामृतं जननि. ते शतशो झराश्च ॥ ४ ॥
त्वं सैव सैव सुजला सुफला विधात्रि,
हर्षप्रकर्ष-सरसीज-सुफुल्लनेत्रा ।
कुञ्जानि चात्र गहनानि सुपुष्पितानि
क्षेत्राणि धान्यपरिपूर्णतमानि मातः ॥ ५ ॥
विश्वं प्रपूर्णमखिलं गुरुसम्पदा ते,
दीना वयं विधिवशान्ननु दुःखभाजः ।
तस्मिन् किमत्र भवती प्रकरोतु नाम ?
पुण्ये गरीयसि यशस्विनि कर्मभूमे !!! ॥ ६ ॥

† यमुना ।

# किं शुद्धिर्विरोधकारिणी न वा?

( लेखकः-धर्मदेववर्म्मा शास्त्री, अलीपुर घलवां )

"नीचैः पद्यन्तामधरे भवन्तु ये नः सूरिं मघवानं पृतन्यान् क्षिणामि ब्रह्मणाऽमित्रानुन्नयामि स्वानहम्।"



अयि भोः ? मान्याः सुप्रभात-पाठकाः ? आधुनिक-जगति या हिन्दूजातीय जनहत्यादिदुर्व्यवस्था प्रचलिता, तत्र को हेतुरित्यत्र केषाञ्चनाऽनभिज्ञानां तथा विरोधोत्पादकानां' हिन्दूनामपि श्रूयत एष सिद्धान्तः, यत् त्रीणि कारणान्यत्र वेभूयन्ते, (१) शुद्धिः, (२) सङ्ग्रन्थनम्, (३) यावनमतप्रकाशक-रङ्गीलारसूलादिपुस्तकमुद्रापणम् इति। मन्मते तु नैतानि त्रीणि कारणान्यपितु (१) अस्माकं दौर्बल्यम्, (२) यावन-मत-धर्म्म-पुस्तक-कुरान-सत्त्वम्, (३) आस्माकीनसंहत्यभावः, इत्येव त्रीणि कारणानि सन्ति !

तथाहि—तत्र पूर्वं मौहम्मदास्तथाऽऽस्माकमनभिज्ञाः जना विरोधे—

प्रथमं प्रधानञ्च कारणं शुद्धिमेव गणयन्ति,—

इति हेतुस्तदीयसन्मतौ हेत्वाभास एव वरिवर्ति। यतो हि-किन्ते तबलीगाभिधां शुद्धिं न कुर्व्वन्ति। उत वा तेषामन्यधर्मणाम् स्वमतप्रवेशस्य विद्यते राजनियमः,-नत्वस्माकमिति।

यदि-तेषान्धर्मपुस्तकेषु तत्सत्वात्तदीयन्तथा करणं सुष्ठु नाऽस्माकन्तथाऽभावादधिकार इति कथ्येत, तर्हि तदपि न स्वयं वेदे "कृण्वन्तो [illegible]मार्य्यम्, इत्यादि कथनात्तथा श्रीभागवतेऽपि

"किरात हूणान्ध्र पुलिन्द-पुक्कसा
आभीर-कङ्काः यवनाः खशादयः।
येऽन्ये च पापा यदुपाश्रयाश्रया-
च्छुद्ध्यन्ति तस्मै प्रभविष्णवेनमः।

इत्यादि वचनैश्शुद्ध्या अपि वेदशास्त्र-सम्मत[illegible]

तथा बुद्ध चैतन्यादीनान्तत्राचरणकरण[illegible] शुद्धिप्राक्तनत्वमपि द्योत्यत एव।

यद्यपि सा पूर्वमतोलुप्तायिताऽऽसी[illegible] मध्यकाले तु तत्प्रचारोऽविद्यतैव। तथा हि-

( २ ) काश्मीरे पञ्चदशशताब्द्याम[illegible] "बुतशिकन" नामा नृपोऽभूत्। असको अनि[illegible] हिन्दून्मौहम्मदा श्चकार। पश्चात्तत्पुत्रोऽला[illegible] सर्व्वथैव स्वपितृविरुद्धाचरणोऽवर्तिष्ट, [illegible] पुनरपि स्वधर्म्मं प्रवेष्टुमाज्ञप्तवान्। तेन [illegible]ऽहिन्दवः पुनरपि स्वधर्म्मं प्रविष्टाः।

(२) शिवाजीत्यस्य वृत्तान्तस्तु सर्व्वै[illegible] एव।

(३) महमूदेन १०६ शताब्द्यां भूय एव [illegible] आक्रान्तम्। तदा पराजितस्सेवकपालस्तेन [illegible] गृहे निवेशितः। असौ पुनरपि हिन्दूधर्म्मं स्व[illegible] रेत्यत्र यवनेतिहासास्तथा खलफीतिहास[illegible] प्रमाणम्। इति।

किमौरङ्गज़ेबनादिरशाहादि समयेऽपि शु[illegible] समाजो वाऽभवद्येनाऽभूवन् हिन्दू-हत्यावि[illegible] एवम्भूतेऽपि यत्तेषां तदर्थं विरोधकृति[illegible] तदस्माकं दौर्बल्यनिमित्तमेवेति मन्ये।

(२) सङ्ग्रन्थनम् + द्वितीयं कारणान्तन्मते हिन्दू-
ग्रन्थनम् । मौहम्मदा मन्यन्ते, यदेतेषां संहति-
पि क्षयकारिण्येवाऽऽस्माकम् ।

इति विमृश्यैव तदा तत्कार्य्यकर्तॄनपि निहन्ति ।
ता:, किन्ते "इत्तहाद" नामकं सङ्ग्रन्थनं न
ते । यदर्थमस्मान्निहन्ति । अतोऽत्राऽपि
मे मतौ दौर्बल्यमेव भाति ।

तु सर्व्वथाऽपि सर्व्वतोऽपि वा एत्तहादमेव
णा आसते । अपरांश्च तदर्थं निहन्ति ।

(३) तृतीयन्तु कारणम्—"तदीयमतप्रकाशक
मुद्रापण" मेव भाषन्ते ।

अत्राऽपि किमस्मत्तः प्राथम्यमजनिष्ट ततो वेति
रणीयम्—

पूर्वन्तैः (१) रद्दे हिन्दू । (२) तोफ़तुल हिन्दू,
उन्नीसवीं सदी का महर्षि । इत्यादीनि पुस्त-
नि प्रकाशितानि । पश्चादेव चास्मत्तः—

(१) रद्दे मुसिलमान् (२) तोफ़तुल मुस्लिम (३)
ला-रसूलादीनि पुस्तकानि प्रकाशितानि । अतो
मतौ तु नैतदप्यस्ति कारणम् । परन्तु निर्दि-
ष्टानान्येव कारणानि ।

आर्य्यसमाजिनामेव कारणात्तैर्निर्दिष्टानि पुस्त-
नि व्यधायिषतेति चेन्न—

"तेज़े फ़कीर वर गर्दने शरीर" इति पुस्तकस्य
श्री कृष्णनिन्दकत्वात् । इदं हि पुस्तकं श्री कृष्ण
भगवतो व्यभिचारित्वद्योतकम्,-तत्र किं लिखित-
मिति चेच्छ्रूयताम्—

"लगाया दिल अजब शौके ज़िनह से
कृष्णे बेहिया ने गोपियों से"

किमेष लेख आर्य्यसमाजिपरको हिन्दूजाति परको वा ॥

अत इदमपि न कारणमाधुनिकविद्रोहस्य, यदि भवेदपि तर्हि, किन्तदुत्तरे हत्यैव भवेदिति विचारणीयम् ।

कानि तर्हि तत्र कारणानीतिचेच्छ्रूयताम्—

(१) अस्माकं दौर्बल्यम्, (२) कुरानसत्ता (३) आस्माकीन संहत्यभावः । इति ।

तत्र (१) अस्माकं दौर्बल्यम्—

यदा वयं सबला भविष्यामस्तदा कोऽस्मान्वीक्षितुमपि क्षमः । तदाऽऽस्माकीनसबलत्वाद्विद्रोहशम एव स्यादिति । यथा सबलत्वादेते सप्तकोटिपरिमिता अपि यथेच्छमेव विदधति । अर्थात् यदीच्छन्ति, यदस्मद्धर्म्मो राजनियमे सुरक्षितो भवेत्तदा झटित्येव तथैव भवति । यदेच्छन्ति यदयं हन्तव्यस्तदाऽसौ व्यक्तिरवश्यमेव हन्यते । अतोऽस्मासु यदाशक्तिर्भविष्यति तदैतेऽनुचरा इवाऽस्माकं भूत्वा निवसिष्यन्ति ।

(२) द्वितीयं कारणं विद्रोहस्य कुरानपुस्तकमेव, तथाहि-यदेतान्शिक्षयति, "यदयि मदनुयायिनः,—ये मन्मताऽनुयायी न भवेदसौ क़ाफ़िर संज्ञां लभते । स सर्व्वथाऽपि हन्तव्यः ।" इदं पुस्तकं राजनियमद्वारैव निषेधनीयम् । येन विद्रोहोपशमो भवेत् ।

(३) तृतीयन्निदानं विद्रोहस्य "अस्माकं संहत्यभावः" एव । मोहमदानां सन्ध्यावन्दनादौ कुरानस्यैवेश्वरीय-ग्रन्थात् साम्यमस्ति । परमस्माकन्तु किमन्यदीश्वरप्रार्थनोपासनेऽपि भिन्ने । कुतो भवेदुद्धारोऽस्माकम्, अधुना तु सानातनिकमार्य्यसामा-

जिकं वा भेदमपास्य परस्परं सम्मेलनं विधेलिमं येन विद्रोहोपशमो भवेत्।

—:०:—

## व्याघ्राचार्यो बृहल्लाङ्गूलः।

### पूर्वोभागः।

( ले०—श्री वी. सु. रामस्वामिशास्त्री, वी. ए., वी. एल्. )

कस्मिंश्चित्समये सुन्दरवननामके महारण्ये समवेतासीन्महासभा शार्दूलानाम्। निबिडवनमध्ये समीचीने भूमिभागे भीमाकृतयो बहवो व्याघ्राः पुच्छानुन्नमय्य पंक्तिश उपाविशन्। सर्वोऽप्यरण्यभागः प्रकाशितोऽभूत् एतेषां दृष्टग्रैः। असितोदरनामा प्राचीनो व्याघ्रो निवेशितश्च सभापतिपदे, ऐकमत्येन सभासद्भिः सर्वैः। स च पुच्छासनग्रहणपूर्वकमारभत सभायाः कार्यम्, अवादीच्च संबोध्य सभ्यगणम्। "सर्वे वयं व्याघ्रकुलतिलका एकत्र मिलिताः स्मः, परस्पर मंगलावहार्थम्। खलस्वभावेषु क्षुद्रपशुषु मध्ये काचित्प्रथास्ति "इच्छामो वयं वन मध्ये एकाकिन एव वर्तितुम्, परं च नास्त्यस्मासु परस्परस्नेहभाव" इति। अमूलकनिन्दावादममुं निराकर्तुं प्रवर्तामहेऽस्मिन्शुभदिने, अभिलषामश्च सभ्या भूत्वा लभेमहि समधिकामुन्नतिमिति। दिने दिने अस्मासु जातिहितैषिता वर्धतां वयमपि नाना विधान्पशून् मारयित्वा सुखिनश्च भूयास्मेति" प्रार्थये पशुपतिं परमेश्वरम्।

( सभामध्ये लांगूलचटचटारवः )

हे भ्रातृवृन्द! संक्षेपतो विवृणोमि यदर्थ[...] मत्र मिलिता इति। सुविदितमस्माकमिदं सुन्[...] बासिव्याघ्रसमजे विद्या क्रमेणालुप्यदिति। [...]रपि वयं पण्डिता भवेमइति नितरामभिलष[...] एतत्समालोचनार्थमेव मेलितैषा मण्डली। [...]मोदन्तामत्रभवन्तः सर्वे। कालेऽस्मिन् [...] भवन्ति विद्वांसः। वयमपि भवामः, किमत्र [...]धम्। ( सभापतिः समापयद्वक्तृताम् )

परं च कतिभिः सभ्यैः कृतान्यनेकानि व्या[...]नानि। सकलानि व्याकरणशुद्धानि अलङ्कार[...]ष्टानि च। किन्तु शब्दविन्यासझरी अतिभया[...] कंपितमेवाभूत्सर्वं सुन्दरवनं वक्तॄणां भीषणस्[...] पश्चात्सभापतिरवोचदिदम्। एतद्वनवासी पण्डितो व्याघ्रो बृहल्लांगूलनामधेयः स्वीकृत[...]ठितुं मनुष्यसंबन्धिनमुपन्यासमेकम्।

अवधत्त किंचित्। 'मनुष्य' शब्दश्रव[...] नवीनसभ्याः केचिद् दर्शयन् लालसाम्। [...] "पब्लिक् डिनर" स्य ( Publice dinner ) [...] नाम दृष्ट्वा तूष्णीमेवातिष्ठन्। बृहल्लांगूलोऽपि [...]माहूतस्सभापतिना गर्जनपूर्वकमुदितष्ठत्, [...]भत च पठितुं पथिक-प्रीतिविधायकस्वरेण लिखित मुपन्यासम्।

सभापतिमहाशय, शार्दूलगण! मनुष्य[...] प्रकारो द्विपाज्जन्तुः, पक्षाभावेन स पक्षिगणे[...] गण्यते। चतुष्पदपशुना सह तस्यातीव [...] साद्दृश्यम्। चतुष्पदपशोरासते यानि यान्य[...] तादृशान्येव विद्यन्ते मनुष्यस्यापि। अतएव म[...] एकविधश्चतुष्पात्पशुरिति कथ्यते। एष एव प्र[...]

चतुष्पदस्य यादृशी घटनापरिपाटी विद्यते, तानास्ति मानवस्य । एतन्मात्रभेदनिमित्तेन मनुद्विपदमिति कृत्वा विद्वेष्टुं न युज्यतेऽस्माकम् । डता वदन्ति, कालक्रमेण जायत उत्कर्षः पशोनाम् । एकविधावयववान् पशुः कालक्रमेण तरस्य पशोरन्यस्याकारं क्रमशः प्राप्नोति । सिमो वयं मनुष्यपशुरपि कालक्रमेण लाङ्गूलातो भूत्वा वानरो भविष्यतीति । मनुष्य तीव स्वादुस्सुभक्ष्यश्च । ( व्याघ्रगणस्सर्वो त स्वस्ववदनं ) । सुशकं तमनायासेन यितुम् । जगदीशो व्याघ्रजातेराहारार्थमेव नसृजदिति मन्ये । नास्त्यत्र संशयः कोपि । एव व्याघ्रोपादेयपशोर्नरस्य पलायनेऽथवात्मणे, न दत्तवान् सामर्थ्यमीश्वरः । व्याघ्रसेवां न पश्यामः प्रयोजनान्तरं जीवितस्य तेषाम् । एव तन्मांसस्वादुताहेतोश्च मनुष्य जातिरेवातिास्माकम्। मनुष्यो दृष्टमात्र एव धर्तव्योऽस्माभिः। आश्चर्यावहमेतत्, मनुष्याः पुनस्सुतरां व्याघ्रभ। यद्येतां वार्त्तां न विश्वसिथ,तदा यन्ममाघटत म्,तदुदाहरणरूपेण निवेदयाम्यधुना। सुविदित भवतां यत् वयं चिरं देशानटित्वा बहुदर्शिनो म इति, यस्मिंश्चिरमभ्रमाम, सविषयोऽस्मारवनादुत्तरस्मिन्नास्ते । धेनु-महिष-मनुष्यादिः क्षुद्रपशुरेव वसति तत्र । एकदागममं यकर्मोपलब्धयात्तं प्रदेशम्, ( श्रुत्वा महादंष्ट्रनामा स्याभावो व्याघ्रयुवक अपृच्छद्धक्कारं ) किं यकर्मेति । प्रत्यवोचदुपन्यासकः “ आहारामेव ‘ विषयकर्म ’ वदन्ति सभ्या जनाः । आन्तलोकस्य आहारान्वेषणस्य नाम विषयकर्म । असंभ्रान्तलोकस्य तु तदेव द्यूतम्, चौर्यम्, उञ्छवृत्तिः, भिक्षावेति नानाविधैर्नामभिः व्यवह्रियते । धूर्तस्याहारान्वेषणस्य नाम चौर्यम्, बलवतस्तु तदेव दस्युतेत्यभिधीयते । लोके पुनर्दस्युताशब्दो न व्यवह्रियते । तत्परिवर्तनेन, तमेव वीरत्वमिति जना वदन्ति । दस्योर्दण्डप्रणेतुः कार्यस्य नाम प्रभुता । यो दस्युस्स्वयं दण्डप्रणेता न भवति; तस्य कार्यस्य नाम वीरत्वम् । उदरपूजायाः स्मरणेन बुध्यामः, यत् वीरत्वादीनि नामानि सकलानि । यथाकथं वा भवतु । यद्वदामि तत्तत् शृणुत सावधानम् ।

मनुष्याः सुतरां व्याघ्रभक्ताः । विषयकर्मोपलब्धयात् प्राविशमेकदा मनुष्यवसतिमध्यम् । वंशरचिते मण्डपे निशाम्य मांसलं नृत्यशीलं मेषवत्सं तदास्वादनलोलुपस्तत्र पदमकार्षम् । पश्चादज्ञासिषम्, यत्, एतन्मण्डपं पञ्जरमिति वदन्तीति । प्रविष्टमात्रे मयि संवृतमभूत् द्वारमेतस्य । तत्रागताः जनाः संप्राप्य मद्दर्शनं अमोदन्त नितराम् । अशक्नुवंश्च मद्विषये तत्कृतां भूयसीं प्रशंसामव्यवगन्तुम् । केचित् दंष्ट्रयोर्मम, परे नासिकायाः, अन्ये लाङ्गूलस्य गुणानारभन्त गातुम् । परं च दारान् सोदरान् अन्यांश्च बन्धून् संबोध्य प्रियवचनैरभाषन्त मां प्रति । ततो भक्तिनो मण्डपाधिरूढं मां स्वस्कन्धोपर्युत्थाप्य श्वेतवर्णेन वृषभद्वयेनोढे शकटे मामारोपयन् मण्डप सहितम् । दृष्ट्वा अनडुहौ मम अतीव क्षुधाया आसी दुद्रेकः, किंतु नापारयम् मण्डपाद्बहिर्गन्तुम् । अहं पुनः चर्वं चर्वं छागमांसं सुखेनाप्रापं प्रासादं गौरस्य नागरिकस्य जनस्य कस्यचित् आगतमात्रस्यममाराधनार्थम् । स भद्रपुरुषः स्वयमेव द्वारदेशमागत्य अभ्यर्थयन्मां सविनयम् । ममवासार्थं निरदिशन्म-

एडपमेकं लोहदएडमरिडतम्। सेवार्थं मम न्ययुङ्क्त विनीतं सेवकमेकम् । स्वादुभिर्मांस शोणितैराराधयच्च मां सादरम् । ततस्सजीवस्य वा सद्योमारितस्य मेषस्य धेनोर्वा मांसमास्वाद्यास्वाद्य सुखेनावसमेतस्मिन्नेव प्रकोष्ठे । इच्छा नाभूत्प्रतिनिवर्त्तितुम् । तथापि नापारयं त्यक्तुं स्वदेशवात्सल्यम् , जननी जन्मभूमिश्च स्वर्गादपि गरीयसी । यदा यदैषा-जन्मभूमिर्मानसे समास्फुरत्, तदातदा "हाउ" "हाउ" कृत्वा प्राभवं गर्जितुम् । हे जननि ! सुन्दर वनि ! कथं त्वामहं विस्मरामि ? यदा मन्मनसि त्वमाविर्भवसि तदाहं परित्यजामि धेनुमांसम् । जहामि मेषमांसम् । ( अर्थात् त्यजामि अस्थिचर्म मात्रम् ) लांगुलाघातद्वारा सदा प्रकटयामि लालसां मम । यस्मिन् दिने त्वां नाहं दृष्टवान् तदा क्षुधामप्राप्य नैव खादामि,निद्रामलब्ध्वा न स्वपिमि। यावद्धरामि जठरे तावन्मात्रं भुंजे। तदुपरि भक्षयामि त्रिचतुर "सेटक" मात्रं मांसम् । तदुपरि न खादामि (वक्ता धैर्यमवलम्ब्य पुनरप्यारभत वक्तुम् )एकस्मिन् दिवसे मदभिप्रायं ज्ञात्वा वा प्रमादाद्वा सेवकः मन्दिरस्य मार्जनान्ते द्वारदेशमसंवृत्यैव गतवान् । अहंतु द्वाराद्बहिरागत्य उद्यानपालकमदृष्ट्वा पलायमानो झटित्येवागममेतदरण्यम् ॥

मनुष्याः क्षुद्रकाया अपि निर्मान्ति पर्वताकाराणि मन्दिराणि । कदाप्येतादृशगृहाणां निर्माण समये वयं न प्रत्यक्षीकृतवन्तः । एते पुनस्स्वयमेवैतानि निर्मान्तीति प्रमाणाभावः। एष गिरिरेवास्माकं मन्दिरम् । आस्तामेषा स्वभावसृष्टिः । बहुगुहा मण्डितानेतान् महागिरीन्निशाम्य बुद्ध्याजीवी मनुष्यः स्वयमेवाश्रयत् तानेव पर्वतान्।

मनुष्यजन्तुरुभयाहारी, मांसमपि खादति
मूलान्यपि । मनुष्याः फल-मूल-गुल्मादीनि भुं
नाहं जाने किमर्थं शष्पाणि नाभ्यवहरन्तीति।
कुत्रापि तृणभोजिनं मनुष्यं नाहमपश्यम्। म
संशयः कोऽप्यस्मिन् विषये । गौरवर्णा नरा ध
कृष्णवर्णाः स्वीयेषूद्यानेषु शष्पाणि वर्धयन्ति
रम् । आहारार्थमेवेति मन्ये । नो चेत् तृणवर्ध
मर्थमादरः प्रयासश्च । मनुष्यास्तृणानि आहर
कथां कृष्णवर्णस्य मनुष्यस्य कस्यचिन्मुखा
षम् । 'साहेब'वदुषित्वा,धनानि च व्ययित्वा,
नवान् तृणं खादितवान् इति । मनुष्याः पुनर्न
बृहतीः शाखाः । किन्तु पक्त्वा भुञ्जतेऽ
सस्यानि । सस्यानि भूमावुत्पाद्य रक्षन्ति। र
कथयन्ति क्षेत्रं वा उद्यानं वेति । एकस्य
प्रभवत्यन्यः प्रवेष्टुम् । क्रोधातिरेकान्नुष्यो व
महं तृणं खादामि इति। जानाम्यहं मनुष्यस्वभा
यद्यत् कार्यं कुर्वन्त्येते न तद्गूहयन्त्यतियत
यथाऽपूजयन्नश्वानपि तथैवोपासते। घोटकाम
श्रेय इति निश्चयमेतत् । ते पुनः छागमेषगवा
पोषयन्ति नितराम् । तेषां गोसंबन्धीव्यापार
र्यावहः। पिबन्ति गवां दुग्धम् । तस्मात्पूर्वं
व्याघ्रपण्डिता स्सिद्धान्तितवन्तः कस्मिंश्चि
मनुष्याःगवां वत्सा अभूवन्निति । तस्माद्
मनुष्यस्य गवा बुद्धिगतं सादृश्यमस्तीति ।
छाग-मेषादीनाहारार्थं एव पोषयन्ति ।
चाहं गेहानि निर्माय वयमपि नरान् पाल
इति । परमपरे हस्ति-गर्दभ-कुक्कुर-बिडाल
सेव्यन्ते मनुष्यैः । अतएव मनुष्यजातिः
पशूनां भृत्येति कथ्येत । अद्रात्तं मनुष्यालये

मनुष्यचरित्रमतिविचित्रम्, तेषां विवाहरीति ...वहा। पश्चाद्विवृणोमि तां सरणीम् । ...सभापतिरमितोदरो दूरे दृष्ट्वा हरिणशिशुमेकं ...दुदतिष्ठदासनात्, सरभसमन्वधावच्च तम- ...एवममितोदरो दूरदर्शीति ज्ञात्वैव सभ्यैर्निवे- ...साभापत्ये। यस्यां दिशि सगतः तामेव ककुभं ...गतान्येपि सभासदः। व्याघ्र महासभेत्थम- ...एव भग्नाभूत् ॥

## भूदेवमहत्वम् ।

[ ले०—श्रीगङ्गाविष्णु शास्त्री, मुलतान ]

विपद्घनध्वान्त-सहस्र-भानवः,
समीहितार्थार्पण-कामधेनवः ।
अपार-संसार-समुद्र-सेतवः,
पुनन्तु मां ब्राह्मण-पाद-पांसवः ॥

उद्धृतपद्यम् ।

अयि! सद्विद्योद्यन्नूतन प्रतिभाजन्याऽनवद्यहृद्य-गद्यपद्य-...माधुरीमधुरवाचः! सकलगुणगम्भीरता-तिरस्कृतमहा...ाः! जिज्ञासुजनमानससमुद्राः! निरन्तर-विद्यादान-...ान-तिरस्कृत-सन्तानाः! परोपकृतिकृतिचिन्तासन्तान...नैकतानाः! ब्राह्मणमहाभागाश्च! पाठकमहाभागाः!

निगम-निगमाङ्गागम-प्रकाशरते, समस्तदेशान्तर्वर्तित्त-...र्तिनिवृत्तिनिरते, अखिलदेशजातिकुलानामादर्शभूते, ...मिभूते, भूतधात्री-समुद्भूत प्रभूत-भूतनाथ-ध्यानभूतभा-...नाम्, भूतार्थं ( सत्यार्थ ) प्रतिपादनक्षमानाम्, क्षमा...न-क्षमानाम्, श्रीवशिष्ठ-वाल्मीकि-पराशर-व्यास-शुक-...अत्रि-च्यवन-जैमिनि-कपिञ्जल-पतञ्जलि-पाणिनि-कैयट-क-णाद-पिप्पलादिमहात्मनां पूतात्मनां मण्डलैर्मण्डिते, प्राचेतस-व्यास-भास-भारवि-श्रीहर्ष-बाण-भवभूति-कालिदासादिकवि-पुङ्गवराजि-राजिते, भट्टोजिदीक्षिताऽप्ययदीक्षित-नागेशभट्ट-गदाधरभट्ट-जगदीशभट्टाचार्यादिकोविद-सनाथिते, भरतप्रतिष्ठापिते, भा-रते, भारतेऽनादिकालादेव देवशंकासा भूदेवा अनुत्तमं-सर्वोत्कृष्टतमं स्थानं, ज्ञानप्रकर्षाज्जगति जायमानानाम् मनुतनुजनुषां मध्ये सर्वश्रेष्ठां पदवीञ्चाविन्दन्त । नाऽत्रकोपि संशीतिलवः । निरस्तसमस्तमानवस्वान्तखेदाः शब्दात्मकब्रह्मरूपा वेदा ब्राह्मणानामुत्पत्तिम्-विश्वाधारस्य-विश्व-नियामकस्य-विश्वविश्वकर्तुर्विराट्स्वरूपस्य, सर्वात्मनः परमात्मनो मुखादेव प्रणिगदन्तीति नाऽविदितं विदितवेदितव्यानां भव्यानां महानुभावानां भावानाम् ।

स्मृतिकारचक्रचूडामणिर्मुख्यप्रजापतिरिद्धबोधो बुधविबुधाग्रगण्यो यशसा वरिष्ठो वृन्दिष्ठः स्वायम्भुवमनुर्महर्तीभगवतीं श्रुतिमनु, प्रथमाध्यायत एव भूसुरस्तुतिसन्ततिं प्रतिपादयन्, निम्नोक्तयुक्तियुक्तव्याहरणान्नजात्वपि व्यरंसीत् यजन्मन एव ब्राह्मणमूर्तिर्धर्ममूर्तिः ।

धर्मार्थमेवाऽयं विश्वस्मिन्नस्मिन् विजायते । विजायमानोऽयं जागतिकपदार्थसार्थपरिवृढः । अपरे जना अकम्पानुकम्पानुकम्पार्णवस्य भूदेवस्याऽनुकम्पा-कटाक्षपातेनोपयोगार्थं सांसारिकपदार्थानुपाददते ।

भारतविज्ञानम्, भारतदर्शनानि, धर्मशास्त्राणि, अर्थशास्त्राणि, ज्यौतिषम्, आयुर्वेदः,वनस्पति विज्ञानम्, भूगर्भविद्या, सर्वातिरिच्यमानं ब्रह्मविज्ञानञ्च ब्राह्मणानामप्रतिमतपस्यायाः प्रखर-प्रतिभायाश्च जाज्वल्यमानानि निदर्शनानि सन्ति । संक्षेपतः ब्राह्मणान्ववाय-गौरवे भारतीयगौरवस्य प्रशस्यं रहस्यं प्रच्छन्नमेव वर्वर्त्ति ।

किमधिकमुच्येत, सृष्टिसृजनदक्षः करुणासिन्धुः सर्वबन्धुरनाथनाथो विश्वनाथो ब्राह्मणजातिविरचनायां स्वरचनाचातुरीमेव प्राचोकटत, परं तद्रचनाया अखर्व-गर्वं प्रभुर्विभुरद्यापि न जहाति ।

यथोत्कृष्टशिल्पकर्मव्यापृतः शिल्पी यदृच्छया निर्मित-सुन्दरं वस्तु विलोक्य मोमुदिति, तथैवाऽयं जगच्छिल्पी सकलोदात्त-गुणोपेत-ब्राह्मणजातिनिर्मितं निभाल्यामन्दसानन्द

सन्दोहमनुभवन्; तत्कल्पनायां न केवलं गर्वायते, परमेतज्जाति गुणगणे मुग्धायत एव ।

प्राचीनकालिकाः सुरनदीस्नाता वेदशास्त्र-निष्णातास्त्रुटि-तभवबन्धव्यतिकराश्चित्तान्तर्विषमविषयाशीविष-गता अकिञ्चना अपि शमधनिनः, अनिकेतना अपि सत्यकेतनाः, मनस्विनो यशस्विनः, परमतपस्विनो । धर्मिष्ठाः, आत्मनिष्ठाः, सन्मङ्गलौघकरणीं, विपत्तेर्हरणींसंसारसिन्धुतरणिम्, तमोऽन्धे तरणिम् ( सूर्यम् ) अद्वैततत्त्वजननीं जननीं पुराणीममर्त्यवाणीं सेवमानाः, सुकृतचयचित्तैकशरणमाननीयाः, ब्राह्मणाः पर्णकुटीरेषु निवसन्तः, स्वेच्छया विलासैश्वर्यादिकं विहाय, केवलं धर्मज्ञानानुशीलनेऽहोरात्रमतिवाहयन्तः, भुवनत्रयमुपकृतिकृतिभिः प्रीणयन्तः, अशेषदुःखशमनव्यापारदक्षं श्रेयोमार्गमपरान् वदन्तः, परगुणपरमाणूनपि पर्वतीकृत्य नित्यं निजस्वान्ते विकसन्तः, स्वयमाम्नायाऽध्ययनरतिजनितेनाऽमन्देनाऽऽनन्देन विलसन्तः, आत्मज्योतिषा प्रसीदन्तः, न जात्वपि विषीदन्तः, पुत्रान् शिष्यान् सर्वाङ्गसुन्दरीं सौपर्वणीं सौवर्णीं वाणीमध्यजीगपन् ।

राजन्यानां कृते राज्यसुख-भोगं, वैश्यानां कृते वाणिज्य व्यवसायद्वारा धनानन्दसुखं कृत्वा स्वयं भवरतिविरताः केवलं शरीरयात्रानिर्वाहाय भिक्षां भिक्षित्वा तदन्नेन जठरपिठरपूर्तिमरचयन् । सज्जनजन-शान्त-शान्तवृत्ति-सिवातिस्वच्छं, कुन्दकुसुम--कर्पूर-नीहारवदतिधवलं बलप्रदम्, अच्युतचरणच्युतम्, त्रिपुरारिशिरश्चारि, पापपुञ्जहारि मनोहारि गाङ्गं पयो निपीय, तत्प्रभावेणातिगहनब्रह्माद्वैत तत्त्वराद्धांताटवीस्वच्छन्दसंचरणपञ्चाननप्रभावाः साहित्य पाथोनिधि-मन्थनमन्दरायमाण-प्रतिभा-विभवा आर्त्विजीना अनूचाना अश्वस्तनिकवृत्तयो विश्वजनीनवृत्तयः, धर्मसंतानसुवः, वाचंयमाः, स्थाण्डिलशयिनः, सत्यवद्याः, अनवद्याः, लोकोपकृतये, अज्ञानततिहतये शास्त्राणि, पुराणानि, नाटकानि, तथोच्चावच ग्रन्थराशीन् व्यरचयन्; यैः संसारस्य प्रभूतोपकृतिमन्वतिष्ठन् ।

मान्याः ! एतद्गुणगणगौरवावर्जितहृदयाः, सदय-हृदयाः नरपतयः, प्रभाते प्रदोषे च सामवेदगानेन तपोवनवासिना मानन्दराशिं समेधयतां महर्षीणामपनीतपान्थक्लमेषु पवित्रा-

श्रमेषु सदा सदारदारिका विवसन्तः तच्चरणपायोपु... कतिपयसमयं तानुपसयाऽतिवाह्य, ऋषिगणं ... काननेषु विचरन्तः सदाचारवन्तः सद्धर्मवन्तः सन्तः ... शिक्षा मशिक्षन्त ।

तद्वदपरद्वीपवासिनोऽपि 'एतद्देशप्रसूतस्य स... जन्मनः । स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमा...' इतिमनूक्तदिशा, एतज्जम्बूद्वीपान्तर्गताल्लब्धसम... विहित-सदुपदेश-पीयूषवर्षाद् भारतवर्षात् समुद्भूतानां ... भूदेवानां सकाशान्न केवलं विद्यां परं स्वं स्वं चरि... शिक्षन्त । यतः प्राणिमात्ररक्षायास्तेषु विज्ञान... प्रसारणस्योत्तरदायित्वात्तैरात्मन्येव निहितमासीत्तेष... पवित्रनिर्मलधर्मभावेन पूर्णेन चरित्रबलेन महत्या ... च निर्व्यूढ मासीत् ।

एतदर्थं तदात्वे परोपकारमयजीवनानां ... पराणां करुणा-वरुणालयानामेषां करुणयाऽऽदर्श... चरित्रवतां भूपानां समाजानाञ्चाभावो नावर्तिष्ट । ... नीयाः ! सत्यमिदं यत्सदा जागतिककल्याणाय निजस... र्गमपि विदधतां समाजार्थमादर्शस्वरूपाणां देवरूपाणां ... समाना नाऽपरा कापि जाति र्लब्धसमस्तोत्कर्षं ... विरहय्य, दृष्टिपथमवतरिष्यति ।

इदानीमितिवृत्ते सुवृत्ते सुचारुतया चारुचारिता... दृष्टिराकृष्यते । नाऽसौ शुभमयः स्मृतिसरण्या अपेतो ... वताम्, यत् भूदेवा न केवलं विद्यया, तपसा, ... कष्टजातं सोढ्वाऽपि समाजमरक्षन् । तत्समाजसेवा... नेऽवदानसक्ताः ' सम्मानाद् ब्राह्मणो नित्यमुद्विजेत वि... इत्युक्तेः मानधनिनः सन्तोऽपि मानं नाचीकमन्त ।

अत्राऽस्मत्पूर्वजा द्विजा अस्मद्वंसप्रवर्तका ऋषयो ... धर्मरक्षायै, अज्ञानहत्यै, विज्ञानोन्नत्यै, परोपकृत्यै ... सर्वातिशायिनं त्यागं विधायेदमपि याथातथ्येन ... दर्शकान् प्रत्यदर्शयन्, यद्देश-धर्म-सेवार्थमकिञ्चना ... तपोधनास्तपस्विनो मनस्विनः--सर्वकष्टम्, निखिल... सानन्दं सोढुं सदा बद्धपरिकराः सन्ति ।

पुरा वृत्रासुरादिक्षुद्राचाराणां प्रबलपराक्रमै... ( चकिता ) विद्रुता पलायिता) भयभीता देवसेना ...

...त् । नैजरक्षणमुपायमनालोक्याऽऽत्मना स्वयमेव ...तपस्याकारणेनाऽसाधारणेनास्थिककङ्कालावशिष्टं वि...तं महर्षिपुङ्गवं दधीचिनामधेयं नैजवज्रनिर्मिति ...स्थिभिक्षामभिक्षत । तद्वाक्यकर्णगोचरीकरणसमकाल... परमत्यागी तपःकृशिष्ठो भूदेववृन्दिष्ठो भूसुरः सुराणां ... च विजयार्थं निजशरीरास्थिजातं वितीर्य, ब्राह्मण...त्यागस्य मूर्तिमन्तमुदाहरणं सार्वदिके साहित्य ...के समस्थापयत् ।

...त । कियतीनामेयमुक्तिकृतेः पराकाष्ठा । एतद्गु...णेन ब्राह्मणाः सर्वजनस्वान्तेषु राज्यमकुर्वन् । ... रमणीयसमये शुभमये सदाचारेण, धैर्येण, क्षमया, ..., प्रतिभया, विज्ञानेन, आचरणेन, व्यवहरणेन, सत्यव्य... च मूर्तिमतामेव सनातनधर्माणाम्, शान्त्या, शुचि ...जितेन्द्रियतया चाहमहमिकया समालिङ्गितशिरोध...नवदाराधनदत्तचेतसाम्, उदारगुणावदातसचेतसाम् ...साम्, निरेनसाम्, संयतरेतसाम्, अप्रतिमप्रतापा...निजप्रताप-निर्जिततपन-प्रतापानामेषां महामहिममहि...महसा महीपतयोऽपि वेपन्तेस्म । स्मर्यतां भूतपूर्वः समयः, ...र्वेषः, रक्षोभिरभ्याहतकर्मवृत्तिः कर्मठो महाराजं दशरथं ... श्रीरामचन्द्रं याचितुमायात्तदा किंकर्त्तव्यताविमूढो ...चित्तवृत्तिः सन् पङ्क्तिरथो ( दशरथ- ) मनसि ...न्वभूवः—

...स्यन् कुलं धक्ष्यति विप्रवह्नि-र्यास्यन् सुतस्तप्स्यति ...न्युम् । इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं ...।" अत्र महाराजो दशरथः प्रेष्ठप्रष्ठमपि प्राणप्रियमपि ...विनन्दनप्रभावप्रभावितः, तत्प्रतापानलजातसाध्वसः ...चन्द्रं ससौमित्रि प्रजिघाय ।

...गवान्, तत्रभवान्, मर्यादापुरुषोत्तमः, धर्मो...ऽवतीर्णः श्रीजनकजाजानिर्ब्राह्मणोत्कर्षविषय मुद्दिश्यै...व्याचष्टे, यत्

...सादाद् धरणीधरोऽहं विप्रप्रसादात्कमलावरोऽहम् । ...सादादजिता जितोऽहं विप्रप्रसादान्मम राम नाम,

...ग्रे निर्वर्ण्यतां रामायणीयः प्रसङ्गः, मिथिला नगर्यां मिथि...निकेतन-संस्थानं चन्द्रमौलिशरासनं खण्डशः कृत्वाऽखण्ड-पराक्रमां मिथिलाधिराजनन्दिनीमुपयम्य, वरयात्रया सह पथि परापतन्तं रघुवंशकेतुं संसारसन्तरणैकसेतुं श्रीदाशरथं तरुणेन्दुशेखर-शरासन-भङ्गजात-कोपः, वक्षसि विशङ्कटः ( विशालोरस्कः ), सम्पन्न-ताल-द्वयसः, भीष्मः, धनुष्मान्, उपजान्वरत्निः, कार्त्तस्वर-भास्वराङ्गयष्टिर्भार्गवः भास्वरेण तारस्वरेण यदा युद्धायाह्वत, तदा श्रीरामचन्द्रः स्पष्टमेव व्याजहार ।

"भोब्रह्मन्, भवता समं न घटते संग्रामवार्ताऽपि नः, सर्वे हीनबला वयं बलवतां यूयं स्थिता मूर्धनि । यस्मादेकगुणं शरासनमिदं सुव्यक्तमुर्वीभुजाम् युष्माकन्तु सदैव तन्नवगुणं यज्ञोपवीतं बलम् ॥" "जातःसोऽहं दिनकरकुले क्षत्रियश्रोत्रियेभ्यः, विश्वामित्रादपि भगवतो दृष्टदिव्यास्त्रपारः । अस्मिन्वंशे कथयतु जनो दुर्यशो वा यशो वा, विप्रे शस्त्रग्रहणगुरुणः साहसिक्याद्बिभेमि ॥" हनुमन्नाटकम् ।

अत्र भास्वरभास्करान्ववायोद्भवः, युद्धायालंभविष्णुरपि रोचिष्णुमुखस्य विष्णोरवतारः, जिष्णुर्भूदेवमानवर्धिष्णुः, धृष्णुः ( शत्रुविध्वंस-प्रगल्भः ), सबलारातिजनबलनिराकरिष्णुः, दुर्यशो यशो वा नाजीगणत् । पर्यवसितौ, यदाऽऽबद्धभीमभ्रुकुटीविहङ्गः, शेश्वीयमानारुणरौद्रनेत्रः, परशुरामः परशुमादाय, निम्नोक्तं वच उदैरयत, यदिदानीमेष मे कठोरधारो निष्करुणः कुठारः कण्ठं ते विशतु तत्प्रवीराभव, तदैतत्परशुराम परुषभाषणमाकर्ण्याऽपि सरलप्रकृति विगतविकृतिः, धन्यधन्यः सुगृहीत-नामधेयो भगवान् भास्करवंश-भास्करः संयोजितकरः सप्रश्रायमभ्यधात्—

'हारः कण्ठं विशतु यदि वा तीक्ष्णधारः कुठारः
स्त्रीणां नेत्राण्यधिवसतु नः कज्जलं वा जलं वा ।
संपश्यामो ध्रुवमिह सुखं प्रेतभर्तुर्मुखं वा,
यद्वा तद्वा भवतु, न वयं ब्राह्मणेषु प्रवीराः ॥ प्रसन्नराघवम्

अथ, जीवतो वाक्यपालश्च मृताहे भूरिभोजनम् ।
गयायां पिण्डदानञ्च–त्रिभिः पुत्रस्य पुत्रता ॥

उपर्युक्तं युक्तियुक्तवाक्यं चरितार्थयितुमभियुक्तः पितुर्नियोगेन काननं प्रति प्रस्थितः, स्वप्राणवल्लभाया जनकजाया अन्वेषणयुतः, सुग्रीवाभिधकपिपतिना समं मैत्रीञ्चकार, राघवं प्रशस्यं वयस्यमासाद्य नतग्रीवः सुग्रीवः स प्रणयं प्रण्यगदत्, भगवन् ! यावदेकेन शरेण

देवस्य सकृदेव सप्ततालच्छेदो न स्यात्तावद्धि मम ज्येष्ठभ्रातुर्बलिनो बालिनः ( बालेः ) निग्रहणं साम्प्रतमसाम्प्रतं मां प्रतिभाति ।

इत्थं तद्वचनोत्तजितो न केनाऽपि जितो धनुष्पाणी रामः शपथ-पूर्वकमुपदेशपूर्णं न्नूनं निम्नोक्तं वचः सुग्रीवं प्रत्यपादयत् ।

'भावोऽस्ति चेत्कुशिकनन्दन-पादयोर्मे, यद्यस्म्यहं द्विजतिरस्कृत-रोषहीनः । नान्याङ्गनासु च मनो यदि सप्त तालान् भित्त्वा तदा प्रविश भूतल मध्यगाधम्" इति ।

पाठकमहाभागैरवालोकिषत भगवतो महानुभावस्य श्रीरामचन्द्रस्य मुखारविन्दान्निःसृता नैसर्गिका भावाः ।

( क्रमशः )



# कन्या गुरुकुलम् ।

[ ले०-श्रीमती सीतादेवी, विशारदा ]

[ एष निबन्धो देहरादून-कन्या-गुरुकुल-जन्मोत्सवावसरे श्रीमत्या सीतादेव्या पठित आसीत् । एषा श्रीमती सीतादेवी, कांगडीगुरुकुलस्य प्रधानाध्यापकानामध्यापक श्रीरामदेव महोदयानां पुत्री वर्तते । तदस्या भगिन्या अयं निबन्धःसादर मस्माभिर्यथायथं प्रकाश्यते । —सु० सं० ]

अयि सारासार-विचार-महनीय-मते ! संसत्पते ! विविध शास्त्रावगाहन-श्रुतिगीति-जनित-महिम-समुपलब्ध-लभ्याः सभ्याश्च !

इदन्तु नाविदितमेव तत्रभवतां यदस्यां भारतीय-वेद्यां कीदृशा ज्ञान-विज्ञान-निधयः, कपिल-कणाद-गौतम-वशिष्ठ-प्रभृतयो यतयः, प्रचण्ड-दोर्दण्ड-खण्डिताखण्डशत्रुमण्डला रामकृष्ण-भीष्मार्जुन-प्रताप-पृथ्वीराज-शिववीरादयो वीर
विश्वामित्र द्रोण-कृपाचार्य्य-सदृशाः गुरुवर्य्या
कीय-सत्यव्रत-कम्पित-सुरेन्द्रशासनाः हरिचन्द्र
व्रतिनः, निजभुजार्जिताक्षयकोशराशयः कुबेर
धनपाः, अरातिगृहीतसम्पदः, क्षुत्पिपासा
कण्ठाः कृश-कलेवराः, प्रतापसिंह-सन्निभा
निनः, स्वकीयया सरस्वतीनिभया श्रौ
प्रतिभया शक्त्या च मूकीकृतवादिवृन्दाः बुद्ध
दयानन्दाद्याः स्वनामधन्या महोदयाः मान

भगवतो धर्मस्य प्रसवभूमिरिव उत्पातते
कल्मषस्य, अखिललोकललना-ललामभूता ज
ननी जानकी, हतोत्साहेष्वपि प्रियजनेषु
प्रवाह-प्रवाहिनी द्रौपदी, अगणितमति
गणित-तन्तुः लीलावती, अन्या अपि निज-च
परिपूत-वसुन्धराः शैव्या, सावित्री, दमयन्ती
नाः तथा यवन-राज-कालीनाः इतिहास-प्र
अबला अपि सबलाः पातिव्रत्यमेव सर्वस्व
मानाः ललना लेभिरे । परं नराणां नारीणां च
उत्कर्षे कोऽयं उपायो नाम इति यदि विचार
विलोकयामस्तदा शिक्षोत्कर्ष एव तदुत्कर्ष-नि
वगच्छामः । केयं शिक्षा नाम । अत्र शास्त्रं व

मातृमान, पितृमान्, आचार्यवान्, पुरुषो
पितृभ्यां संस्कृतस्य पञ्चवर्षदेशीयस्य
सुचरित्र संपदः गुरोः सकाशे विद्याऽभ्यासे
यलोकगतिरिति तात्पर्य्यम् । पञ्चमवर्षा
दशम वर्षपर्य्यन्तं गुरोरन्तिके गमनकाले
नियमेन ब्रह्मचारी ब्रह्मचारिणी च चारित्र्य
पूर्वकं विद्या अधीत्य गृहस्थाश्रममाविश
इति शास्त्राणां समयः ।

...म्प्रतं यदि सन्ति कतिचन पाठशालाः विद्या-
महाविद्यालयाश्चा यत्र बाला बालिकाश्च
...ीयते, परं तेषां विदेशीयाचार परिपुष्टत्वात्
सनातनधर्म-सभ्यता ततो दुर्लभाः । न तत्र
...नां शिक्षा, न च पित्रोः गुरोश्चादेशाववो-
...जनेषु सदाचारप्रणाली, न च बालासु
... प्रचारणम्, एवस्थिते सा शिक्षा ना-
... सुखावहा, एतदेवालोक्योक्तं भगवता

...तद्देश प्रसूतस्य सकाशादग्रजन्मनः"
। सदाचार सम्पन्नस्य त्रैविद्यमूर्त्तेः, आचा-
...याशे गुरुकुलात्मके विविक्तप्रदेशे यावा-
...गमः सम्भाव्यते, न तदंशेनापि अन्यत्र,
...पर्यालोचनया प्रतीमः पुरा सर्वे भूमिदेवाः
...श्च गुरोः कुलेऽधीतविद्या धर्मार्थकाम
...चतुर्वर्गं प्रापुः, नात्र लेशोऽपि संशयस्य ।
...णाली या राजपुत्रेषु रङ्कतनयेषु च परस्परं
...भूति सातार्थ्यं प्रणयं च जनयति, यथा हि
...रामाचरिते जनसाधारणेनापि विलोक्यते ।
...नन्दकन्दो भगवान् रामचन्द्रोऽपि विश्वामित्र
सकाशात् विवक्ते एव सकल निशाचर नाश
विद्यामधिगतवान्, प्राचीन शिक्षा पद्धतेः अग-
...लामान्वि ताः कतिचित् आर्यवीराः इमां
...ि पुनरुद्धृतवन्तः । इदं हि इन्द्रप्रस्थीयं कन्या
...म पञ्चभिर्वर्षः यादृशीं शिक्षणद्वारा लोक
...नोति, न सा तिरोहिता विदुषाम् ।
...विधिवत्कन्या उपनीय वेदादि शास्त्रेषु तदङ्गेषु
...येत, अन्योऽपि स्त्रीजनो पितावचनचित्रण
...दि कला यथाऽवसरं ज्ञास्यन्ति । अस्म-

द्देशे हि स्त्री समाजे ब्रह्मचर्य्यस्य च वेदादि सच्छा-
स्त्र पद्धतेश्च महान्तमभावं विलोक्यैतत्पूर्त्यै विहितोऽ-
यं यत्नः, भारतवर्षे एतादृशः कन्याजने सदाचार
शिक्षाप्रचारणपरः नास्ति कोऽपि विद्यालयः ।
अन्यत्र जलवायोः सांसारिकदुर्वासनारहित
तपस्विजनोचितपरस्परिकस्नेहस्य च सम्पर्केण
नात्र कोऽपि दोषः संभाव्यते । यदि तु वयं पुन
रपि भारतवर्षे सावित्रीसदृशीं पतिपरायणाम्,
जानकीसदृशीं धर्मपरायणाम्, लीलावती सदृशीं
बुद्धिमतीम्, लोपामुद्रा—गार्गी—सुलभा-सदृशीं
विदुषीं च दिदृक्षामस्तदैष गुरुकुलपद्धतिः पौरुषेण,
धनेन, कायिक-मानसिक-आत्मिक-साहाय्येन च
पोषणीया, अन्यथा पुरुषेषु शिक्षितेष्वपि न जातु
भारतीयोन्नतिः संभाविनी, इदं खलु स्त्रीपुरुषयुगलं
गार्हस्थ्य यानस्य चक्ररूपं, तथा च एक विकारोऽपि
यानं चलनानर्हम् बाल्ये यथा मातुः संस्काराः
शिशौ संक्रामन्ते स्थिरी भवन्ति च, न तथा प्रयत्न-
शतेनापि, विद्ययैव भामिनीनां आदरः, विद्ययैव
सुखम्, किं बहुना—सदाचारपूर्वकं शिक्षिताः एव
बालाः ऐहिक पारलौकिक सुख भुञ्जाना स्वकीर्ति-
स्तम्भं दृढयन्ति ।

## होलिका ।

ले० म० म० देवीप्रसाद शुक्ल कविचक्रवर्ती ।

वसन्तलिङ्गेन सुसंगता सती
विकासयन्ती नवचूतकोरकम् ॥
कृतार्थयन्ती मुदितं मनोभवं
सुखेन रागं वितनोति होलिका ॥ १ ॥
सुतं वसन्तं सुखदं प्रसूय
गतेऽन्यलोकं शिशिरे स्वकान्ते ॥
सन्तापमन्तर्दधती नितान्तं
किं होलिकेयं विशतस्म वह्नौ ॥ २ ॥

# अष्टादश-हिन्दी-साहित्य-सम्मेलनम् ।

## सूचना ।

हिन्दी-भाषापत्रावलोकनरसिका जानन्त्येव यत्, अष्टादश-हिन्दीसाहित्य-सम्मेलनं विहार प्रान्तस्य प्रधान नगरे मुजफ्फरपुरे भविष्यतीति । तद्विषये सम्मेलन कार्यकर्तृभिः श्रीमद्भी रामधारी प्रसाद महोदयैर्विज्ञप्तित्रयं प्रेषितम् । तदस्माभिः क्रमशः संक्षिप्य प्रकाश्यते ।

सु० सम्पादकः

### प्रथमा विज्ञप्तिः ।

चिरकालं यावत् प्रामाणिक सूचनाभावेन हिन्दी-संसारे महती व्याकुलता प्रसृताऽसीत्, यत्, अष्टादशहिन्दी-साहित्य-सम्मेलन-कृते मुजफ्फरपुरनगरे किमपि कार्यं न भवतीति । परमिदानीं सानन्दं विज्ञापयामो यत् यद्यपि बहुभिः कारणैः कार्यमिदमवरुद्धमासीत्, तथापीदानीं हरिहरक्षेत्रसम्मेलनावसरे स्वागतसमितेः संग्रन्थनाय नियोजिका समितिर्निर्वाचिता विद्यते । तस्यां समितौ प्रान्तीयाः प्रमुखपुरुषाः सम्मिलिताः सन्ति । क्रमबद्ध-कार्यचालनाय प्रादेशिक-साहित्यसम्मेलन-कार्यालये अस्थायिकार्यालयोऽपि संस्थापितो विद्यते । सम्मेलनस्य साफल्याय सततं क्रियते प्रयत्नः । नियोजक-समित्या निश्चितम्, यत् आगामिनि अप्रेलमासे (वैशाखे) हिन्दीसाहित्य-सम्मेलनं भवत्विति । सम्मेलनेन सह कवि-सम्मेलनम्, सम्पादक-सम्मेलनम्, अन्यानि च सम्मेलनानि भविष्यन्ति । ललितकला प्रदर्शनम्, साहित्य-प्रदर्शनञ्चापि भविष्यति ।

एतस्मिन्नवसरे वयं हिन्दी-लेखकान्, सम्पादकान्, हितैषिणश्च निवेदयामो यत्ते सम्मेलन-साफल्याय स्वीयान् विचारानस्माकं सविधे प्रेषयन्तु, पत्रेषु वा प्रकाशयन्तु । एतस्मिन् सम्मेलने किमपि वैशिष्ट्यं स्यादिति समभिलषामः ।

### द्वितीया विज्ञप्तिः ।

विहार प्रान्तीय—हिन्दी-हितैषिभ्यः—

*प्रिया भ्रातरः—*

विदितमेव स्यात् तत्र भवतां श्रीमतां यत् हिन्दी साहित्य-सम्मेलनस्य अष्टादशाधिवेशनं मुजफ्फरपुर नगरे भविष्यतीति । अस्य कार्यस्य सुचारुरूपेण सम्पाद[illegible] समितेः सङ्ग्रन्थनाय च नियोजिका समिति नि[illegible] यस्यां प्रान्तीयाः प्रमुखाः व्यक्तयः सम्मिलि[illegible] समित्यां निश्चितम्, यत्, अप्रेल मासे सम्मे[illegible] मासे च स्वागतसमितेः सङ्ग्रन्थनं भवत्विति । [illegible] महत्व विषये किमपि वक्तव्यं नास्ति । मद्र[illegible] प्रभृतिप्रान्तेषु हिन्दीप्रचारकार्यं गृहीत्वा सम्मे[illegible] ख्यातिर्लब्धा । सौभाग्यमिदमस्माकं यदि[illegible] मस्माकं प्रान्ते तृतीयवारं भवति । अतो वयं [illegible] यामो यत्, भवन्तः स्वागतसमितिसदस्येषु [illegible] कारयन्तु । सदस्य शुल्कम् ५), परन्तु यवनानां[illegible] छात्राणाम्, बाङ्गानां च कृते मुद्रात्रयमेव । [illegible] सम्मेलनस्य साफल्यं स्वागतसमितिसदस्याना[illegible] सङ्ख्यायां निर्भरं तिष्ठति । वयं विश्वसिमः [illegible] च यद् विहारप्रान्तीया अस्माकं भ्रातरः [illegible] सदस्यतां स्वीकृत्यास्मांकमुत्साहम्, प्रान्तस्य म[illegible] स्थापयिष्यन्ति । एतस्मिन् कार्ये विलम्बः [illegible] विधेयम् । शीघ्रता विधेया । समयः स्वल्पीयान्[illegible]

**अन्यच्च—**

वयमेतदपि ज्ञातुमिच्छामो यत्, अस्माकं [illegible] भाषा-सम्बन्धिन्याः कियत्यः संस्थाः सन्ति । [illegible] कालयाः, वाचनालयाः, नाट्यसमितयः । ता[illegible] प्रेषणीयानि । तासां हिन्दी-सेवामुपकारञ्च प्र[illegible] च्छामः ।

### तृतीया—विज्ञप्तिः ।

अस्यां विज्ञप्तौ लेखकाः सूचिताः सन्ति, य[illegible] नाय लेखविषयान् चिन्वन्तु । स्वयञ्च स्वामि[illegible] लेखान् प्रहिण्वन्त्विति ।

निवेदकः—

**श्रीरामधारी प्रसाद**

सहकारी संयोजकः—

प्रधानमन्त्री, विहारप्रान्तीय-हिन्दी-साहित्य[illegible]

मुजफ्फरपुर

Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Print[illegible] Works, Benares.

सौर चैत्रः १९८४

[ ...तुर्थवर्षं ] [ द्वादशी सङ्ख्या

# सुप्रभातम् ।

## समाजाङ्कः

संस्कृत–साहित्य–समाजस्य मासिकं मुखपत्रम् ।

तिमिरततिमुदस्यद्, मंदतारा विलुम्पन्, नयदधि सुरभाषाभाषिजागर्तिभावम् ।
विबुध-विहग-वादै-राह्वयद् भाग्य-भानुम्, विलसतु भुवनेऽस्मिन् सर्वतः 'सुप्रभातम्'

## विशिष्टाङ्क-सूचनाः ।

विशिष्टाङ्कक्ृते चित्राणां क्रियते व्यवस्था । लेखाश्चातिविलम्बेन समागच्छन्ति । आकारोऽपि ...गुणितः स्यादिति मुद्रणेऽपि समयोऽपेक्ष्यते । चित्राणां निर्माणमपि नास्माकं हस्ते विद्यते । तत्र पराय...त्तयम् । विशिष्टाङ्कव्ययार्थं विशिष्टो धनसङ्ग्रहश्च कर्त्तुमावश्यकः । अतएव यदि विशिष्टाङ्को यथासमयं ...श्येत चेत्, ग्राहकैर्मर्षणीयम् । पञ्चदशदिवसेभ्योऽधिको विलम्बस्तु कदापि न स्यात् ।

...द्रव्याभावात् विशिष्टाङ्कस्य मुद्रणसङ्ख्या स्वल्पैव भविष्यति । अतो नवीनैर्ग्राहकैः प्राचीनैश्चावश्यं ...ग्राहकत्वं स्वीकर्तव्यम् । नोचेन्नमेलिष्यत्ययमङ्कः । एतादृशो विशिष्टाङ्कश्चाऽपि संस्कृते अभूतपूर्वः, आश्चर्य...जनक एव भविष्यति । अस्मिन् वर्षे सुप्रभातस्य महती समुन्नतिर्भविष्यति । अस्य ग्राहकत्वं स्वीकृत्य, ...प्रचारं कृत्वा, विविधञ्च साहाय्यं दत्त्वा भवन्तोऽपि सह दयतामातन्वन्तु । विनीतः—सम्पादकः

वार्षिकमूल्यम् ३) छात्रेभ्यः १॥)

प्राप्तिस्थानम्—

# सुप्रभातकार्यालयः, काशी ।

## सुप्रभात-नियमाः।

(१) सुप्रभातमिदं सौरमासस्यान्तिमे सप्ताहे प्रकाशितम्भविष्यति।

(२) एतस्य वार्षिकम्मूल्यम्—समाजनियमानुसारं माननीयेभ्यः—१२) मुद्राः, सहायकेभ्यः—३) मुद्राः, छात्रेभ्यश्च १॥) मुद्रा—भविष्यति।

(३) अग्रिममासस्य प्रथमे पक्षे यस्य ग्राहकस्य सविधे पत्रं न गच्छेत्, तेन नूनं पत्रालये समन्विष्य कार्यालये पत्रं प्रहेयम्। तदा 'सुप्रभातं' प्रेषितं स्यात्। यदि ग्राहकाः पत्रं न प्रेषयिष्यन्ति, तदा कार्यालयो नोत्तरदायी भवेत्।

(४) पत्र-प्रेषण-समये ग्राहक-सङ्ख्या नूनं लेखनीया। अन्यथा पत्रमवलोकितमेव न स्यात्।

(५) अग्रिम-मूल्यमन्तरा सुप्रभातं न प्रदीयते, ग्राहकैर्धनादेशद्वारा (मनिऑर्डर) मूल्यं प्रेषणीयम् स्वीयः पूर्णसङ्केतश्च लेख्यः। वी० पी० द्वारा प्रेषणे तेषामेव समधिको व्ययः स्यात्।

(६) पत्रोत्तरमभिलषद्भिश्चिटिका नूनं प्रेषणीया। अन्यथा पत्रोत्तरं न दीयेत।

(७) लेखकैरतिसरलभाषायां लेखाः प्रेषणीयाः, येन सर्वेऽपि पठितुमवगन्तुञ्च प्रभवेयुः।

(८) लेखाः पत्रस्यैकस्मिन्नेव पृष्ठे पार्श्वयोः स्थानं विहाय, सुस्पष्टैः, सुवाच्यैः, सुन्दरैरक्षरैर्लिखित्वा प्रेषणीयाः। अन्यथा न तेषां प्रकाशनं स्यात्।

(९) विवादग्रस्ताः, व्यक्तिगताक्षेप-पूर्णाः, अपूर्णाः, पुस्तक-रूपाः, लेखा न प्रेषणीयाः। प्राचीन-पुस्तकानां, सामयिकपुस्तकानां वा प्रकाशनं भवेत्।

(१०) छात्राणां लेखाः, संस्कृत-समाचाराः, विज्ञान-समाचाराः, नूतन-वार्ताः सादरं प्र... श्येरन्।

## भारतभूषणं पञ्चाङ्गम्।

इदं पञ्चाङ्गं वाराणसेय-दैवज्ञसमित्या ... संवत्सरं प्रकाश्यते। अस्य पञ्चाङ्गस्य नि... सर्वेऽपि काशीस्था ज्योतिःशास्त्रविदः साहा... माचरन्ति, अत्र हि समुपयोगिभिर्भूयोभिर्वि... सार्कं प्रत्येकं पक्षेषु वृष्टियोगः, पदार्थानां सम... महर्घत्वं च हिन्द्या गिरा निर्दिष्टम्। भारतव... प्रत्येकेषु मण्डलेषु प्रसिद्धस्थानेषु च कार्यं ... सोदाहरणा युक्तयोऽत्र प्रदर्शिताः। एतस्य मु... पत्राणि च शोभनानि सन्ति। किं बहुना? ... पञ्चाङ्गमादाय स्वयं विलोकयन्तु। मूल्यम् ।=)

प्राप्तिस्थानम्—रामनिहोर द्विवे...
धर्मकूप—का...

## सर्वतन्त्रसिद्धान्त-पदार्थलक्षणसंग्रह...

गौरीशङ्कर भिक्षुकृतः, द्वितीयावृत्तिः।

वेदवेदाङ्गदर्शनस्मृतिकाव्यादिशास्त्रीय प... नां २७०० लक्षणवर्णनात्मकग्रन्थो नाद्यावधि प्र... शितः।

उपयोगित्वविषये 'ये सन्ति विषयाश्चा... ते न दृष्टाः, परत्र वै। अत्र चैव समावेश्य सर्व... द्धान्तलक्षणम्' काशी-मद्रासादिस्था ८६ विद्वा... मुक्तकण्ठमुद्घोषिताः।

सङ्केतः—मनभरो, पुट्ठी, जमालपुर, हिसार।

# सुप्रभातम् ।

सम्पादकः—श्रीकेदारनाथ शर्म्मा, सारस्वतः

---

लेखसूची

१९८४

# सनातनधर्मियों को शुभ सन्देश ! ! !

श्रुति-स्मृति-पुराण-इतिहास प्रतिपादित सनातनधर्म का सच्चा प्रतिपादक सनातनधर्म के बाह्य तथा आन्तरिक विरोधियों का मुखमर्दक, विवादग्रस्त धार्मिक ग्रन्थियों को सुलझानेवाला, समस्त भारत में निर्भीक धर्म-प्रचारक,

'काशी-सनातनधर्म-पण्डितसभा का' पाक्षिक मुखपत्र

# "सनातनधर्म"

वार्षिक मूल्य— २) मा

## वैशाख-पूर्णिमा को सजधज के साथ प्रकाशित होगा।

भारत के धार्मिक नेता काशी के विद्वान अनेक कारणों से अपने जन्मसिद्ध नेतृत्व से हा खींचते जा रहे हैं, जिससे समूचे देश में धार्मिक विप्लव मच उठा है। चारों ओर से सनातनधर्म अनर्गल कुठाराघात हो रहा है। धार्मिक स्थिति में दिनोंदिन भयङ्कर परिवर्तन देखने में आ रहा है ऐसी स्थिति में अनेक अल्पज्ञ और स्वार्थी मनमाना ढोल पीटकर सनातन धर्म के नाम पर जन को ठग रहे हैं। सनातन धर्म के गूढ रहस्यों से अनभिज्ञ नवीन सुधारक इस असहाय को रसातल पहुँचा देना चाहते हैं। इन्हीं सब कारणों से काशी की सनातनधर्म परिडत सभा ने शीघ्रही विप्लव का दमन करने के लिये पत्र निकालना प्रारम्भ किया है।

यह पत्र शास्त्रसिद्ध सनातनधर्म का दृढता और उदारता पूर्वक समर्थन करेगा। सना धर्म के बाहरी और भीतरी शत्रुओं की पोल खोलकर जनता के सन्मुख उपस्थित करेगा।

इसमें प्रतिमास 'धर्मपरिषद्' द्वारा निर्णीत की गयी शास्त्रानुकूल धार्मिक व्यवस्थाएँ रहें प्रतिमासके व्रत, त्योहार आदिका निर्णय रहा करेगा। सनातनधर्म सम्बन्धी भिन्न २ विषयों पर का के प्रकाण्ड और अद्वितीय विद्वानोंके युक्तियुक्त और तर्कपूर्ण लेख रहा करेंगे। विशेष लिखने आवश्यकता नहीं। सभी प्रकारकी धार्मिक सामग्रियों से परिपूर्ण यह पत्र सनातनधर्म का वास्तवि नेतृत्व करेगा। इस पत्र को अपनाना प्रत्येक हिन्दू मात्र का आवश्यक कर्तव्य है। सनातनधर्मी जन चिरकाल से इसे चाहती थी।

बस! आजही एक कार्ड भेजकर ग्राहक हों।

पता—'सनातनधर्म'—कार्यालय, काशी।




विविध-विषय-विभूषितम्, अद्वितीयम्, संस्कृत-मासिक-पत्रम् ।

...-वर्षे | सौर—चैत्रः । १९८४ वैक्रमाब्दाः | द्वादशी संख्या

## मासावतरणिका ।

जाड्यं प्रोज्जासयन्ती, जगति विदधती मित्रतेजः समृद्धिम्,
भूयोपि प्रोन्नयन्ती द्विजपतिवलयस्याच्छतां पूर्वसिद्धाम् ।
युक्ता जातिप्रपञ्चैः, प्रकटितसुमनोमोदभृत-"सुप्रभाता"
सद्गोष्ठीवेयमुच्चैः प्रगुणयति मुदं चेतसश्चैत्रलक्ष्मीः ॥ १ ॥

—भट्ट श्रीगिरिधारी शर्मा

जातिप्रपञ्चैः जातौकलहविस्तारैरित्यर्थः पक्षे मालतीविस्तारैः, "मालतीमुखश्चैत्र" इति कविसमय प्रसिद्धात् । सद्गोष्ठी शब्देन सुप्रभातप्रकाशकः संस्कृतसाहित्यसमाजोऽभिप्रेयते ॥

## विरहिणीविलापः ।

प्रियो नागतो मे वयस्ये ! वसन्ते । ध्रु०
लसन्मञ्जरीसञ्चरच्चञ्चरीकं,
न किं किञ्चिदुद्यानमास्ते तदन्ते ॥ १ ॥
कदाऽप्युल्लसन्मल्लिकाऽऽमोदवाहाः,
न किं तत्र हा गन्धवाहा वहन्ते ॥ २ ॥
कथं कोकिला मञ्जुलाऽऽलापशीला-
स्तदीयान्तिके मौनमासादयन्ते ॥ ३ ॥
कथा काऽधुना चेतनानाम्प्रसूनै-
र्लतास्सन्नताश्शाखिनः संश्रयन्ते ॥ ४ ॥
ऋतूनाम्प्रभोरस्य केचिन्निदेशं
न देशान्तरे किंकमप्याद्रियन्ते ॥ ५ ॥
इदानीं स्मरोन्मत्तचित्तो हरिः किं,
जना मादृशा यद्विपन्ना म्रियन्ते ॥ ६ ॥
कृतं भूपनारायणेनेति गीतं,
न गीत्वा जनाः के व्यथामाश्रयन्ते ॥ ७ ॥

*श्रीभूपनारायणझा शर्मा,*
व्याकरणाचार्यः, साहित्यरत्नम्.

## "अभेदोपासना ।"

शिवः, स्वयंज्योति,—रहीनसेवितो,
निरस्त-माद्यन्मकरध्वज-स्मयः,
मनुष्यधर्म्मादरकृ,—न्महेश्वरो
ध्रुवो धियामस्तु धरात्मजाधवः ॥
विनायकाराध्यवता, गुहावन-
प्रसक्तचित्ता, धृतचन्द्रभूषणा ।
मता सतीशेखरतां गताऽवता-
दगण्यकारुण्यधरा धरात्मजा ॥

—*भट्ट श्रीगिरिधारी शर्मा, "कविकिङ्कर:"*

धरात्मजाधवः, गिरिजापतिः, सीतापतिर्वा ।




### संस्कृत-साहित्य-समाजस्याधिवेशनम् ।

संस्कृत-साहित्य समाजस्य चतुर्थमधिवेशनं साम्प्रतं सानन्दं ससमारोहञ्च सम्पन्नमिति वि... मेव स्यात् सुप्रभातरसिकानां समाज-सदस्याना... एतस्मिन् वत्सरे खलु हिन्दूविश्वविद्यालयस्याव... प्राच्य-पाश्चात्य-सिन्धुसम्भेद- स्नान-निर्मला:... द्धा गवेषका विद्वाँसः, परमदेशभक्ताः, श्रीयु... शङ्कर बापूभाईध्रुवमहोदयाः सभापतेरास... ङ्कृत्य समाजमनुग्रहीतवन्त इति परं स... स्थानम् । एतस्मिन् वत्सरे विदुषामुपस्थि... पूर्वेषां वर्षाणामपेक्षया प्रचुरा समभूत । परन्तु... परीक्षासमये क्रियते समाजाधिवेशनम्, तत्का... सम्यक् सम्पद्यत इति खेदं जनयति । एतदधि... प्रथमं श्रावणमासे भवतिस्म । परमिदानीं ... समय एतदर्थमेव क्रियते, येनैतस्मिन्नवसरे भि... न्नदेशेभ्यः पाठशालाभ्यश्च समागताश्छात्राः ... नेऽस्मिन् सम्भूय स्वीयामवस्थां समालोचयन्तु, ... न्नतेरुपायान् विमृशन्तु, तत्र तत्र प्रचारम... लनञ्च कृत्वा मृतप्रायं समाजं जागरयन्त्विति । हन्त ! सर्वत्रैव संस्कृतन्नेषु संस्कृतत्वं सम... दरीदृश्यते । छात्राः परीक्षार्थं समागच्छन्ति । प... पिशाच्यास्तेषां शिरसि तादृशं नग्नताण्डवं ... येन तदभिभूतास्ते न किमपि पश्यन्ति, न शृ... न च विचारयन्ति । तेषामियमुपेक्षा न ... मेव प्राणघातिनो, परं संस्कृतभाषायाः, ...

...तनधर्मस्य च प्राणघातिनी । एत एव छात्राः ...य नेतृत्वं करिष्यन्ति, ब्राह्मणानामादर्शं स्थाप-...ति। यदि इदानीमेव ते स्वीयां दुरवस्थां न ...न्ति, तदा भाविनि समये का नाम गतिः स्या-... परमेश्वर एव जानातु । तदर्थे समाजमन्त्रिभिः ...व सर्वे पाठशालाध्यक्षाः सूचनीयाः, यत् तेषां ...काश्यां समेत्य सम्मेलनेऽस्मिन् भागं गृहीत्वा ...विकं छात्रत्वं समासादयेयुः । हृदयमात्मानञ्च ...सबलञ्च कुर्वन्तु ।

...त्यच्चास्मिन् महोत्सवे ये प्रस्तावाः समुप-...ता विद्यन्ते, ते नितरामुत्कृष्टा अत्यावश्य-... सन्ति, केवलं तेषां स्वीकृत्या किमपि न ...यति, तदर्थमान्दोलनं विधेयम्, प्रचारः ..., तत्तदधिकारिणः सानुरोधं सबलञ्च विज्ञा-..., बहुमतसङ्ग्रहश्च कर्तव्यः । नोचेत्किमपि ...विकं कार्यं न स्यात् ।

...यं समाजस्योत्तरोत्तरामभिवृद्धिं तत्र तत्र ...तां स्नेहमुत्साहञ्च दृष्ट्वा द्विगुणितोत्साहाः ...नाः । एतदेवाभिलषितं विद्यतेऽस्माकं यदत्र ...जनीन-संस्कृत-कार्ये सर्वेषां सस्नेहं साग्रहञ्चा-...शाः स्यादिति ।

× × × ×

...मिदं हर्षस्थानं यत् शिक्षाविषये सर्वेष्वपि प्रान्तेषु ...अस्माकं पञ्चनदप्रान्तः साम्प्रतं संस्कृतभाषायां ... सम्पादयितुं सुसन्नद्धः समालोक्यते । संस्कृतनव-... अद्भुतपूर्वां जागर्तिं जनयताम्, तेष्वद्भुतं जीवनमन्त्रं ..., संस्कृतकार्यकर्तॄणामादर्शभूतानाम्, विद्वद्धुरीणा-... श्रीमतां महामहोपाध्यायश्रीगिरिधरशर्म्मचतुर्वेद-महोदयानां शुभया प्रेरणया संस्थापिता पञ्चनदीया संस्कृत-साहित्य-परिषद् साम्प्रतं कार्यक्षेत्रे समवतीर्य 'उद्योत'–नामकं संस्कृतमासिकपत्रं निःसारितवती । एतस्य सम्पादका अस्माकं मान्याः प्रणयिनः श्रीमन्तो नृसिंहदेवशास्त्रिणः, सहायकाश्च श्रीपरमेश्वरानन्दशास्त्रिणः, नवयुगप्रवर्तकाः संस्कृत-समाजस्थितिमर्मविदो विद्वांसः कार्यकर्तारश्च सन्ति । पञ्चनदीय-शास्त्रिपरीक्षोत्तीर्णाश्च विद्वांसः प्रायः समयमर्मविदः, स्वकर्मज्ञाश्च भवन्ति । तदयं परिषत्प्रयत्न-सम्पादितः 'सुप्रभातस्य' 'उद्योतः' तेषां हृदिस्थितमालस्यमौदासीन्यं शैथिल्यं वैमनस्यं हृदयदौर्बल्यं दारिद्र्यञ्च दूरीकर्तुं शक्नुयादिति प्रबला सम्भावना वरीवर्त्यस्माकम् ।

पञ्चनदीयानां सर्वेषामेव विशारदपरीक्षोत्तीर्णानाम्, शास्त्रिपरीक्षोत्तीर्णानाञ्च विदुषां पुरस्तादस्माकं सानुरोधं साञ्जलिबन्धञ्च प्रार्थनमिदं विद्यते, यत् संस्कृत-साहित्य-परिषदं, तन्मुखपत्रमुद्योतञ्च समुन्नयन्तु । सर्वेषां संस्कृतज्ञानामिदं प्रधानं कर्तव्यं स्यात् । यदि नाम पञ्चनदप्रान्तीयाः शास्त्रिविशारदपरीक्षोत्तीर्णाः सर्वेऽपि छात्राः विद्वांसश्च प्रतिज्ञां करिष्यन्ति चेत् पत्रस्यास्य द्विसहस्रतोऽप्यधिका ग्राहकाः भविष्यन्ति ।

पत्रस्यास्य वार्षिकं मूल्यमपि नास्ति किमप्यधिकम् । अन्तर्बहिश्चायं मनोहरः । भविष्यति च शनैः शनैरुत्तरोत्तरमस्याधिकाधिका समुन्नतिः । वयमस्यानुभवज्ञाः स्मः । साम्प्रतं नूतनं वलमिदं सुप्रभातस्य सम्पन्नम् । तद् वयमस्य भ्रातुः सादरं सहर्षं सबहुमानं स्वागतं कुर्महे । एतस्य चिरजीवित्वं कल्याणञ्च कामयामहे । सर्वत्र भारते पत्रस्यास्य प्रचारोऽचिरेण स्यादिति च परमेश्वरं प्रार्थयामहे ।

* * * *

## अस्माकं साफल्यम् ।

अप्रेलमासस्य चतुर्थे दिवसे पूज्यपादैर्महामहोपाध्यायैः श्रीलक्ष्मणशास्त्रिद्रविडमहोदयैः सञ्चालिते काशीस्थ-साङ्गवेद-विद्यालये काशीस्थ विदुषां काचन समितिः सम्पन्ना । तत्र च सभाया उपमन्त्रिणा श्रीमता विद्वद्वरेण श्रीराजेश्वरशास्त्रिणा

समितिपरिचयावसरे उक्तम्, यत्, अचिरादेव समितिरियं मासिकं पत्रं प्रचिचारयिषतीति, एतत्खलु नवीनं संस्कृतपत्रं शुद्धसनातनधर्मस्य प्रचारं करिष्यति । वयमेतत् निशम्य परं प्रमुदिता भवामो यत् प्राचीना विद्वाँसोऽपि साम्प्रतं कार्य क्षेत्रे समवतरितुं सज्जा भवन्ति । एतदेवास्माकमभिलषितमासीत् यत्, "चिरसुप्ताः, विस्मृतस्वकर्तव्याः, प्रचीनपण्डितास्त्यागमन्तरा केवलं मौखिकीं सनातनधर्मसेवामेव कुर्वन्तः समेषामपि पराभव-भाजनभूताः सन्ति तेषामिमं दुरादर्शं दृष्ट्वा छात्रा अपि पथभ्रष्टाः, किंकर्तव्यविमूढाः, व्यर्थजीवना भवन्ति । यदि नाम प्राचीनाःपण्डिताः सत्यं सनातनधर्मसेवासु सन्नद्धा अभविष्यन्, तदा किं नाभविष्यत । पण्डितानां कृते तु जन्मसिद्धं नेतृत्वम्, धनसाहाय्यम्, जनसाहाय्यञ्च सर्वमपि विद्यते, केवलं न विद्यते त्यागः, न विद्यते हृदये बलम् । अतएवान्ये तेषां मुखाद्ग्रासमाच्छिन्दन्ति । पण्डिता यथाकथमप्युत्थाय सुचिरप्रसृतमज्ञानं दूरीकृत्य धर्मरक्षां कुर्वन्त्विति ।" अतएव सुप्रभाते वारंवारं लिखितमासीत्—यत् "प्रतियोगिविधया, अनुयोगिविधया, यथाकथमपि वा पण्डिताः कार्यं कुर्वन्तु" इति । तदिदानीं श्रीमतां लक्ष्मणशास्त्रिमहोदयानां प्रयत्नेन यदि पण्डितसभा धर्मस्वरूपस्य भगवतः सनातनस्य सेवां कर्तुं प्रयता भवेच्चेदन्येषां छात्राणां कृतेऽपि समीचीन आदर्शः स्थापितः स्यात्, तेषां पन्थाश्च सुपरिस्कृतो भवेत् । श्रीमतां लक्ष्मणशास्त्रिणामुद्योगेनैव कलिकातानगरे शिवकुमारभवनम्, काश्याञ्च साङ्गवेदविद्यालयः, उभावपि संस्कृतसेवां सम्पादयन्तौ तेषां कीर्तिमक्षुण्णां विदधतः । एतद्धि महत्सुप्रभातसाफल्यं यत्तत्क्षुण्णे पथि बहवः पथिकाः प्रयतमाना स्तं परिस्कर्तुं समुद्युक्ताः सन्तीति । भगवान सनातन स्तेषां कार्येषु साफल्यं कुर्यात्, तेषु आत्मबलम्, मनोबलम्, त्यागशिक्षाञ्च दद्यादिति ।

## मालवीय-महोदयानां धर्मकथा ।

अप्रेलमासस्य प्रथमदिवसादारभ्य चतुर्थदिवसं काश्यां जाह्नवीपरिसरे दशाश्वमेधघट्टे देशपूज्यानां त्याग महामान्यानां मालवीयमहोदयानां सनातनधर्मकथा समारम्भेण सम्पन्ना । एतस्यां कथायां काशीस्था पण्डिताः, श्रेष्ठिनश्च समुपस्थिता आसन् । जनतायास्तु का मालवीय महोदयानां भाषणे । एतन्महत्त्व पास यत् आर्यसमाजिका अन्ये च भिन्नभिन्नसामाजिकाः स्थिता आसन् । मालवीयैश्च सनातनधर्मान्तर्गतानां स तर्पण-स्वाध्याय-बलिवैश्वदेवप्रभृतीनामवान्तरधर्माणां यत् युक्तं हृदयङ्गमञ्च वर्णनं कृतम्, तच्छ्रुत्वा तद्विद्वा सामाजिका अन्यधर्मावलम्बिनश्च लज्जिता आसन् । ए मर्मस्पर्शिनी, हृदयङ्गमा, सुधा-सरसा कथा नास्माभिः श्रुता आसीत् । वयन्तु निर्धारयामो यद्यदीदृशीनामेव सर्वत्र भारते प्रचारः स्याच्चेत्तदा न कोऽपि सना विहायान्यं धर्मं मनसाऽपि चिन्तयेत् । एषैव रीतिः स धर्मप्रचारस्य वास्तविकी रीतिः । अनया न केवलं ध एव स्यात्, अपितु संस्कृतभाषाप्रचारः, ब्राह्मणानां प्रचारश्च स्यात् ।

* * * *

## हा हन्त !

मुद्रितप्राये सुप्रभाते सहसैव श्रुतं यत् काशी समितेः सभापतयः ( चेयरमैन-बनारसम्युनिसिपल सनातनधर्मस्य प्रबला हितैषिणः जनप्रियाः, प्रति नागरिकाः श्रीमुन्शी महादेव प्रसाद ( एम० ए०, एल वी० ) महोदया आकस्मिकेन मृत्युना दिवं प्रयाता द्वित्रिदिवसानन्तरमेवापरो दारुणः समाचारोऽश्रूयत, काशीस्थाः प्रसिद्धवैद्यप्रवराः प्रतिष्ठिताश्च महामान्याः श्रीरघुनन्दनशर्म्मवैद्या अपि आकस्मिके क्रमणेनास्मान् शोकमग्नानकार्षुरिति । हन्त ! दुर्वि कः !!

# श्रीमद्भगवद्गीता ।

ले०—त्र्यम्बक-विनायक-मोहरीरः ।

यथा च खिष्टीयानां बायबलग्रन्थः, मोहम्मदीयानां कुराणग्रन्थस्तथैवास्माकं हिन्दूनामयमेव ग्रन्थः। अस्मिन् विषये तु साम्प्रतं न मतवैषम्यम्। यथा खिश्चना बायबलोपदेशमनुसरन्ति, यथा च मोहम्मदीयाः कुराणोपदेशं तथैवास्माभिरपि धर्मग्रन्थानुरूपमेव वर्तितव्यम्। धर्मानुरूपे पापं तु न लगतीति सर्वत्रैव दरीदृश्यते। अत एव साधारणतो धर्म इत्युच्यते योधर्मग्रन्थोपदिष्टोऽस्ति। यथा धर्मस्य सनातनत्वं तथैव धर्मग्रन्थस्याऽपि। अनेन धर्मस्य धर्मग्रन्थस्य वा परिवर्तनशीलत्वं निषिध्यते। किन्तु परिस्थित्यनुरूपपरिवर्तनं कदाचित् सम्भवति। यदा च जना धर्मस्य मूलतत्वं न जानन्ति, धर्मविरुद्धमपि धर्ममिवाचरन्ति, तदा भगवान्—यथा गीतायां वदति, सम्भवामि युगे युगेऽवतरति, तमेवार्थं च परिस्थित्यनुरूपं प्रतिपादयति। अयमेवार्थो यथार्थोऽत्र न संशयो विद्यते। पूर्वैतिहासेनैतदेव स्पष्टीक्रियते। यदा भारते कुमारिलभट्टमतप्राबल्यमासीत् यदा च सर्वे कर्मकाण्डरता आसन् तदा शंकराचार्यस्याविर्भावोऽभवत् तद्दूरीकरणार्थम्। तेनाद्वैतसिद्धान्तेन कर्मकाण्डरतानां मतखण्डनं कृतम्। स्वसिद्धान्तश्च प्रचालितः।

अन्यच्च यदा जना यज्ञयागादिकं प्रामाण्याधिकत्वेन कुर्वन्तिस्म, तदा नितरां हत्या भवतिस्म। तन्निवारणार्थं बौद्धावतारः सर्वेषां ज्ञात एव।

२

अर्थादनेन प्रमाणद्वयेनैतत् सिद्धं यत् यदा यदा धर्मस्य सज्ज्ञानमज्ञातं भवति; अन्यच्चैकस्यापथ्यकरस्य मतस्य प्राबल्यं वर्तते, तदा धर्मतत्वं सम्यग्विवर्णयितुं भगवानवतरति। 'धर्मसंस्थापनार्थाय संभवामि युगे युगे' अत्रस्थधर्मसंस्थापनपदस्य नायमर्थो यदन्यस्य धर्मस्य संस्थापनं किन्तु पूर्वप्रचलितधर्मस्य पुनः संस्करणम्, यतो धर्मः सनातनः।

अधुना सर्वेषामप्येतत् विदितचरं भवेत् यत् किमर्थमेकस्यैव ग्रन्थस्य टीकाः प्रटीकाः सन्ति। सूक्ष्मावलोकनेनेदमस्माकं ज्ञानं भविष्यति यदासां टीकाप्रटीकानां कर्तारः एकसमये नाभवन्। सर्वेऽप्येते कर्तारो धर्मग्रन्थस्य तत्त्वं परिस्थित्यनुरूपं ज्ञापयितुं टीकाः कृतवन्तः।

धर्मग्रन्थे तु सन्ति त्रिकालाबाधितानि तत्वानि। तेषु कानिचित् परस्परविरुद्धान्यपि सन्ति। अस्येदं कारणम्। कालस्तु परिवर्तनशीलः, कदाचित् सुखमयः, कदाचित् दुःखमयः। सुखमये काले यानि यानि धर्मकर्माणि कर्तव्यानि, तानि तानि दुःखमये काले कदाचिदकर्तव्यानि भवितुमर्हन्ति, सुखमये काले येषां धर्मतत्वानां प्राबल्यं, तेषां दुःखमये काले कदाचिदेव। यथा सुखमयकालात् दुःखमयकालो विभिन्नस्तथैव तत्तदाचरणीयानि धर्मतत्वानि भिन्नानि सन्ति। दास्याभिभूते काले न तानि धर्मतत्वान्याचरणीयानि यानि खलु स्वातन्त्र्याधिष्ठिते समाचरणीयानि।

भगवद्गीतायां योगत्रयमप्युक्तमित्यत्र न केषामपि मतवैचित्र्यम् । भगवद्गीताया धर्मग्रन्थत्वमनेनैव सिद्धीभूतं यतस्तस्यां त्रिकालाबाधितत्वं योगत्रयणैव समुत्पन्नम् । तत्र ज्ञान कर्म-भक्ति-योगाः कथिताः । समयानुरूपं हि भवतु ज्ञानस्य कर्मणो भक्तियोगस्य वा प्राधान्यम् । यदा वयं सुखिनो भवामस्तदा तु ज्ञानस्यास्त्वभिभूतत्वमिति 'ज्ञाने सर्वकर्माणि' समाप्तिं यान्ति । यदा च वयं परैरभिभूताः स्मः, तदा कर्मणः 'युध्यस्व-युद्धायोत्तिष्ठ' इति पदेन परिज्ञायते । यदात्र सुखदुःखनिमग्ना वयं भविष्यामस्तदाऽस्तु भक्तियोगस्य प्राधान्यम् ।

अधुनाऽस्माकमवस्था सर्वेषां हि नेत्रपथमधिरोहति । तद्वर्णनसमये कम्पते हस्तः, रोदिति हृदयं; दह्यते चेतः । साम्प्रतं खलु कालचक्रस्य अधो भागमनुभवामः ! पारतन्त्र्यशृङ्खला दिने दिनेऽधिकत्वेन निगडयत्यस्मान् । न धर्मस्वातन्त्र्यं न विद्यास्वातन्त्र्यम् ! किं बहुना ! शरीरस्वातन्त्र्यमपि नास्ति । यदि कश्चिदात्मत्यागं कर्तुं सुखेनेच्छेत् तर्ह्यपि तत्कर्तुं न स शक्नोति बन्धनत्वात् । यदि काचित् स्त्री पतिगमनं कर्तुमिच्छेत् तदपि पारतन्त्र्यात् न शक्यम् । धर्मपालनमप्यतोऽशक्यमेव ।

अस्मिन् समये कथयन्तु भवन्तो यदस्माकं धर्मग्रन्थः किं कर्तुमादिशति । एतदेव । यत्—

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥

——:*:——




लेखकः—"याचकः" ।

यत्किञ्चिदपि कस्मैचिद्दत्तं भवति तद्दान
दानशब्दस्य भावः । किन्तु विशिष्टार्थेन सशब्दो
वहारे समानीतः । येषां खल्वावश्यकता वर्तते सा
य्यस्य तेभ्यस्तद्दानमिति विशिष्टार्थः । परोप
स्यापि तस्मिन्नन्तर्भावः कृतः प्रामुख्येन । स
परोपकारो यः खल्वावश्यकसमये कृतो भव
इदमेव तत्त्वं दानेन स्वीकृतम् । अनेनार्थेन
दानं निःसंशयं हितकरमेव । किन्तु व्य
तस्य वैपरीत्यं दृश्यतेऽधुना । यः कोऽप्या
त्वार्थार्थी, तस्मै जनाः प्रयच्छन्ति साहाय्य
अन्यथा ते पापाधिकारिणो भवन्तीति तेषां
भावना । दाने पुण्यं, विपरीते तु पापमित्यस्मा
सम्मतम् । किन्तु दानसम्बन्धिनी धारणाऽस्मा
लिखितैव । तदनुरूपदानं पुण्योत्पादकम् ।

अन्धपङ्गुबधिरमूकादिदूषितावयवेभ्यो
युक्तम् । यत्रकुत्रचिदेतादृशो जना दृ
नाम, तेषां साहाय्यमवश्यं करणीयमिति गृह
नामाद्यं कर्तव्यं भवति । तदेव पुण्यदाय
शारीरिक-व्यङ्गयेण स्वकीयोदरनिर्वाहं कर्तुं
खल्वसमर्थास्तेषां कालयापनमन्नादिसाहाय्यं
कथं भवेत् ? एवम्भूतानां साहाय्यमकृत्वा निर्बा
भ्यः पुष्टशरीरेभ्यः, श्रमसाधनसमर्थेभ्यो श्राव
मागतेभ्यः सुदृढयाचकेभ्यो यद्दानं प्रदत्तं

तत्पुण्यसम्पादकम् ? एवंकृतेन दानेन याच-
आलस्यविवर्धनरूपपातकानामधिकारी भवति
। नान्यत्फलं विद्यते तस्य कृते ।

अद्य खलु भारतवर्षेषु स्वावलम्बिपुरुषाणामती-
वश्यकता वर्तते । पारतन्त्र्यशृङ्खलानिगडितोऽयं
तिग्रस्तः सञ्जातः । स्वावलम्बनेन विना न
देशः स्वातन्त्र्यशिखरमधिष्ठातुं शक्नोतीत्येव
सिद्धम् । यदि भारतम् स्वातन्त्र्य-वृक्षस्या-
फलान्यास्वादयितुमाकाङ्क्षति, तर्हि तेन परावल-
त्यागः स्वावलम्बनयोगश्च प्रथमतो विधेयः ।
उद्देशेन महात्म-गान्धिभिरादिष्टं भारतवर्ष-
चालनार्थं तदुत्पादितवस्त्रोपभोगार्थं च ।
तरो भारतीयेषु स्वावलम्बनभावागमनार्थ-
प्रयतन्ते, अन्यतस्तु तद्देशनिवासिनोऽन्ध-
दत्तदानेनालस्यफलतः परावलम्बनमेव विव-
न्ति । हन्त ! अनेनोन्नतिविघातकपरम्पराचरणेन
समयं भारतस्य हानिरेव सम्पादिता, विदित-
वेतत्त्वैतिहासिकानाम् ! अस्तु ।

दानेन याचकानामपि हितं भवति न वेति
चारणीयोऽयं प्रश्नः । अस्मन्मते त्वहितमेव
ति । किमिति ज्ञातव्यमवश्यम् । अखिला
का व्यसनिन एवेति सर्वत्र दृश्यते । केचिन्म-
नाः, केचिद्वेश्यावासगमनासक्ताः, केचित्तु चौर्या-
दुष्कर्मनिरता इति महापातकाधिकारिण एव
न्ति । एवम्भूतेभ्यो भिक्षाटनप्रवीणेभ्यो याच-
भ्यो दानं तेषां कुकर्मोत्तेजनमेव भवति । अर्थात्
सिका यजमाना अपि महापातकाधिकारिणो
भवितुमर्हन्ति निःसंशयम् । किमर्थमिदं भवति ?
आलस्यं वर्द्धते, आलस्येन मनोविनोदनार्थं
प्रयत्नो भवति, मनसश्च निसर्गतः कुपथगामित्वादुक्त
दुष्कर्मसाधने मानववृत्तिर्लगतीति स्पष्टमेव दान-
फलं दृश्यते । अतः सुविचार्यैव दानं कर्तव्यम् ।

दानग्राहकयोग्यतोपरि कथितैव किन्तु कीदृग्दा-
नं प्रदेयमित्यद्यापि नास्माभिरुल्लिखितम् । तदुल्ले-
खनेन प्रबन्धस्यास्य कार्यमपि सम्पादितं स्यात् ।
यावच्छक्यं नाणकरूपेण दानमदेयम् । कस्मैचित्क्षु-
धार्त्तायाऽन्नप्रदानं यावद्युक्तम्, न तावन्नाणकदानं
भवतीति सर्वे जानन्त्येव । वापी-कूप-तडाग-प्रपा-
धर्मशालाऽन्नसत्रादिरूपं दानं सर्वोत्कृष्टम् । तेन
परोपकारसाधनं भवति, स्वतुष्टिरपि सिध्यति ।
अत्र मनुर्विचारणीयो यथा—

"दानधर्मं निषेवेत नित्यमैष्टिक-पौर्त्तिकम् ।
परितुष्टेन भावेन पात्रमासाद्य शक्तितः ॥" ४-२२७.

अस्मिंस्तु कर्मफलाशामकृत्वा, यथाशक्ति, पा-
त्रापात्रं विचार्य, दानग्राहकस्य वास्तविककल्याणं
यस्मिन् भवति तद्दानस्य मीमांसा दातृकृते लिखि-
ता । तदेव दानं सात्त्विकमित्याह भगवान् श्रीकृष्णो
गीतोपनिषत्सु—

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ १७-२०

इयं भगवदुक्तिरेवास्य लेखस्य प्रवर्तिका ।
अनेन लेखेन प्रतियाचकं साहाय्यं निषिद्धम् ।
पात्रापात्रविचारोऽपि तत्कार्ये परमावश्यकः, तेन
विना दानं न पुण्यम् । यतः,

'दरिद्रान्भर कौन्तेय ! मा प्रयच्छेश्वरे धनम् ।'

इयं भगवदुक्तिरेव तत्र प्रमाणम् ; न तु लेखक-
लेखनम् केवलम् !

# भूदेव-महत्वम् ।

ले०—श्रीगङ्गाविष्णु मिश्रः, ( मुलतान )

इदानीमानन्दकन्दस्य दनुजकुल-निशानाशन चन्द्रस्य श्रीकृष्णचन्द्रस्य साक्षात्परब्रह्मणः भावा अपि भावुकै र्भावैर्महानुभावैर्विभावनीयाः ।

गविष्ठिरस्य युधिष्ठिरस्य राजसूययज्ञे कार्यान्तरं विहाय विप्रपादप्रक्षालनकार्यं स्वयं स्वयंभूर्विभुः प्रभुः श्रीकृष्णचन्द्रो भक्तजनरक्षणत्यक्ततन्द्रः सादरं—साभिनिवेशं जग्राह । स्वकरारविन्देन भूदेवपदारविन्दान् सप्रेम प्राक्षालयत् । तथा कर्कटरूपनृग-भूपस्योद्धारसमये भूदेवमहामहिमानं तद्गुणगण गरिमाणं सामञ्जस्येन चाऽवर्णयत् ।

आदर्शमैत्रीं प्रदर्शयितुकाम आप्तकामोऽकिञ्चनं तपोधनं सुदामाख्यविप्रं समागतं कर्णगोचरीकृत्य त्यक्तावश्यककृत्यः सिंहासनासीनोऽपि तत्काल मेवासनं विहाय चिरादक्ष्णोर्विषयतामितमपरिमि-तगुणराजिराजितं रजतवद्गौराङ्गन्तं श्लक्ष्णतयाऽ-श्लिष्यत्, स्वपाणिना तत्पाद-प्रक्षालनञ्चाकृत ।

इत्थं वीरवारवरः वदान्यः कर्णः संग्रामावन्यां ब्राह्मणानां विषये व्याहार्षीत्,

'नाऽहं विशङ्के सुरराजवज्रा-
न्न त्र्यक्षशूलान्न यमस्य दण्डात् ।
नाग्नेर्न सोमान्न रविप्रतापा-
च्छङ्काम्यहं ब्रह्मकुलापमानात् ॥

ब्रह्म तेजःप्रभावमुद्वीक्ष्य विश्वामित्रःस्पष्टमचीकथ[त्]
'धिग्बलं क्षत्रियबलम्, अहो ब्रह्मबलं बलम्,

अपिच-यस्य शूरवीरधौरेयस्य गुणार्जुनस्या-र्जुनस्य बलं निभाल्य, बलवन्तोऽप्यरयः वेपथुमन्तः सन्तिस्म ( वेपन्तेस्म ), असौ वीरशौण्डः शौण्डीर्य जिष्णुः ( जयशीलः ) जिष्णुः ( अर्जुनः ) महाभा-रतीय-संग्रामे चतुर्विद्यादनवद्यचर्याद्द्रोणाचार्या-द्बेपते, युद्धादर्वाक्-अवाङ्मुखः सन्निदं ब्रूते,

'मुखाग्रे चतुरो वेदाः कराग्रे सशरं धनुः ।
उभयोर्द्रोणसामर्थ्यं-शापादपि शरादपि ॥

महानुभावाः ! कियदेषां गौरवं कीर्त्यंत, यद्य[पि] [सर्व]ार्थविद् भगवान् नागविशेषः शेषोऽपि रसना स[हस्रं] लब्धितयेनैषां शारदशशाङ्कगौरगुणान् गणये[त्], सागरञ्च मसीपात्रयेत्, विघ्नाटवीहव्यवाट्, गण[ना]यको विनायको लिपिकर्मण्यात्मानं व्यापारये[त्], मन्ये, तदाऽपि भूदेवगुणगणा गणयितुं न शक्येर[न्]।
दुर्दान्तहिरण्यकशिपु-समये सद्धर्मरक्षणसक्षै-र्महाविचक्षणैः शुभलक्षणैरेभिरेव धर्मग्रन्थानां र[क्षा] व्यधायि, पुरा विनिर्जितदिग्वारणेन बलातिरे-[कै]केनाऽप्यनिवारणेन लोकरावणेन सर्वजनजातवि[द्रा]-वणेन शास्त्रविद्रावणेन वैरावणेन रावणेन सा[ह]-[सि]केनाऽपि ब्राह्मणगणसाहसभीतेनाऽविनीतेन [धर्म]-नाशं विधातुं नाऽपारि ।

अघासुर-बकासुरादि-कंसभृत्य-कृताऽत्याचार[ं] संसारात्समूलमुन्मूलनद्वारा तदत्याचारत्रातै[र्गो]-गोपनं विधाय भक्तजनरक्षणत्यक्ततन्द्रं श्रीकृ[ष्ण]-चन्द्रं भवे समाकार्य सम्यक्तया भगवद्भक्तेरा[दर्शः] दर्शितः ।

अपि च—

श्रुतेर्घोषः नाऽऽचारो वेदबोधितः ।
हन्त ! किं ब्रूमः को वेदानुद्धरिष्यति ।

राजकुमार्या वेदव्रतायाः, मुखाद्वैदिक सूचयितृन् श्रवणविषयीकृत्य शोकश- वाराणसीवीथीषु परिभ्रमन् श्रीकुमा- चार्यो बौद्धधर्मापोहन-बद्धपरिकरो बाष्पा- राजकुमारीमभिलक्ष्य निजकर्त्तव्यश्चाभि- वादतरत् ,

शुचो वर्धसे दिष्ट्या भद्रे भद्रं वचस्तव ।
कौमारिलो नाम वेदानुद्धर्त्तुमुद्यतः ॥

अनन्तरं बौद्धपुस्तकानि बौद्धशालास्प्रविश्या- गात्, तत्रैकदाऽभ्यस्यन्नसौ वेदनिन्दामश्रौषीत् समकालमेव नेत्राभ्यामश्रूणि प्रावर्तयत्, तद्व्यापादनकृतनिश्चया धार्मिक बौद्धा निशायां तमेवाक्षिपन् । पततस्तस्या निर्गलिता—यदिवेदाः सन्ति सत्यास्त- शरणीकरवाणि, यथा च—

पतन् पतन् सौधतलान्यरोहं-
यदि प्रमाणं श्रुतयो भवन्ति ।
जीवेयमस्मिन्पतनेऽसमस्थले,
मज्जीवने तच्छ्रुतिमानता गतिः ।

यद्यपि 'यदि, शब्देन संशयानस्य तस्याऽत्ति तथापि वेदेषु श्रद्धां कुर्वाणोऽत्तिनाशे स्वक- मन्वानो वेदोद्धाराय यावज्जीवनं नितरां यतत । अन्ते प्रायश्चितं चिकीर्षु रित्थमेव चकार; यथा निम्नपद्येन प्रतीयते ।

'सोऽयं गुरोरुन्मथन-प्रसक्तं
महत्तरं दोषमपाकरिष्णुः ।
अशेषवेदार्थविदास्तिकत्वा-
त्तुषानलं प्राविशदेषधीरः ॥

अपि च निगमागम-कल्पलता-तुषारायमाणे यव- नसम्राजां साम्राज्ये तत्खड्गोल्लासमविगणय्यारण्या- नीषु धावं धावं गाढान्धकारयुक्तासु निशासु जागरं जागरं यत्किञ्चित्फलानि भोजं भोजम् प्रायोऽनाहारं कारं कारम् वेदशास्त्राणि स्मारं स्मारं यद्वैदिक साहित्यरक्षणैकतानतापरिचयं पूर्वजा अस्माक- मयच्छन् , स कस्य सदयहृदयस्य सहृदयस्य तोषाय नाऽलम् । इति ।

ये ब्राह्मणानामकृतज्ञाः प्रभूतोपकृतिं न मन्यन्ते तेषां कृते कविरत्नविरुदावलीविराजमानस्य-विद्व- ज्जन-प्रचुरमानस-राजहंसायमानस्य पण्डित सदो- मण्डितस्याखिलानन्दशर्मणः लोकैकशर्मशर्मणः सू- क्तयो लिख्यन्ते—यथा च—

यत्कर्म दुष्करतरं जगती तलेऽस्मिन्
विप्रैरकारि निजशर्म विहाय चासून् ॥
नाऽकारि तत्तदितरेण न कोऽपि कर्ता ।
तस्यास्ति सम्प्रति भविष्यति नाऽपि कश्चित् ॥१॥

मा नाशमेतु सुरगीरियमप्रमेय-
भावोन्नता कथमपीति विचिन्त्य चित्ते ।
यैराश्रितं वनमपास्य महोन्नतानि
नव्यानि दिव्यभवनानि विवृद्धकष्टम् ॥ २ ॥

किं दुष्करं जगति यन्न कृतं स्वभावाद्
वागीश्वरीसमवनाय मुखप्रजातैः ।
सत्यं समस्तमुपगत्य वदन्तु वर्षे
सर्वत्र संस्थितमवेदय जना महेशम् ॥ ३ ॥

त्यक्ताः सुताः सकलमुज्झितमत्र राज्यं
प्राणप्रियाऽपि बहुशर्मकरी निरस्ता ।
यैरात्मना सममर्मर्त्यगिरां प्रचारे
सर्वं समापितमभून्न निरस्तु तेभ्यः ॥ ४ ॥

यो भूतले जनिमुपेत्य मनुष्यमानी
विप्रोपकारमतुलं हृदये न धत्ते ।
नाशः समीपमधिकं गत एव तस्य
मन्ये कृतघ्नपुरुषस्य नराधमस्य ॥ ५ ॥

सम्माननीयाः! कियद्वर्णयामि वर्णेषु श्रेष्ठस्य द्विजोत्तमस्य लब्धजन्मनोऽग्रजन्मनो महत्त्वविषये, अस्माकन्तु सुकुमाराः कुमाराः स्वधर्मबलात्त-सिद्धिवित्ता वित्तविद्यावित्ताः कर्तुमकर्तुमन्य-थाकर्तुञ्च प्रभविष्णवोऽभूवन् का कथाऽपरेषाम् । किन्न स्मर्यते स्मृतिमद्भिर्भवद्भिर्भा-वद्भिः प्रतिभा वद्भिः यदस्माकं श्रीसमीकतनुजनुः श्रीशृङ्गीऋषि कुमारात्कुशान्निजजनकाषमानोदन्तमाकर्ण्य तत्क्षणं शतक्षणो महाविचक्षणः करे जलमादाय स्वपितुः कण्ठे मृतकसर्पं प्रक्षिप्य, स्वगेहं प्रति प्रस्थिताय परिक्षिते परीक्षित-महीपाय शापमयच्छत, तत्कथनानुसारं सप्तमे दिने सर्पदष्टोऽभिमन्यु तनुजनुर्यमास्यद्वश्वरोऽभूत । इति वृत्तं ब्राह्मण तनु भुवो धर्मसन्तानसुवो विदुर्विदांवरा विद्वांसः ।

सम्प्रति भूतपूर्वं भूतकालवृत्तमत्रैव पर्यवस्य-तीति माननीयानां पुर इदमपि सविनयं निवेद्यते, यदिदानीमपि सन्ति सन्तः कियन्तो धीमन्तः धीर धिषण-धिषणाः सुरभारतीसमुन्नमन-बद्धपरिकरा निजदेशं स्वकीयाञ्च जातिं समुन्नमयितुं कृतोत्साहा बल-बुद्धि-सागराः स्वकीर्तिकौमुदीधवलीकृतदिगन्ता महामहिमशालिनः षड्दर्शनीमार्मिका धार्मिका धर्मकथासनाथगलाः समाराधनीयपादयुगला तभूमिं स्वजन्मनोत्तंसयन्तो ब्राह्मणमहाभागा देशसेवायाम्, धर्मवरिवस्यायामग्रेसरीभूता क्यन्ते लोके लोकैः । साम्प्रतमपि विद्यादाना नकर्मसक्ता देशभक्ता विद्यालय-महाविद्यालय-श्वविद्यालय-समुद्घाटन-संरक्षण-रक्ता देश सुगृहीतनामधेया मालवीयमहोदया भारत णायितमूर्त्तयः सन्तीति विदितचरमेव विदुषां । भगवतस्तिलकमहोदयस्य गोखले महोदयस्य लोकविदितं चरितं के न जानन्ति ? इत्थमप परिमिताः सन्ति भूयांसो विद्वांसः पुमांसः । केषां क्रियेताऽत्रगणना । यदि स्यात्सर्वेषां ल्लेखस्तर्हि भूयसी भवेद्विस्तृतिरतो विस्ता समाप्यते लेखोऽयम् । अलमतिपल्लवितेन ।

---

## विधवोद्वहन-विवेकः ।

(ले०—पं० रूपनारायण शास्त्री, अयोध्या

‘यदा जगतीतले निखिलजातयः, कानने स्ततः पर्य्यटन्त्यो द्रुमफलैस्तरुपत्रकुसुमैश्चोदर कृतवत्य आसन्; यदा च महीतलस्थाः मानवा रम्भादितरुवल्कलैस्तद्दलैश्च स्वीयत कुर्वन्ति स्म; यस्मिन्समये साम्प्रतिका प्रादुर्भावोऽपि नाभूत्; तस्मिन्समयेऽपि भा हिन्दूजातयो विज्ञानभागीरथीं वाहयन्तो जनान्सभ्यान्कुर्वन्तस्तापत्रयान्निवृत्ताः समज अधुना तद्वंशीया एव पाश्चात्योपदेशपिशा

...रपदवीं भजमाना 'न्यूलाइट' सभ्यतावन्तो ...स्मान् पूर्वजान् श्रुतिस्मृतिपुराणेतिहासनिर्धा- ...र्मपरायणान् ( ते मूर्खास्तर्करहिता ज्ञानशून्याः ...नयः ) इत्यादिक्रूरवाक्यैरधिक्षिपन्ति । जप- ...र्हर्निशन्ते विधवोद्वहनं भवितव्यमिति राम- ...। तत्रेत्थं विचार्य्यते, सृष्टेः प्राक् परमात्मै- ...तिष्ठति। या च प्रकृतिस्तदीयच्छायामात्र- ...। तदुपरि जगदीशप्रतिबिम्बसंसर्गेणाविर्भावं ...ोति । भूयोऽपि तस्मिन्नेव लीयते पूर्णः ...परमेश्वरः प्रकृतिवीजात् अपूर्ण इव दृश्यते । ...प्रकृतिर्विराट् पुरुषे लयं गत्वैव पूर्णा भवति । ...प्रकृत्यंशादुत्पन्ना महिलापि निजप्राणवल्लभे सं- ...पूर्णा भवितुमर्हति, उपासनासिद्धान्तानुसा- ...कस्मिन्नेव मनो लीनं कर्त्तुं शक्यते। यदि लय- ...नैकस्मिन्नेव भवितव्यास्ति । तर्हि स्त्रीणा- ...एक एव पतिर्भवितव्यः । स्त्रीणां बहुशो विवा- ...मुक्तिमार्गवर्णादिस्थितिप्रतिबन्धकत्वात् दूरतः ...तव्याः । पतिव्रतपरायणा रामा स्वोपास्य ...त्यौ, मनसा वाचा कर्म्मणा च तन्मयी भूय ...बन्धनान्मुक्ता भवति। योगसिद्धान्तानुसारेण ...प्राधान्येन प्राणवायुस्तिष्ठति । अपानवायुश्च ..., अतएव पुरुषेषु बलम्, निर्भीकत्वम्, काठि- ..., पुरुषार्थादिकं तथाचानेकविधोत्तमगुणाश्चो- ...न्ते। स्त्रीषु तद्विपरीता निर्बलता, नम्रता, ...धीनतादिगुणा दृश्यन्ते । योगिनामेतत् ... विद्यते—यत् प्राणवायुबलेनापानवायुं ...न्ति तदैवाकर्षन्ति । पुनश्च तत्रैव स्थापयितुं ...न्ति, परश्चापानवायुबलेन प्राणवायुनैतस्ततः ...समर्थयन्ते । एतावुभौ प्रकारौ समाधौ मृत्यु-

काले च परमार्थतो विदितौ भवतः । योगमेवं सनातनं मत्वा हिन्दुजातिषु प्रचारितमिदं कृतम- स्ति । यत् अपानवायुसदृशी नारी द्वितीयं प्राण- वायुसमं पुरुषं नो सेवते । कुतः ? तन्मर्यादातो बहिर्भूतोयं वातोऽस्ति। यद्यपि

नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥

इत्यादिपराशरप्रभृतिमहर्षिवाक्यैर्विधवोद्वहनं चोररीकर्त्तव्यमित्येव प्रतीयते। तथापि शूद्रपरत्वेन तानि वाक्यानि ध्येयानि। अत एव महर्षिणा मनुना- नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः । न विवाहविधावुक्तं विधवावेदनं पुनः—इत्युक्तम् ॥



अखिल भारतीय-संस्कृत-साहित्य-सम्मेलनम् ।

अखिल भारतीय-संस्कृत-साहित्य सम्मेलनस्य यद्द्वादशाधिवेशनं गुरुकुल-विश्वविद्यालयस्य (कांगडी, विजनौर) वार्षिकोत्सवावसरे-अप्रेल मासस्य पञ्चमे षष्ठे च दिवसे निश्चितमासीत् । तदिदानीं कतिपयैरनिवार्यैः कारणैः स्थगितं जातम् । यद्यपि सम्मेलनस्य सर्वेऽपि सम्भाराः निबन्धाः, प्रस्तावाश्च निर्णीता आसन् । बहुभिर्विद्वद्भिश्च समागमनस्य वचनानि दत्तान्यासन् । परन्तु सम्मेलनस्य प्रधान- कार्यालयाधिकारिणां शैथिल्येन सभापतिनिर्वाचन- मिदानीं यावदपि न सञ्जातम् । इदानीनितरां स्वल्पीयान् समयो वर्वर्ति । नियमानुसारमेतस्मिन् स्वल्पे समये सभापतिनिर्वाचनं न भवितुमर्हतीति सम्मेलनं नास्मिन् समये भविष्यति । पुनः कदा भविष्यतीति न वक्तुं पार्यते ।

गुरुकुल-विश्वविद्यालयः,
कांगडी ( विजनौर )

विनीतः—
श्रीवागीश्वरो विद्यालंकारः
स्वागतमन्त्री

# संस्कृत-साहित्य-समाजस्य चतुर्थाधिवेशन

चैत्रकृष्णाष्टम्यां संस्कृत-साहित्य-समाजस्य चतुर्थमधिवेशनं सायं 'टाउनहाल' नाम्नि नगरमण्डपे चतुर्वादिने महता समारम्भेण समपद्यत । यथासमयमेव सभापतिमहोदयाः काशीहिन्दूविश्वविद्यालयस्योपकुलपतयः (प्रो० वाइस-चान्सलर) श्रीमदाचार्या आनन्दशङ्कर वापूभाई ध्रुव-महोदयाः सभास्थानमलमकुर्वन् । सभापतिमञ्चे समवेता आसन् काशीस्था विद्वांसश्चान्ये यथा—महामहोपाध्यायश्रीदेवीप्रसादकविचक्रवर्तिमहोदयाः, श्रीयज्ञनारायण उपाध्याय—(एम० ए० एल एल० वी०)—महोदयाः, श्री श्रीकृष्णजोशी (वी० ए०, एल-एल० वी०) महोदयाः, श्रीसत्यनारायण कविरत्नमहोदयाः, श्रीरघुवीर वैद्य-महोदया, श्रीबलदेवमिश्रज्यौतिषाचार्य—( हि० वि० वि० )—: महोदयाः, श्रीबलदेव मिश्र ज्यौतिषाचार्य—महोदयाः, श्रीराजनारायणशास्त्रिणः, श्रीमहादेव पाण्डेयाः साहित्याचार्याः, श्रीगेन्दालाल चौधरी महोदयाः, श्रीतारादत्त पन्त-साहित्यचार्याः, श्रीविद्याधर झा (वी० ए० एल० टी०) महाशयाः, श्रीगणेशदत्त शास्त्री (एम० ए० एल-एल बी०) श्रीजानकी शरण त्रिपाठिनः 'सूर्य'—सम्पादकाः, श्रीदामोदर शास्त्रिणो भिषगाचार्याः, श्रीगुलाबझा व्याकरणाचार्य महोदयाः, श्रीराधाकान्त झा न्यायाचार्याः, ऋषिकुल-हरद्वारस्थ-प्रधानाचार्याः श्रीघुदर झा महोदयाः, श्रीअजवलाल झा वेदाचार्याः श्रीविद्याधरशास्त्रिणो वेदाचार्याः, श्रीरुद्रदेव शास्त्रिणो वेदालङ्काराः, श्रीसीताराम झा ज्यौतिषाचार्याः, श्रीसत्यदेव वेदान्तशास्त्रिणः, श्रीकाशीनाथ मिश्राः वेदाचार्याः, श्रीरामाधार मिश्राः, अन्ये च बहवो विद्वांसः समुपस्थिता आसन् ।

प्रथमं श्रीगोपालशर्म्मणा संस्कृत-गीतिकायां गीतायाम् श्रीगोपालशास्त्रिणां प्रस्तावे, श्रीदामोदरशास्त्रिणां भिषगाचार्याणाञ्च समर्थने सभापतिमहोदयाः, सभापतेः स्थानमलमकार्षुः । ततश्च श्रीकाशीविद्यापीठस्थाः दर्शनाध्यापकाः श्रीगोपालशास्त्रिणो दर्शनकेशरिणः समाजस्य प्रधानमन्त्रिणश्चतुर्थवार्षिकं विवरणमश्रावयन् ।

तदनन्तरं सभापतेरनुज्ञया प्रथमोऽयं प्रस्ताव पस्थितः—

१—" सत्यामपि भारतीय-संस्कृति-स संस्कार-धर्मादिज्ञान-जनयित्र्यां संस्कृत भाषा भारतीय-जनतायां संस्कृताध्ययनाभावम अनेन संस्कृत-साहित्य-समाजे न, राजकीय प्रबन्ध-समितिसदस्याः सादरं सानुरोधश्च ध्यन्ते—"यदिदानीन्तनेषु सर्वेष्वपि हिन्दी-मि शिक्षालयेषु संस्कृत-शिक्षण-प्रबन्धोऽपि वि येन तत्रत्यच्छात्राणां तद्विद्यालयतो निर्गमना संस्कृताध्ययने सौकर्यं स्यादिति ।

अस्य च प्रस्तावस्य प्रतिलिपिं संप्रेष्य विभागाधिकारिणोऽपि विज्ञापनीयाः ।"

प्रस्तावकः—श्री पं० सरयूप्रसाद पाण्डे

समर्थकः— श्री पं० रुद्रदेव शास्त्रिणो वेदा

२–द्वितीयः प्रस्तावः—

"इदानीं सर्वतोऽपि संस्कृताध्यायिनां निरोधं निरीक्ष्य चिक्लिश्यमानहृदयोऽयं साहित्य-समाजः सर्वानपि संस्कृताध्येतॄन् विज्ञापयति, यत्, " ते स्वाध्यायाध्ययनेन सह साधारणजनहितकरोपदेशादिजनकयोग्यतामि स्पादयेयुः, येन देश-कालात्मविज्ञानवन्तस्ते वनयात्रादिलोकव्यवहारं साधु सम्पादयन्तो प्रवर्द्धमानं धर्मकृत्योपेक्षणादिभावं समर्थाः स्युः । "

प्रस्तावकः—श्रीगोपालशास्त्री ( प्रधान म

समर्थकः-श्रीराजनारायणशास्त्री (हि० वि

तृतीयः प्रस्तावः—

३—"संस्कृत साहित्य-समाजोऽयं संस्कृत-परीक्षासमितिसदस्यान् सानुरोधमभ्यर्थयते, यत् ...सीयपरीक्षा-पाठ्यपद्धतिं परिस्कृत्य, इति-...भूगोल - गणितादिसाधारण-ज्ञान-निवेशनेन ...पयोगिनीं कुर्वन्तु । परीक्षार्थिप्रश्नोत्तर-...न्यूनता-विवरणञ्च प्रकाशयन्तु । येन परीक्ष्य ...नां तद्विषयकमान्ध्यं व्यपगतं स्यादिति।"

प्रस्तावकः—श्रीकेदारनाथ शर्म्मा सारस्वतः,

समर्थकः—श्रीकाशीनाथ शर्म्मा, वेदाचार्यः

...प्रस्तावत्रयानन्तरं समयातिपातात् सभापतिमहोदयै-...कार्यजातमागामिदिवसकृतेऽवरुद्धम् । ततश्च संस्कृत-...समाजस्य भूतपूर्व-सभापतयः श्रीमन्तो महामहो-...ध्यायाः श्रीदेवीप्रसादकविचक्रवर्तिमहोदयाः समाजावस्था-...विषयं परिचयं सुललितैः सारगर्भैर्वाक्यैरदुः । तदनन्त-...वर्तिमहोदयैः संस्कृतम्, साहित्यञ्चावलम्ब्य, गवेषण-...महत्वमहितम्, अध्येयम्, मननीयञ्च भाषणं पठितम् । †
...ध्य धन्यवादादिवितरणानन्तरं सभा-विसर्जनमभूत ।

द्वितीयोदिवसः ।

...तस्मिन् दिवसे सायं चतुर्वादनतस्तत्रैव मण्डपे पुनरपि ...समारब्धोऽभूत । अद्य खलु ज्वर-पीडिताः सभा-...नागन्तुमशकन्निति श्रीमतां श्रीगोपालशास्त्रिणां ...श्रीमतां श्रीदामोदरशास्त्रिणाञ्च समर्थने, हिन्दू ...विद्यालयस्य न्यायशास्त्र-प्रधानाध्यापकाः पण्डित-प्रवराः ...कृष्ण मिश्राः न्यायाचार्याः सभापतेरासनं सम-... । अद्य खलु मान्येषु विद्वत्सु—

...पाठशाला-ध्यक्षाः श्रीमदनन्तरामशास्त्रि महोदयाः, ...महाविद्यालयस्य प्रधान वैयाकरणमणयः श्रीरामभव-..., महामहोपाध्यायाः श्रीदेवीप्रसाद कविचक्रवर्तिम-... रा० सं० विद्यालये ज्योतिःशास्त्रप्रधानाध्यापकाः श्रीहृषीकेशोपाध्यायाः, तत्रैव वेदान्तमीमांसाध्यापकाः श्री बालबोध मिश्राः, मारवाडीमहाविद्यालयाध्यक्षाः श्रीमदन-मोहनशास्त्रिणः, हरद्वारस्थ-ऋषिकुल-ब्रह्मचर्याश्रम-प्रधाना ध्यापकाः श्रीघुटरझामहोदयाः, श्रीयज्ञनारायणोपाध्यायाः, श्रीगुलाबझा व्याकरणाचार्याः, हिन्दूविश्वविद्यालयस्यायुर्वे-दाध्यापकाः श्रीसत्यनारायणकविरत्न-महोदयाः, विरला पाठशाला-प्रधानाध्यापकाः श्रीसभापति उपाध्यायाः, श्रीवृज विहारीझा शास्त्रिणः, श्रीवामदेव शास्त्रिणः ( हि० वि० वि० ) श्रीरुद्रदेव शास्त्रिणो वेदाचार्याः, श्रीढुंढिराजशास्त्रिणः, श्री तारादत्त पन्ताः साहित्याचार्याः, श्रीमहादेव शास्त्रिणः साहि-त्याचार्याः श्रीकृष्ण जोशी, बी० ए०, एल् एल् बी० महाशयः, पुरुषोत्तम शास्त्रिणश्चतुर्वेदाः साहित्याचार्याः ( जयपुरस्थाः ), श्रीकाशीनाथ पाण्डेयाः श्रौतमार्तण्डाः, श्रीसुखराम शास्त्रिणः ( देहलीस्थाः ), श्रीबलदेव मिश्राः ज्यौतिषाचार्याः ( हि० वि० वि० ) श्रीबलदेव मिश्राः ज्यौतिषाचार्याः ( का० वि० पी० ) श्रीदामोदर शास्त्रिणः भिषगाचार्याः सर्वदर्शनतीर्थाः, श्रीसाँवलजी नागराः, श्रीअम्बिका प्रसाद शास्त्रिणः, श्रीशुभ-करणमिश्राः व्याकरण-न्यायाचार्याः, श्रीसीतारामझा ज्यौति-षाचार्याः, श्रीअजबलालझावेदाचार्याः, श्रीराजनारायण शास्त्रिणो व्याकरणाचार्याः ( हि० वि० वि० ) अन्ये च विद्वाँसः समुपस्थिता आसन् ।

ततः श्रीबालकृष्ण मिश्राणाम्, श्रीयज्ञनारायणोपाध्याया-नाम् तथा श्रीहृषीकेशोपाध्यायानाञ्च माध्यस्थ्ये, 'यावद-ध्ययनकालं व्याकरणमेवाध्येयन्न वा ? इत्यस्मिन् विषये विवादः प्रारब्धोऽभूत् । तत्र यावदध्ययनकालं व्याकरणमेवा-ध्येयमित्यमुं पूर्वपक्षमुररीकृत्य, श्रीशन्तनुविहारी द्विवेदी, श्रीकुवेरनाथ शुक्लः, श्रीगोपालदत्त त्रिपाठी, श्रीयाज्ञवल्क्य शर्म्मा चेतिछात्राः क्रमशो व्याख्यानं दत्तवन्तः । उत्तरपक्ष-मवलम्ब्य च श्रीस्वामी सच्चिदानन्दः, श्रीदामोदर पाण्डेयः, श्रीत्र्यम्बक विनायक मोहरिरः, श्रीसत्यदेव शर्म्मा, श्रीमरुला-राध्य शर्म्मा चेतिछात्राः विवरणमकार्षुः ।

तदनन्तरं पूर्वदिवसावशिष्टानां प्रस्तावानामुपस्थापन-मभूत् । तत्र स्त्री-शिक्षा-विषयकश्चतुर्थः प्रस्तावः—

---

† ...भाषणं विशिष्टाङ्के प्रकाशितं भविष्यति—सम्पादकः

४—"स्त्रीसमाजे संस्कृत-शिक्षाया अभावात्, प्राचीन-भारतीय-सभ्यतायाः ह्रासम्, पाश्चात्य-सभ्यतायाश्च भारतीयान्तःपुरे निर्बाधं सञ्चार-मालोक्य, व्यथितहृदयोऽयं समाजः, सर्वानपि भारतीयाननुरुणद्धि, यत् तैः स्वीयाः कन्याः प्रथमतः संस्कृत-धर्म शिक्षा-दीक्षिता एव विधातव्याः, तदर्थंच प्रति नगरम्, प्रतिग्रामञ्चैका संस्कृत-कन्या-पाठशाला संस्थापयितव्या इति । तथा अत्रत्यान् धनिनो राष्ट्रनेतारो राजकर्मचारिणश्च सानुरोधं प्रार्थ्यन्ते, यत् ते वाराणस्यामस्यामादर्शरूपेणैकं 'महिला-संस्कृत-विद्यालय-'मुद्घाटयन्तु, यत्र सर्वासामपि स्त्रीणां सुलभतया शिक्षाप्रबन्धो भवेत्—इति च ॥"

प्रस्तोता—श्रीगिरीश शुक्लः, न्यायाचार्यः,

समर्थकः—श्रीमहादेव पाण्डेयः, साहित्याचार्यः,

पञ्चमः प्रस्तावः—

५—"प्राच्य-पाश्चात्योभयशिक्षाक्रमे स्वास्थ्योपयोगिनोदीर्घायुष्ट्वसम्पादनोपयोगिनःसाधारणायुर्वेदशिक्षणस्य उपयोगो यथा भवेत्तथा तेषु विद्यालयेषु आयुर्वेदशिक्षा सर्वेभ्योऽनिवार्यरूपेण देया, एतदर्थश्च स्वास्थ्यविभागीयाध्यक्षास्तथा काउन्सिल-कार्य-सम्पादकाश्चाभ्यर्थ्याः।"

प्रस्तावकः—श्रीदामोदरशास्त्री भिषगाचार्यः,

समर्थकः—श्रीसत्यनारायण कविरत्नम्, आयुर्वेदाचार्यः

षष्ठः प्रस्तावः—

६—"जनसाधारणकार्ये सर्वेषामधिकारस्य समत्वात् देशकाल-धर्मस्थितिरक्षणार्थं संस्कृताध्येतॄणां तत्र प्रवेशस्यावश्यकत्वात् व्यवस्थापकसभा-(कौन्सिल)-सदस्यनिर्वाचनमताधिकारे आचा[र्य]शास्त्रितत्समान्यान्यपरीक्षोत्तीर्णानाम्, नगररक्षास[मि]तिसदस्य-(म्युनिसिपल मेम्बर) निर्वाचनम[ता]धिकारे, ग्राम-पञ्चायतन-(पञ्चायत)-निर्णायक[सद]स्य-मताधिकारे च उत्तम-मध्यम-प्रथम-परीक्षो[त्ती]र्णानां विदुषाञ्च युक्तियुक्तो मताधिकारो देय[इति] सविनयं राजकीय सभ्याः देशनायकाश्च प्रार्थ[नी]येनाग्रिमनिर्वाचनावसरे संस्कृतपण्डिता[...] दातारो भवन्त्विति ।

प्रस्तावकः—श्रीसभापति उपाध्यायः, व्याकरणा[चार्यः]

समर्थकः—श्रीघुटरझा, शास्त्री, साहित्य-व्याकरणा[चार्यः]

सर्वसम्मत्या स्वीकृतेषु प्रस्तावेषु [...] समुत्तीर्णेभ्यश्छात्रेभ्यः पुरस्कारप्रदानमभूत् । तत्र स[...] महोदयैः प्रथमः पुरस्कारो विरलासंस्कृत-पाठशालीय[...] सभापतिमहोदयानां शिष्याय श्रीदामोदर शर्म्मणे, [...] पुरस्कारो विरजानन्द-संस्कृतविद्यालयीयाय श्री[...] जिज्ञासुशिष्याय श्रीसत्यदेव शर्म्मणे (बालकाय) [...] पुरस्कारः काशीविद्यापीठस्थाय श्रीगोपालशास्त्रिणां [...] श्री त्र्यम्बकविनायकशर्म्मणे प्रदत्तः । स्वल्पव[...] बालकाय श्रीयाज्ञवल्क्यशर्म्मणे श्रीमद्भिर्यज्ञनारा[यणोपा]ध्यायमहोदयैस्तदुत्साहवर्धनाय मुद्राद्वयं प्रदत्तम् ।

ततश्च संस्कृत-साहित्य-समाजस्याधिवेशनं [...]मभूत् * तत्रैव च निखिल-भारतीय-सनातन-धर्म-[...] प्रचारः समारब्धः ।

श्रीमहादेव पाण्डेयः, शास्त्री, साहित्या[चार्यः]

सहायक—मन्त्री ।

---

* संस्कृतछात्रसङ्घस्य विशिष्टाधिवेशनं समयाभा[...]तम् । तच्च चैत्रशुक्लप्रतिपदि तत्रैव नगरसभामण्डपे (टाउन हाले) सञ्जातम् ।

# काशीस्थ-संस्कृत-साहित्य-समाजस्य चतुर्थवर्षस्य विवरणम् ।

ॐ भद्रमिच्छन्त ऋषयः
स्वर्विदस्तपो दीक्षामुपनिषेदुरग्रे
ततो राष्ट्रं बलमोजश्च जातं
तदस्मै देवा उपसन्नमन्तु ॥

अथर्व-कां०, १६ अ० ५-,सू० ४१

अत्यद्भुतं कर्म चकार योऽर्भकोऽ-
वधीन्नृणां भारत दुष्ट-शासकान् ।
गीताऽमृतं वेदरहस्यमादिशत्
कृष्णः स नोऽव्याद्भगवान् सनातनः ।

अयि माननीयाः सभापति-महोदयाः, प्रेष्ठाः [...]ा विद्वांसः, सुहृदश्च, अन्ये चोपस्थिताः [...]भारतीसमुपासका नागरिकाः, भावुकाश्च [...]कृतज्ञा अन्तेवासिनः ।

विदितमेव तत्रभवतां सर्वेषाम् सुप्रभात[...]कानां, यदस्यां वाराणस्यां वर्ष-चतुष्टयतोऽयं [संस्]कृत-साहित्य-समाजः, सुरभारती-समुपासक-[...]णामन्तेवासिनाञ्च, सर्व-विधमपि परं श्रेयो [...]स्तेषां शाश्वतिक-सङ्घटनायाविरतं यतमानोऽद्य [चत]ुर्थं वर्षं समतिक्रम्य पञ्चमे वर्षे पादन्यासमात-[नो]तीति । आधुनिक-जनप्रवाह-प्रकृतेनियमतो-[...] बालक्रीडामेवानुभवता बहु आघात-प्रत्याघात[...]-परिवर्तनमासादितम् । तद्यथा-प्रथमतो [वार]ाणसीस्थानां विदुषामौदासीन्येन अस्य स्वात्म-[...]एव महानन्तरायोऽभूत् । परन्तु; विद्वद्धौरे-[य]ाणां कतिपयेषां हस्तालम्बनेन द्विगुणितोत्साहोऽयं-नाविरतोऽभूत् स्वचिकीर्षितव्य-व्यापारात । शनैः शनैश्चङ्क्रम्यमाणोऽयमिदानीं काशीस्थानां समेषामेव मान्यानां महर्षिकल्पानां मनीषिणां वात्सल्य-भाजनमस्तीति हर्षास्पदमस्माकम् ।

अनेन च—

(१) सुगमैः समुचितैश्चोपायजातैः संस्कृत-साहित्यस्य संरक्षणम् ।

(२) संस्कृत-समाजे प्रचलितानां देशकालानुपयुक्तानां पद्धतीनामपाकरणम्, सामयिक-नवजीवनसञ्चारः ।

(३) संस्कृत-भाषाया महत्वप्रचारः, तदुपयोगिता-प्रख्यापनञ्च ।

(४) सं० सा० संरक्षणे समुन्नतौ च समयोपयोगिनामनुकूलानामावश्यकानां सर्वसम्मतानाञ्चोपायानां सम्यगुपयोगः । इत्यादि स्वोद्देशपूर्तये—

(१) संस्कृतच्छात्र-सम्मेलनम्
२) संस्कृत-कवि-सम्मेलनम्
(३) पत्र-प्रकाशन-समितिः
(४) पुस्तक-प्रकाशन-परिषद्
(५) संस्कृत-नाट्य-परिषद्
(६) गवेषणा-समितिः
(७) परीक्षा-परिषद्
(८) संस्कृत-विद्यालय-समीक्षासभा
(९) संस्कृत-सेवासङ्घश्च । इत्यादयो बहवो विभागाश्चिन्तिता आसन । परन्तु तत्र सहायकाभावात् द्रव्यादि-साहाय्यानुपलब्धेश्च तेषां मध्ये—

(१) पत्र-प्रकाशन-समितिः
(२) शास्त्रार्थ-सभा, ( विवाद-सभा )
(३) संस्कृतच्छात्र-सङ्घः
(४) संस्कृत-वाचनालयः

इत्येत एव विभागाः सञ्चाल्यमाना विद्यन्ते । तत्रापि च संस्कृतच्छात्राणामनुत्साहेन तेषु देश-कालादिज्ञानाभावात् स्थानाभावाच्च शास्त्रार्थ-सभा, विवाद-सभा, वाचनालय विभागानान्तु शैथिल्यमेव वरीवृत्यते । केवलम्-कार्यकर्तॄणामेवाविरतोत्साहेन पत्र-प्रकाशन-समितेः संस्कृतच्छात्र-संघस्य च काय साधु प्रचलति । [ तत्र श्वोभाविनि संस्कृतच्छात्र सम्मेलने संस्कृतच्छात्रसङ्घस्य विवरणन्तन्मन्त्रिणा श्रीमतामन्तिके उपस्थापयिष्यते । ] *

अद्याहं श्रीमन्तं सर्वान्तर्य्यामिणम्परमेश्वरं प्रार्थयमानः सुप्रभात-पाठकान् संस्कृत-साहित्य-समाज-सदस्यांश्च ससाधुवादमभिनन्दन् स्वीयकर्तव्यपालनपूर्वकमेतद्वर्षजन्यं संस्कृत साहित्य-समाजीयकृत्यं श्रीमतां पुरस्तादुपाहरामि ।

व्यतीतेऽब्दे, युवकसमाजेऽजातपूर्वां जागर्तिं सम्पादयद्भिर्ममप्रियवयस्यैः विद्यालङ्कार-काव्यतीर्थ-—साहित्यशास्त्रिभिर्हिन्दूविश्वविद्यालयीयरणवीरसंस्कृतपाठशालाया न्यायाध्यापकैः श्रीकेदारनाथशर्मसारस्वत-महोदयैः संस्कृत-साहित्य-समाजस्य मन्त्रिपदमलङ्कृतमासीत् । परन्तु तैः सुप्रभातसम्पादनादिबहुकार्यव्यापृतिं जुषमाणैः परित्यक्तोऽयम्भारः 'पुनर्वैतालस्तत्रैवावलम्बितः' इति न्यायात् पातितो भूयोऽपि ममैव शिरसि साग्रहं मन्त्रि समिति-सदस्यैरिति कार्यान्तरव्यापृतोऽपि नाह ऽन्तदीयामाज्ञामुल्लङ्घयितुम् ।

न्यायाचार्य्यवर्यैः हिन्दुविश्वविद्यालये जैनन्या याध्यापक—पदप्रतिष्ठितैर्मम मान्यमित्रैः-श्रीमद्भिः श्रीगिरीशशुक्लवर्यैश्च व्यवस्थापकत्वमुरीकृतम् सभापतिपदञ्च तत्रभवन्तो वैदिकशिरोमणयो म० म० श्री प्रभुदत्तशर्म्माणोऽग्निहोत्रिणः समेषां सुधियां परिचिततराः पूर्ववदेवाधितिष्ठन्ति । परिवर्तनमासादयता मंत्रिमण्डलेन प्राक्तनैः, श्री वोनारायण बर्मभिः ( वी० ए०,एल् एल् वी ) म दयैः, सूर्य्योदय-सम्पादकैः श्रीविन्ध्येश्वरीप्रसाद स्त्रिभिः श्रीकाशीविद्यापीठस्य वेदसाहित्याध्या श्रीरुद्रदेवशुक्लैर्वेदाचार्यदर्शनालङ्कारमहोदयै र संस्कृत-पाठशालायाः प्रधानाध्यापकैः श्रीश्र रामशास्त्रिभिस्तथा सनातनविद्यालयादिपवित्र संस्थासञ्चालकैः श्रीमद्भिर्मदनमोहनशास्त्रिभिरन्य मध्ये मध्ये सहयोगदातृभिः सदस्यैः सह दे कार्यभारः संचाल्यते ।

तत्र प्रतिवर्षं प्रथमत एव सभास्थानं सु यतां तेषामस्माकं स्थायिसभापतीनामग्निहोत्रि होदयानामिदानीं मासत्रयात् शरीरमस्वस्थमस्ति ते नात्रोपतिष्ठन्ते । आशासे प्रार्थयेचाहं काशीविश्वेश्वरं यत्ते सत्वरमेव पूर्ववन्नीरुजाः स्व शरीरा आसादितद्विगुणोत्साहाश्च भूत्वा अस्य सूत्रसञ्चालका भवन्तु इति ।

गताधिवेशन-कृत्यं तत्र भवतां श्रीमतां स धन्यानां सर्वतन्त्रस्वतन्त्राणां म० म० श्रीप्रम

* एतत्सम्मेलनं कारणवशात् प्रदितपदि संजातम् ।
तद्विवरणञ्चान्यत्र प्रकाशितं द्रष्टव्यम् ।—सु०सम्पादकः

...भूषणमहोदयानां सभापतित्वे संजातम् । तत्र ...धर्मः परिवर्तनशीलो न वा ?" इति विवाद- ...दर्शनविद्यालयच्छात्रः श्रीसुन्दरलाल शर्मा, श्रीविड़लाविद्यालयच्छात्रः श्रीदामोदर शर्मा ...यः प्रथमद्वितीयौ सञ्जातौ । तयोश्च संस्कृत ...त्य-समाज-कोषत एव पुरस्कार-प्रदानमभूत् । ...वेषु च संस्कृतराजकीय-परीक्षादिवस-परि- ...दि-विषयकं प्रस्तावं स्वीकृत्य ते राजकीय- ...प्रबन्धक-समिति-पदाधिकारिभिर्यत् संस्कृत ...त्य-समाज-समादरणं कृतमिति तेभ्यः शतशः ...वादाः ? अपरे च प्रस्तावा ये संस्कृत विदुषां ...र्थिनां सम्बन्ध आसन् तदनुसारतो वर्तयन्त- ...ति महानुभावाः सुरभारत्याः, प्रेमास्पदीभूता ...वादार्हाः ।

...स्मिन्हायने मन्त्रणासमितेः पञ्चाधिवेशनानि ...द्यन्त । तत्र सर्वेष्वपि सदस्य-महोदयानामुप- ...र्दयनीयैवासीत् । कथमेवं प्रचलेत् मंत्रणा- ...ति-कार्यमिति साञ्जलि प्रार्थना महानुभावे- ...भ्यः ।

...स्मिन्वर्षे श्रीमतां संस्कृतसाहित्य-समाजस्य ...पूर्व-सभापतीनां तत्रभवतां श्रीमतां सर्वमान्या- श्रीदेवीप्रसादशुक्लकविचक्रवर्ति-महोदयानां ...महोपाध्याय-पदाभिनन्दनोपलक्ष्ये भाद्रपदकृष्ण ...म्यादि विशिष्टाधिवेशनं महता समारोहेण समज- ... । तत्रैव चम्पारण्यजनपदस्थवगहारत्नमाला- ...वासिनामायुर्वेदाचार्य्य-( चिकित्सकचूड़ामणि- ...लङ्कार-कवीन्द्र) श्रीचन्द्रशेखरधर मिश्रमहोदया- ...मद्भुतविस्कारणामुदुम्बरसारादीनाम्परिचयः संस्कृतविदुषां समजनि । तत्रैव श्रीमतां भिषगाचार्यमहोदयानां श्रीदामोदर शास्त्रिणां सभापतित्वे छात्रसङ्घस्य प्रथमाधिवेशनं समपद्यत इति । सत्यप्येवं केवलं सदस्यानामुत्साहमात्रधनेनानेन सं० सा० समाजेन स्वकार्य्यं सञ्चालनाय कार्य्यालयाभाव-प्रयुक्तं महत्कष्टमनुभूयते । केवलं सुप्रभात कार्य्यालयस्य कृते इदानीं टेढ़ीनीमरथ्यायां श्रीमतां साहित्यरसिकानां काशीस्थानां परिचिततराणां सुंघनी-साहुवर्य्यश्रीजयशंकरप्रसादानामनुकम्पया तदीय-पूर्वपुरुषप्रतिष्ठापित-शिवालये व्यवस्थापक-महोदय-प्रसादतो लब्धप्रसरः संकुचिततरेऽपि स्थाने श्रीढुण्ढिराजगणेशाधिष्ठानमनुकृत्य स्वात्मानं गोपयति समाजोऽयम् । इत्यहो विषादास्पदमस्माकं यत्संस्कृतज्ञबहुलायामस्यां वाराणस्यां मुक्तहस्तं वितरणपरेषु श्रेष्ठिसमाजेषु, विद्यमानेषु च बहुषु रिक्तेष्वपि राजप्रासादेषु, तिष्ठत्सु चैवम्भूतेषु विद्वद्धुरीणेषु अयं हि समाजश्चतुर्भ्यो वर्षेभ्यः शरणार्थं शरणमीहत इति । शरणाभावादेवास्य समाजस्य वाचनालय-पुस्तकालयादिविभागो न प्रलब्धति ।

## विदुषामभ्यर्थना ।

सर्वतोऽपि समाज-सदस्य-विषयेऽस्माकं बहु-विज्ञापनीयमस्ति । पश्यन्तु चत्वारि वर्षाणि व्यतिजगुरेतस्य प्रचलतः समाजस्य । परन्तु अद्यापि त्रयोनवतिरेवास्ति संख्या सहायक-सदस्यानाम् । तत्रापि च यावन्तः पण्डिता बहिस्थाः सदस्याः सन्ति, न तावन्तः काशीस्था इत्यपि महदाश्चर्यम् । विचारणीयोऽयंविषयः यदस्यां वाराणस्यां

मेव सहस्रशो विद्वांसो भविष्यन्ति । बहिस्थाश्च लक्षावधिकास्तेषु सर्वेष्वपि इदमेवैकं बाराणसीतः प्रधाननगरीतो निःसरति संस्कृतज्ञानां मुखपत्रम् सुप्रभातम् । यच्च सर्वेभ्योऽपि सदस्येभ्यो निःशुल्कं दीयते । तथापि सं० समाजस्य त्रयोनवतिसदस्या इति श्रावं श्रावं करुणा-क्रान्तं चेतो निमज्जति शोक-सागरे संस्कृतज्ञानां दशोपरि । कथमेवं सुरभारत्याः भविष्यत्समयः समेधितः स्यादित्यनिर्वचनीयम-स्माकम् । अतो वयं भूयो भूयोऽभ्यर्थयामहे संस्कृता-भिवृद्धिमीहमानान् आधुनिक-परिस्थिति-परिचितान् विपश्चितो, भावुकान् देशकालज्ञांश्च सुरभारती-समुपासकानन्तेवासिनश्च यत्—

> किमधुनाऽपि भवन्त उदासते,
> विगलिते सुरगीर्विभवे शते ।
> प्रतिदिशं प्रहरत्सु निर्जारिषु,
> प्रबलबुद्धि-पराक्रम-शालिषु ॥
> किमियती दयिताऽलसता तता,
> द्विजसमाजगताऽपि विलोकिता ?
> विलपतीय मधीर-विलोचना,
> सुरगिरा स्वसमाजगशोचना ॥
> अतो भवन्तः समुपेत्य सादरात्,
> परस्परप्रेमजुषानया धिया ।
> सदस्य-संख्या वितता विधीयताम्,
> भवेत्समाजाभ्युदयो यतोऽनिशम् ॥

अपि भो महानुभावाः ! किमभिदधामि श्रीमतां पुरः समाज-सदस्य-दशाम्, बहवो विद्वांसस्तु एव-म्भूताः सन्ति ये समाजसदस्यतान्न स्वीकुर्वन्ति, किन्तु सुप्रभातजिघृक्षया स्वकीयांश्छात्रानेव साधारणसदस्यतां नयन्ति, येन द्विगुणा भवति सं० सा० समाजस्य क्षतिः—यत एकतो भाविनो विदुषः सहायक-सदस्यस्याभाव :संजायते, अपरतो रूप्यकत्रयमूल्यस्य सुप्रभातस्य सार्धरूप्यके नैव वितरणं जायत इति । यतः पत्रवाहक-कार्यालय-चिट्टिकाप्रभृति-व्ययादिकं संयोज्य रूप्यकत्रयन्तु मूल्यमेव भवति सुप्रभातस्य, छात्रकृते यदर्द्धमूल्येन दीयते तत्र तेषामकिञ्चनत्वं पाठन-रुचि-विवर्द्धनादिकमेव हेतुः, परन्तु तेष्वपि अल्पीयांस एव सुप्रभातपाठकाः सन्ति च सन्ति तेऽपि च सुप्रभातपोषकमेवात्मानं मन्यन्ते । इत्यहो विलसितं संस्कृत-साहित्य-दुरवस्थायाः । इत्यत्रतु अप्पयदीक्षितस्य तदद्य दृष्टिपथमारोहति यत्—

"कपिरपि च कापिशायनमदमत्तो वृश्चिकेन संदष्टः । अपि च पिशाचग्रस्तः किं ब्रूमो वैकृतं तस्य ॥"

अस्तु; किम्बहुज्ञेषु बहुना विज्ञापितेनेति । एतद्वर्षगतं आय-व्यय विवरणं* श्रीमतां पुरः समुपस्थाप्य विरमामि ।

अन्तेच—

> भूयो भूयोऽभ्यर्थयन्नीश्वरन्तं
> भारत्याश्चाप्युन्नतीरीहमानः ।
> काशीस्था वाऽन्ये वहिस्थाश्च धीराः !
> साहाय्यं वो याचमानोऽप्यामि ॥

श्रीगोपाल शास्त्री त्रिपाठी
प्रधानमंत्री,
सं० सा० समाजस्य,
सुप्रभात-कार्यालय, काशी

—:०:—

* इदमन्यत्रास्मिन्नेवाङ्के मुद्रितमस्ति ( सम्पा० )

# १९८३ वैक्रमाब्दिकायव्ययविवरणम्

| आयः | व्ययः |
|---|---|
| ६००) संरक्षकेभ्यः | ५७॥)॥ कार्यालयीयवस्तुषु व्ययः |
| ४४।≡) माननीयेभ्यः | १३८॥।=)॥। कर्मचारिपुरस्कारे व्ययः |
| ८॥-) सहायकेभ्यः | ५३।-) कार्यालयीयगृहशुल्कम् |
| ४५=) साधारणसदस्येभ्यः | ११४४-)॥ सुप्रभाते |
| ३१=)। प्रकीर्णकायः | ५८८॥=) मुद्रणे |
| १६।≡) विज्ञापनेभ्यः | ३०७) कर्गज़ (कागज) |
| ३॥) विशिष्टाङ्कसाहाय्यम् | २५।=)। यन्त्रालयगमनागमने यान-व्ययः |
| ३२) विशिष्टसाहाय्यम् | २२३-)। चिटिकासु ( Stamps ) |
| २३=)॥ कुसीदायः | ५॥-)। शुल्कसमानेतृभ्यो लाभांशो ( कमीशन ) दत्तः |
| ५०) श्रीयुत पं० अनन्तराम शास्त्रिणामृणम् | ६८) अधिवेशनेषु |
| १६।-)॥।वाचनमन्दिरस्य देयम् | २।=) प्रचारकार्ये |
| ६६॥=) तारायन्त्रालयस्य देयम् | ६।-)॥। 'सेविङ्गबेङ्क' कोषे |
| | ६२२॥।=)॥। 'बनारसबेङ्क'नाम्नि कोषे |
| योगः १९३०॥।-)॥ | योगः २०९९-)॥ |

२३८॥≡)। पूर्वावशिष्टम्

१९३०॥।-)॥ १९८३ आब्दिकायः

२१६९॥)।।। सर्वयोगः

२०९९-)॥ १९८३ आब्दिको व्ययः

७०।≡) व्यवस्थापकमहोदयानां सविधे सुरक्षितमस्ति

गिरीशशुक्लः
व्यवस्थापकः

मदनगोपालशर्मा
कार्याध्यक्षः

(५००) श्रीबाबू-घनश्यामदास-विडला-महोदयेभ्यः ( काशी )
(१००) श्री १०८ जगद्गुरु-स्वामी-शिवानन्द-महाराजेभ्यः ( वाल्ले होन्नूर ) । एवं संरक्षकेभ्यः ६००)
(११) श्रीमती श्री ५ लक्ष्मीवती देवी दरभङ्गा महाराज्ञी प्रादात्
(१२।=) माननीय श्रीमान् हिज हाईनेस महाराजा रामसिंह महोदयेभ्यः (सीतामऊ)
(६) श्रीयुत पं० महावीर प्रसाद त्रिपाठी महोदयेभ्यः ( काशी )
(१२) नारायणविद्यालयाध्यक्षेभ्यः श्रीयुत महन्त केशवदास ( अयोध्या )

## स्पष्टीकरणम् ।

उपरि निर्दिष्टे विवरणे १६८३ आब्दिको यो हि १६३०॥।-)॥ ३/४ आयः प्रदर्शितो विद्यते तत्र ६२२॥।=)॥। १/४ इदं धनं संस्कृतसाहित्यसमाजस्य स्थायिकोशविभागे निक्षिप्तमस्ति । एतस्य धनस्य विशिष्टं कारणमन्तरा व्ययो न भवति अथच १६।-)॥। वाचनमन्दिरस्य ५०) अनन्तराम शास्त्रिणाम् ६६॥=) तारायन्त्रालयस्य च ऋणमस्ति । एतेषामङ्कानां योगफलं ७८८॥।=)॥ ३/४ एतावद्दु भवति । पूर्वोक्ताद्दु १६३०॥।-)॥ ३/४ आयादेतस्य ७८८॥।=)॥ ३/४ व्यवकलने ११४१॥।≡) एतावदेव शिष्यते । तत्र १६८२ आब्दिकस्य शिष्ट... २३८॥≡)। संकलने १३८०॥।=) एतावदेव म... इदमेव सुप्रभातस्य धनम् । व्यये च २०६... संकलिता संख्या वर्तते ततः ६२६।)॥ ३/४ कोशे... हितस्य धनस्य निःसारणे १४६६॥।-) ३/४ शिष्ट... स एव वास्तवो व्ययः । तथाचायापेक्षया... अधिको व्ययः समभूत् ।

तथाच ५०) + ६६॥=) + १६।-)॥। क्रमशः... मदनन्तरामशास्त्रि-तारायन्त्रालय-वाचनमन्दि... यदृणमस्ति तस्मात् ८६=)।॥ ३/४ आयादधिको... स्संजातः । अवशिष्टेषु ६।-)॥। 'सेविंग बैङ्क' ... ७०।≡) ३/४ व्यवस्थापकमहोदयस्य सविधे सन्ति...

‡ ॥) श्रीरामशरण शास्त्रि महोदयेभ्यः ग्रा० सं० ६०४
१) श्रीसूर्यनारायण व्यास महोदयेभ्यः ग्रा० सं० ५३
१) श्रीरामशङ्कर जोशी महोदयेभ्यः ग्रा० सं० १२१६
एवम् २॥) विशिष्टाङ्कस्य सहाय्यार्थं प्राप्तम्

× १) श्रीशिवप्रसाद शर्मभ्यः ग्रा० सं० २०६
१०) श्रीयुत पं० रुद्रदेव वेदालङ्कारस्य धर्मपत्न्या प्रदत्तम् ।
१) श्रीयुत पं० रामप्रकट शर्मभ्यः ग्रा० सं० ८०७
५) श्रीयुत पं० मांगीलाल शर्मा ( प्रिंसिपल बी० एन० मेहता विद्यालय प्रतापगढ़ अवध )
५) श्री १०८ हिज़ हाइनेस कैप्टेन सर महाराणा रणजीतसिंह ( के० सी० आई० ई०, सी० ... आई० ) बड़वानी नरेशेभ्यः
३) श्रीयुत पं० सूर्यनारायण व्यास महोदयेभ्यः ग्रा० सं० ५३
५) काशीविद्यापीठाध्यापकेभ्यः श्रीयुत पं० रुद्रदेव वेदालङ्कारेभ्यः
२) श्रीयुत पं० ब्रह्मदत्त जिज्ञासु महोदयेभ्यः ग्रा. सं. २५१
एवम् ३२) सुप्रभातस्य विशिष्टं साहाय्यम् प्राप्तम्

+ १६।-)॥। वाचनमन्दिरस्य देयमिति । अत्र ५०) मुद्रा श्रीमान् श्रेष्ठी अद्वैत प्रसादः वाचनमन्दि... कृते प्रदत्तवान् । तेषां मध्ये ३३॥=)। व्ययीभूताः ।
१६।-)॥। अवशिष्टमस्ति ।

६६५।)॥। सर्वयोगः

# अलीगढस्थ-अखिल-भारतीय-विद्वत्सम्मेलन-परीक्षायाः १९८४ संवत्सरस्याशेष-परीक्षाफलम् ।

न्यायशास्त्राचार्य II श्रेणी
परमानन्द भट्टारा शास्त्री
साहित्य-शास्त्राचार्य II श्रेणी
श्रेणी
आयुर्वेदाचार्य I श्रेणी
शिवदत्त शुक्ल
राव श्रीराजेन्द्रसिंह
चेतराम गुप्त
प्रेमराज सिंह
अयोध्याप्रसाद शर्मा
अमृतलाल शर्मा
रामेश्वरप्रसाद शर्मा
II श्रेणी
सिद्धगोपाल शास्त्री
रामकुमार शास्त्री
श्रीकृष्णमाचार्य
छोटेलाल जैन III
बाबूराम मालवीय II
राजकिशोर शर्मा II
लक्ष्मीनारायण शुक्ल II
वैद्यशिरोमणि II श्रेणी
चन्द्रमणिकान्त शर्मा
सागरमल शर्मा
मंगलाप्रसाद मिश्र
व्या० वेद-वेदान्ततीर्थ II श्रेणी
बृहस्पतिसंयमी शास्त्री
सा०आ०
साहित्य-शिरोमणि I श्रेणी
श्रीमन्नारायण शास्त्री
'प्रभाकर'
छबीलाल शर्मा

२३ गङ्गाचरण द्विवेदी
II श्रेणी
२४ हीरालाल तिवारी
२५ सिद्धिनाथ त्रिपाठी
हिन्दी साहित्यरत्न
२६ घनश्याम विशारद III
२६ (क) पृथ्वीराज डागा III
२७ अर्जुनसिंह वर्मा II
२८ गोपालप्रसाद कौशिक III
२९ माताप्रसाद तिवारी III
वैद्यराज II श्रेणी
३० ऊभाराजू नारसिंहम्
३१ डी० चिरंजीवाचार्युलु
कविराज
३२ जयन्ती सुब्बाराव II
३३ काली पेरावीरय्य III
३४ पेन्नुरुभुजङ्गराव III
३५ बेम्पतिलिङ्ग दीक्षितुलु III
वैद्यरत्न
३६ गरलपद हनुमन्तराव III
३७ वृन्दावनम् नारसिंहाचार्युलु III
वैद्यशास्त्री II श्रेणी
३८ रामचन्द्र शर्मा
३९ गङ्गादत्त शर्मा
४० विश्वेश्वरदत्त
४१ ईश्वरचन्द्र शर्मा
४२ लालमणि गुप्त
४३ अर्जुनसिंह
४४ होतीराम दीक्षित
४५ हीरालाल तिवारी

४६ रामनारायण गुप्त
४७ शालग्राम वैद्यभूषण
४८ छेदीगोपाल शर्मा
४९ यदुनन्दनप्रसाद बाज०
५० गुलाबदत्त शर्मा
५१ मानसिंह शर्मा
५२ रविशङ्कर शर्मा, बी० ए०
५३ मेवाराम शर्मा
५४ मणिराम शर्मा
५५ पूर्णप्रसाद मिश्र
५६ श्यामलाल मिश्र
५७ शोभाराम अग्निहोत्री
५८ वेदराम शर्मा
५९ राजाराम शर्मा
६० किशोरीलाल शर्मा
६१ इन्द्रदत्त शर्मा
६२ रामचन्द्र शर्मा
६२ (क चन्द्रदत्तशर्मा
तृतीय श्रेणी
६३ मुरारीलाल शर्मा
६४ कृष्णविहारीलाल शर्मा
६५ ज्ञानचन्द्रगुप्त जैन
६६ रूपेन्द्रनाथ द्विवेदी
६७ कृपाशङ्कर द्विवेदी
६८ रघुवीरसहाय द्विवेदी
६९ मिश्रीलाल शर्मा
७० रघुनाथ प्रसाद
७१ रामस्वरूप गुप्त
७२ अवधविहारीलाल द्विवेदी
७३ फुलजारीलाल जैन
७४ राजकुमार जैन

७५ चक्रपाणि चतुर्वेदी
७६ मन्नालाल त्रिपाठी
७७ श्रीचन्द्र जैन
७८ रामनारायण पाण्डेय
७९ हरिदत्त शर्मा
८० किशोरीलाल शर्मा
८१ चन्द्रशेखर त्रिपाठी
८२ मोतीलाल शर्मा
८३ मुरलीधर शर्मा
८४ शङ्करदास स्वामी
८५ रामचन्द्र जैन
८६ महावीरप्रसाद द्विवेदी
८७ गुणधरलाल जैन
८८ पाठक रामानन्द (रामदत्त) शर्मा
८९ शिवकुमार द्विवेदी
९० रामावतार त्रिवेदी
९१ अमरचन्द्र शर्मा
९२ रामसेवक शर्मा
९३ रामचरणलाल गुप्त
९४ टीकाराम शर्मा सभ्का०
९५ गयाप्रसाद दीक्षित
९६ चेतराम गुप्त
९७ कृष्णलाल वर्मा
९८ शिवप्रसन्नलाल सा० शास्त्राचार्य I
९९ प्यारेलाल शर्मा
१०० पुरुषोत्तम देव

वैद्यभूषण II श्रेणी

१०१ वेम्पतिलिङ्गम् दीक्षितुलु
१०२ नारायणम् वेंकटरङ्गाचार्युलु
१०३ पोन्नुरु भुजङ्गाराव
१०४ कालीपीरा वीरय्य
१०५ शालग्राम शर्मा
१०६ दयाचन्द्र जैन
१०७ गौरीशङ्कर द्विवेदी
१०८ कृष्णचन्द्र अधिकारी
१०९ चिन्तामणि दोष
११० गिरधारीलाल शुक्ल
१११ वैद्यनाथ अवस्थी
११२ पतिराखनलाल शुक्ल
११३ पुरुषोत्तम द्विवेदी
११४ टी० दुर्गाप्रसाद राव
११५ डी०वी० श्रीनिवासाचार्युलु
११६ के० एच० श्रीराममूर्ति
११७ वी० एन० अप्पाराव
११८ डाक्टर रूपकला सूर्यनारायणराव एम० डी०
११९ कोगन्त सुब्बय्य
१२० पशुपति लक्ष्मीनारायण
१२१ टी० सूर्यनारायण चार्युलु
१२२ रामविहारी लाल
१२३ सूर्यनारायण शर्मा- आयुर्वेदोपाध्याय
१२४ रामेश्वर शर्मा- आयुर्वेदोपाध्याय
१२५ दामोदरप्रसाद मिश्र
१२६ चन्द्रहंस दीक्षित
१२७ ओम्प्रकाश शर्मा
१२८ वासुदेव शर्मा
१२९ डा० कन्हैयालाल वर्मा
१३० गङ्गाप्रसाद वैद्य

तृतीय श्रेणी

१३१ बोद्धूपल्ली शेषय्य
१३२ मुमुलुगु राजलिंग राधयुलु
१३३ कलाप्रदी श्रोयनारायणम्
१३४ अमृतम् कोतय्य
१३५ बृन्दावनम् नारसिंहाचार्युलु
१३६ गरलपति हनुमन्तराव
१३७ जे० सुब्बाराव
१३८ हरिप्रसाद सिंह
१३९ हरिदत्त शर्मा
१४० गणेश दत्त
१४० (क) चुन्नीलाल द्वादश
१४१ दुर्गा दत्त
१४२ जियाराम
१४३ गोबर्धनदास राजसी
१४४ हातीराम दीक्षित
१४५ गङ्गावल्लभ शर्मा
१४६ जी० कनकसुन्दरम्
१४७ एन० सुब्बाराव
१४८ डी० सुब्रह्मण्याचार्युलु
१४९ डी० मार्कण्डेयाचार्युलु
१५० मच्छीराजू अप्पाराव
१५१ कूजाकोतीनगय्य
१५२ के० एच० श्रीराममूर्ति
१५३ स्वर्णरामा ब्रह्मण्य
१५४ जी० रामलिङ्गेश्वर गरु
१५५ भट्टिपल्लु वेंकटेश्वरालु
१५६ बी० पिच्चय्य
१५७ संगपू वेंकटप्पय
१५८ सी० सुब्बाराव
१५९ एन० डी० वेंकटाचल राव
१६० डी० सूर्यप्रकाश राव
१६१ वरदासम्मुखय्य
१६२ रत्नमल जैन
१६३ महावीरप्रसाद जैन
१६४ झम्मनलाल वर्मा
१६५ बनारसीदास जैन
१६६ जयदेव कुमार जैन
१६७ हीरी लाल
१६८ श्रीराम शर्मा

१९८ त्रिपुरारी सत्यनारायण
१९९ मुसिरण वंगय्य
२०० गुलजारीलाल वर्मा
२०२ आशाराम शर्मा मिश्र
२०२ श्रीरामकृष्ण चतुर्वेदी
२०३ वंशीधर शर्मा दाधीच
२०४ राधाकृष्ण शर्मा खाण्डल
२०५ सदाशिव वर्मा
२०६ स्वामी ब्रह्मानन्द शर्मा
२०७ राजाराम शर्मा
२०८ गणपतिप्रसाद शर्मा

III श्रेणी

२०९ जगदीशप्रसाद शर्मा
२१० श्रीमती सरोजनी देवी
२११ श्रीलाल जैन
२१२ गङ्गाराम शर्मा
२१३ बाबूलाल शर्मा
२१४ महन्त हरिश्चन्द्र
२१५ काशीराम शर्मा
२१६ स्वामी कृष्णसिंह सन्यासी
२१७ जगन्नाथप्रसाद शर्मा
२१८ जगदीशप्रसाद शर्मा
२१९ जोगसिंह गोयल
२२० जीतमल गहलोत
२२१ एम० सोमसुन्दर राव
२२२ टी० सूर्यप्रकाश राव
२२३ रामभरोसे लाल वर्मा
२२४ जागेश्वरप्रसाद शर्मा
२२५ बालचन्द्र
२२६ गौरीशंकर मिश्र
२२७ जूगलाल
२२८ लाला मामचन्द्र
२२९ चौधरी मानसिंह
२३० जंगीलाल शर्मा
२३१ कालिकाप्रसाद शर्मा
२३२ लक्ष्मीचन्द्र दीक्षित
२३३ रविदत्त द्विवेदी
२३४ लोकपाल सिंह
२३५ केशव देव शर्मा
२३६ सुन्दरलाल नायक
२३७ हीरालाल वर्मा
२३८ शिवनाथप्रसाद शर्मा
२३९ गोविन्दप्रसाद शर्मा
२४० जगन्नाथ पाण्डेय
२४१ नाथूराम मिश्र
२४२ मलूकदास वर्मा
२४३ हरिहरदत्त मिश्र
२४४ कल्याण सिंह
२४५ गुलाब चन्द्र
२४६ ब्रह्मदत्त
२४७ रतनसिंह
२४८ रामस्वरूप शुक्ल
२४९ स्वामीदयालु
२५० जवाहिरसिंह वर्मा
२५१ रामकुमार शर्मा
२५२ जयनारायण शुक्ल
२५३ श्यामसुन्दर शुक्ल
२५४ नाथूराम शर्मा
२५५ वैद्य कालूदास
२५६ सुरेन्द्रपति
२५७ लम्बोदर दास
२५८ जी. रामचन्द्र राव
२५९ डी० सूर्यप्रकाश राव
२६० डी० एम० आचार्युलु
२६१ जयन्ती सुब्बाराव
२६२ रामकुमार शर्मा
२६३ किशोरीलाल शर्मा
२६४ विष्णुदत्त शुक्ल

हिन्दी साहित्य विशारद श्रेणी I

२६५ श्रीमल

द्वितीय श्रेणी

२६६ रामशरण
२६७ शिवशङ्कर सिंह
२६८ रामबोध शर्मा
२६९ हेमराज
२७० गौरीशङ्कर कौशिक
२७१ केदारनाथ
२७२ वनवारी लाल

III. श्रेणी

२७३ रामचन्द्र
२७४ मोहन लाल
२७५ कन्हयालाल
२७६ रघुनाथसिंह त्यागी

व्याकरण प्रथमा

२७७ गङ्गाचरण द्विवेदी
२७८ रामनरेश पाण्डेय
२७९ रामपाल शुक्ल
२८० पुरुषोत्तम मिश्र
२८१ जयलाल द्विवेदी
२८२ राधावल्लभ दाधीच
२८३ भुवनप्रसाद द्विवेदी
२८४ रेवाराम द्विवेदी
२८५ चिरञ्जीवकुमार
२८६ पुष्पकुमार
२८७ विजयकुमार
२८८ गङ्गाचरण द्विवेदी शर्मा

III

२८९ गुरुप्रसाद पण्डा
२९० निर्मलकुमार
२९१ चन्द्रकुमार
२९२ महेन्द्रकुमार
२९३ कमलकुमार
२९४ गिरिराज शर्मा
२९५ कन्हैयालाल मिश्र
२९६ हरसहाय पुरोहित
२९७ राधावल्लभ
२९८ दुर्गाप्रसाद गौड़

काव्य प्रथमा II. श्रेणी

२९९ रामदेव त्रिपाठी
३०० तनसुख शर्मा
३०१ गणपति खाण्डल जोशी

III. श्रेणी

३०२ श्रीरामशर्मा त्रिपाठी
३०३ रामलषन मिश्र
३०४ भगौतीदीन मिश्र

ज्योतिष प्रथमा III श्रेणी

३०५ सुधाकर पाण्डेय

वेद प्रथमा III. श्रेणी

३०६ श्यामस्वरूप त्रिपाठी

वैद्य प्रथमा I श्रेणी

३०७ रामचरण शर्मा
३०८ ज्वालाप्रसाद गुप्त
३०९ दुःशासन गुप्त

II. श्रेणी

३१० राजाराम शर्मा
३११ ज्वालाप्रसाद
३१२ तोताराम
३१३ सूबेदार शर्मा
३१४ भाऊलाल गुप्त
३१५ रामभरोस शर्मा
३१६ काशीनाथ ठक्कुर
३१७ वद्रीविशाल शर्मा
३१८ सूर्यनारायण गौड़
३१९ मेघराज शर्मा
३२० प्रभुदयालु गौड़
३२१ शिवराज सिंह
३२२ अशर्फीलाल शर्मा
३२३ चेतराम कूर्मिक्षत्री
३२४ गयादीनलाल श्रीवास्तव्य
३२५ चन्द्रपाल शर्मा
३२६ गोपाल दास
३२७ वासुदेवप्रसाद पाण्डेय
३२८ कालकाप्रसाद गुप्त
३२९ रुद्रप्रसाद त्रिपाठी
३३० रघुनन्दन
३३१ द्वारिकानाथ मिश्र
३३२ जी० कनकसुन्दरम्
३३३ के० श्रीराममूर्ती

तृतीय श्रेणी

३३४ ब्रजसुन्दर द्विवेदी
३३५ गजाधर सिंह
३३६ रामेश्वर शर्मा
३३७ युगलकिशोर चौबे
३३८ वनवारीलाल त्रिपाठी
३३९ मन्नीलाल
३४० भैरवदत्त शर्मा
३४१ छेटेलाल यति
३४२ बदलूप्रसाद नापित
३४३ भुत्थाराम जोशी
३४४ चुन्नीलाल वैद्य
३४५ ईश्वरदत्त

हिन्दी साहित्य प्रथमा II.

३४६ ज्ञानप्रकाश
३४७ अतिराम शर्मा
३४८ मुन्शीलाल वर्मा

III. श्रेणी

३४९ कन्हैयालाल जोशी
३५० वरण मल्ल
३५१ गोवर्द्धन
३५२ शान्तीलाल
३५३ राधेलाल शर्मा
३५४ हीरालाल पसारी
३५५ गोपीचन्द्र

सम्मानार्थोपाधिप्रदान वि

१ विधुशेखर भट्टाचार्य
वेदान्ततीर्थ, कलकत्ता
२ वृहद्दल संयमी शास्त्री
का० वे० तीर्थ, लाहौर
आयुर्वेदाचार्य
३ पं० सोहनलाल पाठक
केन्द्राध्यक्ष विद्यापीठ

## सामुद्रिक रहस्यम् ।

( सचित्रम् )

...—श्रीकालिका प्रसादशर्म्मा, राजज्योतिषी, ...दद्भुतमिदं ग्रन्थरत्नम्, हिन्दी टीका सहितम्, ...चित्रविभूषितम्, नरनारीणां शुभा-शुभज्ञाने ...नुपयुक्तम्, संस्कृते सर्वथानवीनमेव । ...हस्तरेखानां गुरुं विनैव सम्यक् परिचयो ...। मूल्यम् १।) मुद्रा ।

## रतिरहस्यम् ( कोकशास्त्रम् )

...ए प्राचीनो ग्रन्थः श्रीमहाकवि कोक्कोक विर-...। अस्मिन्कामशास्त्रसम्बन्धिन्यः सर्वा ...पद्मिनी-शङ्खिनी-चित्रिणी-हस्तिनी-प्रभृतयः ...भेदाः, एवं चत्वारः पुरुषभेदाः, स्त्रीणां वशी-...रणौषध्यः, मन्त्राः, तत्तद्देशीयानां स्त्रीणां पुरुषा-...लक्षणानि, तेषां संयोगाः, अलिङ्गन-चुम्बनादीनां ..., तेषां विशेषाश्च अन्ये च बहवो ज्ञातव्याः ...शास्त्रीयाः विषयाः सन्ति । एष ग्रन्थो नितरां ...सिद्धः प्राचीनश्च विद्यते । एतस्यैका प्रतिः सर्वैरपि ...विधे नूनं संस्थापनीया । मूल्यम्—मुद्राद्वयम् ।

---

...सर्वैरेतद् व्याकरणम् पठनीयम् । एतेन हिन्दी ...भाषायां निबन्धलेखन-अनुवादादिज्ञाने महत्सौकर्य ...म् । मूल्यम् आणकष्टकम् । मार्गव्ययः—=)

## सूर्यचरितम् वा ऋतुचरितम् ।

### नूतनं महाकाव्यम् ।

ले०—तारादत्तपन्तः, साहित्याचार्यः, व्याकरण-काव्य-तीर्थः ।

### गोलविद्या-विषयकं नूतनं महाकाव्यम् ।

अतिसरलम्, भारतस्य विभिन्नदेशानां नदीनां पर्वतानां ऋतूनां चात्र परिचयो कविना नवीनया सरण्या समुपवर्णितः । गोलविषये नूतनं संस्कृत-महाकाव्यम् । सर्वथा द्रष्टव्यम् । मूल्यम्—१) मार्गव्ययः पृथक् ।

## गोलविद्या गोलसूत्रञ्च ।

ले०—श्रीतारादत्तपन्तः, साहित्याचार्यः, काव्य-व्याकरण-तीर्थः

संस्कृते भूगोलज्ञानस्य प्रधानं प्रथमञ्च पुस्त-कम् । अत्र हिन्दी भूगोल-पुस्तकवत् भारतवर्षस्य समस्तो भूगोलः सरलतया बालानां ज्ञानाय समुप-वर्णितोऽस्ति । संस्कृत काव्येषु नाटकेषु पुराण-पुस्त केषु च समागतानां देशानां नदीनां स्थानानां पर्व-तानाञ्चाधुनिकी स्थितिस्तेषां नामानि च सन्ति । सर्वथा द्रष्टव्यमिदं पुस्तकम् । मूल्यम् ॥) आणका ।

## राष्ट्रभाषाभूषणम् ।

ले०—श्रीगोपाल शास्त्री, दर्शनकेशरी, साहित्याचार्यः ।

एतत् पुस्तकं हिन्दीभाषायां विद्यते । संस्कृत-ज्ञानां हिन्दीज्ञाने नितरामुपकारजनकम् । सर्वैरपि

---

सर्वेषां प्राप्तिस्थानम्

**मैनेजर, सुप्रभात कार्यालय, बनारस सिटी ।**

Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

विशिष्टाङ्कः

सौर वैशाखः, १९८५ वैक्रमाब्दः

पञ्चमवर्षे Vol:. 5 | May 1928. | प्रथमसङ्ख्या No. 1

# सुप्रभातम् ।

संस्कृत-साहित्य-समाजस्य मुखपत्रम् ।

तिमिरततिमुदस्यद् भेदतारा विलुम्पन्
नयदधिसुरभाषाभाषि जागर्तिभावम् ।
विबुध-विहग-वादैराह्वयद् भाग्यभानुम्
विलसतु भुवनेऽस्मिन् सर्वतः 'सुप्रभातम्' ॥

निरीक्षकः—

महामहोपाध्याय-श्रीदेवीप्रसादशुक्लः, कविचक्रवर्ती, साहित्यवारिधिः

सम्पादकः—
श्रीकेदारनाथशर्म्मा सारस्वतः

व्यवस्थापकः—
श्रीगिरीशशुक्लः, न्यायाचार्यः ।

वार्षिकम्मूल्यम्—३)
माननीयेभ्यः—१२)
अस्यांकस्य मूल्यम् ।।।)
छात्रेभ्यः—१॥)
वैदेशिकेभ्यः—५)

# लेख-सूची ।

## चित्रसूची ।



# संस्कृत-समाचाराः

...तताम् ।

...षाढ़-श्रावणयोः सम्मिलिता सङ्ख्या प्रकाशिता ...ति प्रागेव निवेदितम् । एतस्यां खलु केचन विचित्राः ...रिणो हृदयाकर्षकाः परिमिता एव लेखाः प्रकाश... । एतस्या एत एव नियमिता लेखका भविष्यन्ति ।

...—रामावतार शर्म्मा एम० ए० साहित्याचार्यः,
...महोपाध्याय-श्रीदेवीप्रसादशुक्लकविचक्रवर्तिनः
...गोपालशास्त्री, साहित्याचार्यः, दर्शन केशरी
...गिरीश शुक्लो न्यायाचार्य, ( व्यवस्थापकः )
...तारादत्तपन्तः, साहित्याचार्यः, दर्शनशास्त्री
...दामोदरशास्त्री भिषगाचार्यः, सर्वदर्शनतीर्थः
...श्रीप्रसाद शास्त्री ( सूर्योदय-सम्पादकः )
...देवशास्त्री पाण्डेयः, साहित्याचार्यः
...केदारनाथ शर्म्मा, सारस्वतः ( सम्पादकः )

एषा विचित्रा दर्शनीया, मननीया, क्रान्तिकारिणी सङ्ख्या भविष्यति । एतस्मिन् सर्वेषां समाज-कार्यकर्तॄणां सचित्रः परिचयोऽपि स्थास्यति

कार्तिके च कविताङ्कः प्रकाशितः स्यात् । एतस्मिन् भारतवर्षीयाणां धुरन्धर-कवीनां मनोहारिण्यः क्रान्तिकारिण्यश्च कविताः प्रकाशिता भविष्यन्ति ।

ग्राहकैरनुग्राहकैश्चास्याः समुन्नयने, प्रोत्साहने च बद्धपरिकरैर्भाव्यम् ।

## अखिल-भारतवर्षीय-संस्कृत-साहित्य-सम्मेलनम् ।

सम्यक् सम्भाव्यते यदस्मिन् संवत्सरे कार्तिकमासे सूर्यग्रहणावसरे सम्मेलनस्याधिवेशनं संस्कृतप्रधानकेन्द्रे वाराणस्यां महता समारम्भेण, उत्साहेन सम्पत्स्यते । तस्मिन्नेवावसरे, सनातनधर्मप्रचाराय विदुषां सद्ग्रन्थनाय

च अखिल भारतवर्षीयं विद्वत्सम्मेलनम् अपि भविष्यति । छात्र-सम्मेलन-कविसम्मेलनादयश्च भविष्यन्ति ।

* * * *

## अस्माकं नवीनाः स्तम्भाः ।

अस्माभिः सुप्रभाते केषाञ्चनावश्यकविषयाणां स्थायित्व-सम्पादनाय साम्प्रतं सप्तस्तम्भाः संस्थापिताः सन्ति । तेषां चित्राण्यपि निर्मापितानि सन्ति, यानि पाठकानां सम्मुखमेव समागतानि । तत्र प्रथमं 'काव्यकथा' नामकः स्तम्भो वरीवर्ति । एतस्मिन् स्तम्भे संस्कृतकाव्यानां कथा, तेषां समालोचनम्, तद्विषये चान्या ज्ञातव्या वार्ताः स्थास्यन्ति । (२) द्वितीये—स्वर्गीयस्मृति—नाम्नि स्तम्भे स्वर्गीयाणां भारतीयसंस्कृतविदुषां चित्राणि चरित्राणि च स्थास्यन्ति । एष सङ्ग्रहः कालान्तरे परं महत्त्वमासादयन् भविष्यति काले संस्कृत-साहित्यस्येतिहासस्य रूपं धारयित्वा भाविनां गवेषकानां लोकानाञ्च महान्तमान्ध्यं दूरी करिष्यति । यत्रमित्र तेऽपि नेतिहासविषये सर्वथानज्ञाः स्थास्यन्ति । तृतीये 'पण्डितपरिचय'-नाम्नि स्तम्भे साम्प्रतिकानां विदुषां परिचयः स्थास्यति । एतेन खलु विदुषां परिचयेन परस्परं सर्वेषां विदुषामनायासपरिचयः, परस्परं सुदृढः स्नेहः सद्भावश्च सम्भवेत् । चतुर्थे 'विज्ञान-वैभव' नाम्नि स्तम्भे नवीना वैज्ञानिकवार्ताः, आविष्काराश्च संस्कृते सम्यग् विज्ञाता भविष्यन्ति, यस्य खलु विज्ञानस्य साम्प्रतं सर्वाधिका वर्तते संस्कृते आवश्यकता । पञ्चमे स्वास्थ्य-सुधा, नाम्नि स्तम्भे आयुर्वेदविषयकाः स्वास्थ्य सम्बन्धिनो विषयाः सन्निवेशिता स्युः । एतास्मिन् स्तम्भेऽपि संस्कृतसंसारस्य परमोपयोगिनो लेखाविचाराश्च संगृह्येरन् । षष्ठे 'संस्कृत-समाचाराः' इति शीर्षके स्तम्भे संस्कृत विषयकाः पाठशाला-विद्यालय-सभा- सम्मेलनोत्सवादिसंस्कृतसम्बन्धिनीनां समाचारा-वलीनां संङ्ग्रहो भविष्यति । सप्तमश्च सम्पादकीय-नामा स्तम्भो विदित एव पाठकानाम् ।

एवंसत्यपि पञ्चषाः स्तम्भाः साम्प्रतमप्यशिष्टाः सन्ति । यथा-'समाचार-संग्रहः', 'प्राप्तपत्राणि', 'व्यापारे वर्धते लक्ष्मीः', 'कवि-कीर्तनम्', '[illegible] परिचयः" इत्यादयः । ग्राहकाणामभिरुचि[illegible] यथासम्भवं शनैश्शनैस्तदपि सम्पत्स्यते ।

एतेषां स्तम्भानां साफल्यं लेखायत्तं भवति । [illegible] लेखकैरेव लिखित भविष्यन्ति, तल्लेखक महानुभाव[illegible] शिरसि विद्यते साफल्यमेतेषाम् । अतः [illegible] लेखका लेखानुल्लिख्य प्रेषयेयुः । परमेतदेव निवेदनम्[illegible] लेखा नितरामुपयोगिनः, सरलाः, अतिसंक्षिप्ताः [illegible]करा एव प्रेषणीयाः । अन्यथा वयं प्रकाशनेऽसमर्था भवि[illegible]

* * * *

## सूचना ।

ये महानुभावाः छात्रमूल्येन [illegible] सार्धैकरूप्यकेण सुप्रभातं गृ[illegible] अद्यपर्यन्तं ।) आणकचतुष्टयं [illegible] ष्टाङ्क साहाय्यं न प्रेषितवन्तस्तेषां [illegible] ष्टाङ्कः सुरक्षितः कार्यालये वि[illegible] सत्वरं स्वकीयं ।) साहाय्यमाणक[illegible] ष्टयं प्रेष्य स्वीयमङ्कं समासाद[illegible] आणकचतुष्टयं धनादेशेन ( मनी[illegible] ऑर्डरसे ) अथवा तन्मूल्याश्रि[illegible] (स्टाम्प) राजेस्टित (रजिस्टर्ड) [illegible] प्रेषयन्तु । अन्यथा कार्यालयो[illegible] दायी स्यात् ।

व्यवस्थाप[illegible]
सुप्रभातकार्यालयः, [illegible]

संस्कृत-साहित्य-समाज-संस्थापकाः ।
तत्सहकारिणश्च ।



(१) महामहोपाध्याय-श्रीदेवीप्रसादशुक्लः, कविचक्रवर्ती । (२) श्रीगिरीश शुक्लः, न्यायाचार्यः, ( सुप्रभात व्यवस्थापकः ) । (३) श्रीकेदारनाथ शर्म्मा सारस्वतः, ( सुप्रभात-सम्पादकः ) । (४) श्रीविन्ध्येश्वरी प्रसाद शास्त्री, ( सूर्योदय-सम्पादकः ) । (५) श्रीगोपाल शास्त्री, ( समाज-मंत्री ) । (६) दामोदर शास्त्री, भिषगाचार्यः । (७) श्रीताराकृष्ण पन्तः, साहित्याचार्यः, कार्यकर्तारः (८) श्रीमदनगोपाल शर्म्मा ( प्रधानलेखकः ) । (९) श्रीरामदेव द्विवेदः, । (१०) श्रीरामेश्वर शर्म्मा । (११) श्रीविमलेश्वर शर्म्मा, ( सम्पादकीयः कर्मकरः ) ।




विध-विषय-विभूषितम्, अद्वितीयम्, सचित्रं संस्कृत-मासिक-पत्रम् ।

-वर्षे | सौर—वैशाखः । १९८५ वैक्रमाब्दाः | प्रथम-संख्या

## माङ्गलिक्यः सूक्तयः ।

य राङ्कृत्रमनच्छाशयः सदसि कच्छायतिं बुध ! वह,-
न्नोऽपि परसुच्छात्रवाग्जयसि तुच्छान् मदं च भजसे ।
मान्य ! किमु नेच्छापि ते भवति तच्छासनानुसरणे,
नित्मेत्य हृदि गच्छानघं शरणमच्छाङ्कमन्धकरिपुम् ॥

—म. म. स्वर्गीय-रामशास्त्रि तैलङ्गानाम्

* * * *

मिल्ल-मल्ली-परिमलिनि, दरोत्फुल्ल-काम्पिल्ल-वल्ली-
ल्लास-मल्ले, मरुति सति सल्लोल-कल्लोल-वेल्ले ।
ल्लान् प्रफुल्लांल्लघुरजनिचरांल्लोलयोल्लोठ्य नर्द-
लाघयन्सँल्लघयतु विपदं तल्लजो मर्कटानाम् ।

—श्रीरामावतारशर्म्मणाम्

राधाश्लेषार्द्रा तनुः कृष्ण ! तेऽब्धा
वंशी-हस्ता रोहिणी पाणिपादे ।
दृष्टौ चित्रा शालिनी स्वातिभासा
मूलं भूयान्मामकप्रीतिवल्ल्याः ।

—श्रीगोस्वामिदामोदरलालशास्त्रिणाम्

* * * *

अमन्दानन्दसन्दोह-मन्दिरं सुन्दरं महः ।
अलं कलिमलं लीला-ललितं लघु लुम्पतु ॥

—म. म. श्रीदेवीप्रसादशुक्लकविचक्रवर्तिनाम्

* * * *

अमन्दानन्दसन्दोहनिष्यन्दिमधुरस्वराः ।
पान्तु वाग्देवतास्पर्श-मुदिताः कच्छपीस्वनाः ॥

—श्रीनारायणशास्त्रिणाम् ( खिस्ते )

* * * *

जगदम्बावलम्बाय निरालम्बाय शूलिने ।
जगत्त्रयकुटुम्बाय नमः साम्बाय शम्भवे ॥

—सम्पादकस्य

# शुभाशिषः ।

महामहोपाध्यायस्य पण्डितसम्राजः—श्री प्रमथनाथ-तर्कभूषणभट्टाचार्य-महोदयस्य ।

विविध-विबुधमोदं तन्वतः सत्क्रियाभिस्तम इह भुवि सान्द्रं निघ्नतः स्वोदयेन ।
गहन-विधिरहस्यं कुर्व्वतो व्यक्तमुच्चैर्दिशि दिशि विजयन्तां सुप्रभातस्य भासः ॥

## नूतनवर्षाभिनन्दनम् ।

आयाहि भो नूतन-वर्ष ! हर्षप्रकर्षमाधातुमलं यतस्व ।
तव प्रसादेन सदैव देवः श्री विश्वनाथः सुतरां प्रसीदेत् ॥ १ ॥
सद्भूतिभूमोपचितास्तुभूमिर्भाग्योदयो भूरि भवेत् प्रजानाम् ।
भातु प्रभावप्रभवाऽस्तभीतिर्भोगोपयुक्ता भृत-भावुका श्रीः ॥ २ ॥
उदेतुसन्मङ्गलसम्पदुच्चैरमङ्गलं द्राग्विलयं प्रयातु ।
दरिद्रता नश्यतु, वश्यभावमवश्यमासाद्य महः स्थिरः स्यात् ॥ ३ ॥
दोषा अशेषाः खलुनामशेषा-भवन्तु, भक्तिर्भगवत्युदीयात् ।
पूता मनोरञ्जनहेतुभूता गुणाः प्रभूताश्च समुल्लसन्तु ॥ ४ ॥
आधिर्जनानां हृदयं विहाय कुत्राऽपि यायादथवा प्रणश्येत् ।
व्याधिर्निदानेन निजेन साकं स्वयं समासाद्य मयं म्रियेत ॥ ५ ॥
पापानि सर्वाणि सहैव दुःखैः पलाय्य पातालतलं प्रयान्तु ।
सुखैःसमेतः सुकृतस्य राशिः समेधतामाशु विनाऽन्तरायम् ॥ ६ ॥
लोकोपकारैकपराऽपरागा निश्शेषविक्षेपविकारशून्या ।
शश्वत्समासादित-सुप्रसादा मतिस्सतामस्तु गतिर्गुणानाम् ॥ ७ ॥

—श्रीदेवीप्रसादशुक्लः, कविः
( महामहोपाध्यायः )

# भारतमातृवन्दना ।

हिमवता मुकुटेन विराजिता,
द्विगुणषोडशकोटिसुतान्विता ।
स्मितपराजित-पूर्णसुधाकरा,
जयति भारतवर्ष-वसुन्धरा ॥ १ ॥

अमृतपङ्कज-भास्वरितानना,
छविविनिन्दित-नन्दनकानना ।
अमल कोमल विम्बफलाधरा,
जयति मे सुफला सुजला धरा ॥ २ ॥

महितराघवमाधवमातृका,
विहितवर्गचतुष्टयदातृका ।
अधिगता मुनिभिश्च यतो जनिः,
जयति मे वरदा भरतावनिः ॥ ३ ॥

अवतमानव बुद्धिविकाशिनी,
प्रबलराक्षसवंश-विनाशिनी ।
सुमतिदा विशदा भयहारिणी,
जयति मा परमाऽऽमयवारिणी ॥ ४ ॥

सुखद सुन्दर शाद्वल शालिनी,
कुसुम समूहलसद्‌ गिरिमालिनी ।
बहुनदाऽऽप्रपदीन-कचाचिता,
जयति विश्वजनीन-गुणार्चिता ॥ ५ ॥

श्रुतिशुचिस्मृतिदर्शन हेतवे,
विधुरवीचिभवार्णवसेतवे ।
निखिल वाञ्छितकामदधेनवे,
तव धरित्रि ! नमोऽङ्घ्रिजरेणवे ॥ ६ ॥

जनित-विष्णु-विरञ्चि-दिगम्बरा,
वितत-शुद्ध-यशोलसदम्बरा ।
ऋषि-महर्षि-निपीत-पयोधरा,
जयति जन्मधरा सुमनोहरा ॥ ७ ॥

सुमहनीयमहामहिमान्विताम्,
विजयिनीं महतीं महितां हिताम् ।
प्रतिपलं कलये हृदि सादरम्,
विबुध-वन्दित-भारतमातरम् ॥ ८ ॥

सुरसरिद्‌ यमुना च सरस्वती,
सुरस सिन्धुनदी च दृषद्वती ।
अगणिताः सरितोऽपि च नर्मदा,
धवलयन्ति पदं तव सर्वदा ॥ ९ ॥

मलयजः पवनः परिपावनः,
सरसिजामृत शीकरवाहनः ।
व्यजनमातनुतेऽनिशमर्चिते,
वपुषि ते हरिचन्दनचर्चिते ॥ १० ॥

पदपरागमतीवशिवङ्करम्,
परिचरन्नयि तेऽम्ब ! निरन्तरम् ।
प्रियजनं जनकं च सहोदरम्,
परिजहामि भजामि च नोदरम् ॥ ११ ॥

जननि ! मन्नयनं भयनाशया,
प्रथममुल्लसितं तव भासया ।
मृतिदिनेऽपि तया परिपूरितम्,
भवतु भारतभूमि ! निमीलितम् ॥ १२ ॥

न वसु नापि सुखं न सुतानये !
परपदं जगदम्ब ! न कामये ।
चरणमर्चितुमीश्वरि ! तावकम्,
जनुरिदं व्यतिगच्छतु मामकम् ॥ १३ ॥

श्रीविन्ध्येश्वरीप्रसाद शास्त्रिणः
('सूर्योदय'-सम्पादकस्य)

# शृङ्गारस्यैकमात्ररसत्वम् ।

लेखकः—

श्रद्धेय-श्रीरामावतारशर्म्मा, एम० ए०, साहित्याचार्यः



था भवभूतिना—

"एको रसः करुण एव निमित्तभेदात्
भिन्नः पृथक् पृथगिवाश्रयते विवर्तान् ।"

इत्यादौ करुणस्यैव एकमात्ररसत्वं प्रतिपादितम्; तथा भोजेनाऽपि 'श्रृङ्गार प्रकाशे'[1] श्रृङ्गाररसस्यैकमात्र रसत्वं प्रतिपादितम् । तथाच श्रृङ्गारप्रकाशस्योपक्रमे द्वे पद्ये—

श्रृङ्गार-वीर-करुणाद्भुत-रौद्र-हास्य-
बीभत्स-वत्सल-भयानक-शान्तनाम्नः ।
आम्नासिषुर्दश रसान् सुधियो वयं तु
श्रृङ्गारमेव रसनाद्रसमामनामः ॥

* * *

वीराद्भुतादिषु च येह रस-प्रसिद्धिः
सिद्धा कुतोऽपि वटयक्षवदाविभाति ।
लोके गतानुगतिकत्ववशादुपेता-
मेतां निवर्तयितुमेष परिश्रमोऽयम् ।

एतत्पद्यद्वयं धर्मदाससूरिणा 'साहित्य-रत्नाके... मया दृष्टपूर्वम् । सम्प्रति तु प्रकाशितस्य श्रृङ्गारप्रका... भूमिकायामिदमुपन्यस्तम् ।

भोजराजेन स्वसभापण्डितैर्बहवः प्रबन्धा वि... इति प्रतिभाति । तत्र षट्त्रिंशत् प्रकाशात्मक... प्रकाशोऽयं महाकविना छित्तपेन निर्मित इति प्रति... तथाहि—

"अच्छिन्नमेखलमलब्ध-दृढोपगूढ-
मप्राप्तचुम्बनमवीक्षितवक्त्रकान्ति ।
कान्ता-विमिश्र-वपुषः कृतविप्रलम्भ-
सम्भोगसख्यमिव पातु वपुः पुरा...

इतीदं श्रृङ्गारप्रकाशस्य मङ्गलपद्यम्, तच्च मया प्र... सदुक्तिकर्णामृते छित्तपस्य पद्यत्वेनोपन्यस्तम् । ... किञ्चिदेवार्वाचीनः सदुक्तिकर्णामृत-सङ्गृहीता श्रीध... दासः स्व-संग्रहे भोजीयानि पद्यानि भोजीयत्वेनैवोद... छित्तपादीनां पद्यानि तु तत्तनाम्नैवेति श्रृङ्गारप्र... छित्तपप्रणीतत्वेन तत्समये प्रसिद्धो नाभविष्य... 'अच्छिन्नमेखलमिति पद्यं तच्छित्तपीयत्वेन व्याह... छित्तपश्च सुप्रसिद्धो भोजसदस्य इति "भोजच्छित्त... प्रभृतिभि" रित्यादिश्लोकादवगम्यते । प्रमाणान्त... त्र न विस्तरभयेनोपन्यस्तानि । यथाश्रृङ्गारप्र... श्रृङ्गार एवैको रसः, अन्ये रसास्तु भावमात्राणि । ... श्रृङ्गार प्रकाशे—

[1]—श्रृङ्गारप्रकाशाख्यो महान् रसग्रन्थः श्रीभोजनिर्मितः साम्प्रतमेव मद्रास-पुस्तकालये समुपलब्धः तस्य प्रकाशनञ्च तत्रैव जायते । तस्य कश्चनांश एव सम्प्रति मुद्रितो मया लेखक महोदयानां सविधे दृष्टः । तद्विषये पुनर्विशेषं व्याख्यास्यामः ।

"रत्यादयो यदि रसास्युरतिप्रकर्षे
हर्षादिभिः किमपराद्धमतद्विभिन्नैः ।
स्थायिनस्त इतिचेद्भयहासशोक-
क्रोधादयो वद कियच्चिरमुल्लसन्ति ॥"

शृङ्गारमात्रस्य रसत्वसिद्धान्तश्चात्र सङ्क्षेपेण मया विचाराय विन्यस्तः । विस्तरार्थिनः शृङ्गारप्रकाशं विलोकयन्तु ।

शृङ्गारप्रकाशे बहून्यैतिहासिकवृत्तान्यपि दृश्यन्ते । यथा—कालिदासस्य कुन्तलेश्वरदौत्यादुद्धृतमिदं पद्यम्—

असकलहसितत्वात् क्षालितानीव कान्त्या,
मुकुलितनयनत्वात् व्यक्तकर्णोत्पलानि ।
पिवति मधुसुगन्धीन्याननानि प्रियाणां
त्वयि विनिहितभारः कुन्तलानामधीशः ।

एतत्पद्यं कालिदासेन विक्रमादित्य समक्षमुक्तमासीत् विक्रमेण चैतदुत्तरे प्रोक्तम्—

" पिवतु मधुसुगन्धीन्याननानि प्रियाणां
मयि विनिहितभारः कुन्तलानामधीशः ॥ "

एवं विकटनितम्बा पूनर्भू रासीदित्यपि शृङ्गारप्रकाशादवगम्यते ।

---

# अभिभाषणम् ।

श्रीमन्तो विविधविद्याविलासिनो विद्वद्वृन्दारकाः, श्रीवाराणसी-संस्कृत-साहित्य-समाजभाजः, अत्र समागताः साहित्यप्रेमजुषः सभाजनाश्च !

भवद्भिरेतत्सभाध्यक्षपदप्रदानेन ...महदुपकृतोऽस्मि; विशेषतश्च अनेन काशीस्थ-विद्व-...समागम-सम्पादनेन । अधुना एतदावेदयामि यत् ...मन्त्रिभिः प्रबद्धं क्रममनुसृत्य दिनद्वयमस्मिन् स्थाने ... चतुर्थघण्टावादनादारभ्य षष्ठघण्टावादनपर्यन्त-...कार्यं भविष्यति । अद्यतनकार्यविभागपर्यवसाने ...सभाध्यक्षस्थानानुरूपमध्यक्षेन किञ्चिद्वक्ष्यते । आदौ शिष्टाचारानुसारेण सर्वविघ्नशान्त्यर्थमस्मत्-कार्यसाफल्यसिद्ध्यर्थञ्च श्रीशप्रार्थना सभाजनैर्विधीयताम् ।

श्रीमन्तो महानुभावाः सभाजनाः !

इदानीमध्यक्षस्थानात् यत्किञ्चिदल्पमेव प्रसङ्गाकाङ्क्षितं वक्तुं भवद्भिरनुज्ञा दीयतामित्यभ्यर्थये ।

ॐ नमः श्रीधर्मदत्ताय गुरवे बुद्धिरूपिणे ।

अयं समाजः "संस्कृतसाहित्यसमाज" इति विचिन्त्य संस्कृत-साहित्य-शब्दार्थयोर्मीमांसा यदि क्रियते तर्हि न अकाले अस्थाने वाऽकाण्डताण्डवं स्यादिति मन्ये । सापि कालमर्यादामनुरुध्य समासत एव विधास्यते नतु विस्तरेण इति भवतान्नातिक्लेशो भविता । तथापि यः कोऽपि श्रमः स्यात् स महानुभावतया भवद्भिः सोढव्य इति प्राथ्यर्ते ।

---

( * संस्कृत-साहित्य-समाजस्य चतुर्थाधिवेशने सभापति पदमलंकुर्वतां श्रीमदाचार्यआनन्दशङ्करवापूभाई ध्रुव [ एम्० ए० एल्एल् बी०, प्रो०—वाइस चांसलर हिन्दू विश्वविद्यालय, काशी ] महोदयानाम् )

तत्र प्रथमं "संस्कृत"-पदार्थविचारे कल्पद्वयं प्रतिभाति-

( १ ) संस्कृतैः--शास्त्रोक्तसंस्कारविशेषैः परिशुद्धैः शिष्टैर्जनैर्या या वाग् भाष्यते सा संस्कृता ।

( २ ) अथवा, प्रकृतिरूपाद् वाग्विशेषात् संस्कारं प्राप्य या भाषा समजनि सा संस्कृता ।

अनयोः कल्पयोरयं भेदोऽवधारणीयः-यत् प्रथमे कल्पे या संस्कृता भाषा सा न सार्वलौकिकी; किन्तु शिष्टजनमुखस्यैवालङ्कारः । नन्वेवं चेत् संस्कृता वाक् महर्षिणा पाणिनिना "भाषा"शब्देन कथमगादि ? लोके च तस्या व्यवहार— इतिकथमुक्तम् ? उच्यते । तत्तु तत्कालीनशिष्टजनभाष्यमाणत्वात्, न पुनः सर्वजनसाधारणत्वात् । अतएव तस्या गीर्वाणवाणीति प्रसिद्धिः । तस्मात् संस्कृतप्राकृतयोः सम्बन्धः पौर्वापर्य-निबद्धः । तच्च निबन्धनं बीजाङ्कुरभावसदृशं न भवति, किन्तु एककालावच्छिन्न-संस्कारभावाभावप्रयुक्तभाषाभेदस्वरूपः-इति एके मन्यन्ते ।

अस्मिन् मते प्रकृतिः संस्कृतम्, तद्भवं प्राकृतमिति हेमन्द्राचार्यैर्युदुक्तम् तदयुक्तम् । संस्कृतस्य क्वापि प्रकृतिशब्दवाच्यतानुपलम्भात् । अत्र पुनः, अयं भाषाभेदः सर्वथा भाषाद्वयसंमितः । एकस्या एव भाषायाः संस्कारभावाभावमात्रप्रयुक्तः प्रकारभेदो वा इत्यपि विमर्शान्तरम् ।

द्वितीयं कल्पं स्वीकृत्य अपरे पुनरेवमाहुः, यत् कस्मादपि सर्वजनसाधारणात् प्राकृतविशेषात् संस्कृतस्य प्रादुर्भावो बीजाङ्कुरन्यायेन । अत्र पुनर्बीजसदृशः स प्राकृत-विशेषः । प्राचीनतमे कस्मिन्नपि समये सर्वत्र न प्रसिद्धा वेदभाषा, अथवा सापि श्रोत्रियजनसंस्तुता भाषा इति अवान्तरो विकल्पः ।

प्राकृतविशेषात् संस्कृतस्य बीजाङ्कुरन्यायेन प्रादुर्भाव इति यदुक्तं तस्यायमर्थः । आद्यप्राकृतात् संस्कृतम्, संस्कृतात् पुनरन्यत् प्राकृतमिति बीजाङ्कुरन्यायः । तस्मादेतदपि चिन्तनीयं प्रसज्यते, यद्वररुच्यादिग्राकृताः प्राकृतभाषाः

संस्कृतभाषाप्रभवाः, भाषान्तरप्रभवाः उभयप्रभवा वा
मपि अपभ्रंशः प्राकृतमात्राज्जातः, तस्य भाषान्त
वा । अपिच-हेमचन्द्रेण यद्देशीति कथ्यते, तदपि
महाप्राकृतादिभाषाभिः सम्बद्धमसम्बद्धं वा इति
प्रकर्षेण विचारणीयम् । तदपि दुर्बोधमपि विदुषां कि
मिति मनसि निधाय यत्नेनावबोध्यम् । साहित्यसमा
विदुषां विद्यार्थिनामस्मिन् विषये समीचीना
भवेदिति हेतोर्मयाऽस्यां सभायामिदं विद्यास्थानं प्राद

अथेदानीं साहित्यशब्दार्थौ विचार्येते । साहित्य
रूढार्थं तु 'साहित्यसंगीतकलाविहीनः, साक्षात्
पुच्छविषाणहीनः' इति हरिवाक्यं स्मारं स्मारं
जानाति । किन्तु कः खलु तस्य यौगिकोऽर्थः ? ते
कार्थेन तस्य रूढार्थस्य कः सम्बन्धः इति तु दुरूहम् ।
तदूहगोचरीकर्त्तुं यथामति यतिष्ये । रामादिवद्वर्तितव्यं
णादिवत् इति हितेन सहितं स-हित तदेव साहित्यम् ।
पदेशकं काव्यमित्यर्थः इत्येकं निर्वचनम् । "सकल वि
कायतनं पञ्चदशं काव्यं विद्यास्थानमिति याया
गद्यपद्यमयत्वात् हितोपदेशकत्वात्" इति काव्यमीमां
राजशेखरोक्तिरिमामेव निरुक्तिं सूचयति, किन्तु; तस्मि
ग्रन्थे राजशेखरेणान्यदेव निर्वचनं कृतम् । तद्यथा-"
र्थयोः सहभावेन विद्या साहित्यविद्या ।" चिरन्तनेन
हेनाऽपि "शब्दार्थौ सहितौ काव्यम्" इत्युक्तम् ।

अथवा तृतीयमेवं स्यात्, यत्, नटाः सूत्रधारेण स
संलापं यत्र कुर्वते, तत् साहित्यं नाटकापरपर्यायम् ।
कस्य च काव्यविशेषत्वात् अजहल्लक्षणया साहि
काव्यसामान्य प्रतिपादयति । किन्तु; साहित्यशब्दः क
केवलं नाटकार्थे, सहितशब्दः क्वचिदपि काव्यार्थे अ
इति सर्वत्र ( त्रिष्वपि निर्वचनेषु ) अरुचिबीजम् । शो
निर्वचनाभावे 'दुर्भिक्ष-भोजन' न्यायेन च त्रिषु मध्ये
स्वीक्रियताम् ।

[ अपूर्णम्

# इन्द्रजाल-मञ्जूषा ।

श्री पं० मंगलदेव शास्त्री, एम० ए०, पी-एच्० डी०

१९१२ सने हिन्दीभाषाया अनूदिताऽऽख्यायिका )

महतीमपि श्रियमवाप्य विस्मयः सुजनो न विस्मरति जातु किञ्चन '

स खल्वासीत् साधारणसमितेर्वासरः । प्रधानामात्यप्रमुखा महत्पदमधिष्ठिता लघुपदभाजस्तथान्ये कार्यकर्तारः सर्वेऽप्यासन्नुपस्थिताः । निर्दिष्टमासीद् भूभुजा—"यद्यानिवार्यः प्रवेशः स...ल्य । यः कोऽपि समेत्यास्थानमण्डपमभिक्षोणि...मनोऽनुरूपमावेदयतु वाञ्छितम् । नहि कश्चन परिचा...क्षणमण्डपमाविशन्तमवरोद्धुं क्षमः । सर्वोऽपि निजप...मभिदधातु । यतो विशां त्राणाय प्रकल्पेऽहम्" इति । ...मभूतानेकनृपतिमण्डलपरिवृतस्ताराागणैरिव भगवान् ...तिः, गोमेद-हीरकादिरत्नकलापगुम्फितमध्यास्तेस्म हैम...तुल्वीर्यो महामतिर्महीपतिः । दक्षिणपार्श्वे ...मात्यो वामपार्श्वे च चमूपतिरासन्दीमधितष्ठतुः । ...पि सानुक्रमं स्वं स्वमासनं भेजिरे ।

...नन्तरं सर्वेऽपि प्रार्थिनो महीभुजः पुरो निजावेदनमु...माहुः । स च सस्मितमनायासञ्च यथार्थंन्यायमनुतिष्ठँ...तोष । शुभेऽहनि तस्मिन् सुबहूनभिनन्दयन्ननेकेषा...न्धन्यवादानाञ्च भाजनं बभूव भूपः ।

...नातिदूरे नृपासनान्मलिनाम्बरः कश्चिदेको मानवो ...नने दत्तदृष्टिस्तस्थौ । सोऽपि महीपतेरभिमुखमावेदयितुं साधारणसमितौ किञ्चन समागात्; परमास्थानमण्डपस्यादृष्टपूर्वामनेकाभरणपरिच्छदैर्भास्वरां सुषमासम्पत्तिमवलोक्य चकितचकितो नैजमावेदनमपि विसस्मार । नहि क्षितिभर्तृसविधे स्यात; नापि किमपि स प्रार्थितवान् । प्रसङ्गवशाद्धरापतिः प्रधानामात्यं सम्बोध्य ऊचे—"भद्र! जगतो मात्रायां सुगमो निर्वाहाभ्युपायः कस्मादवगन्तव्यः" इति । प्रधानसचिवः सानुनयं भक्तिपुरस्सरं चाह—"देव! श्रियः" —इति ।

तत्क्षणमेव सवेशे समासीनस्य तस्याऽनिर्णिक्तवाससोऽपावृतमास्यम् । सप्रश्रयं शनैश्चासावादीत्—"सती पतिव्रता च चेद्वर्तते स्त्री-यतस्तस्याः सतीत्वाभावे पत्युरापत्परम्परा अवश्यं भवेयुः" इति । धराधिपतिरप्येतदशृणोत् । मुहुरपि च स सस्मितमन्वयुङ्क्त महामात्यमेव—"आर्य! संसारे किमत्यधिकमुपयुज्यते?" इति प्रत्युत्तरितं मन्त्रिणा—"देव! दयापाथोनिधे! धनमेवास्मिन् विषयेऽन्यानि वस्तून्यतिशेते" इति ।

भूयोऽपि—"धनं चेत्करगतं भवति, मनुजश्च यदि तदुपयोगरहस्यं वेत्ति । अन्यथा तद्भावाभावौ न विशिष्येते" इति स एव मलिनवासाः शनकैः सान्तस्तोषं प्रौढमुवाच । महीपतिस्तद्वचोभिरतिशयेन तृप्तस्तदभिमुखं सामोदमैक्षत । अनन्तरं च तमात्मसन्निधौ सादरं समाहूय प्रावोचत्—"को भवान्? किं प्रयोजनञ्चात्र मदन्तिके समागमनम्? सर्वोऽपि स्वमनोनुरूपमस्मत् पुरतो निवेद्य स्ववाञ्छितं लब्धवान्, परं नहि भवता किमपि समुदीरितं साम्प्रतं यावत् । किमत्र निदानम्?" इति ।

एवमनुयुक्तो नरपतिपुङ्गवेन—"विदधातु परेशोऽरिष्टतातिं भवताम् । देव! वसुन्धरापते! अहमतिदरिद्रः, परं विद्वान्, भवतां राज्याधिवासी ब्राह्मणः, पुस्तकान्येव मे धनम्, निजभार्याहेतोश्चात्रागतं वेत्तु भवान् मामकम्, सा हि मे प्राणेभ्योऽपि प्रेयसी, धर्माचारवती, सती, भार्या । सार्द्धं तया सानन्दं जीवनकालकला अतिवाहयतो निजपुस्तकस्वाध्याये दिवानिशं रममाणस्य धर्म्यां साध्वीमवस्थां



परिषेवमाणस्य नाद्य यावत् कदाचिदपि अवकाशं लब्धवती मे मानसे वित्तैषणा लौकिकसुखैषणा वा । गतवासरात् सा लोमेण कठिनामयेन ग्रस्ता, न हि मदन्तिके पानभोजनाय किञ्चित्, न चाप्यौषधपरिषेवणसामर्थ्यम् । अतो भवतां सविधमुपस्थितोऽस्मि, ततः साहाय्य-वितरणेन मामनुगृह्णातु देवः । स्थापयतु च परलोकेऽपि साम्राज्यम् । सन्ततं पुनर्निजविद्यया बुद्ध्या च भवतः सेवायां सन्नद्धो भविष्यामि । अग्रे देवः प्रमाणम् । " —इति एवं स सविनयमावेद्य विरराम ।

क्षितिपतिस्तस्य सूनृतां वाचं निशम्य तदानने दृशं पातयामास । प्रख्यापयतः स्म हि तस्य चक्षुषी अनुपमं तद्वैशारद्यम् ।

अथ महीपतिः प्रधानामात्यमादिदेश—" अद्य प्रभृति इममहं स्वपरिषदः सभास्तारपदे नियोजयामि । भवद्भिश्चैतन्निखिला आवश्यकताः सम्पूरणीयाः " इति । अचिरादेव नृपादेशमन्वतिष्ठत् सचिवः । समुपस्थितो भार्यां चिकित्सितुं तद्गेहेऽगदङ्करः । सा चाचिरादेव निरामयत्वं भेजे । स चापि मनीषी विप्रो नियमेन राजपरिषदं सभास्तारपदेनालञ्चकार । ततः प्रभृति न खलु कदाचित् सोऽदृश्यत पूर्वमिव मलिनाम्बरः । परमासीदच्छश्लक्ष्णवासाः । तथापि स पूर्ववदेव पुस्तकालोचन-निरतोऽभूत् । राजपरिषत् कार्यालब्धावकाशस्तेष्वेवासीत् सततं व्यासक्तमनाः ।

स हि क्षमाया क्षमया, धैर्यं च हिमवतः सदृशः; परम भागवतः समेषामचिरादेव समादरभाजनं बभूव । महीपतिश्चाविरतं समादरेण तं सुबहु सत्कृतवान् । तस्य गेहिन्यपि यथापूर्वं दारिद्र्यावस्थायां देवीभावनया तं समचर्चयामास; तथैवेदानीमपि सम्पत्तिसद्भावेऽपि तं महात्मभावनया सम्भावयामास । नूनमैश्वर्यसम्पदायामपि पूर्ववदेव सहजसरलस्याऽपरिवर्तितन्महस्तिष्कस्य तस्य जीवनयात्रायां केवलं शरीरवसनेष्वेव समदृश्यत परिवृत्तिलवो न पुनराचारेषु स्वभावेषु वा । तथा खल्वेषोऽत्युदारैः स्वगुणैर्नरपतेर्मनो जग्राह यत् क्षोणिपतिरेतस्य निखिलविद्यासु दाक्षिण्यम्, सकलकलासु च वैचक्षण्यमालोच्य निरतिशयं प्रसन्न उत्तरोत्तरं पदं स... क्रमेणामात्यपदे नियोजितवान् । समासाद्य तम... सततमात्मकृत्यस्य सत्यभावेन तत्प्रवणतया चा... समधत्त पदमाशु स प्रजाजनचेतःशिलापट्टेषु ।

राज्ञोऽन्येऽधिकारिणः संवीक्ष्य तस्याभ्युन्नतिं दि... चाभिवृद्धिमीर्ष्या कलुषितचेतसोऽचिन्तयन्—अहो, एवं गुरुपदमारूढोऽयमस्मानपि शास्तीति ।

आश्चर्यम्, अपरित्याज्यो हि दुःस्वभावो दुर्मतीना...

ते हि तद्विरुद्धं कर्तुमुद्युक्ता मिथो मन्त्रयाञ्चक्रिरे । ... तस्तेषामेको रहसि कदाचन लब्धावसरो नरपतिमब्रवी... मास "क्षमापते ! देव ! अयमतीव मायिको विप्रः । ... जालेन छद्मेन वशीकृतो भवान् । एवं हि जनश्रु... यद्भवदभिमुखमागमनात्पूर्वमयं नियतमेव निजगेहप्रको... शति । स च सततमनयावृतद्वारको वर्तते । तत्रास्ते ... रजतमयी लघ्वी मञ्जूषा, इन्द्रजालमयी च सा । ... यात् किञ्चित्तान्त्रिककृत्यमनुष्ठायैवायं भवतामभिमुखम... इति । किञ्च नाभविष्यद्यदि अयं मायावी; कथं... झटित्येवामात्यपदे प्रारोढुं प्राभविष्यत् । देव समवहि... भवद्भिः । नहि जातु एतादृशो दरिद्रो विशिष्टं कारणम... हसा एतामवस्थामाप्तुं शक्नोति । नूनमेतस्या मञ्जूषा... विलसितम्, यद्भवानप्येतद्वशः समजनि । झटित्येवा... पदमारूढः—न ज्ञायते किमग्रेभावि ? अतो माया... प्रति सततमेव सावहितस्तिष्ठतु भवान्" इति ।

एवमाकर्ण्य तस्य वाग्जालं भूपः, प्रथमन्तु सर्वमेत... हेतुकं वा ईर्ष्याकारितं वा इत्येवामन्यत; परं यदा... कारिभिः स्ववंशसम्भूतैरपि च बन्धुभिर्बहुवारमनेक... भणितस्तदा कश्चित्सन्देहलवस्तस्मिन् विषये तस्य ... प्रादुर्भूतः सत्यमेवोच्यते:—

**सुजनानामपि हृदयं पिशुनपरिष्वङ्गलिप्तमिह ...**
**पवनः परागवाही रथ्यासु वहन् रजस्वलो ...**

[ अपूर्ण ]

# आयुर्वेदस्य क्रमिक ह्रासः ।

लेखकः—
डा० गणनाथ सेन महोदयः, एम्० ए०, एल० एम्० एस्०
महामहोपाध्यायः, विद्यानिधिः, सरस्वती

ह खलु क्रमेण दुर्दैववशाद्धीयमाने चिरन्तनवैदिका-चारगौरवे, क्षीयमाणज्योतिषि बौद्धदुर्दिनाच्छन्ने च भारतप्रभावदिनकरे प्रादुरभूवन्नकालवज्रनिर्घाता इव शक-हूण-यवनादिजातीनामुत्पाताः श .धा ज्ञानार्ज्जनविघ्नभूताः । तेष्वाद्य उत्पातो भारता-लिकसन्दराख्येन (अलेक्जेण्डर) ग्रीकभूपतिना । स हि ः परःसहस्र चतुरङ्गसेनासमृद्धिः ख्रीस्तपूर्वसप्तविंशत्य-धिकत्रिशतमिते वर्षे ( 327 B. C.—अर्थात् प्रायः द्विसहस्रवर्षेभ्यः प्राक् ) राहुरिव करालो भारतसूर्य-रे । तदाक्रमणजन्ये च महति विप्लवे विध्वस्तप्राय सिन्धुपञ्चनदावधिर्महादेशो येन गृहदाहदुर्भिक्षादिना ो विनष्टाः प्रजाः, शतशः प्रणष्टानि च ग्रन्थरत्नानि । प्रत्यावर्तमानेन च तेन ग्रीकभूपतिना तत्तत्प्रदेशशासनाय ः सेल्युकसाख्यो ग्रीकवीरः, स्वदेशं प्रापिताश्च भारतीया ग्रन्थाः विशेषतश्चिकित्साग्रन्थाः भारती-यवैद्यानैपुण्यविलोकनविमुग्धेन चेतसा । ततो मगधाधि-पमहाराजचन्द्रगुप्तेन पराजितोऽसौ सेल्युकस्वीरः सन्धाय ...मानोऽपि भारतीयविद्यार्ज्जनाय मेगास्थिनिसाख्यं ...नोज ) ग्रीकभिषजं चन्द्रगुप्तसदसि पाटलिपुत्रे ...भूव । तदेतदखिलं भारतीयज्ञानालोकस्य यावन-देशप्रचारस्य द्वारमभूदिति पुरावृत्तविदां वार्त्तया सुप्रतिपन्नं चक्षुष्मताम् । न च शंक्यम्—ग्रीसदेशीयज्ञानत एव भारत-स्यासीद् विज्ञानसमृद्धिरिति । न हि मुष्टिमेयैर्वितारिताव-शिष्टैश्च ग्रीकसैनिकैः शिक्ष्यन्ते स्म भारतीया ज्ञानर्द्धिसमृद्धाः सुधियः, न च सत्येवं ग्रीसदेशीयैरैतिहासिकैस्तथा नाभवि-ष्यल्लिखितम् । दर्शिताश्चास्माभिरनेकधाऽन्येऽपि भूतार्थ-प्रतिपादका हेतवः ।

ततः प्रशान्तप्राये नन्दकुलधूमकेतोर्महाराजचन्द्रगुप्तस्य शौर्येण ग्रीकाख्ययवनानां ...भावे चन्द्रगुप्तस्य तत्सूनोर्बिन्दु-सारस्य च राज्यावसाने क्रूरप्रकृतिरशोकनामा बिन्दुसारपुत्रो राजवंश्यान् बहुधा विनिपात्य सिंहासनमारुरोह ( 264. B. C. ) । तेन च क्रोधभयानकेन 'चण्डाशोक' इति ख्यातिं गतेन कलिंगेषु वर्षत्रयं सुमहान् युद्धविप्लवः समारब्धस्तेन लक्षशो विनष्टाः प्रजाः, न किमुत शतशो ग्रन्थरत्नानि ? ततो-ऽसौ उपगुप्ताख्येन बौद्धाचार्येणोपदिष्टो बौद्धधर्ममग्रहीत, प्रसिद्धश्चानन्तरं धर्मिष्ठो भवन् 'धर्माशोक' इति बौद्धेषु । प्रचारितश्च तेन नानादिगन्तेषु प्रेषितैर्बौद्धश्रमणैश्चीन-ग्रीसादि-सुदूरदेशेषु बौद्धानां धर्मो ज्ञानालोकश्च भारतीयः । आयुर्वेदस्य पुनस्तदानीं किञ्चिन्मन्दप्रभोऽपि परहितव्रतैर्बौद्धश्रमणैरुपासि-तश्चीन-यवनादिदेशेषु प्रचारविशेषं लेभे । तथापि राजाज्ञया शवच्छेदादिनिषेधात्ततःप्रभृति शारीरशास्त्रस्यावनतिरेवाभूत, नष्टप्रायशारीरस्य च वैद्यकस्य कथङ्कारं समुन्नतिः ?

ततो विनष्टपराक्रमे मौर्यवंशे ( 183. B. C. ) पार्थिनामानो ग्रीकयवनाः शकाख्यबर्बराश्च पुनःपुनर्भारतमाक्रम्य आसिन्धु-साकेतपुरावधिप्रदेशेषु निरन्तरं विप्लवं जनयामासुः । तदा मिलिन्दाख्यो यवनः पञ्चनदप्रदेशं बुभुजे, स च नागार्जुनेन बौद्धधर्मे उपदिष्ट इति मिलिन्दप्रश्नीया कथा बौद्धानाम् । मगधेषु च तदैव पुष्पमित्रः शुङ्गवंश्यो मौर्यवंश्यं बृहद्रथं विनाश्य राज्यमग्रहीत्, विताड़ितश्च तेन मिलिन्दाख्यो यवनः साकेतपुरीं रुन्धानः । भगवान् पतञ्जलिश्च तदानीन्तन एवेति ऐतिहासिकाः ।

एवञ्च मनाक् प्रशान्ते विप्लवे चरकापरपर्यायेण तेन भगवता पतञ्जलिना प्रतिसंस्कृता विशीर्णप्राया अग्निवेशसंहितेति प्रागदर्शयाम । बौद्धाचार्येण नागार्जुनेन च तस्मिन्नेव काल सुश्रुतसंहिताऽपि प्रतिसंस्कृतेति केचित् । अमुष्य च प्रायो वर्षसहस्रद्वयी समतीता वृत्तान्तस्य ।

अथ पुनः पुनः शकजातीयानामाक्रमणेन क्षीणदीनबलेषु सकलराजकेषु कुशाणवंशीयः कनिष्कनामा महाप्रतापः शकनरपतिराहिमाद्रिविन्ध्यपर्यन्तं भारतस्य उत्तरपश्चिमार्द्धं बहुभिर्युद्धैर्जिगाय । तस्य शकनरपतेरतीताब्दाश्च साम्प्रतं १८३५ संख्याः । परास्ताद्वर्षशतत्रयं कथञ्चिदिव प्रशान्ता रणलीला । अस्मिश्चावसरे चरकसंहितापूरकः सम्बभूव काश्मीरेषु दृढबलाचार्यः । ततो हूणैः काम्बोजीयैश्च पुनर्भारतमाक्रम्य शलभैरिव शतकोटिसंख्यैर्वर्षशतं समारब्धो विप्लवः सुमहान् । हूणाश्च शका एव भिन्नप्रान्तीयाः इति केचित् । तांश्च सर्वान् मालवाधिपो विक्रमादित्यो यशोधर्मदेवाख्यो महता शौर्येण विजित्य शकारिसंज्ञां लेभे, विस्तारयामास च सुमहत् साम्राज्यमुज्जयिनीत आ-हिमाद्रिमूलम् । ततश्च प्रभृति (खीस्तीय ५३३ अब्दतः—सर्वथा विताड़ितेषु शकहूणादिबर्बरेषु सार्द्धचतुःशतवर्षाणि पञ्चशतवर्षाणि वा कथञ्चित् प्रतिष्ठिता शान्तिः । विक्रमादित्यश्चायं कालिदासादिनवरत्नोपासितो विद्याब्धिकर्णधार इति प्रख्याप्यते पुरावृत्तवेदिभिः । सोऽयं सम्वत्सर प्रवर्त्तको विक्रमो न वेति नास्मद्विचार्यम् ।

अत्र च सार्द्धचतुःशतवर्षान्तः पञ्चशतवर्षान्तर्वा विक्रमादित्यवंश्येषु भारतं शासत्सु पुनरपि समुद्भासते स्म म्लानज्योतिरपि भारतीयज्ञानसमृद्धिः । अत्रैव खल्वा... क्रमकाले कालिदासामरसिंह-वररुचि वराहमिहिराद्या... ततश्च परं क्रमेण दण्डि-बाणभट्ट-भवभूत्यादयः के... आर्यभट्ट-ब्रह्मगुप्तादयो ज्योतिर्विदश्च । स च शङ्कराचार्योऽपि खीस्तीयनवमशतके प्रादुर्भूतः ...स्यन्तरीण एव । आयुर्वेदे च एतत्समयान्तरेव प्रा... वाग्भटाचार्यो नाम अष्टाङ्गवैद्यकसंग्रहीता, वृन्दमाध... परे संग्रहकाराः, जेज्जट-गयदास-भास्कर-ब्रह्मदेवाद्या... व्याख्यातारश्च । चक्रपाणिदत्तस्तु वङ्गेषु नयपालनृपतेः... षगासीदिति तदुक्त्या ज्ञायते, नयपालकालश्च ... १०४०—१०६० वर्षाणि । तस्माद् भारतीयविद्या... रभ्युदयकालस्य शेषतः प्रादुरासीद् वैद्यकाचार्यश्चक्र... डल्लनाख्यः सुप्रसिद्धसुश्रुतटीकाकारश्च चक्रपाणेः सम... किञ्चित्पूर्वतनो वा ।

मालवराज्याधिपो नानाशास्त्ररसिकः प्रसिद्धतमः... नरपतिश्च एतत्कालान्ते खृ० १००६ अब्दे स... तिहासिकाः । मालवदेशश्च विन्ध्याद्रिश्रेणिरक्षितो... महम्मदीयाक्रमणविषयस्तदानीम् ।

अथ पुनर्भारतीयानां मन्दभाग्यवशात् प्रवृत्ते ... यानां घोराक्रमणप्रवाहः । तत्राद्यमाक्रमणं महम्... कासिम-कृतं सिन्धुदेशेषु ( खी० ७१२ वर्षे ) श्रूयते ... परं यदा एकादशशतके गान्धारप्रान्तीयाद् गज़नि... गतेन दुर्द्धर्षेण महम्मुदाख्येन पापिष्ठेन बहुसहस्रदुराचा... सहायेन पुनः पुनराक्रम्य लुण्ठिताः सोमनाथ... भारतीयसम्पदः, कुट्टितास्तीर्थस्थानेषु देवमूर्त्तयः, व्या... सहस्रशो ब्राह्मणाः, निर्दग्धाश्च प्रतिदिनं शतशो गृहा... सर्वथा धनजनधर्मरक्षणव्याकुलैः परित्यक्तो नवीनज्ञा... प्रयत्नो लोकैः । न विद्मः—कियन्ति नाम तदा ततः च भस्मीभूतानि लुप्तावशिष्टानि प्राचीनग्रन्थरत्नानि !!

ततोऽनुपदमेव सुघोरकर्मणा घोराख्येन महम्मद... द्रोहिणो जयचन्द्राख्यस्य कान्यकुब्जाधिपस्य सा... समास्कन्द्य पातिता क्षत्रकुलसूर्यस्य देहलीपतेर्महारा... राजस्य राज्यश्रीः (खीस्तीय० ११९१) । देहलीरा...

...तत्कीर्त्तिस्तम्भमन्दिर-भग्नावशेषास्तत्तत्कुकृत्यसाक्षि-...। ततश्च दशवर्षाभ्यन्तरत एव महम्मदीयैर्दुर्वृत्तैर्निर्जिता आर्यावर्त्तभूमिर्मालव-दाक्षिणात्यवर्ज्जम् । मालव-दक्षि-...तु 'अल्तामास्' इत्याख्येनतद्दासपुत्रेण, 'अलाउद्दीन' ...न च तत्परवर्तिना महम्मदीयेन खीस्तीयत्रयोदशशत-...क्रमगम् । तयोश्च कुकृत्यशतैर्भारतदक्षिणार्द्धस्था अपि ...ताया: प्रायेण सर्वा एवाऽयंकीर्त्तयः । उज्जयिनीस्थानि ...मन्दिरादीनि तु—अल्तामास इत्यनेनैव विध्व-...।

...षु तु महम्मदीयाक्रमणाद् दूरतरं स्थितेषु, खीस्तीय-...के वा निदानसंग्रहकार इन्दुकरात्मजो माधवस्ततश्च ...द्वादशशतके चक्रपाणिर्नाम नयपालराजस्य वैद्यवरः ...। ततो द्वादशशतके त्रयोदशशतके वा किञ्चित् ...मुसल्मानाक्रमणे विजयरक्षित—श्रीकण्ठदत्ताभ्यां ...भ्यां पुनरपि किञ्चित् समुद्दीपितं वैद्यकज्योतिः । ...नेके तदानीमप्यासन्ननेके प्राचीनवैद्यकग्रन्था इति ...प्रमाणशतैरनुमीयते । ततश्च हन्त महम्मदीयैः कपट-निर्जिता बङ्गराजलक्ष्मीरपि ।

...त्रयोदशशतकमध्यभागे 'चेङ्गिज्खान्' इत्याख्येन ...नीयमहादस्युना पुनरपि विलुण्ठिता भारतीयाः सम्पद ...मद्रिमध्यदेशपर्यन्तम् । नृशंसाधमेन च तेन बहुलक्ष-...जनानुष्ठितान्यतिघोराणि कुकृत्यानि । ततः परावृत्तेऽपि ...पाठानाख्ये मुगले पुनः पुनः समागतैर्मुगलैः सह पाठान-...नां प्रावर्तत चिराय दारुणा रणलीला बहुजनपदध्वं-...। अन्तरा च 'तैमुरलङ्ग'ाख्यो घोरकर्म्मा मुगलदस्युराजः ...चतुर्द्दशशतकान्ते समापतितो मासद्वयं यावदप्रतिहत-...लक्षशः प्रजा विनिहत्य, प्रज्वाल्य च तद्गृहान् ...च तत्समृद्धीः समग्रमार्यावर्त्तं हाहाकारमयमकरोत् । ...दाक्षिणात्येत्वेवंविधेऽपि समये वीरबुक्को नामाऽभून्महा-...नो नरपतिर्येन विजयनगरराज्यमधितिष्ठता न केवलं ...दाक्षिणात्यराज्यश्रीरेव किन्तु भगवता मत्स्याव-...समुद्धृता व्याख्यापिताश्च वेदाः स्वसभासदः ...माधवादीन् प्रोत्साह्य । शार्ङ्गधरो नाम स्वसंहिताख्य-वैद्यकसंग्रहकारश्च दाक्षिणात्ये एतत्कालाभ्यन्तर एव सम-भूदिति शार्ङ्गधरपद्धत्यां निर्द्दिष्टेन कालेन ( सं० १४२० ) प्रतीयते ।

अथ षोडशशतकारम्भे बाबराख्येन मुगलराजेन विजितेषु पाठानराजकेषु मुगलराज्याधिकारः प्रवृत्ते । ततः कतिपय-वर्षाणि बाबरपुत्रो हुमायूनो दिग्विजयविप्लवं समारेभे, शेरशाह इत्यनेन वङ्गेषु पराजितोऽसौ क्रमादपहृतसिंहासनश्चाभूत् । अन्तरा च मुगल-पाठानानां सुदुर्द्धर्षाणां युध्यमानानां संघर्षेण महानभूत् प्रजाविध्वंसः षोड़शवर्षाणि । ततः षोड़शवर्षान्ते पुनर्मुगलराज्यं प्रतिष्ठाप्य उपरते हुमायूने तत्पुत्रः प्रथितनामा अकब्बरशाहाख्यो नरपतिर्बाहुबलेन सिंहासनमध्यास्य विजित-वान् प्रायः समग्रमपि भारतं वर्षम् ।

ततः सुप्रतिष्ठितायां शान्तौ नानाविद्यारसिकोऽसौ नरपतिर्बहुधा समाहृत्य भारतीयान् विदुषः शास्त्राणि च, "दिल्लीश्वरो वा जगदीश्वरो वेति" महतीं यशोगाथामर्ज्ज-याञ्चकार । ईदृशे च समयेऽभूवन् तानसेनाद्या भारतीयसङ्गीता-चार्याः, टोडरमल्लाद्या राजनीतिकोविदाः, अपरे च केचिन्ना-नाशास्त्ररसिका विद्वांसः । अस्मिन्नेव च काले षोड़शशत-कपरार्द्धे वा कान्यकुब्जेषु प्रादुर्बभूव भावमिश्राख्यः प्रसिद्धवैद्यकसंग्रहकारः ।

ततोऽकब्बरशाहानन्तरं तत्पुत्रे जहाङ्गीरबादशाहे राज्यं भुक्त्वा उपरते जहाङ्गीरपुत्रो शाहजहान् नरपतिर्भारतसाम्राज्यं बुभुजे । स चासौ देहलीदुर्ग-ताजमहलादिनिरमापयत् स्थाप-त्यादिनानाकलाप्रियः सुप्रसिद्धकीर्तिरद्यापि । तद्राज्यकाले च भट्टोजिदीक्षित-जगन्नाथपण्डितराजादीनां, समनन्तरञ्च नागेशभट्टादीनां प्रादुर्भाव इत्यैतिहासिकाः ।

ततः अवरङ्गजेबनामा शाहजहानस्य कनिष्ठपुत्रः कपटशतेन स्थविरं पितरमवरुध्य भ्रातॄंश्च हत्वा राज्यमधिचक्रमे । ततश्च पुनः प्रावर्त्तत यतस्ततः सुमहानार्य्यकीर्तिध्वंससंरम्भः । तेन हि 'हिन्दु'नाम द्वेषिणा विनाऽपि क्रोधकारणं शतशश्चूर्णी-कृतानि देवमन्दिराणि, निर्दग्धा सहस्रशो ग्रन्थराशयः व्यापादिताश्च बहुशः स्वधर्म्मनिष्ठाः प्रजा नानाविधमिषश-तेन । एवञ्च भूयः कथञ्चिदुज्जीवितप्रायाऽपि शोच्यां दशा-

माजगाम पुनरपि भारतीया विद्यासमृद्धिः। आयुर्वेदश्च यावनवैद्यैर्हतसर्वस्वस्ततः प्रभृति कथञ्चित् प्राणिति स्म।

सोऽयमायुर्वेदस्य,—अथवा समस्तभारतीयविज्ञानदिनकरस्य—अपराह्णकालः, नूनं वा सन्ध्यारम्भ एव। तादृशे च काले प्राचीनविज्ञानारुणरागसंग्रहणपरा एवाभूवन्नाचार्य्या इत्यपि भागधेयमेव भारतस्य। नवीनविज्ञानाविष्करणी तु प्रतिभा न समुन्मिमेष तादृश्यराज्यविप्लवैकार्णवीभूते भारते इति किमत्र विस्मयपदं नाम?

एवंविधे च काले महाराष्ट्रवीरैः शिवाजीप्रमुखैः पुनरपि धर्म्मसाम्राज्यस्थापनाय समारब्धः सुमहान् प्रयत्नो लब्धश्च कथञ्चित् साफल्यमपीति चिराय स्मरणार्हम्। परं तत्परवर्त्तिभिर्महाराष्ट्रराजकैः परस्परं विवदमानैः प्रकामं विलुण्ठनपरैश्च निर्मूलिता स्वल्पेनैव कालेन महाराष्ट्रसाम्राज्यस्थापनस्याऽऽशा-लता। तथापि पुण्यश्लोकानां शिवाजी-राजारामादीनां सुकृतप्रभावादद्यापि इन्दौर-बड़ौदा-ग्वालियरादिराज्येषु सावशेषं महाराष्ट्रज्योतिरिति महदिदं हर्षस्थानं भारतीयानाम्।

अथ दुर्व्विषहपापभाराक्रान्ते मुगलसाम्राज्ये, अवरङ्गजेवराज्यावसाने (खी० १७०७) अतिदुर्बलप्रभावेषु तत्पुत्रपौत्रादिषु पुनरपि 'नादिरशाह' इत्याख्येन महादस्युना नवधा देहलीराजधानीमाक्रम्य महती संहारलीला प्रवर्त्तिता (खी० १७३९)। ततश्च पुनर्नववर्षान्ते 'अहमदशाह अवदली'—इत्याख्येन दुर्द्धषदस्युना चतुर्द्धा विलुण्ठितानि देहलीमथुराद्यानि नगराणि, अनुष्ठितानि च पुनःपुनस्तानि तानि गृहदाहादिकुकृत्यानि।

ततः सदयहृदयेन वेधसा एतावतीभिरत्याचारपरम्पराभिरपि अविनश्यन्तीमिव भारतीयविद्यासमृद्धिमाकलयता तद्रक्षणाय सम्प्रेषिता उदारहृदयाः श्वेतद्वीपपुरुषा ब्रिटिशनामानः। तैश्च वाणिज्यार्थमागतैरपि भारतीयप्रजानां दुर्दशाविमोचनार्थमिव क्रमात् वङ्गेषु च दाक्षिणात्ये च राज्यभित्तयो निर्म्मिताः, स्थापितञ्च वर्षशतेन बहुरक्तपातं विनैव सुमहत् साम्राज्यमखिलभारतव्यापि। ततः (खी० १८५७ वर्षे) प्राप्तेऽपि सैनिकविद्रोहकृते विप्लवे सुगलुब्धेव राज्यश्रीर्न मुमोच तेषामेवाङ्कारोहणसुखम्। ततः प्रभृति क्रमात् सुप्रतिष्ठायां शान्तौ सुरक्षिते च प्रजालोके, [illegible] मादीप्यते भारतीयं ज्ञानज्योतिः। न च स्वयं [illegible] ज्ञानाधिकारिणोऽपि प्रकामं नोत्साहयन्ति राजपुरुषाः [illegible] सर्वा अपि भारतीया विद्याः—इति सर्व्वथा धन्य[illegible] एते भारतीयानाम्।

सोऽयमेतावानतिदारुणोऽपि सम्प्रति प्राप्तावधि[illegible] विद्यायाः (प्रत्युत सर्वार्यविद्यानां) ध्वंससमयः। अ[illegible] मेतत्कालान्तः प्रादुर्भूतानां वैद्यकाचार्य्याणां का[illegible] हेतवः केचिदुपन्यस्यन्ते प्रसङ्गात् संक्षेपेण।

तत्र चरकदृढबलयोः कालो निर्णीतपूर्वः। वा[illegible] दृढबलस्यावरज एव न पूर्वजः, इति निश्चयोऽस्मा[illegible] यतो वाग्भटेन अष्टाङ्गसंग्रहशेषे दृढबलीयकल्प[illegible] गद्यमयेन वचसाऽनूदितं, अष्टाङ्गहृदये "ऋषिप्रणीते प्री[illegible] दित्यादिवचनेन स्पष्टं लक्षितञ्च दृढबलकृतं चरकापूरणम्।

सुश्रुतसंहितायाः प्रतिसंस्कारस्तु चरकसंहिता[illegible] दनन्तरजः प्रतिभाति। दृश्यन्ते ह्यत्र बहुधा च[illegible] पाठाः, विशयसन्निवेशक्रमश्च साधीयान्। तत्र दि[illegible] मुदाह्रियते—

चरके—"सूक्ष्माणि हि दोष-भेषज-देश-काल[illegible] शरीराहार-सात्म्य-सत्व-प्रकृति-वयसामवस्थान्तराणि [illegible] नुचिन्त्यमानानि विमलविपुलबुद्धेरपि बुद्धिमाकुलीकुर्य्[illegible] पुनरल्पबुद्धेः।" (च० सूत्र० १९ अ०) इति। [illegible] "सूक्ष्मा हि द्रव्य-रस-गुण-वीर्य-विपाक-दोष-धातु म[illegible] मर्म-शिरा-स्नायु-सन्ध्यस्थिगर्भसम्भवद्रव्यसमूहविभागाः [illegible] * * ये विचिन्त्यमाना विमलविपुलबुद्धेरपि बु[illegible] कुलीकुर्युः किं पुनरल्पबुद्धेः। (सु० सूत्र० ४ अ०) इ[illegible] पुनः सुश्रुते कासाधिकारे—"अतिव्यवायभाराध्व[illegible] गजविग्रहै" रित्यारभ्य "कुपिताः क्षयजं कासं कुर्युः[illegible] प्रदम्"—इत्यन्तः सन्दर्भः (सु० उत्तर० ५२ [illegible]) चरकीयकासाधिकाराद् गृहीतः (च० चिकि० १८ अ[illegible]) चरकी[illegible] सुश्रुतीय ऋतुचर्याध्यायश्च (सु० सू० ६ अ०) [illegible] विभागानुवादपुरःसरमारब्धः। सुश्रुतप्रतिसंस्कर्त्ता [illegible] माध्यमिकाचार्य्यो नागार्ज्जुनो भवितुमर्हति तन्नाम्ना [illegible]

र्यस्य चरकसमकालीनत्वात् । न हि समकालीना र्याणां वचांसि यथावद् गृह्यन्ते प्रसिद्धैराचार्य्यैः न्नामग्रहणम् । अथासौ कश्चनान्यो बौद्धचार्य्यो ल्यः स्वीक्रियते तदवरजः सुश्रुतप्रतिसंस्कर्त्तेति, —का क्षतिः ?

वाग्भटकालनिर्णये त्रयो हेतव उपलभ्यन्ते । सिङ्गाख्येन चैनिकपरिव्राजककृतः "अष्टाङ्गवैद्यक-लीनाचार्य्यैः" इत्यादिनिर्देशो दर्शितपूर्वः प्रथमो खीस्तीयपञ्चमशतकारम्भे वाग्भटकालोऽस्माभिः । अथ चक्रपाणिडल्लनादिभिः प्रायो वर्षसहस्रपुराणै-ग्भटपाठोद्धारो द्वितीयो हेतुर्येन तत्कालादपि (अन्यूनपञ्चशतवर्षप्राक्तनः) सम्भाव्यते वाग्भट-महम्मद-विन्-कासिमकृतं (खीस्तीयाष्टमशतकारम्भे) क्रमणं तृतीयो हेतुर्येन तत्पूर्वतन एव स्यात् वाग्भट इति प्रतीतिः । न हि तदारभ्य प्रवृत्ते विप्लवे कथमपि अष्टाङ्गसंग्रहाष्टाङ्गहृदयाख्ययोर्महा-निर्माणं सम्भवति नाम । यत्तु अष्टाङ्गसंग्रहकारो अष्टाङ्गहृदयकाराद् वाग्भटाद् भिन्न इति कस्यचित् विदुषो मतम् तत् सर्वथा निर्मूलमतिविस्मयकरञ्च ग्रन्थद्वयस्य सर्वत्रैव भाषासादृश्यात्, क्वचिदपि पादर्शनाच्च । वाग्भटेन हि महान्तं ग्रन्थमष्टाङ्गसंग्र-विरच्य तत्संक्षेपो "हृदयमिव हृदयमेतत्" निरमायीति भिहितं तेन सुस्पष्टया गिरा ग्रन्थसमासौ

रत्नसमुच्चय' कारो वाग्भटस्तुबहुपरतनः कश्चन चार्य्यस्तुल्यनामा । यतः समुद्रवद् गम्भीरे ऽपि न लभ्यते रसतन्त्रोक्तविषयाणां रससंस्कारा-ऽपि, लभ्यन्ते च समुच्चये प्राचीनवाग्भटापेक्षया जानां सोमदेव-गोविन्दभगवत्पादादीनाँ ग्रन्थेभ्यः । तत्र सोमदेवग्रन्थात् समग्रं रसपरिभाषाप्रकरणं रत्नसमुच्चये (र० र० स० ९ अ०) । गोविन्द-कृताद् रसहृदयतन्त्रात्तु गृहीतानि—"सुकृतफलं " इत्यादीनि "भ्रूयुगमध्यगतं यत्"—इत्यादीनि चित् पद्यानि । गोविन्दभगवत्पादाश्च भगवतः शङ्कराचार्य्यस्य गुरव इति प्रसिद्धा एव नान्ये इति सुप्रतिपा-दितं विद्वद्वरैः श्रीमद् गुरुनाथ त्र्यम्बक काले इत्येतैः रसहृ-दयोपोद्धाते । न च शंकनं-कथं तर्हि "सूनुना सिंहगुप्तस्ये"ति रसरत्नसमुच्चयादौ परिचय इति, यतो बहुषु हस्तलिखितग्रन्थेषु "सूनुना सङ्घगुप्तस्ये" त्येव पाठः साधीयान् दृश्यते । तेन "सिंहगुप्तस्ये"ति पाठः कस्यचित् पण्डितम्मन्यस्य संशोधन-प्रसूतो मन्तव्यः । असौ च रसतान्त्रिको वाग्भटः खीस्तीय-त्रयोदशशतके प्रादुरासीदिति डा० प्रफुल्लचन्द्ररायस्य मतं युक्तियुक्तमेव ।

अथ माधवकरो नाम प्रसिद्धवैद्याचार्यो निदानकार इन्दुकरात्मजो वङ्गेषु प्रादुरासीदिति सुप्रथिता किंवदन्ती । कर इत्युपाधिश्चास्य वङ्गीयतां स्फुटं व्यनक्ति । स च वाग्भटादवरजः, निदाने "निदानं पूर्वरूपाणि"—इत्यादि "तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम्"—इत्यन्तस्य समग्रसन्दर्भस्यान्येषाञ्च वाग्भटपद्यानां बहुधा ग्रहणात् । वृन्दचक्रपाण्योः पूर्वजश्च सः, ताभ्यां स्व-स्व-चिकित्सासंग्रहयोः "गदविनिश्चयो" क्तक्रमेण चिकित्सोपदेशात् । चक्रपाणिश्च खीस्तीयैकादशशतकमध्यभागे वङ्गभूमिमलञ्चकारेति सहेतु-कमवोचाम, स च वृन्दकृत-"सिद्धयोगा" ख्यग्रन्थमुपजीव्य स्वकीयं चिकित्सासंग्रहं रचयाम्बभूवेति तदुक्त्या चक्रपाणे-रन्यूनवर्षशतद्वयेन प्राक्तनः स्याद् वृन्दः । तेनासौ वृन्दाचार्य्यो नवमशतकेऽभूदिति उन्नीयते । माधवश्च तत्पूर्वजः खीस्तीय-सप्तमशतके सम्भूवेति सम्भाव्यते । इतश्च अष्टमशतके "हरूण उल् रसीद" समये माधवीयनिदानस्य पारस्यभाषानुवादोऽ-भूदित्यैतिहासिकवार्त्तयाऽपि तत्पूर्वज एव माधवः पर्य्य-वस्यति । तस्माद् वाग्भटपरवर्त्तित्वाच्च सप्तमशतके किञ्चित्-पूर्वं वा माधवप्रादुर्भावः सिध्यति । माधवकरश्चासौ रुग्विनिश्चयाख्यनिदानग्रन्थप्रणेता रत्नमालाख्यद्रव्यगुणकार-श्चेति प्रसिद्धिः । डल्लनादिनिर्दिष्टः सुश्रुतटिप्पणकारः श्रीमाधवस्तु भिन्न एवस्यात् इति प्रतिभाति, तस्य कुत्रापि माधवकर इति निर्देशादर्शनात् ।

सायणापरनामा वेदभाष्यकृन्माधवाचार्य्यस्तु माधवकरात् सर्वथा भिन्नः पूर्वोक्तहेतोः, वर्षपञ्चशत्या तदवरजश्चेति तयोरभेदः कथमपि न शङ्कनीयः ।

डल्लनो नाम सुप्रसिद्धः सुश्रुतव्याख्याता तु चक्रपाणेः समकालीनः समीपकालीनो वेति शक्यं निश्चयेन वक्तुम्, यतोऽसौ सहनपालदेवनृपतेर्बल्लभमात्मानं ख्यापयामास । पालनरपतयः खल्विह भारते खीस्तीयदशमैकादशशतकयोरेव मगधेषु गौड़ेष्वन्यत्र च प्रादुर्बभूवुः । तत्र नयपालनृपतेर्गौड़ाधिपस्य वैद्योऽभू चक्रपाणिरिति तदुक्त्या ज्ञायते, तत्पूर्वजस्य "पाल" वंशीयनृपस्य नृपद्वयस्य वा नाम न सम्यङ्निरुपितमद्यापि तदूर्ध्वाधस्तनास्तु नारायणपालादयो नरपतयः सुविदितनामान इतिहासविदाम् । तदभ्यर्णकालजाश्च 'गया'-'भागलपुरा' दिस्थानेषु कृतराज्या गोविन्दपालदेव-मदनपालदेवाख्या भूपतयः "पालदेवा"न्तसंज्ञा इत्यपि सम्प्रत्येवाऽऽविष्कृतं ताम्रशासनाद्युट्टङ्कनेन । तस्मादुच्यते चक्रपाणेः समकालीनः समीपकालीनो वाऽभूड्डल्लन इति । डल्लन-चक्रपाणिभ्याञ्च लभ्यमानसुश्रुतटीकयोस्तत्प्रणीतयोः क्वचिदपि परस्परस्य नाम न गृहीतं, गृहीतानि तु डल्लनेन जेज्जट-गयदासब्रह्मदेवादीनां नामानि । तस्मादितोऽपि तयोः परस्परप्रतिद्वन्द्विता शङ्क्यते । तदेवं खीस्तीयदशशतकशेषार्द्धे एकादशशतकपूर्वार्द्धे वा समभूद् डल्लन इति नः प्रत्ययः ।

चक्रपाणिकालश्च खीस्तीयैकादशशतकमध्यभाग इति सर्व्ववादिसम्मतः सिद्धान्तः पूर्वोक्तहेतुः ।

विजयरक्षितस्तु निदानटीकासुखे चक्रपाणिनामतो निर्दिदेश, श्रीकण्ठश्च तच्छिष्य एव । कालश्चानयोस्त्रयोदशशतकस्य द्वितीयः पादः, आतङ्कदर्पणाख्य-निदानटीकाकृता वाचस्पतिना त्रयोदशशतकमध्यजेन तन्निर्देशात । कृतश्च विजयरक्षितेन योगरत्नमालाकारस्य गुणाकरस्य मतोद्धारः । योगरत्नमालाकार कालश्च त्रयोदशशतकस्याद्यः पादः,—इत्यपि हेतोः स एव निश्चयः । तदेतत् सर्वं साधु निर्णीतं डा० हर्नलि इत्याख्येन पाश्चात्यविदुषा ।

अरुणदत्ताख्यः प्रसिद्धवाग्भटटीकाकारस्तु त्रयोदशशतकस्य प्रथमे पादे समभूदित्यपि तदुक्त एव निर्णयः ।

शार्ङ्गधरसंहितादिग्रन्थकारः शार्ङ्गधरस्तु चतुर्दशशतकस्य प्रथमार्द्धे प्रादुरासीदिति शार्ङ्गधरपद्धतिप्रस्तावनायां लिखितेन परिचयेन समुन्नेयम् ।

शिवदाससेनो नाम चक्रसंग्रहस्य चरकसंहि[…] प्रसिद्धटीकाकारस्तु अरुणदत्त-श्रीकण्ठदत्तयोरर्वाचीनः, […] वनीपालाश्रितभिषग्वरस्य सुतः, इति कृत्वा व[…] वैद्यब्राह्मणः पञ्चदशशकीयश्च प्रतीयते । गौड़ावनीपाल[…] महम्मदीय एव स्यादिति तत्प्रदत्तपरिचयभङ्ग्या ऐति[…] विचारेण च समुन्नेयम् ।

भावमिश्रस्तु शाङ्र्गधरवङ्गसेनयोरवरजः कान्यकुब्ज[…] इत्यत्र नास्ति संशयः, यतोऽसावनयोः पाठानुद्धरति स्व[…] भावप्रकाशाख्ये, निर्दिशति च परिचयं स्वकीयं तत्र[…] किञ्च तत्र फिरङ्गरोगस्य वर्णनात् षोड़शशतकस्य प्रथम[…] दर्वाचीनोऽसौ निश्चीयते । फिरङ्गरोगो हि प्रथमं पोर्तु[…] ख्यफिरङ्गीयैस्तस्मिन्नेव काले स्वाङ्गसम्पर्केण भारतीय[…] ङ्गनासु प्रसारितः--इति सुप्रथितेयं वार्त्ता । चोपचीन[…] फेनादीनां गुणाख्यानञ्चास्य नवीनतां व्यनक्ति ।

वङ्गसेनस्तु शाङ्र्गधरभावमिश्रयोर्मध्यस्थे समये स[…] स च वङ्गदेशीय एव संग्राहकारः सेनोपाधिश्चास्य […] वैद्यब्राह्मणतां तत्संग्राहस्तु जीर्णप्रतिसंस्कृता अगस्त्[…] वेति स स्वयमेवाह । त एते वैद्यकापराह्नकाल[…] अतिप्रसिद्धवैद्यकाचार्य्याः यैः खल्विह संग्रहैकव्रतैः स[…] परमयत्नेन हीयमानदीप्तेरायुर्वेदभास्करस्य ज्योतिरु[…] राज्यविप्लवसमये च तावदेवाभूत् पर्य्याप्तमित्यस्मा[…] स्वीकरणीयं बुद्धिमता । तथाप्यत्र सर्व्वथा विलुप्तप्राया[…] केवलमसंख्येयप्रायाणि प्राचीनार्षतन्त्राणि किन्तु […] चिकित्सावर्जं सर्वाण्यप्यायुर्वेदाङ्गानीति सशोकं स्म[…] नाम । किञ्चात्र कथं कथमपि ध्रियमाणस्यास्य कायचिकि[…] ङ्गमात्रस्यापि प्रधानपूर्वाङ्गम्—शारीरविद्या वनौषधि[…] चेति विद्याद्वयं विलुप्तप्रायमेव । तत्राप्याद्या शारीरवि[…] साम्प्रतमशरीरिण्येव प्रायः संवृत्तेति हन्त को नाम […] नात्र दीर्घं निःश्वसिति ? कश्च वा इदानीं समर्थः […] सुप्रतिष्ठितशान्तिके देशे विद्योत्साहिषु च महानुभाव[…] पुनरपि समग्रभारतशरण्यमिदमायुर्वेदशास्त्रं तया संजी[…] न प्रयतेत, विषहेत वा दुर्दैवहतकप्रापितामायुर्वेदस्या[…] परैर्विहस्यमानाम् ?

## पण्डितेभ्यः प्रार्थनम् ।

…सेयाः सुधियः स्वधर्मा-
वने करिष्यन्ति न चेत्प्रयत्नम् ।
…तर्हि सुनीतिरीतिः
पातालमूलं खलु यास्यतीह ॥ १ ॥

…ऽयं सुखदः स्वधर्मो
ह्रासं व्रजत्याकुलतामुपेत्य ।
…सेयः समुपेक्षते तं
विद्वद्व्रजो हा किमिदं न दुःखम् ॥ २ ॥

…तो वृद्धतमो वृषोऽयं
त्रिभिर्विलूनैर्विकलः पदैर्हा ।
…सेयैः समुपेक्ष्यते चेद्
बुधैस्तदा काऽस्य गतिर्भवित्री ॥ ३ ॥

…यैर्बहु हन्यमान-
स्तथेशवीयैर्विनिपात्यमानः ।
…कैश्चित्परिपीड्यमानो
वृद्धो वृषः कं शरणं श्रयेत ॥ ४ ॥

…सेयान्विदुषः शरण्यान्
समाश्रितो वृद्धतमो विपन्नः ।
…नः संप्रति धर्म एष
स्वं जीवनं नो विजहाति नूनम् ॥ ५ ॥

…नं धर्ममिमं निषेव्य
वाराणसेया विबुधाः प्रतिष्ठाम् ।
…लभन्ते यदि तर्हि किन्तैः
सर्वात्मनाऽयं न सुरक्षणीयः ॥ ६ ॥

म० म० देवीप्रसाद शुक्लः कविचक्रवर्ती

## स्थानासनाभ्यां विहरेत् ।

लेखक—श्रीगङ्गानाथ झा शर्म्मा, एम० ए०, डी० लिट्०
महामहोपाध्यायः ।
[ वाइस चान्सलर—प्रयाग—विश्वविद्यालय ] ।

समुद्रयात्राविचारप्रकरणे बौधायनीये धर्म सूत्रे उपलब्धमेतद्वाक्यम्—'समुद्रसंयानम्…… एषामन्यतमत् कृत्वा चतुर्थकालामितभोजिनः स्युरपोऽभ्यपेयुः सवनानुकल्पम् । स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैस्तदपहन्ति पापम् ' इति । ( २ । १ । ४१ ) ।

समुद्रयातुः प्रायश्चित्तमत्रोच्यत इति स्पष्टम् । परन्तु 'स्थानासनाभ्यां विहरन्तः' इत्यस्य कोऽर्थः । वर्षत्रयपर्यन्तं स्थानसनाभ्यामवस्थानं सर्वथाऽसम्भवम् । असम्भवं च प्रायश्चित्तं न कुत्रापि शास्त्रकारैरुपदिष्टम्—इत्येवं सन्दिहानेन मया ग्रन्थान्तरेषु स्थानासनविहारस्य तात्पर्यगवेषणा कृता । समुपलब्धश्चैतादृशः प्रयोगः कतिपयग्रन्थेषु ।

( १ ) पद्मपुराणे वानप्रस्थधर्मप्रकरणे—'स्थानासनाभ्यां विहरेत न क्वचिद् धैर्यमुत्सृजेत्' इति ( आदिखण्डे ५८ । २६ ) ।

( २ ) याज्ञवल्क्यस्मृतौ ( ३ । ५१ )—' स्थानासनविहारैर्वा योगाभ्यासेन वा तथा ( दिनं नयेत् ) ' इति ।



अत्र मिताक्षरा—

'स्थानासनरूपैः विहारैः । कश्चित्कालं स्थानं कश्चित्कालमुपवेशनमित्येवं दिननयेत्'—इति ।

मनुस्मृतौ—

( २ । २४८ )—'एतेष्वविद्यमानेषु स्थानासनविहारवान्' इति ।

तत्र मेधातिथिः—

स्थानासन एव विहारः तद्वान् । कदाचित् तिष्ठेत् कदाचिदासीत-एवं विहरेत् । अन्ये तु मन्यन्ते-स्थानाय स्वस्तिकादिना यदासनं ध्यानकाले तत् 'स्थानासनं,' विहारोऽन्यो भिक्षाचरणादिः इति ।

सर्वज्ञनारायणस्तु—

'स्थानम्' ऊर्ध्वावस्थानं नियतं, 'आसनं' उपवेशनं नियमेन, 'विहारो' भ्रमणम्—इत्येतैस्तयो विशेषग्रहणम् ।

( ४ ) पुनर्मनुस्मृतौ—

( ६ । २२ )—'स्थानासनाभ्यां विहरेत्' इति । तत्र मेधातिथिः—'स्थानासनाभ्यां' दिने, रात्रौ तु केवलस्थण्डिलशायितां वक्ष्यति—इति ।

( ५ ) पुनर्मनुस्मृतौ—

( ११ । २२४ )—'स्थानासनाभ्यां विहरेदशक्तोऽधः शयीत वा' इति ।

तत्र मेधातिथिः—

उत्थित आसीन उपविष्टोऽथवा न क्वचिन्निषीदेत् । अशक्तौ अधः शयीत, न पर्यङ्के इति ।

( ६ ) मनुस्मृति द्वितीयाध्यायगत १०२-१०३ श्लोकावधिकृत्य मेधातिथिनोक्तम्—

अत्र स्थानासने एवोपात्ते इति । श्लोकाविति पूर्वां सन्ध्यां जपंस्तिष्ठन् नैशमेनो व्यपोहति पश्चिमां तु समासीनो मलं हन्ति दिवाकृतम् न तिष्ठति तु यः पूर्वां नोपास्ते यस्तु पश्चिमां स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मणः

अस्माच्च सन्दर्भाज्ज्ञायते यत् स्थानासन गतं स्थानं 'प्रातस्सन्ध्याङ्गजपपरम्' 'आसनं सायं सन्ध्याङ्गजपपरमिति ।

गौतमीये धर्मसूत्रे—

( २६ । १ । ६ )—'अथातः कृच्छ्रान् व्याख्या ............... तिष्ठेदहनि रात्रावासीत'—इति भाष्यम्—'भोजनाद्यविरुद्धेषु कालेषु अहनि रात्रावासीत । एवं च निद्राया अवश्यम्भा आसीन एव निद्रां सेवेत—इति ।

( ८ ) विष्णुधर्मसूत्रे—

( ४६ । १ । ४ )—'कृच्छ्राणि भवन्ति । दिव तस्तिष्ठेत् रात्रावासीनः । कर्मणोऽन्ते प दद्यात्,—इति ।

( ९ ) वशिष्ठधर्मसूत्रे—

( २५ । ५ )—'व्रतरूपाणि ··· स्थानास इति । तत्र टीकाकारः—'स्थान एव आसनं तिः यस्य स वृथा भ्रमणवर्जीत्यर्थः' इति ।

एतेषां वाक्यानां पर्यालोचनया स्थित बौधायनोक्तं प्रायश्चित्तं कृच्छ्रव्रतरूपमेव स्था पदेन विवक्षितमिति ।



१. परमगुरवः श्रीराजारामशास्त्रिमहोदयाः



२. महामहोपाध्याय-श्रीबालशास्त्रिमहोदयाः



३. श्रीमदाचार्य-दामोदरलाल गोस्वामिमहोदयाः



४. महामहोपाध्याय-डा० गङ्गानाथझा-महोदयाः

# विवाहसम्बन्धे विचारः ।

लेखकः—
...महामान्यो श्रीमदनमोहन मालवीय महोदयः

स[र्व]प्रदेशीयानां ब्राह्मणानां क्षत्रियाणां वैश्यानां च स्वसमानजातीयैः प्रदेशान्तरीयैः सहोद्वाहसम्बन्धः शास्त्रमर्य्यादामतिवर्त्तते-ऽनुवर्त्तते वेति विचारे सवर्णाविवाहः सर्वासु स्मृतिषु प्रशस्तत्वेन कीर्त्तितः । तथाहि ...न्द्रिकायां संस्कारकाण्डे कन्यालक्षणप्रकरणे—" साच (...था च) सवर्णैव ग्राह्या । यदाह व्यासः—

...परमुद्वहेत्कन्यां सवर्णां लक्षणान्विताम् ।
...न "सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि ।"

मिताक्षरायामाचाराध्याये विवाहप्रस्तावेऽपि "सवर्णः ...वाः (याज्ञवल्क्यस्मृतौ १. ९९) इत्यनेन ...मुख्या दर्शिता" इति । "सवर्णा पुनः सर्वेषां ...स्थितैव" इति च वर्णितम् ।

...वर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि ' इति मनुव... "सवर्णा समानजातीयेति" मेधातिथिव्याख्यानम् । ...कूकेनापि " ब्राह्मणक्षत्रियवैश्यानां प्रथमे ...हे कर्त्तव्ये सवर्णा श्रेष्ठा भवतीति " व्याख्यातम् ।

...ज्ञवल्क्यस्मृतावाचाराध्याये ९७ तमश्लोकव्याख्या-...कैः "सवर्णा पुनश्चतुर्थी मुख्या स्थितैवेति" ...यः सुस्पष्टमाविष्कृतः । अत्र सवर्णायाश्चतुर्थीत्वं ...सवर्णभार्य्याया अप्यभ्यनुज्ञातत्वेन तदपेक्षया ...म् ।

माधवाचार्य्येण पराशरभाष्ये आचारकाण्डे लिखितम्—

"उद्वहनीया कन्या द्विविधा । सवर्णा चाऽसवर्णा च । तयोराद्या प्रशस्ता । तदाह मनुः—

सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्मणि ।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः ॥ इति ।

अग्रे स्नातकस्य प्रथमविवाहे । दारकर्मणि अग्निहोत्रादौ धर्मे । सवर्णा वर्णेन समानो वर्णो ब्राह्मणादिर्यस्याः सा । यथा ब्राह्मणस्य ब्राह्मणी, क्षत्रियस्य क्षत्रिया, वैश्यस्य वैश्या, प्रशस्ता । धर्मार्थमादौ सवर्णामुद्वाह्य पश्चाद्रिरंसवश्चेत्तदा तेषामवराः हीनवर्णाः इमाः क्षत्रियाद्याः क्रमेण भार्य्याः स्मृताः । तथा च याज्ञवल्क्यः—

तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् ।
ब्राह्मणक्षत्रियविशां भार्य्या स्वा शूद्रजन्मनः ॥ इति ॥

मनुरपि

शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशः स्मृते ।
ते च स्वा चैव राज्ञः स्युः ताश्च स्वा चाग्रजन्मनः । इति ।

युगभेदेन व्यवस्था च स्मृत्यन्तरे स्पष्टीकृता—

असवर्णासु कन्यासु विवाहश्च द्विजातिभिः । इत्यादि-क्रमनुक्रम्य "कलौ युगे त्विमान् धर्मान् वर्ज्यानाहुर्मनीषिणः । इत्युपसंहारात् ।" इति ।

एवं च कलियुगे असवर्णायाः पाणिग्रहणं प्रतिषिद्धम् तथा सवर्णाया विवाहो नित्यत्वेन सर्वथा निर्वाह्यः । सर्वप्रदेशीयाश्च ब्राह्मणाः परस्परं समानवर्णास्तेषु विभिन्न-प्रदेशीयेभ्योऽपि सजातीयेभ्यः कन्याया दानं प्रतिग्रहश्च न शास्त्रविरुद्ध इति पर्य्यवस्यति ।

ननु

भार्य्याः सजात्याः सर्वेषां धर्मः प्राथमकल्पिकः ।

इति वीरमित्रोदयस्थयमवचनेन समानजातीया एव विवाह्या इति प्रतीयते ।

सारस्वताः कान्यकुब्जा गौडमैथिलकोत्कलाः ।
पञ्च गौडा इति ख्याता विन्ध्यस्योत्तरवासिनः ॥

कर्णाटाश्चैव तैलङ्गा गुर्जरा राष्ट्रवासिनः ।
अन्ध्राश्च द्राविडाः पञ्च विन्ध्यदक्षिणवासिनः ॥

इति आनन्दभट्टकृतवल्लालचरिते शब्दकल्पद्रुमे वाचस्पत्ये च समुद्धृतायां स्कन्दपुराणीयवचनाभ्यां सारस्वतत्वादयो ब्राह्मणत्वावान्तरजातयः । यथा गोपत्वादयः शूद्रत्वावान्तर जातय इति प्रतिभाति । एवं सति यथा गोपनापितयोः समानेऽपि शूद्रत्वे अवान्तरजातिभेदात् परस्परमुद्वाहसम्बन्धो न भवति तथा सारस्वतकान्यकुब्जादीनामपि ब्राह्मणत्वे समानेऽपि परस्परमवान्तरजातिभेदादुद्वाहो नैव भवितुमर्हति । इदानीन्तनानां शिष्टानां व्यवहारोऽपि तादृशो दृश्यत इति चेत् ।

अत्र समाधीयते—

गोपनापितादीनां सत्यपि समाने शूद्रत्वे जन्मकर्मभ्यामवान्तरजातिभेदः शास्त्रमर्यादयाऽवगम्यते । तथाच पराशरः—

शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः ।
संस्कारात्तु भवेद्दासः असंस्कारात्तु नापितः ॥
क्षत्रियात् शूद्रकन्यायां समुत्पन्नस्तु यः सुतः ।
स गोपाल इति ज्ञेयः । इति—

( प० स्मृ० प्र० का० ११, २२—२३ )

याज्ञवल्क्याचाराध्याये १, १६६ तमश्लोकव्याख्यानावसरे मिताक्षरायामप्युक्तम् ।

"गोपालो गवां पालनेन यो जीवति । नापितो गृहव्यापारकारयिता ।" इति ।

सारस्वतकान्यकुब्जादीनां ब्राह्मणानां पुनः सरस्वतीतटादिदेशविशेषवासनिबन्धनः संज्ञाविशेषो नतु वास्तवजातिभेदप्रयोजको जन्मकर्मभेदोऽस्ति । सर्वदेशीयानामेव ब्राह्मणानां वात्स्यगौतमवसिष्ठभरद्वाजप्रभृतय ऋषयो वंशप्रवर्त्तकाः समाना एव । तेषां संस्काराश्च समानाः कर्म्माण्यपि यजना[illegible]दीनि शास्त्रविहितानि समानानि । एवं च सारस्[illegible] तेषां पूर्वजानां जन्मदेशद्योतकसंज्ञाभेद एव नावान्त[illegible] भेद इति पर्य्यवसितम् । तथाच सर्वदेशीयानां ब्राह्म[illegible] भिन्नदेशीयैः सजातीयैः स्वान्तर्गणाप्रविष्टैः ब्राह्मणोचि[illegible] चारसंपन्नैः सारस्वतकान्यकुब्जादिभिः शास्त्रोक्तसमा[illegible] प्रवरादिवर्जनपुरःसरं परस्परं विवाहसम्बन्धः सर्वथा [illegible] शास्त्रानुमोदित एवेति प्रतिभाति । कालविपर्ययराज्यवि[illegible] जन्यदोषैर्पीडिताः द्विजाः स्वल्पकालेन विभिन्नप्रदे[illegible] प्रयोजकानां यानादीनामभावेन च दूरदेशेषु [illegible] नाचरन्ति स्म । तदनुसारेण गतानुगतिकन्यायेनाधु[illegible] अपि सारस्वतकान्यकुब्जादयो ब्राह्मणाः परस्परं परिणय[illegible]न्धं नैव कुर्वन्तीति न तेन—

"स्नात्वा समुद्वहेत्कन्यां सवर्णां लक्षणान्विता[illegible]
"उद्वहेत द्विजो भार्य्यां सवर्णां लक्षणान्विता[illegible]

इत्यादि विधिवाक्यस्थं सवर्णापदं सङ्कोचमर्हति । [illegible]नुकूलश्रुतिस्मृत्योरभावे व्यवहारस्य निर्मूलत्वेन तेन [illegible]ङ्कोचस्यान्याय्यत्वात् । श्रुतिस्मृत्यविरोध एव शि[illegible] प्रमाणं नान्यथा । यदुक्तं भट्टपादैस्तन्त्रवार्त्तिके शिष्टा[illegible]धिकरणे ।

शिष्टं यावत् श्रुतिस्मृत्योस्तेन यन्न विरुद्ध्यते ।
तच्छिष्टाचरणं धर्मे प्रमाणत्वेन गम्यते ॥
यदि शिष्टस्य कोपः स्याद्विरुद्ध्येत प्रमाणता । इ[illegible]

ईदृश्यां स्थितावपि "समानशीलव्यसनेषु" इति [illegible] स्वसदृशाचारेष्वेव कुलादिषु कृतः परिणयादिसम्बन्धः [illegible]दर्को भवतीति स्वानुकूलमाचारादिकं सम्यगनुसन्[illegible] सम्बन्धो विधेयः । यद्यपि सारस्वतकान्यकुब्जादीनां [illegible]णानां देशान्तरीयैर्ब्राह्मणैरुद्वाहसम्बन्धः कर्त्तव्य एवेति [illegible] नास्ति हेत्वभावात् तथापि येभ्य एतादृशः सम्बन्धो [illegible] तैरीदृशि सम्बन्धे कृतेऽपि मुनिवचनविरोधो न भ[illegible] प्रतिभाति ।

# कामशास्त्रीयो ग्रन्थविस्तरः ।

ले०—रामचन्द्रशास्त्री, कुशलः ।

[कामस्य स्वरूपादिनिरूपणं "कामः" इति शीर्षकेण प्राक् कस्मिंश्चित् सुप्रभाताङ्के विहितम् । साम्प्रतं र्यं ग्रन्थविस्तरमधिकृत्य किञ्चिल्लिख्यते ।]

तरसूक्ष्मविषयाणामिव कामस्यापि यादृक् विशकलनं गम्भीरं मननं च नः पूर्वैरात्मविदां महर्षिभिः कृतम्, न तादृगधिधरणिमण्डलं कर्तुं पार्यते । आर्यशास्त्रकारैर्य एव विषयो मुपात्तः स तथा निपुणं गम्भीरं विशदं चा- हितो यथा स्वतन्त्रशास्त्ररूपतां गमितः । "क- तन्त्रम्" अत्र रमणीयं निदर्शनम् । केवलं क्रीडनमधिकृत्य तद्भेदप्रभेद—तत्प्रयोग गोप्रभृतेस्तथा वैशद्येन परिकल्पना कृता ; कन्दुकतन्त्राख्यं पृथगेव शास्त्रं सम्पन्नम् । तु पुरुषार्थान्यतमः इति तन्निरूपण-परिकल्प- शास्त्रत्वं सुव्यवस्थितमेव । तदिदं काम- मपि पुरुषार्थप्रतिपादकतया धर्मशास्त्रादीतर- समकक्षम् । नह्येतज्ज्ञानमन्तरेण कामाख्य- पुरुषार्थसार्थकीकरणं संभवि ।

अतएव आदौ तावत् सकलज्ञानविज्ञाननिधि- भगवता वेदेनैव जगतां हिताय कामशास्त्रीयो सूत्ररूपेण प्रकटीकृतः । तथाहि—

"कामस्तदग्रे समवर्त्तताधिमनसो रेतः प्रथमं यदासीत् ।" " स तपस्तप्त्वा मैथुनमैच्छत् " " सोऽनुवीक्ष्य नाऽन्यदात्म- नोऽपश्यत् । स वै नैव रेमे । तस्मादेकाकी न रमते । स द्वितीयमैच्छत् । सहैतावानास यथा स्त्रीपुमांसौ संपरिष्वक्तौ । स इममेवात्मानं द्वेधाऽपातयत् । ततः पतिश्च पत्नी चाऽ- भवताम् । तस्मादिदमर्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यः । तस्मादयमाकाशः स्त्रिया पूर्यत एव तां समभवत्ततो मनुष्या अजायन्त ।" ( बृहदा० उप० )

" उपोप मे परामृश मा मे दभ्राणि मन्यथाः । सर्वाऽ- हमस्मि लोमशा गान्धारीणामिवाविका ॥"

"जायेव पत्य उशती सुवासाः ।"
यस्यामुशन्तः प्रहराम शेफम् ॥" ( ऋग्वेदे )

" योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद् यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दाः स्फुलिङ्गाः ॥ तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति ।" ( छान्दोग्योपनिषद् )

" योनिरुदूखलं ... शिश्नं मुसलम् । "

"अरत्निमात्राद्धि वृषा योषामुपशेते ॥"

"पश्चाद्धै परीत्य वृषा योषामधिद्रवति तस्यां रेतः सिञ्चति ।" ( शतपथ ब्राह्मणे )

"तस्मात् पुमान् दक्षिणतो योषामुपशेते ।"

—जैम० उप

"ता उभौ चतुरः पदः संप्रसारयाव स्वर्गे लोके
प्रोर्णुवाथां वृषा वाजी रेतोधा रेतो दधातु"

इत्यादि ( यजु० २३।२० )

ततो भगवन्तं वेदमुपजीव्य प्रजापतिना ; तमनु नन्दिश्वेतकेतुबाभ्रव्यादिभिराचार्यैः साक्षात्कृतसू- क्ष्मातिसूक्ष्मतत्त्वैः सुपरिकल्प्य प्रोक्तं "कामशास्त्रम्" सुबृहच्छास्त्ररूपतां प्राप्तम् । तदेव कालक्रमेणो-

त्सन्नकल्पतां गतं दृष्ट्वा मल्लनागाख्यो * वात्स्यायनमुनिः संक्षेपेण सप्तभिरधिकरणैः प्रति संस्कृतवान्। ततस्तदुपजीव्य तदा तदोपलभ्यमानानितरप्रबन्धांश्चाश्रित्य विद्वद्भिः परःशताः कामागमग्रन्था निरमीयन्त। तत्र इतरशास्त्राणामिव कामशास्त्रस्यापि भूयांसः प्रबन्धाः करालकालकवलं प्राप्ताः। अवशिष्टाः प्रकाशिताः, अप्रकाशिताः, (तत्तद्ग्रन्थेषु नामग्राहमुदाहृताश्च) ये उपलभ्यन्ते, तेषां नामानि अधस्तात् प्रकाश्यन्ते-

(१) कामसूत्रम्—श्रीवात्स्यायनमुनिकृतम्, अद्यत्वे सकलकामागमस्य मूलभूतं मौलिभूतञ्च।

अनूदितमिदं यूरोपीयभाषास्वपि। अस्य यशोधरकृता जयमङ्गला भास्करनृसिंहकृता वृत्तिश्चेति टीकाद्वयं वर्तते।

(२) रतिरहस्यम्—श्रीकोक्कोकपण्डितकृतम्, श्रीकाञ्चिनाथकृतरतिरहस्य-दीपिका टीकायुतम्, रामचन्द्र श्रेन्द्रकृतरतिरहस्य-प्रकाशिका टीकायुतं च। कामसूत्रादनन्तरमस्य स्थानम्। भारतीयकामागमसाहित्ये द्वितीयं पदमलङ्करोति ग्रन्थरत्नमिदम्। एतत्कर्तुः—श्रीकोक्कोकपण्डितस्यैव नाम्ना भाषाराजनेषु कामशास्त्रस्य "कोकशास्त्रम्" इति संज्ञा प्रचारमापन्ना। यूरोपीयभाषास्वप्यस्यानु[वादो] जातः।

(३) नागरसर्वस्वम्—बौद्धभिक्षुणा श्रीप[द्म]विरचितम्, अनेकैः कामसूत्रादिष्वनुपलभ्यमानैर्विषयैरनुगतम्, नेपालराज-श्रीजगज्ज्योतिर्मल्ल-कृतया, श्रीतनुसुखरामत्रिपाठिकृतटिप्पण्या च सहि[तम्।]

(४) पञ्चसायकः—श्रीज्योतिरीश्वरकविशेखर[विर]चितः। अस्याप्येका "पञ्चसायकविवृति" [नाम] टीका विद्यते।

(५) अनङ्गरङ्गः—श्रीकल्याणमल्लकृतः। अस्य[ाप्या]ङ्ग्लिशभाषायामनुवादो जातः।

(६) शृङ्गारदीपिका—श्रीहरिहरकृता रतिर[हस्यापर]पराख्या (अन्तिमपरिच्छेदद्वयमपहाय स[म्प्रति] मुद्रिता)।

(७) रतिशास्त्रम्—श्रीनागार्जुनकृतम्।

(८) रतिमञ्जरी—श्रीजयदेवकृता।

(९) कन्दर्पचूडामणिः—श्रीवीरभद्रदेवनृपति[कृतः] (अयं श्रीरीवांनरेशाज्ञया १९०८ खिस्ताब्दे [भाषा]नुवादसहितः प्रकाशितोऽभूत्)। अस्यैकं संस्क[रणं] (मूलमात्रं) बम्बईतः "आयुर्वेदग्रन्थमालाया[म्]" प्रकाशितम्, अपरंच मोतीलाल बनारसीदास (...) व-संस्कृत-पुस्तकालय, सैदमिट्ठा बाजार, लाहौ[र] इत्यनयोरनुरोधात् विस्तृतटिप्पण्या सहितं [म]संपादितम्।

(१०) रतिरत्न—प्रदीपिका—मैसूरराजश्रीदेवरा[ज]कृता।

*मल्लनाग इति सांस्कारिकी संज्ञा, वात्स्यायन इति गोत्रनाम। "कामसूत्रविन्यास इव मल्लनागघटितः" इति वासवदत्तायां विन्ध्यगिरिवर्णने श्लेषः। "मल्लनागेन मुनिविशेषेण पक्षे गजविशेषेण, घटितो रचितो युक्तश्च। "मल्लनागोऽभ्रमातङ्गे वात्स्यायनमुनावपि" इति विश्वः।" इति दर्पणाख्यायां तट्टीकायां शिवरामः।

(११) कुट्टिनीमतम्—श्रीदामोदरगुप्तकृतम् ।

(१२) समयमातृका—क्षेमेन्द्रकृता ।

(१३) धूर्तविटसंवादः—( भाणः ) श्रीमदीश्वरदत्त-
...। उल्लिखिताः सर्वे ग्रन्था मुद्रिताः । तत्रान्ते ... ग्रन्थत्रयं ( श्रव्य-दृश्य ) काव्यरूपमपि काम-...मेव विषयं विशदीकरोतीति कामशास्त्रस्यै-...ति ।

...यति । ग्रन्था अधोनिर्दिश्यन्ते ये अद्यावधि ...प्राप्ताः तत्रापि केचित्सम्पूर्णा उपलभ्यन्ते, (...खण्डिताः, केचिच्च कतिपयपत्रावशेषा एव ), ...तत्तद्ग्रन्थेषु प्रमाणत्वेन धृता अपि साम्प्रतं ...यन्ते—

(१४) अनङ्गतिलकम्—( अज्ञात-कर्तृनामकम् ) ।

(१५) अनङ्गदीपिका (कर्तृनाम न ज्ञायते) । ग्रन्थ...एका हस्तलिपिः श्रीराजेन्द्रलालमित्रेणोपल-...भूत (Bikaner Selection 531).

(१६) अनङ्गशेखरः ।

(१७) कामसमूहः—अनन्तकविकृतः, नागरसर्व-...स्वमस्यामुदाहृतः ।

(१८) कलावादतन्त्रम्—श्रीगौरीकान्तसार्वभौम-...संपादितम् ।

(१९) कलाशास्त्रम्—श्रीकोक्कोककृतम् ।

(२०) कामप्रकाशः ।

(२१) कामप्रदीपः—श्रीगुणाकरकृतः ।

(२२) कामप्रबोधः—एतन्नामकं पुस्तकद्वयमस्ति ...रामपुरीयबाबूराधिकाप्रसादसेनसकाशात् अपरं च बीकानेरपुस्तकसंग्रहात् ( Bik. 532 ) श्रीराजेन्द्रलालमित्रेण लब्धम् । तत्राद्यं पुस्तकं श्रीमहाराजानूपसिंहधर्मपत्न्या रचितमाख्यायते । " इति श्रीमन्महाराजाधिराज श्रीमहाराजाऽनूपसिंह देव्यां कामप्रबोधे वाह्यसम्भोगप्रकारविवेको नाम नवमः प्रकाशः । ग्रन्थोऽयं पूर्तिमगात् । संवत् १७६२ । माघमासः । " इति तत्समाप्तौ लेखो दृश्यते । द्वितीयस्य तु कर्तृप्रभृति न ज्ञायते ।

(२३) कामसारः—कामदेव कृतः, केवलं सप्तपत्रात्मकः । रतिकल्लोलिन्यां मनोजनिमनोभूप्रभृति शब्दैरुक्तः कामदेवः अयमेव वा अन्यो वेति न निश्चयः ।

(२४) कौतुकमञ्जरी ( नवीनाचरितकथनम् )—अस्यैका अत्यशुद्धा वङ्गाक्षरलिखिता १०६ श्लोकात्मिका हस्तलिपिः श्रीराजेन्द्रलालमित्रेण लब्धाऽभूत् । कर्तृनाम नोपलभ्यते ।

(२५) पद्यमुक्तावली—श्रीघासीरामेण स्वीये रसचन्द्रे उदाहृतेयम् । अत्र कामशास्त्रसम्बद्धान्येव पद्यानि वर्तन्ते ।

(२६) मदनसञ्जीविनी ।

(२७) मदनार्णवः—अज्ञातकर्तृनामकश्रीराजेन्द्र—लालमित्रेण बीकानेरपुस्तकालये लब्धोऽभूत् ।

(२८) मदनोदयः—कुट्टनीमतकृता १२३ आर्यामुदाहृतः, कन्दर्पचूडामणिकृता च ( १।२।१५ )" मदनोदय इत्यमाम्नातम्, इति प्रमाणत्वेनोपन्यस्तः । समनन्तरमेव च " श्रीमल्लक्ष्मणदेवः कथयति

तत्रैव न च वैशिष्ट्यम् ।" इत्युक्त्या श्रीमल्लदमणदेव एवैतत्कर्ता भवेत् । अस्मात् समुद्धृत एकः श्लोको राघवभट्टेन शाकुन्तलटीकायाम् ( १।२६ ) ।

(२९) रतिरहस्यम्—श्रीविद्याधरकविकृतम् । अत्र ६४ पत्राणि १००० श्लोकाः सन्ति । द्रश्यतामस्योल्लेखः—"Oudh VIII, २०" इत्यत्र ।

(३०) रतिरहस्यम्—श्रृङ्गारदीपिकापराख्यम् , श्री हरिहरकृतम् । प्रथमः परिच्छेदः पूर्णः द्वितीयस्य केवलं ५६ श्लोका उपलभ्यन्ते, अस्यानेकाः टीकाः सन्ति ।

(३१) रतिरहस्यटीका । (Appert 6, 160) ।

(३२) रतिरहस्यव्याख्या—रामचन्द्रसूरिकृता ।

(३३) रतिविलासः—" तत्सिद्धयेरतिविलासमतोऽभिधास्ये " इति मल्लकोशे उक्तः ।

(३४) रतिसङ्ग्रहव्याख्या—(Appert 2777) ।

(३५) रतिसर्वस्वम्—अस्य ।

"एकवारावधिर्यामो रतस्य परमो मतः ।
चराऽशक्तिमतोर्यूनोरुद्धटक्रमवर्तिनोः ॥"

इति श्लोको मेघदूत व्याख्यायां श्रीमल्लिनाथेनोद्धृतः

(३६) रतिसारः—३७ पृष्ठात्मकः, ४०० श्लोकात्मकश्च ।

(३७) वाजीकरणतन्त्रम् ।

(३८) वात्स्यायन सूत्रसारः—श्रीक्षेमेन्द्रेण विरचितः, अस्याधोनिर्दिष्टः श्लोकस्तेनैव स्वकृतायाम् 'औचित्यविचारचर्चायामुद्धृतः—

"कामः कामं कमलवदनानेत्रपर्यन्तवासी-
दासीभूतत्रिभुवनजनः प्रीतये जायतां वः ।
दग्धस्यापि त्रिपुररिपुणा सर्वलोकस्पृहार्हां
यस्याधिक्यं रुचिरतितरामङ्गनस्येव याता ॥"

(३९) वेश्याङ्गनाकल्पः--(Appert 6220)

(४०) वेश्याङ्गनावृत्तिः ।

(४१ श्रृङ्गारपद्धतिः—शार्ङ्गधरकृता ( बो... पुस्तकालये ५३४ ) ( इयं शार्ङ्गधरपद्धति... श्रृङ्गारपद्धतिर्भवेत् ) ।

(४२) श्रृङ्गारमदप्रदीपः ।

(४३) श्रृङ्गारमञ्जरी—तेलगूलिप्यां १००... त्मिका तंजोरराजस्य शाहजीनाम्नः शासन... ( वैक्रम १८ शताब्द्याम् ) निर्मिता ।

(४४) श्रृङ्गारसारिणी—श्रीचित्रधरकृता ।

(४५) समर ( S ) कामदीपिका—विश्व... कृता, ३०० श्लोकात्मिका ।

(४६) सुरतोत्सवकामशास्त्रम् ।

(४७) स्त्रीविलापः—देवेश्वरकृतः १४५ पृष्ठात्म...

(४८) स्मरतत्त्वप्रकाशिका--(५ श्लोकात्मकस्य... रतत्त्वाख्यपुस्तकस्य टीका ) रेवणाराध्यकृता ।

(४९) स्मरदीपिका--रुद्रकृता, नागरस... टिप्पण्यामुदाहृता ।

(५०) स्मरदीपिका--गर्गाचार्यमुनिकृता ।

(५१) स्मरदीपिका--मीननाथकृता, नागरस... टिप्पण्यामुदाहृता ।

(५२) स्मररहस्यव्याख्या ।

(५३) कामप्राभृतम्--केशवकृतम् ।

(५४) कामानन्दः--वरदार्थकृतः ।

(५५) रतिचन्द्रिका—श्रीहरिहरकृता ।

(५६) रतिदर्पणः—श्रीहरिहरकृतः ।

(५७) पञ्चाङ्गयुद्धप्रपञ्चभाणः—कामशास्त्रीयविषयनिवद्धः ।

(५८) रसरत्नाकरः । अस्मात्—
...भिलाषो रागश्च स्नेहः प्रेमा रतिस्तथा ।
...रश्चेति सम्भोगः सप्तावस्थाः प्रकीर्तिताः ॥"
...दि सार्धपद्यत्रयं श्रीमल्लिनाथेन (६।७१) ...रातार्जुनीयटीकायामुद्धृतम्

(५९) कालिकान्ताकौतुकम् ।

(६०) मन्मथसंहिता—अस्या एका हस्तलिपिः ...ओ.कालेज, लाहौर' सम्बद्धानुसन्धानविभाग...लये विद्यते ।

(६१) रसिकजनमनोल्लासिनी ।

(६२) श्रृङ्गारतिलकभाणः ।

(६३) श्रृङ्गारामृतलहरी ।

(६४) कामशास्त्रम्—( माधवकृतायुर्वेदप्रकाशे कामशास्त्राध्यायः ) ।

(६५) मदनसाम्राज्यभाणः ।

(६६) रसिकसर्वस्वम् ।

(६७) विवेकविलासः—अस्मात्
...नी चित्रिणी चैव शङ्खिनी हस्तिनी तथा ।
...विधानेनानुकाल्या स्त्री विचक्षणैः ।"
...को नित्याचारदीपिकायामुदाहृतः ।

(६८) रतिकल्लोलिनी—सोमराजदीक्षितकृता ॥

(६९) दीनालापनिकाशुकसप्ततिः—नागरसर्वस्वटिप्पण्यामुदाहृता । अत्र चतुरशीतिबन्धानां कामशास्त्रीयविषयान्तराणां च विस्तरेण वर्णनमस्ति ।

(७०) पञ्चसायकविवृतिः ( पञ्चसायकस्य ज्योतिरीश्वरकृतस्य व्याख्या ।

(७१) नागरवल्लभः ।

(७२) कादम्बरस्वीकरणसूत्रम् ।

(७३) कादम्बरस्वीकरणकारिका ।

(७४) नर्मकेलिकौतुकसंवादः ।

(७५) कामतन्त्रम्—महेश्वरकृतम् । पञ्चसायके निर्दिष्टम् ।

(७६) रतकरणम् ।

(७७) मदनविनोदः ।

(७८) रतिरञ्जनम् ।

(७९) रतितरङ्गः ।

(८०) भाषाकोकसारमञ्जरी—हिन्दीभाषायां दोहादिच्छन्दोरचिता ) आनन्दकविकृता । अस्या एकालिपिर्मदीये पुस्तकसंग्रहे वर्तते ।

(८१) विचित्रकाव्यम् सहैदिताहरनाम्ना कविना हिन्दीभाषायां दोहादिच्छन्दोभिरयं ग्रन्थो रचितः ।

अत्र विविधाः कामशास्त्रविषयाः विशदं निरूपिताः सन्ति । अस्यैका हस्तलिपिः कतिपयाद्यपृष्ठरहिता मदीये पुस्तकसंग्रहे वर्त्तते । 'या केनापि कस्यापि शिवदत्ताख्यपुरोहितस्यार्थे १७४५ विक्रमाब्दे लिखितेति संवत् "१७४५ वर्षे चैत्र सुदि राम-

नवमा भृगुवासरे वैशाख प्रविष्टे इति लिखितं पुरोहित शिवदत्तार्थम् ।' तत्समासिलखाज्ज्ञायते ।

( ८२ ) प्रतागलागराख्यभाषा ( हिन्दी ) काव्यगतं श्रीभेदचन्द्रकलाप्रभृतिवर्णनपरं कामशास्त्रीयं प्रकरणम् ।

( ८३ ) कुचिमारसंहिता—इयमपि मुद्रिता अत्र कामशास्त्रीयोपनिषदिकप्रकरणसम्बद्धाः कचिद् योगाः सन्ति ।

( ८४ ) गुणपताका—यत्प्रकृतीनां लक्षणमभिहितमधिकं च गुणपताकायाम् ।' ( ४।७ ) इति,

'उक्तं गुणपताकायामनुरागेङ्गितञ्चयत् ।" ( ४।२५ )

इति च

रतिरहस्ये प्रमाणत्वेनोपन्यस्तम् ।

( ८५ ) कामावतारः—नागरसर्वस्वटिप्पण्यामुदाहृतः ।

एवं नन्दिबाभ्रव्यादिभिराद्यैः प्रोक्तानि कामशास्त्राण्यपि कामसूत्रादिषु तत्र तत्र प्रमाणत्वेनोपन्यस्तानि नाद्यत्वे लभ्यन्ते । तत्र बाभ्रवीयं कामशास्त्रं जयमङ्गलाकारेण दृष्टमिति तेन बाभ्रवीयश्लोकानां जयमङ्गलायाम् ( २।१ ) ( ५।४ उद्धरणात् प्रतीयते । गोनर्दीयं कामशास्त्रं-मल्लिनाथसमये स्थितमिति रघुवंशस्य ( १६।१६, २६,३२ ) कुमारसम्भवस्य ( ७।६५ ) च टीकायां तेन गोनर्दीयश्लोकानामुद्धारणाज् ज्ञायते । ( नारायण पण्डितेनापि कुमारसम्भवविवरणे गोनर्दीयाः श्लोका उदाहृताः सन्ति ) । जयमङ्गलाकारेण वैशिकप्रवक्तुः श्रीदत्तकाचार्यस्य वैशिकसूत्रमपि दृष्टमिति " भाण्ड संक्षेपं विशिष्टग्रहणम् इति दत्तकसूत्रस्यार्थं सूत्रान्तरमाह-प्रतिमणिकानामिति । ( ६।३ )" इति तत्कृतेन श्रीदत्तकसूत्रोद्धरणेनावगम्यते ।

"संक्षेपादिति नन्दिकेश्वरमतात्तत्वं किमप्युद्धृतम्, गोणीपुत्रकभाषितोऽयमधुनासंक्षिप्यते चित्र

( २।५ )

इति रतिरहस्यकारस्य वचनात् तेन प्रोक्तं गोणिकापुत्रीयं च कामशास्त्रं इति ज्ञायते । अस्मादेव च नन्दिकर्तृककाम प्रवचनाख्यानं "महादेवानुचरश्च नन्दी..." ( कामसूत्रारम्भे ) काल्पनिकं न वस्तुसदिति श्चिदुक्तिः परास्ता भवति ।

"दृष्ट्वा मन्मथतन्त्रमीश्वरमतं.........श्रीनन्दीश्व देवभणितं.........तेनाऽक्लृप्यत पञ्चसायक इति प्री कामिनाम् ।" इति पञ्चसायककारोक्तिरप्यत्रार्थं प्रमाण

कामसूत्रनिर्दिष्टान्, रतिरहस्यादिनत्तत्क र्तृतया प्रसिद्धांश्च कामशास्त्रप्रणेतृनपहाय रभवदेवरन्तिदेवपुरूरवोभरतदण्डियागिराड्य यणचन्द्रमौलिकात्यायनकर्णीसुतलल्लभागुरिमं कुण्डभाष्यकारमुनीन्द्रराजपुत्रादयोऽन्ये श स्त्रप्रणेतारस्तत्तद्ग्रन्थेषु प्रमाणतया नि सन्ति, येषां कृत ग्रन्थे नामतोऽपि न श्रू एषु महेश्वरमुनीन्द्रौ ( ३४ । २ । १-३ ) सर्वस्वे ( अयं मुनीन्द्रोवात्स्यायनाद्भिन्नः ) मू रन्तिदेव ( १।३ ) चन्द्रमौलयः ( ४।२ ) पञ्च के. कात्यायनः सम्पुटकलक्षणे जयमङ्गला कर्णीसुतः ( ४।२१ ) रतिरहस्ये, लल्लभागुरि भूभाष्यकारकुण्डिनो रतिकल्लोलन्याम्, भाष्य ऽयं कश्चिद्वात्स्यायनीयकामसूत्रभाष्यकारो अन्यकामशास्त्रभाष्यकारोवेति न निश्चयः, पुत्रः ( ७७ आर्यायाम् ) कुट्टनीमते ( अयं कल्य कलाशास्त्रग्रन्थस्यापि प्रणेता, स्मृतश्चायं पाल प्यीय हस्त्यायुर्वेदे ( ३।८।६६ ), अवशिष्टाश्च देवीदत्तपराजुलीत्याख्येन काशीमुद्रितस्यर स्यस्य भूमिकायां निर्दिष्टाः सन्ति ।

# राजनैतिकी परिस्थितिः ।

( लेखकः—श्रीयज्ञनारायण उपाध्यायः एम. ए., एल्-एल्. बी., एल्. टी., काव्यतीर्थः )

संसारोऽयं कीदृग्विचित्राभिनयशाला, यत्र काले काले नैकानि नाटकान्यभिनीतानि । तस्यावस्था एकरूपेण न तिष्ठति । ह्यो राजनीतेरेकं रूपमद्य अपरं रूपम् । समभूमण्डलस्य कथा तु दूरमास्ताम्, केवलस्य ... शासनव्यवस्थायां यदि सिंहावलोकनं ... तथापि विस्मयान्न विमुच्यामहे ।

प्राचीनतमसमये यदा कापि व्यवस्थानासीत् ... बलिनो दुर्बलान् बाधेरन्नेव । सर्वे मनुष्याः स्वतन्त्रतया स्वाभिमतं कार्यं कुर्वन्त एव स्युः । शासनादीनामुत्तरदायित्वं कस्यापि शिरसि न ... भवेत् । तस्यामवस्थायां बलिभिर्बाध्यमाना दुर्बला आत्मरक्षार्थं स्वीयसमाजरक्षार्थं च ... बुद्धिबलशालिनं स्वनायकं ध्रुवमाश्रयेयुः । आर्यावर्त्तप्रदेशे, आर्या ये भूतले सर्व प्रथमसभ्या ..., तेषु प्रथमम् इयं प्रथा प्रचचाल, यत् कुटुम्बेष्वेकैके पुरुषास्तदधीश्वरस्य आदेशवशवर्त्तिन ... । कुटुम्बेषु शात्रवसौहार्दयोरवस्थितिः स्वाभाविक्येव । अतएव आवश्यकतायामुपस्थितायां बहवः कुटुम्बिनः प्रबलेन केनचिदेकेन स्थानान्तरवासिना रिपुणा पीड्यमानाः परस्परं संघट्य अभिषेणयन्तिस्म । इदमेव ग्रामसंघटनस्यापि बीजं भवितुमर्हति । गच्छता च कियता कालेन शासनसुव्यवस्थासम्पत्तये कंचन बलबुद्धिशालिनं नायकं निश्चिक्युरेव । सहकारावश्यकतायां केचन मन्त्रिणोऽपि नियुक्ताः । विभागानां बाहुल्याद् बहवो विभागाधिपतयोऽप्येवमेव अभूवन् । एवमेव च राजसभा प्रतिदिनमेधमाना प्रजासत्ता च हीयमाना भवेत् ।

रामायण-महाभारत-बौद्धकालीनेतिहासानुशीलनात् राजकीयशासनप्रणाली, तदीया बहवो विभागाश्च अवगम्यन्ते । यवनानां साम्राज्यकाले चलन्ती भारतीया राजव्यवस्था नष्टभ्रष्टैव समभूत्, यतस्ते देशाद् धनमपहृत्य, मन्दिराणि विनाश्य, धर्ममुपप्लाव्य, पुस्तकालयाँश्च निर्दाह्य, अहर्दिवमस्वास्थ्यमेव चक्रुः ।

यवनानां ह्रासंसमये च भारतस्य दक्षिणभागे विभागान्तरे च छत्रपतिशिवाजीप्रभृतयो राजानः समभूवम, तेषां राज्यव्यवस्थापि प्रायेणसमीचीनैवासीत् । किन्तु तेषां राजव्यवस्थावर्णनविस्तराद् वयमिदानीमुदास्महे । भारतवर्षस्य आन्तरिककल-



२५

ह्यात्तदीयात्यधिकधनधान्यसम्पत्तिलोलुपत्वाच्च बहवः पाश्चात्यसङ्घाः व्यापारमपदिश्य इहाजग्मुः। किन्तु तेषु आंग्ला एव कृतकार्या बभूवुः। खृष्टस्य १८५७तमवर्षात्पूर्वं शासनव्यवस्था संघाधीनैवासीत्। ततो विद्रोहे प्रशमिते व्यक्तोर्जा प्रथमं सम्राट्पदमध्यरोहत्। तदा भारतीय-व्यवस्थासंचालनार्थं सपरिषद्भारतमन्त्री नियोजितः। अनेन क्रमेण एकोनविंशशतकोत्तरार्द्धे प्रशान्ते भारते, शिक्षायां प्रचारितायाम्, शासनसुधारान्दोलने समुज्जृम्भिते, १८८४-तमे संवत्सरे राष्ट्रीयमहासभाऽसर्जि। इदानीं देशे शासनप्रबन्धार्थं राजप्रतिनिधिः, तस्य सहायकाः, यत्र कुत्र कार्यकारिणी समितिः, नाममात्रेण व्यवस्थापकसभा चासीत्। लोकमतग्रहणार्थं कश्चिदपि प्रबन्धो नासीत्। १९०८-तमेऽब्दे व्यवस्थापकसभायाः कियान् संस्कारोऽभूत्, भारतीयानां सदस्यसंख्यापि वर्धिता। तदनन्तरं च योरपीयमहायुद्धावसाने १९१९-तमे वत्सरे भारतराज्यव्यवस्थानियमो रचितः, अथ च भारते वृहतो वृहतः प्रान्तस्य शासनार्थमेको गोवरनरः, तदधीना कार्यकारिणी समितिः, व्यवस्थापकसभा च कृता, यस्यां भारतीयानां संख्या अधिका मतग्रहणप्रबन्धश्च विस्तरेण निर्मितः प्रान्तीयविभागाश्च हस्तान्तरितसुरक्षितरूपेण द्विधा कृताः। संरक्षितविभागे राजकरः, अकालनिवारणम्, राजपुरुषाः, कारागारप्रबन्धादयः, सार्वजनिकस्वास्थ्यम्, शिक्षा, कृषिजीविचिकित्सा, सहकारिसंस्था, राजपथादयः सन्ति। संरक्षितविभागाः कार्यकारिणीसदस्याधीनाः, हस्तान्तरितविभागाश्च मन्त्रिणामधी[...] प्रत्येकं प्रान्ते च सदस्यानां संख्या नियता। संयुक्तप्रान्ते यवनेतरेषां संख्याः षष्टिः, यवना[...] एकोनत्रिंशत्, पाश्चात्यानामेका, भूस्वामिनां[...] प्रयागविश्वविद्यालयस्यैका, औद्योगिकसंस्[...] त्रयः, राजकीयाः षोडश, विशेषश्रेणीनां स[...] १२३। इयं सभा प्रान्तस्य शासननियमं रचय[...]

सम्पूर्णभारतार्थं परिषद्द्वयी, एका भा[...] व्यवस्थापिका सभा, यदीयाः सदस्याः १४०। [...] तीया राज्यपरिषद्, यदीयाः सभ्याः षष्टिः। [...] समस्ता भारतवर्षीयविषयाः प्रविष्टाः। यथा [...] सेना, जलसेना, बाह्यवदितरदेशानां स[...] लवणः, बाष्पयानम्, डाकतारविभागः, मनुष्[...] नादयः। राष्ट्रपरिषदं विहाय सर्वासां स[...]। नवीनप्रबन्धः प्रतितृतीयवर्षं भवति राष्ट्रप[...] प्रतिपञ्चमवर्षम्। एतेषां सुधाराणां प्रबन्ध[...] मभिप्रायो यद्देशस्य प्रबन्धो देशाभिमतानां [...] निधीनां हस्ताधीनोऽस्ति। एतेषां सुधाराणां [...] रालोचनार्थं साइमनसप्तकं समागतम्। यत्र [...] पि भारतीयो वर्त्तत इति महद्देशस्य कृते खे[...] कम्। किमतोऽधिकं कष्टावहं यदेतस्य भारत[...] सुधारसंचालननिर्णयार्थं सङ्घः स्थापितः [...] एकोऽपि भारतीयो विद्वान् न निवेशितः [...] भारतीयानां हितकारि सत्परामर्शं दद्यात्। [...] पल्लविनेन घातिन्या भारतीयशासनव्यव[...] प्रपञ्चस्य।

# व्रजभाषामहाकवेर्विहारिणः काश्चन सूक्तयः ।

*ले०—भट्ट श्रीमथुरानाथ शास्त्री, साहित्याचार्यः ।*

व्रजभाषामहाकवेर्विहारिणः 'सप्तशती' कस्य रसज्ञस्य न स्याद्विदिता । व्रजभाषासर्वं 'विहारि'-सूक्तिः सुरसरित्संमिलिता सुरसरस्वतीं समाश्रितापि सुधीभिः समादरणीया स्यादिति सेयं सुबहोः पूर्वमेव संस्कृतसरस्वत्यां समवतार्यत । 'दोहा'-सदृशे स्वल्पावकाशे च्छन्दसि महाकविरेतादृशमसीमं व्यङ्ग्यार्थमञ्जुलमपूर्वं मासेति को वा प्रशंसामुखरमुखो हृदि न दद्यात् । यद्यपि व्रजभाषायामक्षराणां करणं रूपान्तरकरणम्, इत्यादिरपभ्रंशप्रकार सुबहु सहायकः, परमेवं सौकर्याभावेऽपि सन्धि-संयुक्ताक्षर-द्विवचनभेदादिसंकट- मुख्येपि सेयं विहारि-सूक्तिः संस्कृतेप्यानेतुं शक्या न वेति चेतःप्रत्यय एव चापल्याय प्रचेदितवान् ।

यावदियं पृथक् प्रकाशयितुं न शक्यते तावत्-संस्कृतानुरागिणां मनस्तोषनिमित्तं 'विहारि-विलासः' इति शीर्षकं प्रदाय, पुस्तकाकारेण प्रकाशयिष्यमाणे मत्कवितासंग्रहेंऽशतः सेयं संगृहीता । अद्य तस्मादेवोद्धृत्य काश्चित्सूक्तयः श्रीमतां सेवायामुपस्थाप्यन्ते ।

अस्माकं सजातीयः कथंचित्सम्बन्धी च बुन्देल-खण्डाभिजनो लल्लोपनामकः परमानन्दपण्डितोऽपि भारतेन्दु-हरिश्चन्द्रस्य समये विहारि-सप्तशतीं संस्कृतेऽनूदितवान् । परमस्मिन्ननुवादे भूयान् विवाद इव । व्याकरणनियमानां तु सोयं प्रत्यक्षमपवाद[1] एव । विहारि-सूक्तेरर्थसंवादेऽपि (संगतौ)

---

[1] आत्मनेपदप्रयोगे स्वतन्त्रता यथा—"विरहाग्निना वभास ।" 'विन्दुमिषेण ववन्द ।' (दो. ८९) रसमपि बुध्यसि (...) 'संगच्छतः सहैव ।' (१६१) 'सा जजम्भ भेजे पुनः' (२२६) 'पुनर्मिमिलतुः शिश्यतुः पुनरासतुः शयेपि' (...) इत्यादिः ।

'...णौ विषमगतीव' (१९८) 'गगनमंशुमालीकरैः' (१४९) 'मिलनायाभिससार ।' (१४३) 'चातुरतया' (१४१) '...ल्लास' (४) 'कराङ्गुलिनैव पस्पर्श' (२८१) 'प्रदर्शयित्वा निजतनुम्' (४८०) इत्यादयः शतमन्यान्ये व्याकरण-...नादाः ।

प्रायः प्रतिवाद एव दृश्यते । स्थाने स्थाने चपल-विप्र-वाद-रव भाषाप्रसिद्धः प्रवाद एव बाहुल्येनावलोक्यते । संस्कृतसरस्वत्यास्तमिममपवाद-मुन्मार्ष्टुमेवाहं सज्जोऽभवमित्यास्तामतिवादः । एष विषयो मत्कवितासंग्रहस्य भूमिकायां विस्तरेण विशदीकृतः । इदानीं यानि मयाऽक्षराणि योजितानि तानि श्रीमतां पुरतः सभयकम्पमुपस्थाप्यन्ते । ]

✻ श्रीकृष्णस्य शोभावर्णनम् ✻

राजति गुञ्जामालिका वक्षसि मुरमथनस्य ।
लसति निःसरन्ती बहिः, शिखेव दवदहनस्य ॥ १ ॥

गोपरक्षायां पीतस्य दावानलस्य वहिर्निःसरन्ती ज्वाला इव भातीत्याशयः ॥ १ ॥

श्रवसि हरेः कुण्डलमिदं दीव्यति मकराका[र]
हृदयसदनमविशत्स्मरो लसति केतनं द्वारि ॥

मकरस्येव आकारो यस्य ईदृशं कुण्डलं श्रवसि ( कर्णे ) दीव्यति शोभते । कामरूपो हृदयरूपं सदनमविशत्, द्वारे च राजचिह्नभूतं ध्वजो लसति । कामस्य मकरकेतनत्वात् । द्वारा तव रूपगुणकथां शृण्वतोऽस्य कामसंचारो भवदिति शृण्वन्तीं नायिकां प्रति दूत्या उक्तिः ।

श्याममधुरमूर्तिर्हरिः पीतपटेन विभाति ।
उषसि नीलमणिशैल इव बालातपेऽभियाति ॥

बालातपे अभियाति सति ( प्राप्नुवति ) काले नीलमणिशैल इव, श्याममूर्तिः हरिः

सखि सोहत गोपालके उर गुञ्जनकी माल ।
बाहर लसत मनौ पिये दावानलकी ज्वाल ॥ १ ॥
मकराकृत गोपालके कुंडल सोहत कान

धस्यौ मनौं हिय-धर समर, ड्यौढी लसत निशा[न]
सोहत ओढैं पीतपट, स्याम सलोने गात ।
मनो नील-मनि-सैल पर आतप पर्यो प्रभात

अर्थानुसन्धानविरहस्तु स्थाने स्थाने यथा—' डर न डरैं नींद न परैं हरैं न कालविपाक । दिन छनदा छाकी छुटत न छिन छवि छाक ॥'' इत्यस्यानुवादे "न निद्रासि न बिभेषि सखि, नापैति च समयेन । तद्रूपासवमदोऽहो अ[..] मदनेन ॥" अत्रहि निद्रादिषु नायिकायाः कर्तृतां स्वीकुर्वन्नेव, सहैव 'नापैति च समयेन' इति रूपासवमदं कर्तृत्व[..] स्थापयामास ।

'टटकी धोई धोवती चटकीली मुखजोति । लसत रसोई के वगर जगर मगर दुति होति ॥' इत्यस्यानुवादे 'वि[..] सूपस्य यत्परिमार्जनं करोति' इति सूपमार्जनं न जाने कुत आनीतवान् । "लालन लहिपाये दुरैं, चोरी सौंह करें [..] इत्यस्यानुवादे—

'तस्करता शपथैरियं गुप्ता नहि भवतीह' अहो नायकस्य कृते 'तस्करता' कियन्मधुरं चोचितं च प्रतीयते !

'कितो न गोकुलकुलवधू काहि न केहि सिख दीन । कोनै तजी न कुलगली ह्वै मुरलीसुरलीन ॥' इत्यत्र [..] गोकुले कुलवधूः, का धर्मं न जहाति ।' अत्र कवितायां जीवितायमानं बहुवचनं 'का हित केहि सिखदीन' इति मे[..] मानमर्थं समूलमुन्मूलयामास । प्रत्युत धर्मं जहातीति कठोरं प्रयुयुजे । 'टटियां अँगुरिन फारि, अत्र 'सा गवाक्ष[..] ङ्गुली' इत्यस्वाभाविकं रचयामास । 'विविदतुः स्पर्शपरीक्षया मुमुदाते च सुखेन' एवंविधाश्छन्दोभङ्गास्तु प्रति[..] 'सखि सोहत गोपालके उर गुंजन की माल ।' अत्र 'गुञ्जपुञ्जकृतमालिका' इत्याद्यनुवदन् अनुवादं 'लुञ्जपुञ्ज[..] चकार । अस्तु अयं स्थालीपुलाकन्यायः ।

विभाति। श्यामशरीरं नीलमणिस्थानीयम्, पीताम्बरं बालातपवत् मनोहारीत्युत्प्रेक्षाऽऽ- अत्रापि परमानन्दः " उष्णकर कोमलकर- " इति उषःकालिकसूर्यार्थम् 'उष्णकर'-पदं- स्थूल एव ॥ ३ ॥

ऽधरदृक्छटा-विच्छुरिता हरिताऽति ।
हरिमुरलिका सुरपति-धनुरिव भाति ॥४॥

पटस्य अधरस्य दृशोश्च छटया-शोभया, स्वयं स्वभावतो हरितवर्णा हरेः मुरलिका, तुल्या भाति । पीत-रक्त-श्यामच्छटाभिः हरितवर्णा वंशी पञ्चरंगवर्णेन इन्द्रधनुषा भातीत्याशयः । पटस्य पीतः, अधरस्य दृशोः श्यामो वर्ण इति नानाविधरङ्ग प्रति- त्यर्थः । अत्रापि 'धनुः' स्थाने 'धनु'-सुन्दर- का' इत्याह परमानन्दः ॥ ४ ॥

मुकुटमधिकटि ललित-पटो वेणुरधिपाणि ।
तावकमिदं रूपं हृदि करवाणि ॥५॥

उरसि मुकुटम्, अधिकटि ( कट्याम् ) नटधार्यत्वात्सुन्दरः पटः, अधिपाणि ( करे ) वेणुः, उरसि माला ( वनमाला ), रूपं हृदये सदा करवाणि इति भगवन्तं भक्तस्य आशंसा परमानन्दस्तु 'मस्तकमणिड- तमुकुटवर' इत्यादि सर्वसम्बोध्यस्यैव विशेषणी- कुर्वन 'रूपकम्' ( बानिक ) लुलुम्पेति किं सहृदयेषु ॥ ५ ॥

* मुखवर्णनम् *

राजति नीलपटान्तरितमेतन्मुखमवधेहि ।
कलितकलानिधिरुल्लसति कालिन्दी सलिले हि ॥

नीलपटेन अन्तरितं किञ्चित्सव्यवधानम् इदं नायिकामुखं राजति, अत्र ( दर्शनविषये ) त्वम् अवधेहि सावधानो भव । अत्रोत्प्रेक्षते-कालिन्दी सलिले सुन्दरः कलानिधिः शोभते । इवस्याप्रयोगाद् गम्योत्प्रेक्षा ।

तद्गृहमभितस्तिथिमहो पञ्चाङ्गादवयाति ।
वदनविभाप्रतिभासतः प्रतितिथि पूर्णा भाति ॥७॥

जनः तस्या गृहम् अभितः ( तद्गृहसमीपे ), प्रतिपदादितिथिं पञ्चाङ्गात् अवयाति जानाति । मुखशोभायाः प्रतिभासतः ( प्रकाशात् प्रत्येकतिथौ एव पूर्णिमा भाति । अत्रापि 'पञ्चाङ्ग'-स्थाने प्रस्त- कपदं प्रयुञ्जानः परमानन्दो अर्थं दुरूहं चकार ॥७॥

* नेत्रवर्णनम् *

सूक्ष्मपटे चञ्चलनयनयुगं कान्तिमुपयाति ।
मन्ये सुरसरिताजले मीनमिथुनमाभाति ॥ ८ ॥

सूक्ष्मपटे ( पटेन किञ्चित्सव्यवधानमित्यर्थः )

---

रत हरिके परत ओठ-दीठि-पटजोति ।
बांसकी बांसुरी इन्द्र धनुस सी होति ॥ ४ ॥
मुकुट कटि काछनी, कर मुरली उर माल ।
बानिक मो मन वसो, सदा बिहारी लाल ॥ ५ ॥

छप्यो छबीलो मुंह लसै, नीले अंचल चीर ।
मनौ कलानिधि झिलमिलै कालिन्दी के नीर ॥ ६ ॥
पतराही तिथि पाइये वा घरके चहुँ पास ।
नितप्रति पूनोही रहत आनन ओप उजास ॥ ७ ॥

चञ्चलं नयनयुगं निर्मले गङ्गाजले मीनयुगलमिव आभाति ॥ ८ ॥

कवयः कमलसमं जगुर्वेद्मि नयनमश्मेति ।
कथमनयोर्योगे द्वयोर्विरहकृशानुरुदेति ॥ ९ ॥

अन्ये कवयो नयनं कमलसमं प्रोचुः, अहं तु नयनम् अश्मा ( पाषाणः ) अस्तीति वेद्मि । अनयोर्द्वयोः । ( नयनयोः ) योगे सति विरहाग्निः कथं प्रोद्भवति । द्वयोः पाषाणयोरेव संघर्षेण वह्निरुदेति ततश्च नयनमपि अश्मेत्येव सचातुर्यमाह विहारी ॥ ९ ॥

* यौवनम् *

वधूवपुषि यौवनविभा यथा यथा समुदेति ।
सकलसपत्नीमुखविभा तथा तथा क्षतिमेति । १० ।

सपत्नीनां मुखकान्तिस्तथा तथा क्षीयते । नव यौवनायामस्यामेव प्रियोनुरज्येदिति भावः ॥ १० ॥

गता न शिशुता-द्युतिरितो यौवनमङ्गमुपैति ।
द्विविधरङ्ग कौशेयमिव तनुराभ्यां रुचिमेति ॥

शिशुताया द्युतिर्न गता, किञ्चिद्बाल्यं ... इत्याशयः । इतः ( पक्षान्तरे ) यौवनम् ... ( कर्म ) उपैति प्राप्नोति । 'उप' सम्बन्धेन ... नस्य स्पर्श एव सूच्यते । तनुः ( शरीरम् ) ... बाल्ययौवनाभ्यां द्विवर्णं कौशेयम् ( धूप छांह रेशमी वस्त्र ) इव शोभते । अत्रापि परमा... 'द्विविधरागमम्बरमिव द्वैरूप्यं च दधाति' ... वैरूप्यमेव चकार ॥ ११ ॥

* वसन्तपवनः *

रणद्भृङ्गघण्टावलिः स्रवन्दानमधु भाति ।
कुञ्ज-मरुत्कुञ्जर इतो मन्दमन्दमायाति ।

दानमधु स्रवन् भाति । एष कुञ्जपवन... कुञ्जरः, इतो मन्दमन्दम् आयाति ॥ १२ ॥

---

चमचमात चञ्चल नयन बिच घूंघट पट झीन ।
मानौ सुरसरिता बिमलजल उछरत जुग मीन ॥८॥
कहत सबै कवि कमल से मो मत नैन पखान ।
न तरक कत इन बिय लगत उपजत बिरह कृसान । ९ ।
देह दुलहिया की बढ़ै ज्यौं ज्यौं जोवन जोति ।

त्यौं त्यौं लखि सौतैं सबै वदन मलिन दुति हो...
छुटी न सिसुताकी झलक झलक्यो जोबन अङ्ग ।
दीपति देह दुहू न मिलि दिपति ताफता रङ्ग ॥...
रनत भृंगघण्टावली झरत दानमधु नीर ।
मंद मंद आवत चल्यो कुञ्जर कुञ्ज-समीर ॥ १...



## ॥ मातृभावना ॥

( ले०-नवरत्न-श्रीगिरिधरशर्म-काव्यालङ्कारः )

...याच्चिरञ्जीयात्सुखी भूयादयम्बालः ।
...शक्तिसम्पन्नः सुधीर्भूयादयम्बालः ॥१॥ चि०

* *

...स्थः सदास्वच्छः, प्रसन्नो निर्मलो दक्षः ।
...रः सदाचारः, कृती भूयादयम्बालः ॥२॥ चि०

* *

...मोदाय वागस्य प्रिया भूयात्सुधासिक्ता ।
...पं वितन्वानः सदा जीयादयम्बालः ॥३॥ चि०

* *

...रोग्यमातन्वन् वहन् द्रव्यं रसं स्नेहम् ।
...णी सुधापार्णिः प्रियो भूयादयम्बालः ॥४॥ चि०

* *

...वेदोपवेद स्यान् महान् धीमान् महाविद्वान् ।
...विभ्रत् कृतीः कुर्वन् भवेच्छ्रीमानयम्बालः ॥ ५ ॥

* *

...सत्यं गिरीशं तं वहन् नित्य महोत्साहम् ।
...मार्गं नयंल्लोके नमस्यः स्यादयम्बालः ॥ ६ ॥

* *

...दो दिव्यचैतन्यः सदानन्दः प्रबुद्धः सन् ।
...मं पालयन् प्रीत्या महर्षिः स्यादयम्बालः ॥७॥

* *

...णा मन्त्रतन्त्राणां सुयन्त्राणां कलानाथः ।
...ती सर्वभूतानां महोच्चः स्यादयम्बालः ॥८॥ चि०

* *

...न् 'विद्ययाऽमृतमश्नुते' मन्त्रं वहन् विद्ये
...वर्णाश्रमाचारं जयीभूयादयम्बालः ॥९॥ चि०

---

...न्दी भाषायां 'लोरी' इति गद्यते । ग़जलरूपेण गीयते ।

## दुर्जन-दूषणम् ।

प्रणेता—महाकविगुमानी पन्तः

सम्पादकः—श्री I रादत्तपन्तः
साहित्याचार्यः, काव्य—व्याकरणतीर्थः

अयि सुजनेतर ! वक्तुं किमपि भवन्तं बचोऽधुना तथ्यम्
मानसमुत्सहते मे विजित्य कोपं तदाकलय ॥ १ ॥

हर्तुं वयो जनन्याः कर्तुमवन्याः सुदुर्धरम्भारम् ।
क्लेशयितुमार्यलोकान् दुर्जन ! ते केवलं जन्म ॥२॥

तत्र पततु शतकोटिः शतकोटीनां समं क्षणे यत्र ।
मातुस्त्वमधिपिचण्डं मूढ ! निषिक्तोऽसि तातेन ॥३॥

यद्गर्भ एव तप्त्वा न मृतो जातोऽपि नाहिना दष्टः ।
जीवसि सुखं दुरात्मन ! दौर्भाग्यं तत्सतामेव ॥ ४ ॥

परुषैर्वचोभिरुग्रैः पुरुषान् महतस्तुदन्नधिक्षिपसि ।
न नु वद विश्वजनीनैः किन्तव कितवापराद्धन्तैः ॥५॥

क्षान्तिर्निगृह्य कोपं खलेषु शश्वत्कृतापराधेषु ॥
महतामयं निसर्गो जीवसि तेनेव मन्दात्मन् ॥ ६ ॥

अपराध्यसि गुणवद्भ्यः सद्भ्यः सारं न वेत्सि किं तेषाम्
यदि सक्रुधो भवेयुः सपदि जड ! त्वां दलयेयुस्ते ॥७॥

सद्भिरशुद्धिरेतैरसाधनैः साधुभिर्न साध्येति ।
माविद्धि मूर्ख ! तेषां निवसति सत्वे क्रियासिद्धिः ॥८॥

द्विष्टस्य सज्जनेन द्विषतोऽसज्जन तवोभयथा ।
असिकूष्माण्ड न्यायात् त्वयमुत्पश्यामि पापात्मन् ॥९॥

त्वं परमत्सरवृत्तिः सततं सन्तोषप्रवृत्तयः सन्तः ।
सामानाधिकरण्यं धूर्त ! कथन्तैस्तव ब्रूमः ॥ १० ॥
त्वं त्वं सुजनः सुजनः काचःकाचो मणिर्मणिः सत्यम्
यो यः स एव सः स्यात्, पापरते ! मत्सरः कोऽत्र ॥ ११ ॥
वर्तस्व धारणायां मा वैरायस्व दुर्मते ! सद्भिः ।
नोचेदुदर्कमस्य द्रागद्रक्ष्यसि कर्मणः सद्यः ॥ १२ ॥
बन्ध्यान् गुणैरनिन्ध्यान् महानुभावान् मुहुर्मुहुस्तुदतः ।
दुर्मुख ! तव कथमेका शतधा न विदीर्यते जिह्वा ॥ ३१ ॥
भीतिर्गता दिगन्ते, करुणा वरुणालये निमग्ना ते ।
याता रसातले ह्रीः, क्षुद्र ! जीवोऽसि तेनैव ॥ १४ ॥
सन्तं गुणिनमगुणिनं स्वमगुणवन्तं गुणाढ्यमितिवदतः
तव कद्वदने ह्यरिमन्नवस्करः शौकरः[1] पततु ॥ १५ ॥
अफलजनिः खलजन इति जीवसि लोकैर्जगत्युपक्रुष्टः
असुधारणादमुष्माद् वराक मृत्युर्वरं भवतः ॥ १६
विरचय्य युक्तिभिस्त्वं सहसा सर्वापकारिणीं वाणीम्
कर्णेजपसि जनानां कर्णेजप ! कात्र ते सिद्धिः ॥ १७ ॥
सरलीकृतोऽपि यत्नात् त्वमात्मनस्तन्निसर्गनिष्पन्नम्
कौटिल्यं न विमुञ्चसि पिशुन ! शुनः पुच्छवत्कुटिलः १८
स्वल्पप्रदानतोऽपि प्रीतः प्रत्युपकृतौ समुद्युक्तः ।
त्वामप्रियं कृतघ्नं श्वाप्यतिशेते श्वपाकस्ते ॥ १९ ॥
भारं वहन् परेषां दूर्वेत्किर-पुष्टविग्रहस्तुष्टः ।
हरतः परार्थसारं खल ! साधीयान् खरस्त्वत्तः ॥ २० ॥
आम्नायोदितमन्त्रैर्दिव्यौषधिभिः सबलनिग्रहणः ।
वशमेति कालसर्पो दुष्ट ! पुनस्त्वं न वश्योऽसि ॥ २१ ॥
वन्यद्वीपि-मृगेन्द्रावप्यतिशेषे सुदुर्धरत्वेन ।
शक्यौ नियन्तुमेतौ त्वन्तु नियम्यो न दुर्बुद्धे ! ॥ २२ ॥

[1]—शूकर पुरीषमिति भावः—

सुकृती क्व सभ्यलोकः क्व दुष्कृती हन्त दुर्मनीष
चक्राङ्करटयोरिव मन्ये बह्वन्तरं युवयोः ॥ २
उष्णत्वमिव हिमांशौ शैत्यमिवार्के चलत्वमिव
स्थैर्यन्नभस्वतीव त्वयि वञ्चक ! नास्ति सौजन्यम्
साक्षादज्ञमभिज्ञं ननु कथयामः कथं भयेन त्वा
अघवन्नवेहि तथ्यं काकः काकः पिकस्तु पिकः
दग्ध्वा स्वमत्सराग्निज्वालाभिः काममात्मधीरत्
अर्हसि कलामनर्हित ! न षोडशीमप्युदारस्य ॥
विद्वद्भिर्जडबुद्धे ! श्रुतशीलाढ्यैरुदूढदोषस्य ।
स्पर्द्धितुमार्यजनैस्सह बालिश ! वद कोऽधिकारस्
सम्पृक्तोऽप्यतिवेलं कुपुरुष ! सत्पुरुषैः स एव
चिरमग्नोऽपि पयोधौ काको न जहाति कृष्णत्व
आपाततः समक्षं मधुराकारोऽन्तरालतः
बुध्यन्ननु हतबुद्धे ! त्वमसिरसि क्षौद्रदिग्ध इव ।
तव मतमनीश्वरं वा जगदजनिर्वा मृतस्य पर
यदभीश्चरसि यथेच्छं त्वमनार्य ! त्यक्तमर्याद
स्वर्निरयं परिणतयोः फलश्रुतिः प्राह सुकृत-दु
अज्ञ वितथ इति मत्वा नूनं वितथे प्रवृत्तोऽसि
नयतो गुरूनधस्तादथोपरिष्टाल्लघूँश्च सप्रसभं
दण्डस्येह तुलायाः प्राकृत ! केयं तव प्रकृतिः ॥
अहमहमिकां विधातुं समीहमानः समं बुधैर
न विलज्ज ! लज्जसे किं स्वयं स्वं नैव हृदयेन
धिग् जन्म ते नराधम ! विफलमजायास्तनस्
न मनागपि सुकृतं यद्विदितमात्मनो भवता ॥
प्रागदुरितैस्त्वमिहेदृक् पापः पापैरमुत्र पापीय
भवितासि वन्धतोऽस्माद् बन्धुल ! ते दुर्लभा मुक्ति
अघमाचरन्निह त्वं सुचिरं नरके पचिष्यसे नि



१. महामहोपाध्याय-श्रीसुधाकरद्विवेद-महोदयाः



२. दैवज्ञवाचस्पतिः श्रीविनायकशास्त्रिवेताल-महोदयाः

...विभेषि बुध्यन् किं तव चेतोऽश्मसारमयम् ॥३६॥
...कालदण्डाद् भीतमघात्मन्वलादमन्वानः ।
...बलमसि वाचा शूरस्त्वं चेतसा चापि ॥३७॥
...वानसि कस्मा-त्वं बलदर्पादनागसः पुंसः ।
...करिणा पृष्टः किं वदयसि तत्र सद्भैरिन्द्र !॥३८॥
...ः सरोषं निगृहीतेन प्रसह्य केशेषु ।
...संयाघः स्मरिष्यते स्वं तदा पाप्मन् ।३९।

इति कुत्सितोऽसि भूयः प्रतर्जितोऽसि प्रबोधितश्चापि ।
अथ किं कदर्य्य ! वच्मो यदहितं ते हितं कुर्य्यात्॥४०॥
मम गर्हया भवानपि मत्सम एवेति मां नु मा ब्रूयाः ।
तव लोकगर्हितस्य स्वरूपकथनं न गर्हासौ ॥४१॥
कर्तुं प्रहर्षवर्षं सताममर्षप्रकर्षमितरेषाम् ।
निरमात् कविर्गुमानी भुवि दुर्जन-दूषणं नाम ॥४२॥

*इति गुमानीकविकृतं दुर्जनदूषणम् ॥*

# शरीर-मीमांसा

...०—त्र्यम्बक विनायक मोहरिरः ।

पा श्चात्यविपश्चिद्भिरेतादृशानि यन्त्राण्याविष्कृतानि सन्ति येषां साहाय्येन सूक्ष्मतममपि वस्तु प्रत्यक्षीक्रियते । तै रणुवीक्षणयन्त्रैरेतन्निदर्शितं यदिदं शरीरं सू... जीवाणुभिः संघटितं विद्यते । ते जीवाणवः ... च्यन्ते । इदानीं वयं प्रथमं जीवाणूनां ... तदनन्तरं तैः कथमस्माकं शरीरं संघटि... दर्शयिष्यामः ।

... जीवाणवो न केवलमस्माकं किन्तु पश्वादी... वृक्षाणामपि शरीराणि संघटयन्ति । यत् किंचित् प्राणिना क्रियमाणमुच्यते तत् तत्त्वतस्तैर्जीवाणुभिरेव क्रियते । इमे जीवाणवो यावत् सजीवाः सन्ति तावदेव नृणामायुः । यदा चेमे निर्जीवा भवन्ति तदा नराणामपि मृत्युर्भवति । एतैरेवास्माकं ज्ञान-कर्मेन्द्रियाणि मस्तिष्कहृदयादीनि सर्वाणि शरीराङ्गानि निर्मीयन्ते । एतेषामेव कारणात् हृदयस्य तथा मस्तिष्कस्य सर्वाः क्रियाः प्रचलन्ति । तेषां वर्णनं सुप्रभात-पाठकानां कृते वयमत्र कुर्मः ।

एते जीवाणवो बहुविधाः सन्ति; केचित् गोलाकाराः, केचिद्दण्डाकाराश्च । एते भोजनं विसर्जनं प्रजननं च कुर्वन्ति । किन्तु, एतेषां भोजनविसर्जनप्रजननपद्धतयोऽतीव संघटिताः सन्ति । यदि वयमेतेषां पार्श्वे किंचित् खाद्यं निवेशयामस्तर्हि तत् खाद्यमादातुं तेषामेकमभ्यन्तरतो बहिरागच्छति; तेनाङ्गेन च तत् खाद्यं परिवेष्ट्य पुनश्च तेन खाद्येन सह शरीरे लीनं भवति । यथा नरा नेत्रैः पश्यन्ति, श्रवणैः शृण्वन्ति, तथेमे न कुर्वन्ति । एतेषां सर्वं कर्म सर्वेण शरीरेण क्रियते । कस्यामपि दिशायामस्तु खाद्यमेते पश्यन्त्यैव । एतेषां गमनपद्धतिरपि भिन्ना

वर्तते। शरीरार्धभागेनैव प्रथममग्रे संसरन्ति, तदनन्तरं द्वितीयार्धभागेनेति सर्वमेतदणुवीक्षणयन्त्रेण प्रत्यक्षं भवति। इदानीं तेषां विसर्जन-कर्म कथं भवतीति कथयामः।

एतेषां शरीरे स्थानमेकं वर्तते। तच्च शून्यस्थानं कथ्यते यतस्तत्र तत् जीवद्द्रव्यमेवैतेषां (प्रोटोप्लेज़म्) नास्ति यत् खलु तेषां शरीरे सर्वत्रैव वर्तते। अनेन जीवद्द्रव्येनैवैतेषां सर्वा क्रिया भवति। तत् जीवद्द्रव्यमन्नात् जायते। अनेनैतदपि स्पष्टं भवेत् यत् यदा नरोऽन्नं न गृह्णाति तदा स किमपि कर्तुं न शक्नोति। अतएव नराः, अन्नं भक्षयन्ति कार्यं च कुर्वन्ति। तस्मिन् जीवद्द्रव्ये त्रीणि द्रव्यान्तराणि सन्ति। एतेषां द्रव्याणां वर्णनं वयं पश्चात् कुर्मः, प्रथमन्तु जीवाणूनां विसर्जन-कर्म कथयामः।

पूर्वकथिते शून्यस्थाने जीवाणूनां मलमूत्रादिविसर्जनं भवति। यदा तत् शून्यस्थानं मलद्रव्येण परिपूर्णं भवति, तदा तेजीवाणवस्तस्यैव द्वारा शरीरात्तन्मलद्रव्यं बहिः कुर्वन्ति। एतेषां प्रजननक्रिया तथा न भवति यथा नराणां भवति। नरेषु नरनारीसंयोगादपत्योत्पत्तिर्भवति किन्त्वेतेषु जीवाणुष्वेकेनैव भवति। यथा—अयं जीवाणुः प्रथमं वृद्धिं याति, तदनन्तरं मध्ये क्षीणो भवति। यदा चास्यात्मा (न्युक्लिअन्) द्विधा भवति, तदा सोऽपि द्विधा भिद्यते। एतदेव तस्य प्रजननम्।

इदमेतेषां स्वल्पतरं वर्णनं किन्तु शरीर-मीमांसा कृते सुपर्याप्तम्। ये खल्वस्मिन् विषयेऽधिकं ज्ञातुमभिलषन्ति ते तद्विषयकान् ग्रन्थान् पठन्तु। अस्माभि गर्भप्रभृति शरीरसंघटनं निगद्यते।

शुक्रे तथा रजसि सन्ति केचित् जन्तवः शुक्रं गर्भाशये प्रविशति तदा तत्रस्थजन्तव जन्तुभिर्मिलितुं प्रयतन्ते, किन्तु प्रायः एक एव जन्तुना सहमिलति, कदाचित द्वावपि द्वाभ्यां मिलतः। तयोर्मिलनेन गर्भस्थापना भवति। कारणं यत् एकसमयेऽपत्यमेकं स्त्री सूते। कदाचित स्त्रीरपत्यद्वयं प्रसूते तदा द्वयोः शुक्र रजोजन्तुभ्यां सहमिलनमभवदिति ज्ञातव्यं गर्भाशये जलमन्यच्च च किंचिद् द्रव्यं गर्भ विद्यते। तत्र तयोः जन्त्वोर्मिलनेनाण्डोत्पत्ति तदण्डं दिने दिने वृद्धिं गच्छति। यदा पूर्णविकासो भवति तदा तदण्डं द्विधा पुनश्च तद् विभागद्वयं वृद्धिं याति; विकास चैकैकं यथापूर्वंद्विधा भवति। पुनरपि तदण्ड वर्धते भिद्यते च। एतान्यण्डान्यपत्याकार ङ्गानि भवन्ति। इमान्यण्डान्येवोपर्युक्ता जी सन्ति। पञ्चमासाभ्यन्तरे तदपत्यं सावयवं न्तरं सुदृढं च भवति। नवमासानन्तरं त रागन्तुमिच्छति। एकदिन आगच्छति च। तस्यापत्यस्य वृद्धिस्तथैव दत्तक्रमेण भवति। रस्था जीवाणवो यथा वृद्धिं यान्ति तथा ना एतेषां वृद्धिनाशौ जन्मप्रभृत्येव प्रचलतः। प्रथमार्धायुषि प्राधान्येन प्राणिनां वृद्धिर्भवति यार्धायुषि च क्षयः। यदा शरीरस्थाः सर्वे णवो मृता भवन्ति तदा नराणामपि मृत्यु

नाशो विशेषतो विषमितपञ्चमहाभूतेभ्यो वात् जलात् वायुतश्च भवति। तस्मात् मिदं सदैवतेभ्यो पञ्चमहाभूतेभ्यो गोपनीयम्। तत् संवृत्तं यदिदं शरीरमेतैर्जीवाणुभिः विद्यते। अत्रेयं शङ्का भवति यत् यदि सर्वे ईक्षणादिकं कर्म स्वशरीरेणैव कुर्वन्ति तु त एव वर्तन्ते तत् कथमस्माकमपि शरीरं णादिकं कर्म न करोति किमर्थमस्मासु न्द्रियाणि भिन्नानि सन्ति। अस्याः शङ्काया दत्तम्। यदा सर्वे एते जीवाणवः शरीरे सम्मिलन्ति तदा तेषां केचिदीक्षाकार्यं केचित् च श्रवणकार्यं कुर्वन्ति। अनेनप्रकारेणेक्षणकार्यं-कुर्वाणानां श्रवणशक्तिः श्रवणकार्यं कुर्वाणानामीक्ष-णशक्तिश्च नष्टा भवति। यदि कस्यचित् नरस्येन्द्रि-यमेकं जन्मप्रभृत्येव न भवेत् तस्यापि तदिन्द्रियकार्य मिन्द्रियान्तरेण भवितुमर्हतीति विज्ञानविदो वदन्ति। एतै र्जीवाणुभिः कथमस्माकमिन्द्रियाणि संघटितानि सन्ति; कथमेतैः हृदयस्य तथा मस्तिष्कस्य क्रिया भवन्ति; अस्माकमन्ता रचना कथं विद्यत इत्यादि सर्वमग्रे कथयिष्यामः। इदानीमत्रैव विरमामः।

## 'शिवराजविजय'—विमर्शः।

—श्रीदीनानाथशर्मा शास्त्री सारस्वतः।

'पुराणमित्येव न साधु सर्वं
नचाऽपि काव्यं नवमित्यवद्यम्।
सन्तः परीक्ष्याऽन्यतरद् भजन्ते
मूढः परप्रत्ययनेयबुद्धिः॥'

कालिदासस्य।

'शिवराजविजयो' नाम अर्वाचीनकालिकः सँस्कृत्रिम भारतरत्नपण्डितश्रीमदम्बिकादत्तव्याससाहित्या-प्रणायि-इति नेदमपिहितं सँस्कृतगवीज्ञानां विज्ञा-अस्य काव्यस्य नवीना सञ्ज्ञा 'उपन्यास' इति, कालिकी च 'आख्यायिका' इति व्यपदेष्टुं शक्यते।

तथा च श्रीविश्वनाथः—

"आख्यायिका कथावत् स्यात् कवेर्वंशाऽनुकीर्तनम्।
अस्यामन्यकवीनाञ्च वृत्तं पद्यं क्वचित् क्वचित्।
कथांशानां व्यवच्छेद आश्वास इति बध्यते॥
अन्याऽपदेशेनाश्वासमुखे भाव्यर्थसूचनम्'
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम्।"

(साहि० ६ प० ३३४-३३६ का०)

यद्यपि लक्षणमिदं 'शिवराजविजये' तथा न सङ्गच्छ-टीति, यथा 'हर्षचरिते'; तथाऽपि 'हर्षचरित'-मुद्दिश्य एतल्लक्षणनिर्म्माणादीषद्भेदेऽपि 'शिवराजविजय' नाऽऽ-ख्यायिकात्वाऽपायः। अस्मिन् हि उपन्यासे यद्यपि कविना स्ववंशाऽनुकीर्तनं नाऽन्वष्ठायि; नवाऽन्यकवीनां वृत्तं समद-र्शि; तथापि निर्म्माणहेतूदाहारे द्वित्रकवीनां सामान्यसंस्तवो वितीर्ण्ण एव। केषां केषाञ्चित् प्राज्ञानां पद्यान्यपि क्वचित् क्वचिदुद्धृतानि। कथांशानां व्यवच्छेदा अपि विन्यस्ताः। निश्वासमुखे अन्याऽपदेशेन भाव्यर्थसूचकाः श्लोका अप्युपा-त्ताः। आदौ पद्यैर्म्मङ्गलमप्याचरितम्। खलादेः सामान्यपरि-

चयोऽपि निरुक्तः । सरसं वस्तु गद्यैरेव च सन्दब्धम् । कथायां कथांशव्यवच्छेदका आश्वासा न भवन्ति, आख्यायिकायाञ्च भवन्तीत्यनयोर्भिदा । दण्डिमते त्वीदृक्षस्य काव्यस्य आख्या 'कथा' इत्यपि ।

'तत् कथाऽऽख्यायिकेत्येका जातिः सञ्ज्ञाद्वयाङ्किता
"वक्त्रं चापरवक्त्रञ्च सोच्छ्वासत्वञ्च भेदकम् ।
चिह्नमाख्यायिकायाश्चेत् प्रसङ्गेन कथास्वपि ।
आर्य्यादिवत् प्रवेशः किं न वक्त्रापरवक्त्रयोः ।
भेदश्च दृष्टो लम्भादिरुच्छ्वासो वाऽस्तु किं ततः"

इति प्रघट्टकेन व्यपदिश्यते ।

किञ्च—एवं सत्यपि 'शिवराजविजयस्य' कथांशानां व्यवच्छेदाद् 'आख्यायिका' इत्येव नाम सौष्ठवं वहति; दण्डिनोऽपि नाऽत्र विप्रतिपत्तिः । यद्यपि 'साहित्यदर्पण'-कृता कथांशव्यवच्छेदस्य नाम 'आश्वास' इति, श्रीबाण-भट्टेन च 'उच्छ्वास' इति न्यधायि; तथापि व्याससहोदयेन उच्छ्वासस्य शोकक्रोधाऽऽदौ वर्णनीयत्वेनाऽस्वारस्यपाताऽऽ-तङ्कात् ।

"प्रौढिप्रकर्षेण पुराणरीति-
व्यतिक्रमः श्लाघ्यतमः कवीनाम्"

इति प्रघट्टकेन सप्रौढि सा सञ्ज्ञा परिहृता, 'निश्वास' इत्यस्याऽपि शोक एवोपयोगात् 'श्वास' इति सञ्ज्ञा साध्वी ।

यद्यपि 'शिवराजविजय' इत्यत्र 'शिवराजस्य विजयमधिकृत्य कृतो ग्रन्थः' इति विग्रहग्रहे '(तद्) अधिकृत्य कृते ग्रन्थे ४ । ३ । ८७ पा०' इत्यर्थाऽधिकृतौ "वृद्धाच्छः ४ । २ । ११४ पा०' इति छाऽऽदिप्रत्ययप्रसङ्ग आपपति; तथाऽप्यसौ भूत्वाऽपि 'लुबाख्यायिकाभ्यो बहुलम्' इति वार्तिकेन लुप्यते । न च 'आख्यानाऽऽ-ख्यायिकेतिहासपुराणेभ्यश्च' इति वार्तिकेन पुनरपि ठक्प्रत्ययप्रासिद्धं र्वारैवेतिवाच्यम्; तत्र वार्तिके 'तदधीते तद्वेद (४ । २।५९ पा०' इत्यर्थस्यैवोपादानाद्; अत्र च तद्ग्रहणात्; शिवराजविजयाऽध्येतृषु एव च तस्याऽऽपादात् ।

अस्मिन् 'शिवराज विजये' द्वादश निश्वासाः, निश्वास-चतुष्काऽऽत्मकाश्च त्रयो विरामा वर्तन्ते । इह दक्षिणदेशाऽ-वतंसस्य महाराष्ट्रराष्ट्रस्वातन्त्र्यपोतकर्णधारस्य राष्ट्रचक्रवर्तिनः 'शिवाजी' ¶ इति ख्यातस्य उदाहृतः, तेन चाऽसावेव धीरोदात्तो नायकः । उप गौरसिंहरघुवीरसिंहादयोऽत्र । प्रतिनायकोऽत्र विजयपुराऽधीशश्च । नायिकाऽत्र सौवर्णी । नच-शिवराजस्य स्त्रिया एव नायिकया भाव्यमिति-तत्स्त्रिया अत्र चरित्राऽनुपादानाद् । मुख्यचरित नायिकात्वाद् । अत्र प्राय एके वैदर्भीमत्र मुख्यं प्रसादगुणोऽत्र; क्वचित् क्वचिद् ओजोऽपि । वीररसे इतरेऽङ्गभूताः । अत्रत्यं गद्यं चूर्णकमुत्कलिकाप्रायमपि

## * ग्रन्थकृतः सङ्क्षिप्त-परिचयः *

सामान्यतया काव्यपरिचयं निरूह्य सम्प्रति शि विजयकारस्य संस्तवो वितीर्य्यते—

राजपूतानाप्रान्तीयजयपुरसमीपवर्तिनि मानपुर एकस्मिन् ग्रामे ईश्वररामो गौडब्राह्मण ऊषिवान् । तत हरिरामो 'रावतजी की धूला' ग्राम उवास । तनूजन् राजारामो धूलाग्रामं हित्वा वाराणसीमशि तस्य दुर्गादत्तदेवीदत्तेतिनाम्ना पुत्रद्वितयी जज्ञे । दु जातु जयपुरे, कदाचिच्च काश्यां न्यवात्सीद् । एतद् तनुजनुषोऽम्बिकादत्तस्य जन्म 'जयपुर' एव १९१५ (१८५८ ई०) चैत्रशुक्लपक्षाऽष्टम्यामभूद् । दु भूयो वाराणसीमाययौ । अयमम्बिकादत्तो दशवर्षवयस्क हिन्दीसमस्यापूर्तिं कवनञ्च विधत्ते स्म । क्रमशोऽयं योगवेदान्ताऽऽदिदर्शनशास्त्रेषु सङ्गीतसितारजलतरङ्ग नानाविधवादित्रविद्यायाञ्च चातुरीमुवाह । १९३२ गवर्नमेंटकालेजे † आङ्गलविद्यामपि पपाठ । स्वभा तितश्च चिकित्साग्रन्थानप्यध्यैष्ट । बङ्गभाषानिष्णातोऽ ह्यत । अनेन मिथिलामहाराजराज्यकाले सामवताल्यं कर्मापि प्राणायि । अयम् १९३५ वर्षे काश्मीरि कालेजं प्रविश्य स्वामिविशुद्धानन्दाऽध्यक्षतायां परीक्षां व्यासपदवीञ्चाऽलब्ध । १९३७ वर्षे साहित्याऽऽचार्य

† काले जायते इत्यर्थे 'प्रावृट्शरत्कालदिवां जे' सूत्रेणा ऽलुक्समासे कृते कालेज इति संस्कृत्रिमपदमभ्यव

...वासेनैव प्राथम्यं भेजे। कलिकातायामस्य सनातन-...श्चाविंशतिर्व्याख्यानानि जातानि। अयं चतुर्विं-... Minutes ) शतश्लोकीनिर्म्माणक्षमतावत्त्वाद् ...क' पदेन सह रजतपदं महिष्टश्लोकञ्च प्राप। ...वत्सरे जीविकां कृत्वाऽपि ऋणबाधित एवाऽविन्त। ...त्सरे 'बिहारीविहार' पुस्तकं व्यरचत्। १९९० ...कृत्वा भारतरत्न-भारतभूषण-शताऽवधानाद्यनेको-...। पटना गवर्नमेंट कालेजे शिक्षक-(Professor) ...ऽपि १९५७ वै० ( १९०० ई० ) वत्सरे नवम्ब-... एकोनविंश्यां तिथौ द्विचत्वारिंशद्वर्षवयस्कतायां ...। अस्य तनूजो राधाकुमारव्यासः। स च ...यामेव एकं पुत्रं विरहय्य मृतः। शिवराजविजयः ...र्य-महोदयेन कदाचिद् १७९९ख्रिस्ताऽब्दे निर्म्मितो ...एतस्य प्रथम संस्करणम् १९०१ ऐशवीये वर्षे चन्द्र-...काश्यां मुद्रितम्।

## एतन्निर्म्मिता ग्रन्थाः।

...मीमांसा, मूर्तिपूजा, विहारीविहारः, शिवराज-... साहित्यनलिनी; सुकविसतसई, गद्यकाव्यमीमांसा, ...कौतुकपचासा, गुप्ताऽशुद्धिप्रदर्शनम्, क्षेत्रकौशलम्, ...म्, उपदेशलता, ललितानाटिका, पुष्पवर्षा, कथाकु-... दुःखद्रुमकुठारः, धर्म की धूम, इत्यादयो ग्रन्था अनेन ...ताः।

## शिवराजविजयाऽऽलोचना।

...ऽम्बिकादत्तव्यासेन 'शिवराजविजयं'* निर्म्माय ... विदुषां समाजे सत्यममरकीर्तिरासादिता। ...स्य पुस्तकमिदं वीक्ष्य तस्य साहितीसंहतिपटिमा ... द्योतते। तेन शिवराजविजयीयप्रथमसंस्करणस्य ... 'यशस्विसिंहसुखेनमहादेवपण्डितस्य या प्रशस्तिः ... सा सत्यम् अस्मिन्नेव कविवरे घटते। तत्रत्यं ...म्—

"दूतवर! साधु। तव भाषणभङ्गीमत्यन्तं प्रशंसामि। न तव भाषणे गौरवमवगूर्य्यते, पदवैधुर्य्यं भ्रियते, प्रसादो निरस्यते, संशयाऽऽपादकपदप्रचयो वा प्रचीयते। विलक्षणं तव पाटवमालापेषु, गहनगहनैः कोमलकोमलैर्मधुरमधुरैर्वाचां विलासैर्मनो हरसि; यदेव वक्तुं प्रवर्तसे, तन्मूर्तिमिव पुरतो विलिखसि; यदेव वक्तुमीहसे, तदासारप्रसारैरिव परितः प्लाव-यसि। धन्यः शिवो यस्त्वादृशान् कल्पनाकेसरिणो दूतत्वे नियुनक्ति। त्वदुक्ति श्रवणविरिरंसैव न भवत्यस्माकम्" इति। अस्मिन् गद्ये 'दूतवर!' इत्यपसार्य्य 'पण्डितवर व्यास-महाभाग!' इति योज्यम्। 'दूतत्वे नियुनक्ति' इत्यत्र कवित्वे न्ययुङ्क्त' इति परिवर्त्यम्। तद् इदमेव सर्व्वं कविव-राऽम्बिकादत्तव्यासे घटते। तेनाऽत्र उत्प्रेक्षास्वभावोक्त्या-द्यलङ्काराणां सीमा प्रदर्शिता। समासबहुलेऽप्यस्मिन् काव्ये न काठिन्यम्; प्रत्युत प्रसादपूरः पूर्ण एव चकास्ति। कवि-नेदं पुस्तकं सन्दभ्य शिववीरचरितञ्च सङ्कलय्य महाराजशिव-राजोऽपि सत्यं कृतार्थीकृतः।

अस्मिन् भारतवर्षीय-यवनकालिक-दुर्दशायां पर्य्याप्तः प्रकाशः कृतः। शिवराजयशस्विनोरालापश्च मनोमोदकरः। माल्यश्रीककर्तृकं परमात्मचिन्तनमपि रामणीयकं धत्ते। अत्र रघुवीरसिंहस्य गौरसिंहस्य च चरितं सर्वरसान् दधत् सत् पुस्तकस्य सुषमां परिपुष्णाति। तन्निध्यानेन विस्मयः, प्रसन्नता, उत्साहः, आवेशश्च यौगपद्येनैव प्रादुर्भवन्ति। सौवर्ण्याश्चरित्रमपि मनोमोहकरम्। अत्र अवरङ्गजीवस्य निर्दयता, कृतघ्नता, कपटपटुता, च सम्यङ् निदर्शिताः। क्रूर-सिंहस्य क्रूरता हृदयं दन्दग्धि। शिवराजराजनीतिश्चाऽपूर्व-मुल्लासं व्यनक्ति। किमु कथयामः; समालोचनशैलीशून्याना-मस्माकं लेखनी अशक्ता कविवरगुणगणने; तत्पुस्तकं समीक्ष्य स्वयं तत्पाठका एव प्रमातुं क्षमेरन्नित्याशासा नो विद्ये। कानिचिच्च '**गच्छतः स्खलनं क्वाऽपि भवत्येव प्रमादतः**' इति न्यायेन स्खलनान्यत्र जातानि; परं तानि—"**एकोहि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः**" इति नयेन न वैरस्यमापादयन्ति। इत्यलमतिप्रसङ्गेन।

—※—

* शिवराजविजयस्यैतिहासिकोपन्यासत्वाद् इहत्यः ...स्यैतिहासिकः; क्वचित् क्वचिन्नियमाऽनुसारं ... कल्पितं वृत्तमपि सन्दब्धम्।

# ❀ सुप्रभातसारस्तवः ❀

"प्राच्यादिशः" प्रकटयत् परमं महत्त्वं, सत्त्वं समेधयदुदार-मपारशोभम् ।
धीशुद्धिमादिश-ददोषपथं च नित्यं निर्दर्शयज्जयति किञ्चन "सुप्रभातम्" ॥ १ ॥
धीता "विमोह" रजनी, विपुलावकाशा "आशाः" प्रकाशमभजन् जनता "प्रबुद्धा" ।
विश्वत्र रागमयता प्रसृता, विभाति "भास्वत्"प्रभावकलिते भुवि "सुप्रभाते" ॥ २ ॥
"जाड्यं" विलीनमखिलं, "कमलं" विकास माधत्त चारुचतुरा "लि" विलासमूलम् ।
"दोषाकरो" च्छ्रयकथा गलिता, निरस्तमालस्यलास्य मुपसेदुषि "सुप्रभाते" ॥ ३ ॥
दुर्ज्ञेयतामुपगता "पदवी पुराणी" भूयोऽभजन्नयनगोचरतां चिरेण ।
लोकैः परस्परमबोधितरां "स्वरूपं" भाग्येन भारतभुवोऽश्नुति "सुप्रभातम्" ॥ ४ ॥
"दुष्टग्रहाः" प्रशमिता, स्तिमिरावलीढा "दृष्टिः" प्रसादमधिगम्य पुनः क्षमाभूत् ।
लब्धं मुहुः स्वविधिबोधबलं जनेन श्रेयस्करे जगति जाग्रति "सुप्रभाते" ॥ ५ ॥
निःसंशयं समभवत्सुलभावगाहा "प्राची" समुज्ज्वलरसाथ "सरस्वती" सा ।
सद्धर्मधारणधुराऽभ्युदगात्पुनश्च श्लाघ्यं स्वरूपमुपबिभ्रति "सुप्रभाते" ॥ ६ ॥
"सच्छाखिभि" र्विकसितं, भुवि "सौमनस्यं" किञ्चिन्मनोहरमुदित्वरतामयासीत् ।
लब्धः क्षणो बत "सदागमसेवनस्य" प्रोज्जृम्भणं भजति सम्प्रति "सुप्रभाते" ॥ ७ ॥
आशैकलक्ष्य ! सुखदर्शन ! "सुप्रभात" ! नोपैषि कस्य सुजनस्य नमस्यतां त्वम् ।
येन त्वया युगपदेव तमोऽपनीय "प्रोज्जीवनः" प्रतिदिशं प्रथितः प्रकाशः ॥ ८ ॥

इति सुप्रभातशुभसङ्गतोदयात्क्रमशः पुनः कलयतात्र चेतनाम् ।
गिरिधारिणाऽलवरवासिनात्मनः प्रमदाप्तयेऽरचि "प्रभातमङ्गलम्" (?) ॥ ९ ॥

भट्ट गिरिधारीशर्म्मा, "कविकिङ्करः"
अलवरीयः ।

(७) शाखिनो वेदा वृक्षाश्च, सदागमो वायुः श्रेष्ठशास्त्राणि च । (८) प्रोज्जीवनो नवीनजीवनाधायी, तत्त्वेन तुल्यत्वमुभयत्रापि ।

## वसन्तविलासः ।

! वसन्त ! भवदागमनं विदित्वा
नीप-वकुलार्जुन-चूतवृक्षाः ॥
वांशुकमलं परिधाय सन्ति
मञ्जुलकरैरुपकर्त्तुकामाः ॥ १ ॥
रो-मधु-निपान-मदान्ध-भृङ्गाः
यन्त्यनुपलं शुभमञ्जरीस्ताः ॥
आसितमहीपवनो न कुर्य्यात्
-विहार-निपुणेष्वपि किन्तु तापम् ॥ २ ॥
निलोऽपि मलयाचलसम्भवस्तान्
-पङ्कज-जयध्वज-पुष्पहारान् ॥
सहायकगणानवलम्ब्य तूर्णम्
मत्र भवतो नितरां विभाति ॥ ३ ॥
रमत्तवनिताधरपानलुब्धान्
भिरङ्ककनकोत्तमतल्पसुप्तान् ॥
यन्त्यतिमनोहरशब्दवृन्दैः
किलास्तव समागमनं विलोक्य ॥ ४ ॥
निधाय कुचकुड्मलशीर्षभागे
विरच्य विमलाञ्च नितम्बदेशे ॥
रं निजपदे विनिधाय नेत्रे
लं स्मरसुखं किमु यान्ति नार्य्यः ॥ ५ ॥
-चूत-विमलाङ्कर-शातवाणो
फ-निकुरम्ब-शरासनज्यः ॥
ऽबलारमणचित्तमलं विवेद्धुं
गतः सबलधीर वसन्तवीरः ॥ ६ ॥

—श्रीजीतन झा शर्म्मणः

## कमलाकर-सिद्धान्ते विशेषता ।

ले०—श्रीबलदेव मिश्रः, ज्यौतिषाचार्यः,—



णकाग्रगण्यस्य कमलाकरस्य मते वह्नावेवोष्णत्वमस्ति; रवेः किरणेपूष्णत्वं नास्तिः यच्च रवेः किरणे उष्णत्वमस्मदादिभिरुपलभ्यते तत्तु वह्नेरेव न स्वतोऽर्कतेजसः, अर्क किरणाः पृथिवीस्थपदार्थेषु किल संलग्ना भवन्ति; तदा पृथिवीस्थवह्निरेव स्वस्थानतो बहिरागत्य अर्ककिरणेपूष्णत्वमुत्पादयन्तीति ।

भूस्थाम्बुसृद्वह्नियोग एव स्वत उष्णत्वं वर्त्तते अर्ककिरणयोगादुष्णता न भवति अतएव सूर्यकिरणयोगेऽपि नक्षत्रगोले ग्रहगोले चोष्णताया न प्रतीतिः ।

रविरश्मेस्तथाग्नेर्योगाद्योष्णताऽनुभूयते; तत्रापि योष्णता सा चेद्रविरश्मेरेवेति कथ्यते; तन्न यतो यत्र गोले वह्नेरभावस्तत्र रविकिरणयोगसत्त्वेपि उष्णताया अभावात् सूर्यतेजसि उष्णत्वं नास्तीति निश्चयः ।

अस्मदादिभिरपि प्रत्यक्षतो दृश्यते केचित्पक्षिणो दूरे आकाश अटन्ति, परन्तु तत्र तेषां पक्षदाहो न संपद्यते, तथा रवितेजसोऽसह्यत्वात् पृथिवीसन्निधौ

नीचै रेव ते न भ्रमन्ति । विमानस्था अपीदानीन्तना परमोर्ध्वं गच्छन्त उष्णताया विशेषत्वं नानुभवन्ति । उच्चभूमौ, परमोच्चगिरेः शिखरे वा स्थितानामपि विशेषोष्णताया अनुभवो न भवति । आर्द्रभूमौ चैत्रवैशाखमासयोरपि हालिकैः कृषकैरत्यन्तोष्णताया: कष्टो नानुभूयते ।

न्यायवैशेषिकमतेऽपि तेजः पदार्थस्य परमाणावुष्णत्वं स्वीक्रियते; परन्तु तस्योपलब्धिस्तु उपाधिवशेन एव भवतीति कथ्यते अनेनापीदमेवावतरति, यत् सूर्यतेजस उष्णताव्यञ्जिकायाः पृथिव्याः सम्बन्धे तत्र तेजसि उष्णत्वमनुभूयते एवं तस्यैव सूर्यतेजसश्शीतलचन्द्रबिम्बसंसर्गे उष्णताया अनुभवो न भवतीति ।

एतादृशस्य विचारस्यावसर एवं जायते, यच्चन्द्रगोलो जलमयस्तत्राग्निभागो न वर्त्तते तदा जलगोल इन्दुर्मृत्तिकया संयुतः पश्चादर्ककिरणैः संतप्तः सन् शैत्यं स्वीयगुणं परित्यज्य उष्णः कथं न भवतीति तथा च सिद्धान्त तत्त्वविवेके कमलाकरवाक्यानि-

"विनाग्निभागं जलगोलइन्दुर्मृद्भागमिश्रोऽर्ककरैः प्रतप्तः ।
मुक्त्वा स्वशैत्यं न कथं भवेत्त्वं शृणूत्तरं तत्त्वविवेक-विज्ञ ॥
नोष्णत्वमर्कस्य करेषु वह्नावेवास्ति तथ्येन कराः स्वभावात् ।
स्वस्थानतस्तेन तदुष्णतास्याद्रवौ तु सा नैव कथंचिदत्र ॥
भूस्थाम्बुमृद्वह्नियुतं किलोष्णं भवे[1] हजं ? नोऽर्ककरैरतोऽस्ति ।
अन्युष्णताकांशुजयोगसिद्धा सार्कस्य रश्मेरिति ये वदन्ति ॥
न तन्मतं सत्प्रतिभाति नूनं वह्निं विनान्यत्र तदप्रसिद्धेः ।

एवमादर्शादौ तस्यैव विशेषः ।

आदर्शे दृग्रश्मिः पतति, दर्पणोदरं जल... तरलं च भवति तत्र तरल आदर्शादरे पति... श्मियग्रं स्थातुं न शक्नोति, न च घनात्मकं दृ... विदुध्वा बाहर्गन्तुं प्रभवति अस्मात्परावर्तितं ... येनैव पथा तस्य गमनं भवति तेनैव पुनः प्रत्या... न भवति, अत्र गणितज्ञानामेष सिद्धान्तो यत्... परावर्त्तितकोणौ मिथस्तुल्यौ भवतः अर्था... कस्या अपि भित्तेरुपरि जवेनैकं प्रस्तरखण्डं ... त्यते तदा पुनस्तत्खण्डं प्रक्षेप्तु रेव हस्ते प्रत्याव... न भवति, किन्तु तत्खण्डं भित्तिधरातलोपरि ... विन्दुस्थ; लम्बरेखया पतन-समये यत्प्रमाणकं ... निर्माति; तत्तुल्यमेव कोणं तया लम्बरेखया नि... निर्गच्छति च । प्रथमः कोणः पतित कोण इति ... द्वितीयश्च परावर्त्तित इत्यनेन व्यवह्रियते, को... साम्यं भवति । एतत्सिद्धान्तानुसारेण दृग्रश... दर्पणोदरे यत्प्रमाणकं कोणं निर्माति तत्प्रमाण... कोणं निर्मायनिर्गच्छंश्च यान् यान् पदार्थान् ... श्लिष्यति त एव तत्र दर्पणोदरे तस्मिन्नेव वि... प्रतिबिम्बिता भवन्ति, द्रष्टा दृश्या च भवन्ति ।

नेत्ररश्मेर्यादृशी स्थितिरस्ति तथाविधैव ... रश्मेरप्यस्ति । कस्या अपि भित्तेरग्रतो दर्पणं ... प्यम् । तदा सूर्यरश्मिस्तत्र पतितो भूत्वा पा... कोणतुल्यं परावर्त्तितकोणं विदधत् भित्तौ ... रुद्धो भवति तत्रैव चेत् दृष्टिः स्थाप्यते तदा ... णोदरे प्रतिबिम्बतः सूर्यो दृश्यते । अनेनेदमपि ...

---

[1]—मूललेखेऽपि पाठोऽयमशुद्धः प्रतिभाति

...यथा वयं तत्रस्थदृष्ट्या प्रतिविम्बितं सूर्यं ...तथा भगवान् सूर्योऽपि तत्र दर्पणोदरे ...म्बितानस्मानपि द्रष्टुं शक्नोति । एवं दर्पणो- ...लेऽपि प्रतिविम्बसिद्धान्तो ज्ञेयः । इत्यनेन ... ज्ञायते यत्सूर्यरश्मिनेत्ररश्मिजात्योस्सा- ...स्ति ।

...कमलाकर-निबन्ध-श्लोकाः—

"आदर्शादौ दृश्यते यच्च दृष्ट्या
वैचित्र्यं तद्दृष्टिजं च शृणु त्वम् ।
...रस्यग्रं यत्र लग्नं तदेव
दृश्यं नान्यद्दर्पणादौ तदग्रम् ।
...स्थातुं शक्यं नैव तत्राग्रतो वा
गन्तुं शक्यं त्वम्बुवन्निर्मलत्वात् ॥
अग्रे मार्गस्यावरोधात्क्रमेण
तस्मात्तद् दृग्रश्मिसूक्ष्माग्रकं तु ।
शक्त्या स्वस्याथो परावर्त्य चान्यद्
यद्दिक् स्थाने संविलग्नं भवेद्धि ।
दृश्यं दृष्ट्यावश्यमादर्श-संस्थं
दृग्रश्म्यग्रस्थानसक्तं भवेत्तत् ।
तन्निर्मलत्वाद्रविरश्मयोऽपि दृग्रश्मिरीत्यैव गतास्ततस्ते ।
यत्र स्पृशन्त्येव तदस्य देशे लग्ना अपूर्वा इह भूस्थ-लोकैः ॥
तत्रस्थदृष्ट्यैव हि दृश्यतेऽर्कः स्वादर्शगोऽपि प्रतिबिम्बरूपः ।
एवं परावर्त्य गताद्दृगुत्था रवौ विलग्नाश्च ततोऽर्कबिम्बम् ॥
आदर्शगं दृश्यत एव तद्वज्जलेऽपि यद्यत्प्रतिम्बितञ्च ।
स्वल्पं मयोक्तं किल विस्तरोऽस्य महान् विचारस्य दृगुद्भवस्य ॥
प्रायोऽर्करश्म्यंशकजातिजास्ते दृग्रश्मयो दृष्टिभवा नृणां तु ।
भित्वाथ यच्चार्ककरा गतास्तं भित्वैव गच्छन्ति यतो दृगुत्थाः॥"

---

# भट्ट श्रीक्षीरस्वामी ।

लेखकः—

पं॰ श्रीगिरिजाप्रसाद द्विवेदः, ज्यौतिषाचार्यः

भारतभूमि विहाय विदेशेऽपि शिक्षित समाजे श्रीमदमरसिंहप्रणीतोऽमरकोषः सर्वतो लब्धास्पदो विश्रुतश्चेति नैषदपि विचिकित्सावतारः । भारतवर्षे प्रथमं बाला अमुमेव ग्रन्थरत्नं सम्यगुद्घुष्य ...मरणीकर्तुं शिक्षकैर्नियोज्यन्ते । भूयिष्ठेष्वपि कोषग्रन्थेषु सर्वाङ्गस्यूतसौष्ठवमहिम्ना, विश्वजनीनतया चेतरानसारानिव विधेयतामापाद्य कृतमनेन चेतसि पदं संस्कृतप्रणयिनामिति विश्वतोमुखः सिद्धान्तः । अत एवामरसिंहो बौद्धधर्मदीक्षितोऽपि ब्राह्मणानां बौद्धानां जैनानां च सममेव मानस-सारसोल्लासने प्रभविष्णुरभूत् । कथमन्यथा सुमतिचन्द्रबौद्धस्य, आशाधर-नाचिराजजैनयोस्तथा क्षीरस्वामिमल्लिनाथ-अप्पय्यदीक्षितप्रमुखानां ब्राह्मणविदुषां टीकाग्रन्था उपलभ्येरन् । किं बहुना, चीनतिब्बत-भाषास्वपि सांप्रतमधिगता अमरकोषानुवादाः । यथादेशकालं च प्रसिद्धेषु व्याख्यानिबन्धेषु महेश्वरभानुदीक्षितयोरेव बहुलः प्रचारः । भानुदीक्षितस्य 'व्याख्यासुधा' वस्तुतः शब्दार्थस्वारस्यसेविनः सुधामेव धाययन्ती स्वीयामन्वर्थतां द्योत-

६

यति। परं प्राचीनेषु भट्टक्षीरस्वामी स्वीयेऽमरकोषोद्घाटने बहूनां प्राचामर्वाचां च व्याख्यातॄणां हृदयोद्घाटनपूर्वकमर्थात् स्थलविशेषेषु नामग्राहं तेषां मतान्यालोच्य, विसंवादांश्च परिहृत्य, स्वमतमति प्रौढ्या व्याकुर्वन्, अनन्यसाधारणं निजं वैदुष्यं सत्यापयति।

इदममरकोषोद्घटानाभिधेयं व्याख्यानं पूनानगरात् श्रीकृष्णजी गोविन्द ओक महाभागेन प्राचीन लिखित-पुस्तकाधारेण प्रस्तावना-परिशेष-शब्दसूचनिकादिभिर्महतायासेन परिष्कृत्य ईशवीये १६१३ वर्षे प्रकटीकृतम्। येन साधूपकृतः संस्कृतसाहित्य-संसारः।

## अस्य समयः।

स्वामी निजटीकायां भोजं सस्मार, तथाचायं वर्धमानेन गणरत्नमहोदधौ च स्मृत इतीशवीयैकादशशताब्द्याः परभागवर्ती प्रतीयते। किंच प्राच्य-प्रतीच्योदीच्यादिनामनिर्देशान्मध्यदेशीय इत्यवगम्यते। राजशेखर-भोजयोः संपर्कोपलम्भात्तथा च व्याख्याने बहूनां हिन्दीतथोत्तरभारतीय-देशीभाषाशब्दानां प्रयोगादेतदूहनं तथ्यभूतं प्रतीयते। अयं स्वामी शैवागमदीक्षित इति मङ्गलाचरणेनान्यैश्च व्याख्यागतैस्तत्तदनुषङ्गैः स्फुटं निश्चीयते।

मङ्गलाचरणं यथा—

दिश्याच्छिवानि शिवयोस्तिलकायमान-
गोरोचनारुचिललाटविलोचनं वः।
अन्योन्यगाढपरिरम्भनिपीडनेन
पिण्डीभवन् बहिरिव स्फुटितोऽनुरागः॥

* * * *

अथात्मनो हृदयग्राहकं पाण्डित्यं प्रदर्शयति—
'सहजो यः समुल्लासः क्षीराब्धेः सोऽपि मन्द्र-
चान्द्र' इत्यत्र किं कुर्मो गतानुगतिकं जगत्॥

* * * *

कनौज—परिसरवर्ति-काकुपदस्थान-प्रति-
क्षीरेश्वर सम्बन्धादस्य क्षीरस्वामीति नाम प-
इत्थमयं पूर्वदर्शित-सम्बन्धानुरोधात् मध्यदेशीय
नतु दाक्षिणात्यः। भवतु नाम, प्राधान्येन प्र-
विमर्शका विचारयन्तु।

स्वामिना ये पूर्वतनाः कोषकृतः प्रमाण-
पन्यस्तास्तेषां नामावलिः—

(१) कात्यः, (२) मुनिः, (३) भा-
(४) माला तथा मालाकारः (५) नि-
(वैदिकः) (६) शाश्वतः, (७) अमर-
(८) नाममाला, (९) अभिधानकारः, (
अभिधानशेषः, (११) अनेकार्थः, (१२)
(१३) दुर्गः, (१४) भोजः, (१५) रुद्रः।

## प्राचीन-टीकाकाराः—

*(१) उपाध्यायः, (२) गौडः, (
भोजः, (४) आचार्यः, (५) नारायणः, (
टीका-सर्वस्वम्।

## आयुर्वेदविदां प्रभासः।

(१) सुश्रुतः, सौश्रुतिः, (२) वैद्यः (
चरकः) (३) धन्वन्तरिः, तस्य निघण्टुश्च।

* श्रीनगेन्द्रनाथ बसु प्राच्यविद्यामहार्णवसंकलित-
कोष' कोषचूडामणौ अमरटीकाग्रन्थानां विपुल-
समुपलभ्यते।

वाग्भटः, (५) चन्द्रः, (६) इन्दुः, (७) जतः, (८) धातुविदः, (९) निमिः, (१०) लम् ।

स्वीये कल्पद्रुमग्रन्थे कोषकारानित्थ-ते—

'वाचस्पति-व्याडि-भागुर्यमरमङ्गलाः ।
साहसाङ्कमहेशाद्या विजयन्ते जिनान्तिमाः ॥'

यं नामोल्लेखक्रमः समयानुरोधेन यथोत्तरं तदा तु कात्यः सर्वेभ्योऽपि पूर्वभवः । किं स्वामिना सबहुमानं प्रामाण्ये परिगणितस्त-मरसिंहादपि प्राक्तनत्वेनाध्यवसितः । एकत्र भागुरिणोक्तम्—'हेमन्तादि वत्सरस्यारम्भः ।' अत्र कात्यवचनमुदाहरति—

'मार्गशीर्षाच्च द्वौ द्वौ मासावृतुः स्मृतः ।'
कालवर्गः, श्लो० २०

मुनिरप्याहृतः, यो हि मुनिर्व्याडिः प्रतिभाति । भागुरिः, एषोऽपि अमरसिंहात्पूर्वोद्भूतः । स्वामिमतेन भागुरि-मालाकारावपि प्राची-। व्याख्याने मालाकारमतं न केवलं भूयः रितं, किन्तु बहुत्र सम्यगालोचितमपि दरी-।

तः—अनेकार्थसमुच्चयाभिधेयोऽपूर्णो ग्र-कतिषु प्रसिद्धः, परमयं कोषोऽमरसिंहीय वर्गादतिरिच्यते । बहुत्रामरशाश्वतयोः साम्यं संलक्ष्यते । अयममरसिंहादधस्तनः । कोशौ चापि नव्येषु परिगणितौ । अमरमाला-न किमप्यवधार्यते, कोऽस्य प्रणेतेति । वनौ-षधिवर्गं, विशेष्यनिघ्नवर्गं च किमप्यवतरणं क्षीर-स्वामिना रुद्रकृतव्याख्यातः परिगृहीतमिति भानुजी-दीक्षिता ब्रुवते । उपाध्यायाभिधेयो हि केषांचि-न्मतेऽच्युतोपाध्याय आसीत् यस्य टीका व्याख्या-प्रदीपनाम्नी स्मर्यते । भोज—आचार्य-नारायणादि व्याख्यातॄणां ग्रन्थानुपलम्भाद्विशिष्य विवेचनं दुष्करमेव ।

आयुर्वेदवित्तु सुश्रुत-चरक-वाग्भट-धन्वन्त-रीणां प्रमाणवचनानि वनौषधिवर्गे लभ्यानि । बहुत्र 'वैद्याः' इति लेखः प्रायेण चरकं स्मारयति । धन्वन्तरिर्हि अमरसिंहाद्‌तिप्राचीनः । वाग्भटः, वा, वाहतोऽहि बौद्धः यस्य शकवंशीयराजभिः सह संबन्धः परिदृश्यते । अष्टाङ्गसंग्रहोत्तरस्थाने ४९ अध्याये पठ्यते शकानां पलाण्डुप्रेम यथा—

'लशुनानन्तरं वायोः पलाण्डुः परमौषधम् ।
साक्षादिव स्थितं यत्र शकाधिपतिजीवितम् ॥
यस्योपयोगेन शकाङ्गनानां
लावण्यसारादिव निर्मितानाम् ।
कपोलकान्त्या विजितः शशाङ्को
रसातलं गच्छति निर्विदेव ॥'

एतेनाधुनिकैरितिहासज्ञैः ईशवीय द्वित्रशताब्द काले वर्तमाने शकराजनि वाग्भटसमयोऽपि निर्णीतः । इतरेषां प्राणाचार्याणां चर्चा विषयान्तर-सापेक्षिणीति त्यज्यते ।

अमरसिंह समयो हि नाद्यावधि सप्रमाणं केना-पि स्थिरीकृतः । पाश्चात्यैः पौरस्त्यैश्चाऽसकृदालोचि-तोऽपि प्रत्ययास्पदतां न लेभे । उज्जयिनीनायकस्य

श्रीविक्रमादित्यस्य नवरत्नेस्वन्यतम इति ज्योतिर्विदाभरणकर्तुः कालिदासस्य 'धन्वन्तरिक्षपणका-मरसिंहशङ्कुः, इत्यादि पद्यं भारते पण्डितानां मुख-रङ्गे नृत्यमानमपि तत्संग्राहकम्। बुद्धगया-परिसरे समुपलब्धे शिलालेखे 'वैक्रमीय-नवरत्न-सभाया अन्यतमेनोज्ज्वलरत्नेन श्रीअमरसिंहेनैतन्मदिरं निर्मापितम्' इति लेखलाभात् ईशवीयवर्षारम्भात् प्राक् प्रथमशतकेऽस्य स्थितिरनुमीयते, यतः सएव विक्रमकालः। भवतु नामामरसिंहो नवरत्नान्तर्गतः परमन्येषां वराहमिहिरादीनामुक्तश्लोकस्थं सामयिकत्वं नोपपद्यते, नवरत्नश्लोकोऽयं प्रतारणपरक एव। प्रमाणस्य पिष्टपेषणमनावश्यकम्।

वृद्धपण्डितमुखादाकर्ण्यते—विक्रमादित्यः शैवधर्मधुरंधर इति ग्रन्थारम्भे बौद्धदेवनमस्कृति-रूपमङ्गलाचरणेन क्रुद्धनृपतेः सन्तोषायायममरसिंहो नामग्राहं देवतानामानिर्दिश्य 'स' इति पदं व्यवहृतवान्। वङ्गदेशीयैः प्राचीनसूरिभिस्तु बौद्ध-शिव-पक्षयोर्भेदमवलम्ब्य व्याख्यानभङ्ग्या बलाद् बौद्ध-पक्षीयोऽर्थ एव निगृहितः, परमेतदखिलमविचार-विजृम्भितमेव। नहि श्रीमदमरसिंहः कपटबौद्धो धर्मकञ्चुकी वा प्रतिभाति। कथमन्यथा ब्रह्म-विष्णु शिवादीनां नामोल्लेखात्पूर्वमेव शाक्यसिंहं स्मरेत्। किंच गुणैकपक्षपाती विक्रमादित्यः किमिति तदुपरि कोपपरीतमानसः स्यात्। सेवतेस्म तत्सभां मितरेऽपि बौद्धपण्डिता इति।

अमरसिंहः सुप्रसिद्धशबरस्वामिसूनुः शूद्रा-गर्भाज्जनिं प्रापेत्याभाणकमूलकेनाधस्तनश्लोकेन श्रुतिपथमागतम्—

ब्राह्मण्यामभवद्वराहमिहिरो ज्योतिर्विदामग्रणी राजाभर्तृहरिश्च विक्रमनृपः क्षत्रात्मजायामभूत्। वैश्यायां हरिचन्द्रवैद्यतिलको जातश्च शङ्कुः कृती शूद्रायाममरः षडेव शबरस्वामिद्विजस्यात्मजाः॥

प्रसिद्ध-मीमांसक-श्रीकुमारिलभट्टपादात् कालात् प्राक् तत्रभवतः शबरस्वामिनः तत्तन्मीमांसक निबन्धानामालोचनेन स्फुटं प्रतीयते। अस्य विषये द्रश्यताम्—( The P[illegible] Mimānsā system. by P. V. Kane M[illegible] LL. M. issued in the Annals of Bhandarkar Mstitrde for 1924-25 Vi Part 1. Poona City ) *

अमरसिंहः स्वसमयेऽतीव गौरवास्पदता[illegible] बोपदेवः स्वीये कविकल्पद्रुमे प्रौढशाब्दिक[illegible] संमानितवान्। अस्य पाणिनिव्याकर[illegible] 'सभाराजामनुष्यपूर्वा' इति सूत्रमवधार्यत—

'शालार्थापि परा राजामनुष्यार्थादराजका[illegible]

( तृ० का० लिङ्गसंग्रहवर्गः, श्लो० [illegible])

इत्यादि श्लोकेषु बहुत्र सूत्रक्रोडीकरणे[illegible] रत्नमेव। एतन्मूलिकैव प्रसिद्धिश्च—'अमर[illegible] हि पापीयान् सर्वं भाष्यमचूचुरत्।' इति। श्री[illegible] दास-संगृहीते सदुक्तिकर्णामृतेऽस्य बहवः श्लो[illegible] उपलभ्यन्ते। तेनामरकोषादतिरिक्ता अपि [illegible] ग्रन्था निर्मिता इति व्यक्तम्।

प्रत्नतत्वविमर्शकैरन्यदपि गवेषयित्वा [illegible] नीयम्। मयातु बहुकार्योपक्षिप्तमानसेन [illegible] पाठकानां पुरस्कृतोऽयं संदर्भः।

* निबन्धस्यास्य संस्कृतानुवादः सुप्रभात-पा[illegible] प्रीतिलाभाय यथावसरं प्रकाशयिष्ये। लेखकः

# रेखावलोकन प्रकार-परिचयः ।

श्रीकालिकाप्रसादमिश्रः, काशीराज-ज्योतिर्विद् ।

मुद्रिकपरिचयः, सामुद्रिक-विज्ञानञ्चेति निवन्धद्वयं पूर्वमेव प्रकाशितमासीत्सुप्रभातपाठक महोदयानां मनोरञ्जनार्थमिदानीन्तु करावलोकनप्रकारः प्रदर्श्यते ।

## चित्राङ्कितरेखाणां फलानि ।

...यो भवन्ति खलु ...प्रदेशे रेखास्तिस्रः, ... प्रथमा धनाख्या, ... शास्त्राभिधा, तृतीयाह्वेति । एतासु ... या रेखा स्वच्छ-, गम्भीरा, स्निग्धा, ... स्यात् सा तद्वि-...त्तमफलवोधिका । ... परिशुद्धाः सकल...न्विताश्च । तिस्र-...कास्युश्चेत्तर्हि दै-...ग्यवोधिकाः—

...यमूर्ध्वरेखा यस्य ...ङ्गुलेर्मणिबन्धावधि प-... चेत्सोऽत्यन्तसौ-...शाली भवति । इयमेव



"भाग्यरेखा" इत्युच्यते, एतद्द्वारैव भाग्यविनिर्णयो भवति, इयं यदि व्यक्ताऽविच्छिन्ना स्यात्तदाराज्य-मान-प्रतिष्ठादिभिर्नरं भूषयति "मध्याङ्गुलेर्या मणिबन्धमाता राज्याप्तये सा च किलोर्ध्व रेखेति" । इयं यदि छिन्ना खण्डिता वा यत्रप्रदेशे स्यात् तत्रवर्ष-प्रमाणं तस्य पुरुषस्य स्त्री-धन-पुत्रादीनां दुःखं भवति । अनयैव जनानां सुखदुःखादिनिखिलं ज्ञानं भवति । एतस्याः सविस्तरं वर्णनं सचित्र-सामुद्रिकरहस्याख्ये ग्रन्थे कृतम् ।

१—पितृरेखा मतान्तरेणायूरेखा कर्मरेखा वा । यदीयं पितृरेखा वियुक्ता स्यात्तदाऽयं जनो वर्णसंकर ...सूचयति । यदि द्वे अपि कुटिले, प्रलम्बे, ह्रस्वे, छिन्ने-भिन्ने च स्यातां तदा जनस्य मातृपितृसुखं

न भवति । यदा द्वे अपि मनोहरे तदापित्रोः सुखं प्राप्नोति । यस्मिन्वर्षप्रमाणे द्वे छिन्ने तस्मिन्वर्षे पित्रोर्वियोगो भवतीति लक्षणज्ञाः वदन्ति ।

## मतान्तरेणानयायुषोज्ञानम् ।

दीर्घा स्पष्टा नातिसूक्ष्मा न वक्रा,
भग्ना चान्या रेखया नापि छिन्ना ।
दीर्घायुष्मान् सच्चरित्रस्वभावो
मर्त्यो नित्यं मोदते सौख्ययुक्तः ॥ ३ ॥
म्लाना छिन्ना भिन्नरूपा यदा सा,
मन्दप्रज्ञो दुर्बलोऽसौ विवादी ।
गर्वैर्युक्तो दुर्भगो दुःखजीवी,
यस्मिन्माने जायते सा च भग्ना ॥ ४ ॥

इत्याद्युक्तग्रन्थ एव द्रष्टव्यम् ।

६—इयं मातृरेखा शिरोरेखा वेति । इयं सर्वतः परिशुद्धा स्यात्तदा जनो बुद्धिमान्, विचार निपुणः, प्रभावशाली, मानसशक्तियुक्तश्च भवति विपरीतायान्तु विपरीतफलम् ।

७—कनिष्ठिकामूलादारभ्यतर्जनीमध्यमान्तरालगामिनीतिर्यगायुष्यरेखा, सैव हृदयादिपर्यायाद्यनेकरूपा भवति, यथा १ हीना, २ यवाङ्किता, ३ द्विभागा, ४ निधनान्तस्थानीयपद्मयुक्ता, ५ रज्जुरूपा, ६ शृङ्खलानुकारिणी, ७ जाह्नवीरूपेति सप्तविधा । इयं निर्मला, सूक्ष्मा, परिशुद्धा च स्यात्तदा मनुष्यः शान्तचित्तः कृपालुश्च भवति, विपरीतायान्तु विपरीतं फलम् ।

८—इयं सरस्वतीरेखा पुण्यरेखा वा—
"पुण्या रेखा विलसति निजस्थान एवातिशुद्धा
धीजीव्याढ्यो द्रविणयशसोस्सद्व्ययी सर्वमान्यः ॥
प्रत्युत्पन्ना मतिरिह भवेदर्थलाभोप्यकस्मात् ।
कृत्स्ने कार्यं भवति सफलः शान्तचित्तो मनुष्यः"

इत्यादिनानाविधशिल्पदाक्षिण्यादिकलासद्धर्मादिविशिष्टा भवतीति ॥

९—ललनारेखा यावत्संख्यापरिमिता स्तावत्संख्यापरिमिताः ललनाः पुरुषस्य बोध्याः मतान्तरेण मृगपुरुषस्य मनोहरकुशाग्रे स्त्रीद्वयम्, द्वाभ्यां रेखाभ्यां स्त्रीत्रयम्, तिसृभी रे स्त्री पञ्चकमिति । तुरगपुरुषस्य त्वेकया रे द्वे, द्वाभ्यां रेखाभ्यामेका स्त्रीति विज्ञेयम् ।

१०—इमाः भ्रातृभगिनीबोधकरेखाः । रेखाया अधो मणिबन्धपर्यन्तं करभा च्छिन्नमनोहरविशाला यावत्यो रेखाः, तत परिमिताः भ्रातरः, यावत्यः स्वल्पास्तत परिमिताः भगिन्य इति ।

११—सन्तानरेखा ।

अङ्गुष्ठमूले प्रसवस्य रेखाः
पुत्राः बृहत्यः प्रमदाश्च तन्व्यः ॥
अच्छिन्नदीर्घाश्च चिरायुषान्ताः
स्वल्पायुषश्छिन्नलघुप्रमाणाः ॥

१२—यवरेखाः—अंगुष्ठमूले यवश्चे सन्तानवान्भवति, उक्तश्च "सुतवन्तोप्यङ्गु मूलगैश्चयवैः" इत्युक्तरीत्या अनया विद्यमानसन्त विचारो भवतीति ।

१३—अङ्गुष्ठोदरे यवरेखा फलमुक्तं आ भरणे—

...राजमानं यवलाञ्छनं चे
...ङ्गुष्ठमध्ये पुरुषस्य यस्य ।
...यशस्वी निजवंशभूषा,
भूषाविशेषैस्सहितो विनीतः ॥ ३ ॥

... मणिवन्धादारभ्य यवरेखान्तं त्रयोदश ...खाणां दिग्दर्शनं कृतं विस्तरस्तूक्त-"सचित्र ...सामुद्रिकरहस्यग्रन्थस्य विंशतिचित्रेषु· ...समस्त-रेखाणां रूप-स्थान-फलादीनां निरूपणं कृतमस्ति तत्तु शास्त्ररसिका अवलोकयन्तु ।

अनया विधातृनिर्मितकरकुण्डल्याः प्राणिनां भूतभविष्यद्वर्तमानकालिकदुःखसुखादीनां यथार्थज्ञानं भवति ।

प्राचीनाः महर्षय इमामेव प्रणालीमनुसृत्य स्वकीयानुभवं पुराणेषु प्रदर्शितवन्तः, तत्फलन्तु साम्प्रतमपि तथ्यमेव संघटते इति पुनर्यथावकाशं प्रकारान्तरं प्रदर्शयिष्यामि ।



# ...क-प्रणवे द्विजेतरस्याप्यधिकारः ।

पं० राधाप्रसादशास्त्री, धर्मशास्त्राचार्यः
श्रीकाशीहिन्दूविश्वविद्यालयस्य

आ यश्चानेकस्थले स्मृतिनिबन्धेषु विरुद्धानीव वाक्यानि लक्ष्यन्ते । तद्यथा पराशरमाधवीय-निबन्धे आचारकाण्डे राजप्रतिग्रहा-निन्दा-निन्दा च । ( १९९-२००१ )

...ग्रहो घोरो मध्वास्वादो विषोपमः ।
...वरं भोक्तुं न तु राजप्रतिग्रहः ॥ १ ॥
... यः परित्यज्य द्रव्यलोभेन मोहितः ।
...लुब्धस्तु कुर्याद्‌ राजप्रतिग्रहम् ॥ २ ॥
...नरके घोरे तस्यैव पतनं ध्रुवम् ।
...ाग्निना दग्धाः प्ररोहन्ति घनागमे ॥ ३ ॥
...तिग्रहाद्दग्धा न प्ररोहन्ति कर्हिचित् ।

...न्दोग-शाखायां प्राचीनशालादीन् महामुनीन् राज... प्रवर्तयितुमश्वपति नामकेन राज्ञा दोषाभाव उक्तः—

न मे स्तेनो जनपदे न कदर्यो न मद्यपः ।
नानाहिताग्निर्ना विद्वान्नस्वैरी स्वैरिणी कुतः ॥ १ ॥

अपि च नारदः—

श्रेयान् परिग्रहो राज्ञां नान्येषां ब्राह्मणादृते ।
ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ ॥ १ ॥
नैतयोरन्तरं किंचिद्‌ प्रजा धर्माभिरक्षणे ।
शुचीनामशुचीनां च सन्निवेशो यथाम्भसाम् ॥ २ ॥
समुद्रे समतां याति तद्वद्‌ राज्ञां धनागमः ।
यथाग्नौ संस्थितं चैव शुद्धिमायाति कांचनम् ॥ ३ ॥
एवं धनागमात्सर्वे शुद्धिमायान्ति राजनि ।

स्मृतिचन्द्रिकायां संस्कारकाण्डे भोजनदिङ् नियमेः—

आयुष्यं प्राङ् मुखो भुङ्क्ते यशस्यं दक्षिणा मुखः ॥
श्रियं प्रोदङ् मुखो भुङ्क्ते ऋतुं भुङ्क्ते उदङ् मुखः ॥१॥
यद्वेष्टितशिरा भुङ्क्ते यद्भुङ्क्ते दक्षिणा मुखः ।
सोपानत्कश्च यद्भुङ्क्ते तद्वै रक्षांसि गच्छति ॥ २ ॥

तत्रैव मातुलकन्या-विवाह-विषये—

मातुलस्य सुता मूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव द्विजश्चान्द्रायणञ्चरेत् ॥ १ ॥
—व्यासः

अन्ये च मातुलकन्यापरिणयनं कामयमानाः संवादार्थं मन्त्रमिममुदाहरन्ति—

आयाहीन्द्र पथिभिरीडितेभिः
यज्ञमिमं नो भागधेयं जुषस्व ।
तृप्तां जुहुं मातुलस्येव योषा
भागस्ते पैतृष्वसेयी वपामिव ॥१॥ ऋ० अस्यार्थः—

"हे इन्द्र ! पथिभिर्मार्गैरीडितेभिः प्रशस्तैर्नः अस्माकमिमं यज्ञं आयाहि आगच्छ ! आगत्य चेदं दीयमानमस्माभिर्भाग धेयं जुषस्व सेवस्व यजमानास्तृप्तामाज्यादिना संस्कृतां वपां जुहुस्त्वक्तवन्तः । अत्र-दृष्टान्तद्वयम्:—यथा मातुलस्य योषा दुहिता दौहित्रस्य भागो भज नीया परिणेतुं योग्या, यथा च पैतृष्वसेयी पौत्रस्य तथायं ते तव भागो वपाख्यः ॥"

तेन श्रुतितः सिद्धं मातुलादिसुतापरिणयनम् ।

अयमेव विषयः तृतीय परिच्छेदे धर्मसिन्धौ (१८८ पृष्ठे) पराशरमाधव-आचारकाण्डे ( २१६३ पृ० ) प्रतिपादितः ।

शूद्रधर्मविचारे धर्मसिंधौ तृतीयपरिच्छेदे ( २६६पृ० ) भारतपुराणश्रवणे स्त्री-शूद्रयोरधिकारो नत्वध्ययने ।

"श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः ॥ शूद्रस्य पंचयज्ञ श्राद्धादिकर्मणि कातीयसूत्रानुसारेण मयूखेः—आगमोक्ता विष्णुशिवादिमन्त्राः नमोऽन्ता प्रणवरहिताः, पुराणादि श्रवणनिदिध्यासनादि कृत्वा ब्रह्मज्ञानमपि स्त्रीशूद्रैः सम्पाद्यम् ॥

वीरमित्रोदयस्याह्निक प्रकाशे ३८२ पृष्ठेः—

षोडशऋगात्मकस्य पुरुषसूक्तस्यप्रत्यृचमावाहनादि षोडशोपचारात्मके पूजाविधावुक्तं नृसिंहपुराणे ।

अनेन विधिना देवः पूज्यते मधुसूदनः ।
वेदमन्त्रैरेव नान्यैस्तु तस्मात् सर्वहितं वद ? ॥इतिप्रश्नः
श्रद्धादरेण देवेशं नरसिंहमनामयम् ।
गन्धपुष्पादिभिर्नित्यमर्चयेदच्युतं नरः ॥

इत्थमुत्तरयित्वा मन्त्रस्वरूपमेवाह:—

शुक्लवर्णं च ॐ कारं नकारं रक्तमुच्यते ।
मोत्कारं वर्णतः कृष्णं नाकारं रक्तमुच्यते ॥ १ ॥
राकारं कुंकुमाभन्तु यकारं पीतमुच्यते ।
णाकारमञ्जनाभन्तु यकारं बहुवर्णकम् ॥ २ ॥

एवं च नमःपदान्तोऽयं मन्त्र इति व्यामोह... याज्ञवल्क्य-मिताक्षरायां प्रायश्चित्त-प्रकरणेऽपि—

शूद्रोऽधिकारहीनोऽपि कालेनानेन शुद्ध...
२६२ या०

यद्यपि शूद्रो जपाद्यधिकारहीनस्तथाप्यनेन वर्षादिकालसम्पाद्येन व्रतेन शुद्ध्यति । शूद्रग्रहणं प्रतिलोमजानां चोपलक्षणम् । यद्यपि तस्य गायत्र्या... सम्भवस्तथापि नमस्कारमन्त्रजपो भवति । ... स्मृत्यन्तरेऽभिहितम्—

'उच्छिष्टं चास्य भोजनमनुज्ञातोऽस्य नमस्कारो... इति । यद्वा वचनबलाद् जपादिरहितमेव व्रतं कु... "तस्माच्छूद्रं समासाद्य सदा धर्मपथे स्थितम् । प्र... प्रदातव्यं जपहोमविवर्जितम्" ॥ इत्यंगिरस् स्मर... तथापरमपि तेनैवोक्तम्—

शूद्रः कालेन शुद्ध्येत गोब्राह्मणहिते रतः ।
दानैर्वाप्युपवासैर्वा द्विजशुश्रूषया तथा ॥
इति ।

यत्तु मानवम्—

न चास्योपदिशेद्धर्मं न चास्मै व्रतमादिशेत् ।

इति शूद्रस्य व्रतोपदेशनिषेधपरं वचनम् तद... शूद्रविषयम् । यदपि स्मृत्यंतरवचनम्—

कृच्छ्राण्येतानि कार्याणि सदा वर्णत्रयेण तु ।
कृच्छ्रेष्वेतेषु शूद्रस्य नाधिकारो विधीयते ॥

तत् कास्य कृच्छ्राभिप्रायम्—

अतः स्त्रीशूद्राणां प्रतिलोमजानां च त्रैवर्णि... व्रताधिकार इति सिद्धम् । यत्तु गौतमवचनम्—'प्रति... धर्महीना' इति तदुपनयनादिविशिष्टधर्माभिप्रायम् । ... पूर्व्या मिताक्षरा प्रदर्शिता ॥

मिताक्षरादिग्रन्थाः प्रदर्शितप्रतीयमानविरोधा... तोऽविरुद्धा एव । देशकालादिव्यवस्थापनादिभि... ते च पक्षाः तत्र तत्र निबन्धेषु दर्शिताः— (क्रमशः)

# इतिहासज्ञानावश्यकता।

लेखकाः—
महादेवशास्त्री, पाण्डेयः, साहित्याचार्यः,

नाम बधिरो दृष्ट्वाप्यन्धो जड़ो विदित्वापि।
कालकार्यव्यपेक्षया पण्डितः स पुमान्॥

भारतीयानां संस्कृत-विदुषां प्रायेणे-तिवृत्तज्ञानाभावात्कीदृशी दुरवस्थेदानीमस्तीत्ययं प्रश्नो विबुधानां विचारकोटिमध्यारोहति। केचनेतिवृत्तज्ञानं कालानुक्रमणीज्ञानमात्रं निःसारमिति कृत्वा अस्मै ज्ञानसूच्यां लघुस्थानं वित-
परमस्माकं विचारेण तु कालानुक्रमणीज्ञा-
त्यन्तावश्यकतावहम्। कदा के आसन्?
काले कीदृशी सामाजिकी व्यवस्थिति-
? कुत्र समये राजकीयनीतिव्यवस्था
ऽभवत् विद्वांसः कं समयम् अलमकुर्वन्?
नः कस्य समयस्याधिकारिणः? के के
षामधिकारे कदा अवर्त्तन्त?
विधा भूयांसः प्रश्नाः समयसूचीज्ञान-
मपि उत्तरदृष्टिपदवीं नावतरन्ति। एव-मेव शास्त्रविषयाणां तारतम्यज्ञानं, पूर्वापरकालसमीक्षापि दुःशकमेव कर्त्तुम्। यथा साहित्ये, वेदे, वेदाङ्गे, वैद्यके, दर्शने, सङ्गीतशास्त्राद्यनेकविषये च बहवो ग्रन्था निबद्धा अस्मद्देशे सुप्रसिद्धाः सन्ति। परमयं निर्णयोऽस्मज्ज्ञानाद्दूरतम एवास्ति यत् के ग्रन्थाः कैराचार्यैः कस्मिन् विषये कदा निबद्धाः? तत्र तत्परवर्त्तिभिराचार्यैः स्वस्वनिर्मितग्रन्थेषु तत्र तत्र विषये कियती नवीनता निर्मिता, देशकालानुसारेण के के च विषयाः सर्वथा नवीना एव सन्निवेशिताः? यथा वेदेऽपि चिकित्साविषयस्य निवेशो दृश्यते। ततःपरं पूर्वपरकालीनैर्बहुभिराचार्यैरायुर्वेदे नैके ग्रन्था निबद्धाः। परमेतत्कथयितुं वयमसमर्था एव यत् के रोगा प्रधानभूताः कस्मिन् काले अभूवन्? कीदृशैः संसर्गैस्तेषामुद्भवः? कीदृशी चिकित्साप्रणाली तेषां निवारणाय उपयुज्यमाना आसीत्? बहवः संक्रामकरोगाः अस्मद्देशे विदेशीयानां संपर्कादेव प्रचलिताः, तेषां रोगाणां निदानमाचार्यैः अस्मद्ग्रन्थेषु प्राचीनकालादेव निबद्धम्? आहोस्वित् विज्ञाय लिखितम्? उत वा पाश्चात्यग्रन्थेभ्यः संगृहीतम्?

एवं तदीयचिकित्साविषयेऽपि बहवः परामर्शाः समुत्तिष्ठन्ते। यथा तुलसीदासोऽपि प्लेगव्याधिप्रपीडितः पञ्चत्वं गत इति जनश्रुतिः। अयंव्याधिः तुलसीदासात्पूर्वमस्मद्देशे आसीन्न वा, अथवा यवनानां सम्पर्कादेवायं व्याधिरस्मद्देशे प्रचलितः। यवनसाहाय्यादेव अस्य चिकित्सादिविषये अस्मद्देशीयैः शिक्षितं वा। धर्मशास्त्राण्यपि यथावस्थं

यथाकालं तत्तत्सत्यदयाधर्मनिष्ठैराचार्यैर्निर्मितानि दर्शनवत् विभिन्नरहस्यान्यपि विभिन्नोपक्रमबीजान्यपि यदेककालिकत्वेन ज्ञायन्ते सृष्ट्यारम्भकालिकत्वेन वा एकवाक्यतैव च सर्वत्र गवेष्यते तदत्र कोऽन्यो हेतुर्भवितुमर्हति इतिवृत्तबोधाभावात् । किमितोऽधिकमुच्यतां यदिदानीन्तनाः कुल्लूकभट्टादयोऽपि निबन्धारो धर्मसर्वस्वे प्रमाणभूता नाधुनिकास्तेऽप्यधिकविज्ञानवन्तो विद्वांसः । किमन्यत् "अङ्ग-वङ्ककलिङ्गेषु सौराष्ट्रमगधेषु च । तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हति" इत्यपि श्रुतिरिव स्मृतिः प्रमाणत्वेन अभ्युपगम्यते प्राचीनस्थितेरबोधात् । यावद्देवलस्मृति प्रचलितधर्मशास्त्रनिर्माणप्रसार इदानीं सर्वज्ञाभावान्निरुद्ध इति महदुत्तरमद्यत्वे ।

व्याकरणं तत्तत्काले साहित्यं संस्कृतवाङ्मयव्यवहारं पूर्ववर्ति व्याकरणान्तरमुपजीव्य कृतनिर्माणमपि लक्षणैकलोचनतां समर्थयते चेत् पराजितमेव विवेकिभिः । शार्वरौषस-विश्राम-कालीनादयः शब्दा अपभ्रंशा एव तेषाम् । पाणिनिव्याकरणस्य पूर्णतां समर्थयमानैर्यथावद्बोधपथदूरपतितैः तत्रैव समयं जीवनं क्षपयद्भिः कीदृश्याहोपुरुषिका ऽरिताऽर्थ्यत इति तत्सभास्तारा एव जानन्ति । एवं वेदे, ब्राह्मणे, उपनिषत्सु, निरुक्ते, सूत्रेषु, स्मृतिषु, दर्शनेषु, पुराणेषु, व्याकरणे, ज्यौतिषे, आयुर्वेदे, संगीतादिशास्त्रेषु च कालसम्बन्धिपौर्वापर्यज्ञानमन्तरा असम्भव एव निर्णयकृते, यत् कस्मात्परं किं विरचितम्, कुत्र नवीनता कुत्र च ह्रासः कृतः, कुत्र समयस्य तदानींतनसमाजस्य च कियान् प्रभावः इति । अनेनैव कारणेन पाश्चात्या अन्ये च पौ सिकविद्याविदः कथयन्ति यत् संस्कृतस्य स एतावति गाम्भीर्ये विस्तरे च इतिवृत्तस्य अभावात् अपूर्णतैव महती जागर्त्तीति ।

एवं च इतिवृत्तबोधस्यावश्यकतायामुप तायां कथं तज्ज्ञायतामिति प्रश्नेऽस्माकं दृ पतति । यत्पाश्चात्याः, तिलक-भाण्डारकर प्रभृतयो दाक्षिणात्याः, वङ्गीयाः, श्लाघनीय रामावतारशर्मप्रभृतयो विद्वांसोऽत्र विश इतिहासविषये महतीं गवेषणां कृतवन्तः। शिला दीनां सङ्कलनेन भूगर्भविद्याविकासेन च वेदा बौद्धकालिकस्थितेश्च भूयान् परिचयः कृतोऽ क्यते । अत्रत्यासु महाराष्ट्री—गुर्जरी-वङ्गी-हि भाषासु देशान्तरीयासु जर्मन-फ्रेञ्चाङ्ग्ल निबद्धग्रन्थेषु अन्यान्यपत्रपत्रिकादिषु च इति महता संरम्भेण समुपन्यस्तः । उपजीव्य चै नवीनं च कियदपि विभाव्य इतिहासस्य निब शक्यन्ते गीर्वाणवाण्यां निर्मातुम् । यतो भारत स्य महान् कलङ्कः प्रमार्जितुं शक्यः, हिमालय मारूयन्तरीपं यावत्, आगुर्जारद् वङ्गदेश प्रतिग्रामं निवसतां संस्कृतपण्डितानां ह जाज्वल्यमानमितिहासज्योतिः समुद्दीपितं भगवान् सनातनधर्मश्च सत्यतो विज्ञातः परि तश्च यथावस्थितं समाजं स्थापयन् भारतं सम सम्पन्नं क्रियादिति शिवम् ।

# [त]भामिनीनां सुरभारतीं प्रतीति-कर्तव्यम् ।

श्रीमती सुशीलादेवी, विदुषी, हल्दौर, बिजनौर

[...]मिकं साहित्यं हि कस्यापि राष्ट्रस्य संस्कृतेः परं [...]निदानम् । वैदिकधर्मस्य साहित्यं गीर्वाणगिरा [...]गुम्फितमिति सुविदितमेव विदुषाम् । तेन भार[...]तीयानां पूर्वपुरुषाः प्राणपणेनापि परिपालया-[...]णीम्, ते सर्ववैभवविवर्जिता अपि देववाणीसेवनं न [...]माद्धः । "अपि च एकः शब्दः सम्यग्ज्ञातः स्वर्गेलोके च कामधुग् भवति ।" "पितरोऽस्य [...] महीयन्त" इत्याद्यनुशासनानि श्रद्दधानास्ते सुर[...]णां परमधर्मं मन्यन्ते स्म । जगतीतले न विद्यते [...]षा, या देववाणीवदाधुनिकैतिहासिकानां मतेऽपि [...]नूनं वर्षाणां पाञ्चसाहस्त्रयाः वर्षिष्ठा वर्तते । तस्याः [...]का एव तां परःशतोपप्लवेभ्यः पात्वाद्यावधि [...] रक्षुः ।

[...] दैवदुर्विपाकेन विजेतृविजितराष्ट्रयोः संस्कृत्योः [...]संघर्षो जायते, तदा विजितराष्ट्रस्य संस्कृतेः प्राणसंक[...] । विजितराष्ट्रस्य संस्कृतिर्विजेतुः संस्कृतेर्गर्भे विल[...] धावति । "यथा राजा तथा प्रजा" इति न्यायेन [...] शासकानां प्रत्येकं गतिं मतिं भाषां भूषां वेषञ्चानु[...] । हंसगतिमनुकुर्वाणः काकः स्वगतिमपि विस्मरतीति [...] परानुकारिण्णवो विदेशीयदास्यमङ्गीकृतवन्तः कापु[...]परंपरागताचारमपि परित्यजन्ति । निजमातृभूमि[...]यायाः स्वमातृभाषाया अपि विमुखाः भवन्ति । [...] स्वधर्मस्वदेशमानैकधनाः पुरुषर्षभा एव स्ववा[...]र्वनायां बद्धपरिकरास्तिष्ठन्ति । सर्वस्वव्ययेनापि तां [...] सत्याञ्च परिरक्षन्ति ।

[...]वस्था वृद्धभारतस्य सनातनसभ्यतां तत्प्राणस्वरूपां सुरवाणीञ्च प्रति मोहम्मदीयानां भारते पदार्पणादारभ्याप-तिता । पञ्चशतवर्षव्यापकमोहम्मदीयदुर्दान्तशासने जनसा-धारणेषु शासकानां वेषभाषाभूषादिस्वीकुर्वाणेष्वप्यकिंचना अपि विद्यावैभवाः ब्राह्मणाः सुरवाणीरक्षाव्रतपराः बभूवुः । सनातनवैदिकधर्मे तत्प्रतिपादकसंस्कृतसाहित्ये च तेषां श्रद्धैव-तद्रक्षव्रतस्य प्रेरिका । परमधुना श्वेतद्वीपीयश्वेताङ्गप्रभूणां शासने प्रवृत्ते देववाणीरक्षापरंपरा देशांतरं प्रापत् । मोह-म्मदीयराज्याद्भारतस्य विभिन्ना परिस्थितिरेवात्रहेतुः । स्वम-ताग्रहग्रहिला वैदिकधर्मदलनोद्यता धर्माचारप्रचारपरिपन्थिनः प्रजोत्पीडनपरा अपि तेऽत्रैव कृतनिवासाः स्वदेशीयाः संवृत्ताः । तेन प्रजाया धनानि तैरपहृतान्यपि तेषां लाम्पट्ये समाधि-मन्दिरनिर्माणेऽप्यव्ययितानि पुनरावृत्य प्रजागणमेव जग्मुः । स्वदेशाद्बहिर्विदेशं न निर्ययुः । फलतो भारतीयाः प्रजा दासीभूता अपि अन्नवस्त्राभावं नानुबभूवुः । "बुभुक्षितः किन्न करोति पाप" मिति कृच्छ्रस्याविषयाणां तेषामास्था धर्मान्न विचचाल । परमद्यतनाः श्वेतद्वीपीयवैदेशिकशासकाः भारते दुर्दण्डशासनं संस्थाप्यापि भारतभुवं स्वावासभूमिं नैव विदधुः, निजाङ्गलाभिजने स्थिता एव भारते शासनदण्डं संचालयन्ति । भारतप्रजायाः प्राप्तकरद्रव्येण स्वदेशसंवर्धनमेव तेषां परमोद्देशः । अपरञ्चाङ्गला अत्र वणिग्रूपेणागता, पश्चा-द्भाग्यचक्रेणैतद्देशस्य शासनधुरामधिगता अपि तेऽद्यापि वणि-ग्वृत्तिमेव धारयन्ति । एकस्मिन्हस्ते शासनदण्डधारिणोऽपि-तेऽपरहस्तेन तुलां गृह्णन्ति । अथवा तेषां न्यायतुला वणिक्तुला चैकैव । भारतराज्यमपेक्ष्याङ्गलभूमौ निर्मितवस्त्रादिवस्तूनां व्यापारवृद्धिरेवाङ्गलप्रभूणामधिकतममभिमता । तेन प्रजानां धनं कररूपेण विदेशीयवस्तुमूल्यरूपेण च सततं विदेशं गच्छति । अस्मद्देशीयधनधाराया निरन्तरं बहिःप्रवाहेण देशोऽयं तथा निर्धनः संवृत्तः, यथा विदेशीयवस्तूनां मूल्यं रूप्यकेण दातु-मशक्नुवन् अयं तत स्वदेशीयसस्यसंपदार्पयितुं विवशो भवति; येन भारतीयानामुदरदरीपूरणार्थमप्यन्नमत्र नावशिष्यते । अत्रत्या जनाः श्ववृत्त्याख्यपरसेवादीनि परःशतानि पातकानि कुर्वाणा अपि वपुःपरिपोषणाय पर्याप्तमाहारमाप्तुं नालम् । भारतीयानामधिकांशो वर्षे यावदहोरात्रमेकाहारेणैव कथं-

चित् प्राणधारणं करोति । तेनाद्योदरज्वाला तेषां ध्यानम्, स्वधर्मस्य स्वसभ्यतायाश्च संरक्षणाद्व्यावर्त्य बुभुक्षाशमनप्रयत्नायैवाकर्षति । तदूयां कृच्छ्रावस्थां भारतसभ्यताद्याधिगता । न सातः पूर्वं मोहम्मदीयराज्ये तामाचक्राम । भारतसभ्यतायाः प्रधानाङ्गस्य संस्कृतस्य ह्रासमये मोहम्मदीयराज्ये भारतभूभालतिलकायमाना रसगङ्गाधरादिगण्यमान्यग्रन्थानां प्रणेतारः प्रसादमाधुर्यस्य धाराधराः पण्डितराजजगन्नाथाः, गीतगोविन्दगायका ललितोद्गारगुरवः श्रीजयदेवाः, अन्ये च शतशो विश्वविश्रुता विविधविद्यावारिधयः पण्डितप्रकाण्डाः प्रादुर्बभूवुः । येषां कृतीनां रसमास्वादमास्वादं जना न तृप्तिमायान्ति, तेषां कक्षामप्याधुनिका विद्वाँसो नावगाहन्ते । किन्तु शोच्यमतः परं यत्सांप्रतिकानां पितृपर्यायेण संस्कृतानुशीलनपराणां वाराणस्यादिसुरसरस्वतीराजधानी—वास्तव्यानां पण्डितप्रवराणामपि कुलाङ्कुरा आदिभाषां देवभाषां विहाय विदेशीयाङ्ग्लवाणीं संसेवन्ते । सुरवाणीप्रकाश्यां काश्यां पण्डितपुत्र इति सुप्रयोगोऽपशब्दे परिणत इति जनापवादः श्रूयते । देशेऽस्मिन्नधुना यत्किञ्चित् संस्कृतस्य प्रचारो दरीदृश्यते, तत्पल्लवग्राहिपाण्डित्यमेव । अगाधवैदुष्यस्य गन्धोऽपि तस्मिन्नास्ति । पुराकालीनमगाधसुरसरस्वतीसरोवरमद्य स्वगभीरतामपहाय विस्तृते भूप्रदेशे प्रसृत्य गाधं संवृत्तमित्यनुमीयते । अद्यत्वे दृश्यमानः संस्कृत-प्रसारोऽप्याजीविकोपार्जनमभिलक्ष्यैवास्ति । यदि स्कूलकालिजाभिधराजकीयपाठशालास्वध्यापकपदप्राप्तिप्रलोभनं न स्यात्, तर्हि विरला एव संस्कृतमधीयीरन् ।

यथा पूर्वं, प्रतिपादितं, सुरवाण्यै श्रद्धाया एवावलम्बः । सा च श्रद्धाद्य पाश्चात्यशिक्षादीक्षाप्रभावेण पुरुषेभ्योऽपसारिता भारतीयभामिनीनां हृदयमन्दिरे प्रतिष्ठिता विराजते । वस्तुतो विश्वेस्मिन् कोमलभावानां निलयाः कोमलाङ्ग्य एव श्रद्धायाः परमाधाराः, विश्वासस्य च प्रधानभूमयः । सर्वे धर्मास्तासां मानस-मुकुरेषु प्रतिविम्बिताः प्रकाशमानाश्च स्वज्योतिभिर्जगदुज्ज्वलयन्ति । पाश्चात्यवाकचिक्यान्धीकृतज्ञानचक्षुषि कलिमलविहतचेतसि विषयभोगप्रवणे भारतीयमनुजसमाजे भारतीयभामिनीनां सरल... धार्मिकश्रद्धायाः शरणम् । तास्वेव सनात... स्थितिः । संप्रति ताभिरेव सर्वाधिकमभ्यस्ता ... बाह्यशरीरभूता नागरीलिपिः प्राणिति । अद्यहि प... संयुक्तप्रान्ते च पारसीकाङ्ग्लादि पाश्चात्यभाषानुशीलन... विचाराचारैर्विदेशीयकल्पाः पुरुषाः नागरलिप्यां लि... निजगृहलक्ष्मीणां पत्राणि पठितुं नागराक्षराणा... बलान्नियुज्यन्ते ।

परं केवलं नागरीलिपिमात्रस्य ज्ञानं भारती... विचारोन्नतये बुद्धिवैशद्याय वा नालम् । तासां धार्मि... सुरभाषाभिज्ञतामपेक्षते । संस्कृतसाहित्यज्ञानमन्तरा... मातृभाषायाः परिमार्जितोच्चहिन्दीभाषाया अपि संपूर्णतां नेयात् । संस्कृतानुशीलनाय च तासां ... समयोऽपि विद्यते । यतस्ताः पुरुषा इवाजीविकार्थं... लादिविदेशीय-भाषाभ्यसने विवशा न भवन्ति । ... हि पुरुषा एव स्वपरीवारपोषणद्रव्योपार्जनस्य भार... सन्तस्तदाश्रिताः स्त्रियस्तद्धारात् स्वतन्त्राः सन्ति ... भारतीयभामिनीनां शिक्षासरणिस्तथा विधेया, यथा ... मातृभाषया हिन्दीभाषया धार्मिकदेववाण्या च सा... व्यावहारिकज्ञानं धर्माचरणज्ञानञ्च यथासंख्यं सम्यक् ... योग्यतानुसारं यथावकाशञ्च प्रतिभाशालिन्यो भार... मातृभाषायाः संस्कृतस्य चोच्चशिक्षा अपि लभेरन् । ... शिक्षाविधौ जननीदुहितृसंबन्धविशिष्टयोर्द्वयोरेव भाषयोः... मानत्वात् तयोस्तासां पारंगतिः सुलभैव । भारती... भारताभिजना सुरवाणी, पारसीकाङ्ग्लादिविदेशी... अपेक्ष्य सुगमा । तस्याः शब्दसंपत्तौ प्रतिशतमशीति... मातृभाषाहिन्दीभाषया समाकारतां भजन्ते । भाव... प्रकाशप्रणालीव्यवहाराश्च समरूपाः सन्ति । विचार... भारतीयत्वादेकैव । तेन यदि सुरसरस्वतीसुरक्षा सम... स्माकम्, तत्प्रत्ययेकेन सुरसरस्वतीश्रद्धालुना तथा प्रय... येन गृहे गृहे सर्वासां भारतीयकुलकन्यानां जिह्वाग्रेषु ... सुरसरस्वती विलसेत् । भारतीयगगनमण्डलञ्च तत्...

...ते, प्रक्रमेच्च तद्गौरवेण गौरवान्वितेयं मेदिनी । ...स्य वैदिकसभ्यतायाश्च साम्राज्यं सकलविश्वमण्डले ...त । संप्रति सुरसरस्वत्याः संवर्धनं संरक्षणञ्च भारता-भिमानिनीनां भारतभामिनीनामधीनम् । तस्याः संरक्षाविधौ विहितप्रयत्नास्ताः स्ववंशगौरवाणां गार्गीसुलभा-दीनां ब्रह्मवादिनीनां विश्वव्यापिनीं कीर्तिमक्षुण्णां संस्थापये-युः । तेनेदानीं संस्कृतसाहित्यानुशीलनं भारतीयमातुर्महिम-मूर्धन्यानां भारतमहिलानां मुख्येतिकर्तव्यम् ।

# अहो अस्माकं समाजः !

## कदा तु खलु सुप्रभातं भविष्यति ?

ले०—श्रीनरदेव शास्त्री, वेदतीर्थः

( १ )

"सर्वे धर्मा राजधर्मे प्रविष्टाः" इति महा-भारतवचनं स्मारं स्मारं नितरां विषीदति नश्चेतः । क्वास्ति सोऽस्माकं राजधर्मो यः पुरा जगत्पालयतिस्म यथावच्चालयतिस्म ...ष्टे राजधर्मेऽस्माकं समाजोऽपि भस्माऽऽध्मायितमिव ...न जीवति,-अहो वत ! अस्माकं समाजः "समज" ...भूतस्तिष्ठति स्व-राज्याश्रयविहीनः, हीनः, दीनः ...ः पराधीनः ।

( २ )

"सर्वे धर्मा राजधर्मे प्रविष्टाः"—कथमिति ? ...विस्पष्टसुपवर्णितमस्माकं प्रमाणभूतेऽर्थशास्त्रे कौटिल्या-...भिमते

१—सुखस्य मूलं धर्मः
२—धर्मस्य मूलमर्थः
३—अर्थस्य मूलं राज्यम्
४—राजस्य मूलमिन्द्रियजयः
५—इन्द्रियजयस्य मूलं विनयः
६—विनयस्य मूलं वृद्धोपसेवा—

इत्यादीनि चाणक्यसूत्राणि किमु बोधयन्ति ?

( ३ )

स्वधर्मपोषके रक्षके वर्द्धके च स्वराज्याश्रयाभावे धर्मो नाम कथं जीवतु,-धर्मवृक्षः कथं च नाम प्ररोहतु, अधर्मवृक्षस्य समूलोच्छेदो नाम कथं भवतु । "कोऽयं धर्मः कुतो धर्मः" इति विषयकान् प्रश्नान् धर्मजिज्ञासवः कथं च परिपृच्छन्तु—

अहो, सर्वमधरोत्तरं संवृत्तं राज्याश्रयाभावादिति इदा-नीन्तनानां शासकानामस्माकञ्च धर्मपन्थाः सर्वथा विभिन्नः, अस्माकं धर्मग्लानौ तेषामभ्युदय एव नास्त्यत्रसंदेहलवोऽपि ते किमपेक्ष्य नो धर्मं नः समाजं च रक्षिष्यन्ति ? एतेऽस्माकं धर्मं परिपालयिष्यन्ति इति दुराशामात्रम्

( ४ )

स्वराज्याश्रयाभावाद्वर्णाश्रमाणां वर्णाश्रमधर्माणाञ्च प्रति-दिनं ह्रासोऽत एवोपहासः । खञ्जो धर्मो यथातथा इतस्ततो महता प्रयासेन कतिचित्पदानि प्रचलितुं शक्नोति इति नाविदितं प्रेक्षावताम्—"पूर्वं धर्मः पश्चात् स्वराज्यम्" इति केचनामनन्ति परं "पूर्वं स्वराज्यं ततो धर्मः ततश्च सर्वमभीप्सितम्" इति नो राद्धान्तः—दण्डभयादेव प्रजाः धर्मपालने प्रवृत्ता भवन्ति स च दण्डो सर्वथा राज्याधीनो राजाधीनो वा, एतर्हि राजा च अन्यत्र धर्माद्दण्डं पातयति, स च स्वधर्मे तत्परो न चास्माकं धर्मरक्षणहेतुः । अस्ति राज्याधिकारिणां प्रजाधर्मतो विभिन्नो स्वधर्मः, स्वराज्यञ्च,- अत एवैतद् राज्याधिकारिणाम् प्रजानाञ्च मिथो धर्म-सम्बन्धः हितसम्बन्धश्च पृथगेवाऽस्ति, अत एव तेषां हितम-स्माकमहितं भवति एतच्च दिवा दिवाकरप्रकाश इव सुप्रकाशम्—

( ५ )

"कालो वा कारणं राज्ञः

राजा वा कालकारणम्"

इति पृष्टे भीष्मपितामहेन किमुत्तरितमित्यप्यवधेयं सुधीभिः—

"कालो वा कारणं राज्ञः,

राजा वा कालकारणम् ।

इति ते संशयो मा भूत,

राजा कालस्य कारणम्" ॥

यदि "राजा कालस्य कारणम्" यदि वा "सर्वे धर्मा राजधर्मे प्रविष्टाः" इति सत्यं, तर्हि किमिति पण्डितसमाजो राजकारणतः उदासीन इव तिष्ठति; तेषामौदासीन्यमपि धर्मनाशहेतुः प्रजापीडनहेतुरिति किमु वदामः—

( ६ )

स्वराज्याश्रयाभावे धर्मो खञ्जो लुञ्जश्च तिष्ठतीति किमु पडितसमाजो न वेत्ति ? मुमूर्षुर्धर्मोऽस्मानेव मारयति इति किं ते न विदन्ति ? वेदत्रयी संकटापन्ना, शास्त्राणि संकटाकीर्णानि, ब्राह्मशक्तिः ह्रासोन्मुखी, क्षात्रशक्तिश्च विनाशोन्मुखी इति किमविदितं तेषाम् यथेदानीमस्य समाजस्य व्याकरणादिशास्त्राणामागमकाले स्वाध्यायकाले प्रवचनकाले व्यवहारकाले च सुमहान् प्रयत्नस्तथा स्वराज्य प्राप्तिः कथं नेत्येव न विद्मः ।

( ७ )

अस्मिन् राज्ये पाश्चात्यप्रभवाणामाविष्काराणां [illegible] स्तु सर्वत्र दरीदृश्यतेऽनुभूयते च; परं धर्मस्तु सर्वथा [illegible] मापन्नः—मद्यपानादीनि व्यसनानि परितो [illegible] प्रजोत्पीडनमेव कुर्व्वन्ति, प्रतिदिनमेधमानाः कर-भारा[illegible] दारिद्र्यगर्ते बलान्नयन्ति, कदा नु खलु पण्डितसमाजः [illegible] समुद्धाट्य वस्तुस्थितिं च विलोक्य जनतात्मनं [illegible] प्रयतिष्यते, यथा पाश्चात्यशिक्षाप्रभावितानां [illegible] प्रयत्नस्तथैव पौरस्त्यशिक्षासमेतानां प्रयत्नाः स्युस्तर्हि [illegible] एवोदर्क इति बोध्यम्-परं "किमस्माकमनेन व्यापा[illegible] "कोऽपिनृपः स्यादस्माकं का हानिः दास्यं च वि[illegible] वयं महिषीस्थानं प्राप्तुं शक्नुमः" इत्यादि प्रतिदिनं प्र[illegible] चारटमानः पण्डितसमाजोऽक्षरपाण्डित्यं विहाय किमु कु[illegible]

"गता वेदविद्या गतं धर्मशास्त्रम्

इदानींन्तनानां जनानां प्रवृत्तिः

सुबन्ते तिङन्ते कदाचित्कृदन्ते" ।

इत्यस्योदहरणीभूतः पण्डितसमाजः सुनिपुणं वि[illegible] किन्तस्य कर्त्तव्यमिति—

यद्यदाचरति श्रेष्ठः तत्तदेवेतरो जनः

स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते

इति च न विस्मरणीयं पण्डितसमाजेन एतर्हि "अ[illegible] नीयमाना यथान्धाः" इतिवत् पण्डितसमाजोऽप्यन्[illegible] वर्तकाश्चेति किमु वक्तव्यमस्माभिः ।




## ...प्रवरः श्रीकृष्णराम कविः ।

...रुषोत्तमशर्मा चतुर्वेदः, साहित्याचार्यः ।

आसीन्मेदपाटीयभट्टाह्वजातीयो महीसुरप्रवरः पण्डितप्रकाण्ड आयुर्वेदागमप्रवीणः 'कुन्दनजी' त्युपनामकः श्रीचैनराम भट्टः । यः खलु जयपुर-राजकीय-संस्कृत-पाठशालायाः प्रारम्भे जयपुरपुरन्दरेण ...धर्मणा सादरं समर्पितमायुर्वेदविद्यायाः प्रथमा...मतितरामलञ्चकार । तस्य तनयद्वये ज्येष्ठः सर्व...जयपुरजनतायाः परमप्रेष्ठश्च पण्डितश्रेष्ठः श्रीश्री...मा भिषग्रत्नमभूत् । चैनरामशर्मणः क्रमशः परि...द्वये प्रथमायामेष कुशाग्रधिषणः पञ्चोत्तरैकोनविंशति (१९०५) विक्रमवत्सरे कृष्णजन्माष्टम्यां जन्म ...स्यैव च वैमात्रेयः कविमल्ल-श्रीहरिवल्लभशर्माऽऽ... येन 'जयपुरपञ्चरङ्गा' द्योऽनेके काव्यप्रबन्धा ...न्त ।

...स्य एवासौ मेधावी स्वपितुरेव समधिगतव्याकरणा...णामः सुप्रसिद्धगुरूपनाम्नः श्रीजीवनाथशास्त्रिणः साहि...म्, आयुर्वेदाचार्याद्यनेकोपाधि विभूषितस्य श्रीलक्ष्मीरामस्वामिनो दीक्षागुरुतः श्रीचन्दनदाससाधुतश्च च्छन्दशास्त्रमधिगतवान् तदेतत् तेन स्वयमेव प्रत्यपाद्यत सर्वेष्वपि स्वप्रणीतप्रबन्धेषु । तथाहि ।

**येनाशिक्षि सजीवनाथगुरुतः काव्यप्रकाशाशय-**
**श्छन्दश्चन्दनदासतः सगणितं, वैद्यागमस्ताततः ।**
**सूते गन्धक जारणावधिकृता येन क्रिया ऽकशः**
**सोऽहं नूतनकाव्यपञ्चककृतिः श्रीकृष्णरामः कविः ।**

ततश्च लब्धसर्वविधविद्यो द्वात्रिंशदुत्तरैकोनविंशतिशततमे (१९३२) विक्रमवर्षे स्वपितृपरम्परया प्राप्तं संस्कृतपाठशालायामायुर्वेदाध्यापकत्वमुररीकृतवान्; अध्यापितवांश्च चिकित्सकचूडामणिश्रीश्यामलालजी वैद्यराजमहोदयम्, जयपुरराजकीय-संस्कृत-पाठशालामिदानीन्तनमायुर्वेद प्रधानाध्यापकं श्रीलक्ष्मीरामस्वामिनम्, तथाविधानपरांश्च महायशसः स्वशिष्यान् । काव्यायुर्वेदोभयाध्यापनविषये तस्यातीव प्रावीण्यमासीदित्यद्यापि संगिरन्त एव तदीया अन्तेवासिनः । तारस्वरसंपन्न एष महात्मा यदाऽध्यापयतिस्म, तदा सर्वाऽपि पाठशाला तदीयेन स्वनेन परिपूर्यतेस्मेत्यपि श्रूयते ।

सोऽयं भिषग्वरः श्रीजयपुरमहीपतेर्लब्धग्रामस्य स्वपितुर्धनसम्पदमुपभुञ्जानः सर्वविधसौख्यसंपन्नः, अतएवाऽदीनस्वभावः सुतरां विलासी चाऽऽसीत् तदेदं विधगुणगणरमणीयायामतएवात्युर्वरायामस्य नैसर्गिक-प्रतिभापृथिव्यां सहृदयहृदयाह्लादिनी कवितालता तथा कुसुमिता बभूव, यथा

सर्वोऽपि भारतभूमिभागः सुधीजनसुरभिणा सौरभेण संप्रत्यपि सुतरामामोदमानसो भवति ।

एवंविधस्य कवेर्हृदयं कवितायां प्रतिबिम्बितं भवतीत्यन्यत्सर्वमप्युपेक्ष्य तत्प्रणीतकाव्येभ्यः कानिचिद्रुचिररुचिराणि पद्यानीहोद्धरामः, येन विद्वांसः स्वयमेव तत्स्वभावादि परीक्षेरन् कविताऽमृतंचाऽऽस्वादयेयुः । तथा हि—

कच्छवंशमहाकाव्ये स कविः समिचमत्कृतिमोजोऽभिव्यञ्जकया कया रचनया वर्णयतिस्मेति निरीक्ष्यताम्—

अलं ज्वलत्खड्गघटाभलत्कृतिः
क्षतस्रवच्छोणितसिक्तपद्धतिः ।
समुच्छलत्कच्छविमुक्तहुङ्कृतिः
प्रचण्डतां प्राप समिच्चमत्कृतिः ।

सप्तमसर्गः १२६

एवमेव मानसिंहमहीपतेर्युद्धोपक्रमे प्रतिनृपतिंप्रति वागारम्भवर्णनमप्यमुँ गुणं कीदृगभिव्यञ्जयतीत्यपि परीक्ष्यताम्—

रोषयोषवशाद् बद्धभ्रुकुटिमाधवाग्रजः ।
खड्गमुष्टौ दधन्मुष्टिं स्पष्टमित्थमुवाच तम् ।

सप्तमसर्गः ११२

तस्मिन्नेव काव्ये जयपुरवर्णनेऽनुप्रासोत्प्रेक्षोदात्तस्वभावोक्तीनां प्रसादगुणस्य च चमत्कारोऽपि विलोक्यताम्—

प्रांशुप्राकार-धवल केतुचीनांशुकाञ्चलैः ।
कुर्वाणमिव मेघेषु बलाकावलिवल्गनम् ।
सदोपकण्ठवलित-वनमालामनोरमम् ।
गोविन्दमन्दिरोद्द्योतं विडम्बयदिवे स्फुरत् ।

दशमसर्गः ८३४-३५

मरन्दलुब्धमधुपश्यामीकृततरूत्तराः
दधत् प्राकारमभितः पुष्पवाटीपरम्पराः ।

दशमसर्गः ८३७

मुक्तकमुक्तावल्यां कविनाऽनेन प्रावृषोरजकीरूपं ग् व्यधीयतेत्यपि श्रूयताम्—

चञ्चलविद्युद्दलया विरचितघनकृत्तिपात्रजलसे
प्रावृड्रजकी परितः प्रक्षालनमम्बरस्य विदधाति

( तत्रैव ) प्रावृष्यप्यवग्रहमवलोक्य कविना तन्निदानमन्विष्टमित्यप्यवलोक्यताम्—

पापं केऽपि जगु, निदानमनलं प्राहुः परे मारुतं
नक्षत्रं कतिचिज्जजल्पुरितरे दुर्दैवमूचुर्
यत्तु प्रावृषि वैपरीत्यमधुना लोके समुज्जृम्भते
तत्सुप्ते जगदीश्वरे जलमुचामन्याय उन्नी

अस्य कवेः सर्वाण्यपि फलान्यतिशय्य रसालफले नासीदनुरागः; तत्तत्पक्षपातमालम्ब्य कथमभिभावितानि फलानीत्यप्यवेक्ष्यताम्—

श्रुत्वा चूत ! तव श्रियं भुवि धृते जम्ब्वा रुषा का
कालिङ्गं त्रपयेव लीनमवनौ दीर्णं शुचा दाडिम
मृद्वीका मृदुतां दधार पनसं रोमाञ्चितं भीति
संतापादिव नारिकेलजठरे जातं जलानां भरै

ब्रजभाषायां 'कावत्त' इति प्रसिद्धेनच्छन्दसा सं भाषायां वर्णनमनेनैवोपक्रान्तम् । कीदृग्विधैश्च प्रसाद पदै र्जयनगरनरेन्द्रः श्रीरामसिंहोऽत्र वर्णित इत्यप्यलोक्य

'सूत ! रथमेहिदेहि बाणगणमाशुमेहि,
मित्र धृतिमत्र धेहि संगरमहामहे ।
वर्म कुत्र चर्म कुत्र भयं वृथा मास्मकृथाः,
छिन्धि भिन्धि धावधाव सहे नास्य नाम
इतिस्फुटं भवद्विषां शैलगुहास्वापजुषां,
विलापयुग्वचो वयं समुपलभामहे ।
वैरिकुलवृन्दकाल ! चन्द्रसित-कीर्त्तिजाल !
कण्ठलोलरत्नमाल ! महीपालरामहे !

...'दोहा'च्छन्दसाऽपि मधुरविशदैः पदैः श्रीगङ्गा...
...वर्ण्यताम् ।

...शेखरशशिचन्द्रिकासंचयचारुमहांसि ।
...तु मुदं मन्दाकिनीतरलतरङ्गपयांसि ।

...छन्दसा हरेर्हृदयस्थलवीक्षितयोर्वर्णनमप्यवेक्ष्यताम्-

...तामलमनुरागि बहु करुणारसपरिणामि ।
...स्थलमिव वीक्षितं हरेरहं प्रणमामि ।

...स्य यमकादिष्वप्यधिकार आसीत्, स हि जयपुर...
...तु स्थाने स्थाने, विशेषतस्तु जयपुरविलासस्य...
..., स्पष्टमेवाऽवलोक्यत इति न तदुदाहरणानी-
...नि ।

...यं कविः संस्कृतभाषायां कवने प्रावीण्यमलभत,
व्रजभाषायामप्यासीदस्य पाटवमितितादृशमप्यस्य
...वर्ण्यताम् ।

...धराधवके प्रबल प्रयान होत
तुरग तयार होत पौन' पद-पात में ।
...चलान होत नाद होत वीरन के,
...रनको वितान होत जैसे तम रातमें ।
...कवि "राम" और कालीके सुकाल होत,
मुण्डन की माल होत हरजू के हात में ।
...कुल हारेजात, जिनघर जारेजात,
...पकरि निकारेजात और ही बिलात में ।

...दिग्दर्शिता । अतःपरमनेन कविना यानि
...निर्मीयन्त, तेषु कतिचन चमत्कृतिचारूण्यकारा-
...सविषयवर्णनमधस्तादुपन्यस्यन्ते । तथाहि—

...आर्यालङ्कारशतम्—अत्र भगवत्याः स्तुतिः
...केनालङ्कारेण वर्णिताऽस्ति । तदेतदप्रकाशितमेव

२—**कच्छवंशमहाकाव्यम्**—अस्मिन्नासन्नविंशैः सर्गैः सुरुचिरैरनुष्टुप्प्रधानैर्वृत्तैर्जयपुरनरेन्द्रवंशावलीवर्णनमस्ति । परमेतदिदानीं यावन्न केनाऽपि प्राकाश्यत । यदि जयपुरराज सभासदस्याः ( मेम्बर आफ् केबिनेट ) अस्य प्रकाशनविषयेऽवधीरंस्तर्हि जयपुरवंशऽस्य कवेश्च कीर्ति-कौमुदी सर्वतः प्रसरेदित्यस्माकमस्ति मतिः । अत्र चाऽनेन कविना भूयः परिश्रम्य कुतश्चिल्लब्धानि न केवलं जयपुरनरेन्द्राणामेव, किन्तु यवनसम्राजामपि जन्मपत्राणि वर्णितानि सन्ति, सर्वासां राजपत्नीनां तत्पुत्राणाँ च नामानि निश्शेषतो निर्दिष्टानि । तदिदं प्रकाशितं सन्न केवलं साहित्यविदाम्, अपित्वैतिहासिकानामपि केषुचन विषयेषूपकारि स्यादिति नो विश्वासः ।

३. **काव्यमालाप्रशस्तिः**—इदमल्पीयः काव्यं 'काव्यमाला' नाम्न्याः पुस्तकमालायाः प्रशंसायामलिख्यत । मुद्रितं चैतत् काव्यमालायां मुक्तकमुक्तावल्यां च ।

४. **काशीनाथस्तवः**—अत्र भवतः शिवस्य, काशीनाथनाम्नः कस्यचन द्रविड़पण्डितस्य च श्लेषे वर्णनमस्ति । एतदप्यप्रकाशितम् ।

५. **गद्यसमाधानम्**—अत्र हि काश्चन प्रहेलिकास्तथोपन्यस्ताः सन्ति, याः प्रेक्ष्य मतिर्दोलयेत्; परं समाधानमतीव सरलं स्यात् । अप्रकाशितम् ।

६. **गोपालगीतम्**—गोपालस्तुतिरत्र वर्णिता । अप्रकाशितम् ।

७. **गोविन्दभट्टभङ्गम्**—इदमल्पीयः काव्यं दायभागादौ विगृह्णतः पितृव्यस्य निन्दायां विलिख्य कविनैव प्रकाशितमासीत् । एतेनाऽस्य प्रतिद्वन्द्विभयङ्करत्वमुच्छृङ्खलत्वं च प्रतीयते; परं नात्युपयोगि ।

८. **छन्दोगणितम्**—अत्र प्रस्तारादिषट् क्रियासहितानां सर्वविधवृत्तानां विशिष्टं वर्णनमस्ति; परममुद्रितम् ।

९. **जयपुरमेलककुतुकम्**—अत्र जयपुरे विजयदशम्यादिषु यानि मेलकानि ( मेला ) भवन्ति, तेषां साम-

८



यिकं वर्णनमस्ति। अस्य कियानंशः सिद्धभेषजमणिमाला-नामुद्ग्रथत।

१०. **जयपुरविलासम्**—तदेतत् सुप्रसिद्धं तेनैव कविना प्रकाशितं च काव्यं न परिचयमपेक्ष्यते; परमिदानीं क्रीतपुस्तकतया पुनर्मुद्रणमपेक्ष्यते।

११. **पलाण्डुराजशतकम्**—इह पलाण्डोर्दिग्विजयस्य तथा वर्णनमस्ति, यथा स साहित्यविदां सुखदो भिषजां चोपयोगी स्यात्। प्रकाशितमेतत्।

१२. **माधवपाणिग्रहोत्सवः**—इह तदानीन्तनस्य जयपुरनरेन्द्रस्य श्रीमाधवसिंहस्य जयपुर एवाऽऽनीतया सूर्यया सह विवाहोत्सवस्य वर्णनमस्ति।

१३. **मुक्तकमुक्तावली**—अत्र कविना स्वीयानि सुन्दर-सुन्दराणि पद्यानि संगृहीतानि सन्ति। सैषा जयपुरविलासेन सह संमुद्रिताऽस्ति।

१४. **सम्राट्सुताभिनन्दनम्**—अत्र 'प्रिन्स आफ वेल्स' संज्ञया भारते समायातस्य सम्राड्जार्जमहोदयस्य वर्णनमस्ति।

१५. **सारशतकम्**—इह रघुवंशादीनां पञ्चमहाकाव्यानां शार्दूलविक्रीडितच्छन्दसा प्रतिश्लोकमेकैकसर्गकथावर्णनमस्ति। एतदपि जयपुरविलासेन सह मुद्रितमस्ति।

१६. **सिद्धभेषजमणिमाला**—अत्र वैद्यवरेणाऽनेन स्वानुभूतानि प्राक्तनग्रन्थेष्वनुपलभ्यमानानि भूयांस्यौषधानि संगृहीतानि सन्ति, यानि भिषजामतीवोपयोगीनि। विप्रकीर्णोऽयं संग्रहस्तन्निधनानन्तरं तत्प्रियशिष्येण पूर्वोक्तप्रशस्तिकेन श्रीलक्ष्मीरामस्वामिना संपाद्य टिप्पण्या च संयोज्य प्रकाशितस्तद्विदामुपकरोतीति न तिरोहितम्। सैषा द्वितीयावृत्तौ मुद्रिता आचार्यपरीक्षायां पाठ्यत्वेन नियताऽस्ति।

१७. **होलोत्सवः**—अत्र होलासमयसमुचितानि कानिचिदश्लीलवर्णनपराणि पद्यानि सन्ति।

अयं कविर्भङ्गाभक्तो विचारशीलः परमरसिक निधनात् किञ्चित्पूर्वमेवैतेन महाभागेन 'संस्कृतचिकि समुद्घाटयत, यत्र नानाविधैरोषधैरचिकित्स्यन्त आयुर्वेदप्रसिद्धायां रसप्रक्रियायामस्य महाकवेर्महै सीत्। सर्वेपि च रसा अनेन निजहस्तेन निर्मी तदन्तेवासिवृन्दमुखाच्छ्रूयते। प्राचीनपुस्तकसंग्र महानासीदनुरागः, अतएव यान्यायुर्वेदादिपुस्तका नोपालभ्यन्ते, तान्यप्यस्य गृहे साधुसंगृहीतानि वि क्रमाणि चाऽऽसन्। परमिदानीं तानि तथा न स इत्यस्ति नः खेदः। इदानीमस्य महाकवेर्वंशे तत्तुल्यगु दैवादकालमृत्युं प्राप्तवतः सुतस्य पण्डितप्रकाण्डश्री भट्टस्यसुतः श्रीनृहरिशर्मा सुतादिसौख्यमनुभव अनेनैव महात्मना आयुर्वेदाचार्यश्रीनन्दकिशोरश श्वस्य 'कच्छवंश' महाकाव्यमस्मभ्यमदर्शयत्।

हा हन्त! स एष कविकुलरत्नमायुर्वेदागमपार श्रीकृष्णरामकविश्चतुष्पञ्चाशदुत्तरैकोनविंशतिशततमे वर्षे वैशाखकृष्णप्रतिपद्यूनपञ्चाशवर्ष एव करालेन कीर्तिशेषतां नीत इति भूयस्यो विचारपरम्परास्तेनैव लीयन्तेति खिद्यमानमानसा वयं विरमामोऽस्मादुपक्रमा

---

१—अस्मिन् जीवनचरितलेखनविषये पूर्वोक्तप्रश श्रीलक्ष्मीरामस्वामिभिश्चिकित्सकचूडामणिश्रीश्यामला महोदयानां तनुजन्मभिरायुर्वेदाचार्यश्रीनन्दकिशो पुस्तकादिदानेन, श्रमं स्वीकृत्यापि सर्वविधसाहाय्य चातीवोपकृतमित्येतल्लेखपाठकैरेषामेव महाभागाना स्मरणीयः।—लेखकः






## ...र्षयः श्रीजनार्दनमिश्राः ।

...युगे भारतवर्षस्य यादृग्वातावरणं समालोक्यते, ...कं धार्मिकी स्थितिर्यादृशी दुरवस्थिता वर्त्तते; नैत... संस्कृत-हृदयानां सहृदयानाम् । दम्भपूर्णा धर्म... ...योऽवलोक्यते; परं वास्तविकी क्रियात्मिका धार्मि... ...प्येव यस्मिन् कस्मिन् वा लालक्ष्यते । विद्वत्त्वपा... ...तत्रापि क्रिया एते नैकत्रसुलभा भवन्ति कालेऽस्मिन् ...। तथापि काश्यां दृश्यन्ते इदृशाः कर्मकाण्डनिष्ठा ...; परन्तु क्रमशस्तेषां ह्रास एवालोक्यते । पश्य... ...कं द्विजाः पवित्राः पण्डितमौलिमणयः कथाशेषतां ...। साम्प्रतमेव वेदमूर्त्तयोऽस्माकं परमाराधनीयाः ...ः श्रीजनार्दनमिश्रमहोदयास्तस्यामेव श्रेण्यामलङ्क... ...आसन् । ये खलु अस्मिन्नेव १९८४ तमे वत्सरे ...प्रतिपदि शिवसायुज्य भजमाना अस्मान् शोक... ...नकुर्वन् ।

... खलु मुलतान ( प्रह्लादपुरी ) नगराभिजना आसन् । ...पादास्तातपादाः श्रीवलीराममिश्रमहोदया बाला... ...। तेषां विवाहश्च, श्री १०८ वल्लभाचार्यस... ...गतस्य श्रीलालजीश्रीप्यारीजीमन्दिरस्याध्यक्षाणां ...कृष्णजीमहोदयानां कन्यया सह समभूत् । तस्या ...नन्तरम्, तदनुजानां गोस्वामिश्रीरामाजी ... कन्ययासह पुनः परिणयो बभूव । इमे खलु ... रुद्री-सप्तशती-शुद्धिविवेक-सहस्रनाम-गीता-प्रभृतिग्रन्थानधीतवन्तः । सर्वदा सत्यभाषणनिरताः, स्व-कर्म-परायणाः, भगवद्भक्ता आसन् । त्रिकाल-गङ्गास्नानपरिपूता त्मनामेतेषां धर्मपत्नी पुत्रचतुष्टयं सुषुवे । तेषु ज्येष्ठाः श्रीराजेन्द्र ( राजनूजी ) मिश्राः साङ्गं वेदमधीत्य कलिकातानगरे वैदिकेषु विद्वत्सु परां प्रतिष्ठामासादयाञ्चक्रुः । अपरे श्रीगोपीनाथमिश्रास्तद्वदेव स्व-पितामहस्थाने मुलताननगरे महतीं कीर्तिवल्लरीमारोपयामासुः । तत्र नगरे प्रधानाः कर्मकाण्डिनो वैदिक-प्रवरा एत एवासन् । तृतीयपुत्राश्चास्माकमिमे परम-श्रद्धेयाश्चरितनायकाः श्रीजनार्दनमिश्रमहोदयाः काश्यामेव पितृकुलप्रतिष्ठां समवर्धयन् ।

एभिः श्रीमतां वैदिकाचार्याणां आपाजीमहोदयानां सकाशात् शुक्लयजुःसंहिता, सोमसौत्रामण्ययाजिनो दीक्षित श्रीगोविन्दजी अग्निहोत्रिणः सविधे श्रौत-स्मार्तसूत्रादयः कर्मकाण्डग्रन्थाः, नागर-कुलभूषणेभ्यः श्रीकृष्णजीमहोदयेभ्यः शतपथब्राह्मणञ्चाधीतम् । शतपथब्राह्मणस्याभ्यसने कण्ठस्थीकरणे चासन् काश्यां सुप्रसिद्धा इमे । रात्रिन्दिवं स्नान-सन्ध्या-स्वाध्यायैः श्रीमन्त इमे—'वेदमेवाभ्यसेन्नित्यम्' 'अहरहः सन्ध्यामुपासीत', 'स्वाध्यायोऽध्येतव्यः' इत्यादिविधीन् सनियममक्षरशः सार्थकीकुर्वन्तो जीवनं सफलतां नयन्तश्चास्मिन् काले महर्षीणामादर्शमस्थापयन् ।

इमे परमशिवभक्ताः सर्वदा भस्मोद्धूलितविग्रहा रुद्राक्षावृतकलेवरा स्वाध्याय-प्रवचनपरा एवादृश्यन्त । काश्यां सुप्रसिद्धस्य ज्योतिर्लिङ्गस्य श्रीवीरेश्वरस्य परमभक्ता आसन् । वयसो विंशतितमाद्वर्षादेव आत्मावीरेश्वरमन्दिरे प्रतिप्रदोषं

लघुरुद्राभिषेकमकुर्वन् । १९९३ तमे वत्सरे पत्नीवियोगः समजनि । ततः प्रभृति श्रीमतां जीवनं सर्वथा निवृत्तिमयं तपोमयञ्चाभूत् । धारण-पारणाव्रतमेभिः कृतम्, गोमूत्र-सिक्तानां यवानां पिष्टम्, मुद्गसूपञ्चेत्येतदेवैतेषामाहाराय समभूत् । वीरेश्वरमन्दिरे रुद्राष्टाध्याय्याः पाठचतुष्टयञ्च प्रात्यहिकमेवासीत् । पशुपतीश्वरमन्दिरेऽपि कियत्कालं यावत् पाठः प्रचलतिस्म ।

बहुवारं काश्यामवग्रहे सति भूयोभिर्ब्राह्मणैः सह केवलं जनता तापापहाराय यावज्जलवर्षणं अतिरुद्र-महारुद्रादीनि कृतानि वृष्टिश्चाभवदिति प्रत्यक्षमेवावलोकितं नैकशोऽस्माभिः । इमे सर्वदा उपकारनिरता एव आसन् । तदर्थं मानापमानयोरपि नासीदेतेषां क्वचन चिन्ता । सर्वदाव्रतोपवास-स्वाध्यायादिभिस्तपोभिरेतेषां मुखे ब्राह्मं ज्योतिः प्रकाशतेस्म । मरणावधि छात्रेभ्यो वेदाध्ययनं कारयन्तिस्म । गतेषु दिवसेषु फाल्गुनेमासि तृतीयायां बुधे आतुरसन्यासमेतैर्गृहीतम् । तस्मिन्नाश्रमे तेषां **परमहंस परिव्राजकाचार्य श्रीसच्चिदानन्दस्वामीति** संज्ञा समजनि ।

फाल्गुनशुक्लप्रतिपदि बुधे च प्रातरेव ब्रह्मीभूता इमे । सनातनधर्मस्य सजीवो महानादर्शोऽद्य वाराणसीं वियोग-विकलां व्याकुलयतीति कस्य वा चेतो नो दोदूयतेतरां सनातन-धर्माभिमानवतः । मरणसमये ८० वर्षात्मकं वय आसीदेतेषाम् ।

एतेषां गङ्गासमाधिरपि महता समारम्भेण सम्पन्ना । अस्मिन् समये नगरस्य सुप्रसिद्धा विद्वांस आसन् । यथा-पण्डित-प्रकाण्डाः श्रीमन्तः पद्मनाभशास्त्रिणः, महामहोपाध्यायाः श्रीमन्तो लक्ष्मणशास्त्रिणः, श्रीविश्वनाथज्योतिर्विदः, श्रीमदनमोहनशास्त्रिणः, अन्ये च श्रीसेल्हटजी—श्रीपुरुषोत्तमदासजी—भक्तवर श्रीरामसरणदासजी-प्रभृतयो गुरु-भक्ताः सहस्रावधिकाः पुरुषाः, स्त्रियः, बालाः, वालाश्च सम्मिलिता आसन् । समाधिसमये अन्नपूर्णा ब्रह्मचर्याश्रमस्य, श्रीविश्वनाथब्रह्मचर्याश्रमस्य च शतशो ब्रह्मचारिणो वेदध्वनिमकुर्वन् । रात्रौ तत्रैव श्रीदत्तमन्दिरे ( मणिकर्णिकायाम् ) आराधनम्, पूजनम्, अभिषेकः, जागरणमित्यादिकं विविधमभूत् । दश-दिवस-पर्यन्तञ्च प्रत्यहं विविधशाखासहितानां वेदानां दशोपनिषदाञ्च क्रमशः सार्थं प्रवचनम्, अन्यानि मङ्गलकृत्यानि चाभवन् । ततश्च तेषां सुपुत्रैः श्रीमद्भिः गङ्गाधरमहोदयैः समस्तकाशीस्थविदुषां दक्षिणासभा, साधूनां ब्राह्मणानां भोजनमन्यानि च दक्षिणा वितरण कृत्यानि सप्ताहपर्यन्तं महता समुत्साहेन कृतानि । अत्र कालिदासीयं पद्यं स्मृतिपथमधिरोहति—

'अकरोत्स तदौर्ध्वदेहिकं पितृभक्त्या पितृकार्यकल्पवित्
नहि तेन पथा गतैषिणस्तनयावर्जितपिण्डकाङ्क्षिणः'

धन्योऽसौ महर्षिकल्पो पुण्यवान् महात्मा पिता धन्यश्चायं श्रीमान् विद्वदग्रेसरो भक्तिप्रवण उदारचेतास्तद्द्वितयमपि साम्प्रतिके सुधारयुगे दुर्भिक्षकाले च सत्यमेव । एतेषां तनयद्वयं विद्यते—(१) श्रीमोनूदीक्षित-गङ्गाधरमिश्रोऽग्निहोत्रिमहोदयः (२) श्रीमानम्बिकाचरण महोदयश्च । अस्माकं श्रद्धास्पदाः श्रीमन्तो गङ्गाधरमहोदयाः काशीस्थ विद्वन्मण्डले मान्याः प्रतिष्ठिताश्च रिकाः सन्ति । इमे ज्योतिष्टोमयाजिनः सन्ति । एतेषां यत्नयं विद्यते । श्रीमान् अमरनाथमिश्रः शास्त्री, (२) पद्मनाभशर्म्मा, (३) भिषग्वरः श्रीमान् विश्वनाथ कविराजः । तदस्माकं प्रियसुहृदः श्रीअमरनाथ शास्त्री शेखावाटी-संस्कृत-कालेजे प्रधानवेदाध्यापकाः सन्ति । पद्मनाभ शर्म्मा पितृसेवायां याजमान्ये च निपुणः । योऽस्माकमनुजकल्पः श्रीविश्वनाथकविराजश्चिकित्सा-विद्यते । त्रयोऽपि परम-पितृभक्ताः, कुलमर्यादापालकाः परमास्तिकाः, विनम्राः, सुशीलाश्च सन्तीति भगवान् विश्वनाथस्तेषां कल्याणं समुन्नतिञ्च भूयोऽभ्यर्थयामहे ।

—सम्पादकः

## ...वराः श्रीमदर्जुनमिश्रमहोदयाः ।





...स्थेषु सुप्रसिद्धेषु चिकित्सकधुरन्धरेषु श्री-...र्जुनमिश्रमहोदयानां स्थानं परमोन्नतमासीदि-...विदितं संस्कृतविदुषाम् । आसन् खलु पञ्चा-...न्तर्गतहोसियारपुरमण्डले वडीवासीग्राम-...ाः सदाचार-परायणाः सारस्वतकुलोद्भवाः ...दत्तशर्म्माणः पण्डितमहोदयाः । तेषां गृहे ... वेदान्ताचार्याः श्रीपण्डित भानुदत्तशर्म्मा-...लेभिरे । तैः काश्यामागत्य स्थितिः कृता । ...महानुभावानां गृहेऽस्माकं चरितनायकाः, ...स्मरणीयचरणाः, पदवाक्यप्रमाण-पारावारपा- आयुर्वेद-मर्त्तण्डाः श्रीमदर्जुनमिश्रमहो- १९१० तमे वैक्रमेऽब्दे वैशाखशुक्ल-पञ्चम्यां ...जनिमन्त । बाल्यकालमतीत्य श्रीमन्तो गुरु-..., विंशतिवर्षवयो यावत् महामहोपाध्याय ...मोदरशास्त्रि-महामहोपाध्याय-श्रीतांत्याशास्त्रि-...होपाध्याय-श्रीगङ्गाधरशास्त्रि—श्रीलक्ष्मीनाथ-...प्रभृतिभिः समं पूज्यपादानां परमगुरुवराणां ...सरस्वतीत्युपाधिकानां महामहोपाध्याय-श्री ...शास्त्रिणां चरणेषु महाभाष्यान्तं सम्पूर्णं व्याक- रणशास्त्रमधीतवन्तः । ततश्च काश्मीराधिपते- राश्रितेभ्यः भिषक्प्रवरेभ्यः सप्तवर्षाणि यावत् कृत्स्नमपि आयुर्वेदशास्त्रमधीतवन्तः, ततश्चौष- धनिर्माणक्रिया-कौशलञ्च सम्यगधिगत्य लोके पीयूषपाणित्वमधिगतवन्तः । तदनन्तरञ्च शनैः प्रथितप्रभावा इमे स्वीयया सर्वविजयिन्या प्रतिभया काश्यामायुर्विज्ञानवित्सु सर्वप्रथमश्रेण्यां स्थान- मासादयन्तः श्रीमत्काशिराजप्रभोः प्रधानचिकित्सक पदमवाप्तवन्तः । यावज्जीवञ्च ते समाजोपकारे ला- किककार्येषु च प्रणिहितचित्ता आसन् । सत्यामपि प्रचुरतरायां धनसम्पत्तौ शिष्यव्यूहे च यशःसमृद्धौ रङ्के राजनि च सम-व्यवहारा अभूवन् ।

किं वच्मि तेषां साहित्यज्ञतां रसिकताञ्च । सङ्गीतशास्त्र-मर्मज्ञास्ते वीणावादने परां नैपुणी- मध्यगच्छन् । सङ्गीतशास्त्रे तैः पुस्तकमपि लिखित- मेकम् । सङ्गीतगुणज्ञेष्वपि काश्यां तेषां प्रधान मासनमासीत् ।

कियत् कालानन्तरं गार्हस्थ्य-जीवितफलस्वरूपं पुत्ररत्नमप्येकमप्यधिगतमासीत्तैः । परं दुर्दैवदुर्वि- पाकेनाष्टादशवर्षदेशीय एव स गुरुचरणानपारे शो- कसागरे निमग्नानकरोत् । इतः परमपि किं विधुरं गुरुप्रवराणाम् । उक्तमेव—

ब्रह्महत्याश्वमेधाभ्यां न परं पापपुण्ययोः ।
पुत्रजन्म-विनाशाभ्यां न परं सुख-दुःखयोः ॥

एवं शोकसन्तप्ताः श्रीमन्तो हिन्दूकालेजीयायुर्वे- दविभागे प्रधानाध्यापकपदं कियन्तमेव कालमल-

ङ्कृत्य तत्र स्वशिष्यवरं श्रीरामलालशर्म्ममहोदयं नियोजितवन्तः ।

तदनन्तरञ्च निर्विगणतया सर्वमपहाय आयुर्वेद प्रचाराय १९०१ तमेशवीये वत्सरे तैः "श्रीआयुर्वेद-विद्या-प्रबोधिनी पाठशाला" संस्थापिता । तत्रानेक-देशादागतैश्छात्रैरायुर्वेदोपदेशं प्राप्तवद्भिः साम्प्रत-मपि दोदोल्यते यत्र तत्र देशेषु विजयवैजयन्ती । तेषु—स्व० पं० रामलालशर्म्माणः, हिन्दूविश्वविद्या-लयीयायुर्वेदविभागाध्यापकाः श्रीपुरुषोत्तमशर्म्मा-णः, लवपुरस्थाः श्रीनानकचन्द्रशर्म्माणः, प्रधानभूताः सन्ति । ततश्च १९१७ तमेशवीये वत्सरे पाठशाला सञ्चालनाय समितिः संस्थापिता, राजकीयनियमा-नुसारं राजेष्टिता च पाठशाला । अस्याः सम्यक् सञ्चालनार्थमेकलक्षाधिकं स्वीयं चराचरात्मकं सम्पत्तिजातं समर्पितम् । अन्तिमे च समये विद्या-लयप्रबन्धकर्तॄणां कार्यमसन्तोषजनकं विज्ञायात्मी-यामवशिष्टां सम्पत्तिमन्यान्येषु धर्मकार्येष्वर्पितवन्त इति पाठशालाया महती हानिः सम्वृत्ता ।

१९२३ तमेशवीये वत्सरे च सन्यस्यात्मानं कैलासवाससुखमन्वभवन् । तदीयौर्ध्वदेहिकी सर्वाऽपि क्रिया तदाज्ञयैव तदीयधर्मपुत्रेण सजाती-येन गुरुवर-कृपा-विशेषभाजनेन मयैव विहिता ।

**श्रीविष्णुदत्तशर्म्मा, आयुर्वेदाचार्यः ।**

---

एषा पाठशाला साम्प्रतमपि प्रचलति । औषधालय औषधवितरणमपि भवति । विशेषवृत्तस्तु नावगम्यतेऽस्माभिः ।

—सम्पादकः

## "कविवराः श्रीमेधाकर शर्म्मा[णः] "बहुगुणाः"

एते खलु कविवेराः श्रीहिमालयोपक[ण्ठ]
गढवालाख्यजनपद्भूषणभूतामलकनन्दातारस्थ
नगराभिधां पुरीं निजजन्मनाऽलञ्चक्रुः । प[वि]
पावनगौडवंशावतंसानामेतेषां बाल्यएव
नवनवोन्मेषशालिनी धीः समजायत; ययाऽचि[र]
पूज्यपाद स्वपितृचरणेभ्यः सुगृहीतनामधेये
श्रीचण्डीदासशर्मभ्यः सर्वशास्त्राणामनर्गलं
मलभन् ।

तदानीं गढनरेशस्य चन्द्रवंशप्रदापस्य श्रीप्र
शाहमहाराजस्य राजधानी श्रीनगरमेवासी[त्]
( सम्प्रति तद्वंशीयानां राजधानी भागीरथ्या
"टिहरी" इतिसंज्ञकं नगरं भूषयति ) महा[प्र]
कविवराणामल्पीयस्येव वयसि तादृशीं विल[क्षणां]
प्रतिभां दृष्ट्वा सुतरां प्रसन्नः सप्रश्रयं कविवर[ान्]
राजद्वारे सदा समागमनाय प्रार्थयामास । एते
महाभागास्तदनुसारं प्रत्यहं राजद्वारे गत्वा स्व
धासूक्तिभिर्विविधाभिश्च कविताभी राजसभां
यन्तिस्म । तदानींयावत्, राजगुरुपदं तत्पितृचर[णा]
एवालङ्कुर्वन्तिस्म । एवं याते बहुतिथेकाले, गतव[ति]
च दिवं पितृचरणेषु, महात्मानः एते राजगुरु[पदं]
राजसभाप्रधानपण्डितस्थानं, धर्माधिकारिप[दं]
समभूषयन् । गार्हस्थ्यसुखोपजीवनी पुत्रपौ[त्रा]
दिका सम्पदपि सुयोग्या समुन्नता चाभूदेतेषाम्
एवं सतीष्वप्यखिलास्वभिमानसम्भाराष्ठु ना[...]

...ष्वेतेष्वभिमानः। सुतरां सरलसरला स्वच्छा ...तेषां प्रकृतिः। निर्ममेषु निरहङ्कारिषु, निस्पृ... प्रथमा अभूवन्

...दा श्रीबदरीशयात्रार्थमागतो जयपुराधी... द्वित्रिदिनं श्रीनगरे। तत्र च कविवराणां ... योग्यतां समवलोक्याप्रार्थयत, यद्भवन्तो ...द्वारस्य प्रधानपण्डितस्थानमङ्गीकुर्वन्तु, ...विंशतिग्रामाधिपत्यं ( जागिर ) भवद्भ्यः ...ष्यते। परमत्यन्तं लोभविमुखाः परदेश... पराङ्मुखास्ते तथा नाङ्गीकुर्वन्! तेषां तां ...विच्छित्तिं परामद्वैतनिष्ठाञ्च विलोक्य जय... ...णो बहुधा तांस्तदा समुपश्लोकितवान्।

...ः पण्डितवर्य्याणां तादृशं वृत्तमाकर्ण्य ...हृतायाञ्च परं विस्मितोऽतिहृष्टश्च गढनरेशः ...शाहः सानुनयं विद्वद्धौरेयेभ्यो ग्रामद्वयाधि...करणायाऽभ्यर्थनामकरोत्। तैश्च राजा... ...ति गत्वा तथाङ्गीकृतम्। सम्प्रत्यपि तद्वंश... ...नां तत्राधिपत्यं विद्यते।

...विवर्य्यैश्च स्वप्रतिभापरिचयः स्वनिर्मित...षु साधु दत्तः। पूर्वं तैः स्वपूर्वजपण्डित ...रामशर्मकविनिर्मित—-मनोदयाख्यकाव्यस्य ...कृता। ततः सरल-सरलया निकाममधुरया ...सद्भावरीत्यलङ्कारादिविलसितं सप्तकाण्ड... श्रीरामायणप्रदीपाख्यं काव्यं व्यरचि। ...विलासाख्यञ्च। तरसिकं सहृदयहृदयानन्दज... काव्यमपूर्णविंशतिवर्षावस्थायामेभी रचितमा...। एवं स्वतन्त्राः कविता अपि बह्व्यः सन्ति।

उक्तकाव्यत्रयमस्मत्पार्श्वे विद्यते। परममद्यावध्य-मुद्रितमेवास्ति। सम्प्रति तन्मुद्रणार्थं यतामहे।

तदानीं परमामभिख्यामापन्ना एते बहुभिर्महा-राजैराद्वृता बहुमानिताश्च। तेषां प्रमाणपत्रेषु प्रायः "जयति जयति वाणी कापि मेधाकरीया" इति पुण्यश्लोकमुपलभ्यते।

एतेषां विशिष्टं जीवनं तथा कविताश्च प्राप्तेऽव-सरे पाठकानां मनोरञ्जनाय सुप्रभाते प्रकाशयिष्य-ते। इत्यलम्।

—सत्यप्रसादशर्मा "बहुगुणः"

ओरियण्टल कालेज लाहौर।




विलसतु, मानसमनिशमुमेशे। ध्रु०—

अधिसुविशालभालतलमनुपललसितशरत्कुमुदेशे।
भृशममरेश-मुरारि-विरञ्चिभिरादरणीयनिदेशे ॥ १ ॥ विलसतु०
विततवीचिमयसुरसरिदतिशयशोभितजटाप्रदेशे।
गजवदनाऽऽननचुम्बनचञ्चलहैमवतीकसदेशे ॥ २ ॥ विलसतु०
नीलकण्ठतलविलसितवासुकि-वलयीकृतभुजगेशे।
श्वशुरतया प्रणयातिशयादनुरज्यति सततमगेशे ॥३॥ विलसतु०
परममुदारभावमुपगतवति भक्तिभरादसुरेशे।
प्रबलवैरिदलदलनविनोदितसततविभीतसुरेशे ॥४॥ विलसतु०
मानसमृदुलभावभरभावितसौहृदवश्यधनेशे।
"भूप" कवेरधिहृदयसरोरुहमुदितवतीव दिनेशे ॥५॥ विलसतु०

*श्रीभूपनारायणझा शर्मा व्याकरणाचार्यः*

साहित्यारत्नम्



# पण्डित-परिचयः

१—परमगुरवः श्रीमद्राजारामशास्त्रिमहोदयाः ।



इमे खलु महानुभावाः काशीस्थ-सुप्रसिद्धविदुषां विश्वविख्यात-यशसां श्रीगङ्गाधर-श्रीशिवकुमार-श्रीदामोदर-श्रीतांत्याशास्त्रि-प्रभृतिविदुषां पितामहगुरवः, जगद्विख्यातप्रकाण्डपाण्डित्य-प्रभावानां श्रीमतां पूज्यपादानां बालसरस्वतीत्युपाधिभाजां महामहोपाध्याय-श्रीबालशास्त्रिणाश्च गुरव आसन् ।

एतेषां संक्षिप्तं जीवनचरितं पूज्यपादैर्महामहोपाध्यायैरस्माकं परमगुरुभिः श्रीमद्भिर्गङ्गाधर-शास्त्रिमहोदयैः प्रकाशितं विद्यते । तदग्रे तदेव प्रकाशयिष्यामः ।

* * *

१. महामहोपाध्याय-श्रीबालसरस्वती-महोदयाः

एते खलु काशीस्थ-विदुषां समाराध्यपादाः परम-पावननामानो महामहोपाध्यायाः श्रीमद्बाल-शास्त्रिमहोदयाः ।

एतेषामपि विस्तृतं जीवनचरितं तैरेव शा... भिः प्रकाशितम् विद्यते । एतेषां प्रधान... केषाञ्चन नामानि । यथा—

सर्वतन्त्रस्वतन्त्राः पण्डितसम्राजो महाम... ध्याय-श्रीशिवकुमारशास्त्रिणः, पदवाक्य-प्र... पारावारपारीणाः पण्डित-सार्वभौमाः महाम... ध्याय-श्रीगङ्गाधरशास्त्रिणः ( सी० आई० ... महामहोपाध्याय श्रीदामोदर शास्त्रिणो वैया... शिरोमणयः, महामहोपाध्याय श्रीतांत्या... महोदयाः, आयुर्वेदमार्तण्डाः श्रीमद्दु... महोदयाः, दैवज्ञवाचस्पतयः स्वधर्मधुर... श्रीविनायकशास्त्रिणः, महामहोपाध्यायाः श्री... देवमिश्रमहोदयाः ।

इमे, एतेषां गुरवः, एतेषां शिष्याश्च स... स्व-स्वकाले वस्तुत अद्वितीया एवासन्निति... कश्चन सन्देहावसरः ।

* * *

३—महामहोपाध्यायाः श्रीसुधाकरद्विवेदाः

एतेषां परिचयः खलु सूर्यस्य दीपदर्शनमिव । ... संस्कृतविद्वत्सु द्विवेदमहोदयानां परमोन्नतं स्थानम... वरीवर्त्यस्माकं मनसि महद्गौरवम् । गणित-विज्ञाने नै...

संस्कृतज्ञो विद्वानिदानींतनेष्वभवत्, यस्य खलु गणितविज्ञानपारदृश्वानः पाश्चात्या अपि र्वं कुर्युः। न केवलं गणिते; संस्कृत-साहित्ये दिशास्त्रेष्वप्यप्रतिहतगतय इमे आसन्। संस्कृत-प्येतेषामद्भुता भवतिस्म। हिन्दीभाषायास्तु ष्वन्यतमा आसन्। अभिनवहिन्दी-भाषाप्र-केषु, कविवरेषु चैतेषां प्रधानमासनमासीत्।

तःशास्त्रे एभिर्नवनवा आविष्काराः, कठिनविषयेषु , शतशो ग्रन्थानां परिष्करणम्, संस्करणम्, कृतमासीत्।

तमेतेषां पुत्ररत्नत्रये प्रथमपुत्राः श्रीअच्युतप्रसाद-'तहसीलदार' पदे वाराणस्यां कार्यं कुर्वन्तिस्म। ध्यावकाशाः सन्ति।

तनयाः श्रीमन्तः कमलाकरद्विवेदाः, 'डिप्टीकल-र्यं कुर्वन्ति।

पुत्राश्च श्रीपद्माकरद्विवेदाः ज्यौतिषाचार्याः काशी-कालेजे स्वपितुः स्थान एवाध्यापयन्ति। इमेऽपि ने भारते प्रधानाः सन्ति। परं खेदस्थानमस्माकं स्वकीयैरभिनवैर्गवेषणापूर्णैर्विचारैः प्रबन्धैश्च वैदेशिक-कृत्य सुरस्वतीं वञ्चयन्तीति।

---

ज्ञाचस्पतिः श्रीविनायकशास्त्रिमहोदयाः

ऽपि खलु काशीस्थविद्वत्सु प्रथितकीर्तयः बालशास्त्रिणां सविधे लब्धव्याकरणसाहि-त्यव्युत्पत्तयः, महामहोपाध्याय-श्रीबापूदेव-सी० आई० ई० महोदयेभ्यो लब्धज्योतिः-, तत एव ज्योतिष्पारदृश्वेति लब्धोपाधिकाः, प्रतिभा-शालिनो विद्वद्वरा आसन्। इमे शास्त्रे वस्तुतो गणितविज्ञानावताराणां श्री शास्त्रिमहोदयानां सुशिष्या एवासन्। , कवितानिर्माणे, वास्तुविद्यायाम्, हिन्दी-लेखने, संस्कृत-लेखने, अन्येषु च विषयेषु विद्वांस आसन्। उदयपुरादिराजधानीषु राजमान्या विविध-लौकिककार्यकर्तारश्चासन्। एतेषां विस्तृतं जीवनं पुनः प्रकाशयिष्यामः। एतेषां ज्येष्ठसूनवः श्रीनाथशास्त्रिणो ज्योतिर्विदः, कनिष्ठाश्च श्रीअनन्तराम शास्त्रिणः, साहित्योपाध्यायाः, सुकवयश्च सन्ति।

५ श्रीमदाचार्य-श्रीदामोदरलाल-गोस्वामिमहोदयाः।

श्रीमन्मध्वसम्प्रदायाचार्याः, तर्करत्न-न्यायरत्न-साहित्याचार्यप्रभृति–विविधोपाधिधारिणः, परमपूज्यपादाः श्रीमन्तः श्रीदामोदरलालगोस्वामि-महोदयाः, सर्वतन्त्रस्वतन्त्र-प्रतिभाजुषाम्, विश्वविदितानां, महामहोपाध्याय–श्रीमद्गङ्गाधरशास्त्रि-सी० आई० ई०-महोदयानां शिष्याः, कविचक्रवर्त्ति-साहित्यवारिधि-कविरत्नादिविविधपदवीविराजितानाम्, निखिलदर्शनाध्यापकानाम्, अस्माकं पूज्यपादानां महामहोपाध्याय-श्रीदेवीप्रसादकविचक्रवर्तिमहोदयानां गुरवश्च सन्ति। सर्वतन्त्र-स्वतन्त्रा इमे खलु आचार्यचरणाः काशीस्थविद्वत्सु सर्वमान्याः, प्रधानाः, निखिलशास्त्राण्यध्यापयन्ति। मनोहरञ्च स्वरूपं वर्वर्ति। एते परमभक्ताः, विविधदर्शनग्रन्थानां टीकाकाराः, मर्मज्ञाः विद्वांसः सन्ति। समाजे, लौकिकेषु च कार्येषु नितरां बद्धादराः, नवयुवकानामादर्शभूताः काशीस्थ-विद्वन्मण्डले विजयन्तेतमाम्।

६. महामहोपाध्यायः श्रीगङ्गानाथ झा, एम०ए०, डी० लिट्०

एते खल्वस्माकं श्रद्धास्पदाः परमहितैषिणः प्रोत्साहका नवयुग-प्रवर्तकाश्च प्राच्य-पाश्चात्य-विज्ञान-धुरन्धराः सुप्रसिद्धा विद्वांसः सन्ति। काशीस्थविदुषां परमश्रद्धा-स्नेहभाजनभूता इमे संस्कृत-साहित्ये, हिन्दी-साहित्ये च प्रधानस्तम्भभूता विजयन्तेतराम्। प्रथममिमे प्रयागविश्वविद्यालयस्य प्रधानसंस्कृताध्यापका अभूवन्। ततश्च कियन्ति हायनानि यावत् काशीस्थराजकीय-संस्कृतकालेजे 'प्रिन्सिपल' पदे, 'रजिस्ट्रार' पदे चासन्। एतेषां समये कालेजस्य, परीक्षायाश्च महती समुन्नतिर्जाता। साम्प्रतमिमे प्रयागविश्वविद्यालयस्याध्यक्षपदे (वाइसचान्सलर) कार्यं कुर्वन्ति।

# सम्पादकीयम्

*नवीनो वत्सरः, विशिष्टांकश्च ।*

अस्माकं विविधान्दोलनपूर्णोऽयं चतुर्थो वत्सरः सानन्दं स-साफल्यञ्च सम्पूर्ण इति सुप्रभातं पाठकान्, ग्राहकान्, अनुग्राहकांश्च सहर्षं सप्रणयञ्च प्रणमति । धन्यवादान् साधुवादाँश्च ददाति ।

एतस्मिन् वत्सरे बहवो विघ्नाः समुपस्थिताः, तथापीदं ग्राहकानां कृपया स्वातन्त्र्येण, स्नेहेन, श्रद्धया, सत्येन, स्वार्थराहित्येन च साफल्यं लब्ध-वान् । एतस्मिन् साफल्य-सम्पादनेऽर्थकष्टं दुरी-कुर्वतां मध्ये मध्ये ऋणं दत्वा प्रथमत एवास्मान् कार्यक्षेत्रे सस्नेहं सानुरोधञ्च प्रवर्तयताम्, पूज्य-पादानां सनातनधर्मस्वरूपाणां विद्यावयोवृद्धानां गुरुवराणां श्रीमतामनन्तरामशास्त्रिणामनन्तानुप-कारान् न कदाचिदपि विस्मर्त्तुं शक्नुमः ।

ततश्च सम्पादन-कार्ये सर्वाधिकं साहाय्यं दत्तवताम्, सुप्रभात-निरीक्षकाणामस्माकं जीवन-भूतानामादर्शविदुषां परमाराध्यचरणानां गुरुवराणां महामहोपाध्यायश्रीदेवीप्रसाद शुक्ल कविचक्रवर्ति-महोदयानां विषयेऽस्माकं कथनं तु शोभत एव नहि । एवमेवास्माकं प्रियसुहृदामाधुनिक-विद्व-त्समाजे नवजीवनसञ्चारकानां समाजस्य प्रधान-मन्त्रिणां श्रीमतां गोपालशास्त्रिणामपि महती सहायता विद्यतेऽस्य सम्पादने । एवञ्चान्येषां केषाञ्चन छात्राणामप्यस्य सम्पादनकार्ये महत् साहाय्यं वरीवर्ति । तदेतेषां सर्वेषां कृत[...] उपकारश्च नास्माभिर्विस्मर्त्तुं शक्यः ।

एतद्वर्षचतुष्टयस्य साफल्यमनुभूय, त[...] दैवनिमित्तात् पञ्चमवर्षस्यायं प्रथमोऽङ्को विशि[...] रूपेण प्रकाश्यते । एतस्मिन् विशिष्टाङ्के लेख-प्रे[...] विद्वद्धुरीणानां वयं भृशमुपकारमुररीकुर्वन्तः [...] तान्निवेदयामो यत्ते स्थानाभावादप्रकाशितानां [...] लेखानामप्रकाशनेनास्माकमुपरि मा कुप्यन्तु । [...] तान् लेखान् यथाक्रमं 'विशिष्टाङ्कलेख'-इति [...] दत्त्वा सविनयं सादरञ्च प्रकाशयिष्यामः । [...] लेखकमहानुभावाः ।

विशिष्टाङ्कप्रकाशने ज्येष्ठमध्याह्ने अहरहो [...] लये कार्यं कुर्वन्तो वयं सत्यमेव रुग्णाः संजा[...] अस्मिन् ग्रीष्मावकाशे शान्तिमिच्छतामस्माकं [...] सि महानयं भारो दुर्भरः समभूदिति [...] बहुत्र स्खलिताः । तदस्माकमेतत्स्खलितं स[...] सकृपञ्च मर्षयिष्यन्ति महानुभावाः ।

वयमत्र नितरां परिश्रान्ताः बहिर्गन्तुम[...] तदग्रिमाङ्कस्य प्रकाशनमस्माकं ज्यायांसो [...] प्रियसुहृदः श्रीविन्ध्येश्वरीप्रसादशास्त्रिणः सू[...] सम्पादकाः करिष्यन्तीति वयं तेषामिमामुप[...] शिरसा वहामः ।

साहित्य-सम्मेलनम् ।

अस्माकं सर्वेषामपि भारतीयानां संस्कृतज्ञानामियं ... सभा सम्मेलनाभिधा । इदानीं यावदस्याः १३ ... कथमपि जातानि । अस्य सम्मेलनस्य यादृशं ...क्षितम्, यावांश्च समारम्भोऽस्यावश्यकस्तदपेक्षया ... किमप्यस्य महत्त्वम् । अतएवास्माकं विद्यते महती ... यद्वयं न स्वीयां संघशक्तिमुत्तेजयितुं सबलीकर्तुंश्च ...। बहवस्तु संस्कृतज्ञा नामाप्यस्य न जानन्ति । ... त्रयोदशतमाधिवेशनं किमपि महत्वपूर्णमासीत् । ... प्रतिनिधयोऽपि समागता आसन्—प्रधाननगरेभ्यः। ... कलिकात्तास्थवङ्गीय-संस्कृत-साहित्य-परिषदधि- ... संघीभूय सम्मेलनस्य प्रधानकार्यालयस्तत्रैव ... नीतः । एतस्मिन् कार्ये सुप्रसिद्धाः संस्कृत- ... स्वर्गीय-श्रीपशुपतिनाथशास्त्रिणः, स्वर्गीयः ...रायचतुर्धुरीण महाशयश्चेति द्वौ प्रधानावास्ताम् । ... यावत्तत्रापि परिषदः कार्याधिक्येन वा, अन्येन ...कारणेन वा सम्मेलनस्य कार्येषु न काचन समुन्नति- ...।

...समारतया दुर्दैवशाद्दिवं प्रयातेषु श्रीमत्पशुपतिनाथ ...महोदयेषु, शिथिलतां गतेषु च प्रधानमन्त्रिषु ...महोदयेषु चतुर्दशतममधिवेशनं कांगडीस्थ-गुरुकुल- ...विद्यालये निमन्त्रितमपि न संजातम् । समाकर्णितञ्च ... गोष्पतिमहोदया अपि वस्तुतो गोष्पतित्वमापन्ना ...।

...विधे महति व्यतिकरे सम्मेलनस्य महती दुरीदृश्यते ...। एतत्सम्मेलनमद्य यावत् तत्संस्थापकानां विद्वद्धुरी- ... महामान्यानां महामहोपाध्यायश्रीगिरिधरशर्म्म- ...महोदयानां प्रवल-परिश्रमस्य फलभूतम् । तैरेवा- ... यथाकथमपि सम्मेलनस्यास्य सञ्चालनं कृतम्- क्रिय- ...। परन्त्वेतस्मिन् सर्वभारतीये कार्ये कथमेकः सर्वं कर्तुं ...। तत्रापि चतुर्वेदमहोदया विविध-कार्य-व्यस्ता ...कार्यान्तर्गताश्च सन्ति । तेऽपि स्वातन्त्र्येण किमपि विशिष्टतया कर्तुं न पारयन्ति । तत्रापि ते जयपुरे निवसन्ति कार्यालयश्च परिषदि कारागार इव कलिकातायां मञ्जूषापिहितस्तिष्ठति । तदेतत्सर्वथा दुर्भाग्य-विलसितमेव जानीमो वयं सुरभारत्याः । न चैष कालः स्वापस्य । तद्वयं सम्मेलनस्य प्रधानकार्यकर्तॄन् माननीयश्रीचतुर्वेद-महोदयांश्च सादरं विनिवेदयामो यदस्य सम्मेलनस्य चतुर्दशतममधिवेशनमत्र वाराणस्यां संस्कृत-साहित्य-समाज-प्रबन्धेन महता समारम्भेण च भवेत् । तत्रैव चास्मिन् महत्वपूर्णविषये विचारोऽपि भवेत् । येन सम्मेलनस्येयमवस्था दूरीभवेत् । तच्च भारते वास्तविकं कार्यं विधाय स्वीयोद्देश्यपूर्तावग्रेसरं भवेदन्यथा तस्य स्थितिरेव व्यर्था स्यात् । आशास्महे, यत् सम्मेलन-प्रधाना अस्मिन् विषये विमर्शयिष्यन्ति, समाजमन्त्रिणा सह वार्तालापं विधाय कार्यस्यास्य स्वरूपं वास्तविकं विधास्यन्तीति ।

सुप्रभातमिदं सम्मेलनकार्याय सर्वथा सर्वदा च सन्नद्धमास्ते ।

* * * *

विद्वत्-सम्मेलनम् ।

काशीस्थ-सनातनधर्मपण्डितसभाधिकारिणः, साम्प्रतिकं धार्मिकं सामाजिकञ्च विप्लवमालोच्य, एतस्मिन् विषये सुदृढविचाराय मतैक्यसम्पादन-द्वारा सर्वत्र भारते सामूहिकरूपेण विद्वन्निर्धारितस्वरूपस्य सनातनधर्मस्यैकरूपेण प्रचाराय च संस्कृतविद्याप्रधानकेन्द्रभूतायामस्यां वाराणस्यामखिलभारतवर्षीय-विद्वत्सम्मेलनं कर्तुं कामयन्त इति समाकर्ण्य वयं परं प्रमोदमाप्नुमः । तेषामिममभिलाषञ्च सहर्षं सानुरोधञ्च समर्थयामः । अद्यत्वे परिदृश्यमाने महति विप्लवे सनातनधर्मस्य वास्तविकं स्वरूपं तिरोहितमिव विद्यते । सहस्रशो मतानि सन्ति । लक्षशश्च सनातनधर्मनेतारः सन्ति । सर्वेऽपि सर्वान्निन्दन्ति, विनाशयितुमीहन्ते । एवमेव प्रत्यहं प्रतिक्षणं ह्रासमासादयति भगवान् सनातनो धर्म इति नूनमिदं संस्कृतविदुषां ब्राह्मणानां प्रधानं कर्तव्यं यत्ते सावेगं सोत्साहञ्च स्वीयामवस्थामलोच्य

कामपिव्यवस्थां निर्धारयन्तु । ये च शास्त्रानभिज्ञा मूर्खाः सनातनधर्मं पैतृकसम्पत्तिं मन्यमानाः स्वार्थसाधनाय पण्डितान् जनताश्च प्रलम्भयन्ति, ते कर्णौ धृत्वा निः सारणीयाः ।

अन्यच्च—अलीगढ—प्रभृति द्वित्रनगरेषु केचन व्यापारिणो परीक्षादिविविधव्यापारसञ्चालनद्वारा निजोदरदरीं पूरयितुम् अखिलभारतीयानि विद्वत्सम्मेलनानि, पण्डितसम्मेलनानि, संस्कृतसम्मेलनानि च संस्थाप्य जनताः प्रवञ्चयन्ति । केऽपि विद्वांसस्तेषां नामान्यपि न जानन्ति, तेषां व्यापारिणां विरोधोऽपि जनताहिताय नितरामावश्यकः । एतदपि कार्यमनेन सम्मेलनेन विहितं स्यात् । अस्माकं देशे विदुषां व्यापकं सम्मेलनमपि नास्ति सैषा त्रुटिरपि निरस्ता भवेदिति सर्वे भारतीया विद्वांसोऽत्र विषये विचाराय प्रार्थयन्ते ।

* * * *

*कृतज्ञताप्रकाशः ।*

विशिष्टाङ्कप्रकाशने विशिष्टं चित्रादिसाहाय्यं दत्तवतामस्माकमनुग्राहकानां नितान्तमुपकारं सादरमुररीकुर्म्मः । कृतज्ञताप्रकाशनपूर्वकं सधन्यवादं तेषां नामानि प्रकाशयामः ।

श्रीमान् पं० पद्माकरद्विवेदमहोदयाः
„ „ लक्ष्मीधरपन्तः धर्म्माधिकारी
„ „ श्रीनाथशास्त्री वेतालः
„ „ श्रीविष्णुदत्तमिश्रवैद्याः
„ „ श्रीगौरीनाथपाठकाः साहित्याचार्याः

व्यङ्ग्यचित्रस्यापि प्रबन्धः कृत आसीत्, परं समयाभावात् तन्न प्रकाशितम् । व्यङ्ग्यचित्रद्वयदाने अस्माकं प्रियसुहृदो भ्रातुः श्रीमोहनलालमहतो 'वियोगी'-महाशयस्य नितान्तमुपकारं विभृमः । तत्प्रेरकत्वेन च प्रियभ्रातुः श्रीमतः शिवपूजनसहायस्य हिन्दीभूषणस्याऽपि भृशमुपकृताः स्मः ।

अन्यैरपि यैरस्माकं मित्रैः, सुहृद्भिः छात्रैश्चा[ऽस्मिन्] विषये वयमुपकृतास्तेषामपि उपकारं कृतज्ञताप्रका[-]शनपूर्वकं स्वीकुर्मः ।

*लेखका अवश्यमवदधतु ।*

मुलताननगरस्थेन दीनानाथशास्त्रिणा "[...] राजविजयविमर्श"—शीर्षको लेखः सुप्रभाते [प्रका-]शनाय प्रहित आसीत्, अस्माभिः स लेखः विशि[ष्टाङ्के] प्रकाशितः । साम्प्रतमेव सूर्य्योदये प्रकट[...] स्माभिर्ज्ञातं यत् स लेखः सूर्य्योदयेऽपि ले[खकेन] प्रहित इति । तदानीम् सुप्रभातेऽप्यस्य ले[खस्य] मुद्रणं जातमासीत् । श्रीमता दीनानाथप[...] सुप्रभाते सूचनामदत्वा अस्माकञ्चास्वीकृतिसू[चना]मलब्ध्वा च यन्महत् साहसिक्यमनैपुण्यं वाल[...] समाचरितम्, तदिदं महदनुचितमस्माकं म[...] प्रियसुहृदां सूर्य्योदय-सम्पादकानाञ्च हृदये [...]मसन्तोषं खेदञ्चावहति । एवमेव महात्म[...] "क्षते प्रहारा निपतन्त्यभीक्ष्णमिति" शीर्षकले[खस्य] कियानंशः सूर्योदये प्रकाशितः, स पु[न]लवपुरीय उद्योते प्रकाशितो दृष्टः । [...] लेखकधुरन्धरस्य शास्त्रिमहोदयस्य निन्द[...]नीतिः कस्य वा सहृदयस्य चेतसि न ख[...]यिता भवेत् । वयं तु विशिष्टाङ्के तं लेखं प्रका[श्य] चेखिद्यमानाः स्मः । साम्प्रतं वयं श्रीमतां शा[स्त्रि]पादानां लेखान् न प्रकाशयिष्यामः । सूर्य्यो[दय]सम्पादकानामपि ध्यानमत्र विषये सानुरोधं [आ]कर्षयामः ।

अन्येभ्योऽपि लेखकेभ्यः साञ्जलि-प्रार्थ[ना] यत्तेऽप्यत्र विषये दत्तावधाना भवन्तु, पूर्वमप्येत[स्मि]न् विषये सम्पादकीयटिप्पण्यां निवेदितमस्माभि[ः] एतदधिकृत्य साम्प्रतिकानां साहित्यज्ञानां समाजे[...] कानां सम्पादकानाञ्च परामप्रौढतामप्रख्यापयति[...]

## सुप्रभात-नियमाः ।

) सुप्रभातमिदं सौरमासस्यान्तिमे सप्ताहे भविष्यति ।

) एतस्य वार्षिकम्मूल्यम्—समाजनियमा- नतीयेभ्यः—१२) मुद्राः, सहायकेभ्यः— छात्रेभ्यश्च १॥) मुद्रा—भविष्यति ।

) अग्रिममासस्य प्रथमे पक्षे यस्य ग्राहकस्य न गच्छेत्, तेन नूनं पत्रालये समन्विष्य पत्रं प्रहेयम् । तदा 'सुप्रभातं' प्रेषितं यदि ग्राहकाः पत्रं न प्रेषयिष्यन्ति, तदा नोत्तरदायी भवेत् ।

) पत्र-प्रेषण-समये ग्राहक-सङ्ख्या नूनं

) अन्यथा पत्रमवलोकितमेव न स्यात् ।

) अग्रिम-मूल्यमन्तरा सुप्रभातं न प्रदीयते, देशद्वारा (मनिऑर्डर) मूल्यं प्रेषणीयम् सङ्केतश्च लेख्यः । वी० पी० द्वारा प्रेषणे समधिको व्ययः स्यात् ।

) पत्रोत्तरमभिलषद्भिश्चटिका नूनं प्रेषणी- अन्यथा पत्रोत्तरं न दीयेत ।

) लेखकैरतिसरलभाषायां लेखाः प्रेषणीयाः, अपि पठितुमवगन्तुञ्च प्रभवेयुः ।

) लेखाः पत्रस्यैकस्मिन्नेव पृष्ठे पार्श्वयोः विहाय, सुस्पष्टैः, सुवाच्यैः, सुन्दरैरक्षरैर्लि- प्रेषणीयाः । अन्यथा न तेषां प्रकाशनं ।

) विषादग्रस्ताः, व्यक्तिगताक्षेप-पूर्णाः, पुस्तक-रूपाः, लेखा न प्रेषणीयाः । प्राचीन- , सामयिकपुस्तकानां वा प्रकाशनं भवेत् ।

(१०) छात्राणां लेखाः, संस्कृत-समाचाराः, विज्ञान-समाचाराः, नूतन-वार्ताः सादरं प्रका- श्येरन् ।

(११) लेखानां प्रकाशने, अप्रकाशने, परावर्तने, अपरावर्तने वा सम्पादकस्यैवाधिकारः । को लेखः कदा प्रकाशितो भविष्यतीति सम्पादकाधीनमेव ।

(१२) सुप्रभाते सरल-सरसाः, भावपूर्णाः, अतिमनोहराः, कविताः प्रकाशिताः स्युः । साधारण- कविता-प्रेषणे लेखकैर्व्यर्थश्रमो न विधेयः ।

(१३) लेखाः, परिवर्तनार्थं समालोचनार्थञ्च पत्राणि, पुस्तकानि, 'सम्पादकः—सुप्रभातम्, काशी' अनेन सङ्केतेन; प्रबन्ध-विज्ञापनादि-विषय- कानि पत्राणि च, 'व्यवस्थापकः—सुप्रभात-कार्या- लयः, काशी' इत्यनेन सङ्केतेन प्रेषणीयानि ।

(१४) सुप्रभातस्य प्रचारो भारतस्य सर्वत्र प्रान्तेषु प्रचुरसङ्ख्यायां विद्यते । एतस्मिन् विज्ञाप- नदानेन महत्साफल्यं भवेत् । मुद्रिताः विज्ञापननि- यमाः कार्यालयतः पत्रं प्रेष्य, ग्रहीतव्याः ।

---

## सर्वतन्त्रसिद्धान्त पदार्थ-लक्षणसंग्रहः ।

गौरीशङ्करभिक्षुकृतः, द्वितीयावृत्तिः । मूल्यम्-।।।)

वेदवेदाङ्गदर्शनस्मृतिकाव्यादिशास्त्रीय-पदार्था- नां २७०० लक्षणवर्णनात्मकग्रन्थो नाद्यावधि प्रका- शितः । उपयोगित्वविषये—

'ये सन्ति विषयाश्चास्मिन् ते न दृष्टाः, परत्र वै । अत्र चैव समावेश्य सर्वसिद्धान्तलक्षणम्' इति

काशी-मद्रासादिस्था ८६ विद्वांसो मुक्तकण्ठमुद्घो- षितवन्तः ।

सङ्केतः—मनभरी, पुट्ठी, जमालपुर, हिसार ।

Reg. N. 134

## सचित्रम् सामुद्रिक रहस्यम् ।

ले०—श्रीकालिका प्रसादशर्म्मा, राजज्योतिषी,

अद्भुतमिदं ग्रन्थरत्नम्, हिन्दीटीकासहितम्, अनेकचित्रविभूषितम्, नरनारीणां शुभाशुभज्ञाने नितरामुपयुक्तम्, संस्कृते सर्वथानवीनमेव । एतेन हस्तरेखानां गुरुं विनैव सम्यक् परिचयो भवति । मूल्यम् १।) मुद्रा ।

## रतिरहस्यम् ( कोकशास्त्रम् )

एष प्राचीनो ग्रन्थः श्रीमहाकवि कोक्कोक विरचितः । अस्मिन् कामशास्त्रसम्बन्धिन्यः सर्वा वार्ताः, पद्मिनी-शङ्खिनी-चित्रिणी-हस्तिनी-प्रभृतयः स्त्रीणां भेदाः, एवं चत्वारः पुरुषभेदाः, स्त्रीणां वशीकरणस्यौषध्यः, मन्त्राः, तत्तद्देशीयानां स्त्रीणां पुरुषाणाञ्च लक्षणानि, तेषां संयोगाः, अलिङ्गन-चुम्बनादीनां भेदाः, तेषां विशेषाश्च अन्ये च बहवो ज्ञातव्याः कामशास्त्रीयाः विषयाः सन्ति । एष ग्रन्थो नितरां सुप्रसिद्धः प्राचीनश्च विद्यते । एतस्यैका प्रतिः सर्वैरपि स्वसविधे नूनं संस्थापनीया । मूल्यम्—मुद्राद्वयम् ।

## राष्ट्रभाषाभूषणम् ।

ले०—श्रीगोपाल शास्त्री, दर्शनकेशरी, साहित्याचार्यः ।

एतत् पुस्तकं हिन्दीभाषायां विद्यते । संस्कृतज्ञानां हिन्दीज्ञाने नितरामुपकारजनकम् । सर्वैरपि संस्कृतज्ञैरेतद् व्याकरणम् पठनीयम् । एतेन हिन्दी भाषायां निबन्धलेखन-अनुवादादिज्ञाने महत्सौकर्य स्यात् । मूल्यम्—आणकाष्टकम् । मार्गव्ययः—=)

## सूर्यचरितम् वा ऋतुचरितम्

ले०—तारादत्तपन्तः, साहित्याचार्यः, व्याकरण-काव्य

गोलविद्या-विषयकं नूतनं महाकाव्यम् अतिसरलम्; भारतस्य विभिन्नदेशानां पर्वतानां ऋतूनां चात्र परिचयो कविना ... सरण्या समुपवर्णितः । गोलविषये नूतनं ... महाकाव्यम् । सर्वथा द्रष्टव्यम् । मूल्य... मार्गव्ययः पृथक् ।

## गोलविद्या गोलसूत्रञ्च ।

ले०—श्रीतारादत्तपन्तः, साहित्याचार्यः, काव्य-न्या...

संस्कृते भूगोलज्ञानस्य प्रधानं प्रथम...कम् । अत्र हिन्दी-भूगोल-पुस्तकवत् भार... समस्तो भूगोलः सरलतया बालानां ज्ञानाय वर्णितोऽस्ति । संस्कृत काव्येषु नाटकेषु पु...केषु च समागतानां देशानां नदीनां स्थाना...तानाञ्चाधुनिकी स्थितिस्तेषां नामानि च ... सर्वथा द्रष्टव्यमिदं पुस्तकम् । मूल्यम् ॥) आ...

## महाकवि बाणभट्टः ।

लेखकः—सुप्रभात-सम्पादकः श्रीकेदारनाथ...

हिन्दीभाषायामयमपूर्वो निबन्धः । अत्र ... भट्टस्य जीवनविषये महत्वपूर्णा, मननीया, ...षणा वरीवर्ति । छात्राणां कृते नितरामुपकार... निबन्ध-बन्धः । मूल्यम् =) मार्गव्ययः -)

## सर्वेषां प्राप्तिस्थानम्



मैनेजर, सुप्रभात कार्यालय, बनारस सिटी ।

Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

सौर ज्येष्ठः, १९८५ वैक्रमाब्दः

June 1928.

द्वितीयसङ्ख्या
No. 2

# सुप्रभातम् ।

## सूचना ।

...प्रान्तीय-राजकीय-संस्कृत-परीक्षाफलं सुप्रभाते विशिष्टाङ्करूपेण प्रकाशितं विद्यते, जिघृ-
...आनकचतुष्टयस्य चिटिकाः संप्रेष्य समानयितव्यम् ।
...ष्टाङ्कः जिघृक्षुभिश्छात्र-ग्राहकैः ।) प्रेष्य विशिष्टाङ्को ग्रहीतव्यः । ये ग्राहका न सन्ति, तैः ।।।)
...चिटिकाः सुरक्षिताः ( रजिष्टर्ड ) प्रेषणीयाः ।

—व्यवस्थापकः

निरीक्षकः—

महामहोपाध्याय-श्रीदेवीप्रसादशुक्लः, कविचक्रवर्ती, साहित्यवारिधिः

...दकः—
...शर्म्मा सारस्वतः

व्यवस्थापकः—
श्रीगिरीशशुक्लः, न्यायाचार्यः ।

...मूल्यम्—२)
...भ्यः—१२)

छात्रेभ्यः—१॥)
वैदेशिकेभ्यः—९)

अस्याङ्कस्य मूल्यम् ।)

Reg. N. 13

## सचित्रम् सामुद्रिक रहस्यम्।

ले०—श्रीकालिका प्रसादशर्म्मा, राजज्योतिषी,

अद्भुतमिदं ग्रन्थरत्नम्, हिन्दीटीकासहितम्, अनेकचित्रविभूषितम्, नरनारीणां शुभाशुभज्ञाने नितरामुपयुक्तम्, संस्कृते सर्वथानवीनमेव। एतेन हस्तरेखानां गुरुं विनैव सम्यक् परिचयो भवति। मूल्यम् १।) मुद्रा।

सुप्रसिद्धः प्राचीनश्च विद्यते। एतस्यैका प्रतिः सर्वैरपि स्वसविधे नूनं संस्थापनीया। मूल्यम्—मुद्राद्वयम्।

## राष्ट्रभाषाभूषणम्।

ले०—श्रीगोपाल शास्त्री, दर्शनकेशरी, साहित्याचार्यः।

एतत् पुस्तकं हिन्दीभाषायां विद्यते। संस्कृतज्ञानां हिन्दीज्ञाने नितरामुपकारजनकम्। सर्वैरपि संस्कृतज्ञैरेतद् व्याकरणम् पठनीयम्। एतेन हिन्दी भाषायां निबन्धलेखन-अनुवादादिज्ञाने महत्सौकर्यं स्यात्। मूल्यम्—आणकाष्टकम्। मार्गव्ययः—=)

## सूर्यचरितम् वा ऋतुचरितम्

ले०—तारादत्तपन्तः, साहित्याचार्यः, व्याकरण-काव्य

गोलविद्या-विषयकं नूतनं महाकाव्यम्

अतिसरलम्, भारतस्य विभिन्नदेशानां पर्वतानां ऋतूनां चात्र परिचयो कविना न सरण्या समुपवर्णितः। गोलविषये नूतनं महाकाव्यम्। सर्वथा द्रष्टव्यम्। मूल्यम्

सर्वथा द्रष्टव्यमिदं पुस्तकम्। मूल्यम्

## महाकवि बाणभट्टः।

लेखकः—सुप्रभात-सम्पादकः श्रीकेदारनाथ

हिन्दीभाषायामयमपूर्वो निबन्धः। अत्र भट्टस्य जीवनविषये महत्वपूर्णा, मननीया षणा वरीवर्ति। छात्राणां कृते नितरामुपकार निबन्ध-बन्धः। मूल्यम् =) मार्गव्ययः -)

## सर्वेषां प्राप्तिस्थानम्

 मैनेजर, सुप्रभात कार्यालय, बनारस सिटी।

Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

सौर ज्यैष्ठः, १९८५ वैक्रमाब्दः

June 1928.

द्वितीयसङ्ख्या
No. 2

# सुप्रभातम् ।

संस्कृत-साहित्य-समाजस्य मुखपत्रम् ।

…ततिमुदस्यद् भेदतारा विलुम्पन्, नयदधिसुरभाषाभाषि जागर्तिभावम् ।
…विहग-वादैराह्वयद् भाग्यभानुम्, विलसतु भुवनेऽस्मिन् सर्वतः 'सुप्रभातम्'

निरीक्षकः—

महामहोपाध्याय-श्रीदेवीप्रसादशुक्लः, कविचक्रवर्ती, साहित्यवारिधिः

…पादकः—
…नाथशर्म्मा …रस्वतः

व्यवस्थापकः—
श्रीगिरीशशुक्लः, न्यायाचार्यः ।

…कमूल्यम्—३)
…न्यः—१२)

छात्रेभ्यः—१॥)
वैदेशिकेभ्यः—६)

अस्याङ्कस्य मूल्यम् ।)

# लेख-सूची ।



## सुप्रभात-ग्राहका विज्ञाप्यन्ते ।

विशिष्टाङ्कश्चिरान्मुद्रितो विद्यते य खलु विशिष्टाङ्कमप्राप्य कार्यालये तदर्थं पत्राणि प्रेषयन्ति । ते खलु विशिष्टाङ्कस्य विशिष्ट साहाय्यमाणकचतुष्टयं ।) चिटिकाद्वारा, वार्षिकमूल्येन वा सह स त्वरं संप्रेष्य विशिष्टाङ्कमासादयन्तु । तेषां विशिष्टाङ्कः सुरक्षितो विद्यते । तैर्न कापि चिन्ता कर्तव्या । मन्यामहे, बहुभिर्ग्राहकैरेषा सूचना न पठितेति वारं वारं विशिष्टाङ्ककृते पत्रं प्रेषयन्ति । साम्प्रतमुत्तरं न दास्यामः ।

—व्यवस्थापकः




...विध विषय-विभूषितम्, अद्वितीयम्, सचित्रं संस्कृत-मासिक-पत्रम् ।

...वर्षं | सौर—ज्येष्ठः । १९८५ वैक्रमाब्दाः | द्वितीय-संख्या

## अभिभाषणम् । *

( अवशिष्टांशः )

...) अथेदानीं साहित्यापरपर्यायस्य काव्यस्य यत्कि-...म् चिन्त्यते । सुधियामेतद्विदितप्रायं यत् ...मीमांसाया अलङ्कार-गुण-रीति-रस-ध्वनिगुणीभूत-व्यङ्ग्यरूपाः षडध्वानः । तत्र केचन प्राञ्चः सालङ्कारयोः शब्दार्थयोरेव काव्यत्वमिच्छन्ति । किन्तु तेषां मते—

"हारो नारोपितः कण्ठे मया विश्लेषभीरुणा ।
इदानीमावयोर्मध्ये सरित्-सागर-भूधराः ॥"

"सद्यः पुरीपरिसरेषु शिरीषमृद्वी
गत्वा जवात्त्रिचतुराणि पदानि सीता ।
गन्तव्यमस्ति कियदित्यसकृद् ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम् ॥"

इत्यादीनां कथं काव्यत्वं स्यादिति त एव जानन्ति । 'हारोनारोपित' इत्यादौ शब्दालङ्कारः, शिरीषमृद्वीत्यत्रार्था-लङ्कारश्च वर्तत एवेत्यस्मदुक्तकाव्यलक्षणं नाव्याप्तमिति चेत्, अनयोः श्लोकयोश्चमत्कारजनकतावच्छेदकः अलङ्कारविशेषः, अन्यः कोऽपि धर्मो वा, इति निर्णये सचेतसः स्वचेतसि एव

---

...-साहित्य-समाजस्य चतुर्थाधिवेशने सभापति-...श्रीमदाचार्यआनन्दशङ्करबापूभाई ध्रुव [ एम्० ...० बी०, प्रो०—वाइस चांसलर हिन्दू विश्व-...वद्यालयस्य ] महोदयानाम् )

प्रमाणीकुर्वन्तु । अस्माकं चेतसि तु नात्रालङ्कारश्चमत्कृतिं जनयति । तस्मात् शब्दार्थयोरनलङ्कृतित्वेऽपि काव्यत्वं न हीयते, अपितु अलङ्काराभावेऽपि कविता-रमणी-'इयमधिकमनोज्ञा वल्कलेनाऽपि तन्वी' इति प्रतिभाति । एतेन—

अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती ।
असौ न मन्यते कस्मादनुष्णमनलङ्कृती ॥

इति काव्यप्रकाशकारिकामाक्षिपन् चन्द्रालोकस्तेजः सामान्याभावे निक्षिप्तः । "अनलङ्कृती" इति कारिकांशस्य स्फुटालङ्कारविरहेऽपि न क्षतिरिति व्याख्यां विदधद् वृत्तिकारः कारिकाकाराद् भिन्न इत्यन्यदेतत् ।

एवं गुणादीनामपि काव्यत्वमिच्छद्भिः—

ततः कुमुदखण्डाभो निर्मलं निर्मलोदयः ।
प्रजगाम नभश्चन्द्रो हंसो नीलमिवोदकम् ॥

स[हनूमान्] ददर्श, ततः सीतां पूर्णचन्द्रनिभाननाम् ।
क्षीणपुण्यां च्युतां भूमौ तारां निपतितामिव ॥
वियूथां सिंहसंरुद्धां वरां गजवधूमिव ।
चन्द्ररेखां पयोदान्ते शारदाभ्रैरिवावृताम् ।
क्लिष्टरूपामसंस्पर्शादयुक्तामिव वल्लकीम् ।
संघातमिव शोकानां दुःखस्योर्मिमिवोत्थिताम् ॥

इत्यत्र उपमालङ्कार एव चमत्कारजनक इति कथमपलपितुं शक्यते । अत्र रससत्त्वेऽपि ध्वनिसत्त्वेऽपि च चमत्कारजनकतावच्छेदकस्त्वलङ्कार एवेति सहृदयहृदयसाक्षिको निःसन्देहोऽनुभवः ।

'वक्रोक्तिः काव्यजीवितम्' इतिवदन्तोऽपि प्रष्टव्याः ।

'आलक्ष्यदन्तमुकुलाननिमित्तहासै—
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।'
'अनियतरुदितस्मितं विराजत्—
कतिपयकोमलदन्तकुड्मलाग्रम् ।

इत्यादि बालाकृतिस्वभाववर्णने का वक्रोक्तिरिति ।

एवमेव—

मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥

इति श्लोकत्वमागतः शोकः रामायणस्य बीज[illegible] पन्नोऽपि न स एव रामायणम् । राम-भरत-लक्ष्मण-[illegible] रावण-मन्दोदरीप्रभृतीनां चारित्र्यगुणोल्लेखने, सरि[illegible] मुनिनिवासाश्रमादिवर्णने च या प्रतिभा, या च [illegible] सन्निवेशचातुरी प्रकटीकृता आदिकविना साऽपि रामा[illegible] काव्यत्वे हेतुः । इति काव्यतत्त्वस्य ध्वनिमात्रत्वं [illegible] प्रतिपाद्येत । अपि च—

इह समदशकुन्ताक्रान्तवानीरवीरु-
त्प्रसवसुरभि-शीतस्वच्छतोया वहन्ति ।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥

इत्यत्र कोलङ्कारः ? को ध्वनिः ? को वा रसः ? [illegible] वा सर्वत्र सरित्काननादिवर्णने शान्तरसोद्दीपनविभा[illegible] रसः शान्तः, तस्योद्दीपनं चेति विप्रतिपत्तिविषयत्वम[illegible] क्षेपोऽप्यास्तां तावत् । शान्तस्य रसत्वासम्भवस्य [illegible] ग्रस्तत्वात् । एतावदेव विमृश्यताम्—यत्, वि[illegible] रसोद्बोधकत्वे रसरूपोद्बोधितपदार्थस्य काव्यत्वाच्छे[illegible] तदुद्बोधकविभावादीनां वा ? । प्रथमे कल्पे सर्वेषां [illegible] भवन्मते सरसत्वात्तेषामभ्यर्हितत्वे तारतम्याभावा[illegible] द्वितीये कल्पे विभावादीनामेव काव्यत्वावच्छेद[illegible] नतु रसस्य । एवं सति 'रमणीयार्थप्रतिपादक[illegible] काव्यम्'—इति पण्डितराजोक्तिरेव विजयतेतराम् ! [illegible] किं नाम रमणीयत्वमिति प्रश्नस्य किमुत्तरम् ? [illegible] रूपो लोकोत्तराह्लादविशेष इति चेत् ; एतादृश[illegible] कस्य शब्दस्य काव्यत्वमस्तु । किन्तु कीदृशः शब्द[illegible] जनयतीति प्रश्नोऽनुत्तरित एव स्यात् ।

तस्मादलङ्कार-गुण-रीति-वक्रोक्ति-रस-ध्वन्यादी[illegible] ङ्गत्वेऽपि न काव्याङ्गित्वम् । 'एतावानस्य महिमा [illegible] यांश्च काव्यपुरुषः'—इति सञ्चिन्त्य विरम्यते ।

# ❀ स्नातक-शिक्षा ।

भो भोः स्नातकसज्जनाः ! क्षणमहं
यत्किञ्चिदावेदये
श्रुत्वा शास्त्रसमुद्धृतं तदखिलं
श्रोतव्यमत्यादरात् ॥
...तत्पापमलापहारनिपुणं
गाङ्गं पयो निर्मलं
...द्धं न निपीयते बुधजनै-
श्चेत्काचकूपीगतम् ॥ १ ॥
...त्वा ब्रह्मविधिं, गुरून् कठिनया
संतोष्य शुश्रूषया
...त्वा मोहतमोऽपहारचतुरा
देवीं गिरामीश्वरीम् ॥
यत्किञ्चित्प्रथमाश्रमे श्रमपरै-
...र्जितं तपः संचितं
...भूत् कामवशाद्भयादपि पुन-
स्तत्र प्रमादो मनाक् ॥ २ ॥
...शात् सुकुमारसुन्दरतनुं
दक्षां प्रसन्नां शुभां
...ध्वीं कोमलभाषिणीं निजगृह-
व्यापारपट्वीं दृढाम् ॥
सेवायां निरतां सदा श्वशुरयोः
सौभाग्यचिह्नान्वितां
कान्तां संपरिणीय धर्मविधिना
गार्हस्थ्यमाश्रीयताम् ॥ ३ ॥
सन्मार्गेणार्जितं द्रव्यं धर्मकार्ये नियोज्यताम् ।
तोष्यन्तां ब्राह्मणा गावः स्त्रियो मित्राणि बान्धवाः ४
पाठ्यन्तां बालकाः सर्वे विद्यां विज्ञानमेव च ।
ब्रह्मचर्यप्रभावश्च शिक्षणीयः प्रयत्नतः ॥ ५ ॥
बाल्यकालोपयमनं मत्वाऽनर्थस्य कारणम् ।
सर्वस्मिन् भारते विज्ञाः ! कार्यं तस्य निवारणम् ॥६॥
वृद्धानामपि यत्र स्याद् विवाहो भयदायकः ।
तत्र रोधो विधातव्यो बोधश्चेत् फलवान् नवः ॥७॥
बाल्यकालविवाहेन जायते बलसंक्षयः ।
मेधा तेजश्च विद्या च समेधन्ते न कर्हिचित् ॥ ८ ॥
वृद्धकालविवाहेन नरस्य मरणं ध्रुवम् ।
वैधव्यं च भवेन्नार्यास्तस्माद् घोरतरो हि सः ॥९॥
नाशिक्षिताः स्त्रियः कुर्युः सम्यग् गार्हस्थ्यसंविधाम् ।
नारीशिक्षाप्रचारार्थं तस्माद् यत्नो विधीयताम् ॥१०॥
दुर्बलस्य न संमानो दुर्बलस्य न जीवनम् ।
बलसंचयकारित्वाद् व्यायामः सुमहान् गुणः ॥११॥
अश्लीलगीतादथ मार्गभुक्ते-
रसभ्यभावो वितर्ति भजेत ।
तस्मात्तदेतत् परिवर्जनीयं
न वर्जनीयः सुगुणः कदाचित् ॥ १२ ॥
ये च धर्मद्रुहः केचित् केवलं बलमाश्रिताः ॥
उन्नतौ कण्टकीभूताश्छेत्तव्यास्ते ध्रुवं ध्रुवम् ॥ १३ ॥
संघभावेन सिद्ध्यन्ति कार्याण्यस्मिन् कलौ युगे ।
तस्मात्संघविधानेन साध्यं साध्यं सुबुद्धिभिः ॥१४॥
धर्मसंरक्षणेनैव सर्वं स्याद् रक्षितं ततः ।
रक्षणीयः सदा धर्मः स्मर्तव्यं भीष्मभाषितम् ॥१५॥

...विश्वविद्यालयस्य, उपाधिवितरणमहोत्सवे दत्ता ।

"इदं च ते सर्वपरं ब्रवीमि
पुण्यं पदं तात महाविशिष्टम् ॥
न जातु कामान्न भयान्न लोभाद्
धर्मं त्यजेज्जीवितस्यापि हेतोः"

श्रीसूर्यनारायणशर्मा आचार्यः
जयपुरम्

---

## इन्द्रजाल-मञ्जूषा ।

( शेषांशः )

लेखक-श्री पं० मंगलदेव शास्त्री, एम० ए०, पी-एच्० डी०

एवमेव गच्छति काले कस्मिंश्चिद् वासरे सततमेवं मिथ्यावचोभिः स्वकर्णमापूरयतस्तानखिलान् कर्णेजपान् समाहूय—" नित्यं युष्माकं वचांसि शृण्वन्नहं सञ्जातोऽस्मि खिन्नचेताः । अद्य तद्गृहमेत्य सर्वेषामभिमुखं तामिन्द्रजाल-मञ्जूषामीक्षिष्ये "—इत्येवमब्रवीद् भूपतिः । जाताः सर्वेऽपि सज्जाः । राजा च समादाय तानखिलान् साकमात्मना सद्युपस्थितस्तस्यामात्यस्य गेहम् । सच बहुमानपुरस्सरं धन्यंमन्यः स्वागतमतिमात्रं महीपतेरन्वतिष्ठत् ।

अथ तेन सत्कृते समुपविष्टे च बहुमूल्यासनोपरि राजनि, अन्येषु च यथायोग्यमासनमधिष्ठितेषु तयो राजमन्त्रिणोरेव उक्तिप्रत्युक्तिरूपः संवादः संववृते ।

**राजा**—आर्य ! साम्प्रतमेव मया सार्द्धमास्थानमण्डपमेतु भवान् । अस्ति कस्मिंश्चिद् विषये मन्त्रणीयम् ।

**मन्त्री**—देव ! प्रसीदति चेद्भवांस्तर्हि रहसि किञ्चित्क्षणं निर्धार्य भवतां पुरस्तादुपतिष्ठामि ।

समेऽप्येतदाकर्ण्य परस्परमिङ्गितं विदधुः ।

**राजा**—मन्त्रिन् ! कार्यस्य गुरुतया सपदि ग... मित्येव मदीय आदेशः ।

**मन्त्री**—[ सवितर्काशङ्कम् सविनयञ्च ] महाराज... यावद्रहसि गन्तुमनुजानातु ।

**राजा**—[ विविधविकल्पेषु निमज्जन् ] रहसि... निमित्तं गमनम् ?

**मन्त्री**—देव ! क्षणं यावदेव प्रकोष्ठे गत्वा सा... परिषत्प्रासादं यामि ।

[ सर्वेऽप्यधिकारिणः पुलकितवदना बभूवुः

**राजा**—अस्तु । गच्छतु प्रकोष्ठे परं मद्द्वितीयो...

**मन्त्री**—( सभयम् ) भगवन् ! मावाक्षीद्... कष्टम् । नैष प्रकोष्ठो भवतो गमनाय समुचितः । यत... मामकीना मुख्या सम्पद् । साच भवतो दृष्ट्यातिलघ्वी...

**राजा**—( नूनमयमिन्द्रजालिक इत्यवितथो लोक... इति मन्यमानः ) मन्त्रिन् ! नूनं मयापि नियतमेव... भ्यन्तरे गन्तव्यम् ।

**मन्त्री**—भवतु—यथाभिरोचते श्रीमते ।

**अथ राजा सहान्यैर्निजाधिकृतवर्गैरन्तः प्रविवे...**

तत्रहि प्रकोष्ठे नासीदासनम्, नापि काचिद... सामग्री, न चापि बहुमुल्यं किञ्चिदन्यत् । केवलं भि... खातालयेषु पुस्तकान्यासन् संस्थितानि । एकतश्चत्वारो वे... एकतो ब्राह्मणानि । अन्यतो ह्युपनिषन्निबन्धाः । ... नाटकाख्यानकथादर्शनप्रभृतिप्रबन्धाः । मध्येभागं... रजतमयी मञ्जूषा स्थिता आसीत् । अनुयायिभिः... बोधितो राजा तदुद्घाटनाय समादिष्टवान् । राजा... सारं च यावदेव सोद्घाट्यते तावदेव स तस्यां म... छिन्नानि च चीवराणि वीक्ष्य साश्चर्यं सभयं चाह "... तत् ?" इति ।

**मन्त्री**—देव ! पुरातनानीमानि मे दारिद्र्य... वासांसि एतदर्थञ्च सुगूढं संरक्षितानि मया "... वीक्ष्यैतानि पुरातनीं मामकीनामवस्थां स्मरेयम् ।

...रेयम् । पुरा कीदृशोऽहमासमिति । सभायां नित्य-...नात् प्राक् क्षणमहमेतानि पश्यामि । कदाचित् ...पि । कीदृश आसमहम् ? किं भवत्यैश्वर्ये ? ...ते दारिद्र्ये ? केवलमेतावत्स्मरणार्थमेव सयत्न-...थापितानि !"

...यमेवाभ्युपायो येन क्षणक्षयिणि सापाये भोगे ...मानवाः, सम्पत्तिस्सद्भावेऽपि च "कोऽर्थान् प्राप्य ...ः" इतिसाधारणनियममुल्लङ्घ्य अनुत्सेकस्तेषां ...ज्ञानेवोद्दिश्य महामतेर्भर्तृहरेः सुभाषितम्—

'...नुत्सेको लक्ष्म्यां निरभिभवसाराः परकथाः ।
...तां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥'

...च साश्चर्यं सस्नेहञ्च तद्वचो निशम्य, सभायामेत्य, ...पिशुनांस्तिरश्चक्रे भर्त्सयामास च । अनन्तरं च ...वीत् । उदतेजयन्त हि मां भवन्तः सर्वदा तत्ता-डनाय । अद्य दास्येऽहं तस्मै दण्डम्, तच्चैतत् यत् अद्यप्रभृति स मे प्रधानामात्यः सञ्जातः । अत ऊर्ध्वञ्च यदपि किञ्चित्स आदिशति तन्मदीय एवादेश इति कृत्वा सर्वैरङ्गीकर्तव्यम् ।

अयं भावः—यदुन्नतिपदाभिलाषिभिः स्वीया पूर्वावस्था नहि विस्मर्तव्या । अथवा-एतदेव महात्मनां लक्षणम्, यत्

धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः ।
प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः ॥
ये दीनेषु दयालवः स्पृशति यानल्पोऽपि न श्रीमदो
व्यग्रा ये च परोपकारकरणे हृष्यन्ति ये याचिताः ।
स्वस्थाः सन्ति च यौवनोन्मदमहाव्याधिप्रकोपेऽपि ये
तैः स्तम्भैरिव सुस्थितैः कलिभरक्लान्ता धरा धार्यते ।

इति

---

# मुद्राराक्षस-परीक्षणम् ।

...कः :—'श्रीहरि-भाऊ', काशी-विद्यापीठस्थः ।

## १ रचनाकाल :—

...टकमिदं विशाखदत्तकविना विरचितमस्ति । ...पितुर्नाम पृथुदत्त आसीत् । अयं कविः ...पि सार्वभौमभूपतेः सकाश आसीदिति नाट-...यते । यथा हि, प्रस्तावनायाम्, "आज्ञापितो-...परिषदा" अन्यत्र च, "काव्यविशेषवेदिन्यां ...दि प्रयुञ्जानस्य ममापि चेतसि सुमहान् परि-...आदुर्भवति" इति लिखितमस्ति । कः खलु स सम्राडासीदिति प्रश्नः समुद्भवति । नाटकस्य भरतवाक्यस्य "सश्रीमद्बन्धुभृत्यश्चिरमवतु महीं पार्थिवश्चन्द्रगुप्तः" इत्यवतरणेन तु स्पष्टं भवति यच्चन्द्रगुप्त एवायं सम्राडिति । किन्तु कोऽयं चन्द्रगुप्तः ? इतिहासाज्ज्ञायते यच्चन्द्रगुप्तनाम राजत्रयमासीदिति । आदिमश्चन्द्रगुप्तमौर्यो योऽस्य नाटकस्य नायको विद्यते । अयमीशवीयशतकात्प्राक् चतुर्थे शतके आसीत् । तत्समये नाटकस्यास्य रङ्गभूम्यवतरणमसम्भवनीयम् । द्वितीयश्चन्द्रगुप्तः ख्रिष्टाब्दस्य चतुर्थ शतकेऽभूत् । किन्तु नास्य राज्यं विस्तीर्णम्, न वाऽस्य काचिद्विद्वत्परिषदासीत् । तदस्य कवेरेतस्य पार्श्वेऽस्तित्वं कथं सम्भवति । तृतीयश्चन्द्रगुप्तो विक्रमादित्येति नाम्ना प्रसिद्ध आसीत् । अयं ख्रिष्टाब्दस्य पञ्चमे शतके बभूव । तस्यासीदेका विद्वत्सभा यस्यामयं कविर्विशाखदत्तोऽविद्यत । नाटक एव प्रमाणमेकं दृश्यते यत् "म्लेच्छैरुद्वेजमाना

भुजयुगमधुना पीवरं राजमूर्तेः" इतिहासविदां विदितचरमेव यच्चन्द्रगुप्तादस्मात् पूर्वं हूणादीनां भारतवर्षस्योपर्याक्रमणं भवतिस्म । अयं च चन्द्रगुप्तस्तस्याक्रमणस्य प्रतिकारं करोति स्म । पद्यस्थ 'म्लेच्छ' शब्दो हूणादिपरकीयानां निदर्शको, 'राजमूर्तिश्च' चन्द्रगुप्तविक्रमादित्यस्य । अतो ज्ञायते यदयं कविः पञ्चमे शतके विक्रमादित्यस्य सकाश आसीदिति । तस्यैव परिषदि नाटकमिदं विरचितं दर्शितं च । शिवभक्तोऽयं कविरासीदिति मङ्गलाचरणाज्ज्ञायते ।

## २ कथाविषयः—

खिष्टाब्दात्प्राक् चतुर्थे शतके मगधदेशे नन्दपतिर्भूपतिर्बभूव । तस्य कुसुमपुरं पाटलिपुत्रं वा राजनगरमासीत् । एतन्नगरं शोणनदीतीरे वर्तते । अधुना 'पटना' नाम्ना च द्योतते । नन्दराज्यं साम्राज्यमासीत् । तत्र विद्वांसोऽतीव पूज्यन्ते स्म । एकदा काबुल-कन्दहारतः कश्चिद्विद्वान् ब्राह्मणस्तत्र समायातः । तस्य विद्यानिपुणतामवलोक्य राजा बहु तुतोष । सर्वे विद्वांसश्च स्वपदापहरणशङ्काशङ्किताः सन्तस्तं ब्राह्मणं विद्विषन्ति स्म । एकस्मिन्दिवसे राजभवने श्राद्धमासीत् । तदर्थं ब्राह्मणस्यैकस्यावश्यकता बभूव । सर्वे ब्राह्मणास्तं ब्राह्मणमवमन्तुं सुसन्धिमिमां मत्वा तमेव निमन्त्रयाञ्चक्रुः । स आगत्य पात्र उपविवेश । विरूपं तं पितृस्थानोपविष्टं दृष्ट्वा राजा भृशं चुक्रोध, तं च दूरंचकार । तेन क्रुद्धो ब्राह्मणः स्वशिखां मुक्त्वा प्रतिज्ञामकरोत् यदहमिमां शिखां न तावन्निबध्नामि यावन्नन्दान्मूलतो नोत्पाटयामीति । अकिञ्चनस्यास्य ब्राह्मणस्य प्रतिज्ञया मादृशभूपतेः किमिति विचिन्त्य स निःशङ्कोऽभवत् । ब्राह्मणस्तत्स्थानं त्यक्तवान् ।

अयं ब्राह्मणः चाणक्याभिधानः स्वकुश[ल]... नन्दस्य वृषलीपुत्रं चन्द्रगुप्तं सज्जीकृत्य तस्मै राज्यं दातुं निश्चितवान् । बहवो जनास्तेन सहा[याः] ... स तेषां विष्णुशर्मणे क्षपणकवेषं दत्त्वा तं जीवसि[द्धि] नाम्ना नन्दानां राक्षसनाम्नः प्रधानमन्त्रिणः स[काशे] निवेशयामास । राक्षसो नन्दानाममात्य आसी[त्] ... राज्ञा सह तस्य मतवैचित्र्यमासीत्, तस्मा[त्] निकटवर्तिभूपतेः पर्वतेश्वरस्य मन्त्री बभूव । ... राक्षसो नन्दपार्श्वे पुनरप्यागतवान् । एतदेव[का]रणं यतः पर्वतेश्वरस्य कुसुमपुरपतिभिः सह ... समुत्पन्नम् । चाणक्येनार्द्धराज्यप्रदानाशया स ... विरुद्धसहायार्थं निमन्त्रितः । तस्य पर्वते[श्वरस्य] मलयकेतुना पुत्रेणात्मनः सुमित्रस्य भागुराय[ण] ... मैत्रीमकारयत्, मलयकेतोः सहचारी शिख[र] ... नामासीत् । तस्य भद्रभट-हिङ्गुरात-पुरुषदत्त ... गुप्त राजसेनादिभिः सहातीव बुद्धिचातुर्येण ... चर्यमकारि । सिद्धार्थकनामानं स्वकीयं गुप्तचरं ... क्षसमित्रस्य चन्दनदासस्य सकाशे पूर्वमेव नि[वेशि]तवान् । एतैर्गुप्तचरैः स्वकार्यं गुप्तरीत्या कृ... तेनहि चाणक्योऽन्ते सफलयशा बभूव ।

पुनश्च तेन शक-यवन-किरात-काम्बोज-... सीकादीनां म्लेच्छराजानां नन्दविरुद्धं सा... गृहीतम् । स्वयं च स सहपर्वतेश्वरः कुसु[म]... मरुणत् । तदा राजा नन्दोऽपि स्वपित्[ृ] ... सर्वार्थसिद्धिं राज्येऽधिष्ठाप्य राक्षसं च दुर्ग... क्षणाय निवेश्य स्वयं च ससैनिकः सह ...

समवातरत् । क्रमशस्तस्य राज्ञः सर्वे परिहता बभूवुः । तदनन्तरं विजयी चन्द्रगुप्तो समारोहेण पाटलिपुत्रं प्रवेष्टुमैच्छत् । सिद्धिर्निर्विण्णो भूत्वा गुप्तमार्गेण तपस्यायै ाय । स्वामिवंशनाश-पीड़ितहृदयश्चान्द्रगुप्तकृतनिश्चयः परममित्रचन्दनदासगृह-नित्लीपुत्रः सुरङ्गमार्गेण नगरान्निःसृत्य पर्व- च गत्वा तस्मै सम्पूर्णकुसुमपुरराज्यं निश्चित्य तेन सह सन्धिमकरोद्राक्षसः । गुप्तस्य नाशार्थं विषकन्यामप्येकां जीवद्वारा प्राहिणोत् । किन्तु जीवसिद्धिश्चाण- आसीदित्यतः स चाणक्यः सर्वं षड्यन्त्रं न, तथैव विषकन्यया च पर्वतेश्वरं जघान । भागुरायण-द्वारा मलयकेतुं कथयामास यदरदानप्रसङ्गभयेन चाणक्येन घातितस्त्वज्ज- न जाने त्वामपि किमयं कुटिलः करिष्यतीति । रकथनेन सोऽपि कुसुमपुरात्पलायितः । गुप्तस्य राज्यं निष्कण्टकं चाभवत् ।

तदनन्तरं वैरोधकनाम्ना राज्यार्द्धप्रतिवचन- पर्वतेश्वरबन्धुनासह चन्द्रगुप्तो हस्तिन्येक ः पताकादिभिः सुशोभितं पुष्पपुरं प्रवेष्टु- द्वारदेशमागतः तस्मिन्स्थाने राक्षसेन चन्द्रगुवधार्थं कूटयन्त्रमेकं कारितम् । तस्मिन्कर्मणि वर्मादयो नियुक्ता आसन् । किन्तु राक्षसस्य दुर्विपाकात्तद्यन्त्रद्वारा वैरोधकहतकस्य मृत्यु-रभवत् । सर्वार्थसिद्धिस्तु वन एव चाणक्येन गुप्तचरैर्घातितः । अनया रीत्या हतरिपुश्चन्द्रगुप्तो नन्दराज्येऽभिषिक्तः, तर्ह्यपि राक्षसस्त्यक्तप्रयत्नो नाभूत् ।

राक्षसस्येष्टसिद्धयर्थमिदानीं मलयकेतुरेवाशातन्तुः । मलयकेतवे "कुसुमपुरराज्यप्रदानं सुचिन्त्य तमागत्य च सोऽब्रवीत्, यदहं नन्दानामृणमपनेतुं कामये, न राज्यम् । नन्दध्वंसकानां प्रतिशमो हि मेऽभिमतः, राज्यं तु भवदर्थमेव । प्रजा अप्यस्मानिच्छन्ति, ताः साहाय्यं दास्यन्ति । कुटिलमतेश्चाणक्यस्य चन्द्रगुप्तस्य च हननमेव मेऽभीष्टम् । अनेनैवकुटिलमतिना चाणक्येन विषकन्यया ते पिता घातितः" इति । मलयकेतुरुद्यतो बभूव । किन्तु राक्षसस्य दौर्भाग्यात्सर्वाण्यपि कर्माणि विफलानि बभूवुः । चाणक्यस्य च सदैव विजय एवाभवत् । अन्ते राक्षसश्चन्द्रगुप्तस्यामात्यपदमलमकरोत् । तदा चाणक्योऽपि राक्षसस्य "चन्द्रगुप्तो नन्दस्य वृषलीपुत्रः अतएव नन्दकुलाङ्कुर" इति कथनेन समाधानं चकार । नाटकेऽस्मिन्नस्योल्लेखस्तु नास्ति । अनेन प्रकारेण चाणक्यस्य नन्दोत्पाटिनी चन्द्रगुप्ताय निष्कण्टकराज्यदायिनी प्रतिज्ञा पूर्णा बभूव । मुद्रया राक्षसः परिगृहीतस्तस्मादस्य नाटकस्य 'मुद्राराक्षसम्' इति नामाकारि विशाखदत्तेन कविना । एतावानेव विषयो नाटके प्रतिपादितः ।

( अपूर्णम् )



# अमूल्यान्यश्रूणि ।†

लेखकः—श्रीशिवपूजनसहायः, हिन्दीभूषणम् ।



अश्रुं हि नाम महदमूल्यं पवित्रं च किमपि वस्तु—यदि तद्विशुद्ध-हृदयादुत्पन्नं भवेत् । यस्य हि नरस्य नयने नयनाम्बुभिर्न पवित्रिते तस्य नयने मयूरपिच्छे चन्द्रकाणीव दर्शनीये एव । यस्य नयनयोः भक्त्याः, करुणायाः, वात्सल्यस्य, पश्चात्तापस्य, प्रेम्णः, आनन्दस्य वा अस्राणि नोद्भवन्ति, तस्य नेत्रे केवलं शोकाश्रुवर्षणायैव सुरक्षिते तिष्ठतः । धन्यं तस्य जीवितम्, येनैतादृशानामस्राणामविरल-वर्षैः सफलिते नयने ।

अश्रूणि प्रवाहितान्यासन् श्रीरामकृष्णपरमहंसेन—अखण्डभक्त्या समाधौ । अश्रूणि प्रवाहितान्यासन् स्वामिना रामतीर्थेन—एकान्ते स्थित्वा भगवद्वियोगे ।

पुनः, अश्रूणि प्रवाहितान्यासन् महात्मना गान्धिना-चौराचौरी-हत्याकाण्डे पश्चात्तापं कुर्वता । तथा अश्रूणि प्रवाहितान्यासन् महामनसा... पादेन मालवीयेन-जलियाँवागे नर-पिशा... डायरस्य वह्निवर्षेण भृष्टानां निःशस्त्रभारती... मुपरि ।

अन्यच्च—अस्राणि मुञ्चन्ति लक्षशः अस... प्रपीडिता हिन्दुविधवाः-भारतीय-पुरुष-समा... हृदयहीनतायाम्, स्वार्थपरतायाम्, नृशंसता... क्लीवतायाम्, मूर्खतायाञ्च । अस्राणि प्रवाह... वराक्यः असहाया गावः-गोरक्षादम्भिनां सना... धर्मं त्यक्तवतां धर्मध्वजानां हिन्दूनामुपरि ।

पुनः, अस्राणि प्रवाहयति स्वदेशीयवस्त्रम्-... सालिप्तानां विदेशीयवस्त्राणां पक्षपातिषु-वा... वाच्येषु क्लीवेषु । अश्राणि प्रवाहयति वृद्धभार... कलहप्रियाणां स्वार्थान्धानां देशनेतृणां ... तर्क-शक्तौ ।

ओम्, अश्रूणि मुञ्चन्ति धर्मशास्त्राणि-स्व... वास्तविक-परिस्थितिमूढानामजगरावताराणां... ण्डितानां स्थूलबुद्धौ । अस्राणि मुञ्चन्ति आँग्ल... तकाः ( ग्रेजुएट् )-आङ्ग्लशिक्षाया निष्फलत्वे...

अधुना, अस्राणि प्रवाहयिष्यन्ति हत... भारतनेतारः—देशप्रेमोन्मत्तैर्नवयुवकैर्निकटेभवि... त्येव नेतृत्वाधिकारस्य गृहीतत्वात् । ... प्रवाहयिष्यन्ति वेदशास्त्रज्ञाः पण्डिताः-सामा... क्रान्तिकारिणामदम्यशक्तौ, अचिन्तनीयायाञ्च ... लतायाम् । अश्रूणि मोदयन्ति-चौकामार्गिणो हि... अस्पृश्यानां दलितानाञ्च जातीनां विधर्मप्रवेश... हिन्दुधर्मविनाशाय संनद्धतायाम् ।

प्रियपाठकाः ! भवन्तोऽप्यश्रुमोक्षणं कुर्व... एतेषूपर्युक्तेषु नयनाम्बुप्रवाहकेषु प्रवाहिनीषु ...

---

† सुप्रभातस्य विशिष्टाङ्कृतेऽयं लेखः परमसुहृदा शिवपूजनसहायेन हिन्दी-भाषायां प्रेषित आसीत् । सोऽयमद्य मया संस्कृतेऽनूद्य प्रकाशितः— सम्पादकः

## भगवन्तं प्रति भारतस्य विनयः ❀

( गज़लगीतिः )

गुणावधे ! करुणानिधे ह्यवधीयताम् ।
कलभारते तव भा-रते विनिधीयताम् ॥१॥
वलये विशेषविधोऽस्ति देशवरश्चिरात् ।
समाज एष विभाति यदग्रणीयताम् ॥२॥
कोपि निदर्शयेद्वत देशमीदृशमुन्नतम् ।
वाङ्मयमावहेन्निगमागमैस्तुलनीयताम् ॥३॥
कसराः कलयन्ति कामपि सुच्छविम् ।
ईक्ष्यते किमिहापरोऽपि विचीयताम् ! ॥४॥
लुठ लुण्ठनतत्परैर्बहुधा परैः ।
साम्प्रतमप्यसौ वहते परं महनीयताम् ॥५॥
नियन्त्रणैः परतन्त्रता नाभूद्यदा ।
दधौ तदा तव देव ! दुर्दमनीयताम् ॥६॥
तले बलेन परैः शिरो नमितं पुरा ।
कठोरनीतिपरैः परैर्बत जीयताम् ॥७॥
वराः ! समेत्य भवद्भिरेव विचार्यताम् ।
लस्य कार्य-पथे यथावदुदीयताम् ॥८॥
परिहाय संप्रति कर्तृतां कलयेम चेत् ।
स्वयमावृणीत मनागिदं परिचीयताम् ॥९॥
यमुनातटे, निकटे कदम्बमहीरुहाम् ।
विहरन् हरिर्विदधे महाकमनीयताम् ॥१०॥

---

नीयं तु गणेयम्' अमरः । उज्ज्वला या ते सन्मार्गाधिष्ठिते इत्यर्थः ॥ १ ॥ विभाति ॥ २ ॥ वक्तृतां वचने कर्तृतां विहाय कार्यं प्रति त्स्यामस्तर्हि उन्नतिःस्वयं वरणं कुर्यादित्या- ॥ अपहारस्य विलुण्ठनस्य भूमिः ॥११
२

किन्तु सैव विहारभूरपहारभूर्जनिताऽधुना ।
हेलयापि दयानिधान ! दयाद्दगत्र विधीयताम् ॥११
तावकी करुणामुपेत्य न वेत्त्यसौ हृदि वेदनाम् ।
धार्मिकेषु दयावता भवता द्रुतं समुदीयताम् ॥१२
गीयते निगमागमैर्गुणगौरवं तव सर्वदा ।
नाथ ! संप्रति मञ्जुनाथगिरा कियद्बत गीयताम् ? ॥

भट्ट श्रीमथुरानाथशास्त्री [ साहित्याचार्यः ]

[ प्रोफेसर, महाराजा—कालेज, जयपुर ]

## पौराणिकप्रणवे द्विजेतरस्याप्यधिकारः ।

[ ले०—श्रीराधाप्रसादशास्त्री, धर्मशास्त्राचार्यः ]

( पूर्वतोऽनुवृत्तः )

२७६ पृ. निर्णयसिन्धौ—

अत्र केचिद् इत्युपक्रम्य वैदिकमन्त्रो विप्रेण पौराणस्तु शूद्रेण पठनीय इति प्रतिज्ञाय पाद्मपुराण-वचनं प्रमाणत्वेनोपन्यस्तम्

नहि वेदेष्वधीकारः कश्चिच्छूद्रस्य विद्यते ।
पुराणेष्वधिकारो मे दर्शितो ब्राह्मणैरिह ॥

तत् खण्डनं च तत्रैव कृतम् । नाध्येतव्यमिदं शास्त्रं वृषलस्य तु सन्निधौ—इति कौर्मपुराणनिषेधं प्रस्तुत्य इदं वचनम्—

अध्येतव्यं ब्राह्मणेन वैश्येन क्षत्रियेण च
श्रोतव्यमेव शूद्रेण नाध्येतव्यं कदाचन ॥
श्रौतं स्मार्तं च वै धर्मं प्रोक्तमस्मिन्नृपोत्तम ।
तस्माच्छूद्रैर्विना विप्रं न श्रोतव्यं कदाचन ॥
इति पुराणाधिकारे भविष्योक्तिः ।

पृ० २३४ पृ० २३५ निर्णयसिन्धौ यमः—

शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः ।
न केनचित् समसृजत् छन्दसा तं प्रजापतिः ॥

व्यासः—

गर्भाधानं पुंसवनं सीमन्तो जातकर्म च,
नामक्रिया निष्क्रमोऽन्नप्राशनं वपनक्रिया ॥
कर्णवेधो व्रतादेशो वेदारम्भः क्रियाविधिः,
केशान्तः स्नानमुद्वाहो विवाहाग्निपरिग्रहः ॥
त्रेताग्निसंग्रहश्चैव संस्काराः षोडश स्मृताः,,

इत्युक्त्वा आह—

नवैताः कर्णवेधान्ता मन्त्रवर्जं स्त्रियाःक्रियाः,
विवाहे मन्त्रतस्तस्याः शूद्रस्यामन्त्रतो दश,,

मरीचिः—

अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते,

इयंपरिभाषा सर्वार्था तेन शूद्रधर्मेषु विप्रेण मन्त्रः पठनीयः । सोऽपि पौराण एव एवं स्त्रीणामपि- उपरिष्टात्सर्वत्रामन्त्रतः इति स्थले वेदमन्त्रवर्ज- मित्यर्थः । मन्त्र इति पौराणिको मन्त्रः सोऽपि स्वयं शूद्रेण न पठनीयः किन्तुविप्रद्वारैव' एवं पठनवि- षयेऽनधिकारवतः प्रतिष्ठायामपि शूद्रादीनां नाधि- कारः स्त्रीणामनुपनीतानां शूद्राणाञ्चजनेश्वरस्थापने नाधिकारोऽस्ति विष्णु र्वा शंकरस्य वा, स्थापने इत्यत्र स्पर्शने इत्यपि पाठः तेन तैः स्पर्शोऽपि न कर्तव्यः । शूद्रसंस्कृतप्रतिमायाः प्रणमने दोष- मप्याह—

यः शूद्रसंस्कृतं लिङ्गं विष्णुं वापि नमेन्नरः,
इहैवात्यन्तदुःखानि पश्यत्यामुष्मिके किमु,, ॥
शूद्रो वा नुपनीतो वा स्त्रियो वा पतितोऽपि वा

केशवं वा शिवं वापि स्पृष्ट्वा नरकमश्नुते

इत्थं विरुद्धान्यपि वाक्यानि दृश्यन्ते ।

२३६ पृष्ठे निर्णयसिन्धौ कृत्यकल्पतरुः

चतुर्वर्णैस्तथा विष्णुः प्रतिष्ठाप्य सुखार्थिभिः,
भैरवोऽपि चतुर्वर्णैरन्त्यजानां तथा मतः ''
मातरः सर्वलोकैस्तु स्थाप्याः पूज्याः सुरोत्तमाः
लिङ्गं गृही यतिर्वाऽपि संस्थाप्य तु यजेत्सदा

शिवसर्वस्वे भविष्ये—

यस्तु पूजयते लिङ्गं देवदेवञ्जगत्पतिम्,
ब्राह्मणः क्षत्रियो वैश्यः शूद्रोऽपि मत्परायणः
तस्य प्रीतस्तु दास्यामि शुभाँल्लोंकाननुत्तमान्

तिथितत्त्वे स्कान्दे—

शूद्रः कर्माणि यो नित्यं स्वीयानि कुरुते प्रिये,
तस्याहमर्चां गृह्णामि चन्द्रखण्डविभूषिते ॥
ब्रह्मचारी गृहस्थो वा वानप्रस्थश्च सुव्रते,
एवं दिनेदिने देवं पूजयेदम्बिकापतिम् ॥
सन्यासी देवदेवेशं प्रणवेनैव पूजयेत,
नमोऽन्तेन शिवेनैव स्त्रीणां पूजा विधीयते ॥

स्त्रीशूद्राधिकारप्रदर्शनंपुराणप्रसिद्धजीर्णलिङ्ग- पूजाविषयं निषेधविषयं च नूतनस्थापितप्रतिमा- विषयम् '' इतिव्यवस्था ॥ ॐकारसहितो- मन्त्रोपदेशो वीरमित्रोदये प्रदर्शितः तद्विरुद्धं पराशरमाधवीये ॥

त्रैवर्णिकमात्राधिकारा हि श्रुतिः प्रसिद्धा, ... श्चतथाविधः ।

सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्राय नेच्छन्ति
नृसिंह ता० १—२ इति श्रुतेः

लक्ष्मीमिति श्रीबीजमित्यर्थः । स्मृतेरपि

रीतिविष्णुः, तयोः समीपे न वेदाध्ययनं
प्रणवेस्वपि वेदादित्वात्तदध्ययनमपि
॥ अतएवाचार्यैः प्रपञ्चसारेऽभिहितम् ॥
तु वेदादित्वात् सर्वमनूनां प्रयुज्यते ह्यादौ
तएव ग्रन्थारम्भे महर्षिभिः पौरुषेयग्रन्थेषु
ङ्कारस्थाने अथ शब्दः प्रयुज्यते । तद्यथा
तोब्रह्मजिज्ञासा—अथातो धर्मजिज्ञासा-
हिमशैलाग्रे देवदारुवनालये इत्यादि ॥
परपर्यायाथशब्दसमानार्थक ॐकारः
। नच प्रयुज्यते ततो व्यज्यते श्रुत्यादौ
प्रयोगः पौरुषेयग्रन्थस्य चादावथशब्दस्य
श्लोकमुभयोः शिष्टवचनेन—
रश्चाथशब्दश्च द्वावेतौ ब्रह्मणो मुखात् ॥
भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥
चात्रेत्थम्-सर्वानुरोधेन कार्य्या ।
ध्ययनविषये स्पष्टमेवानधिकारः । तदर्थज्ञाने
तच्छ्रवणे च । तथा केवलप्रणवोपदेशेच
सारत्वात् । तथा चोक्तं तैत्तरीयोपनिषदि-
न्दसामृषभो विश्वरूपश्छन्दोभ्योध्यमृता-
इत्यादि ।

ॐकार श्छन्दसा वेदानां मध्य ऋषभः श्रेष्ठः
ऽमृतात्-अमृतमयेभ्यस्सारभूतो बभूव ।
सारभूतं नवनीतमिव । अतो वेदे शूद्राणामन-
त् केवले प्रणवेप्यनधिकारः । परन्तु-
सयमृक्त्वेऽपि यजुर्मन्त्रपाठात् यजुर्वेद
पूर्वमीमांसायामुपांशूच्चारणमुपांशु
बोधितं व्यपदिष्टम् । यथा तत्र यजुर्धर्म
क्रियते, तथात्र पुराणश्रवणे पुराण

द्वारा वेदार्थज्ञाने तदनुष्ठाने सप्रणवपुराणतन्मन्त्र श्रवणे च शूद्रस्याप्यधिकारः । तथा चोत्तरमीमांसायां प्रथमाध्यायस्य तृतीयपादे ३८ सूत्रे तद्भाष्ये चोक्तम्-तथाहि—

श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च । ४८ ।

इतश्च न शूद्रस्याधिकारः । यदस्य स्मृतेर्वेद श्रवणप्रतिषेधो वेदाध्ययनप्रतिषेधस्तदर्थज्ञानानुष्ठानयोश्च प्रतिषेधः शूद्रस्य स्मर्यते । श्रवणप्रतिषेधस्तावत्—" अथास्य वेदमुपश्शृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम् । पद्युहवा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यमिति च । अतएवाध्ययनप्रतिषेधः । यस्य समीपेऽपि नाध्येतव्यं भवति, स कथमश्रुतमधीयीत, भवति च वेदाध्ययने जिह्वाच्छेदो धारणे शरीरभेद इति । अतएव च अर्थात्-अर्थज्ञानानुष्ठानयोः प्रतिषेधो भवति न शूद्राय मतिं दद्यादिति द्विजातीनामध्ययनमिज्यादानमिति च । येषां पुनः पूर्वकृतसंस्कारवशाद्विदुरधर्मव्याधप्रभृतीनां ज्ञानोत्पत्तिस्तेषां न शक्यते फल प्राप्तिः प्रतिषेद्धुं ज्ञानस्यैकान्तिकफलत्वात् । श्रावयेच्चतुरोवर्णान् इति चेतिहासपुराणाधिगमे चातुर्वर्ण्यस्याधिकारस्मरणात् । वेदपूर्वकस्तु नास्त्यधिकारः शूद्राणामिति स्थितम् । इति शांकरभाष्यम्-मनुरप्याह—

अधीयीरंस्त्रयो वर्णाः स्वकर्मस्था द्विजातयः ॥
प्रब्रूयाद्ब्राह्मणस्तेषां नेतराविति निश्चयः ॥

इदं स्मृतिवचनं किं त्रैवर्णिकानां वेदाध्ययनं विधत्ते-आहोस्वित् वेदातिरिकाध्ययनमिति । सामान्यत उभयोरध्ययनविधानं युज्यते कर्मविशेषा-

श्रवणात्-इति यदुच्यते तत्र, वेदाध्ययनविधिस्त्रैवर्णिकानां वेदग्रहणार्थं पूर्वमेव द्वितीयाध्याये कथितः। गृहीतस्य वेदस्य विस्मरणमपि दर्शितम् ।

स्वाध्याये नित्ययुक्तः स्याद्दैवे चैवेह कर्मणि
दैवे कर्मणि युक्तो हि बिभर्तीदं चराचरम् ॥३।७५॥

तथा च दशमाध्याये पुनरध्ययनविधिः । अधीयीरन्निति न युज्यते । अप्राप्तप्रापणो हि विधिः । अयंहि पूर्वतः प्राप्त एव तर्हि तदस्तु वेदातिरिक्त विषयाध्ययनविषयविधिः । तदपि न, तथाहि सति अदृष्टं स्वीक्रियेत वेदाध्ययनवत् काव्यनाटकाद्यध्ययनेष्वपि ब्रह्मचारिनियमाचरणं स्यात् । ( आख्यातोपयोगे ) इति पाणिनिसूत्रेण तदध्यापयितुरुपादानत्वमपि स्यात् इष्यते च नटस्य गाथां शृणोति-इतिवत् देवदत्तस्य काव्यनाटकादीन् शृणोति नियमपूर्वकाध्ययने तदुपादानत्वस्योदाहरणमुपाध्यायादधीते । इति वेदाध्ययनविषय एवेष्यते । अतः अश्रुतमपि कर्म वेद इति योग्यतया संबध्यते । तत्र विधिर्न युज्यते पूर्वमेवतत्प्राप्तेः तेनानुवादोऽयम् । स चानुवादः संकीर्णजातौ वाच्यायां तस्याश्च वर्णभ्य उत्पत्तेः । युज्यते एव ततः पूर्वम् । निष्कर्षस्तु वेदातिरिक्तपुराण नाटकाध्ययनं गुरोः सकाशात् श्रवणरूपम् वेदानधिकारिणः शूद्रादयोऽपि कुर्युरिति । इममेव निष्कर्षं दशमाध्यायस्य शूद्रवृत्तवर्णनावसरे स्ववृत्या जीवनमपि धर्म इति धर्मप्रसंगात् अन्यदपि किञ्चिद् शूद्रविषये मनुर्बोधितवान्—

न शूद्रे पातकं किञ्चित् न च संस्कारमर्हति ।
नास्याधिकारो धर्मेऽस्ति न धर्मात्प्रतिषेधनम्

अस्यार्थः—लशुनादिभक्षणेन शूद्रे न किञ्चि[त्] पातकं न ब्रह्मवधादावपि । अनेन वचनेन शू[द्रे] न किञ्चित् पातकं भवति इति वक्तुमुचितम् । तस्य प्रायश्चित्तोपदेशात् । उपनयनादिसंस्[कारं] नार्हति, अमन्त्रतः संस्कारान् शूद्रजातीये नि[...] श्चार्हति

अस्य शूद्रस्य धर्मे स्नानोपवासदेवतार्च[...] न नित्योऽधिकारः, तेनाकरणे न प्रत्यवैति येषु स्ना[नो]पवासव्रतादिषु नित्याधिकारो नास्ति अ[...] प्रत्यवायाभावस्तादृशेभ्यो धर्मेभ्यो न प्रतिषेधः।

तथा अन्यदपि—मनु० १२७—

धर्मेप्सवस्तु धर्मज्ञाः सतां वृत्तमनुष्ठिताः ।
मन्त्रवर्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च ॥

प्रकृतत्वात् शूद्रा इतिविशेष्यमध्याहर्तव्य[म्] मन्त्रवर्जमिति पुराणादिश्रवणे न दुष्यन्ति सूचयति तच्छ्रवणं प्रत्युत प्रशस्तमिति बोध्य[म्] तथा अपरमपि मनुवचनं तत्रैव—

यथा यथा हि सद्वृत्तमातिष्ठत्यनसूयकः ।
तथा तथेमं चामुञ्च लोकं प्राप्नोत्यनिन्दितः ॥

अस्यार्थः—परगुणानिन्दकः शूद्रो द्विजाति[...] निषेधरहितं यथा यथानुतिष्ठति, तथा तथा [...] निन्दितः इह लोके उत्कृष्टः स्मृतः स्वर्गादि[...] च प्राप्नोति, तस्मात्तेषामुत्कर्षेऽमत्सरैर्द्विजैर्[...] धार्मिके लौकिके वा शास्त्राविरुद्धे । परन्तु [...] वास्माभिरवसेयम्, यत्

अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्नतु,

अस्याः स्मृतेरुदाहरणं वक्तव्यं तथा च [...] मपि लोकविद्विष्टं यथा न भवेत् तथोपनये[...]

...पि जनताऽविरोधेनैव शास्त्रसम्मत उप-आचरणीयः । अन्यथा लोकविद्विष्टस्य ...त्याचरणेऽस्याः स्मृतेर्निर्विषयता स्या-...तेऽस्माभिः स्मृत्यादरवद्भिः श्रद्धालुभि-...ः । अतो विविच्य सदसच्छूद्रानुपसन्नानुप-...धर्मोपदेशाय यतितव्यम् ॥

## आयुर्वेदसामर्थ्यम् ।

[ ...—श्रीजगन्नाथशर्मा वाजपेयी, आयुर्वेदाचार्यः ]

...ष्टाङ्गमेकमवगम्य शिवः स्वतन्त्रः,
सिद्धः समादिशदनुत्तमसूततन्त्रम् ।
...नाश्रयः स भगवानवनाय सम्यग्,
वेदोद्यलञ्जयतु नित्यमथायुषेऽयम् ॥१॥

...मन्तो माननीया वाचकमहानुभावाः । ...स्त्येतन्निवेदनीयमायुर्वेदसामर्थ्यवर्णनात् प्रा-... यद्यस्यादिमब्रह्मदक्षाश्विदेवेन्द्रभरद्वाजाग्नि-...न्तरिसुश्रुतप्रभृतयो देवदेवर्षिब्रह्मर्षिराज-... सेवकाः ( आचार्याः ) विख्यातास्तस्य ...र्यं कथमपि न मादृशेनाल्पज्ञेन शक्यते सन्दर्श-..., किन्तु तस्यैव द्वित्राणि सूत्राणि विलिखा-...वाचनश्रमोऽवश्यमूरीकार्यः ।

...कृतिसिद्धा सुखावाप्तिदुःखानवाप्तिसमीहा ...णिनाम् । तपःस्वाध्यायविधूतकल्मषा ...नो योगिनोऽप्यात्यन्तिकदुःखनिवृत्तिलक्षण ...परं सुखमेवाभिलषन्ति ।

तल्लक्षणञ्च व्यावहारिकमायुर्वेद एवोपलभ्यते यदुक्तम्—

"सुखसंज्ञकमारोग्यं विकारो दुःखमेव च ।"

नैतल्लक्षणं केषाञ्चिदप्यरुचिकरम्, यतो ह्यारोग्यमेव धर्मार्थकाममोक्षरूपपुरुषार्थचतुर्वर्गसाधनम् , यदुक्तं चरके—

"धर्मार्थकाममोक्षाणामारोग्यम्मूलमुत्तमम्

एतादृगारोग्यरूपसुखोत्पत्तिरक्षणविधिविज्ञापनार्थमेव परमकारुणिकैर्महर्षिभिः सश्रममभिगम्योपदिष्ट आयुर्वेदः—

यदुक्तञ्चरके—

'प्रयोजनञ्चास्य स्वस्थस्य स्वास्थ्यरक्षणमातुरस्य विकारप्रशमनञ्चेति'

महर्षिकणादेनापि प्रकारान्तरेणारोग्यमेव निदर्शितम्मूलमभ्युदयनिःश्रेयसयोः,

यथा चोक्तन्तेन पूर्वम्—

'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' तदनु—'तस्माद्धर्मप्रसूताद्द्रव्यगुणकर्मसामान्यविशेषसमवायानां साधर्म्यवैधर्म्याभ्यान्तत्वज्ञानान्निश्रेयसाधिगमः' ।

कीदृग् वैशिष्ट्यम्वैशेषिकस्य धर्ममुपदिशन् द्रव्यगुणादीनां साधर्म्यवैधर्म्याभ्यान्तत्वज्ञानमुपदिदेश । अत एवानुमीयते यदयमपि ज्ञानपूर्वकस्वधर्मसेवनविधर्मपरिवर्जनमेवोपदिशति ।

एतदेव वैशिष्ट्यम्वैशेषिकदर्शनाद्दृश्यत आयुर्वेदे स्पष्टतया—

यदुक्तञ्चरके—

महर्षयस्ते ददृशुर्यथावज्ज्ञानचक्षुषा ।

सामान्यञ्च विशेषञ्च गुणान् द्रव्याणि कर्म च ।
समवायञ्च तज्ज्ञात्वा तन्त्रोक्तं विधिमास्थिताः ।
लेभिरे परमं शर्म जीवितञ्चापि निर्गदम् ।

सर्वतोभावेन साम्यमपदार्थविनिश्चयविषयेऽत्रायुर्वेदस्य वैशेषिकेण, यतस्तत्रापि षट्पदार्थाः द्रव्यगुणकर्मसामान्यविशेषसमवायरूपाः, अत्रापि त एव । केवलन्तन्त्रोक्तम्विधिमास्थिता इत्येतत् स्पष्टीकरणमेव विशिष्टम् ।

एवमारोग्यस्य धर्मार्थकाममोक्षसाधकत्वे निर्णीते कथन्तत्प्राप्यते संरक्ष्यते वेति सुतरां सञ्जायते जिज्ञासा । अतस्तन्निर्दिश्यते । तथा च वाग्भटे ।

कालार्थकर्मणां योगो हीनमिथ्यातिमात्रकः ।
सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम् ॥

अयम्भावः—कालार्थकर्मणां हीनमिथ्यातिमात्रको योगो रोगैककारणम्, तेषामेव सम्यग्योग आरोग्यैककारणमिति । चरके सम्यग्योग एव सुखकारणमित्युक्तम् । तथा हि—

"सुखहेतुर्मतस्त्वेकः सम्यग्योगः सुदुर्लभः"। इत्थञ्च सुखहेतुः सम्यग्योगोऽपि दुर्ज्ञेयस्तस्य सम्यक्तया प्रतिपादनमायुर्वेद एव कृतमितीहायुर्वेदलक्षणमेव निर्दिश्यते, तद्यथा चरके—

हिताहितं सुखं दुःखमायुस्तस्य हिताहितम् ।
मानञ्च तच्च यत्रोक्तमायुर्वेदः स उच्यते ॥

अयम्भावः—यस्मिन् शास्त्रे हितमायुरहितमायुःसुखमायुर्दुःखमायुस्तथा तस्यायुषो हिताहिते मानञ्च लक्षणतो यत्रोक्तन्तदायुश्च स आयुर्वेद उच्यते, तत्र पूर्वमायुषो लक्षणम् यथा—

शरीरेन्द्रियसत्वात्मसंयोगो धारि जीवितम् ।
नित्यगश्चानुबन्धश्च पर्यायैरायुरुच्यते ॥

इत्थं शरीरेन्द्रियसत्वात्मनां संयोग पर्या शब्देनोच्यते । ततो हितमायुर्निरुच्यते, साम तस्तु यदायुर्हिते कर्मणि परोपकृतिगुरुवृद्धा दावुपयोगमवाप्नोति तदेव हितम्, यदुक्तं चरके—

"हितैषिणः, पुनर्भूतानां परस्वादुपरतस्य, स वादिनः, सामपरस्य, समीक्ष्यकारिणोऽप्रमत्तस्य, त्रिवर्गम्परस्परेणानुपहतमुपसेवमानस्य, पूजा स्पूजकस्य, ज्ञानविज्ञानोपशमशीलवृद्धोपसेवि सुनियतरोषरोगेर्ष्यामदमानवेगस्य, सततं विवि प्रदानपरस्य, तपोज्ञानप्रशमनित्यस्याध्यात्मवि स्तत्परस्य, लोकमिमञ्चामुञ्चावेक्षमाणस्य, स्मृ मतिमतोहितमायुरुच्यते अहितमतो विपर्ययेण ।"

अतो यथाहितमेव भवेदायुस्तथा प्रयति शमिह चामुष्मिंश्चाभीप्सता पुरुषेण ।

सुखमायुः पुनस्तत्रैव—

"शारीरमानसाभ्यां रोगाभ्यामनभिद्रुतस्य वि षेण यौवनवतः, समन्वागतबलवीर्ययशःपौ पराक्रमस्य, ज्ञानविज्ञानेन्द्रियार्थबलसमुदाये वर्त नस्य, परमर्द्धिरुचिरविविधोपभोगस्य, समृद्धस रम्भस्य, यथेष्टविचारिणः, सुखमायुरुच्यते, असुखमतो विपर्ययेण ।"

कृतेऽनेन लक्षणेन समन्वये भारतीयानाम मेवायुरधिकैरंशैरुपलभ्यत इतिसुखायुर्निर्व त्रिधेयो यत्नो विशेषेण, तत्र यत्र आयुर्वेदो श्रवणपूर्वकन्तथानुष्ठानमेव, यदुक्तं वाग्भटेन—

आयुः कामयमानेन धर्मार्थसुखसाधनम् ।

आयुर्वेदोपदेशेषु विधेयः परमादरः ॥

तत्रायुष्याण्यनायुष्याणि च द्रव्यगुणकर्माणि प्रोच्येत शास्त्रेण, ततश्च कानिचित्सारतयोपकानि विलिख्यन्ते, तद्यथा—

आयुष्यम्भोजनञ्जीर्णे वेगानाञ्चाविधारणम् ।
ब्रह्मचर्यमहिंसा च सद्वृत्तस्यानुवर्तनम् ॥

सूत्ररूपेणत्वस्मिन्नेवैकस्मिन् श्लोके समाप्यते आयुष्यन्द्रव्यगुणकर्मादि, तद्व्याख्यानञ्च । तथा-पूर्वस्मिन्नन्ने भुक्ते जीर्ण एव भुञ्जीत । पूर्वान्नजीर्णता लक्षणञ्च वाग्भटतः कार्यम् । तथाहि—

सृष्टे विण्मूत्रे हृदि सुविमले दोषे स्वपथगे,
विशुद्धे चोद्गारे क्षुदुपगमने वातेऽनुसरति ।
तथाग्नावुद्रिक्ते विशदकरणे देहे च सुलघौ,
प्रयुञ्जीताहारं विधिनियमतः कालः स हि मतः

एवं काले भोजनमायुष्याणाम्प्रथमम् । तदनु-वेगानां मूत्रपुरीषादीनामविधारणम् । वेगावरो-धादावर्तशूलहिक्कादिसहिता राजयक्ष्मसदृशा जायन्ते रोगाः । राजयक्ष्मणस्तु प्रथमो हेतुर्वेगावरोध एव । यथा चोक्तम्—

वेगरोधात्क्षयाच्चैव साहसाद्विषमाशनात् ।
त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात् ॥

वातमूत्रादीनां वेगः कदापि नावरो-द्धव्यः । क्रोधलोभादीनान्त्ववश्यन्धारणीयो वेगः, यथा चोक्तम्—

धारयेत्सततं वेगान् हितैषी प्रेत्य चेह च ।
लोभेर्ष्याद्वेषमात्सर्यरागादीनां जितेन्द्रियः ॥

तृतीयो हेतुर्ब्रह्मचर्यं स्त्रीषु संयमो, वेदाध्ययनञ्च एतद्द्वयमभिसम्बन्धि, यतो हि विद्यायाः फलं विनयः, यदुक्तं केनचित्—

विद्या ददाति विनयमित्यादि । सच ब्रह्मचर्येणैवाप्यते । यथा चोक्तम्

जितेन्द्रियत्वं विनयस्य कारणम्,
गुणप्रकर्षो विनयादवाप्यते ।
गुणाधिके पुंसि जनोऽनुरज्यते,
जनानुरागात् खलु सर्वसम्पदः ॥

न केवलं विनयोपपादकमेव ब्रह्मचर्यङ्किन्तु प्रधानं शरीरधारकम्, यदुक्तं वाग्भटेन

आहारशयनब्रह्मचर्यैर्युक्त्या प्रयोजितैः ।
शरीरन्धार्यते नित्यमगारमिव धारकैः ॥

इत्थं ब्रह्मचर्यम्प्रधानतममायुष्याणाम् ।

साम्प्रतिकमल्पायुष्ट्वमल्पेनैव कालेन यथा भवेत् तिरोहितं ब्रह्मचर्योपासनेन तथा प्रयतितव्य-मखिलैर्मानवैः ।

चतुर्थमायुष्यङ्कर्माहिंसा । यदुक्तम्-"अहिंसा प्राणवर्धनानामुत्कृष्टतया" अहिंसाबलन्तु भारतीयानाञ्चिरपरिचितं सम्यगभ्यस्तञ्चेति साम्प्रतमप्यहिंसाबलमेवास्त्य हीनशक्तिकैरपि भारतीयैरेतादृश्याः बृटिशराज्यसत्ताया विरोधः कर्तुं शक्यते ।

पञ्चमं कारणं सद्वृत्तानुष्ठानम्, तद्ध्यनुष्ठानं युगपत्सम्पादयत्यर्थद्वयम्-आरोग्यमिन्द्रियविजयञ्च । तत्र सतां वृत्तं सद्वृत्तन्तच्च तैराचरितमुपदिष्टञ्च । तत्राद्यन्त्वितिहासाद्यनुशीलनरूपेण महताऽऽयासेन शक्यतेऽवगन्तुमतोद्वितीयमेव सुगमम् ।

तस्यैवैकम्परमोपयोगिनमंशन्निर्दिशामि । तद्यथा देवगोब्राह्मणगुरुवृद्धसिद्धाचार्यानर्चयेत्, सर्व-

प्राणिषु बन्धुभूतःस्यात्, नानृतं ब्रूयात्, न कुर्यात्पापम्, न पापेऽपि पापी स्यात्। (पाप कर्तुः साहाय्यङ्कृत्वा पापभाङ् न भवेदित्यर्थः),

ब्रह्मचर्यज्ञानदानमैत्रीकारुण्यहर्षोपेक्षाप्रशमपरश्च स्यादित्यादि ।

सद्वृत्तमेतदनुष्ठीयमानमवश्यमापादयति दीर्घमायुः । सद्वृत्ताननुष्ठानमेवाल्पायुष्ट्वकरम्, यदुक्तम्मानवे धर्मशास्त्रे—

अनभ्यासेन वेदानामाचारस्य च वर्जनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥

तस्मात्सद्वृत्तं सर्वं सर्वैः स्मृतिमास्थाय सर्वदानुष्ठेयम् ।

इत्थञ्चैकैकोऽप्युपदेशः सम्यगनुष्ठितः सकल वाञ्छासिद्धिप्रदो भवितुं शक्नोति । सकलस्यायुर्वेदस्य सामर्थ्यं वक्तुं कः शक्नोति । नचायुवदस्यास्ति पारमपि, यथा चोक्तं चरके—

न चैव ह्यस्त्यायुर्वेदस्य पारम्, तस्मादप्रमत्तः शश्वदभियोगमस्मिन् गच्छेदित्यादि अतएव नायुर्वेदः परिसमाप्यते केवलं संस्कृतभाषामयेष्वेव ग्रन्थेषु, किञ्च तस्य व्यापकलक्षणेन सञ्जायते सर्वासां चिकित्सानामवरोधः ।

एतादृशस्यायुर्वेदस्य सामर्थ्यमाश्रित्यैवामरेश्वरादिपदवीमुपगतवन्तोऽस्याचार्याः । आधुनिकेतिहासावलोकनेनापि प्रत्यक्षीकर्तुं शक्यते आयुर्वेद माहात्म्यम् ।

समृद्धस्यैतादृशस्य वृटिशराज्यस्य संस्थापकावपि द्वौ हैमिल्टनबाउटननामकावांग्लवैद्यावेवास्ताम्, तयोश्चिकित्सया सन्तुष्टेन यवनेश्वरेण जहांगीरेण दत्तोऽधिकारोऽवाधव्यापारस्य वङ्ग-देशे ईष्टइण्डिया कम्पनीनामकाँग्लसमित्यै । रूसराज्यकान्तावप्या द्विशेषेण साहाय्यन्तत्रत्यवैद्यानाम् ।

परञ्चैतादृक् सर्वमपि श्रेयः सद्वैद्यैरेवसम वाप्तुं शक्यते न केवलन्नामधारिभिः यदुक्तम्—

प्रयोगज्ञानविज्ञानसिद्धिसिद्धाः सुखप्रदाः ।
जीविताभिसरास्ते स्युर्वैद्यत्वन्तेष्ववस्थितम् ॥

इत्थमायुर्वेदज्ञानपूर्वककर्मकरणेन न केवलमैहिकमपि च मोक्षरूपम्पारलौकिकमपि श्रेयः सुलभम् । तस्मात्सर्वैः शमिह चामुष्मिंश्चाप्सुभिरवश्यमध्येयोऽनुष्ठेयश्चेति ।






## निवेदनम् ।

अस्यां गीर्वाणवाण्यां पत्रप्रकाशनेन संस्कृतज्ञानपि ... कान् चिकीर्षवः सम्पादक-महोदयाः । भुवि कदाचित् इतस्ततः पर्यटन्तो वहवो माननीयाः सत्पुरुषाः (हुयेन सांगप्रभृतयः) यदा विश्वजनीनं भारतं समागताः, तदा वर्णाश्रमधर्म... व्येन परमत्यागिनां विद्वद्वराणां ब्राह्मणानां नेतृत्वे संग... भारतीयसुसंस्कृतिमवलोक्य चकिताः साश्चर्यं ... "एषैव सभ्यता जगत्सु अनुकरणीयेति"; परञ्च ... बहुषु विद्वद्वरेषु द्विजेषु साप्रतं भारतीयानामहहो ... सामाजिकञ्च पतनं दृष्ट्वा दोदूयते चेतः, तत्र पा... नैतिकपतनस्य स्वराज्यमन्तरा न काऽपि अमोघा ... तदर्थं बहव आधुनिका ऋषिदेशीया नेतारः प्रयतन्ते । ... सामाजिकपतने हेतुत्वन्तु एषां धर्माचार्याणामेव ।

(तीर्थेषु) उपासना गृहेषु (देवालयेषु) गृह (विवाहादिसंस्कारेषु) केवलं ब्राह्मणकुलोद्भवा, ...त्वाच्छास्त्रदृष्ट्या अब्राह्मणाः, छद्मिनश्च ते धर्म- (गया-जगन्नाथ-प्रभृतिषु तीर्थेषु) पितृणामु- ...क्षाय च, ग्रामीणप्रजाभ्यः, असंख्यवित्तं संगृह्य ...रा-द्यूतप्रभृतिनिकृष्टकर्मसु तोयवत् प्रक्षिपन्ति, ...विदुषां सुधीः प्रस्फुरति। किन्तु येनकेनोपायेनोदरं ... प्रसुप्ता इव कालं यापयन्ति, यदाकदाचित् ...राधुनिकैर्देशभक्तैर्नेतृभिः कस्यचित् सामाजिक- ...स्य दूरीकरणाय सदुद्योगः क्रियते, यथा इदानीन्तने, ...निधिविचारालये (एसेम्बली) वालविवाह ... द्वादशवर्षवयस्का कन्या, षोडशवर्षवयस्कः विवाहार्हं इति प्रजाहितैषिभिः प्रतिनिधिभिः समुपस्थापितमस्ति, तदा गृह्यसूत्रादिधर्मग्रन्थेषु इत्थं निर्णये सत्यपि धर्मस्तम्भरूपा अहरहो मनुस्मृत्यादिषु तामसदानं विगर्हितम्, विद्याविक्रयः सर्वथा निन्द्य इति पठन्तः, पाठयन्तस्तत्कर्तुमक्षमा अपि आत्मानं धर्माचार्यं मन्यमानाः, एतच्छास्त्रमर्यादाविरुद्धं कदाऽपि न करणीय- मिति स्थाने स्थाने प्रस्तुवन्ति, एतद् महदनिष्टकरं खलु भारतीयानाम्। अतः सविनयं प्रार्थये, यत् निजपत्रद्वारा विदुषां, सामाजिकदुर्बन्धनानां वालविवाह-वृद्धविवाहा- दीनाम् तीर्थेषु पुरोहितानाम् (पण्डा) अशिक्षित ब्राह्मणद्वारा वा कर्मकाण्ड-विधानादीनां निराकरणे प्रयत- नीयम्, येन महान् देशोपकारः यात्।

भगवानदीनमिश्रः

(बहराइचवास्तव्यः)



# संस्कृत-समाचारः

विद्यावैजयन्ती।

...विदितमिदं भवादृशां यत्साम्प्रतम्प्राचीनसं- ...बन्धानां कटुकीटपटलदंशनेन वा, निलयान- ...स्खलनेन वा, पाथःपृषतपातेन वा विलोपः ...लोक्यते। क्वचन प्रकाशिता अपि ते मूल्य- ...त्, यावदभिलषितकलावैकल्याच्च न सन्तो- ...षयन्ति मानसेषु प्रणयिनाम्। अनुपपत्तिस- ...दृशीमनुसन्धाय विदूयमानमानसैः कृतिव- ...रुत्साहिता हिन्दूविश्वविद्यालयवेदान्त- ...ध्यापकाः ख्यातवैदुष्याः श्रीबालकृष्णमिश्र- ...पुरोदीरितत्रुटिविघटनाय "विद्यावैजयन्ती" ...नाया मासिकपत्रिकाया विकस्वरानुक- ...सम्पादनभारं स्वीचक्रुः। महाभाग्यमिदं यत्सुरसरस्वतीं समुन्नेतुमिमे कार्यावरुद्धसमया अपि बद्धपरिकराः समभूवन्।

अथैवमपि पत्रिकायाः प्रकाशस्तदा स्यात्, यदि भवन्तस्तत्रानुग्राहकतया ग्राहकतया वा सहायतां सहर्षं दर्शयेरन्। अस्याश्च सकललोकसौ- लभ्यार्थं रूप्यकत्रयमेव वार्षिकं मूल्यम्। मञ्जुलता- यां तु 'क्रिया केवलमुत्तरमि'ति नास्ति तस्यामिदानीं विशेषतो वक्तव्यमिति निवेदयन् विरमति—

स्थानम्—
संस्कृतसाहित्यसेवासदनम्,
हिन्दूविश्वविद्यालयः, काशी।

हरिशङ्करशास्त्री
(वेदान्तविशारदः)
रघुनाथशास्त्री
(तर्कतीर्थश्च)

२

# संस्कृतच्छात्रसङ्घस्य विशिष्टाधिवेशनम् । ❀

चैत्रशुक्लप्रतिपदि ( २२ मार्च, २८ ) स्थानीय-'टाउनहाल' नाम्नि नगरसभामण्डपे सायं चतुर्वादनतः संस्कृतच्छात्रसङ्घस्य विशिष्टाधिवेशनं प्रभूतानां संस्कृतच्छात्राणां समारम्भे सम्पन्नम् । यद्यपि सभापतेरासनं महामहोपाध्यायैः श्रीदेवीप्रसादशुक्लकविचक्रवर्तिमहोदयैः समलङ्करणीयमासीत्, तथापि विलम्बात् श्रीमन्तः श्रीदामोदरशास्त्रिणो भिषगाचार्याः, साङ्ख्य-सर्वदर्शनतीर्थ-विद्याभूषण-महोदयाः सभापतेरासनमलमकुर्वन् । ततश्च मङ्गलान्तरं छात्रसङ्घस्य प्रधानमन्त्रिणा श्रीमता केदारनाथशर्म्मणा सङ्घस्यावश्यकताविषये, उद्देश्यानां विवरणे च सुदीर्घम्, हृदयङ्गमम्, मर्मस्पृक् भाषणं प्रदत्तम् । ततश्च सभापतिमहोदयैः प्रथमोऽयं प्रस्तावः समुपस्थापितः—

१—एष खलु संस्कृतच्छात्रसङ्घः, साम्प्रतमेवाकस्मिकरोगैरकाल एव कालकवलितानां संस्कृतच्छात्राणामकालमरणे हार्दिकं शोकं प्रकटयति, तथा तेषां कुटुम्बिभिः सह समवेदनां सहानुभूतिश्च प्रदर्शयति ।

२.—एष संस्कृतच्छात्रसङ्घः, काशीस्थ-राजकीयसंस्कृतपरीक्षाधिकारिणः साग्रहमनुरुणद्धि यत् आगामिवर्षमारभ्य परीक्षायां प्रतिदिनमेकैकमेव प्रश्नपत्रं तिष्ठतु । यतः सततं सप्तघण्टापर्यन्तं लेखनम्, भिन्नभिन्नानां ग्रन्थानां युगपदेव संधारणम्, परीक्षायां हानिकारकं भवति । कुत्रापि संस्कृताँग्लहिन्दीभाषादिपरीक्षासु नास्तीदृशः कुप्रबन्धः । अन्यच्च— संस्कृतदृष्ट्या परीक्षाकालोऽपि प्रात[...] वादनतो १० वादनं यावद्भवतु, येन छात्राः [...] विशुद्धस्य स्वमस्तिष्कस्य सदुपयोगं कु[...] अन्यथा वर्तमानव्यवस्थया छात्राणां शा[...] मानसिकी च हानिर्भवति ।

प्रस्तावकः—हीरावल्लभपन्तः

समर्थकः—श्रीकेदारनाथशर्म्मा, सा[...]

३—एष छात्रसङ्घः, संस्कृत-परीक्षाधिकारि[...] मस्मिन् कृत्ये सन्तोषं प्रकटयति, यत् तैः छा[...] प्रार्थनायां ध्यानं दत्त्वा परीक्षासमये वृद्धि[...] इति । तथाताननुरुणद्धि च यत् ते साम्प्रत[...] रणादीनां विविधपरीक्षात्रुटीनामपाकरणे च द[...] धाना भवन्तु, छात्राणां कृते सर्वविधं सौल[...] सम्पादयन्तु—इति ।

प्रस्तावकः—श्रीहरिचरणशर्म्मा ।

समर्थकः—श्रीमहादेवशास्त्री, साहित्याचा[...]

४—एष संस्कृतच्छात्रसङ्घः सर्वान् सं[...] च्छात्रान् साग्रहं सानुरोधश्च प्रार्थयते, यत् ते [...] धिक—संख्यायां संस्कृतच्छात्रसङ्घस्य सद[...] भवन्तु भावयन्तु चान्यान् । सङ्घस्य प्रस्ता[...] मुद्देश्यानाञ्च सार्वत्रिकं प्रचारं विधाय संयु[...] न्तीय-संस्कृतच्छात्रसम्मेलनं सत्वरं संस्थाप[...] येन छात्राणां सङ्घशक्तिः सबला समुन्नत[...] भवेदिति ।

प्रस्तावकः—श्रीकेदारनाथशर्म्मा सारस्वत[...]

समर्थकः —श्रीलालनाथस्वामी

❦:✱:❦

---

✱ च्छात्रसङ्घस्य सर्वमपि कार्यजातं हिन्दीभाषायामभूत् । अत्र खलु तद्विवरणमनूद्य प्रकाशितम् ।—सु० सं० ।

...स्य विद्वत्समाजस्य प्रथमाधिवेशनम् :—

...चतुराशीत्यधिकैकोनविंशतिशततमे वैक्रमेऽब्दे ...ष्टाष्टम्यां बुधवासरे गढ़देशे श्रीनगरे लक्ष्मी-...नाम्नि मन्दिरेऽभूत् महता समारोहेण । तत्र ...स्योपस्थितिरधिकाऽऽसीत् । गढ़देशस्थ-...विद्वत्सु:—

...श्मरसंस्कृतपाठशालायाः प्रधानाध्यापक ...चार्याः पं० वासवानन्दशर्माणः, ऊषामठ-...पाठशालायाः प्रधानाध्यापकाः धर्मभूषण ...महिमानन्दशर्माणः, देवप्रयागसंस्कृतपाठ-...याः प्रधानाध्यापकाः कविरत्न पं० भोलदत्त-..., उत्तरकाशीकीर्तिसंस्कृतपाठशालायाः ...ध्यापकः पं० सत्येश्वरानन्दशास्त्रिणः, श्रीन-...वासिनो राजकीयशालायाः संस्कृताध्यापकाः ...रवदत्तशास्त्रिणः, अन्येऽध्यापका आङ्गल-...श्च पं० ललिताप्रसादशर्माणः पं० विश्वे-...न्दशर्माणः, पं० केदारदत्तशर्माणः, पं० ...नानन्दशर्माणः, पं० भोलादत्तभट्टशर्माणः, ...विलासशर्माणः, पं० गोपालविलासशर्माणः, ...प्रतिष्ठिता नागरिकाश्च भूयांसो विद्वांसः ...ब्राह्मणक्षत्रियादयश्चासन् ।

...पं० बालमुकुन्दशर्मणा सभापतिनिर्वाच-...नतरणिका विहिता । तत्र श्रीमतां लाला-...लालमहोदयानां सभापतित्वे समभूद्वार्षिक-मधिवेशनं विद्वत्समाजस्य । तत्र प्रथमं संस्कृत-परीक्षादित्सुभिश्छात्रैरीश्वरस्य स्तुतिर्विहिता । अन्यैः कतिपयैश्छात्रैर्विद्यादिविषयेषु प्रदत्तं भाषणं देवभाषायाम् । धर्मभूषणैः श्रीमद्भिः पं० महिमानन्द-महोदयैश्च तदाशयो हिन्दीभाषायां श्रावितश्छात्र-नियमाः सभोद्देश्याश्च निरादीकृताः । तदनन्तरं मुम्बापुरनिवासिनां सांप्रतं गुप्तकाशीस्थानमलङ्कु-र्वाणानां श्रीमतां योगिदेवशर्मणां हिन्दुजातिसंस्कृत-भाषाविषये जातं प्रभावशालि व्याख्यानम् ।

सर्वसम्मत्याऽधस्तनाः प्रस्तावाः स्वीकृताः ।

प्र० नं ( १ ) प्रतिवत्सरे गढ़वालविद्वत्परिषदो ऽधिवेशनं श्रीनगरे परीक्षासमय एव भवेत् ।

प्र० नं ( २ ) गढ़देशीयानां संस्कृतपाठशालानां निरीक्षणार्थं डिष्ट्रिक्टबोर्डसभापतिः प्रार्थनीयः ।

प्र० नं ( ३ ) यत्र शालानामतः केवलं याचनया धनमुपार्जयन्ति विद्यार्थिनश्च परीक्षायां नो प्रवेश-यन्ति, तत्र समुन्नतये संयुक्तप्रान्त ( यू० पी० ) संस्कृतपाठशालानां संस्कृताध्यक्षाः ( इन्सपेक्टर-महोदयाः ) प्रार्थनीयाः ।

अन्ते च श्रीमद्भिः पं० भैरवदत्तशास्त्रिमहोदयैः सभापतिमहोदयैश्च सर्वेभ्यः साधुवादाः धन्यवादाश्च प्रदत्ताः । एवमधिवेशनं समाप्तिमगमत् ।

३-४-२८ } निवेदकः विद्वत्समाज-मन्त्री—
बालमुकुन्द शर्मा

# सम्पादकीयम्

...मिलर-शुद्धिः ।

...साम्प्रतं सर्वत्र भारते मिसूमिलर-शुद्धिविषये ...आन्दोलनं सञ्जातमिति जानन्त्येव प्रायः सर्वेऽपि शिक्षिता भारतीयाः । एतस्मिन् विषये केचन शुद्धिपक्षपातिनो नितरां मोमुद्यमानाः, तद्विरोधिन-श्चात्यन्तं दुःखिताः सन्ति । हिन्दुसभयाऽपि तस्य

सहर्षं समर्थनं कृतमिति समाचारपत्रेषु पठितम्। वयमत्र विषये नितरां विरोधमाचरामः। नैषा शुद्धिः, शुद्धिः। यद्यपि वयं वर्तमानां समाज-दुरवस्था-मालोच्य हिन्दुसमाजच्युतानां संस्कार्याणां पतितानां शास्त्रसम्मत-प्रायश्चित्तद्वारा पुनः संशोधनम्, तेषां च पृथग्जातिनिर्म्माणं सहर्षं समर्थयामस्तथापि नैतादृशीं शास्त्रविरुद्धाम्, समाज-विरुद्धाम्, नीति-विरुद्धाञ्च शुद्धिं समर्थयामः। यद्यपि रात्रिन्दिवं वेश्या-मद्यादिजघन्यकृत्य-निरता अकर्मण्या विला-सवासनानिरता भारत-धर्म-कलङ्कभूताः केचन राजानः पाश्चात्यदेशेषु पिशाचिनीभिः पाश्चात्य-विलासिनीभिः सह विहृत्य नैकशो मुखे कालिमानं लापयन्ति, परं नैतादृशम् हदनुचितं समाज-विघातकम्, धर्मध्वंसकरं दुरभिनयं कृत्वा हिन्दुसमा-जस्य मुखे मसीलेपनं कुर्वन्ति। साम्प्रतमिमे कुकामिनो मुक्तद्वारं स्वच्छन्दं यतस्ततः कामुकीरा-दाय शुद्धियन्त्रे संशोध्य यथेच्छमत्याचारं विधा-स्यन्ति। येन वर्णसङ्करता नृपतिसमाजे पदं न्यस्य भारतीयं गौरवम्, आर्यनरपतीनां महत्त्वं सर्वमपि विनाशयिष्यति। शनैः शनैः पाश्चात्यजातीनामि व सततविशुद्धेयमार्यजातिर्नजाने किं वीभत्सरूपं धारयिष्यति। चार्वाकशिरोमणयोऽस्माकं शास-कास्त्वस्माकमेतादृशं पतनमभिलषन्त्येव। काम-वासनापूर्त्यै जघन्यमिदं कार्यं हिन्दुसमाजस्य चिरसञ्चितं गौरवं विनाशयितुमलमिति वयं सर्वदृष्ट्या शुद्धिमिमां विरोद्धव्यामाकलयामः। शुद्धिकारणाच्चेदृशं वालिशत्वमुच्छृङ्खलत्वञ्च न कदाचिदपि मर्षयितुं प्रभवामः। नैतेन हिन्दूधर्मस्य समृद्धिः सम्भवेत्; प्रत्युत विनाश एव स्यात्।

*　*　*

*विलम्ब-विनिवेदना।*

सुप्रभातस्य विशिष्टाङ्कप्रकाशने भूयान् विलम्बः समजनीति विदितमेव पाठकानाम्। तस्मिन् परि-श्रान्तैर्विश्रान्तिमभिलषद्भिरस्माभिरपि सुप्रभाता कार्येभ्यो विराम-ग्रहणं कृतमासीत्। अस्माकं मा[न्य]-प्रणयिनः श्रीमन्तो व्यवस्थापक-महोदया [अपि] ग्रीष्मावकाशे परिभ्रमणार्थं गता आसन्। [...] सुहृदः सूर्योदयसम्पादकाश्च मध्ये मध्ये वि[...] कार्यव्यापृता आसन्निति ज्येष्ठाङ्को महता वि[लम्बेन] सम्पन्नः, पाठकानां सविधे समुपसर्पतीति पा[ठकैः] ग्राहकैरनुग्राहकैश्च क्षन्तव्यम्।

*　*　*

*सम्पादकः, लेखकाश्चावदधतु।*

सुप्रभातस्य विशिष्टाङ्कः प्रायः सर्वेषां [...] सम्पादकानाम्, लेखकानाम्, विदुषाञ्च से[वायां] सादरं प्रेषितो विद्यते। कैश्चन विद्वद्भिः पत्रस[म्पा]दकैश्च तस्य समालोचनम्, तद्विषये च [स्वा]भिमतं प्रकटीकृतम्। यैश्च नाद्यावधि स्वीया स[म्मतिः] प्रकटीकृता, तै रवश्यं सत्वरञ्च स्वीयेषु पत्रेषु, [अथवा] स्वतन्त्रतयाऽस्माकं सविधे स्वीयाममूल्यां स[म्मतिं] संप्रेष्य सुप्रभातं नूनमनुगृह्णन्तु। वयं तेषां स[म्मति]मवश्यं प्रकाशयिष्यामः।

*　*　*　*

*जगद्गुरुः।*

हिन्दी भाषायां संस्कृत विदुषां संस्कृत[...]राय, सनातनधर्म-प्रचाराय च नास्ति किमपि [...] चीनपत्रमिति श्रावणीतः काशीस्थविदुषां हि[न्दी] षामयं जगद्गुरु-नामकं पत्रं प्रकाशमेष्यति। [...] 'आदर्शाङ्कः' साम्प्रतं गुरुपूर्णिमायामेव प्रका[शितो] विद्यते। एकानकस्य चिटिकां प्रेष्य ग्राहक[...] षद्भिरनभिलषद्भिर्वा तत्पत्रं गृहीत्वाऽवश्यमे[वा]लोकनीयम्। अस्य खलु जगद्गुरोर्गौरवं [...] वैचित्र्यञ्च दर्शनेनैव प्रतीतं स्यात्। वस्तु[तो] जगद्गुरुरेव। अस्य निर्भीकता, स्पष्ट[ता] सत्यता, धार्मिकता, मनोहरता चावश्यं [...] पाठकैरेकवारमेकानकेनैव दर्शनीया। अस्य [वार्षिक]मूल्यम्-मुद्रा द्वयम्। प्राप्तिस्थानम्—सुप्रभात-[कार्या]लयः, काशी।

## सुप्रभात-नियमाः ।

) सुप्रभातमिदं सौरमासस्यान्तिमे सप्ताहे
भविष्यति ।

) एतस्य वार्षिकम्मूल्यम्—समाजनियमा-
माननीयेभ्यः—१२) मुद्राः, सहायकेभ्यः—
छात्रेभ्यश्च १॥) मुद्रा—भविष्यति ।

) अग्रिममासस्य प्रथमे पक्षे यस्य ग्राहकस्य
ं न गच्छेत्, तेन नूनं पत्रालये समन्विष्य
पत्रं प्रहेयम् । तदा 'सुप्रभातं' प्रेषितं
दि ग्राहकाः पत्रं न प्रेषयिष्यन्ति, तदा
नोत्तरदायी भवेत् ।

) पत्र-प्रेषण-समये ग्राहक-सङ्ख्या नूनं

---

। अन्यथा पत्रमवलोकितमेव न स्यात् ।

---

) अग्रिम-मूल्यमन्तरा सुप्रभातं न प्रदीयते,
देशद्वारा ( मनिऑर्डर ) मूल्यं प्रेषणीयम्
सङ्केतश्च लेख्यः । वी० पी० द्वारा प्रेषणे
समधिको व्ययः स्यात् ।

) पत्रोत्तरमभिलषद्भिश्चिटिका नूनं प्रेषणी-
न्यथा पत्रोत्तरं न दीयेत ।

) लेखकैरतिसरलभाषायां लेखाः प्रेषणीयाः,
पि पठितुमवगन्तुञ्च प्रभवेयुः ।

) लेखाः पत्रस्यैकस्मिन्नेव पृष्ठे पार्श्वयोः
य, सुस्पष्टैः, सुवाच्यैः, सुन्दरैरक्षरैर्लि-
प्रेषणीयाः । अन्यथा न तेषां प्रकाशनं

) विवादग्रस्ताः, व्यक्तिगताक्षेप-पूर्णाः,
पुस्तक-रूपाः, लेखा न प्रेषणीयाः । प्राचीन-
सामयिकपुस्तकानां वा प्रकाशनं भवेत् ।

( १० ) छात्राणां लेखाः, संस्कृत-समाचाराः, विज्ञान-समाचाराः, नूतन-वार्ताः सादरं प्रकाश्येरन् ।

( ११ ) लेखानां प्रकाशने, अप्रकाशने, परावर्तने, अपरावर्तने वा सम्पादकस्यैवाधिकारः । को लेखः कदा प्रकाशितो भविष्यतीति सम्पादकाधीनमेव ।

( १२ ) सुप्रभाते सरल-सरसाः, भावपूर्णाः, अतिमनोहराः, कविताः प्रकाशिताः स्युः । साधारण-कविता-प्रेषणे लेखकैर्व्यर्थश्रमो न विधेयः ।

( १३ ) लेखाः, परिवर्तनार्थं समालोचनार्थञ्च पत्राणि, पुस्तकानि, 'सम्पादकः—सुप्रभातम्, काशी' अनेन सङ्केतेन; प्रबन्ध-विज्ञापनादि-विषयकानि पत्राणि च, 'व्यवस्थापकः—सुप्रभात-कार्यालयः, काशी' इत्यनेन सङ्केतेन प्रेषणीयानि ।

( १४ ) सुप्रभातस्य प्रचारो भारतस्य सर्वत्र प्रान्तेषु प्रचुरसङ्ख्यायां विद्यते । एतस्मिन् विज्ञापनदानेन महत्साफल्यं भवेत् । मुद्रिताः विज्ञापननियमाः कार्यालयतः पत्रं प्रेष्य, ग्रहीतव्याः ।

---

## सर्वतन्त्रसिद्धान्त पदार्थ-लक्षणसंग्रहः ।

गौरीशङ्करभिक्षुकृतः, द्वितीयावृत्तिः । मूल्यम्-।॥)

वेदवेदाङ्गदर्शनस्मृतिकाव्यादिशास्त्रीय-पदार्थानां २७०० लक्षणवर्णनात्मकग्रन्थो नाद्यावधि प्रकाशितः । उपयोगित्वविषये—

'ये सन्ति विषयाश्चास्मिन् ते न दृष्टाः, परत्र वै ।

अत्र चैव समावेश्य सर्वसिद्धान्तलक्षणम्' इति काशी-मद्रासादिस्था ८६ विद्वांसो मुक्तकण्ठमुद्घोषितवन्तः ।

मनभरीदेवी, पुट्ठी, पो० जमालपुर, जि० हिसार ।

Reg. N. 154..

## सचित्रम् सामुद्रिक रहस्यम् ।

ले०—श्रीकालिका प्रसादशर्म्मा, राजज्योतिषी,

अद्भुतमिदं ग्रन्थरत्नम्, हिन्दीटीकासहितम्, अनेकचित्रविभूषितम्, नरनारीणां शुभाशुभज्ञाने नितरामुपयुक्तम्, संस्कृते सर्वथानवीनमेव । एतेन हस्तरेखानां गुरुं विनैव सम्यक् परिचयो भवति । मूल्यम् १।) मुद्रा ।

## रतिरहस्यम् ( कोकशास्त्रम् )

एष प्राचीनो ग्रन्थः श्रीमहाकवि कोक्कोक विरचितः । अस्मिन् कामशास्त्रसम्बन्धिन्यः सर्वा वार्ताः, पद्मिनी-शङ्खिनी-चित्रिणी-हस्तिनी-प्रभृतयः स्त्रीणां भेदाः, एवं चत्वारः पुरुषभेदाः, स्त्रीणां वशीकरणस्यौषध्यः, मन्त्राः, तत्तद्देशीयानां स्त्रीणां पुरुषाणाञ्च लक्षणानि, तेषां संयोगाः, आलिङ्गन-चुम्बनादीनां भेदाः, तेषां विशेषाश्च अन्ये च बहवो ज्ञातव्याः कामशास्त्रीयाः विषयाः सन्ति । एष ग्रन्थो नितरां सुप्रसिद्धः प्राचीनश्च विद्यते । एतस्यैका प्रतिः सर्वैरपि स्वसविधे नूनं संस्थापनीया । मूल्यम्—मुद्राद्वयम् ।

## राष्ट्रभाषाभूषणम् ।

ले०—श्रीगोपाल शास्त्री, दर्शनकेशरी, साहित्याचार्यः ।

एतत् पुस्तकं हिन्दीभाषायां विद्यते । संस्कृतज्ञानां हिन्दीज्ञाने नितरामुपकारजनकम् । सर्वैरपि संस्कृतज्ञैरेतद् व्याकरणम् पठनीयम् । एतेन हिन्दी भाषायां निबन्धलेखन-अनुवादादिज्ञाने महत्सौकर्यं स्यात् । मूल्यम्—आणकाष्टकम् । मार्गव्ययः—=)

## सूर्यचरितम् वा ऋतुचरितम् ।

ले०—तारादत्तपन्तः, साहित्याचार्यः, व्याकरण-काव्य...

गोलविद्या-विषयकं नूतनं महाकाव्यम् ।

अतिसरलम्, भारतस्य विभिन्नदेशानां ... पर्वतानां ऋतूनां चात्र परिचयो कविना ... सरण्या समुपवर्णितः । गोलविषये नूतनं ... महाकाव्यम् । सर्वथा द्रष्टव्यम् । मूल्यम् ... मार्गव्ययः पृथक् ।

## गोलविद्या गोलसूत्रञ्च ।

ले०—श्रीतारादत्तपन्तः, साहित्याचार्यः, काव्य-व्याक...

संस्कृते भूगोलज्ञानस्य प्रधानं प्रथम... कम् । अत्र हिन्दी-भूगोल-पुस्तकवत् भारत... समस्तो भूगोलः सरलतया बालानां ज्ञानाय ... वर्णितोऽस्ति । संस्कृत काव्येषु नाटकेषु पुरा... केषु च समागतानां देशानां नदीनां स्थाना... तानाञ्चाधुनिकी स्थितिस्तेषां नामानि च ... सर्वथा द्रष्टव्यमिदं पुस्तकम् । मूल्यम् ।।) मा...

## महाकवि बाणभट्टः ।

लेखकः—सुप्रभात-सम्पादकः श्रीकेदारनाथ...

हिन्दीभाषायामयमपूर्वो निबन्धः । ... भट्टस्य जीवनविषये महत्वपूर्णा, मननीया ... षणा वरीवर्ति । छात्राणां कृते नितरामुप... निबन्ध-बन्धः । मूल्यम् =) मा...

सर्वेषां प्राप्तिस्थानम्

☞ मैनेजर, सुप्रभात कार्यालय, बनारस सिटी ।

Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

सौराषाढश्रावणौ, १९८५ वैक्रमाब्दः

July, August 1928.

तृतीयचतुर्थौ सङ्ख्ये
No. 3, 4.

# सुप्रभातम्

संस्कृत-साहित्य-समाजस्य मुखपत्रम् ।

...तिमुदस्यद् भेदतारा विलुम्पन्, नयदधिसुरभाषाभाषि जागर्तिमुच्चैः ।
...विहग-वादैराह्वयद् भाग्यभानुम्, विलसतु भुवनेऽस्मिन् सर्वतः 'सुप्रभातम्'

निरीक्षकः—

महामहोपाध्याय-श्रीदेवीप्रसादशुक्लः, कविचक्रवर्ती, साहित्यवारिधिः

...कः—
...शर्मा सारस्वतः

व्यवस्थापकः—
श्रीगिरीशशुक्लः, न्यायाचार्यः ।

...मूल्यम्—१)
...—१२)

छात्रेभ्यः—१॥)
वैदेशिकेभ्यः—१)

अस्याङ्कस्य मूल्यम् ।)

# लेख-सूची ।




विविध-विषय-विभूषितम्, अद्वितीयम्, सचित्रं संस्कृत-मासिक-पत्रम् ।

...वर्षे | सौर—आषाढ़ श्रावणौ । १९८५ वैक्रमाब्दाः | तृतीय-चतुर्थ संख्ये ।

## भारतीया वास्तुविद्या ।

ले०—श्रीसूर्यनारायण शास्त्री, आचार्यः ।
[ महाराजा कालेज, जयपुर ]

( विशिष्टाङ्क-लेखः )

...विद्वांसः !

...मयैतस्यां सुमहत्यां विद्वत्सभायां भारती... ...विद्यायाः प्राक्तनत्वविषये सर्वाङ्गसंपन्नत्वविषये चातिसंक्षेपेण किञ्चिन्निवेदयितुमिष्यते । प्रयागविश्वविद्यालयस्य संस्कृतमहोपाध्यायेन एम. ए., पी. एच. डी., डि. लिट्. पदविभूषितेन परिडतप्रकाण्डेन श्रीप्रसन्नकुमाराचार्यमहोदयेन भारतीयवास्तुविद्याविषये मानसारशिल्पशास्त्रानुसारमाङ्गलभाषयैको ग्रन्थो निर्मितस्तमुपजीव्यैव मयाऽप्ययं निबन्धो विरचितः । एष सुप्रसिद्धो विद्वान् स्वग्रन्थे वास्तुविद्यायास्तानि तान्यङ्गानि प्रतिपाद्यैव कृतकृत्यतां नाऽमन्यत; प्रत्युतास्या विद्यायाः सुदृढप्रमाणपरिपुष्टमितिहासं वास्तुशास्त्रव्यवहृतीनां पारिभाषिकशब्दानां कोषं चाप्युपनिबद्धवान् । एतस्य ग्रन्थस्य परिशीलनेन यथासमयं भारतभूमि-

...जयपुरविश्वविद्यालय-उपाधिवितरणमहोत्सवे पठितो ...लेखः ।

मङ्गीकृतवतां प्राचीनानां विदुषां तत्तच्छास्त्रपाण्डित्यवत् तत्तत्कलाविज्ञानवैदुष्यमपि गम्भीरतरमवधार्यं यथा समतुष्यं तथा ततोऽप्यधिकतरं चास्माकं ब्राह्मणानां संकुचितहृदयतया शिल्पशास्त्रस्य सर्वथैव विलोपमवगत्य सानुशयोऽप्यभवम् । सर्वस्मिन् वाङ्मये केवलमस्माकमेव स्वतन्त्रोऽधिकारो भवेन्नान्यस्य, विशेषतः शूद्रजातीयस्य तत्र चञ्चुमात्रप्रवेशोऽपि संभवेदिति स्वार्थदोषदूषितं नियमं धर्मस्वरूपे विपरिणमय्य शूद्राणां न केवलं वेदाध्ययनमेव निषिद्धमपि तु संस्कृतभाषामात्राध्ययनमपि वर्जितम् । भवद्भिः क्षणमवधीयतां यच्छिल्पशास्त्रं तर्कादिशास्त्रवन्न केवलं श्रवणमननादिसापेक्षमपि तु ग्रन्थतत्त्वावगमवत् प्रयोगसापेक्षमपि तत् । अस्माकं देशे तु महानयं विप्रतिषेधः समापतितो यद्ये वाक्यविन्यासदक्षा भाषातत्त्वविदो ब्राह्मणा आसँस्ते प्रयोगात्मकशिल्पोपजीवनेन स्वप्रतिष्ठाह्रासं मन्वानाः क्रियात्मकं शिल्पं नाभ्यस्तवन्तो ये च शूद्राः शिल्पमात्रमुपाजीवँस्तेषां शास्त्रस्य भाषामात्रस्यापि नाह्वानाभावः समपद्यत । ततश्च ब्राह्मणाः प्रयोगात्मकेषु विषयेषु ग्रन्थान् निर्मातुमक्षमाः सन्तो मध्यकाले केवलं काव्यग्रन्थान् बाहुल्येन व्यरचयन् । शिल्पोपजीविनः शूद्राश्च प्रत्यहमुपयोगवशात्तासां तासां कलानां नवनवानि तत्त्वान्यधिगच्छन्तोऽपि ग्रन्थरचनाचातुर्याभावान्न तान्युपनिबबन्धुः । ततश्च शिल्पसंबन्धिनां ग्रन्थानां रचनायाः सर्वथा विराम एवाभवत् ।

एवं च परिचितान्यपि तत्त्वानि लेखनिबद्धत्वाद् बाहुल्येन क्षयमेवोपगतानि । शिल्पशास्त्रप्रसारः प्रतिरुद्धः । शिल्पग्रन्थास्तु नामतोऽपि नालिख्य... अस्तु । किमिदानीमनुशोचनया । यद्यस्... शिक्षाविभागाध्यक्षमहोदयः शिक्षासचिवमहो... श्चास्यां पाठशालायां न्यायव्याकरणादिशास्त्राध्य... नव्यवस्थावच्छिल्पशास्त्राध्यापनव्यवस्थामपि कु... त्, तर्हि सुमहदुपकृतं स्याल्लोकानां शास्त्र... चापि । भवतु प्रकृतमनुसरामः ।

*मन्त्रेषु वास्त्वङ्गोल्लेखः—*

वेदमात्रप्रचारकाले तात्कालिका जना वास्... शिल्पमजानन् ते न गुहास्वेव प्रत्युत सुनिब... गृहेषु न्यवसन्निति च न केवलं मन्त्रेषु गृह-ध... पस्त्य-हर्म्यादिपर्यायमात्रप्रयोगेणावगम्यते, ... तु द्वारस्तम्भाद्युपाङ्गनामोल्लेखादप्यवधार्यते । ... थर्ववेदे गृहनिर्माणस्य निर्देशस्तु वर्तते, परन्तु त... पाङ्गादिविवरणं नितान्तमेवाल्पमस्ति । ए... संकेतितमस्ति यत्तस्मिन्काले सभान्तरे संस्थापि... चतुर्षूपमितिनाम्ना व्यवहृतेषु स्तम्भेषु प्रतिमि... नाम्ना निर्दिष्टानि काष्ठफलकानि न्यधीयन्त, तानि... तदग्रभागस्थापितैः परिमितिनाम्ना वर्णितैः ... भिर्वंशफलकैः समायोज्यन्ते । छदिश्च पलाल... रमीयत । मध्ये मध्ये चेष्टकायोजनमक्रियत । ... गृहमनेकशालासमलङ्कृतमभवत् ।

एकत्र चात्रेः शतद्वारे यन्त्रगृहेऽग्नौ संभृष्टे ... त्विति भावेनासुरैः प्रक्षेप उपवर्णितोऽस्ति, व... विषये च, स त्रिधातुशरणं निर्मातुमैच्छदिति व... मुपलभ्यते ।

एकत्र चैकः सम्राट् पाषाणादिधातुनि... सहस्रस्तम्भे प्रासादे निषसादेति विवरणं दृश्य...

वरणश्चाप्येकस्मिन् सहस्रस्तम्भे सहस्रद्वारे च ...न्यवसतामिति कथ्यते ।

...सूत्राङ्गभूतेषु सुल्वसूत्रेषु च सोमादिमहाय-...नाय वैज्ञानिकसिद्धान्तानुसारिणी वेदिरचना ...दिता दृश्यते ।

...त्तिरीयसंहितायां विविधमानानां वेदीनां ...कारः परिनिर्दिष्टो वर्त्तते । बौधायनापस्त-...म्बचितापद्धतिः स्पष्टीकृताऽस्ति ।

...वेदादिषु च ग्रामनगरदुर्गादिनिर्देशोऽप्यधि-... । मन्त्रार्थचिन्तनशीलैर्विद्वद्भिरिदं सिद्धान्तरू-...कृतं यद्वेदमन्त्रप्रचारकाले लोकाः पाषाण-...प्राकारपरिवेष्टितानां नगराणां, पाषाणबद्ध-..., उत्कीर्णप्रस्तराणां प्रयोगविषये च नाप-...ा आसन् ।

*बौद्धसाहित्येषु वास्तुसंवादः ।*

...हात्मनो बुद्धस्य समये तन्मतानुसारिषु ...स्थानेषु विहारदेशे च ग्रामरचनाप्रकारो ...ः समानरूप एवाऽऽसीत् । ग्रामेषु गृहाणां ...ः संकुचितरथ्यामात्रपृथक्कृतो व्याख्यातः । ...प्रतिगृहमेव च तत्संबद्धा वृत्तवाटिकाऽपि ...तेस्म । ग्रामेषु च सर्वत्र सार्वजनिकी धर्म-...सभामन्दिरं चाप्यभवत् । किंच तेषु रथ्यानां ...ग्रामाद्ग्रामान्तरप्रयाणपथा अपि परिष्कृता ...न्त । मध्ये मध्ये च यथास्वमुद्यानान्यप्यासन् । ...शासनव्यवस्थाक्रमो यद्यपि पूर्णो नोपलभ्यते; ...पि प्राकारपरिखादिसहिता ग्रामाः, पुराणि ...चेति शतशो वर्णनैरधिगम्यते ।

गिरिव्रजनाम्ना प्रसिद्धं शैलदुर्ग-यस्य परिधि अध्यर्द्धक्रोशद्वयात्मकोऽस्ति-महागोविन्दनाम्ना प्रसिद्धेन शिल्पिना निर्मितम् । विम्बिसारेण राज्ञा च राजगृही निर्मापिताऽभवत् । गिरिव्रजो भारतस्य विद्यमानेषु पाषाणमयवस्तुषु पुरातनतमोऽस्ति ।

किंच तेषां तेषां प्रदेशानां मापनार्थं विनियुक्तानां शिल्पिनां नामान्यप्युल्लिखितानि दृश्यन्ते, यथा—

दन्तपुरं कालिङ्गानमस्सकानां च पोतनम्
माहिस्सती अवन्तीनं सौवीरानञ्च रोरुकम् ।
मिथिला च विदेहानं चम्पा अङ्गेसु मापिता
वाराणसी च कासीनम् एते गोविन्दमापिताइ-ति ।

एकत्र महात्मना बुद्धेन स्वभिक्षुकेभ्यो निवासार्थमिमे पञ्च सुखावासा अनुज्ञाताः—विहारः, अर्द्धयोगः, प्रासादः, हर्म्यम्, गुहा चेति । एवंविधानां गृहाणां निर्माणाय यावान् कालः समपेक्षितोऽभवत् तेनैव तेषां विस्तारादिकं विज्ञातुं शक्यम् । यथाः-विहारार्थं पञ्च वा षट्, अर्द्धयोगार्थं सप्त, प्रासादार्थं दशवर्षाण्यपेक्षितान्यासन् ।

विहारादिनिर्माणार्थं भूसंग्रहोऽपि प्रौढेन विधिनाऽध्यधीयत तथा चोक्तम्-विहारो ग्रामान्नातिदूरो नचात्यासन्नः, गमनप्रत्यागमनयोर्मार्गसौकर्यवान्, ये तत्र गन्तुमिच्छन्ति, तैः सुखेन परिचेयः, यत्र दिनेऽपि नात्यन्तं जनसंमर्दो भवेद्रात्रौ च ग्रामकलकलात् सर्वथा वर्जितो भवेत् । इति

अस्त्वेतेनैतत्सिद्धं यद् बौद्धमत-प्रचार-कालेऽपि वास्तुविद्याया समीचीनं ज्ञानमासीद्भारतीयानाम् ।

रामायणेपि तत्रतत्राभ्रंलिहादिप्रासादानां, देवायतनानां, सभामण्डपानां प्रपाणामारामाणां च विस्तृतं वर्णनं दृश्यते ।

महाभारतेऽपि धर्मराजाय मयदानवे या सभा विरचिता सा सुप्रसिद्धैव ।

वायु-स्कन्द-मत्स्य-विष्णु-भागवत-पद्म-गरुड-अग्नि-ब्रह्म-शिव-नारद-मार्कण्डेय-वराह-लिङ्ग-कूर्म-ब्रह्माण्ड-ब्रह्मवैवर्त-भविष्य-पुराणेष्वपि प्रसङ्गवशान्मन्दिर-प्रासादादिनिर्माणविधिरङ्गोपाङ्गैः सहितो वर्णितः ।

किं च दक्षिणदेशे तन्त्रादिवच्छिवशक्तिसमुपासनविधिप्रतिपादनप्रधानोद्देशा आगमनाम्ना प्रसिद्धा ग्रन्थाःसन्ति, तेष्वपि सर्वाङ्गसंपन्नं वास्तुशास्त्रं दृश्यते । ते यथा—

कामिकागम-सुप्रभेदागम-योगजागम-चिन्त्यागम-करणागम-अजितागम-दीप्तागम-सूक्ष्मागमादयोऽष्टाविंशतिः ।

बृहत्संहितायां तु वराहमिहिराचार्येण सम्यक् स्पष्टीकृत एव वास्तुविषयः ।

मानसारे प्रतिपादितानां विषयाणां सूचीमात्रेणैव भवद्भिर्विज्ञायेत यत्कीदृशी परिपूर्णा तत्रैषा कला प्रतिपादितास्ति—

संग्रहः, मानोपकरणविधानम्, वास्तुभेदप्रकरणम्, शङ्कुस्थापनम्, पादविन्यासः, बलिकर्मविधानम्, ग्रामविधानम्, नगरविधानम्, भूमिलम्बविधानम्, गर्भन्यासविधानम्, उपपीठविधानम्, अधिष्ठानविधानम्, स्तम्भलक्षणम्, प्रस्तरविधानम्, संधिकर्मविधानम्, विमानविधानम्, एकभूमिविधानम्, द्विभूमिकाद् द्वादशभूमिकप्रासादविधानम्, प्राकारविधानम्, परिवारप्राकारविधानम्, गोपुरविधानम्, मण्डपविधानम्, शालाविधानम्, गृहमानस्थानविन्यासः, गृहप्रवेशविधानम्, द्वारस्थानम्, द्वारमानविधानम्, राजगृहविधानम्, ...

ङ्गलक्षणम्, भूपाललक्षणम्, रथकर्मविधानम्, ...

नविधानम्, सिंहासनलक्षणविधानम्, तोरण...

नम्, मध्यरङ्गविधानम्, कल्पवृक्षविधानम्, ...

षेकलक्षणम्, भूषणलक्षणम्, त्रिमूर्तिलक्ष...

विविधाः प्रतिमाः, मुनिप्रतिमा, भक्तप्रतिमा, ...

प्रतिमा, दशतालमानम्, मध्यमदशतालमा...

देवप्रतिष्ठाकर्म । अस्मिन्नेव विषये गन्नमाचार्य...

मयमतमिति, काश्यपस्य अंशुमद्भेद इति...

प्रसिद्धौ ग्रन्थौ स्तः । विश्वकर्मशिल्पमपरम्...

पुस्तकमस्ति ।

विस्तरभयान्नात्र मया बहवो विषयास्ते...

भ्यो ग्रन्थेभ्यः समुद्ध्रियन्ते । केवलं विदुषां...

यामिदं निवेद्यते—

शिल्पैस्तुल्यमिहास्ति नैव किमपि प्रायेण वृत्तिप्र...
तस्मात्तत्परिरक्षणाय विबुधैः कार्यः प्रयत्नो ध्रुवम् ।...
बाधा कापि महीयसीह विषये काप्यस्तिदूरं न चे...
सा नीयेत कदाचिदेव भवतां यत्नो न साफल्यभा...
ये विद्यानिधयो वसन्ति भवतां देशेऽर्थबोधक्षमा-
स्तेषामस्ति रुचिर्मनागपि तु नो शिल्पे प्रयोगात्म...
येषामस्ति च जीवनं बहुविधैः शिल्पैः प्रयोगात्मकै-
स्तेषां पाठनमेव हन्त ! भवतां देशे निषिद्धं विरा...

तस्माद् यदि तत्रभवद्भिः शिल्पोपजीविनां कुम्भकार-रथकारप्रभृतीनां शूद्राणां पठन-... सर्वथा नैव प्रवर्तनीये तर्हि शिल्पकलाप्रतिपाद... तेषां तेषां पुरातनानां ग्रन्थानामभ्यासं कृत्वा त... तिपादितशिल्पप्रयोगप्रदर्शनाय स्वयं कार्या... समारब्धव्यम् । अथ चेद्भवतां तत्र गौरव-... हानिवशात्संकोच आलस्यम्, औदासीन्यं वा... शास्त्रेषु, शिल्पिषु, देशे, समाजे व दयां...

…पजीविनीर्जातीरपि संस्कृतभाषां संपाठ्य …भाषोपनिबद्धेषु ग्रन्थेषु व्याख्याताः कलाः …। येन तासां प्रयोगो भवेत् । प्रयोगेण …र्ज्ञानं भवेत् । याथार्थ्यज्ञानेन प्रचारो भवे- …चारेण परिरक्षणं परिवृद्धिश्च भवेत् । प्रयो- …स्य शिल्पस्य ज्ञानं तस्य पुरुषस्य, यः प्रयोग- …स्य व्यवहारं न करोति सर्वथा निष्फलम् । …वलं प्रयोगरूपेण शिल्पं व्यवहरति, न तु त- …सिद्धान्तमुपपत्तिश्च वेत्ति तस्यापि तज्ज्ञानं …विरहितं, स्वाविष्कृतनवतत्त्वसंरक्षणपरिव- …र्तनं च ।

…ध्यायादिकं यद्वत् पाठशालासु पाठ्यते ।
…शास्त्रमिदं तद्वत् पाठनीयं प्रयत्नतः ॥

शुभम् ॥



# गृहागमनम् ।

( अ०—बहादुरचन्द्र गुप्तः, शास्त्री )



(…रवीन्द्रकृताया एकतमस्याः कथाया अनुवादः )
[ विशिष्टाङ्कलेखः ]



…टिकचक्रवर्ती ग्रामस्य माणवकेष्वधिनायक आसीत् । एकदा तस्य मनसि कश्चिन्नवीनमेवोपद्रवमुद्भावयितुं विचार आविर्बभूव । नदीकच्छोपकण्ठे नावः …कायैको महान् दारुखण्डः पतितस्तस्थौ । स …त्थं विचारयाञ्चकार, यत्, सर्वेऽपि बाला युग- …त् दारुभित्तमुत्तोल्य दूरमपवाहयितुं प्रयतेरन् । येन तस्य दारुणः स्वामी कुपितश्चकितश्च स्यात्, तच्च तेषां कृते समीचीनो विनोदः स्याद् इति । अथ प्रत्येकं तस्येमं प्रस्तावमनुमोदयामास । तदित्थं सर्वसम्मतया प्रस्तावः संपेदे ।

परन्तु समारभ्यमाण एव विनोदे फटिकस्य कनीयान् भ्राता मक्खनो वाचंयमः परिश्रमन् पश्यतामेव तेषां सर्वेषां तस्मिन् काष्ठभित्ते निषसाद । अथ माणवका मुहूर्त्तं किंकर्तव्यविमूढा बभूवुः । अनन्तरमेकतमस्तेषां कातरभावेन तं नुनोद; व्युत्थातुञ्च व्यादिदेश । किन्तु मक्खन एकान्तं मुक्तसङ्गोऽवतस्थे । सहि क्रीडानां वैयर्थ्यं तर्कयन् बालतार्किक इव ललक्षे । तदालोक्य स्फटिको भृशं चुक्रोध, चुक्रोश च—'मक्खन ! एष उज्जासयामि ते सद्यश्चेन्नोत्तिष्ठसि' इति

मक्खनस्तु केवलं भूयोऽपि सुखावस्थितये किञ्चित्ससर्प ।

सम्प्रति, स्फटिकेन जनताभिमुखं यदि स्वकीयो नायकोचितः प्रभावः स्थापनीयोऽभविष्यत्तर्हि नूनं स स्विकां तर्जनां कार्ये पर्यणमयिष्यदिति विशदमासीत् । किन्तु प्राप्ते विषमावसरे तस्योत्साहो भङ्गमापेदे । तथापि प्रतिभाशालिनि तस्य मस्तिष्के सहसा काचिदभिनवा युक्तिरुन्मिमेष; या तस्य कनीयांसं पराभवितुमनुचरांश्च बहुतरं रञ्जयितुमलंभविष्णुरासीत् । अथ स मक्खनसमेतमेव दारुखण्डं परिवर्तयितुं शशास । मक्खनः शासनं शुश्राव, तत्रोपश्लेषणमेव चात्मगौरवं मेने । किन्तु विषयान्तरेषु लौकिकीं कीर्तिमभीप्सुभिस्तुल्यं स तत उद्भविष्यन्तीमापत्तिमुपेक्षांचक्रे ।

अथ माणवकास्तं काष्ठखण्डमपसारयितुं विचक्रमुः, पूर्णं बलमादधुः, चुक्रुशुश्च—'एकम्, द्वे, त्रीणि, याहि !' याहि शब्दोच्चारणसमकालमेव काष्ठखण्डो ययौ ; सममेव च मक्खनस्य तर्को गरिमा सर्वस्वञ्च ययुः ।

अथेतरे बाला हर्षातिरेकेण तुमुलं शब्दायांचक्रिरे, किन्तु स्फटिकः किञ्चिद्बिभयांचकार । स हि विदांचकार किमापिपतिषतीति । नासौ मिथ्याऽनुममौ, मक्खनो हि पुरुषभाग्यवदन्धः सन् मूर्तिमान् संरम्भ इव संह्लादमानः पृथिवीमातुरङ्का दुत्तस्थौ, श्येनपातं च स्फटिके पपात, तस्य मुखं संततक्ष, तमाजघान, तं पदाजघान च, ततश्च क्रन्दन् गृहं जगाम । इत्थं नाटकस्य प्रथमोऽङ्कः समाप्तिं जगाम ।

अथ फटिकः स्वमुखं प्रोञ्छाञ्चकार, नदीतीरोपकण्ठं सन्नार्धभागाया एकस्या नौकायाः कूलमध्यासीनश्च तृणाग्रं कर्तितुमारेभे । अत्रान्तरे काचिदितश्च तरणिस्तटमभिजगाम, एकः पक्कवयाः पलितमुण्डोऽसितश्मश्रुः पुरुषश्च तटमुपावततार । स तं तथाऽऽसीनमकिञ्चित्कुर्वाणं माणवकं वीक्षाञ्चक्रे परिपप्रच्छच–' ननु भोः ! चक्रवर्तिनः कुत्र वसन्ति ? ' इति । स्फटिकस्तृणं कृन्तन्नेव बभाषे–' तत्र वै ' इति, परं ' स कां दिशमभिसङ्केतयाञ्चकार ' इति निर्देष्टुमलंभवस्नासीत् । आगन्तुकस्तं पुनः पप्रच्छ । स स्वे जानुनी नावः पार्श्वे परिधुन्वन् व्याजहार– ' गत्वा गवेषय भोः ! ' इति दर्भशूकनिकर्तनञ्च यथापूर्वमनुबबन्ध ।

किन्तु तस्मिन्नेव मुहूर्ते, गृहादेकः सेवकः समाजगाम स्फटिकमाचचक्षे च–'माता त्वामाकारयति' इति । स्फटिकश्चलितुं विप्रतिपेदे । परन्त्वस्मिन्नवसरे सेवकः स्वामी बभूव । असौ प्रसह्य स्फटिकमुज्जग्राह, मोघसंरम्भेन पादौ विक्षिपन्तं विचेष्टमानञ्च तं गृहं चकर्ष ।

यदा स्फटिको गृहं विवेश, तस्य माता तं ददर्श, सकोपं चुक्रोश च–' आः ! पुनरपि मक्खनमाहंस्येव ? '

स्फटिकः सरोषावेशमाचष्ट–' नैवम्, नाहमाहतवान् , कस्त्वामाख्यद् यदाहतं मयेति ? ' इति

तदम्बा जुघोष—' माऽनृतं वादीः ! आहतं त्वया । ' इति

स्फटिकः ससंभ्रमं बभाषे—' ननु ब्रवीमि, नाहतं मया । मक्खनं पृच्छ ' इति किन्तु मक्खनः ' प्राक्तने कथने दृढेन भाव्यम् ' इत्येव साधिष्ठं मेने । ततः स व्याजहार—' आम् मातः ! स्फटिक आवधीन्माम् ' इति

स्फटिकस्य धैर्यं सद्यश्चिक्षाय । न स एतमन्यायं मर्षयितुं शशाक । स मक्खनमभिदुद्राव ' गृहाणेदम्, इदञ्च, इदञ्च मिथ्याभाषणाय ' इत्येवङ्कारञ्च संह्लादमानस्तस्मिन् मुष्टिवृष्टिं ववर्ष

तस्य माता तत्क्षणं मक्खनस्य पक्षं जग्राह, तुल्यबलाँश्च मुष्ट्याघातान् प्रत्यर्पयन्ती मक्खनं दूरमपवाहयांचकार । स्फटिकस्तामेकतो विचिक्षेप । सोच्चकैश्चक्रन्द—' आः पाप ! दुरात्मन् !! जननीं स्वित् ताडयितुं धृष्णोषि ? '

अस्मिन्नेव विषमे क्षणे स पलितमुण्ड आगन्तुक स्थे । स जिज्ञासांचक्रे 'किंजातम्' इति । स्फटिकः जिह्रयांचकार च । अथ यावत् तस्य माता किञ्चित् आगन्तुकञ्च वीक्षाञ्चक्रे, तदा तस्याः कोपो विस्मणनाम । सा हि स्वीयं भ्रातरमभिजज्ञे । ततश्च साऽभि 'अये ! कुतस्त्वमायातः ?' इति

तथाऽभिभाषमाणा सा, आभूमेः प्रणिपपात पादौ च पस्पर्श, तस्या भ्राता विश्वम्भरः स्वसुः परि रमेव विप्रकृष्टकं गतवान् आसीत्, मुम्बापुर्यां च आरब्धवानासीत् । प्रवसत एव तस्य सा पत्या वियु सम्प्रति विश्वम्भरः कलिकातां प्रतिनिवृत्त आसीत्, भगिन्या उदन्तं विजिज्ञासमानोऽवात्सीत् । यावत् 'क्वास्ते सा' इति तावत्स तां दर्शकस्तत्वरे ।

अथोत्तराः कतिपये दिवसा आमोदपूर्णा भ्राता पप्रच्छ—'कथङ्कारं कुमारयुगलस्य परिपो तांति । तद्भगिनी प्रत्यूचे–स्फटिकस्तु शाश्वती वेद स हि तन्द्रालुः, अनाश्रवः, किरातश्च अस्ति । पुनः कनकवत्कमनीयः, छगलक इव प्रश्रितः, सुत प्रियश्चास्ति ।' इति । विश्वम्भरः सदयं शशंस– स्फटिक इतो मया सार्धं गच्छेत् कलिकातायाञ्च महा शिक्षां गृह्णीत' इति तच्च विधवा माता झटित्यनुमेने । कस्य मुदो न मम्नुः, यदा तं मातुलः पप्रच्छ—'अपि षसि मया सह कलिकाताम्' इति । स आचचक्षे मातुल !' तस्य वाचा स्फुटं प्रतीये–सगन्तुमभीप्सति ।

स्फटिकादतिमुक्तिं माता परां निर्वृतिं मेने । सा मत्सरमादधे, द्वयोः सोदरयोश्च प्रीतिश्चिक्षाय । सा विभयाम्बभूव-मास्म स्फटिको जातुचिन्मक्खनं न यत्, शिरो वा तस्य कदाचिद्विग्रहे भञ्जयत्, कामपि तं नैषीदिति । सममेव च सा स्फटिकस्य गृहो तीव्रामुत्कण्ठां निध्याय किञ्चिदाकुलीबभूव ।

यदा सर्वं निश्चिक्ये ततःप्रभृति स्फटिकः प्रति संपृच्छमान आसाञ्चक्रे 'कदा प्रस्थास्यावहे ?' इति । वसं स औत्सुक्यात्कण्टकानिवाधिशिश्ये, सकलां प्रायो जाग्रदेव निनाय । मत्स्यवेधनं, विपुलं पत

ति निखिलां स्विकां सम्पत्तिं स मक्खनं प्रति कालाय वितताार । यत्सत्यं प्रस्थानकाले मक्खनं दौदार्यं सीमानमतिचक्राम ।

यदा तौ कलिकातामासेदतुः, स्फटिकः प्रथमं वारं मिमेल । निजकुटुम्बेनैतमनावश्यकं योगं विभाव्य प्रसाद, अन्यतरं कमप्यनादायैव स्वकीयस्यैवाप-पोषणं तस्यै सुपर्याप्तमासीत् । तस्य च ग्राम्यस्य स्य माणवकस्य तेषां मध्य आनयनं नितरा व । अस्य अविवेकस्याऽऽचरणात्प्रागेव विश्वम्भ-चिन्तनीयमासीत् ।

( क्रमशः )

## मीय-न्यायदर्शनालोचनम् ।

[ —श्रीसीताराम शास्त्री, विद्यामार्तण्डः ] ।

विचार्यते यदिदं गौतमीयं न्यायदर्शनं वज्जगदवलम्बनवस्तुविवेचनपरमुतैकदेशि वस्तु विवेचनं विद्या-विशेष एवेति ।

नान्निश्चिनुमो यदिदं कस्मिश्चिदेकस्मि-विवदमानयोर्द्वयोर्वादिप्रतिवादिनोरेकक्षेन्द्र-अपूर्वेयं विद्येति, नतु निखिलजग-प्रबोधन-परा काचित्परमा विद्येति ।

स्व-प्रतिपाद्य-प्रमाणादिपदार्थतत्त्वज्ञानेन धिगम उक्त आचार्येण, तदपि अस्य स्त्रान्तरोपोद्बलकत्वेन, न तु स्वातन्त्र्य-यम्' यतः प्रमाण-प्रमेय-संशय-प्रयो-सिद्धान्तावयव-तर्क-निर्णय-वाद-जल्प-हेत्वाभासच्छल-जाति-निग्रहस्थानानि-इति यावन्तोऽपि पदार्था उद्दिष्टास्तत्र नैकोऽप्येतादृशः पदार्थो निर्दिष्टो येन जगन्निर्माणे काचिद्बुद्धिर्जन्येत, यथा सांख्ये—

'प्रकृतिः, महान्, अहंकारः, मनः, पञ्चज्ञाने-न्द्रियाणि, पञ्चकर्मेन्द्रियाणि, पञ्च-शब्द-स्पर्श-रूप-रस-गन्धाः, पृथिव्यादीनि भूतानि, पुरुषश्चेति पञ्च-विंशतिस्तत्वानि' इत्युक्त्यैव प्रतीयते—एवं संभ-वति जगदुत्पत्तिः, अवश्यं चैतत्तत्त्वज्ञानेन भवेत्कै-वल्यमिति ।

यथावा, वैशेषिके— 'द्रव्य—गुण-कर्म—सामा-न्य—विशेष—समवायाभावाः सप्तपदार्थाः' इति कथनेनैवावगम्यते एतावती जगदुत्पत्तिसामग्री, भविष्यत्येव साकल्येनैतत्पदार्थज्ञाने निःश्रेयसमिति । येन हि दुर्गप्रवेशमार्गो विदितो नूनं तेन निर्गम मार्गोऽपि विदित इति । प्रवेशनिर्गममार्गयोर्गृहा-दिषु समानत्वस्य दर्शनात् । नह्युदाहृतयोः शास्त्र-योः प्रविशतां प्रथममेव प्रमाणजिज्ञासा समुत्तिष्ठते ।

किञ्च, भवेदपि प्रमाणप्रमेयादिद्वित्रपदार्थ-ज्ञानस्य कथंचिन्निःश्रेयसाधिगमे उपयोगो जल्प-वितण्डा-हेत्वाभासच्छलजातिनिग्रहस्थानानां बहूनां पराजयहेतूनां न गुरुशिष्य-प्रयोजने संवादे किञ्चित्प्रयोजनं—कः कस्य निग्रहं कुर्यात्; पराज यं वा गुरुर्वा शिष्यस्य गलग्रहं कुर्याच्छरणागतस्य, उत शिष्यः सदुपदेशदक्षिणां तथा कुर्याद्गुरोः । नहि पुराणेतिहासादिषु-जिज्ञासाकथायामेतादृगुदा-हरणं क्वापि लभ्यते ।

यः खलु निःश्रेयसार्थी भवति न तस्य गुरोः सन्निधौ छलजात्यादिना तादृशं साध्यं साध्यता-

मियात्, प्रत्युत; शान्तो दान्त उपरतस्तितिक्षुः समाहितमना एव भक्तिभावनम्रः परित्यक्त-कौटिल्यादिपरिपन्थिभावो लब्धुमर्हति तत्त्वज्ञानं गुरुमुपाश्रितः। यथोक्तं वेदान्तसारे—

"प्रशान्तचित्ताय जितेन्द्रियाय
प्रक्षीणदोषाय यथोक्तकारिणे ।
गुणान्वितायानुगताय सर्वदा
प्रदेयमेतत्सकलं मुमुक्षवे ॥" इति

तथाच तत्रैव—

"अयमधिकारी जननमरणादिसंसारानल-संतप्तो दीप्तशिरा जलराशिमिवोपहारपाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपसृत्य तमनुसरति। तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमित्यादिश्रुतिः। स गुरुः परमकृपया अध्यारोपापवादन्यायेनैनमुपदिशति।

"तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय येनाक्षरं पुरुषं वेदसत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" इत्यादि श्रुतेरिति।

श्रीमद्भगवद्गीता चात्र भवति—

इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति" इति।

बहून्येवैतादृशानि शास्त्रेषु वाक्यानि उपलभ्यन्त किमतिविस्तरेण।

इदमुक्तं निःश्रेयसाधिगममुपलक्ष्य, अपरं तूच्यते सूत्रोक्त-पदार्थानां परस्परं संप्लवनमुद्देश्यानुद्देशनं चालोच्य तत्र मिथः संप्लवनं यथा तावत्प्रमाणानि प्रत्यक्षादीनि उत्तरस्मिन्प्रमेयेऽथ संमिलन्ति। इन्द्रियाणि हि प्रत्यक्षप्रमाणानि तानि इन्द्रिये प्रमेये, ...ध्यामिज्ञान-सादृश्यज्ञान-पदज्ञानरूपाणि चा... नादीनि बुद्ध्यात्मके प्रमेये समानरूपत एव... शन्ति। तान्येव च सर्वाणि प्रथममेव प्रमाण... मभिसंप्लवन्ते।

अहो प्रमाण-प्रमेययोरैक्ये लक्ष्य-शरयो... भिन्नयोः साफल्यं तत्र भगवत आचार्ये... इदं च भवति-उद्देश्यानुद्देशनमनुद्देश्यानां चो... इति। यद्यं प्रमाण प्रमेयाख्ये द्वे विधे-... प्रमाता प्रमाचेति द्वे परित्यजति। प्रमाण... न्तर्गतान् बहु-संशयादींश्चोपादत्ते-इति। त... प्रमातुरुपयोज्यानि प्रमाणादीनि कथमपि प्रमा... मन्तरा सफलीभवितुमर्हन्ति। यदस्ति च प्र... विद्यते च प्रमेयं जायते च तयोः संबन्ध... यदि न प्रमा नाम किञ्चित्किंतेन तेन स्यात्।

यद्युच्यते प्रमेयगणे बुद्धिरुद्दिष्टा, तथा... प्रमेयेण प्रमास्थानं पूर्यते भेदात्। उचितं तु... प्रमेययोः पृथक् स्थानम्।

किञ्च, पृथिव्यादीनि महाभूतानि सर्वतन्त्र-... न्तविषयतामुपगतान्यपि न क्वापि षोडशसु... र्थेषु मध्येऽन्तर्भवन्ति, न प्रमाणे न प्रमेये इति म... त्रुटिः प्रधानोद्देशे। अपरं च तस्मान्नेयं विद्या... चीनक्रमोद्देशा, नापि शास्त्रान्तरवत्स्वान्येण... यसाधिगमे हेतुतां नितरामेव व्रजति।

भाष्यकारोऽप्यस्या लौकिकविद्यात्वमेव... न्येन स्वीकरोति यथा—"इमास्तु चतस्रो वि... (त्रयीवार्ता दण्डनीतिरान्वीक्षिकी चेति) पृ... प्रस्थानाः प्राणभृतामनुग्रहायोपदिश्यन्ते... चतुर्थीयमान्वीक्षिकी न्यायविद्या, तस्याः ... प्रस्थानाः संशयादयः पदार्थाः, तेषां पृथक् व...

...ध्यात्मविद्यामात्रमियं स्याद्‌ यथोपनिषदः"

...—प्रमेयसूत्रभाष्ये—आत्मादिद्वादशविधं व्याख्याय अन्ते "अस्त्यन्यदपि द्रव्यगुण ...मान्यविशेष समवायाः प्रमेयं तद्भेदेनचापरि ...। अस्य तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञाना ...इत्यत एतदुपदिष्टं विशेषेणेति" इति स्पष्ट- ...प्रमेयगणनाया अपूर्णत्वमिति । तस्मादस्य ...प्रथमोद्देशसूत्रस्थपदार्थसामर्थ्याल्लौकिकत्व- ...प्राधान्येनेति निश्चयः ।

---

## ज्ञान-भैषज्य-मञ्जरी ।

महाकवि श्रीगुमानी-प्रणीता ।

...सम्पादकः—श्रीतारादत्तपन्तः, साहित्याचार्यः ।

### मङ्गलम्—

...पतिर्जानक्याः शिवम्प्रयच्छन्‌ भवाभिभूतेभ्यः ॥
...न्वन्तरिरिव साक्षाद्‌ वितरन्नगदं गदार्तेभ्यः ॥ १ ॥

...तज्वरे च—

...र्विभाव्यमाना विधुनोति श्रद्धयान्विता मोहम्‌ ॥
...ज्वरमिव शुण्ठी कथिता मधुधारयोपेता ॥ २ ॥

...पित्तज्वरे च—

...विवेक एकः प्रकृष्ट-भवतापवारणः प्रथितः ॥
...ज्वरापहारी केवल इव पर्पटक्काथः ॥ ३ ॥

...दुःखे कफज्वरे च—

...ति शमः समेतः सन्तुष्ट्यां सन्ततं भवक्लेशम्‌ ॥
...कः कलिद्रुमोत्थः कफज्वरं सोपकुल्य इव ॥ ४ ॥

तापत्रये त्रिदोषज्वरे च—

विद्या विरक्तियुक्ता त्रितापतापं क्षणादपाकुरुते ॥
अमृताऽन्विता बृहत्या ज्वरमिव दोषत्रयोद्भूतम्‌ ॥ ५ ॥

संसृतौ विषमज्वरे च—

उपरतिरलङ्कगर्भा यदि हि समुत्सारयेन्न संसारम्‌ ॥
विषमज्वरं न जरयेत्तर्हि शिवा क्षौद्रसम्पन्ना ॥ ६ ॥

हृदयग्रन्थौ जीर्णज्वरे च—

न महावाक्यपदार्थज्ञानादन्यच्छिनत्ति हृद्ग्रन्थिम्‌ ॥
न च गोपयोजफेनादपरं जीर्णज्वरं हन्ति ॥ ७ ॥

संसार-प्रवाहे अतिसारे च—

तत्त्वं यदैक्यभानं भवप्रवाहान्‌ बहून्निवारयति ॥
कुटजेन्द्रजाम्बुपानं यद्वद्‌ विविधानतीसारान्‌ ॥ ८ ॥

ममत्वे अर्शरोगे च—

ज्ञानं सशान्ति-धैर्यं ममत्वमपहन्त्यदो न यदि सत्यम्‌ ॥
हन्त्यर्शः ससिताघनमग्निशिखं नेदमपि सत्यम्‌ ॥ ९ ॥

अविद्यायां संग्रहण्यां च—

श्रवणेन यात्यविद्या मननिदिध्यासनाऽनुपातेन ॥
अपि च कपित्थमहौषधयुतेन तक्रेण संग्रहणी ॥ १० ॥

आत्मबोधे अजीर्णे च—

कथमौपनिषदशास्त्रं वितनोत्यात्मप्रबोधमनधीतम्‌ ॥
कथमुदराग्न्युदयं तत्‌ करोत्यभुक्तं त्रिकटुचूर्णम्‌ ॥ ११ ॥

दुरितक्षये कृमिरोगे च—

स्मृतिरेव राघवीया दुर्धरदुरितोच्चयक्षपणयोग्या ॥
कृमिजालपातनार्हा यवानिका पारसीकैव ॥ १२ ॥

भवकृच्छ्रे रक्तपित्ते च—

कृपया सह रघुतिलक,—प्रसाद उच्चैर्भिनत्ति भवकृच्छ्रम्‌ ॥
स च हन्ति रक्तपित्तं सितया सह वासकस्वरसः ॥ १३ ॥

संसारे क्षये च—

इह योगधारणाभिः पञ्चभिरुच्छेदमेति संसारः ॥
क्षय इह सितोपलात्वक्‌-क्षीरीकृष्णात्वगेलाभिः ॥ १४ ॥

**संसृतिचक्रे नासारुधिरप्रवाहे च—**

रघुवर्यसौमनस्यात् संसृतिचक्रप्रवृत्तिरिह न स्यात् ।
दाडिम-केसर-नस्यात् नासारुधिरस्रुतिर्न स्यात् ॥ १९ ॥

**संसारे कासरोगे च—**

लघु भृष्टधीविचारो न तथा सद्यतिश्छिनत्ति संसारम् ॥
लघुभृष्टकण्टकारी-स्वरसः सकणो यथा कासम् ॥ १६ ॥

**अहम्मतौ छिकायाञ्च—**

अद्वयतत्त्वाकलना-दहंमतिच्छेदि साधनं नान्यत् ॥
सैन्धवजलान्न चान्याच्छिक्काधिक्कारदं नस्यम् ॥ १७ ॥

**अर्थसन्देहे श्वासेच—**

सामर्ग्यजुः समुत्थे सारे विदिते कुतोऽर्थसन्देहः ।
मासनिशोषणजाते धूपे पीते कुतः श्वासः ॥ १८ ॥

**दुर्दमपापे स्वरभेदे च—**

श्रीरामनाम्नि कण्ठ-स्थिते सपाप्मा सुदुर्दमः क इव ।
क इव दृढस्वरभेदः पुष्करमूले मुखान्तःस्थे ॥ १९ ॥

**मिथ्यादृष्टौ अरुचौ च—**

रामार्चनात्सहार्दान्मिथ्यादृष्टिर्विलीयते यादृक् ।
अरुचिर्नश्यति तादृक् समक्षिकादार्द्रकस्वरसात् ॥ २० ॥

**अहङ्कृतौ छर्दिरोगे च—**

आत्मज्ञानादपरं किमहङ्कृतिनिकृन्तनं बृहत्करणम् ।
चाम्पेयाच्च किमन्यच्छर्दिगदोन्मर्दि भैषज्यम् ॥ २१ ॥

**भ्रमे अपस्मारे च—**

न मृषा यद् गुरुवाक्यं प्रज्ञायते सावधारणं भ्रमजित् ।
सत्यं च यत्सतैलं लशुनमपस्मार-विध्वंसि ॥ २२ ॥

**भवतृष्णायां कामलायां च—**

ध्याते रघुपतिरूपे भवमृगतृष्णाक्षयस्तु किं वस्तु ।
नागरपयसि च पीते किं चित्रं कामला नश्येत् ॥ २३ ॥

**भवदोषे आमवाते च—**

अद्भुतमिदं यदेका, बुद्धिर्विमला लुनाति भवदोषम् ।
चित्रमिदं पुनरेका, यदामवातं हरति शुण्ठी ॥ २४ ॥

**क्लेशभये वातरक्ते च—**

सस्नेहमार्यसङ्गं क्लेशभयार्त्ता भजन्तु सौख्याय ।
गुग्गुलकषायकन्तु क्षौद्रयुतं वातरक्तार्ताः ॥ २५ ॥

**जन्मग्रहणे शूलरोगे च—**

जन्मी भजेत्सदाढर्यं विरागविज्ञानभावनाभ्यासम् ।
शूली तु सोष्णनीरं वलिटङ्कणशुण्ठिकाक्षोदम् ॥ २

**विषयरसे उदावर्ते च—**

शान्तिर्क्षान्तिसमेता विषयरसं किं न सन्निवारयति ।
त्रिवृता सितान्विता किं नोदावर्तं निवारयति ॥ २

**दुष्कृतदुःखे मूत्रकृच्छ्रे च—**

आहोदुष्कृतदुःखात् धर्म्मः सन्त्रायते दयोपेतः ।
द्रुतमूत्रकृच्छ्रकृच्छ्रात् द्राक्षा ससिता यवक्षारः ॥ २

**प्रमाददोषे प्रमेहे च—**

सारः श्रुतेः सबीजो निषेवणीयः प्रमाददोषघ्नः ।
स्वरसोऽथवा गुडूच्याः समधुर्मेहामयध्वंसी ॥ २९

**शोके शोथे च—**

अनुचितमिदं शमाढ्यो हा सन्तोषो न शोकनाशक
इदमप्यनर्हमार्द्रकरसो गुडाढ्यो न शोथहरः ॥ ३

**भवक्लेशे व्रणरोगे च —**

गुरुशास्त्रजोपदेशः समर्हणीयः सदा भवक्लिष्टैः ।
व्रणिभिस्तु माननीयो गुग्गुलनिम्बोद्भवो लेपः ॥ ३

**पापे अम्लपित्ते च—**

नभियं समेति पङ्कात् प्रणिधानब्रह्मचर्ययुक्तात्मा ।
न विभेति चाम्लपित्तात् सैन्धवसर्पिर्निघृष्टात्मा ॥ ३

**हृदयसंशये उपदंशे च—**

हृत्संशयो न शाम्यति साधुभवं शास्त्रजं बोधम् ।
उपदंशोऽपि विना सौ सगुग्गलं त्रैफलं क्वाथम् ॥ ३

**जाड्यदोषे कुष्ठरोगे च—**

जाड्यवतां सनिदानो बोधस्त्रैविद्य एव समभीष्टः ।
कुष्ठवतां मधुजुष्टः क्वाथो माञ्जिष्ठ एवेष्टः ॥ ३४ ॥

...नखे च—

...णो बुधबोधनसंस्कृतवृत्तो न कः सुवृत्तः स्यात् ।
...सृङ्कणचूर्णस्थगितनखः को न सुनखः स्यात् ॥३५॥

...ये तारुण्यपिटके च—

...क्षो यमनियमप्रभवः क्षेमो विकर्मदोषाणाम् ।
...सर्षपलोध्रकलेप स्तारुण्यपिटकानाम् ॥ ३६ ॥

... विपादिकायाश्च—

...चान्द्रायणकृच्छ्रव्रतैः प्रयोगान्न पापिता यस्य ।
...घृतसिक्थकगैरिक-लेपान्न विपादिका यस्य ॥ ३७ ॥

...ढ्ये इन्द्रलुप्तेच—

...शास्त्रमौढ्यं धीशुचिभावो न निर्धुनोतीति ।
...यदीन्द्रलुप्तं गुञ्जालेपो न हन्तीति ॥ ३८ ॥

...दे अरूषिकायाश्च—

...शास्त्रसमघकोट्यामतिशोधनपुण्यकर्मनष्टायाः ।
...श्चमरूपिकाया महिषीदधिविल्वतष्टायाः ॥ ३९ ॥

...ण्डूरोगेच—

...ति सम्भारवियुक्तं न राघवीयार्हणं किमूतिघ्नम् ।
...रक-विरहितमपि किं सर्षपतैलं न कण्डूघ्नम् ॥ ४० ॥

...ये चर्मकीलरोगे च—

...क्ष्ययति गुरुतोषो न जाड्यदोषं हिनस्तीति ।
...वकि तुत्थलेपो न चर्मकीलं छिनत्तीति ॥ ४१ ॥

...स्तकरोगे च—

...स्थैर्यविवेचनविभाविते चेतसि शुक्रा ।
...समहौषधकाञ्जिकलिप्ते शिरसि स्थिता रुक्रा ॥४२॥

...योः सूर्यावर्तर्द्धिभेदे च—

...धैर्यक्षमयोः कामः क्रोधश्च गच्छति प्रलयम् ।
...नात् कुङ्कुमसितयोः सूर्यावर्तर्द्धिभेदश्च ॥ ४३ ॥

...नेत्ररोगे च—

...सेवोदिता गुणाढ्या विद्यामेकां पलायते कुमतिः ।
...र्जितां जलार्द्रां कस्तूरीं दृग्व्यथा द्रवति ॥४४॥

दुर्मतौ नक्तान्ध्ये च—

दौर्मत्यविपिनभेदि श्रेष्ठवचःशास्त्रधारणकुठारम् ।
नक्तान्ध्यविपिनभेदि श्रुतिमलमरिचाञ्जनकवचम् ॥ ४५ ॥

दुःखे नेत्रपुष्पे च—

विहिते हृदि रघुनाथे न दुःखनाशः क्षणेन तदसत्यम् ।
निहितेऽक्षिण सिन्धुफेने न पुष्पनाशस्तदप्यनृतम् ॥४६॥

प्रज्ञामान्द्ये बाधिर्य्ये च—

रघुरत्नवाचि नाम प्रज्ञामान्द्ये स्मृतः परोपायः ।
अपि बिल्वपाचितैलं श्रुतिबाधिर्ये महोपायः ॥ ४७ ॥

हृद्यमृगतृष्णायां कर्णरोगे च—

सगुणसुजनकुलसङ्गो हृन्मृगतृष्णानिशीथिनीग्रहराट् ।
तप्तस्वरसरविपत्रस्वरसः श्रुतिरुङ्मृगीमृगराट् ॥ ४८ ॥

लोभे नासिकारोगे च—

लोभं निराकरिष्णुः स्थैर्यं सन्तोषवृत्तिजं धत्ताम् ।
नासामयमसहिष्णुः जीरसितानस्यमाधत्ताम् ॥ ४९ ॥

हिंसाबाधके कर्णप्रवाहस्तम्भे च—

बुद्धागमोक्तवाक्यं हिंसाविधिबाधकं यदा भवति ।
शम्बूकमांसतैलं श्रुतिस्रुतिस्तम्भनं न कथम् ॥५० ॥



## गुणानां रसधर्मत्वम् ।

( ले०—जयपुरराजगुरु-कथाभट्टवंश्य-श्रीनन्दकुमारनन्दकिशोर-साहित्याचार्यौ ) ।

तमोगणविनाशिनी सकलकालमुद्योतिनी
धरातलविहारिणी जडसमाजविद्वेषणी ॥
कलानिधिसहायिनी लसदलोलसौदामनी
मदन्तरवलम्बिनी भवतु कापि कादम्बिनी ॥१॥

अयि निखिलशास्त्रापारपारावार-विगाहन-समधिगतचातुराकाः, विद्याकल्पलतारसास्वादनलोलुपमत्तचञ्चरीकाः, समागतानेकप्रतिष्ठितगरिष्ठविद्वद्वरिष्ठशिरोमणिप्रघृष्टचरण—नखमयूखसंतोषित-चन्द्रचन्द्रिकाप्रणयिचकोराः श्रीमन्तः ! अपारेऽत्र कविविरञ्चिप्रपञ्चे काव्यं नाम सकलसहृदयाह्लादकं, निखिल जगद्वशीकारकं, उद्विग्नोद्वेगहारकम्, अमन्दानन्दसन्दोह प्रदायकं, विबुधजनसौमनस्य-विधायकं, निखिलसंस्कृतसाहित्ये सरलसरण्या व्युत्पादकं, अशेषमानवविशेष–सौहित्यनिधायकं, प्राचीनार्वाचीन विविधलोकव्यवहारविहार संदर्शकं, कुटिल-कामिनीजालनिमग्न-मानवपीडैकनिवारकं, सकलशास्त्रपारससार-संसारैकप्रकाशकं, समग्रसंस्कृतानुरागिहृदयान्धकारतिरोधायकं, प्रभाकरतेजोवत्प्रदीपकं, बुधजनहृदयविद्योतकं, विद्यते, विद्योतते च ।

तत्र कतयित्रकर्मणि काव्यप्रकाशकारास्तावद् व्यासज्य-वृत्त्योभयगतचमत्कारसारविलोकनात् "तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि" इत्यादिना काव्यस्य शब्दार्थोभयविषयत्वं प्रतिपेदिरे, मेनिरे च ।

मयकापि च तेषां मतानुसारेणैव—

"आस्वादबोधकतया पठितं च काव्यं<br>
बुद्धं च काव्यमिति सार्वजनीनवृत्तेः ।<br>
आचार्यमस्मटवराः कविकर्मशब्दं<br>
शब्दार्थतत्परमनारतमामनन्ति ॥ १ ॥"

इत्यादि काव्यविमर्शाख्ये महानिबन्धे निरूपितम् । रसगङ्गाधरकारास्तु 'रमणीयार्थप्रतिपादकः शब्दः काव्य' मित्यादिना काव्यविषयकशब्दवृत्तितां स्वीचक्रिरे । अन्ये च ग्रन्थकारा यथायथमुभयत्रैवान्तर्गताः । अस्तु नाम—

नैतत्तावदस्माकं विचारास्पदम्, प्रकृतमाक्षिपामः—शब्द-काव्यतावादिमते, शब्दार्थोभयगतकाव्यतावादिमते च यद्यपि समानमेवेदं यद् 'रस आत्मा, शब्दार्थौ शरीरम्, गुणाः शौर्यादिवत्, अलंकाराः कटक-कुण्डलादिवत्, रीतयोऽङ्गसंस्थान विशेषवत्, दोषाश्च बधिरतादिवत्, इति । यथा च मया तस्मिन्नेव निबन्धे निबद्धम् ।

हारादिवदलंङ्कारा दोषा बधिरतादिवत् ।<br>
गुणाः शौर्यादिवद्रीतिरङ्गसंस्था-विशेषवत् ॥

तथाप्यत्र तावत्स्थले केचिद्विवादग्रस्ता इत्थं प्रत्यव[...]न्ते । यथा च ते आचक्षीरन्—

गुणास्तावन्नहि रसधर्मा, किन्तु; शब्दार्थयोरेव यदि केचिद् रसधर्मत्वं ब्रूयुस्तर्हि तेषां रसधर्मत्वे किं मानम्, प्रत्यक्षानुमानयोस्तत्रानुपयुक्तत्वात् । तथाहि—

यथा—दाहादिकार्येणाग्निगतोष्णस्पर्शत्वस्य भि[...] संवित्तिः, तथैव द्रुत्यादिरूपेषु रसेषु न हि द्रुत्यादि[...] गुणानां पार्थक्येन ज्ञानम्, येन विविक्ततया तेषामवस्थिति[...] क्रियेत ।

अत्र श्रृङ्गारादावियं द्रुतिः रसकार्या वा माधुर्यादि[...] संपाद्या इति भिन्नतयानुभयं कः प्रेक्षावान् प्रतीयात् । कि[...] माधुर्यादिगुणविशिष्टानां श्रृङ्गारादिरसानां द्रुत्यादि[...] कत्वात्कारणतावच्छेदकतया गुणानामनुमानम्, इति [...] श्रृङ्गारत्वादिरूपेणैव रसानां द्रुत्यादिकारणत्वोपपत्तौ [...] गुणकल्पने गौरवात् । न च श्रृङ्गारकरुणशान्तानां मा[...] त्वेन द्रुतिकारणत्वे श्रृङ्गारकरुणशान्तत्वादिरूपेण द्रु[...] कारणत्वकल्पनापेक्षया लाघवम्, इति वाच्यम् । मधु[...] दिगुणानां पार्थक्येन द्रुततरत्वादिकार्यतारतम्यप्रयोज[...] स्वीकारात् माधुर्यत्वस्वरूप-सामान्यकार्यकारणभावो नि[...] त्वाद् गडुस्थानापन्न इति । विशिष्यप्रयोज्य-प्रयोजकभा[...] निर्वाहे किमर्थंसामान्यकार्यकारणभावः स्वीक्रियताम् । [...] भावः । अपि च—आत्मा तावन्निर्गुणः इति वेदान्ति[...] ततश्चात्मस्थानापन्नस्य रसस्य माधुर्यादयो गुणा इति [...] कीदृङ् मनोहरम् । एवं च गुणाः शरीरभूतयोः शब्दार्थ[...] धर्मा इति पर्यवसन्नम् ।

अत्रेदमुच्यते—

यदि नाम गुणानां शब्दार्थधर्मतां स्वीकुरुषे; [...] धर्मतां-तदा तावत् "तत्र टवर्गवर्जितानां वर्गाणां प्र[...] तृतीयैः शर्भिरन्तःस्थैश्च घटिता, इत्यारभ्य, अवृत्ति[...] दुर्वृत्तिर्वा रचनानुपूर्व्यात्मिका माधुर्यस्य व्यञ्जि[...] इत्यादिना काव्यप्रकाशमनुसंदधता कथनेन कथं [...] शब्दार्थव्यञ्जकतां नाम प्रतिपादयसि । अयं भावः—

...वनादयो गुणव्यञ्जका न तु गुणाधाराः, येऽ व्यञ्जकाः, ...धाराः, यथा च प्रत्यक्षे—घटव्यञ्जको दीपोऽस्ति । ...के दीपे न घटावस्थानं किन्तु भूतल एव, इत्थंच ये ...कथमाधाराः इति ।

...म् 'अग्नेर्भिन्नमुष्णस्पर्शत्वं तत्राह—

...तावत्कः पदार्थ इति तत्त्वगवेषणायां कृतायां ...तत्त्वान्तर्गततेजःपदार्थाभिन्नत्वमवसीयते । तेजसो ...उष्णस्पर्शवत्त्वम्, इति मन्यन्ते नैयायिकाः, इत्थं ...गत्वमितिकथं वक्तुं शक्यते ।

...गौरवान्नानुमानमित्यपि नैव स्वीकार्यम्, मधुर-...मान्यकार्यकारणभावस्वीकारेण निर्वाहे निष्पन्ने ...गौरवम् । न च मधुरमधुरतरादिगुणानां ...द्रुत-द्रुततरादिकार्यतारतम्यप्रयोजकत्वेन ...प्रयोज्यप्रयोजकभावो गौरवम्" इति ...प्रातिस्विककारणतादिनां मतेऽपि द्रुतद्रुततरत्वा-...विशेषभावः स्वीक्रियते एवेति समानोऽयं पन्थाः ।

...नाम तावत् गौरवे सत्यपि न गुणा सिद्धिः । यच्चो-...रसेषु 'इमेरसाः" "इमे च गुणाः' 'इति पृथक् कर्त्तुं श-...लादिरूपैककार्यकत्वात् । तदपि न । सुकुमारपद-...माधुर्यादिजन्या द्रुतिरन्या, अन्या च रस-जन्या, ...दितं विदुषाम् ।

...च यथा—आत्मनः शौर्यादयस्तथा माधुर्यादयो ...णा इति मन्तव्यम् ।

...च ध्वन्यालोके—

...वलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः ।
...तास्त्वलंकारा मन्तव्याः कटकादिवत् ॥ १ ॥
...एव मधुरः परः प्रल्हादनो रसः
...काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ॥ २ ॥

...च काव्यप्रकाशेऽपि, शौर्यादिव्यञ्जकाकृतिमहत्त्व ...'आकृतिरेवास्य शूरा, इत्यादि व्यवहारात्, ...स्थूलाकृतिदर्शनेन 'शूर, इति' कुत्रापि कृशाकृति ...शौर्यं अशूर इति यथा लोका व्यवहरन्ते, तथैव काव्येऽपि माधुर्योपयुक्तसुकुमाररचनातो माधुर्यव्यवहार-दर्शनात्, सुकुमाररचनादर्शनमात्रेण अमधुरेऽपि वीरादौ माधुर्यं, क्वाऽपि श्रृङ्गारादिरसोपकारकं वर्णानामोजः प्राचुर्येण मधुरेऽपि श्रृङ्गारादौ माधुर्याभाव इति रसान्त-विश्रान्त-प्रत्ययभ्रान्ता व्यवहरन्ते । अतएव माधुर्यादयो रसधर्माः समुचितैर्वर्णैरभिव्यज्यन्ते; न तु वर्णमात्राश्रया, इति सविस्तरमुपपादितं मम्मटाचार्यैः । इत्थंचैवं सत्यपि शौर्यादयो न हि तावदात्मधर्माः किन्तु शरीरधर्मा इति मन्यसे तदा कथं मृतशरीरेऽपि तेषामवस्थानं न स्वीकुरुषे, कथं च मूर्ति-लाघववति पुरुषेऽपि शूरत्वव्यवहारं कुरुषे । किं च दृश्यन्ते, श्रूयन्ते चेतादृशो वृत्तान्ता यद्दर्शने दुर्वलाश्च युद्धक्रियायां चाद्वितीया विक्रमैकरसाः । यथा नलराजेन ऋतुपर्णरथे संयोजितास्तुरंगमा दर्शने कृशकाया अपि गमने धावने च 'आत्मोद्धतैरपिरजोभिरलङ्घनीयाः, इत्यादि सूक्तीनां प्रधान-लक्ष्यभूता इति पुराणतोऽप्यतिरोहितम् । न तु 'मधुरावर्णाः, इति लोक व्यवहाराद् वर्णधर्मत्वम्, उक्तं च वर्णधर्मत्वं वा-मनादिभिरपि, इति कथमन्यां सरणिं समाश्रयसि । इति चेन्न । अभियुक्ता वामनादयस्त्वौपचारिकं वर्णधर्ममादाय वर्णाः, इति व्यवाहार्षुः । भ्रान्तास्तु तं व्यवहारमपश्यन्तो 'मधुरा वर्णाः, इति व्यवहरन्ते । उक्तं चालङ्कारिकैरपि—

'गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता, इति ।

तथा च काव्यानुशासने हेमचन्द्राचार्योऽपि-

रसस्योत्कर्षापकर्षहेतू गुणदोषौ भक्त्या शब्दार्थयोः, रसो वक्ष्यमाणस्वरूपस्तस्योत्कर्षहेतवो गुणाः, अपकर्षहेतवस्तु दोषाः । ते च रसस्यैव धर्माः, उपचारेण तु तदुपकारिणोः शब्दार्थयोरुच्यन्ते, इत्यादि, इत्यन्वयव्यतिरेकाभ्यां गुणदोषयो रस एवाश्रय इतिपर्यन्तमुक्तवान् ।

अपिच—रसानुत्पत्तिकालेऽपि 'काव्यस्यात्मारीतिरिति तस्य धर्मा गुणाः, 'इतिवैदर्भमार्गस्य प्राणा दशगुणा मताः, इति प्रथमपरिच्छेदे दण्डिकाव्यादर्शतोऽप्यवधेयम् ।

किंच 'चन्द्रालोकेऽपि सहित्यदर्पणकाव्यप्रकाशादिवत् ।

'अमी दश गुणाः काव्ये पुंसिशौर्यादयो यथा, इत्यादिना यथा ह्यात्मधर्मा गुणा शौर्यादयस्तथा रसधर्मा माधुर्यादयो गुणा इत्येव निर्णीतम् ।

अस्तु नाम तथापि गुणानां साक्षादुपकारकत्वम् अलंकाराणां त्वङ्गद्वारेण, तत एवच—

"रसभावतदाभासभावशान्तिनिबन्धनाः।
चत्वारो रसवत्प्रेयऊर्जस्विच्च समाहितम्" ॥

इत्येवमादीनामलंकाराणां साक्षादुपकारकत्वाभावात्, शब्दार्थालंकारवन्नालंकारत्वं किन्त्वौपचारिकमलङ्कारत्वमिति नियमः कथं स्वीक्रियते ।

तस्माच्च जानीमो वयं ये साक्षादुपकारकास्ते गुणाः, ये चाङ्गद्वारा रसोपकारकास्तेऽलङ्काराः । अयमेव च भेदो भेदहेतुर्वा यद् विभिन्नाश्रयत्वं नाम द्वयोः । यदि गुणालङ्कारयोर्द्वयोरेव शरीरमवस्थानं भवेत्तदा 'द्वयोः शरीरद्वारा काव्यशोभाकारकत्वा दैक्यं प्रसज्यते । यथा च मयापि—

जानन्तु साहित्य-कला-प्रवीणाः ।
शब्दार्थ धर्मा न गुणा मता मे ॥
मानं तु बोध्यं रसधर्मताया
मलं कृतेः स्याद् गुणतो न भेदः ॥ १ ॥

इत्याद्यन्यत्राभिहितम्—

नच 'काव्यशोभायाः कर्तारो धर्मा गुणाः तदतिशयहेतवस्त्वलंकाराः, इति प्राचीनाचार्यकृतो भेदः संगच्छते तावदिति वाच्यम् ।

तथाहि—'रीतिरात्मा काव्यस्य, सा च पदसंघटनात्मिका त्रिविधा वैदर्भी, गौड़ी, पाञ्चाली च । तत्र सर्वगुणव्यञ्जकवर्णवती वैदर्भी, प्रसादौजोव्यञ्जकवर्णवती गौडी, माधुर्यप्रसादवदक्षरयुता पाञ्चाली । तत्र रीतिधर्मा गुणाः, शब्दार्थोभयरूपं काव्यं शोभयन्ति । शब्दार्थाश्रयाश्चालंकारास्तच्छोभाया अतिशयं कुर्वन्तीत्युक्तम् : तत्र वैदर्भ्यां माधुर्यस्य प्रसादस्य च सत्त्वेन संभोगश्रृङ्गारादौ लेशत ओजः सत्वेऽपि क्षत्यभावेन सैव काव्यस्यात्मा स्यात्, न तु गौडी, पाञ्चाली च । तत्र माधुर्याद्यभावेन समस्तगुणाभावाच्छोभाया अनुत्पत्तेः । अत एव काव्यप्रकाशेऽपि यदि समस्तै र्गुणैः काव्यव्यवहारस्तदा कथं तावत् 'असमस्तगुणा गौडी, पाञ्चाली च रीतिः काव्यस्यात्मेत्युक्तम् ।

यदि च कतिपयैर्गुणैरपि काव्यत्वव्यवहारस्तदा 'शुष्कोवृक्षस्तिष्ठत्यग्रे, इत्यत्र ।

अद्रावत्र प्रोज्ज्वलत्यग्निरुच्चैः प्राज्यप्रोद्यन्नु-त्येष धूमः इत्यत्रचौजःसत्वेपि कथं न काव्यत्वं स-क्रियत्वे । एवं च 'काव्यशोभायाः कर्तारो ध-गुणाः, इत्यनुपपन्नम् ।

न च'गुणाहितशोभाया अतिशयकर्तारो धर्मा अलङ्का-इत्यपि मन्तव्यम् । तथात्वे सति—

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी।
अस्या रदच्छदरसो न्यक्करोतितरां सुधाम्।

इत्यत्र दिव्यदेहरूपैकगुणहानिकल्पनया सुखदायक-दिरूपसमस्तगुणदाढर्यकल्पनायाः सत्त्वात विशेषो-उपमेयस्याधररसस्य चोपमानभूतसुधारसापेक्षयाऽधिक्य-व्यतिरेकः ।

एतावलंकारौ गुणानां निराकाङ्क्षतयैव काव्य-हेतुशोभाजनकौ । भवन्मते तु माधुर्यादिव्यञ्जकवर्णा-ओजसश्च प्रकृतविरुद्धत्वेन गुणाहितशोभाया अभावे गु-शोभातिशयकारित्वरूपालंकारलक्षणस्योपर्युक्तालंकारल-ऽतिव्याप्तेः काव्यत्वाभावः प्रसक्त इति गुणालं-लंक्षणमनुपपन्नम् ।

इत्थं च गुणानां रसधर्मत्व एव माधुर्यादयो गुणाः शौ-दय इवात्मनि रसे च समवाय सम्बन्धेन, उपमादयो हारा-इव शरीरे शब्दार्थयोः संयोगसम्बन्धेनोपकुर्वन्तीति संगच्छते नाम । यच्चोक्तम् 'आत्मा तावन्निर्गुणः' वेदान्तिनः । तेनात्मस्थानीयस्य रसस्य धर्मा माधु-गुणाः कथमुपपद्यन्ते, । तदपि विचाराक्षमम् ।

तथाहि, वेदान्तिनस्तावद् व्यावहारिकमात्मानं निर्गुणं निष्क्रियं च मन्यन्ते, किन्तु य आत्मा पारमार्थि-स एव निर्गुणः । यदि नाम व्यावहारिकोऽयमात्मा नि-निष्क्रियश्च भवेत्तदा, हन्त ? सन्तोऽपि प्राणिनः सर्व एव-चूड़मुच्छिन्ना भवेयुः । सर्व एव संसारो निष्क्रियत्वात-भवेत् । एवं च परमार्थिक एवात्मा निर्गुणो न तु व्या-रिकः प्रातिभासिकश्च । अत्र च 'रस आत्मा, इ-

...की जीवात्मैव दृष्टान्तविषयोपन्यस्यते । यथाच जीवा-त्मिकाः 'प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाप्रयत्नाश्चात्मनो लिङ्गानि' इति (वै० द० ३।२।४) 'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनोलिङ्गम्'' इति (न्या० द० १।१।१०) ...बभूवुः । यदिनाम पारमार्थिक एवात्मा दृष्टान्तस्तदा ...शौर्यादभावान्मनसि यथा शौर्यादयोगुणा गण्यन्ते, ...मन्ये मनःस्थानापन्नः कःपदार्थो येन तत्र माधुर्यादयो ...गण्यादीयेरन् । ननु मनःस्थानापन्नो हि स्थायिभावः ...नां, तत्रैव च गुणागण्यन्तामिति का नोहानिरिति ...चेत्तत्रैव 'गुणे गुणान्तरानौचित्यादिति प्रतिपादित-... किं च "रसो वै सः" इत्यादिश्रुतीनां सगुण-ब्रह्म-...त्वात्, ब्रह्मसादृश्येऽपि ब्रह्मतस्तत्त्वान्तरं रस इति ...च, गुणा रसधर्मा एव । अपिच काव्यप्रकाशलक्षण-...रे 'शौर्यादिवदात्मधर्माणां गुणानां हारादिवदुपमाद्यलङ्काराणां शरीरघटकत्वानुपपत्तेश्चेति, प्रतिपा-...तां मतेऽपि गुणानां रसधर्मत्वं शिरस्यापततीति ...मध्ये स्थेयम् एवं युक्तियुक्तेन कथनेन, लौकिक...नां बुद्धिसाम्यं प्रदर्शयता दृष्टान्तेन, प्रमाकरणेन ...च गुणानां रसधर्मत्वं सिद्धम्, अन्यथा तु गुणालंकार-...योरपि काव्यशोभाधायकत्वात् तयोरैक्यं प्रसज्यते ...प्राचीनमतापक्ष एव वरीयान्, इति समनोनियोगं ...विभावनीयम् । अन्ते चेदमाशास्यते—

...द् विस्मृतेर्भ्रान्त्या यन्न्यूनमधिकं कृतम् ।<br>
...क्षम्यतां विज्ञैः प्रमोदध्वं सुधीवराः ॥ १ ॥<br>
...गुरुपुराधीशकृपादृष्टिप्रभावतः ।<br>
...युगयुगुणितो निबन्धोऽयं विपश्चितः ॥ २ ॥



# सुरभारतीप्रणयिनां कर्तव्यम् ।

निबन्धा—श्रीदीनानाथशर्म्मा शास्त्री सारस्वतः ।<br>
( मुलतानस्थ-सनातनधर्म्म संस्कृतकालेजाऽध्यापकः )

" ॐ यां मेधां देवगणाः पितरश्चोपासते ।<br>
तया मामद्य मेधयाऽग्ने ! मेधाविनं कुरु स्वाहा "<br>
—यजुः ३२ । १४



अयि सुरसरस्वतीप्रणयिनो महाभागाः ! नेदं निह्नुतं श्रीमताम्; यद्—आस्माकीना भारतभारती एव सर्व्वाभ्यो वर्तमानभाषाभ्यः सर्व्वाऽङ्गीणं कात्स्न्यँ, प्राचीनताञ्च सर्व्वपथीनां कलयति । परम् अद्यत्वे-ऽमुष्या यादृशी दुरवस्था वरीवर्ति; मन्ये साऽपि नाऽतिक्रामेद् भवदीयदृग्-विषयताम् । सुरभारत्या ह्रसिम्ने तदरातयस्तु चेष्टन्तामेव; परं विषादस्याऽयं व्यतिकरो यद्—एतदीया अकृतज्ञाः संस्कृतज्ञा बन्धवोऽपि अदसीये ह्रसिम्नि सहायभूताः सन्ति । अन्यथा—विचार्य्यताम्—सत्यपि तदितरभाषीय-समाचारपत्रभूम्नि कथं स्यात् तदीयविविधपत्राणामभावः; भावेऽपि तदीयग्राहकनैयून्यम् ।

अस्माकं कर्तव्यं त्वेतदासिष्ट; यत्—सुरभारतीं वयं प्रतिगेहं प्रचारयिष्यामः सर्व्वे प्रतिक्षणं संस्कृतभाषिणोऽभविष्यन्; मित्रादिभिः साकं पत्रव्यवहृतौ किलाऽमुष्या एवोपयोगोऽभविष्यद्; एतस्या दैनिक-साप्ताहिक-पाक्षिक-मासिकपत्राणि प्रचार्य्य तद्ग्राहकभूयस्त्वाय चेष्टाऽभविष्यत; परमधुना तत्प्र-

त्यनीकतैव विभाव्यते। कोऽधुना परस्परं गीर्व्वाणवाण्यां सँल्लपति । यो विद्धीताऽप्येवम्; तत्र सेोत्प्रासा उक्तयो वितन्यन्ते । पत्रव्यवहारकाले तु सुरसरस्वत्युपयोगे लेखन्येव कदाचिज्जिह्मेति । सुरसरस्वतीसन्दृब्धसमाचारपत्राऽऽनायने च द्रविणस्य कालस्य वाऽपव्ययो विभाव्यते । यदि केचित् स्वाऽनुरागाटोपप्रदर्शनाय आनाययन्त्यपि संस्कृतपत्राणि; तानि तथैव बद्धानि तिष्ठन्ति; दर्शनस्य तु कैव कथा आस्ताम् । अहह ! चेतस्ताम्यति; लेखनी स्रंसते; परं शत्रूणां कृते प्रमोद-मोदकाः । हन्त !!!

एतस्मिन् महति विषमविषमये समये क्रियासमभिहारेण इतस्ततो विधीयमानानामाक्षेपाणां सन्निधैा सत्यपि महाविद्वांसो मौनमश्नुवते । ते वर्तमानसंस्कृतपत्रादिषु स्वकीयाशयकुशेशयनिबद्धनिबन्धाऽर्पणे भारतभारतीप्रचारनिष्पादकविविधविधोपदेशे वा निजलघिमानमिवाऽऽकलयन्ति । विपश्चिणो धर्म्मविषये मर्म्माविधो वचोराशीन् प्रयुञ्जते; प्राचीनसंस्कृतग्रन्थाँश्च दूषयितुम् आपार्ष्णिमस्तकं स्वेदस्रावं कुर्व्वन्ति; परं महान्तस्तूष्णीकामुपासते । लघवः किं कर्तुं क्षमेरन् । तेषां प्राचीनग्रन्थाऽवलोकनाऽलक्ष्मीणतायां न प्रौढत्वम्; न च जागत्कानुभवाऽऽतिशय्यम्; महाप्राज्ञानाञ्च तटस्थता; एवङ्कारं कारंकारं भविष्यत्येव विपक्षाणामानन्दसन्निधिः, भविष्यति च तत्सन्नियोगेन गीर्व्वाणवाण्या धर्मस्य च ह्रसिमा । भाषामूलक एव धर्म्मो भवति । तस्य प्रचारो वक्तृतया लेखेन वा भवितुमर्हति यदि महापण्डिताः

सँस्कृतपत्रेषु विपक्षिवितीर्णाऽऽक्षेपान् समाद
स्युः, तदा दृश्यताम्—कीदृगुन्नतिः स्याद्
भाषयोः । मया बहुशो दृष्टं संस्कृतपत्रेष्वपि; य
धर्म्मखण्डकास्तु लेखा प्रकाश्यन्ते; तन्मण्ड
वीथीषु विकीर्य्यन्ते । किमयमेव आर्य्यत्वा
मानः? मम घोषणेयम्—संस्कृत प्रसारोऽपि
धर्म्मोपजीवको न भविष्यति; तर्हि विधर्म्मं
सहाय एव सेत्स्यति । तेन संस्कृतपत्रेष्वपि
काव्यानाटकाऽऽदिसम्बद्धा विषया एव न लि
रन्; प्रत्युत धार्म्मिकाणामपि लेखानामादरो वि
नाऽत्र व्यतिकरे भीतैर्भाव्यं तत्तत्पत्रसम्पादकै
अन्यदिदमपि निवेदनम्—सँस्कृतपत्रसम्पा
नामयमप्याग्रहो दृश्यते, यद्-अत्यन्त सुग
लेखकैः ! प्रहीयेरन्; न ज्ञायते-कोऽस्याऽभिसं
कदाचिदयं स्याद्; यद्-विद्याऽर्थिषु पत्रप्रचार
स्याद् । अभिप्रायोऽयं स्तुत्यः । परं तत्र नि
मदः; यत्संस्कृतपत्रेषु विविधा लेखाः प्र
रन् । कुत्रचिदर्थगरिम्णा भाव्यम्; क्वचिच्छ
ऽऽडम्बरेणाऽपि । कुत्रचिद् यमकाऽनुप्रासश्ले
रोधाऽऽदिच्छटा स्यात्; क्वचिच्चाऽर्थाऽलङ्कारा
एवमेव सति संस्कृतप्रसारव्याजेन छात्राणाम
षामपि उन्नतिर्भवितुं शक्यते । केवलसौ
विन्यासे प्राचीनसाहित्ये शीघ्रं प्रवृत्तिरेव न भ
शक्येत, साहित्योन्नतिमभिलाषुकाणां विद्यार्थि
आशासे सम्पादका अत्राऽवधास्यन्ति विषये।

'ग्रामं गच्छंस्तृणं स्पृशती'ति नयेन एतदु
अनुचितश्चेत् क्षमणीयम् । कथनस्येदमेवाऽऽकू
यया कयाऽपि विधया सर्व्वैं सुरभारती-प्रण

त्याः' प्रचारणे बद्धपरिकराः स्युः । र्थंकरित्वविधाने राजपुरुषाणां साहाय्यं व्यावहारिकशब्दानां संस्कृतपदानि गवेष-चारयन्तु । तदैव भवेत् क्रमशो आगतवयाः त्याः 'सुप्रभातम्' सौभाग्य-'सूर्योदय'श्च । वि च सतूफल 'सहस्रांशो' भासमान 'उद्गु-स्यात् ।

ऽपि हर्षस्याऽयमवसरो यत्—काशिकः लाऽऽकुलः संस्कृत प्रसाराय भगीरथ-विदधदास्ते । अदस्सदः—सदस्सदश्च सुप्रभातं' नाम मासिकं पञ्चमब्दाविर्भाव-देव 'सुप्रभात' मिदं धनाऽल्पत्वेऽपि सुर-सेविनो निषेव्यमाणमेवाऽऽस्ते । समये २ प्रकाशनमपि विधत्ते । अधुना विश्वैः सुरभारती-प्रणयिनामपि कर्तव्यमेतद्; स्य यथाशक्ति धनसाहाय्यम् एवञ्च लेख-विदध्युः; येन सुरभारतीयमहरहरुन्नति-प्नुयाद्; एतत्सञ्चालकाश्चाऽपि सोत्साहाः गीर्वाण-वाणीप्रसारे सुदृढं चेष्टन्ताम् इति बन्धप्रार्थिभ्णा ॥

## नारी-समाजः ।

( ले० म० म० देवीप्रसाद कविः )

सर्वलोकविदिता चितिशक्तिरास्ते ।
म्या विभूतय इमा विलसन्ति नार्यः ॥
समतः किल कलाविहभारतीयैः ।
त्मना समुचिताऽपचितिर्विधेया ॥
१

## आर्तपालः शिवभूपालः

लेखकः—श्रीशेषशर्मा हेव्वालकरः,



र्षकर उषःकालः, प्रसन्नानि हरिदन्तरालानि, विकच-कुसुम-सुगन्ध-वाहो शीतलो मारुतः संचरतिस्म मन्दं मन्दम् । शार्वरं तमो गह्वरेषु चण्डकर-कर-निकर-संस्पर्श-भीतमिव निलीनं जातम् । तुहिनकिरणस्तारकागणश्च प्रभा-विहीनोऽभूत् । तदनु भगवानम्बर-मण्डल-मण्डनः कमलिनीवल्लभोऽपि पूर्वाचलमलं चकार । आनन्दमयेऽस्मिन् समये कुन्देन्दु-रदन-वदना, सौन्दर्य-जित-सुराङ्गना, समुदयद्यौवना काचन महाराष्ट्रललना सिस्नासुः श्रीसमर्थरामदासाऽऽदिनिषेवितं विमलमधुरनीरं सरोवरं गच्छतिस्म दासीदासाभ्यां साकम् । तत्क्षणमेव तत्समासाद्य सा समुत्सुक्ता किल स्नातुम् । "अस्याः स्नानसमये मदवस्थानमनावश्यकमिति तदनुचरः समाश्रयत समीपतरुच्छायातरुम् । प्रावर्तत निजनायिकावसनसेचनेऽपरा दासी । एतस्मिन्नेव काले करकलितकरालकरवालाः सबलाः स्थूलकलेवराः श्मश्रुभयंकराश्चत्वारः पुरुषाः सहसैव समाययुस्तत्सरस्तीरम् । ततो मल्लिकाप्रसूनकोमला महाराष्ट्रमहिला, इमे मोहमदीया एवेति भयविह्वला मूर्छां प्राप । तदनु दासीविहितशीतलोपचारलब्धचेतना सा "क्वाऽस्तिमामकः सेवकः" इति परितः समीक्षांचक्रे । नयनसरणिमेव नैवाऽऽरूढः परंपरिपठितपलायनसूक्तःसोऽनुचरः । सेयं सुन्दरी किंकर्तव्यतामूढा तदानीं चित्रलिखितेवाऽऽसीत् । अयि आर्याः! पाठक महोदयाः! सैनिका ननु समागता एते यवनाः श्रीमतो बीजापुर बादशाहस्य । कपट्यतिवेषधराः सुन्दर-योषान्वेषणतत्परा श्चारा इमे बादशाह-नियुक्तकार्यपराङ्मुखाः स्वच्छन्द-

मटन्तिस्म । एषां प्रभुस्तु रहिमानखाननामा । क्षुधार्तेनेव पायसपात्रं दरिद्रेणेव महानिधिः समीक्षिता किलमहाराष्ट्र-युवतिरेतैः । अनन्तरमेव समुदियाय खानमहोदये तत्सीमन्तिनी समपहरणदुरभिलाषः । ततस्ते पुनः पुनः समाव्हया मासुरनङ्गरंगाय तामङ्गनाम् । मोहमदीय-दुरुक्तिसमाकर्णनेन-समुपविष्टा सा समुदतिष्ठत् । तदनु तान् भर्त्सयांचक्रे नीचोक्तिभिः । अनुचकार स्वामिनीं स्वीयामेव दासी । माननीया मित्रमणयः ! मानविहीनाः स्मरान्धा नराः किं दुर्वचोभ्यस्त्रपन्ते? । अपिच ते स्वीकुर्वन्ति मन्दस्मिताः समादरादेवाऽवधीरणा-फणितिम् । खानस्तेषामेव कोटिमवजगाहे । एवंस्थिते-व्यतीताः कतिचन घटिकाः । ततः खानकिंकरौ—(पुरतः समागत्य) भोः प्रभो ! महाराष्ट्र-वनिता एता नूनं बालिश शिरोमणय एव । अयोऽप्यस्मदीयप्रार्थनया सुकुमारतरं भवेत्, नचाऽऽसां हृदयानि । किं बहुना, इमाः स्त्रियः स्वस्वमन्दिरेषु दारिद्र्यमेव समनुभवन्ति, न हि महावैभवं सन्तोष्य भवादृशवीरवरान् । समवलोकिताःकिलाऽस्माभिरीदृशाः कामिन्यः साराऽसारविचारहीना वह्व्यः । ललना मणिरियं बाल्यात्परस्मिन् वयसि पदं निदधाना, परमरक्षका, लावण्यनिधिश्च । एवं सत्यप्यस्याः स्वान्तस्याऽविकारतां दर्शं दर्शं हास्याङ्गनाऽऽश्लिष्टवक्षसो भवामः । किमेतन्मूढानां विचारणया । समादिशन्तु किलेतःपरमावाम् बीजापुरं नेष्यावो जीवग्राहमिमाम् ।।

तदुक्तिमेवाऽन्वमोदत युवतिलावण्यमोहितः खानोऽपि । ततःसुन्दरीसमुपकण्ठमगमतां तौ किंकरौ । महाराष्ट्र सुन्दरी—(साऽणुक्षेपं) रे क्षुद्राः ! पुरतः पादान् यदि विक्षिपेयुः, क्षणादेव परेतरक्षकभक्षिता भवेयुः । भवन्तु भवन्तो जागरूकाः ॥

खानः—मन्मनश्चकोरचन्द्रिके ! जीवितेश्वरे ! प्रिये ! मृग्या मृगेन्द्र इव कोमलाङ्ग्या कुरङ्गाक्ष्या त्वया मदीयभटकेसरिणोऽपिहिंस्येरन् । येनाऽपि कोमलकुसुमेन विनश्येयुःप्राणिनस्तर्हि शस्त्राऽऽदीनां तूपभोगः क ? तव सतर्जल्पनैर्न वय भवेम कान्दिशीकाः । हे सुमुखि ! क्षिप्रं विक्षिप कटाक्षकुसुमबाणान्" ॥ इति प्रजल्पिते खाने भृत्यास्तदीयाः पुरतः प्रययुः स्प्रष्टुं महाराष्ट्राङ्गनाङ्गम् । सुकुमारतरशरीरायां तस्यां राक्षसानां तेषां करस्पर्शात् संत्रस्य पश्चादपसरत्यां, कोऽपि—षम् ) हे शान्ते मासैषीः । त्वद्रक्षणदक्षिणः खलु मह योऽयं जनः । रे रे मूढाः, परास्पृशथ मदीयनिशितनि प्रहारं विषह्य तस्याः कलेवरम् ॥ "

ततः खानस्तत्सेवकाश्च परितः प्रेक्षिष्यन्ते, शक्तिमान् धनुष्मान् महामहोमहितवपुष्मान् महारा आसीत् । संप्रेक्ष्य तंच रोषकषायितनयनः खानः "चतुःसंख्यैरस्माभिरेव विजयश्रीः समालिंग्यते, न तेनेति " मनसि निर्णीय बभूव युद्धसंनद्धः ।

वाचकवरेण्याः ! परं महाराष्ट्रयुवाऽपि, नासीत् पुरुषः । खाननिभाननेकानपि हिनस्तिस्म सलीलम् । मह वीरोऽपि कोपांगारितांगः स्वीकृततीक्ष्णकौक्षेयकश्च समा ऽभवत् । उभयस्मिन् घोरतरे समरे संप्रवृत्ते चिच्छेद पु करं वामेतरं महाराष्ट्रशूरः खड्गाघातेनैकेनैव किलाऽस कासमेतस्य यवनवीरस्य खानस्य, । पपात कृपणो व याम् । समागमन् ननु हन्तुं महाराष्ट्रीयं तदनु तदनु सकलाः । सोऽपि तैर्विग्रहमारचय्य प्रापयामास स्तु कृतान्तनिशान्तम् । दर्शयामासपलायनपथमेकस्मै, खाने करवालमाकलय्यैकेनैव हस्तेन समागते समा मप्यनुचरानुसृतमार्गमभिमुखीचकार । एवमेवबहुलेकाले तत्सरोवरं तत्संहारजातरुधिरनिर्झरं जातम् । अथ मह तरुणो विजयहर्षरोमांचप्रपंचांचितगात्रः सहार्दंप्रैक्षत नीमणिं ताम् । साऽपि कार्तज्ञ्येन तं निपीय नेत्राभ्यां "प्रभाविनोऽस्याऽनागमने नूनं मां वशीकरिष्यन्तिस्म करुणाऽकूपारः परमेश्वरो, हर, एव, आपन्नार्तिहर, भगवन्तमनावीत् । कुशलधिषणाः सुप्रभातपाठक प्रायशो भवन्तः " कोऽयमस्यास्तरुण्या रक्षक " विचाराक्रान्तस्वान्ता भवेयुः । प्रियमहाशयाः सोऽयं म वीरपुंगवः शिवराजस्य दक्षिणः पाणिरिव स्थितः पी पालकः "पालकरे" त्युपपदांकितो नेताजीनाम । शिवाजिसंदर्शनायशिवनेरिदुर्गमितो वनश्रीशोभावि समायात आसीत् । नेताजिवीरस्य सरः समीपागमनं यवनबलात्करणं च काकतालीयमिवाऽभूत् । भारतीयांस्त्रातं साक्षात् सुजनसुखंकरः शंकर एव शिवरा

...आसीत् । तत्सहायका अपि तद्वत्तमेवांग्यकार्षुः । ...जोपरिपालयामास यवनेभ्यो महाराष्ट्रवरवर्णिनीम् । ...स्नानप्रभृतिषु कश्चन महाराष्ट्रसुन्दरीकिंकरः समा... ...आयातस्मिति पूर्वोक्तं विस्मृतं न भवेत् पाठक... ...। सोऽनुचरो यवनानां भयानकं विलोक्य रूपं भीतः ...लाय्य शिवनेरिदुर्गं स प्राप शिवाजिवासागारम् । ...मेव पश्यन्तिस्म दुर्गवासिनो जनाः । तदानीं भोज... ...ः शिवप्रभुः । तदनु शिवभूपालः समाकर्ण्यार्तनादं ...व भगवान् सहसा बहिरागत्य पुनः पुनः प्रलपन्तं ...तमद्राक्षीत्, किंवृत्तमित्यप्राक्षीच्च, । अनुचरः— ...श्रम् ) अयि महाराष्ट्रकुलजलधिकलानिधे ! ...मदीया मोहमदीयैर्वरुकन्दिता वर्तते । भवन्तोऽत्र ... ततः क्षुत्पिपासासमाकुलोऽपि शिवाजिनृपालः ...निरोधृतोष्णीषश्च संप्राप तत् सरोवरं जवजितकुरंगं ...रंगमारुह्य कतिभिः साकमश्वारोहैः । महोदयाः ! न ... प्रजापालनायस्वप्राणानपि श्रीमान् शिवाजीप्रभुः । ...न्यः शिवराजन्य इति श्लाघयन्तिस्म लोकाः । आक... ...समागमेन शिवराजस्य, मयूरइव नीरदागमेन, चकोर ...न्द्रोदयेन, नितरां प्रमुदितो नेताजी साष्टांगं प्रणनाम ...शिवाजिभूपालम् । महाराष्ट्रवनिताऽपि सप्रश्रयं तं ...। निवेदयामास तदनु नेताजी भूतपूर्वमुदन्तं सर्वम् । ...—(सहर्षम् ) हे आयुष्मन्! भवान् मम पाणिर्दक्षिण ...कार्यसहायको वर्तते । नूनं धन्यवादार्होऽस्ति । ...विधाय देशसेवां विधेहि सुकृतपात्रं भावत्कं गात्रम् ॥ ... एव पीराजीनाम कश्चन शिवनेरिदुर्गस्थः पूज्य... ...शिवराजान्तिकमेत्य—भो महाराज ! पिताकिला... ...कुमार्याः (शान्तायाः) । यः पुण्यश्लोकस्तनयामेनां ...गोप यवनेभ्यः । स एव मद्दुहितृपाणिपीडनार्हः ॥ ... पाठक महाभागाः ! महाराष्ट्रयूनो तदानीन्तन ...शूरेन्दु भावुकाग्रेसरा भवन्तु एव । श्रीमान् वीरवरः ...पतिः स्वयमेव तयोर्विवाहोत्सवमकार्षीत् । आर्तजन... ... " शिवराज " स्तदनुयायिनश्च बद्धप्रतिसरा इति ...मिनाऽद्यापि कर्णकुहरं भिनत्ति कीर्तिभेरी नन्वस्माक... ...शिवम् * ॥

* ...कश्चन कर्नाटकपत्रिकायाः कथाभागः संगृहीतः, ।

# शास्त्रव्यवसायिनां कुत्सितं कर्म !

लेखकः— " प्रणवः "

इदमिह विदाङ्कुर्वन्तु लौकिकाः परीक्षकाश्च प्रेक्षावन्तः सज्जनाः, यदुत कथमियं मातृभूरस्माकं सर्वथा पराधीनत्वं चिरादनुभवति । अहो ! अपारे खलु भारत-महार्णवेऽत्र निवसतोऽगणितानस्मानेव सर्वतः खादन्तो जयन्ति कतिपये वैदेशिकाः श्वेत-जन्तव इति कल्पनयापि कम्पते नूनमस्माकं हृदयम् ! अतः सम्प्रति सर्वं विहाय देशस्य स्वात-न्त्र्यमेव विद्यते भारतीयानां साध्यं वस्तु । किञ्च सङ्घे शक्तिः कलौ युगे ' इत्यालोचयतां देशनाय-कानां राष्ट्रसंघटनेनैकत्वमेव वर्त्ततेऽतितरां समी-हितम् । हिन्दु-संघटनादिना शक्तिसञ्चयमभिलषतां साम्प्रदायिकानामपि नितरामेकतैव विद्यते विराम-भूमिः । अत एव यथा मिथोविवादो माभूत् तथा सर्वदा यतन्ते नेतारः । किन्तु हन्त ! अद्यापि केचन कलहप्रियाः स्वार्थपरायणा वा शास्त्रव्यवसायिनः स्वभावं न जहति । ते हि छिद्रमन्विषन्तस्तथाऽ-वसरं प्राप्य स्वकार्यमेव साधयन्ति, न पापाद्द्वि-भ्यति, नापि लोकान्मनागपि लज्जन्ते । एतादृशानां देशस्य समाजस्य वा कृते न भवति किमपि कर्त्त-व्यम् । सर्वथा शास्त्रविरुद्धमेव कार्यं कुर्वाणा अपि-इन्द्रियारामा उदरम्भरयः किलैतेऽन्येभ्यः शास्त्रीया-मेव व्यवस्थां ददतीति चित्रमेतत् ! एतादृशानामेव

हस्ताक्षरैर्दूषितं व्यवस्थापत्रमेकं पौषस्य पूर्णिमायां जाते " सूर्योदये " प्रकाशितं दृश्यते । व्यवस्थापत्रमेतद् गोस्वामिनां यज्ञोपवीताधिकारविरोधार्थमेव प्रस्तुतमिति सकृदनुवाचनेनैव विज्ञायते । व्यवस्थापत्रमिदं येषां विदुषां हस्ताक्षरैरनुगृहीतं विद्यते, तेषामन्यतमः प्रधानश्च म० म० श्रीलक्ष्मणशास्त्री द्रविड एवेति तत्रत्यसम्पादकीयटिप्पणेन स्फुटं प्रतीयते । अस्तु, तदुत्तरन्तु व्यवस्थापकानां विदुषां संक्षिप्तजीवनवृत्तान्तेन, गृहरहस्योद्घाटनेन, कुलाचारालोचनेन, जातिविमर्शेन च सहैव नातिचिरादेव पुस्तकाकारं प्रकाशिष्यते । यद्यपि तादृशानामुपेक्षैव भवति, साधूत्तरम्, तथापि बहूपेक्षयापि दुर्जनत्वमेधत एवेति लोकसेवकोऽप्यहमनिच्छन्नपि दुर्वादिशिक्षणकर्मणि प्रवृत्तः । उत्तरपुस्तकं त्वरितमेव निर्यास्यति, पाठका अवसरं प्रतीक्षन्ताम् । एतर्हि तु द्वित्राः प्रश्ना एव क्रियन्ते, श्रीलक्ष्मणशास्त्रिभिरुत्तरं " सुप्रभात " एव देयम् ।

१—भवद्भिः स्वयमेव व्यवस्थापत्रं विधाय तत्र हस्ताक्षरोऽपि विहितः, उत केनचिल्लिखिते व्यवस्थापत्रे शुल्कमादाय हस्ताक्षरमात्रमेव कृत्वा तद्दोषो महन्निन्दामहापातकभारः स्वशिरसि निहितः ? आद्ये कथमेषा गोस्वामिकुलस्यायां भवतां दुष्प्रवृत्तिः ? न च गोस्वामिनां त्रैवर्णिकत्वाभावेन यज्ञोपवीतादावनधिकारादिति वाच्यम्, त्रैवर्णिकगुरूणामेषां वर्णविचारचिन्तायां ब्राह्मणेष्वपि श्रेष्ठत्वेन तदधिकारस्याक्षुण्णत्वात् । विभिन्नप्रान्तेषु गोस्वामिनां शिष्या ये त्रैवर्णिका अद्यापि सन्ति, तेषां कियतां पूर्णसङ्केतसमन्वितां सूचीं पूर्वोक्तोत्तरपुस्तकान्ते नियोजितामचिरादेव द्रक्ष्यन्ति श्रीमन्तः । तस्मादविमृश्यकारिणामतएवाप्रतिपाद्यमेव पादयतां प्रेक्षावद्भिरुन्मत्तवदुपेक्षणीयानां का नाम स्यादवधेयवचनता जनतायाम् ? शुल्कमधिगत्य शास्त्रव्यवसायं कुर्वतां शास्त्रमतिक्रम्य धर्ममवधीर्य च व्यवस्थां ददतां भवादृशानां हस्ताक्षरस्य कियदस्ति मूल्यमिति रहसि हस्तं निधाय स्वयमेव विभावनीयम् ।

२—द्विविधा हि ब्राह्मणाः साम्प्रतमत्र श्रूयन्ते । एके पितामहादद्य यावदविच्छिन्नसन्ततिवंशपरम्परयैव विशुद्धाः । अपरे च सम्प्रति शुद्धिं विधाय ब्राह्मणत्वङ्गमिता इव यवनादयः शङ्कराचार्यैरन्यैश्च राजभिः समये २ यथाप्रयोजनं संस्कृत्य ब्राह्मणीकृता अनार्याः । तत्र के भवन्तः प्रथमे, द्वितीया वा ? आद्ये किमस्ति विश्वासे प्रमाणम् ? अन्त्ये-भवतामेव व्यवस्थया गोस्वामिनां यज्ञोपवीताधिकारविरोधः कथमिव शोभते !

हंहो बत ! स्वयं सीसकभवने निवसन्तो भवन्तः परेषामुपरि पाषाणखण्डं निक्षिपन्ति महदिदं भवतां साहसिक्यं नश्वतेसि चमत्कारमाविष्करोति !

यदि सर्वे भवन्तः सम्प्रति ब्रह्मसन्तानत्वेनैव नंख्यापयन्तो व्यवहरन्ति, लोका अपि भवतस्तथा जानन्त्यतो नास्ति भवतां कोऽपि कृत्रिमो ब्राह्मण इत्युच्येत, तर्हि तत्रापि कः प्रत्ययः ? दृश्यन्ते साम्प्रतमार्यसमाजिकैः संशोध्य ब्राह्मणपदमापादिता यवनादयः, कियत्कालानन्तरं तेषां पुत्रादयः साक्षाद ब्रह्मणः पौत्रत्वादिनैवात्मानं ख्यापयन्तः सद्ब्राह्मणानेवाधरीकरिष्यन्ति,

...व तथैव मंस्यन्ते । के। हि नाम तदानीं तेषां ...तां शङ्कितुमपि शक्नोति !

...-श्रीमन्तः शास्त्रमर्यादारक्षकाः सन्ति । ...समाजे नहि सर्वे भवादृशाः संभवन्ति । ...श्यामभिसरन्ति, केचिद्गस्यागमनं कुर्वन्ति, ...सं पातयन्ति, भूयांसो ब्रह्महत्यां सम्पाद- ...तिपवे मद्यमपि पिबन्ति ब्राह्मणाश्चपीति ...तिरोहितं भवताम् । तादृशैः सह साक्षात् ...ा वा विवाहादिसम्बन्धं भोजनादिव्यहारं ...ते न वा धर्मभीरवो भवन्तः ?

...-श्रीमतां मते। समुद्रयात्रादिकार्यमपि धर्म- ...द्धमेव विद्यते । किन्तु धृष्टः समाजस्तु ...मपि न शृणोति ! समुद्रयात्रां विदधा- ...येनापि तथा कुर्वन्ति, तेऽपि तथाविधैः ...ा केनापि प्रकारेण संबद्धाएव सन्ति । ...श्रीमन्तः प्रागुक्तदिशा दूषिते समाजे तिष्ठन्ति

...-आचारवन्तो भवन्तः कदाचिद् वाष्पया- ...न्ति न वा ? यतः सहयानमारूढा यवना- ...टिकां नीपीय धूममुदरे निगीर्य पुनरपि ...गिरन्ति । वान्तः खलु धूमः सहसा सह- ...-मुखकर्णनासिका-विवरैन्तः प्रविश्य धर्मं ...! तत्रावस्थानं भवादृशानां धर्मधुरीणानां ...भवति ? किञ्च गवां चर्मादियोगेन सर्वथा ...नैर्हेयानि वैदेशिकानि वस्तूनि, स्यात्, ...न स्पृशन्ति ?

...-श्रीमन्तस्तु धर्मावतारा एव जयन्ति । ...न । भवतां समक्ष-मेव सनातनधर्मो व-

राकः शुद्धि-अस्पृश्योद्धार-विधवाविवाहादिभिः प्रसभं हन्यते । तदर्थं किं कुर्वते दयामया भवन्तः ?

७—गोस्वामिनां यज्ञोपवीतधारणरूपं दुष्कर्म दृष्ट्वा चिन्ताकुलाः श्रीमन्तः सुमेरुमिव दन्तेन भूदारा व्यवस्थापत्रेणैव गोस्वामिवंशं चेष्टन्ते खनितुमित्यत एव भवतां लोकोत्तरधार्मिकत्वमनुमीयते । परन्तु प्रत्यहं यवनादयो गाश्छिन्दन्ति, मन्दिराणिभिन्दन्ति, मूर्त्तीः खण्डयन्ति, हिन्दुरमणीरपहरन्ति, बालकानपि चोरयन्ति-चेति सर्वं भवन्तः पश्यन्ति, शृण्वन्ति, जानन्ति च । तदर्थं किं विदधति ?

८—आभीरादयोऽपि यज्ञसूत्रं धारयन्ति, क्षत्रियत्वेनात्मानं ख्यापयन्तः स्वधर्मं प्रचारयन्ति च । तेषामिदं कर्म शास्त्रविरुद्धं मन्यन्ते न वा भवन्तः ? आद्ये तादृशमधार्मिकं कृत्यं समालोचयन्तोऽपि नेत्रे पिधाय कर्णयोस्तैलञ्च निधाय कथं तूष्णीं शेरते भवन्तः ? अन्त्ये तु सदैव वयमपि श्रीमतो धन्यान् वदामः !

९—न संस्कारच्युतिमात्रेणैव पातित्यं भवति, किन्तु स्वकर्मत्यागात्-कर्मान्तरपरिग्रहाच्चापि । इत्थं प्रायेण बहवः पतिता इव दृश्यन्ते । तेषां ब्राह्मणत्वमप्यूरीकुर्वन्ति न वा भवन्तः ? आद्ये धन्याः खलु महात्मानः शास्त्रविधिमनुवर्त्तमानाः । अन्त्ये कथं न ते समाजवहिष्कृता भवद्भिः क्रियन्ते ?

# शुद्ध्यर्थमैतिहासिकानि प्रमाणानि

लेखकः—धर्म्मदेव वर्म्मा शास्त्री, वाराणसी

ॐ उतदेवा अवहितं देवा उन्नयथा पुनः ।
उतागश्चक्रुषं देवा देवा जीवयथा पुनः ॥ ऋग्

ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः ।
चतुर्थ एकजातिस्तु शूद्रो नाऽस्तितु पञ्चमः ।

मनुः—

शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥

—मनुः १०।४३।

देशभङ्गे प्रवासे च व्याधिषु व्यसनेष्वपि ।
रक्षेदेव स्वदेहादि पश्चाद्धर्म्मं समाचरेत् ॥

पराशर ७।४२।

अयि पाठकाः निरुक्तसंक्षिप्तश्रुतिस्मृतिप्रमाणेषु शुद्ध्युपोद्बलकेषु सत्सु 'इतिहासः पुराणञ्च पञ्चमो वेद उच्यते' इति वचनादेव सामकोऽयमैतिहासिकप्रमाणोदाहृत्युपन्यासरूपःप्रयासः, यद्वाश्रुतिस्मृतीरितकर्त्तव्यताकस्य समयोचितस्य शुद्धिरूपस्य कार्य्यस्याऽकृतिरस्माकमपूर्वजानां कथं सम्भाव्येतेति वार्ता स्फुटीकर्तुं वा मेऽयं प्रयत्न इति सुधीभिर्ज्ञेयम् । पूर्वं हि यथासमयमास्माकीनाः पूज्या पूर्वजा ब्राह्मणा क्षत्रिया वाऽकुर्व्वन्नेवशुद्धिमित्यर्थम्प्रमाणानि दास्यन्ते—

( १ ) कण्वेन हि सरस्वत्याज्ञया दशसहस्रसंख्याका म्लेच्छाः संस्कृत्य पूर्व्वं शूद्रवर्णाय-पश्चात् वैश्य वर्णाय-केचन च क्षत्रियवर्णायाऽक्रियन्त इति भविष्यत् पुराणे प्रतिसर्गपर्वणि खं० ४३।२२ इत्यञ्च समागात्-तथाहि—

"सरस्वत्याज्ञया कण्वो मिश्रदेशमुपाययौ,
म्लेच्छान् संस्कृत्य चाऽऽभाष्य तदा दशसहस्रकान् ॥
वशीकृत्य स्वयं प्राप्तो ब्रह्मावर्तं महोत्तमे ।
ते सर्वे तपसा देवीं तुष्टुवुश्च सरस्वतीम् ॥ १७ ॥
पञ्चवर्षान्तरे देवी प्रादुर्भूता सरस्वती ।
सपत्नीकाँश्च तान्म्लेच्छान् शूद्रवर्णाय चाकरोत् ॥ १८ ॥
कारवृत्तिकराः सर्वे बभूवुर्बहुपुत्रकाः ।
द्विसहस्रास्तदा तेषांमध्ये वैश्या बभूविरे १८ ॥ इत्यादि

( २ ) मौहम्मदराज्ये मन्दिरेषु मजितीभूतेषु आ च मौहम्मदीभूतेषु वैष्णवधर्म्मानुयायिभिः कृष्णचै ऽन्तेवासिभिर्यथागुर्वादेशन्ते प्राग्वत्स्वस्ववर्णं प्रापि यथाच-"रामानन्दस्य शिष्यो वै चायोध्यायामुपाग

म्लेच्छास्ते वैष्णवाश्चासन् रामानन्दप्रभावतः ।
आर्याश्च वैष्णवा मुख्या अयोध्यायां बभूविरे"

( ३ ) वल्लभाचार्य्यमतस्य ख्याताष्ठ, २५२ वानान्तथा ८४ वैष्णवानां वार्तास्वपि-"अलाखान पठानजातीया मौहम्मदा मानवा आचार्य्येण तिलकादिकं योजयित्वा वैष्णवा व्यधायिषत, पूजाप कारमापिता" इति लिखितम् ।

( ४ ) महात्मबुद्धप्रचारेण त्रिंशत्सहस्रसंख्याका अनार्या अभूवन्-ते च समेऽपि श्रीस्वामिशङ्करा शङ्खध्वनिनैव शोधिता इति शङ्करदिग्विजये प्रकट लिखितमास्ते ।

( ५ ) ( क ) अजामिलोऽत्यन्तपापोऽपि सद्य नामग्रहणेनैव शुद्धइति सर्व्वैं विदितम् ।

( ख ) शिवपुराणेचाऽजामिलतोऽप्य पापी गुणनिधिनामा दुष्कर्म्मा शङ्करस्तपाकटाक्षेण इति लिखितम् । ऋषिसदृशश्चाऽभूत् ।

( ६ ) सिकन्दरेण सार्धमायाता बहवो ग्रीक आर्य्यत्वेन परिणताः ।

चन्द्रगुप्तेन सल्यूकसनाम्नः कन्यया सार्धं व्यधायि ।

( ७ ) पुष्करस्य पुरातन इतिहासे लिखितं यत् भिर्निरीतिनामा राक्षसः शोधितस्तथा वैदिक धर्मे

( ) पार्सी जातीया हि-अद्यावध्यपि गोरक्षेश्वपूजका ...र्त्यं प्रातःस्नानं संध्याञ्च विदधति । तेन तदीयं हिन्दूत्वं प्रतीयते ।

( ) शालिवाहनस्य १०२८ शकसंवत्सरस्य शिला- ...जातीयानां" ( ये अधुनाऽपि पर्शिया, सीरिया, ...नर, रोमदेशेषु विसृता विद्यन्ते ) ब्राह्मणवर्ण- ...लिखितास्ति ।

( ) इतिहासेषु हि एतादृशानि शतशः प्रमाणानि ...था च—

...र्दनरियू " इत्यत्र एको लेखो मुद्रितः यत् ...य सेनया " नेताजीपालकर " नामा चरवारः ...कृतः—

...चिद्वर्षानन्तरं समागतोऽपि पुनरसौ पेशवीकृत इति ।

( ११ ) 'बाजीराव निंबालकरः, बीजापुरनृपते न्यार्यालये निवसतिस्म, सचकेनाऽपि केनचनाऽपराधेन योजितः विपद्गतो निम्बालकरोऽधर्म्मदीक्षामग्रहीत्, तदनन्तरं स स्वकीय "फलटन" नाम्नि सम्पत्ति-स्थाने समागात, कतिचिद्दिनानन्तरं शिवाजीत्यनेन तन्माता-'जीजीवाई, इत्यनयाचाऽसौ स्वपुरोहित "पण्डितरावीय व्यवस्थातः शोधितः ।

इत्यादीनि प्रमाणानि बहूनि सन्ति । आशासेऽशुद्धि-म्परिहृत्य स्वीयमन्तः करणं शोधयित्वा, मामकीं लेखाऽशुद्धि-मपि शुद्धित्वेन परिणतां कुर्वन्तो विद्वांसोऽवश्यमेव शुद्धि-कार्य्ये दत्ताऽवधानाः स्वार्थहीना देशोपकारं विधास्यन्ति । व्यर्थ-कोलाहलञ्च त्यक्ष्यन्ति । दुष्टत्वे मल्लेखस्य परिहारमेव, स्वयुक्तियुक्तायुक्तीर्वा मुद्रापयिष्यन्ति ।




# गंगा-गीतम्

—⁂—

...ता—श्रीकविश्रेष्ठ परमानन्दभट्टाचार्यः

...रकः—श्रीपीताम्बरभट्टाचार्यः ( छात्रः )

...पुराण-भूषणः, राज्य अजयगढ़, ( मध्यभारत )

" ग्रन्थकर्तुः संक्षिप्त परिचयः "

( १ ) एते खलु पूज्यपादानां, विश्वविदितयशसाम्, ...नाम् श्रीव्रजचन्द्रभट्टाचार्याणाम् आत्मजा अपि ...दानाध्यक्ष-धर्माध्यक्ष-राज्याचार्य-राज्यपौराणिक प्रभृतिविविधोपाधिधारिणः परमानन्देति अभिधया बुन्देलखण्ड-मण्डलान्तर्गतामजयगढाभिधाम् राजधानीम्, १८७२ तमे विक्रमवत्सरे माघशुक्ल प्रतिपदायाम् भौमवासरे निजजन्म-नाऽलञ्चक्रुः ॥

( २ ) एतेषां गुरवः श्रीमदाचार्याः श्री १०८ मुकुन्द-लाल भट्टाचार्याः, एतेभ्यः सकाशात् एभिः श्रीपरमानन्द-भट्टाचार्यैः षट्शास्त्राणि अधीतानि—

( ३ ) एभिःनिर्मिता ग्रन्थास्त्वेते —

( १ ) श्रृङ्गार-सप्तशती ( २ ) राजवंश-प्रस्तारः ( ३ ) "गङ्गातरङ्ग नाटकः" ( ४ ) प्रतापमार्तण्डः ( ५ ) वेदान्तसारः ( ६ ) श्रृंगारतिलकः ( ७ ) नवरस-दर्पण

( ८ ) कविप्रमोदः ( ९ ) रसगंगाधरः ( १० ) महीपति-भूषण ( ११ ) माधवविलासः ( १२ ) राजवंत-कल्पद्रुमः ( १३ ) भरतमिलापः ( १४ ) कवित्तबंध रामायण ( १५ ) राधानखशिखवर्णन ( १६ ) राजनीतिदर्पणः ( १७ ) वेदस्तुति-दर्पणः ( १८ ) एकमुखो-हनुमत-पचासा ( १९ ) पंचमुखी-हनुमत-पचासा ( २० ) हनुमत-पचीसी

( ४ ) एभिः कृताः सन्ति स्वतन्त्राः स्फुट-सवैया, कवित्तादयः बहुधाहिन्दी भाषायाम्

( ५ ) एतेषामुपर्युक्तानाम् ग्रन्थानामेकां शृंगाररसशतीं विहाय शेषाः अद्यापि अमुद्रिताः । अस्मत् पुस्तकागारे येन केन प्रकारेण संरक्षितास्सन्ति, तेषां मुद्रणार्थं यतामहे ( द्रव्या-भावोहि प्रधानकारणम् )

( ६ ) उपर्युक्त साहित्य ग्रन्थरत्नानामेकस्मात् "गंगा-तरंगनाटकात्" कानिचिद् चित्राणि पद्यानि सुप्रभातपाठकानां मनोरञ्जनायात्रोद्धरामः

(क) सुचन्द्र चूड चूडिका चलत्तरंग रंगभू,
विहारि वारि वारिद स्फुरत्प्रवर्ष हर्षद-
त्रिविक्रमक्रमाक्रमाद्विशीर्णनीरसंभवं,
सदा मुदेऽस्तु स्वर्नदि त्वदीय ताण्डवं शुभम् ॥१॥

(ख) सुमेरुपर्वताश्रयात्पतत्पुरारिपर्वता,
क्रमाद्विशेष विक्रमं प्रदर्शयन् शिवे शिवम् ।
ततस्त्रिलोकमण्डलप्रशंसनीयपावनं,
भगीरथानुगामिनि त्वदीय ताण्डवं शुभम् ॥२॥

(ग) मिलत्सरस्वती सखी कलिन्दकन्यका द्वये,
प्रयागयाम मण्डले त्रिवेणितां ततो गतम् ।
ततः सुविंध्यवासिनीविलासलासभूचलत्-
प्रकाशि काशिकापुरी निवासि ताण्डवं शुभम् ३॥

(घ) सहस्रवारिधारया स्फुरत्प्रभाविशेषव-
द्विलोलवीचि वल्लिका भुजप्रबन्धबन्धुरम् ।
समुद्र संगमागमे पुटप्रभेदसंभव
ध्वनिप्रतान मूर्च्छनालयाघखण्ड ताण्डवम् ४॥

(ङ) तट द्वये तटस्महा मुनीन्द्रनारद-
प्रभृत्यशेषशेषशेखरैः स्तुतं नतं प्रपूजितम्
पुरन्दरादिवृन्दवन्द्यदेवसुन्दरीजसद्विमान
क्षुद्रघण्टिका रणत्कलापि ताण्डवम् ॥५॥

(च) सुचारुचन्द्रमण्डलप्रभाकरप्रदीपिका,
प्रकाशवत्त्रिलोकरंगभूमिचित्रचत्वरम् ।
उपेन्द्रसत्पदारविन्दसूत्रधारधारितानुराग
रागरागिणि त्वदीयताण्डवं शुभम् ॥६॥

(छ) नरेन्द्रजह्नुकन्यकानटी पटीयसी
चलत्तटी तटीषु रेणुराशि तूलिका पटी
सदम्भसम्भ्रमभ्रमत्समुत्थफेनफेणिका
विनोदमोदहासवद्विलासिताण्डवं शुभम्

(ज) परास्तदण्डधृक् पुरि प्रचण्डपातकाकुल-
प्रतापताप शान्ति कृत्तवास्ति वारि निर्मल
पिबन्ति ये मुदा सदा लभन्ति ते पदाम्बु
त्रिविक्रमस्य भक्तिदं त्वदीय ताण्डवं शुभम्

## पाणिनीय प्रकाशः ।

परेऽछव्यम्परेनान्तस्य पदस्य हिरुर्भवेत् ।
प्रशानित्यस्य शब्दस्य नवित्युक्तं महर्षिणा ॥
विसर्गस्य सकारस्यात्परे खरिसतिध्रुवम् ।
शार्ङ्गिंश्छिन्धि महद्दुःखं शार्ङ्गिंश्छिन्धि सदा रिपून्
चक्रिंस्त्रायस्व मां चक्रिंस्त्रायस्व कृपया द्रुतम् ।
पदस्येति त्रिनिर्देशाद्धन्तीत्यादौ न दुष्टता ॥ ६३
अम्परे चेति निर्देशात्सन्त्सर्वादौ न दुष्टता ।
अप्रशानिति निर्देशात्प्रयोगेषु न दुष्टता ॥ ६४ ॥

तोत्यादिकेषु बोध्यमेतद्बुधस्सुभिः ।
स्य भवेद्दुर्वा पकारेतु परे सति ॥ ६५ ॥
स्य कवर्गे च पवर्गेच्च परे सति ।
तीयस्तथोप-ध्मानीयो भवति क्रमात् । ६६॥
रे विसर्गोऽपीत्युक्तं पाणिनिना स्फुटम् ।
हि शिव नँ ^ पाहि विष्णो नँ ः पाहि भास्कर॥
हि देवि नँ पाहि गणेशेति सदा जप ।
स्य नकारस्य रुःस्यादाम्रेडिते परे ॥ ६८ ॥
विसर्गस्य कस्कादिकगणेरितः ।
भवति स्थाने सकारश्च ततोऽन्यतः ॥ ६९ ॥
तस्कुतोभ्रातुष्पुत्रोऽहस्करभास्करौ ।
तो यजुष्पात्रं सद्यस्कालस्तथै वच ॥ ७० ॥
श्चैव सावस्कः काँस्कान् वर्हिष्पलं तथा ।
डस्तथा सर्पिष्कुण्डिकाच्च बर्हिष्पलम् ॥७१॥
लमपि च शुनस्कर्णस्तथैव च ।
ाण्डस्तमस्काण्ड इति कस्कादयस्स्मृताः ॥७२॥
ति गणः प्रोक्तो मुनिभिर्महितैरयम् ।
विहन्ति कस्कोऽयं कांस्कान्नेतिविलोकय ७३
छकारेतु ह्रस्वस्य स्यात्तुगागमः ।
यां यथा भाति शिवच्छाया निरन्तरम् ॥७४॥
छकारे स्यादाङ्माङोर्हि तुगागमः ।
च्छादयत्यस्य कीर्त्तिस्तां माच्छिदद्भवान् ॥
छकारे स्याद्दीर्घस्य हि तुगागमः ॥
ते महापापान्यपि संस्मरणं हरेः ॥ ७६ ॥
स्यात्पदान्तस्य च्छे परे वा तुगागमः ।
छायाऽवतात्सदमीछायाणे मङ्गलं क्रियात् ॥७७॥
॥ इति हल्सन्धिः ॥

## श्रीकृष्णनाम प्रचारकसमितेः विशिष्टाधिवेशनं

अस्मिन् सम्वत्सरे भाद्रपदकृष्णे श्रीकृष्ण-जन्माष्टम्याम् श्रीकृष्णनामप्रचारकसमितेः विशिष्टाधिवेशनम् श्रीभट्टमुरलीधरजी तैलङ्गानाम् सभापतित्वे महता सम्भारेण सम्पत्स्यते । तस्मिन्नेवावसरे सनातनधर्मप्रचाराय श्रीकृष्णनामप्रचाराय छात्राणां संग्रथनाय विदुषां आंग्लछात्राणाम् हृदयाकर्षकानि विचित्राणि व्याख्यानानि भविष्यन्ति । अतः साञ्जलिप्रार्थयामहे सर्वमान्याः सनातनधर्मप्रधानकेन्द्रश्रीकाशीस्थाः विश्वविदितयशसः विद्वांसः ३१ अगस्त पर्यन्तम् सर्वजनहितकरान् सरलान् लेखान्नुल्लिख्यप्रे षयेयुः ।

अजेयगढ ( सी० आई० )

निवेदकः—
श्रीकृष्णनामप्रचारकसमिति-
प्रधान मन्त्री—
श्रीपीताम्बर भट्टाचार्यः

## श्री सनातन धर्म सभा चूरू ।

चूरूस्थश्रीसनातनधर्म-परिषदोऽष्टादशवार्षिकोत्सवो भाद्रपद शुक्ल १०-११-१२ तिथिषु महता समारम्भेण सम्पत्स्यते । अत्रावसरे श्री वेद भगवतः शिबिकाऽपि, अति समारोहेन निस्सरिष्यति । सनातनधर्मस्य च प्रकाण्ड पण्डितानां मनोहरप्रभावोत्पादकभाषणानि भविष्यन्ति । अतः सर्वेषामुपस्थितिः प्रार्थनीया ।

स० मंत्री स० ध० सभा ।
चूरू B. S. Ry.

निवेदको
बी० जोशी "विशारदः"




ले०—श्री महादेवशास्त्री पाण्डेयः, साहित्याचार्यः

विश्रूयन्ते यतो वेदे मन्त्रपश्या वराङ्गनाः ।
समाधिभाजां महतामृषीणां समशक्तयः ॥ १ ॥
शास्त्रार्थे कृतबुद्धीनां वादिनामूर्ध्वरेतसाम् ।
विजेत्री स्त्री श्रुता गार्गी बृहदारण्यके यतः ॥ २ ॥
वाल्मीकिपार्श्वादायान्ती निगमाधिजिगांसया ।
अगस्त्यतोऽधिलिखिताऽऽत्रेयी यद् भवभूतिना ॥३॥
द्रौपदी, विदुला, कुन्ती, दमयन्त्यादयस्त्रियः ।
वैदुष्येऽभिहिता यस्मात् पुराणेषु मुहुर्मुहुः ॥ ४ ॥
गृहे विहरमाणानां बालानां देशसम्पदाम् ।
शिक्षा विनिहिता सर्वा यस्मात् स्त्रीष्वेव नैत्यिकी ॥५॥
आयुष्याहारसम्पत्तिः प्रबन्धो गृहसम्पदाम् ।
शिक्षितास्वेव योषित्सु स्थिरं यस्मादहर्निशम् ॥६॥
विदुषां वीर्यसम्पत्तिजुषां काले शुभेऽशुभे ।
कार्यानुष्ठानसम्पत्तौ स्त्रीषु शिक्षा यतो ध्रुवा ॥ ७ ॥
ज्ञानजन्ये परामोदे सर्वानुभवसाक्षिके ।
योग्यता सत्त्वसम्पत्तावधर्म्या च पृथक्कृतिः ॥ ८ ॥
पाश्चात्यभाषाणां शिक्षा प्रकृतीनां गिरां तथा ।
दीयते दास्यते यत्नात् सर्वस्त्रीभ्यो यतो द्रुतम् ॥ ९ ॥
अतोऽधर्म्यात् प्रधानत्वात् देशसम्पत्तियोगतः ।
पाश्चात्यभाव-संस्कार-वैमुख्यात् सुखवृद्धितः ॥१०॥
सौकर्य्याच्चाथ संवादात् सर्वसद्व्यवहारतः ।
सर्वाः कुमार्यः शिक्ष्यन्तां दैवीं संस्कृत्रिमां गिरम् ११
विद्वद्भिश्चैव सर्वैश्च छात्रैः पाठालयैः शुभैः ।
वाराणस्यां विशेषेण यदियं संस्कृता पुरी ॥ १२ ॥
भवन्तः परमेशश्च भावनां नो हृदि स्थिताम् ।
पूरयेयुरिमामन्ते प्रार्थयामः पुनः पुनः ॥ १३ ॥






तिप् तिप् तिपेति स्वनितं वितन्वत्
आगन्तुकानां नयनानि कर्षत् ।
रौप्याः शलाका इव तोयधारा
उच्चैर्विमुञ्चच्छ्विमेति यन्त्रम् ॥ १ ॥
चित्तं नराणामिव कामनाभि—
र्धाराभिरूढं मुहुरुच्छलन्तम् ।
क्रमेणपार्श्वं परिवर्तयन्तं
तं कन्दुकं भो ! अवलोकयध्वम् ॥ २ ॥
जाता अभिन्ना ऋजवः समाना
धारा इमा यन्त्रमुखात्स्रवन्ति ।
किन्तून्नतिं प्राप्य पृथग्भवन्त्य—
आशासु शीर्णा शतधा पतन्ति ॥ ३ ॥
आलोकसम्पर्कसमुज्ज्वलाभाः
कीर्णाः समन्तान्निपतन्त्यधस्तात् ।
व्यस्ता निपाने जलबिन्दवः किं
मुक्ताफलानामुतवृष्टिरेषा ? ॥ ४ ॥
धाराः कणा बुद्बुदशीकराश्च
इत्येवमासाद्य तु नामरूपम् ।
जलं जले संमिलदेतदाह
जीवः कथं ब्रह्मणि यात्यभेदम् ॥ ५ ॥

...यमाना जलबिन्दुपातं
ध्मातोदराः सुन्दरमुल्लसन्तः ।
बुद्बुदा यान्ति नु पश्यतां नो
हा हन्त ! वस्तुक्षणभङ्गुरत्वम् ॥ ६ ॥

...सारयन्बर्हमतीवहृष्टः
पर्जन्यवर्षामवयन्वराकः ।
...राप्रपातोद्भव-चारुशब्दं
शृण्वन्नयं नृत्यति मत्तबर्ही ॥ ८ ॥

...ण पृथ्वी परिषिच्यते यत
यन्त्रं तदेवर्णमपाचिकीर्षत् ।
...त धारा उपरि प्रकीर्य
मार्गं सुरणां प्रतिषिञ्चतीव ॥ ८ ॥

...य गीतं नयनाय शीतं
चित्ताय शातं मतये प्रसादम् ।
...रमुत्सर्जयते कलाय
यन्त्राय तुभ्यं स्पृहयामि नित्यम् ॥ ९ ॥

( बहादुरचन्द्रः शास्त्री )

## रामोलक्ष्मणमब्रवीत् ।

एकदा कश्चिद्रामानुयायी ( *वैरागी ) छात्रो नगरे भ्रमन् कस्यचित्पण्डि-...तस्य मुखात् "रामो लक्ष्मणमब्रवीत्" इति वाक्यमशृणोत् । स वराकः ...सि बहुधा विचारयन्—निरुक्तवाक्यात् ...रामचन्द्रस्यार्थकः, लक्ष्मणः-लक्ष्मणदेशस्य बोधकः—इति शब्दार्थं निर्धारितवान् । पर 'मब्रवीत्' इत्यस्य किमर्थो भविष्यतीति चिन्तयन्निजसहपाठि-वर्गस्य समीपं जगाम, पप्रच्छ च तान् 'मब्रवीत्' इत्यस्यार्थम् । सर्वे ते परस्परं बहुतर्क-वितर्कैः 'मब्रवी' इति दीर्घ-ईकारान्तः सीताया नाम साधितवन्तः । परं 'त्' कारस्यार्थो नाद्यापि ज्ञातः । अतस्ते पर-मोद्विग्नमानसा निजाचार्यचरणानामुपकण्ठेऽगमन् । अकथयंश्च—

भगवन् ! 'रामो लक्ष्मणमब्रवीत्' इति वाक्ये-रामः, लक्ष्मणः, सीता, इति नामानि ज्ञातानि, परन्तु 'त्' कारस्यार्थो न ज्ञायते कृपया स्फुटीक्रियताम् ।

आचार्यपादाः—भो मूर्खाः ! एतावान्समयो ममोपकण्ठेऽतिवाहितः, किमद्यापि न ज्ञायते; पुच्छयुक्तस्य तकारस्यार्थः । बालिशाः ! 'त्' कारोऽत्र लाङ्गूलिनं हनुमन्तं द्योतयति । तज्ज्ञातम् !

छात्राः—आः भगवन् ! ज्ञातम् । धन्या गुरवो धन्याः ! यैः पुच्छयुक्तस्य तकारस्यार्थो हनुमानिति निर्दिष्टः, हूँ, हुँ, धन्या गुरवो †धान्या गुरवश्चेति शिरः चालितवन्तः ।

चक्रधरशर्म्मा बहुगुणः ।

---

* विरागिणः प्रायः शब्दानामर्थं स्वेच्छया निरर्गलं स्वाभिमतं कुर्वन्ति ।

† तेषामन्ते धन्यधान्ययोरपि विशेषो न स्यात् ।

---

## सूचना ।

सौराषाढश्रावणयोः सुप्रभातं विलंबेन प्रकाशितं, तत्र सर्वेषां संपादकादीनां शरीरा-स्वास्थ्यं हेतुः । सत्वरमेव भाद्राङ्को यास्यति भवतां सविधे ।　—सम्पादकः

# वैदिकर्षीणां समुद्रज्ञानम्

( लेखकः—पं० कृष्णदत्तभारद्वाजः शास्त्री, बी. ए. )

सम्प्रति खल्वाङ्गलदेशीया विद्वांसो वेदानधीत्य भारतीयानां प्राचीन-सभ्यताविषये यल्लिखन्ति तन्न सर्वथा निर्दोषम् । संस्कृत-साहित्य-निष्णातेन ऑर्थर ए. मैकडॉनल नाम्ना महोदयेन वेदानां पौरुषेयत्वं[1] प्रतिपाद्य "ऋग्वेदसमये आर्याः समुद्रेण परिचिता नासन्" इत्युक्तम् । स्वमतपोषणे तेनेमा युक्तय उपन्यस्ताः ।

प्रथमन्तावत् सिन्धु-( नदी )-सागर-सङ्गमे सिन्धोरनेकविभागानां वर्णनं वेदे नास्तीतिहेतोर्ज्ञायते यत् तेषामृषीणां सागरज्ञानन्नासीत् ।

द्वितीयम्, आधुनिकजनैरुपसागरं यथा मत्स्यमारणमनुष्ठीयते तथा ऋग्वेदे वर्णनं न कृतम् । यद्यपि बहूनां पशूनां विहङ्गमानाञ्च नामोल्लेखो विहितस्तथापि मत्स्यशब्दस्य केवलमेकवारमेव प्रयोगः । अतः समुद्रोऽज्ञात एवासीत् ।

तृतीयम्, ऋग्वेदे समुद्रोपमाऽभावः । अतो ज्ञायते यत्ते वैदिका ऋषयोऽज्ञातसागरा अभूवन् ।

चतुर्थम्, ऋग्वेदप्रयुक्तेन समुद्रपदेन सिन्धुसरिदेव व्यजतेऽतो हेतोर्मुनीनां समुद्रस्य ज्ञानन्नाऽऽसीत् ।

पञ्चमम्, समुद्रे गमागमौ नासीत्, जलयात्रानद्या मेव प्रचलितत्वात् ।

एतासां युक्तीनां सन्तीमाः प्रत्युक्तयः ।

( १ ) ननु सिन्धोरनेक विभागव[र्णनस्य] वेदेऽदर्शनात्प्राचीना आर्याः समुद्रेण परि[चिता] नाऽऽसन्निति न । वेदे निखिलपदार्[थ]वर्णनस्याशक्यत्वाद्विशिष्टानामेव वस्तूनामुल्लेख[ः] अर्वाचीनजनमतानुसारं लवणप्रधाने पञ्चनद[े] ऋषिभिर्निर्मिते ऋग्वेदे लवणस्योल्लेखम[भावात्] किमिदं वचो युक्तं स्याद् यद् वैदिका ऋ[षयो] ऽलवणमेव खाद्यमाहुः ? नहि, एतादृग्वचो नि[तान्तं] भ्रान्तमेव स्यात् ।

( २ ) ननु समुद्र-सञ्जात-मत्स्यमार[ण]ऋग्वेदेऽनुल्लिखितत्वादार्य्याः समुद्रं न अज्ञि[रे इति] न । परिसंख्यावाक्यैर्जीवानां नैसर्गिकीं मांस[भक्षण]प्रवृत्तिं निरोधयति वेदे मत्स्यमारणवर्णनस्य [स]ोच्छ्राऽऽकाशकुसुम लाभ-कामना-तुलामधिरो[हति] ।

( ३ ) ऋग्वेदे समुद्रोपमाऽभाव इति [कथन]मपि न युक्तम् । समुद्रपदपर्यायः खलु अ[र्णव]शब्दः । महामहाजलाशयत्वादेव समुद्रोऽर्णव[इति] कथ्यते । क्वचित्तु वेदे अर्णवशब्दः समु[द्रस्य] विशेषणमस्ति, क्वचिच्च स स्वतन्त्ररूपेणाऽपि प्रयु[क्तो]ऽवलोक्यते—यथाऽघमर्षणसूक्ते "ततः स[मुद्रो] अर्णवः समुद्रादर्णवात्" इत्यत्र विशेषण[त्वेन] प्रयुक्तः । तथा "मुहान्केतु रर्णवः सूर्यस्य" इत्यस्मिन्पदे स्वतन्त्रतया प्रयोगः । अर्णवः अ[र्थात्] सागरः इव विस्तृतश्चलो वा सूर्यस्य केतुः । [अत्र] समुद्रेण सह उपमा विशदैव ।

( १ ) लेखकमते तु वेदानामपौरुषेयता ।

(४) ननु समुद्र-पदेन सिन्धुनदे व्यज्यमाने ...ज्ञानमृषीणान्नाऽभूदिति चेन्न । सन्ति भूयिष्ठा ...यत्र समुद्रशब्देन सागर एव ध्वन्यते— ...तार्थम्

"...समुद्रार्था याः शुचयः पावकाः
...आपो देवीरिह मामवन्तु"

...येषां सागर एव प्राप्तव्यं स्थानम् तानि ...ति मा पालयन्तु । अत्र समुद्रपदात् सिन्धु-...नदे मानाभावात्सागर एव वाच्यः ।

...महोदयेनापि

"समुद्रज्येष्ठाः सलिलस्य मध्यात्
...माना यन्त्यनिविशमानाः"

...व्याख्यावसरे "Having the *ocean* ...*chief* अर्थात् सागरो यासामपां प्रधानम्" ...क्तम् । अतः स्पष्टमेव वदतोविरोधः । ...साम्प्रतं वैदिकर्षीणां समुद्रज्ञानम् ।

(१) ऋषीणां समुद्रज्ञाने सिद्धे, वेदे च ...शब्देषु विद्यमानेषु कथंकारं कोऽपि वक्तु... ...यत्ते समुद्रे जलपथेन यात्रान्नाऽकार्षुरिति । ...तस्तु ऋषीणां कूप-सरः-सरित्-सागरादि-विविधानां जलाशयानां ज्ञानं सिध्यतीति ...। प्रमाणं चात्रायम्मन्त्रः—

"या आपो दिव्या उत वा स्रवन्ति
खनित्रिमा उत वा याः स्वयंजाः
समुद्रार्था या शुचयः पावकास्ता
आपो देवी रिह मा मवन्तु" (ऋ० ७,४९,२)

"इति न शुष्कं सरसी शयानम्" ७।१०३।२
"सरो न पूर्णमभितो वदन्तः" ७।१०३।७
"आर्ष्टिषेणो होत्र मृषिर्निषीदन्दे-
वापिर्देवसुमतिं चिकित्वान् ।
स उत्तरस्मादधरं समुद्रमपो
दिव्या असृजद् वर्ष्या अभि" ॥

"समुद्रः कस्मात् ? समुद्द्रवन्त्यस्मादापः, समभिद्रवन्त्येनमापः, सम्मोदन्तेऽस्मिन्भूतानि समुदको भवति, समुनत्तीति वा" निरुक्तम् ॥ इति

—∘◇∘—



## ॥ पृथिवीशयनम् ॥

(ले०—श्री विन्ध्येश्वरीप्रसादपाण्डेयः, ज्यौतिषाचार्यः, ज्यौतिषतीर्थः)



यद्यपि महर्षिप्रणीतेषु प्राचीनग्रन्थेषु पृथिवी शयनविषयमवलम्ब्य न कुत्राऽपि विचारः समुपलभ्यते तथापि अर्वाक्त्वस्तु—

"प्रद्योतनात् पञ्चनगाङ्कसूर्य-नवेन्द्र षड्विंशमितानि भानि ।
शेते मही नैव गृहं विधेयं, तडागवापीखननं न शस्तम्" ॥

इति मन्यते । सूर्यनक्षत्रात् पञ्चमेसप्तमे नवमे, द्वादशे, एकोनविंशतौ, षड्विंशतौ च दैनिके चान्द्रे भे मही शेते । तत्र च तडागवापीकूपादि-

खजनं, गृहनिर्माणं च न कार्यम् इति पद्यार्थः ।

नव्यास्तु—"एतदाधुनिक विदुषां कपोलकल्पनामात्रम् । अन्यथा यदिशास्त्र संमतं चेत्तर्हि निखिलशास्त्र-विषयपारगाः प्रतिभाशालिनो महर्षयः अवश्यमेवास्मिन्विषये स्वमतं स्वग्रन्थेषु प्रकटीकुर्युः" इति वदन्ति ।

वयन्तु भवतु नाम 'पृथिवीशयन'संज्ञा कल्पिता । तात्पर्यं तु एषां ऋषिसंमतमेव । यतो हि पृथिवीशयने शुभकार्य निषेधे एवैषामभिप्रायः । तच्च महर्षिमतसंमतमेव । तेऽपि अद्यतन विद्वन्मतानुसारेण पृथिवीशयनसमयत्वेन गृहीतेषु नक्षत्रेषु शुभकार्यनिषेधं मन्यन्ते एव ।

यथाह वराहः—

" सूर्यो द्वादशमृक्षं षष्ठं गुर्ववनिजस्तृतीयंतु ।
संलक्षयति दिवाकरपुत्रोऽष्टमलग्नतः पादैः ॥" इति ।

एतेन सूर्य नक्षत्रात् द्वादशो दैनिको नक्षत्रो ऽनिष्टः शुभकार्यायेतिस्पष्टः । तच्चोपर्युक्तविद्वन्मतानुसारि । एतस्यफलमपि तत्रैव—

" खेलैत्ता वित्तहरी नित्यंकौजी विनिर्दिशेन्मरणंम् ।
चान्द्री नाशं कुर्यात् बौधी नाशं वदत्येव "॥ इति ।

नारदोऽपि—

"भूकम्पः सूर्यभात सप्तमर्क्षे विद्युच्च पञ्चमे-
शूलोऽष्टमे नवमेऽशनिरष्टादशे ततः ।
केतुः पञ्चदशे दण्डश्चोल्का एकोनविंशते-
निर्घातपातसंज्ञश्च ज्ञेयः सनवपञ्चमे "॥

इति । एभिः सूर्यक्षात् चान्द्रः पञ्चमः, सप्तमः, नवमः, द्वादशः, एकोनविंशश्च शुभाय नेति प्रतिपादितम् ।

अपि च—

" सूर्यभात् गणयेच्चान्द्रं सप्तभिर्भागमाहरेत् ।
एवं पञ्च च चत्वार आड़लो याति निश्चयात् ।
त्रिषट्के भ्रमणं शेषे द्वौ सप्तम्यान्महाड़लः" इति ।

अनेन पृथिवी शयनस्य सर्वाणि नक्ष संगृहीतानि ।

अस्य फलं वशिष्ठो यथाह—

"एकविंशन्महादोषास्त्वेते ब्रह्म मुखोदिताः
कदाचिन्नैवसीदन्ति गुणानां कोटिकोटिभिः ।—
विवाहे विधवा नारी, मरणं व्रतबन्धने-
प्राणनाशः प्रतिष्ठायां सीमन्तेगर्भनाशनम् ।
नवान्नभोजने मृत्युः कृषौ तत्फलनाशनम्-
कर्तुर्नाशो गृहारम्भे प्रवेशे पतिनाशनम् ।
यात्रायां कर्तृनाशः स्यात् युद्धकाले विशेषतः
लभ्यते सुमहत्पुण्यमेषु श्राद्धादिकर्मभिः ॥ इति-

एवं चैषु श्राद्धंकुर्यात् तदेव पुण्यकरं न कृत्यम् ।

अपि च—

" यात्रायां च हलप्रवाह समये चौर्ये च संधौ तथा
कूपारामतड़ागवन्धनविधौ पापर्द्धिदुर्गगृहे ।
अश्वेभोष्ट्ररथादिरोहणकृतौ त्याज्यं सदैवाड़लम्,
यत्नादत्र शुभेषु कङ्ग विधौदोषो न तस्य क्वचित् ॥"

एतदपिफलनिर्देशकम् । प्रायः पूर्वपद्यार्थसं एवञ्च-उपरिनिर्दिष्टपद्यैः प्राचीना महर्षयः येषु भेषु शुभकार्यनिषेधः उक्तः तान्येव पृथ्वी समयेन नव्यैरपि गृहीतानि । तेषु शुभकार्यनि श्चोक्तः । इत्थं तात्पर्यविरोधाभावात् इमे नाऽऽ र्हाः । मन्तव्यं चैषांमतम् महर्षिमतानुसारि । च लाघवार्था । यदि च संज्ञयैव विरोधस्तत्र षये न हस्तक्षेपः किन्तु पृथिवीशयनेन निर्दिष्ट

...कल्पनामात्रमित्याक्षेपस्तु महानुचित ...गुणामग्रे निवेदयामः ।

—··०◊०··—

## सेठिया-विद्वत्समाजः ।

...तमस्तु विदुषां यत्खलु वीकानेर- नगरे 'सेठिया- ...र्थिक-संस्थाछ' सेठिया-विद्वत्समाजो नाम विदुषां ...गडस्य शुक्लायां द्वितीयायां समपद्यत । अस्य ...स्थायि संग्रन्थनमपि जातम् । प्रति-प्रतिपदस्य ...साधारणमधिवेशनं सुनिश्चितम्, तत्र विदुषां ...समस्या-पूर्तयः, कविताश्च सव्यवस्थं पठ्येरम् । ...वार्षिकेऽधिवेशने सर्व-श्रेष्ठो निबन्धः सादरं ...यात् । छात्राणामुत्साह-प्रदानाय तु प्रतिपक्षं- ...नमः सज्ञतः ।

...यतेऽनेन समाजेन संस्कृत-भाषायाः साहित्यस्य ...समुन्नतिः । तदेतत्सर्वमपि श्रीमतां श्रीभैरोदान ...विपुलेन दानेन सम्पद्यत इति तत्कृते नैकशो ...।

—किशोरीदास वाजपेयी शास्त्री.

## संस्कृतच्छात्रसम्मेलनम् ।

...विषयः यदत्रमोदफलपुरीयछात्रनिकरैरकें "संस्कृत ...लनम्" स्थापितं । यत्र च सुमधुरं भावगर्भितं संस्कृ- ...रकं छात्राणाञ्चातिलाभकरं व्याख्यानं संस्कृतमध्ये- ...ः संस्कृतविद्भिर्देवाग्घितैषिभिर्विद्वद्भिश्च प्रदीयते । ...स्य चतुर्थमधिवेशनं माघशुक्लवसंतपञ्चम्यां (२७-१-२८) दिने विशिष्टप्रकारेण श्रीमत्पण्डित ...मिश्रमहोदयानां आयुर्वेदाचार्य्याणां वैद्यकुलके- ...संस्कृतोन्नत्यैकस्वभानां सभापतित्वे समजनि । ...पि विदुषां लालित्यमयं भाषणं गीर्वाणवाण्यां ...। सभापतिमहोदयानाञ्चान्ते छात्राणामुपदेशरूपं ...द्धारकं व्याख्यानं समभूत् । यस्यप्रभावः छात्रेषु ...जायत । आशास्यते यद्येवं सर्वत्र संस्कृतमातुरुन्नत्यै ...ने तर्ह्यचिरादेवेयं देवभाषापरितः विलोक्येत ।

निवेदक—

मंत्री—मोदफलपुरीय संस्कृत-छात्र सम्मेलनस्य

# समालोचनम्

*विद्या ।*

हिन्दीमासिकी पत्रिका । सम्पादकः गोपीवल्लभ उपाध्यायः । मालवविद्यापीठ-गुरुकुलस्य मुख- पत्रिका, तत एव प्रकाश्यमाना । प्राप्तिस्थानम्— मालवविद्यापीठः, राऊ इन्दौर । वार्षिकं मूल्यम्—२) ।

अस्याः पत्रिकायाः द्वितीयं वर्षम् प्रचलति । पत्रिका सुसम्पादिता, सुरुचि-सम्पादिता च वर्तते । लेखाः समुन्नताः, अभिनव-विषयका जीव- न-पूर्णा भवन्ति । भाषाऽपि सजीवा । एषा साफ- ल्यमनुव्रजेदिति कामयामहे ।

*रामः ।*

सञ्चालकः—रामानुग्रहशर्म्मा कथावाचकः । हिन्दी-मासिकम् । सम्पादकः-पं० जगन्नारायणदेव शर्म्मा, विशारदः, साहित्यशास्त्री । वार्षिकी पूजा-३) प्राप्तिस्थानम्—ढिगवस कोठी, पो० लङ्का, काशी ।

पत्रमिदं रामभक्तानां कृते नितरां स्पृहणीयम् । सम्पादकोऽस्य साहित्यज्ञ इति साहित्यसम्ब- न्धिनो लेखाः, कविताश्च तिष्ठन्ति, समाजसंशो- धकमिदम्, अन्यत् सर्वं रमणीयम् ।

*हिन्दी-गल्प-माला ।*

कथामयी हिन्दी मासिकी पत्रिका । सम्पादकः- अम्बिकाप्रसादगुप्तः । प्रकाशकः—हिन्दी-ग्रन्थ- भाण्डारः, काशी, मूल्यम्—२॥)

पत्रिकायामस्यां प्रतिमासं सुमनोहराः हृदय- हारिण्यः पञ्चषाः कथास्तिष्ठन्ति । यद्यपीयं महान्तं साहित्यस्याङ्गं पूरयितुं प्रवृत्तास्ति । तथापि नास्याः स्थितिः समीचीना । अस्याः समुन्नतिं कामयामहे ।

१९८५

## वर्षेऽस्मिन् आरा-विद्वत्समिति-संस्कृतो-पाधिपरीक्षासु प्रविष्टानां परीक्षार्थिनाम्

## परीक्षाफलम्

### आयुर्वेदशास्त्री

द्वि० श्रे०

(१) जगलाल मिश्र, सरवट, गया ।
(२) चन्द्रशेखरदत्त मिश्र, अरवल, गया ।

### न्यायशास्त्री

द्वि० श्रे०

(१) देवनारायण मिश्र, बहोरनपुर, शाहाबाद

### व्याकरण-विभूषण ।

द्वि० श्रे०

(१) धनेश्वरोपाध्याय, ब्रह्मनौली, बलिया ।
(२) केशवोपाध्याय, सोनदिया, शाहाबाद ।

### आयुर्वेद-विभूषण ।

द्वि० श्रे०

(१) गङ्गापति पाठक, बलिया ।
(२) गङ्गाधर पाठक, बलिया ।
(३) रामनरेश पाण्डेय, जितौरा, बलिया ।
(४) इन्द्रदेव पाण्डेय, कुरेजी, बलिया ।
(५) भागवत शर्मा, कसाप, शाहाबाद ।

### ज्यौतिष-प्रवेश ।

द्वि० श्रे०

(१) रामेश्वर पाण्डेय, कुरेजी, बलिया ।
(२) रूपधारी द्विवेदी, बेलाउर, शाहाबाद ।

### व्याकरण प्रवेश ।

प्र० श्रे०

(१) शिवकुमार पाण्डेय, धनौती, बलिया
(२) शालिग्राम ओझा, बन्धा, शाहाबाद

द्वि० श्रे०

(१) रामधारी उपाध्याय, ब्रह्मनौली, ब
(२) हरिहर त्रिपाठी, बैजलपुर, बलिया
(३) वाराणसी पाण्डेय, अरक, शाहाबाद
(४) विष्णुदत्त शर्मा, रमाला, मेरठ ।
(५) चन्द्रभानु शर्मा, ननदी, सहारनपुर
(६) सुखलाल शर्मा पालीवाल, न होशंगाबाद ।
(७) सुरेन्द्र शर्मा, ललुआनगरा, बदायूँ
(८) आशाराम शर्मा, हरिद्वार, सहारनपुर
(९) होशियारसिंह बर्मा, ढिकोली, मेरठ
(१०) लीलापति शर्मा, पावटी, बिजनौर
(११) शुकदेव शर्मा, पजाऊ, गढ़वाल ।
(१२) देवराज शर्मा, हरिद्वार, सहारनपुर
(१३) नारायणदत्त शर्मा, बांदली, शिमला
(१४) नित्यानन्द शर्मा, तुसरड, नैनीताल
(१५) रेवतराम शर्मा, सीम, गढ़वाल ।
(१६) लक्ष्मणदत्त शर्मा, ग्वालियर ।
(१७) सुमेरसिंह वर्मा, ढिकौली, मेरठ
(१८) अम्बिकादत्त शर्मा, सोमना, अली
(१९) कुञ्जविहारी शर्मा, पिडसरा, मैन
(२०) रामजीवन द्विवेदी, कणसर, शाह
(२१) तारकेश्वर पाण्डेय, चौसा, शाह
(२२) कपिलदेव पाण्डेय, कुरेजी, बलि
(२३) श्रीराम पाण्डेय, ”

हरिप्रसाद द्विवेदी, वेलाउर, शाहाबाद ।
शिवकुमार पाण्डेय, लक्ष्मणछपरा, बलिया ।
देवकुमार पाण्डेय, तेघरा, शाहाबाद ।
रामजन्म त्रिपाठी, छोटससरांव, शाहाबाद ।

प्रकाशकः—
*श्रीयुगलकिशोर झा शर्मा*
उपमन्त्री ।

## ...त में विज्ञापन छपाने के नियम।

...लिखा भाव स्थाई समझना चाहिये।
...यतके अभिलाषी सज्जन पत्रव्यवहार ...का कष्ट न उठावें ।
...पन दाताओं को यह भी लिखना चाहिये —"यह विज्ञापन इतने इञ्चमें तथा एक ...वा दोनो कालममें दिया जावै"।
...सर्वथा अग्रिम आना चाहिये
...भरके विज्ञापन दाता अपने विज्ञापनके ...को ३ महीने बाद बदल भी सकते हैं ...साइज वही रहेगा ।
...विज्ञापन दाता १०) से अधिक निम्न निर्दिष्ट ...के अनुसार एक साथही भेजेंगे उनके लिये ...रुपये पर -) एक आना छोड़ दिया ...जायगा ।

| टाइटिल | अन्दर |
|---|---|
| ...प्रतिवार ) ७) | ५) |
| " ४) | ३) |
| " २॥) | २) |
| " १।) | १) |

...विज्ञापनकी ( कोड़ पत्र की ) बंटाई ...देनी ।

# सिर्फ १२) में रसवैद्य

**शीघ्रता कीजिये ! रसयोगसार नया ग्रन्थ खरीदिये !**

## निर्माता—वैद्य पं० हरिप्रपन्नजी शर्मा

इस ग्रन्थ में तमाम रस प्रयोगों का संग्रह है और सरल हिन्दी भाषानुवाद है। कठिन स्थलों पर टिप्पणी दी गई है । इसके उपोद्घात में आयुर्वेद का सम्पूर्ण इतिहास है उसके साथ २ पाश्चात्य शारीर की तुलना भी की गई है। उपोद्घात सहित पृष्ठ संख्या १००० के लगभग है इस ग्रन्थ में १०८ ग्रन्थों से ( हस्तलिखित ५५ मुद्रित ५३ ) रस प्रयोगों का संग्रह किया गया है। इसका ३०० पृष्ठों का संस्कृत और अंग्रेजी में लिखा हुआ उपोद्घात वैद्य डाक्टरों के लिये तो बड़ा ही उपयोगी है। अतः इस ग्रन्थ को अवश्य प्रत्येक मनुष्यों को अपने पास एवं सार्वजनिक पुस्तकालयों में रखना चाहिये ॥ बढ़िया जिल्द होने पर भी कीमत १२) डाक खर्च अलग । चतुर्थांश मूल्य पेशगी भेजना चाहिये।

मिलने का पता—
**वैद्य पं० हरिप्रपन्नजी,**
श्रीभास्कर औषधालय तीसरा भोईवाड़ा, बम्बई ।

अतीत—१९८१-८२-८३-८४ सम्वत्सराणाम्

# सुप्रभातम् ।

## प्रथमवर्षस्य—१९८१

शोभनबन्धैः पुस्यकाकृत्या निबद्धम् । मूल्यम्—६) षण्मुद्राः । मार्गव्ययः पृथकूनास्ति

## द्वितीयवर्षस्य—१९८२

प्रथमाब्दवदतिमनोहरबन्धबद्धम् । मूल्यम्—५) पञ्चमुद्राः । मार्गव्ययः पृथङ्नास्ति ।

## तृतीयवर्षस्य—१९८३

पूर्ववत् बद्धम् । मूल्यम् २॥) सार्द्धमुद्राद्वयम् । मार्गव्ययः पृथक्

## चतुर्थवर्षस्य—१९८४

अतिमनोहरमिदम् निबद्धम् । मूल्यम् २॥) सार्द्धमुद्राद्वयम् । मार्गव्ययः पृथक् ।

प्रकीर्णाङ्काः

प्रकीर्णाङ्काः स्वल्पा एव विद्यन्ते। येषां कस्यचनाङ्कस्याभावो भवेत्ते नूनं शीघ्रतां कुर्वन्तु

प्रथमवर्षस्य प्रत्येकाङ्कस्य मूल्यम्—।) आ चतुष्टयम् । अङ्काः—आदर्शः, १, ४, ६, ११

द्वितीयवर्षस्य—प्रत्येकाङ्कस्य मूल्यम्—॥ आणकत्रयम् । अङ्काः—२, ३, ५, ६, ७, ११, १२.

तृतीयबर्षस्य प्रत्येकाङ्कस्यमूल्यम्—=) आ द्वयम्, अस्यसर्वेष्यङ्काः सन्ति ।

चतुर्थवर्षस्य प्रत्येकाङ्कस्य मूल्यम्—।) आ चतुष्टयम् । अस्य सर्वेष्यङ्काः सन्ति ।

जिघृक्षुभिस्त्वराकार्या । पत्रव्यवहार

व्यवस्थापकः—

सुप्रभातकार्यालय, का

( Benares City

# सुप्रभात-ग्राहका विज्ञाप्यन्ते ।

१९८५ वैशाखीय विशिष्टाङ्कश्चिरान्मुद्रितो विद्यते, ये खलु विशि ङ्कमप्राप्य कार्यालये तदर्थं पत्राणि प्रेषयन्ति । ते विशिष्टाङ्कस्य वि साहाय्यमाणकचतुष्टयं ।) चिटिकाद्वारा, वार्षिकमूल्येन वा सह सत्वरं प्रे विशिष्टाङ्कमासादयन्तु । तेषां विशिष्टाङ्कः सुरक्षितो विद्यते । तैर्न चिन्ता कर्तव्या । मन्यामहे, बहुभिर्ग्राहकैरेषा सूचना न पठितेति वारं विशिष्टाङ्ककृते पत्रं प्रेषयन्ति । साम्प्रतमुत्तरं न दास्यामः ।

—व्यवस्थापक

## सुप्रभात-नियमाः ।

) सुप्रभातमिदं सौरमासस्यान्तिमे सप्ताहे
ाम्भविष्यति ।

) एतस्य वार्षिकम्मूल्यम्—समाजनियमा-
माननीयेभ्यः—१२) मुद्राः, सहायकेभ्यः—
छात्रेभ्यश्च १॥) मुद्रा—भविष्यति ।

) अग्रिममासस्य प्रथमे पक्षे यस्य ग्राहकस्य
ं न गच्छेत्, तेन नूनं पत्रालये समन्विष्य
पत्रं प्रहेयम् । तदा 'सुप्रभातं' प्रेषितं
दि ग्राहकाः पत्रं न प्रेषयिष्यन्ति, तदा
ानोत्तरदायी भवेत् ।

) पत्र-प्रेषण-समये ग्राहक-सङ्ख्या नूनं

---

। अन्यथा पत्रमवलोकितमेव न स्यात् ।

---

) अग्रिम-मूल्यमन्तरा सुप्रभातं न प्रदीयते,
देशद्वारा ( मनिऑॉडर ) मूल्यं प्रेषणीयम्
ासङ्केतश्च लेख्यः । वी० पी० द्वारा प्रेषणे
समधिको व्ययः स्यात् ।

) पत्रोत्तरमभिलषद्भिश्चिटिका नूनं प्रेषणी-
न्यथा पत्रोत्तरं न दीयेत ।

) लेखकैरतिसरलभाषायां लेखाः प्रेषणीयाः,
पि पठितुमवगन्तुञ्च प्रभवेयुः ।

) लेखाः पत्रस्यैकस्मिन्नेव पृष्ठे पार्श्वयोः
ाय, सुस्पष्टैः, सुवाच्यैः, सुन्दरैरक्षरैर्लि-
षणीयाः । अन्यथा न तेषां प्रकाशनं

) विवादग्रस्ताः, व्यक्तिगताक्षेप-पूर्णाः,
ुस्तक-रूपाः, लेखा न प्रेषणीयाः । प्राचीन-
सामयिकपुस्तकानां वा प्रकाशनं भवेत् ।

( १० ) छात्राणां लेखाः, संस्कृत-समाचाराः, विज्ञान-समाचाराः, नूतन-वार्ताः सादरं प्रकाश्येरन् ।

( ११ ) लेखानां प्रकाशने, अप्रकाशने, परावर्तने, अपरावर्तने वा सम्पादकस्यैवाधिकारः । को लेखः कदा प्रकाशितो भविष्यतीति सम्पादकाधीनमेव ।

( १२ ) सुप्रभाते सरल-सरसाः, भावपूर्णाः, अतिमनोहराः, कविताः प्रकाशिताः स्युः । साधारण-कविता-प्रेषणे लेखकैर्व्यर्थश्रमो न विधेयः ।

( १३ ) लेखाः, परिवर्तनार्थं समालोचनार्थञ्च पत्राणि, पुस्तकानि, 'सम्पादकः—सुप्रभातम्, काशी' अनेन सङ्केतेन; प्रबन्ध-विज्ञापनादि-विषयकानि पत्राणि च, 'व्यवस्थापकः—सुप्रभात-कार्यालयः, काशी' इत्यनेन सङ्केतेन प्रेषणीयानि ।

( १४ ) सुप्रभातस्य प्रचारो भारतस्य सर्वत्र प्रान्तेषु प्रचुरसङ्ख्यायां विद्यते । एतस्मिन् विज्ञापनदानेन महत्साफल्यं भवेत् । मुद्रिताः विज्ञापननियमाः कार्यालयतः पत्रं प्रेष्य, ग्रहीतव्याः ।

---

## सर्वतन्त्रसिद्धान्त पदार्थ-लक्षणसंग्रहः ।

गौरीशङ्करभिक्षुकृतः, द्वितीयावृत्तिः । मूल्यम्-।।।)

वेदवेदाङ्गदर्शनस्मृतिकाव्यादिशास्त्रीय-पदार्थानां २७०० लक्षणवर्णनात्मकग्रन्थो नाद्यावधि प्रकाशितः । उपयोगित्वविषये—

'ये सन्ति विषयाश्चास्मिन् ते न दृष्टाः, परत्र वै ।
अत्र चैव समावेश्य सर्वसिद्धान्तलक्षणम्' इति
काशी-मद्रासादिस्था ८६ विद्वांसो मुक्तकण्ठमुद्घोषितवन्तः ।

मनभरीदेवी, पुट्ठी, पो० जमालपुर, जि० हिसार ।

RegN. 184

## सचित्रम् सामुद्रिक रहस्यम्।

ले०—श्रीकालिका प्रसादशर्म्मा, राजज्योतिषी,

अद्भुतमिदं ग्रन्थरत्नम्, हिन्दीटीकासहितम्, अनेकचित्रविभूषितम्, नरनारीणां शुभाशुभज्ञाने नितरामुपयुक्तम्, संस्कृते सर्वथानवीनमेव। एतेन हस्तरेखानां गुरुं विनैव सम्यक् परिचयो भवति। मूल्यम् १।) मुद्रा।

## रतिरहस्यम् (कोकशास्त्रम्)

एष प्राचीनो ग्रन्थः श्रीमहाकवि कोक्कोक विरचितः। अस्मिन् कामशास्त्रसम्बन्धिन्यः सर्वा वार्ताः, पद्मिनी-शङ्खिनी-चित्रिणी-हस्तिनी-प्रभृतयः स्त्रीणां भेदाः, एवं चत्वारः पुरुषभेदाः, स्त्रीणां वशीकरणस्यौषध्यः, मन्त्राः, तत्तद्देशीयानां स्त्रीणां पुरुषाणाञ्च लक्षणानि, तेषां संयोगाः, अलिङ्गन-चुम्बनादीनां भेदाः, तेषां विशेषाश्च अन्ये च बहवो ज्ञातव्याः कामशास्त्रीयाः विषयाः सन्ति। एष ग्रन्थो नितरां सुप्रसिद्धः प्राचीनश्च विद्यते। एतस्यैका प्रतिः सर्वैरपि स्वसविधे नूनं संस्थापनीया। मूल्यम्—मुद्राद्वयम्।

## राष्ट्रभाषाभूषणम्।

ले०—श्रीगोपाल शास्त्री, दर्शनकेशरी, साहित्याचार्यः।

एतत् पुस्तकं हिन्दीभाषायां विद्यते। संस्कृतज्ञानां हिन्दीज्ञाने नितरामुपकारजनकम्। सर्वैरपि संस्कृतज्ञैरेतद् व्याकरणम् पठनीयम्। एतेन हिन्दी भाषायां निबन्धलेखन-अनुवादादिज्ञाने महत्सौकर्य स्यात्। मूल्यम्—आणकषट्कम्। मार्गव्ययः—=)

## सूर्यचरितम् वा ऋतुचरितम्

ले०—तारादत्तपन्तः, साहित्याचार्यः, व्याकरण-काव्य...

गोलविद्या-विषयकं नूतनं महाकाव्यम्

अतिसरलम्, भारतस्य विभिन्नदेशानां ... पर्वतानां ऋतूनां चात्र परिचयो कविना ... सरण्या समुपवर्णितः। गोलविषये नूतनं ... महाकाव्यम्। सर्वथा द्रष्टव्यम्। मूल्य... मार्गव्ययः पृथक्।

## गोलविद्या गोलसूत्रञ्च।

ले०—श्रीतारादत्तपन्तः, साहित्याचार्यः, काव्य-व्या...

संस्कृते भूगोलज्ञानस्य प्रधानं प्रथम... कम्। अत्र हिन्दी-भूगोल-पुस्तकवत् भार... समस्तो भूगोलः सरलतया बालानां ज्ञानाय वर्णितोऽस्ति। संस्कृत काव्येषु नाटकेषु पुरा... केषु च समागतानां देशानां नदीनां स्थाना... तानाञ्चाधुनिकी स्थितिस्तेषां नामानि च ... सर्वथा द्रष्टव्यमिदं पुस्तकम्। मूल्यम् ॥) मा...

## महाकवि बाणभट्टः।

*लेखकः—सुप्रभात-सम्पादकः श्रीकेदारनाथ ...*

हिन्दीभाषायामयमपूर्वो निबन्धः ... भट्टस्य जीवनविषये महत्वपूर्णा, मननीया ... षणा वरावर्ति। छात्राणां कृते नितरामुप... निबन्ध-बन्धः। मूल्यम् =) मार्गव्ययः -)

## सर्वेषां प्राप्तिस्थानम्



### मैनेजर, सुप्रभात कार्यालय, बनारस सिटी।

Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

सौरभाद्रपदः १९८५ वैक्रमाब्दे

September 1928.

पञ्चमी सङ्ख्या
No. 5

# सुप्रभातम् ।

संस्कृत-साहित्य-समाजस्य मुखपत्रम् ।

ततिमुदस्यद् भेदतारा विलुम्पन्-नयदधिसुरभाषाभाषि जागर्तिमुच्चैः ।
विहग-वादैराह्वयद् भाग्यभानुम्, विलसतु भुवनेऽस्मिन् सर्वतः 'सुप्रभातम्'

निरीक्षकः—

महामहोपाध्याय-श्रीदेवीप्रसादशुक्लः, कविचक्रवर्ती, साहित्य-वारिधिः

पादकः—
श्रीगोपालशास्त्री त्रिपाठी "साहित्याचार्य्यः"

व्यवस्थापकः—
श्रीगिरीशशुक्लः, "न्यायाचार्यः"

मूल्यम्—३)
भ्यः—१२)

छात्रेभ्यः—१॥)
वैदेशिकेभ्यः—५)

अस्याङ्कस्य मूल्यम् ।)

# लेख-सूची ।



# सुप्रभात-ग्राहका विज्ञाप्यन्ते ।

१९८५ वैशाखीय विशिष्टाङ्कश्चिरान्मुद्रितो विद्यते, ये खलु विशि-ङ्कमप्राप्य कार्यालये तदर्थं पत्राणि प्रेषयन्ति । ते विशिष्टाङ्कस्य (वि-साह्यमाणकचतुष्टयं ।) चिटिकाद्वारा, वार्षिकमूल्येन वा सह सत्वरं सम-विशिष्टाङ्कमासादयन्तु । तेषां विशिष्टाङ्कः सुरक्षितो विद्यते । तैर्न क-चिन्ता कर्तव्या । मन्यामहे, बहुभिर्ग्राहकैरेषा सूचना न पठितेति -वारं विशिष्टाङ्ककृते पत्रं प्रेषयन्ति । साम्प्रतमुत्तरं न दास्यामः ।

—व्यवस्थापकः




विध-विषय-विभूषितम्, अद्वितीयम्, सचित्रं संस्कृत-मासिक-पत्रम् ।

-वर्षे | सौर—भाद्रपदे । १९८५ वैक्रमाब्दीये | पञ्चमी संख्या ।

## स्तब्धः श्वेतकेतुः ।

केशवात्मजः श्रीमूलशङ्करशास्त्री (मोड़ासा)

:—(स्वगतम्) हन्त, पुत्रेण न किमप्यधीतम् । ऽद्य द्वादशेन वर्षेण संवर्धते । किं करवाणीति ?

(ततः प्रविशति श्वेतकेतू रममाणः)

—मम चक्रिका भग्ना । द्वितीयां ददातु मे ।

—(शिरस्युपाघ्राय) ददामि वत्स, किन्तु न किमप्यधीषे । धावन् कूर्दन् खेलन्नेव स्यहर्निशं, तत् किं शोभनम् ?

श्वे०—किं तदयुक्तं नाम क्रीडनं बालानाम् ? सवयस्का मे सर्वेऽप्येते कुमारा रमन्त एव ।

आ०—रन्तव्यं खलु, उताहो पठितव्यमपि । आवश्यकं तद् बालानां, तत्र न मे प्रतिषेधः । किन्तु क्रीडासक्तचेतसस्ते न पश्यामि स्वापाशनयोरप्यवकाशः । तदेव मे मनो व्यथयति । पश्य, इतरे ते सुहृदो यथावकाशं रमन्तेऽधीयते च । अस्माकं महति महीयसि गोत्रे न कोऽप्यपण्डितः समुत्पन्नोऽद्य यावत् ।

श्वे०—तात, अहमप्युत्सहे पठितुम् । तातो द्रक्ष्यति मामल्पेन कालेन विद्वांसम् । प्रेषयतु मां गुरुगृहम् ।

आ०—यद्येवं तदतीव मे रोचकम् । अद्यैव त्वां प्रेषयामि गुरुकुलम् ।

( गुरुकुले श्वेतकेतुः )

श्वे०—गुरुर्मां श्लाघते । समपाठानामहमग्रणी-
स्तेषु लब्धकीर्तिश्चास्मि। मन्ये नास्ति मादृशो-
ऽन्यः कृतविद्यः। पिता मां प्राग् निरभर्त्सयत्।
सोऽपि द्रक्ष्यति ममाप्रतिहतप्रसरं पाण्डित्यम्।
समतीतानि पठतो मे चतुर्विंशतिहायनानि।
अथाऽऽचार्यानुज्ञया गृहं यायाम्।

—:०:—

( पितृगृहे पण्डितंमन्यः स्तब्धः श्वेतकेतुः )

आ०—वत्स, सुस्नातोऽसि युवा सम्प्रज्ञश्च। कि-
मिति स्तब्ध इव तिष्ठसि ? न च किमपि
मन्त्रयसे ? ब्रूहि, केषु केषु विषयेषु पाटवं
प्राप्तं त्वया ?

श्वे०—( सावेगम् ) किमित्यनल्पजल्पनेन ! कीदृशो-
ऽहं पण्डितो जात उपाध्याय एव जानाति तत्।

—आ०( सान्त्वयन् ) सत्यं तत्, अपि तु ज्ञातव्य-
मस्माभिरपि। त्वं तु न सम्भाषसे कञ्चिदपि
किञ्चित्। कथं जानीमो वयम्।

श्वे०—( साटोपम् ) किं ज्ञातेन, न गृहे कोऽपि
जानाति मया सह वर्तितुम्; न भवान् नाम्बा
न भ्रातरो न च स्वसारः। न केषुचिद्विवेकं
विनयं वा पश्यामि !!

आ०—जात, नार्हसि मानमपेक्षितुं समस्नेहानुवर्तिषु
स्वकीयेषु। इयं हि सरणिः कौटुम्बिकी यद्
यत्र हृदयैक्यं न तत्र बाह्याचारापेक्षा।

श्वे०—किं ? कुटुम्बिनो मत्पदवीं चिन्तयितुं नार्हन्ति
यतस्तेषामहं वरिष्ठः। मम प्रखरपाण्डित्यस्य
मूल्यं न जानन्ति स्वाः।

आ०—वत्स, प्रमाद एवैष ते। को नाम न
विज्ञोऽस्मदन्ववाये ? यथा त्वया तथा स
र्व्येवमेव यथाशक्ति प्राप्ता विद्या। को दर्पस्
तज्ज्ञास्ते नाम लोकेऽस्मिन् दृप्ता ये न भवन्त्यहो
अमृतं नाम विज्ञानं मृत्युर्यैन प्रतीर्यते॥

श्वे०—आः किं ब्रवीति तातः ? किमहमन्यस
रणो विद्वान् ? मन्येऽहं विद्यानां पारदृ
किं सर्वा अप्यङ्गुलयो भवन्ति समाः ? स
मङ्गानां किं न वरीवर्ति शीर्षण्यो मूर्धा ?

आ०—अपि नाधिगतं त्वया मूर्ध्नः स्थिति
सर्वैः, सर्वेषां वा मूर्ध्ना ? परस्परमबाधम
स्वं स्वं व्यापारं यथायथं कुर्वन्तस्ते शारी
स्थितिं निर्वहन्ति। तत्रास्ति सर्वैः
प्रयोजनमवयवानाम्।

श्वे०—भवतु नाम, यथाकथञ्चित्स्यात्।
पदव्यामतो न कापि क्षतिः। न तातस
परिचयो मे पाण्डित्यस्य।

आ०—यद्येवं, तर्हि मम प्रश्नानां प्रत्युत्तराणि दास्
वत्सः ?

श्वे०—आः किमेवमुच्यते ?

आ०—चक्ष्व वत्स, येनैकेन विज्ञातेन सर्वं वि
भवति, येनाश्रुतं श्रुतं भवति, किन्तदेकम् ?

श्वे०—( विस्मयं प्राप्य )—एवं स्याच्चेन् न
ऽप्यधीयीत। अशक्यं तत्।

आ०—कथं नामाशक्यं तत् ? शृणु। यथा ज्ञातेन
मृत्पिण्डेन सर्वे मृण्मया ज्ञायन्ते पदार्थाः
“वाचारम्भणं विकारो नामधेयं मृत्तिके
सत्यम्”। यथा चान्यैर्लोहसुवर्णादिभिः

...हाकटकादयः । एवमिदमखिलं कथं न ज्ञायत ...एकेन ?

-एवंविधं न किमपि गुरुणाऽहमनुशासितः ...दाचन सोऽपि न जानीयात्; नो चेत् ...धस्य शिष्यस्य स कथं न ब्रूयात् ।

-वत्स नात्र दोष उपाध्यायस्य । न सर्वमपि ...वति पुस्तकगम्यम् । न हि वा कोऽपि भवति ...ज्ञः शालायामेवाधीत्य समुत्तीर्णः । विशालेयं ...गत्पाठशाला । तत्र प्रकृतिमनुभूयमानः सुधी- ...वति विज्ञः । क्रमेण गच्छति पूर्णताम् । ...धीस्तु यावज्जीवं भवति विद्यार्थी विनीतो ...द्धोपसेवी च ।

-(पादयोर्निपत्य)—क्षम्यताम् क्षम्यताम्, ...माद एवायं मम । "शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्" ।

-प्रीतोऽस्मि वत्स । हन्त कथयिष्यामि ते ...त्वया पृष्टम् । शृणु संक्षेपतः, तदेकं वस्तु "सत्", यस्मादिदं सर्वमाविर्भूतम् । तेन ...ज्ञातेन सर्वं ज्ञायते ।

-(सानन्दं) अहो बत, सम्प्रत्येव मम हृदय- ग्रन्थिश्छिन्ना ! निःसंशयं विवेकभानुप्रकाशेन निरस्तनिःशेषसन्तमसं मे स्वान्तमधुना मां कर्त्तव्यपथे प्रेरयति । निगमागमानां तत्त्वमद्यैव मया सम्प्राप्तं सर्वाश्च सञ्जाता विद्याः सफलाः । "गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः," एतत्सनातनं सत्यं मयाऽद्यैव ज्ञायते ।

---

## "वारिदान्योक्तिः"

रचयिता—कुलानन्द शर्मा, (शारदाभवनम्, नवानी)

( १ )

रे ! वारिवाह, यदि वारिणि तेऽस्ति सत्यम्
सत्त्वन्तदाऽधिमरु मुञ्च तथा न वा चेत् ।
व्यर्थन्तवाऽस्ति प्रथितम्भुवि वारिदत्वम्
किञ्चन्धदत्वमभियात्यपि गन्धवाहः ॥

( २ )

तोयम्प्रयच्छसि गिरौ बहुशो, न देशे,
पात्रेऽथवा जलनिधौ किमु युक्तमेतत ?
एवं स्थितेऽपि यदमुत्र नियोजितस्त्व-
न्देवाधिपा नहि किमद्य विवेचयन्ति ॥

( ३ )

त्वय्यागतेऽत्र विषये दधते पदानि
नाद्य द्विजा द्विजवरस्य कथैव कास्तु ।
कृत्येक्षणक्षणहृतानि मनांसि येषाम्
तेऽयुक्तितो जगति शासति भूभृतीव ॥

—:०:—



## श्रीकृष्ण-जन्माष्टमी

( ले०—गिरिजादत्त त्रिपाठी काशी हिन्दु-विश्वविद्यालयस्थः )

अहो ! परम-कारुणिकस्य सकल-लोकानुरञ्ज- कस्यावनितलभ्रमणलोलुपानां मानवजात्यलंकार- भूतानामाधारभूतस्य चराचरजीवलोकोपकारकस्य

जीव-ब्रह्म-विवेकहेतोर्न पुनर्मानवानामेव अपि तु सोमवाय्वादित्यप्रभृतीनामप्युपकारत्नमस्य व्रजाङ्गनाविहारिणो गोपिकाकुलललामहेतोः श्रीकृष्णस्यायं जन्मदिवसः । धन्योऽयं मासः, यस्मिँश्च जगदुपादानस्य परमात्मन आविर्भूतिः, अत एवेयं तिथिरपि धन्या, मासोऽप्यत एवान्वर्थतामाप्नोति भाद्रमास इति। भद्र एव भाद्रः स चासौ मासश्चेति व्युत्पत्या, भद्रशब्दस्य कल्याणार्थकताया दृष्टत्वात्। अस्य च किल गोपिकावल्लभस्य विषये गाढाज्ञानान्धकार-प्रलिप्तचेतसो बहुधा प्रलपन्ति यद् यस्य षष्टिसहस्राणि गोप्यो वशंवदास्तत्र कथमपि स्वप्नेऽपि जितेन्द्रियत्वं न सम्भाव्यते । परमयं ज्ञातुरपराध एव, नावगतमिदं यत् पूर्वावतारे दत्तशापो मदनोऽनेन यत् "भविष्यति विह्वलात्वत्कृतिः श्रीकृष्णावतारे", इयतीनां गोपरमणीनां मध्ये विलासपूर्वकं विचरतापि जितेन्द्रियत्वं पालितम्, सूक्ष्मेक्षणेन शास्त्रादि-पर्यालोचनया च विचारणे न कोऽप्यन्य एवंभूतो जितेन्द्रियः प्रतिभाति सहृदयान् । इत्थमेवाज्ञानिनोऽस्मिन् विषये दोषोद्भावनमाकल्य भक्तिमार्गात् विमुखा भवन्ति, परं दृश्यताम्, विचारपरायणानामपारशेमुषीकाणां भगवतां चाणक्यानामुक्तिः

"येषां श्रीमद्यशोदासुतपदकमले
नास्ति भक्तिर्नराणां ।
येषामाभीरकन्या-प्रियगुणकथने
नानुरक्ता रसज्ञा ॥
येषां श्रीकृष्णलीलाललितरसकथा-
सादरौ नैव कर्णौ ।
धिक् तान् धिक् तान् धिगेतान्
कथयति सततं कीर्तनस्थो मृदङ्गः॥"

पण्डितप्रवरश्रीजयदेवप्रणीतंगीतगोविन्दकाव्यमवलोक्य बहुशो दोषानुत्क्षिपन्ति "नास्ति श्रद्धेय" इति, परं नैतदपि समीचीनम् । विलासपरे वर्त्मनि पादौ दधतोऽपि इत्थं वर्णनमिति महत् श्रद्धास्पदम् । भिन्नरुचित्वाल्लोके सर्वैरुपायैः परमात्मोपास्य इति प्रयोजनक तद्वचनं, केचन भक्तिमार्गेण गच्छन्ति विष्णुसन्निधिं केचिच्च शृङ्गार-प्रधानबुद्ध्या । पूर्वमेवात प... श्रीजयदेवेन

"यदि हरिस्मरणे सरसं मनो
यदि विलासकलासु कुतूहलम्
मधुर-कोमल-कान्त-पदावलिम्
शृणु तदा जयदेवसरस्वतीम्॥ ३॥"

आदिकवयस्तत्र भवन्तो भवन्तो व्यासाः स्वरचितश्रीमद्भागवते स्पष्टमुक्तवन्तः

" जयति तेऽधिकं जन्मना व्रजः
श्रयत इन्दिरा शश्वदत्र हि ।
दयित ! दृश्यतां त्वांवि चिन्वते
दिक्षु तावकास्त्वयि धृतासवः ॥"

रमणविरहप्रयुक्तक्लेशविधुराया राधिकाया वचनमिदम् । पूर्वतो विजयमानोऽपि व्रजः जन्मग्रहेण अधिकं जयति, सर्वोत्कर्षेण वर्तते, च लोकमाता इन्दिरापि अनिशं सेवते, त्वयि समर्पितप्राणाः तव भक्ताः त्वां दिक्षु इतस्ततः विचिन्वते एवंभूतो राधाहृदयानन्दवर्धनः व्रज... नाहृदयमानसहंसः, अवनीतले हंस इव विराज...

इन्द्रियापि सेवमान आसीत् । तस्य विषये एवमपलापः धूलधूसरितलोचनानामेव कृते यः कौरवपाण्डवमहायुद्धे पुरतः समुप- स्वज्येष्ठानाचार्यप्रभृतीनवलोक्य युद्धात् मर्जुनं प्रोत्साह्य विराड्रूपं च दर्शयित्वा दीप-प्रदीपेनाज्ञानं तमोऽपहृत्य युद्धार्थं न, द्यूतात् पराजिते पाण्डवे दुःशासनेन हरणसमये द्रौपद्याऽऽहूतः स्वीय-शक्ति-रूपेण रक्षितवान् द्रौपदीम् । नात्र भिन्नबुद्धिः । एकोऽयं ब्रह्मविष्णुमहेश्वररूपेण त्रिधा सर्गस्थितिसंहारव्यवहारहेतुः जगतः चयान् निर्वाहयति, पृथ्वीमाहृत्य पातालं कलोचने देवगन्धर्वादिस्तुतिभिर्वशंवदः र्थया वाराहरूपं प्रकल्प्य शेषालयं प्रविश्योद्धा- न् । अथ सैवानन्दकन्दः सम्प्रदायभेदेन उपास्यते, यथा शुद्धबुद्धस्वभाव इत्यौप- , आदिविद्वान् सिद्ध इति कपिलानुवर्तिनः, कर्मविपाकाशयैरपरामृष्टो निर्माणकायमधि- सम्प्रदायप्रद्योतकोऽनुग्राहकश्चेति पातञ्जला- नः, लोकवेदविरुद्धैरपि निर्लेपः स्वतन्त्र- महापाशुपताः, शिव इति शैवाः, पुरुषोत्तम वैष्णवाः, पितामह इति पौराणिकाः, यज्ञपुरुष याज्ञिकाः, निरावरण इति दिगम्बराः, उपास्य- र्शित इति मीमांसकाः, यावदुक्तोपपन्न इति काः, लोकव्यवहारसिद्ध इति चार्वाकाः कश्चन राम इति कृत्वा उपासनां करोति । कृष्ण इति, कश्चिच्च माधव इति, नास्त्येतद्- शङ्काकलङ्कलेशोऽपि । एतावता प्रबन्धेनापि कश्चन हीनमतिर्न संतुष्यात्तदा तस्य विषये "मनुष्यरूपेण मृगाश्चरन्ति" इत्येव कथनं शोभनम् । अतएवोक्तं श्रीमदुदयनाचार्येण कुसुमाञ्जलि- ग्रन्थान्ते ।

इत्येवं श्रुति-नीति-संप्लवजलैर्भूयोभिराक्षालिते ।
येषां नास्पदमादधासि हृदये ते शैलसाराशयाः ॥
किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः ।
काले कारुणिक ! त्वयैव कृपया ते भावनीया नराः ४
अस्माकन्तु निसर्गसुन्दर ! चिराच्चेतो निमग्नंत्वयी-
त्यद्धाऽऽनन्दनिधौ,तथापि तरलं नाद्यापिसन्तृप्यते ।
तन्नाथ ! त्वरितं विधेहि करुणां येन त्वदेकाग्रतां
याते चेतसि नाप्नुवाम शतशो याम्याः पुनर्यातनाः ५

श्रीमद्भागवते प्रदर्शितं व्यासेन यत् यमुनातटे प्रेरितवंशीरवं श्रुत्वा भक्तितो धावमाना आभीर- कन्या बह्व्यश्च तत्र प्रापुः । काश्चन स्वगृहवासिभि- रवरुद्धा गन्तुमक्षमाः प्राणान् तत्यजुः । कयापि दृष्टया दृश्यतां सर्वतो भावेन श्रीकृष्णस्य नैर्मल्यं तस्य विषये व्रजाङ्गनानां भक्तिप्रादुर्भावश्च स्पष्टमुप- लक्ष्यते इति । श्रीकृष्णार्पणमस्तु



## बलिरपेद्यते ।

( ले०—बहादुरचन्द्र शास्त्री )

कालस्तोकमत्यगाद्, अहं वाष्पयानेन दिल्लीतो लवपुरमयासिषम् । मध्येमार्गं केनचित्प्रौढवयसा भद्रवेषेण पुंसा साकं मे वाकोवाकः समवर्तत । तस्य सारांशमिहोद्धरामि ।

सः—कुतः समेषि भोः ?

अहम्—दिल्लीतः श्रीमन् !

सः—अथ क गम्यते ?

अहम्—लवपुरम् ।

सः—तत्र किं क्रियते ?

अहम्—अध्ययनम् ।

सः—किमधीयते ?

अहम्—संस्कृतभाषा ।

सः—( साश्चर्यम् ) संस्कृत भाषा ?

अहम्—आम्, संस्कृतभाषामधीये ।

सः—अद्यत्वे ? अस्मिन्देशे ? अथ कं लाभं लप्स्से तदध्ययने ?

अहम्—इतरभाषाऽध्ययने को लाभः ?

सः—जीविकां सुखमाप्तुमः ।

अहम्—तत्किं भवानवैति संस्कृतेऽधीती कृच्छ्रं जीवतीति ?

सः—अथकिम् । ( सावेगम् ) कस्य गुप्तमिदम् ? को भवदीयाँस्तीर्थान् आचार्यान् शास्त्रिणोऽलङ्कारान् वाऽर्घति । कस्तान्पृच्छति ? कियद्वा ते लभन्ते ? अहन्तु तान् सदा सीदत एव प्रेक्षे । किम्पुनश्छात्राणां दुर्गतिः ! वराकाः क्षेत्रेषु भुञ्जते । भूमौ शेरते चीराणि वसते । किञ्च प्रकृत्या तामसा भवन्ति स्तोकेन लोहितायन्ते । न तेषां वचनपाटी, न व्यवहारकौशलम् । तेषां जडतामन्ये हसन्ति...

अहम्—( आहत इव ) ननु के तेऽन्ये ? वयं स्वयमेव ताँस्तथाऽवजानीमः । कृत्स्नस्यैतस्य पतनस्य वयं स्वयमेव कारणं स्मः

सः—( अक्षिविस्फारम् ) कथं कथम् ?

अहम्—कुतः कथम् ? ( सोपालम्भमिव ) ... नाधीते भवान् संस्कृतभाषाम् ? ... स्वसन्तति तामध्यापयति ?

सः—( सासूयम् ) अथ भोजनं क्षेत्रेषु कुर्वीम...

अहम्—कथं क्षेत्रेषु ?

सः—अथ पुनः कुतः ?

अहम्—पौरुषात्, परिश्रमात्, न खलु दास्या... ( तीव्रम् ) 'सुखं जीविकामाप्तुम' इतीतर... अधीमहि । धिङ्मान्द्यमस्माकम् ।

सः—( शिक्षयन्निव ) यौवनोत्तरङ्गमेवं ब्रवीषि ... भूतार्थं न वेत्सि । यस्य स्कन्धे धूः पतति, ... एव वेत्ति कथमुह्यत इति । सौम्य ! ... निर्वहेम ' इत्येव नः प्रधानं प्रश्नः, अस्य पूर्ति... च प्रथमः कल्पः ।

अहम्—सर्वमेतद्रूतम् । परं कुक्कुरजीवं कस्मा... वेम । केवलमुदरभरणार्थमेवात्मानमधो न... धर्मकर्मभ्यस्तिलाञ्जलिं दिशेम । भव... कथयतु यद्यहं मिथ्या वदामि । कोनु अस्म... अद्यत्वे स्वकं धर्मं तत्त्वतो विजानाति... सम्प्रति यथापूर्वमात्मगौरवेण वयं स्व... वक्षांस्याध्मातुं योग्याः किमु ? तथोन्नत... प्रेक्षितुं क्षमामहे वा ? धिगस्मान् ! ना... वयं हिन्दवः शिखातिलकयज्ञोपवीता... लाञ्छनानि गणयामः । गीतागायत्रीजपा... मुधा समयनाशं मन्महे । दूरमास्तां तीर्थ... देवपूजनं वा ।

सः—तत्किं सकलाया अस्या अवनतेः संस्कृत... भाषाऽनध्ययनमेव निदानं मन्यसे त्वम् ?

—अथकिम् । ( मूर्च्छन्निव ) यावत्पुत्रो र्भादपि नोदेति तावदेवास्य पितरौ निश्चिनुतः तं तथाभूतं ( दासं ) विधास्यामहे येनासौ ल्पेनैव वयसा पुष्कलं धनमाहरिष्यति इति । तमात्रं तं शुकपाठं पाठयतः "हाउ ग्वल् हि ट्. इट्. विदाउट् एभर् ए नाइफ् । हाउ ल् हि मैरि, विदाउट् एभर् ए वाइफ् इति ।" वेः परा कामना भवति यन्नौ वत्सः क्षिप्र- ङ्गलभाषामधीयीत । यथाऽल्पेनैव तेजस्वी सो भवेत् इति ।

ाङ्गलभाषायै भृशमीर्ष्यल्लक्ष्यसे ।

—नाहमीर्ष्यामि । परिदेवे खलु । (स्वगतम्) रुयै रोदिमि नु ( प्रकाशम् ) अहन्तु स्वयं पठामि । अन्येऽपि पठेयुरित्यपि वाञ्छामि । तु यथाकालम् । तद्यथा, आपञ्चविंशवर्षं ला विद्यामेव पाठयेरन् । तत्र प्रथमं संस्कृत- षैव पाठयेत । स्वधर्मश्च शिक्षयेत । ततः मं तास्ता भाषा अपि तेऽधीयीरन् । था सति भुवन्ते धर्मनिष्ठाः सन्तः स्वकं गौरवं न्तो जीविकामपि सुखमाप्नुयुः ।

था क्षुद्रतेयं तुच्छतेयं यद् धनलाभमुद्दिश्य द्यां पठेत् । "कुल्यां खनामः केदारान् ति नतु स्वयं स्नायाम तदम्बु पिबेम वा । यं जातु तत्र स्नामः पिबामो वा तत्कुल्याया ङ्गिकं फलं, न प्रधानम् ।" एवमेवाज्ञानमल- मेव विद्याया मुख्यं प्रयोजनम् । तदाश्रयेण सिस्तु तस्या आनुषङ्गिकं फलम् । यदि वयं योजनं लक्ष्यीकृत्य विद्यामधीमहि तदेय- मुक्तिः–'जीविकां सुखमाप्नुम इत्याङ्गलभाषामधी- महे'-नितान्तमपास्यते । संस्कृतभाषामधीत्य धनं न लभामहे' इत्ययं दोषश्चापि न स्पृशति । विद्या हि ज्ञानाय कल्पते । धनार्जनार्थमन्यतरानुपायानाश्र- येत । यदि कश्चिद् ग्रहिलो धनार्जनार्थं केवलमाङ्ग- लभाषाऽध्ययनमेवसाधीयांसमुपायं मन्येत तर्हि यथाकालं तदाचरेत् । आकौमारं कर्त्तव्यमिति विद्यां पठेत् । ततो वित्तं विचिनुयात् संचिनुयाद्वा ।

सः—परमेतत् सम्प्रति न सुकरम् । विरला एव सन्ति लोके ये धननिरपेक्षं संस्कृतगिरमधीयीरन् । अयमुद्धारो भूरि बलिमपेक्षते .....

एवमालपतोरावयोस्तस्य गन्तव्यं पत्तनममृत- सरो नाम प्रापत् । अथासौ हस्तस्पर्शं नमोविधिं विधाय अकाण्डवार्ताविच्छेददीनं मामौज्झत् । अधुनाऽहं स्वाँस्तरुणान् वयस्यान् पृच्छामि किं भो ? अपेक्षितं बलिं दातुं समर्थाः स्थो नवा ? भाविनीं स्वकां सन्ततिं समर्थां करिष्यथ न वा ? इति । ईश्वरस्तत्सम्पादयितुं नो बलं दद्याद्- दद्यात् ॥ शम् ॥

—:o:—

# ब्राह्मणाः पण्डिताः ।

लें०—रामोदारः ( सांकृत्यायनः ) काशिकः लङ्काप्रोषितः ।

धनैश्वर्य-बलविरहिता अपि ब्राह्मणा इतिहासोषः- कालत एव भारत-तदन्वयदेशेषु जनमानसेऽसाधा- रणप्रतिष्ठास्थानं लेभिरे । मध्यकालेऽपि माहम्मदरा- हुग्रस्यमानायामार्यसंस्कृतौ ब्राह्मणा एवोपस्तम्भदा- तारोऽभवन् । उदीच्यामनुभूतमाहम्मददुःशासनतया

अधिगतनवप्रतिभा ब्राह्मणा एव विजयनगर-महाराष्ट्रसाम्राज्यस्थापकाः। ब्राह्मणप्रतिभास्रोतस्तदापि नासीच्छुष्कम्। अन्तरायेऽभूत्केवलं गतेर्मान्द्यम्। या गम्भीरप्रतिभाऽऽभीर-गुर्जर-शक-यवनविजेतॄणां विजयेऽमोघशक्तिरिवाभासत। यस्याः संमुखे "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय" इति नीतिं चरितार्थयन्तः कति नु शतसहस्रविजना आर्यसंस्कृतिगंगाम्भसि विलीनाः स्वजना न संवृत्ताः? शकाद्यशताब्दीभवोऽवन्तिराजनहपानस्य जामाता ऋषभदत्तः (उसभदात्तो) शिलावक्षसि समुत्कीर्णयति—(पालीभाषायाम्)

" रजो खहरातस खतपस नहपानस जा [म] तरा [दि] न [क] प्रतेन उसभदातेन तिगोसतसहस [दे] ण नदिया बाणासाया सुवणतथकरेन ब्राह्मणान च सोलसगामदेन "।......

यत्र हि ब्राह्मणेभ्यः षोडश-ग्रामगोशतसहस्रदानादि समुत्सृज्यायं शकवंशजो विश्वामित्रवदेव ब्रह्मबलस्य दुर्जयत्वमूरीकरोति।

सत्स्वप्यनेकेषु प्रमादेषु पूर्वतनानां ब्राह्मणानां गुणभारः शिरसाऽऽवह्यत एवानागतार्य्यसन्ततिभिः। इत्थं अतीतं सर्वतोमुखेनातिधवलं, तथाप्यनागते किं स्थानं तैरादेयमिति मीमांस्यम्। ब्राह्मणशब्दो ह्यार्यसंस्कृतिज्ञानशेवधिभूतगीर्वाणवाङ्मयानन्योपासकभूसुरवृन्दपरः। इतरजनपदेष्विवात्रापि चिरन्तनसंस्कृतप्रवाहरक्षणमेव संस्कृतविद्वत्समुदायस्य प्रथमेतिकर्त्तव्यता। तुल्यकालिकपाश्चात्यपुरोहितव्रजेन तुलनायां, अत्र पण्डितसमुदाय उदाराशय एवातिष्ठत्तराम्। नात्र भूगोल-भूभ्रमण-मन्त्रद्रष्टारो 'गेलेलियो'वत् अविद्याहुताशशलभीभूताः। अद्यप्रभृत्येवास्माकं संस्कृतिरुन्मुक्तप्रवाहाति... नास्ति तिरोहितं मंत्र-ब्राह्मणोपनिषत्सूत्र-स्मृ... राणक्रमानुसारिणाम्। तथाप्यद्य चिरघनति... च्छन्ननिशावसाने स्वच्छन्दतोपरागारुणकिर... भिनीं प्राचीं निरीक्ष्य कापि स्तब्धेव, उन्मन... प्रतीयते पण्डितपरिषद्। न चैतदस्ति तस्याः गौरवानुरूपम्। पुरा कदाचित् अभिषेक... ब्राह्मणा आहुः—

आसां विशां त्वं राजा, सोमोऽस्माकं ब्राह्मणानां तु। कालान्तरे पण्डिताः बाण-विल्... श्रीहर्ष-नागेशवत् प्रभुस्तवनपरा बभूवुः। पुरा... कालोपयुक्तापोयं प्रक्रियेदानीं दूरेऽपास्या। ... नाद्यत्विकी प्रवृत्तिः पुनरप्याद्यं आत्मगौरवप... णतामूलकं पन्थानं पुरः स्थापयति।

उपनिषत्कालादेव प्राक्षु वाराणसी वि... कीर्तिः विद्यादिप्रगतिषु। एतावत्तस्याः त... अक्षुण्णम्, ऋते देशकालानुरूपप्रक्रियापरिवर्त... अनागतेऽशक्या साऽक्षुण्णता तथा स्थापयि... कतिपयेष्वेव वर्षेषु राष्ट्रे भविष्णु महद् राज... परिवर्तनम्, सर्वे हि धर्मा राजधर्मे निविष्टाः। ... कथं औदासीन्यमत्र कार्यकरम्? न जातु ... निमीलनेन कपोतो मार्जारखरनखरप्रहारात्सुर... स्यात्? इदानीमपि पण्डिता एकांगिनीमेवालो... व्युत्पत्तिं समनुसरन्ति। नास्ति साऽसमीक्ष... परं केषाम्? अलूनाणां अकामानां न्यस्तसर्व... ग्रहाणाम्। इतरेषान्तु आत्मप्रणाशकल्पा। लो... पयोगि ज्ञानमत्यावश्यकम्।

गणतंत्रयुगः किलायम्। आत्मावसादो... महापातकान्यतमः, सदैव परावमानेपि। सम...

व्यवहारे प्रदर्शनीयः । इहापि पण्डिता-
रता नाभिलक्ष्यते, सन्ति केचनाधुनापि
न्यधमा अपीति ’ सम्मोहपरायणाः छन्द
युगेऽस्मिन् कथमुत्सहेरन्नेवं चिन्तितुमपि ?
सार्वजनीनश्छन्दाधिकारः । भारत-
राष्ट्रे आस्त्रीभ्यो विसृष्टोऽयमधिकारः । स
ऽत्रापि भविता, किमित्ययं मनोभावः
नां कीर्त्यावहः ? अनेका रूढयो दैनंदिनं
शैथिल्यमापद्यमानाः दृश्यन्ते । इहैव
यां नलिकाजलव्यवहारं प्रति जुगुप्सा
शैशवेऽनेकैर्दृष्टा, अस्ति किमिदानीमपि
कालो हि बलीयान् । शैले शिरोघट्टनमिव
नां सार्वजनीनानां मार्गावरोधप्रयत्नः ।
कारसमुद्रपरिखावेष्टितोऽप्ययं देशः,
त्सरपूर्वमपि परानपवारयितुं न शशाक,
नां गगनविहरणपरायण-बहुसहस्रविमान-
रसातलं प्रापितेषु मेरुशिखरेषु, सप्ताट्टालिका-
जङ्गमनगरकल्पैः महाप्रवहणैः अहर्निशं
माणे सागरोदरे, अजस्रं योजनसहस्रव्यास्त-
जन-वचन-वदन-प्रतिबिम्ब-दानादाननिर-
तुतारयन्त्रेषु, उपहासास्पदं गलितत्रुषिता-
त्मवञ्चनमीदृशम् ? द्विपान्तरेषु प्रवर्त्त-
कप्रवृत्तयो नात्र केनापि वारयितुं शक्याः ?
रोधवनविहारिणां माहम्मदनृपगजयूथ-
जातायापि अपगानधरणीभूते स्वधर्म-
एकपतिव्रतं क आदिशत् ? माहम्मद-
तिकूलमप्यवगुण्ठनोत्सारणं विधाय पत्या
च्छन्दविहारिणी अपगाननृपपत्नी केना-
? किमिदं बालिशत्वम् ? अद्यनापि केचन

शिशुपरिणयप्रतिषेधव्यवस्थाविरोधिनः । नूनं लोक-
दृष्टौ भारतीयानां, बर्बरत्वप्रख्यापनायैव तेषामयं
प्रयासः, इत्थमेव ‘कैथरायिनम्यो’-सदृशच्छिद्रान्वे-
षिभ्यः परेभ्य आर्यापकीर्तिप्रसारणसामग्री प्रस्तू-
यते । इत्यज्ञानकञ्चुकाऽऽच्छन्नान्तरङ्गानामेव न गोच-
रीभूतम् । स्वातंत्र्यसुप्रभातेऽस्मिन् लोभेन मोहेन
वा न किमपि तथा विधेयम्, येन चिरप्रशस्तं
स्वकीर्तिललाटतटं शाश्वतकलङ्ककालिमाकलुषितं
सम्पद्येत ।

## श्रीशगीतिः ।

[ रचयिता—कालीप्रसाद शास्त्री “ श्रीकरः ” ]

परमेश ! भारतेऽस्मिन् परमा दया विधेया ।
भगवन् ! कदापि कोपादरुणा न दृक् प्रदेया ॥
श्रद्धा न तेऽस्ति देशे बद्धादरेऽधुनाऽस्मिन् ।
पदवी न भारतीयैरधिगम्यते सुगेया ॥
आर्ता रुदन्त्यसंख्या ज्वलनेन जाठरेण ।
अधुनापि रङ्कता किं देशस्य नानुमेया ?
आच्छादनैर्विहीना लज्जाकुला पतन्ती ।
गर्ते विलज्जतायाः कृष्णापि कृष्ण ! हेया ॥
यस्याः सुधासमुद्रैः पूर्णा वसुन्धराऽभूत् ।
सा धेनुरद्य हिंस्रैर्हा ! हन्यते ऽविगेया ॥
पुण्यस्थली विदग्धा वैमत्यवह्निनेया ।
“श्रीकर” ! सुधीजलैः किं शमिता कदाप्यजेया ॥



# अभिनन्दनम् ।

कल्याणी यस्य कीर्त्तिः किल कलितकला नाथसाम्याऽतिकाम्या ।
भ्राम्यन्ती दिक्षु सर्वास्वनवरतमलं गीयते वन्दिवृन्दैः ॥
सोऽयं श्रीपालसिंहक्षितिपतितनयो नीतिलक्ष्मीविशाली ।
श्रीमान् राजेन्द्रसिंहो जगति विजयते यौवराज्याभिषिक्तः ॥ १ ॥
नेत्रेभनन्दविधुसंमितवैक्रमाब्दे माघेऽसिते शिवतिथौ शशिसूनुवारे ।
युक्तप्रदेशवरशासकवर्यमान्त्रस्थानं समाश्रयदयं जनतानुरोधात् ॥ २ ॥
अस्मिन्राजेन्द्रसिंहे सकलगुणगणारीणभूभृद्धुरीणे ।
श्रीयुक्ते मन्त्रिभावं भजति मतिमतामर्हतामर्हणीये ॥
युक्तप्रान्तीयदेशोन्नतिरतिमहती याऽभवत्सम्पदाढ्या ।
कस्तां लोकप्रशस्तामिह जगति जनो ध्वस्तदोषां न वेत्ति ॥ ३ ॥
कृषिशिल्प-विभागयोरयं, कृतवान्याद्दृशमुन्नतिम्पराम् ।
किमुताद्दृगभूत्कदापि सा भविता वा पुनरप्यहो न वा ॥ ४ ॥
अभूतपूर्वां खलु भूतपूर्वो युक्तप्रदेशाधिपतिः प्रयागे ।
स्वस्यां महासंसदि मुक्तकण्ठं मुदाऽकरोदस्य गुणप्रशंसाम् ॥ ५ ॥
भारत-दशापरीक्षा-समिति-सदस्येषु भारतीयानाम् ।
असमावेशादेतद्देशावज्ञां सुविज्ञाय ॥ ६ ॥
अत्यनुचितमचिकीर्षुस्तत्सहयोगं महामानी ।
भारतभूमीलज्जा-रक्षामखदीक्षितोऽयमभूत् ॥ ७ ॥
वर्षे वाणगजाङ्कभूपरिमिते श्रीविक्रमार्कोद्भवे ।
कृष्णे मासि शुचौ षडाननतिथौ वारे शनौ सन्नुतः ।
कृत्याकृत्यविचारचारुचतुरप्रज्ञः प्रतिज्ञावन-
प्राज्ञो मन्त्रिपदं सहर्षमजहाद्राजेन्द्रसिंहोऽसकौ ॥ ८ ॥
हिन्दीभाषाऽङ्ग्लभाषाभ्यां देशसेवां करोति यः ।
स श्रीराजेन्द्रसिंहोऽयं चिरं जीवतु नन्दतु ॥ ९ ॥

म० म० श्रीदेवीप्रसादशुक्लः "कविचक्रवर्ती"

# मुद्राराक्षस—परीक्षणम् ।

[ले०—" हरि-भाऊ " काशी विद्यापीठस्थः ।]

( अवशिष्टांशः )

## अङ्कागत-कथा-विषयः ।

प्रथमाङ्के नन्दैकनिष्ठं सेवकं राक्षसं वशीकर्तुं चन्द्रगुप्तस्य साचिव्यपदं स्वीकारयितुं, चाणक्यः किं कर्तुमिच्छतीति बीजरूपेण प्रक्षिप्तम् । द्वितीयाङ्के चाणक्यप्रयुक्तप्रयत्नान् विफलीकर्तुं, चन्द्रगुप्तस्य कुसुमपुरराज्यं ग्रहीतुं राक्षसः कथमयशस्वी अभवदिति निर्दशितम् । पुनश्च स किं कर्तुमभिलषतीति कथितम् । तृतीयाङ्के चाणक्यचन्द्रगुप्तविरोधं राक्षसकृतोपायाः कथं सफलीभवन्तीत्यस्य वर्णनमस्ति । चतुर्थाङ्के चाणक्य-प्रयुक्तभागुरायणस्य कुसुमपुर-विषयक-राक्षसचार-संवादस्य विपर्यासं कृत्वा पर्वतेश्वरपुत्रस्य मलयकेतोर्मनसि राक्षसविषये शङ्काबीजं प्रक्षिपति । पञ्चमाङ्के चाणक्यनीतिबीजस्य फलं राक्षसेन स्वानुकूलं कथं भोक्तव्यं, कथं च तस्य सर्वाश्चेष्टाः सुहृन्नाशाय, न पुना रिपुविनाशाय भवन्ति, कथं च तस्य अपमानं जायते, कथं मलयकेतू राक्षसं चन्द्रगुप्तस्य अनुयुक्तं मत्वा त्यजति, इति निर्दशितम् । अपि च— चतुर्थाङ्के वर्णितमलयकेतुकालुष्यमत्र परिणतम् । राक्षसस्य न कोऽपि साहाय्यकर्ता विद्यते । कुसुमपुरस्थं मित्रगृहं गन्तुमिच्छति, इत्यस्य वर्णनमस्ति । षष्ठाङ्के राक्षसः कुसुमपुरोद्याने पुरुषमात्मत्यागिनं पश्यति । तं चात्मत्यागकारणं पृच्छति । तदा तस्य सुहृच्चन्दनदासो वधस्थानं नीत इति ज्ञानं भवति । अत्रैवायमेतदपि जानाति यच्चन्दनदासो राक्षसस्य पत्नीपुत्रौ चाणक्याय न ददात्यतः स चाणक्यहतकेन हन्यते । तदनन्तरं स राक्षसो वधस्थानमागच्छति । अनेन प्रकारेण चाणक्यस्य प्रयत्नाः सफलिता भवन्ति । सप्तमाङ्के राक्षसस्य साचिव्यपदस्वीकरणं, मित्रस्य संरक्षणं चाणक्यराक्षसयोर्मेलनं निर्दशितमन्ते च भरतवाक्यमिदं दत्तम्—

"राक्षसेन समं मैत्री राज्ये चारोपिता वयम् ।
नन्दाश्चोन्मूलिताः सर्वे किं कर्तव्यमतः परम् ॥

## नाटकस्यालोचना—

यथा पूर्वकवयः पौराणिकं विषयमधिकृत्य काव्यरचनां नाटकरचनाश्च कुर्वन्तिस्म तथाऽयं विशाखदत्तकविर्न कृतवान् । अनेन नाटकस्यास्य कृत ऐतिहासिको विषयो निर्णीतः ।

नाटकेऽस्मिन्नादित एव राजशास्त्रं ( 'पॉलिटिक्स' इत्याङ्गलभाषायाम् )कूटनीतिश्च('डिप्लोमसी') दृश्येते । अत्र शृङ्गाररसस्य प्रेमालापस्य नामापि न श्रूयते । अतो वयं तत्र किमपि स्त्रीपात्रं न पश्यामः । केवलमन्तिमाङ्कप्रारम्भे चन्दनदासस्य भार्या सपुत्रा वधस्थानमागच्छति तत्रैव स्त्रीपात्रनिदर्शनमस्ति । परं तत्र प्रेमोच्छृङ्खलयति । किन्तु स्वार्थत्यागं निदर्शयति कर्तव्यं च ज्ञापयति । नाटकपद्धतिर्विषयानुरूपा । अत्र माधुर्यसौन्दर्यादीनां स्थानं कर्तव्यरत्या परिगृहीतं विद्यते । शृङ्गारैकरसाभिरुचेर्नाटकेऽस्मिच्छृङ्गाराभावान्न रतिर्भवति । राजशास्त्रनिपुणस्य त्विदं नाटकं रतिसर्वस्वं विद्यते ।

इदानीं पर्यन्तं नाटकविषये लिखितम्, अधुना तु पात्रविषये लिख्यते। अत्र सन्ति त्रिंशद्द्वात्रिंशद्वा पात्राणि। किन्तु तेषां द्वे पात्रे प्रमुखे स्तः, एकं चाणक्यः द्वितीयं राक्षसः च। अयं चाणक्यो विद्वान्, बुद्धिमान्, आत्मविश्वासी, चतुरश्चासीत्। अस्य विषये तु लिखितमिदमस्ति—

"औशनस्यां दण्डनीत्यां ज्योतिःशास्त्रे च पारगः।
नीतिशास्त्रप्रणेता यश्चणकस्तस्य नन्दनः।
चाणक्य इति विख्यातः श्रोत्रियः सर्वधर्मविद्॥"

इति। अनेन प्रथमं स्वविधेयं विनिश्चितं यन्नन्दानामुन्मूलनं करणीयं, चन्द्रगुप्ताय राज्यं देयं, राक्षसद्वारा चन्द्रगुप्तस्यामात्यपदमलङ्कारणीयमिति। तत्कृते तेन कायेन मनसा बुद्ध्या च प्रयत्नो विहितः। पात्रमिदं कूटनीत्या परिपूर्णं विद्यते।

राक्षसस्य पात्रत्वं वीरपुरुषोचितगुणादिभिः समलङ्कृतं विद्यते। अयं राजनीतिपटुरासीदित्यस्मिन्न सन्देहस्थानम्। तथैव स मृदुहृदयोऽपि नाटके आदितोऽन्तपर्यन्तं तस्य दोष एक एवासीद्यदयं न ज्ञातवान्यत्तस्य विश्वासभूमयो जनाश्चाणक्यस्य गुप्तचरा आसन्निति। अनेनैव दोषेण तस्य राक्षसस्य सर्वमपि कर्म निष्फलमभूत्। अयं खलु स्वामिभक्तिपरायणो मित्रकार्यदक्षश्चासीत्। अस्य विषये समधिगतमिदम्—

"दण्डनीतिप्रवीणः स षाड्गुण्यप्रविभागवित्।
शुचिः शूरतमो लोकैर्मान्यो ब्राह्मणवंशजः॥ इति।"

चाणक्यचन्द्रगुप्तध्वंसतत्परोऽयं राक्षसः स्वामिनः शत्रुनुन्मूलयितुं निश्चितवान्; किन्तु प्रतिपक्षिणः कौटिल्येन स्वदोषेण चायं यशो नाधिगतवान्। अनेन मित्ररक्षायै स्वप्रतिज्ञाननुरूपमपि साचिव्यपदं स्वीकृतम्। षष्ठाङ्कान्तर्गतेन राक्षसस्य स्वगतभाषणेन तस्य चरितं विस्पष्टं भवति।

चाणक्यराक्षसयोः कोऽप्युच्चनीचो नासि द्वावपि राजशास्त्रे कूटनीत्यां च समानपदवीमारोहतः। नाटकस्य नायकोपनायकौ चन्द्रगुप्तम[लय]केतू स्तः। चन्द्रगुप्तः प्रभावशाली राजपुत्र आ[सीत्] स स्वभावेनोदार आसीत्। तस्य स्वसचिवे चाण[क्ये] अत्यन्तं विश्वास आसीत्। अयममन्यत यद्य[पि] श्चिच्चाणक्य आचरति तन्मम हितायैव। मलयके[तु]रपि राजपुत्र आस। स त्वविचारी संशयी [च] इव तस्मिन् प्रभावस्याभाव आसीत। [अ]विश्वासाविश्वासभूमयोनुचिता नरा बभूवुः।

अन्यान्यपि सन्ति बहूनि पात्राणि येषु विद्यन्ते प्रशंसनीया गुणाः। चन्दनदासो मित्र[ता]मूर्तयति, मित्रस्य कृते सोऽसूनपि त्यक्तुमुद्यतो यद् हृदयस्पर्शि चित्रमेतदन्तिमाङ्के दृश्यते। कविना 'शिबि' शब्देन सम्बोधितः। स्वामिकार्यदक्ष[ता]गुणप्रतीकत्वेन भागुरायणोऽस्माकमग्र आगच्छ[ति]।

कविना षष्ठाङ्कस्य सप्तमाङ्कस्य च प्रारम्भे [क]नाप्रधानविषयो वर्णितः। तत्र करुणरसस्य प्रा[धान्यं] वर्तते सहृदयानां वाचकानां प्रेक्षकाणां च हृ[दय]मिदमतीवदुःखं हर्षं च जनयति।

यदा चाणक्यस्तस्य प्रयत्नान् श्रावयति [तदा] तस्मिन्नैतिकभावोऽतीवस्वल्प आसीदिति मतिर्भ[वति]। अन्यच्च धर्मचारिणो राक्षसस्य च परा[जयं] विलोक्य तद्विषये पाठकप्रेक्षकहृदयेऽनुक[म्पा] जायते। पाठकानां मनस्तु तत्सरलस्वभावमभिम[न्यते] मभिलषति। चाणक्यस्य कौटिल्यं दृष्ट्वा तद्वि[षये] क्रोधो भवति। चाणक्यबुद्ध्यनुसारिणी चन्द्र[गुप्त]स्याभिलाषाऽऽश्चर्यं जनयति। मलयकेतोः पराव[लम्बि]वृत्तित्वं दुःखीकरोति चेतः। मित्रकार्यस्य [कृते] आत्मत्यागं कर्तुमुद्यतश्चन्दनदासः सर्वैः पाठकप्रे[क्षक]कैरभिमन्यते। एतादृक्छिरोधार्य-विभूति-च[रितं] रजःस्पर्शोऽस्मान्पापादुद्धरेदिति शम्।

॥ समाप्तम् ॥

# सम्पादकीयम्

## श्रीकृष्णावतारः ।

...ांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् "। ...वितारस्य कर्मयोगिनो वशीकृतमायस्य ...हीतवपुष आनन्दकन्दस्य भगवतः श्रीकृष्ण- ...रये इदानीं जनसमाजे बहवो विरुद्धवादाः ...न्ते। तेषु प्रधानत्वेन रासलीलाकरणमेव ...ङ्कास्पदं गीयते। तस्य समाधानन्तु एवमपि ...ति यत् गोप्यस्तु अन्तःकरणस्य वृत्तयः ...ो भगवांस्तु साक्षीचेतनस्तत्र सर्वासां वृत्तीनां ...एव गोपीनां तत्पार्श्वे धावनमित्यादिरूपके- ...मनोरमेण। तथापि अत्र विषये ममैतावानेवा- ...न् वक्तव्यो विषयोऽस्ति यत् यस्मिन् सनातन- ...भगवान् पूर्णावतारत्वेन गीयते तस्मिन्नेव ...र्णस्य पुंसो वर्णनमेवमुपलभ्यते। तथाहि—

"...बालो विदुषि विबुधो गायके गायकेशः
...शूरो निगमविदि चाम्नायलीलागृहं वै।
...मूर्खो युवतिषु युवा वाग्मिषु प्रौढवाग्मी
...कश्चित् त्रिभुवनजयी योऽवधूतेऽवधूतः ॥"

...तो यदि भगवता कृष्णेन सर्वमपि लोकाति- ...कर्म कृतञ्चेत्तस्य तु पूर्णावतारस्य भूषणमेव ...णम्। अपरश्चावतारवादस्येदमेव रहस्यं ...सत्त्वरजस्तमोमयेऽस्मिञ्जगति यदा यदा तमसो भवति सुतरां वृद्धिस्तया च वृद्धया पराजिते भवतः सत्त्व-रजसी तदैव भगवान् मायाकञ्चुकं परिधायावतरतीति। तथाहि गीतायाम्—

"यदा यदाहि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥"

इत्यतो विज्ञानसिद्धमिदं यत् तमसो वृद्धौ जायमानायां "पतनान्ताः समुच्छ्रया" इति नयेन तत् परिभवितुं सत्त्वोद्रेको भवति। तदैव सत्त्वा-धिक्यमादाय भवति कस्यचनैवंभूतस्य भूत-स्याविर्भावो। योहि तमोबहुलान्प्राणिनोऽभिहत्य सत्वबहुलाञ्जीवान् वर्धयतीति। तदानीञ्च शिशुपाल-कंस-जरासन्ध-रुक्म-दुर्योधन-दुःशासन-शकुनि-कर्ण प्रभृतयः प्रादुर्भूता आसन् तमोबहुला जीवा भगवतो लीलाभुवमुपद्रवन्तः सर्वानेव सत्त्वबहु-लान् सत्वान् बाधमानाः प्राकृतिकीं सृष्टिमाघ्नन्तः श्रीभगवतो वैदिकनियमानुल्लङ्घन्ते स्म। तदा स एव पूर्णब्रह्मस्वरूपो भगवान् मायां वशीकृत्य सत्त्वं विवर्धयिषुस्तमश्चाभिभावयिषुरवततार कृष्णरूपेण वसुदेवसद्मनि। स च तावदेव कर्तव्यं विधाय स्व-लीलाविग्रहं संवरयामास यावच्चापेक्षितमासीत्तदा-नीम्। अतः स बालकालत एवारभ्याद्भुतं कर्म्म कुर्व-

न्नन्ते महाभारतयुद्धे सर्वतोऽवशिष्टान् तमोबहुलान् राज्ञः प्रतिभटमिषेण एकपद एव विध्वंसयामास । तदुपरि च मद्यपरायणान् स्वबान्धवानपि यादवान् परस्परं कलहयित्वा विनाश्य स्वलीलाविग्रहं संकोचितवानिति तदीयचरितसंक्षेपः ।

एवंभूताद्भुतलीलाव्यसनिनो भगवतः श्रीकृष्णस्य चरितमेव पुरुषधीदुरधिगममस्ति नह्येतत्साधारणपुरुषक्षममस्ति कृत्यं । यद्बाल्य एवाद्भुतपराक्रमाणां पूतना-केशि-बक-शकट-धेनुक-चाणूर-मुष्टिकप्रभृतीनां नाशनम् , असंख्यातानां गोपीनां कामवासनातर्पणेन स्वात्मनिलयनम्, स्वेन चावरूद्धसौरतत्वेन मनसो निर्विकारत्वेन च कामपराजयकरणमिति । अत्र तु रहस्यं पौराणिकमिदमस्ति यत्कदाचन कामस्य भगवता सह युद्धं कर्तुमभिलाषः समजनि । कृष्णावतारे तवायमभिलाषःपूर्णो भवितेति भगवता प्रतिज्ञातमासीत्तस्यैव वचसः पालनमिषेण श्रुतिरूपाणां पूर्वकल्पे मुनिरूपाणाञ्च गोपीनां जन्मान्तर-सञ्चितवासनानां स्वात्मनि लयकरणेन तासां मोक्षसम्पादनमित्यादि बहूवद्भुतं कृत्यमेकपद एव स साधितवान् भगवानिति ।

तस्मिन् काले स पौगण्डावस्थायामेवासीत्तदनन्तरं गुरुकुलेऽध्येतुमगात् इति भगवति कामोद्रेकस्य तु कथैव नास्ति । लोकदृष्ट्यापि लोकविरोधिपरस्त्रीहास्यभाषणाङ्गस्पर्शनादिकृत्येनापि आनन्दाब्धौ तस्मिन्न कोऽपि कामविकारसम्भावना कर्तव्या । यतोहि सच्चिदानन्दकन्दस्य तस्यानेन विषयानन्देन सम्बन्धाभावात् " तस्यैवानन्दस्य मात्रामुपजीवन्ती ति" श्रुतेः ।

यद्यपि गोप्यस्तु जारबुद्ध्यैव भगवन्तमा[श्रि]... परन्तु जितमन्मथो भगवान् तेनैवाऽध्वना ता... धीर्षुः तासां कृते तमेवाऽध्वानं रोचयामास । पू... तस्य तु सर्व एवाध्वा प्रशस्तः । तस्य निर... रित्वात्—पुरुषाणां कृते तु तदनुकरणं निषिद्धं... तथाहि भा० १० स्कन्धे—

"नैतत्समाचरेज्जातु मनसापि ह्यनीश्वरः ।
विनश्यत्याचरन्मौढ्याद् यथा रुद्रोऽब्धिजं विषं...
कुशलाचरितेनैषामिह स्वार्थो न विद्यते ।
विपर्ययेण वाऽनर्थो निरहंकारिणां प्रभो ॥
किमुताखिलसत्वानां तिर्यङ्मर्त्यदिवौकसाम्
ईशितुश्चेशितव्यानां कुशलाकुशलान्वयः ॥
यत्पादपङ्कजपरागनिषेवतृप्ता-
योगप्रभावविधुताखिलसत्त्वबन्धाः ।
स्वैरं चरन्ति मुनयोऽपि न नह्यमाना-
स्तस्येच्छयात्तवपुषः कुत एव बन्धः...

इदानीन्तु रासलीलामर्मानभिज्ञा दाम्भि... शठा रासलीलाभिषेण व्यभिचारं जनसमुदाये... र्तयन्तो हेया एव । ते तु उभयतो भ्रष्टाः स्वयं पत... ऽन्यानपि पातयन्त्येव । एवञ्च "यद्यदा... श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोक... दनुवर्तते" इति नैव विगीताविगीतोभयविधशि... चारविषयकं वाक्यम्; किन्तु अविगीतशिष्टा... विषयकमेवेति सङ्कोचविधिनैव सन्तोष्टव्यम् । ... त्स्मृतिमूलभूतं श्रुतिवाक्यमपि अमुमेवार्थं वि... णोति । "यान्यस्माकं सुचरितानि तानि त्व... पास्यानि नो इतराणि" इति । इदानीन्तना... पुरुषाणां प्रवृत्तिस्तु दोषानुकरणे यादृगुण... दृश्यते न तादृग्गुणानुकरण इति । पश्यन्तु, पू...

…त्या प्राप्तमपि शक्रमखमनावश्यकं ज्ञात्वा …स्य तस्मिन् कालेऽत्यावश्यकं गोवर्द्धनमखं …तवान् भगवान् । परन्तु अद्यतु समाजध्वं…स्त्रीमपि कुप्रथां त्यक्तुं न वाञ्छन्ति जनाः । …भगवता स्वेनैव गीतायां श्रीमद्भगवद्गीताया …तमपि "क्लैव्यं मास्मगमः पार्थ नैतत्त्वय्यु…" इत्यादिना पुरुषकर्तव्यम् नानुतिष्ठन्ति । …तदीयविग्रहं शृङ्गार-प्रधानं विधाय सर्वमपि …ं शृङ्गारमयमाचरन्ति—इत्यहो भगवतः …स्य चरितच्छद्मना दाम्भिकानां स्वदुष्ट…तर्पणम् ? (पुनरन्यत् कदाचनाग्रिमाङ्के)

* * * *

## विज्ञप्ति-शब्दद्वयम् ।

…यि सहृदया विद्वांसोऽन्तेवासिनश्च वर्तमान…परिचिताः ! जानन्त्येव भवन्तो यदिदानीं …चारपत्रबहुलेऽस्मिञ्जगति स एव समाजः सैव …न्नतिपथमधिरोहति यत्र चास्ति किञ्चित्स…पत्रम् यद्द्वारा तस्य समाजस्य तस्याश्च जातेः …ि विमर्शिणो विद्वांसः स्वीय-हृदयभाव…कृत्य सर्वेषामपि पुरस्तात् स्थापयन्ति समये …च स्वसमाज-जात्युन्नतिकरोपायप्रदर्शनेनानु…च परस्परम् । सर्वतोऽपि स्वसमाजजाति…पुरुषाणां सङ्घं सम्पाद्य "सङ्घे शक्तिः कलौ" इति नियमं चरितार्थयन्तः यदेवाभिलषन्ति …स्वयं कुर्वन्ति अन्यैश्चापि कारयन्ति । निदर्श…पुष्टिमेया गोरण्डजातिरेव ।

…स्तु, इति विमृश्यैव काशीस्था देशकालज्ञाः …निःस्पृहाः कतिपये स्वनामधन्याः संस्कृतवि……इमां भारतभारतीं समेधयितुं तत्सेवकान् संस्कृतज्ञान् विदुषश्छात्रांश्च तदीयदीनावस्थातः परिचितान् विधातुं सं० सा० समाज-मुखपत्ररूपेण पत्रमिदं सुप्रभातम् व्ययाधिक्यतो बिभ्यतो मासिकं सञ्चालयामासुः सत्यामपि साप्ताहिक-दैनिक-समाचारपत्र-प्रकाशनावश्यकतायामिति । एवमुत्साहैकधना यथाकथञ्चित् वर्षचतुष्टयं चालयन्तः पत्रमिदं कियत्कष्टभाजस्तेऽभवन्निति गतवैशाखमासीय सुप्रभाताङ्केचतुर्थवार्षिकविवरणतोऽवगतमेव स्यात्पाठकप्रवराणां । तत्र यावत्सुप्रभाताऽयेन सुप्रभातपोषणमकुर्वतः संस्कृत-साहित्य-समाजस्य दशां विपन्नामपाकृत्य तं विवर्द्धयितुमीहमाना एव त आसन् तावदेव "दीपमुद्योतयेद्यावन्निर्वाणस्तावदेव सः" इति न्यायानुकल्पं 'सुप्रभात-दुर्दैव-दुर्विपाकेन सं० सा० समाजसदस्य-संख्यान्यूनतया वा ज्येष्ठमासीयविशिष्टाङ्कप्रकाशन-विहारोत्कलसंस्कृतएसोशिएशनपरीक्षाफलप्रकाशनादि-व्ययबाहुल्यकीलपातेन सञ्चूर्णितोऽस्य समाजस्य सञ्चितोऽपि कोष इति विषण्णवदनो दीनमना अयं समाज उर्ध्वस्वासमुच्छ्वसन् मासद्वयं मूर्च्छित इवासीत् । अत एवाऽषाढ-श्रावणमासयोः सुप्रभातप्रकाशनेऽपि विलम्बो जातः ।

अस्तु, पुनरपि स्वसञ्चालकानामदम्योत्साहबलात् सुप्रभातपाठकानाञ्च हस्तावलम्बाऽऽशालतामाश्रित्य कथमप्युत्थितः समाजोऽयम् स्वमन्त्रणासमितौ किमपि परिवर्तनमादधन्ममोपरि सुप्रभात-सम्पादनभारं मम प्रियसुहृदि पं० केदारनाथशर्म्मसारस्वते प्रधानमन्त्रित्वभारञ्चासञ्जयत् ।

अहञ्चात्मानमसमर्थमप्याकलयन् केवलं विदुषां लेखकानां लेखबलं, स्वमान्यमित्राणां मन्त्रणासमिति-

सदस्यानां तथा स्वसहकारिणः "साहित्यशास्त्रिणः" पण्डित श्रीसरयूप्रसाद पाण्डेय (द्विजेन्द्र) "काव्य-तीर्थ-विशारदस्य" साहाय्यबलञ्च संस्मृत्य भार-मिममङ्गीकृतवान्। गृहीततद्भारोऽहमभ्यर्थये सुप्र-भातपाठकान् यत्ते महोदयाः सदस्यसंख्यां सुप्रभा-तपाठकच्छात्रसंख्याञ्च वर्द्धयन्तो यथासम्भवं सुस्प-ष्टाक्षरं संस्कृतोपकारिणं सुलेखं प्रेषयन्तः स्वामूल्य-सम्मतिञ्च प्रददतोऽवश्यमनुग्रहीष्यन्तीति। इत आरभ्य सुप्रभातञ्च तेषां सेवां कर्तुं प्रतिसौरमासा-न्तिमतिथिं यावदवश्यमुपस्थास्यति तदन्तिके, तैश्च द्वितीयसौरमासस्य सप्ताहं यावत् सुप्रभातप्राप्तिं प्रतीक्ष्य स्वनगर-पत्रवाहकप्रश्नानन्तरं कार्य्यालये सूचना प्रहेलिमेति।

* * * *

## ब्राह्मण-महासम्मेलनम्।

अयि संस्कृतज्ञा देशकालात्मविदो विद्वांसः! अत्र वाराणस्यां भाविनोऽखिलभारतीय-ब्राह्मणमहा-सम्मेलनस्याभ्यर्थना-प्रश्नावली-नियमाश्चाविकला एव मया प्रकाशिताः सन्त्यन्यत्र, तेषां विषयाणामुपरि साधु विमर्शं विधाय भूयस्यां संख्यायामुपतिष्ठन्ताम् सम्मेलने विद्वांस इत्यस्माकमाकांक्षा, यद्यपि इत्थं-भूतानां विषयाणां न केवलं ब्राह्मणैरेव सम्बन्धः किन्तु द्विजमात्रेणैव, तथापि तेषु ब्राह्मणानामभ्यर्हि-तत्वात् शास्त्रमूलतत्वज्ञत्वाच्च तैः कृतो निर्णयोऽपरेषां स्वीकार्य एव। सम्मेलनसाफल्यमीहमानैश्च सर्वप्रा-न्तीय-चातुर्वर्ण्य-व्यवस्थायामपि दृष्टिपातो विधेय एव। यथा—गुर्जर-प्रान्ते, दाक्षिणात्य-प्रदेशे, वङ्ग-भूमौ च केवलं ब्राह्मण-शूद्रावेवोपलभ्येते, विहार प्रान्ते तु बहुत्र ब्राह्मणक्षत्रियशूद्राणामेवोप-लब्धिरिति। एवं सति व्रात्यादि-पातित्य विचारावसरे—आपत्कालादि--विमर्शनेन संस्कारादि-नियम-विधानेनापि दृढ़ीकर्तव्या चातु-र्वर्ण्य-व्यवस्थितिः। यतो वै व्यवस्थित चातुर्वर्ण्य-व्यूहे सनातनधर्म-मर्यादा-रक्षणम तिरपि भारतस्येति सततं विमर्शनीयम्।

* * * *

## धर्मे प्राचीनप्रणाल्याञ्च कुठाराघात

मुद्रित-प्राये सुप्रभाते, एतच्छीर्षकम् मोद पुरस्थ—(मुजफ्फरपुर) ब्राह्मणसभाया म श्रीत्रिलोकीनाथझा-महाशयस्य मुद्रितमेकं त्रिपत्रमधिगतम्मया। यस्याशयः संक्षेपतो वास्ति यत् "काश्यां भाविनि ब्राह्मणमहासम्मे साइमनसप्तकस्य (साइमनकमीशनका) स्वा भविता अपरञ्च सम्मेलन-संचालकाः स्वार्थव भूमिहारब्राह्मणानपि ब्राह्मणकोटौ प्रवेशयन्तीति तत्र प्रथमविषये त्वहं सम्भावयामि यदियम् स्वकल्पनैव विज्ञप्ति-प्रकाशक-महाशयस्य सम्भाव्यते यद्दूयस्य साइमन-सप्तकस्य चार चर्मकार-सभात आरभ्य राष्ट्रिय-महासभां या स्वागतविरोधः समजनि। तस्यैव सर्वेषाम मूर्द्धस्थानीयेन ब्राह्मण-महासम्मेलनेन स्वागत छितं स्यादिति? यदि च केनापि प्रकारेण सम्मे लनेनानेन विधायिष्यमाणमिदमनुचिततरं गर्हि कर्म प्रकाशीभवेत्तदा वाराणसेया विद्वद्धौरेया सर्वतोऽप्यस्य सम्मेलनस्य वहिष्कृतिं विधास्य

। वहिस्था अपि विज्ञा विद्वांसो नैव समु-
यन्ते सम्मेलनमिदमिति निश्चप्रचम् ।
हन्त ? क एवमिदानीमधन्यः स्याद्यो
हित-विघातकं भारत-वसुन्धरा मान-मर्दकं
तु मनसापि संकल्पयेदिति । एवं सम्भा-
ि तु भवति "विलुप्तगर्वो गरिमा गरीयसाम्"
थया हन्त ? मनस्विता हता" । "विहन्यते
तृभावः" इति । द्वितीयविषये तु वर्णाश्रम-
ा-परिपोषकाः पण्डिता ब्राह्मणत्वेन प्रख्या-
भूमिहार-ब्राह्मणान् कुत्रान्तर्भावयेयुः ?

पि इदानीं न्यायिब्राह्मण-जांगिरा-ब्राह्मण-
ब्राह्मण-प्रभृतयोऽपि प्रावृषेण्य-मण्डूकवदु-
एव निरन्तरं येन वर्णव्यवस्थिताविदानीं
मस्योपस्थिता । एवम्भूते विषये ब्राह्मण-
नां कोऽपि स्वार्थोऽस्तीतीयमसत्कल्पना तु
। चेतः अयि भोः —

"आविर्भूत-ज्योतिषां ब्राह्मणानां
ये व्याहारास्तेषु मा संशयोऽभूत ।
सिद्धा ह्येषां वाचि लक्ष्मीर्निषक्ता
नैते वाचं विप्लुतां व्याहरन्ति ॥"

तेषामेव सन्तान-कोटि-प्रविष्टा ब्राह्मणपण्डिताः स्वार्थेनाकार्यं करिष्यन्तीति दूरीकुर्वन्तु चेतो भ्रमम् ।

पश्यन्तु, यत्र सर्वेऽपि भारतीयाः पाश्चात्य-सभ्यतासमेधिन्या इङ्गलिश-भाषाया अध्ययनाध्यापने रता वैदेशिकाचारव्यवहारपरायणाः सोदरभरणमात्रकार्या न गणयन्ति भारतमानापमाने तत्रैव ब्राह्मण-पण्डिताः स्वार्थं विहाय भारतीय-सभ्यतासमेधिकायाः संस्कृतभाषाया अध्ययनाध्यापनादि स्वल्पतरायप्रदायकं कष्टतरजीवन-निर्वाहकमपि स्वसन्ततिष्वविच्छिन्नं चालयन्तीति किमविदितं भवताम् ?

---

**पत्र-प्रेषणसमये ग्राहक-सङ्ख्या नूनं लेखनीया, अन्यथा पत्रमवलोकितमेव न स्यात् ।**

## प्रश्नः ।

भगवता पाणिनिना प्रणीतायामष्टाध्याय्यां
सूत्राणां पौर्वापर्यव्यतिक्रमो दृश्यते ? यथा-
ा "तस्यादित उदात्तमर्धह्रस्वम् १-२-३२"
भाष्ये "एकश्रुतिदूरात्सम्बुद्धौ १-२-३३"
इत्यारभ्य "उदात्तस्वरितपरस्य सन्नतरः १-२-४०" इत्यन्तः सूत्रभागोऽष्टाध्यायीपरिसमाप्तौ पठनीयः इति । "शात् ८-४-४४" इति सूत्रान्तरमेव "अनुस्वारस्य ययि परसवर्णः" इत्यारभ्य "शश्छोऽटि" इत्यन्तं सूत्रभागं पठित्वा तदनु "यरोऽनुनासिकेऽनुनासिको वा ८-४-४५" इत्यादि सूत्रपाठः पठनीयः

इति भाष्ये तत्र तत्र ध्वनितम् । एवम् प्रथमाध्याये द्वितीय-तृतीय-पादयोरपि व्यत्यासः कर्त्तव्यः । तथा-हि प्रथमाध्याये द्वितीयपादस्थाने—

"भूवादयो धातवः । १-३-१ । इत्यादिसूत्रात्मकस्तृतीयपादः पठनीयः । तृतीयपादस्थाने च "गाङ्कुटादिभ्योऽञ्णिन्ङित् । १-२-१ । " इत्यादिसूत्रात्मको द्वितीयः पादः पठनीय इति । येन "भूवादयो धातवः" इत्यनेनभ्वादिगणे निर्दिष्टे "गाङ्कुटादिभ्योऽञ्णिन्ङित्" इत्यनेन निर्दिष्टः कुटादिगणो निराकाङ्क्षतया निरायासेन च सुविदितो भवेदिति अन्यथा—प्रथममेव कुटादिगणज्ञानं साकाङ्क्षं दुष्प्रत्येयम्भवति । एवं परिवर्तने को दोष इति प्रकाशयन्तु सहृदया विद्वांसः ।

प्रष्टा—जयपुर-राजगुरु-कथाभट्टवंश्यः—

श्रीनन्दकिशोरशर्मा, साहित्याचार्यः,

( आदिविश्वेश्वरः, काशी )

---

# अखिल-भारतवर्षीय-ब्राह्मण-महासम्मेलनम्

## काश्याम्

( का० कृ० नवमीतो दिनत्रयम् ६-११-२८।८-११-२८ )

## अभ्यर्थनम् ।

महानुभावाः !

समालोच्येषु शुद्धि-विवाह-जातिपरिवृत्त्यादिषु, प्रश्नावली मुद्रापिता पण्डितप्रवराणां श्रीमतां सविध उपस्थाप्यते, यस्या उत्तराणि समालोचयितुं तत्तद्दर्शीयानां विशिष्टानां पण्डितानामुपसमि-रेकाऽचिरेण संघटयिष्यते ।

उपसमितिश्चेयं सम्मेलनात्पूर्वं कार्तिककृ-प्रतिपदमारभ्य २७-१०-२८ कार्तिककृष्णाष्टमीप-सर्वेषामुत्तराणां सप्रमाणं विचारविनिमयेन त-विनिर्णयबुद्ध्या विमर्शनेन प्रारप्स्यतइत्यपि निर्वाहकसमित्याज्ञयोपलिप्यते आशास्यते पण्डितप्रवराः सत्वऽश्वाश्विनकृष्णाष्टमीतः पू-( ६-१०-२८ ) स्वीयानामुक्तप्रश्नावल्युत्तराणां स-प्रेषणेनानुग्रहीष्यन्तीति । अन्ते पुनरिदं सप्र-प्रार्थ्यते, यदुत्तरसंग्रहावसरे निबन्धकाराद्दृतमीमां-पद्धतिरेव यद्यवलम्ब्यते, तर्हि महाननुग्रहः स्या-

प्रश्नावल्या अस्याः समालोचनं ये कुर्वन्ति च न, तेषां सर्वेषां महासम्मेलनावसरे विचार-वसरे वा समुपस्थाय कार्येषु सहयोगं दित्स-तत्तत्सभाद्वारा, तत्तद्विद्यालयद्वारा, तत्तत्संस्था-द्वारा, स्वयं वा स्वनामधामाद्यचिरेण प्रेषयन्त्वि-सप्रश्रयमभ्यर्थ्यत इति ।

## प्रश्नावली ।

१—स्त्रीणां पुंसां वा विवाहकालः कियदवधि-आरभ्य शास्त्रसम्मतः ?

२—तत्र वर्तमानपरिस्थित्यनुसारेण, शास्त्रा-नुसारेण च नियमनं कियदवधि योग्यम् ?

३—रजःप्रवृत्त्यनन्तरं विवाहस्य मुख्यत्वम्-गौणत्वमाहोस्वित् आपत्कल्पत्वम् ?

४—ऋतुदर्शने वृषलीत्वबोधकानां वचना-तात्पर्यं किम् ?

५—ब्राह्मणादिजातिषु आवान्तरश्रेणीनां पर-विवाहसम्बन्धः शास्त्रसम्मतो न वा ?

र्मज्ञाः केवा कीदृशं वा धर्मपरिवर्तनं कर्तुमर्हन्ति ? ( किं सङ्कोचनाख्यम् उत प्रवर्तनाख्यं धर्मपरिवर्तनम् ) ।

धवाविवाहो दम्पत्योर्विवाहमोक्षश्च शास्त्र-दृष्ट्या योग्यः, उत विरुद्ध आहोस्विन्नन्यः ?

स्पृश्यानामस्पृश्यत्वं जातितो वा कर्मतो वा ?

च्छानामन्त्यजानां च स्पर्शविषये सभा-वेशविषये कूपोदकग्रहणविषये देवालय-वेशविषये चान्येभ्यः तारतम्यरक्षणं योग्यं वा ? यदि योग्यं तदा कीदृशं तारतम्यं क्षणीयम् ?

गवतधर्मदीक्षाजात्युत्कर्षप्रापिका वा न वा ?

नादिजातिः किं कर्मकृता, उत जन्मसिद्धा ?

गवतधर्मदीक्षायां जातिविशेषः प्रतिबन्धको न वा ?

लस्मृतेः शूलपाण्यादिव्यवस्थानुसारेण प्रामाण्यं किमङ्गीकरणीयमुत न ?

यदवधि म्लेच्छसंसर्गेण प्रायश्चित्तीयता ?

वत्सरपर्यन्तं म्लेच्छसंसर्गिणां तदधिककालं यावत् म्लेच्छसंसर्गिणाञ्च प्रायश्चित्तविषये व्यवहार्यताविषये च किमैकरूप्यमुत वैरू-प्यम् ?

त्यसंस्कारः कियत्परम्परापर्यन्तं शास्त्र-सिद्धः ?

१७—जातिसामान्यमैहिककर्मकृतमव्यवस्थितमुत जन्मकृतं व्यवस्थितं च ?

## ब्राह्मण-महासम्मेलन-नियमाः—

(१) निबन्धपर्यन्तधर्मग्रन्थप्रामाण्याविरोधेनैव विचारो भवितुमर्हति ।

(२) मीमांसापद्धतिरेव विचारावसरेऽवलम्बनीया ।

(३) सनातनधर्मावलम्बिनो ब्राह्मणपण्डिता एव प्रतिनिधयो विचारकाश्च भवितुमर्हन्ति ।

(४) चत्वारो वर्णा अपि दर्शकपदमर्हन्ति ।

(५) विना प्रवेशपत्रं केषामपि सभायां न प्रवेशः ।

(६) यैः खलु यस्मिन्विषये विचारः करिष्यते, तद्विषये स्वीयमतप्रकाशको निबन्धः सम्मेलनदिनस्यैकमासतः पूर्वं सम्पादकसविधे यथासंभवं प्रेषणीयः ।

(७) इतो मासद्वयाभ्यन्तरे प्रतिनिधीनां नामानि संख्या च तत्तद्देशीयसनातनधर्मसंस्थाभिः प्रेषणीयानि, येषां नाम्ना प्रवेशपत्रं यथावसरं प्रेष्येत ।

| अधिक श्रावण शुद्धतृतीयायाम् शनिवासरे । (१८-८-२८) | विधेयतमः— श्रीपञ्चाननतर्करत्नभट्टाचार्यः । |
|---|---|



# संस्कृत-समाचाराः

## विचित्रोऽभियोगः ।

अमेरिकादेशे कस्याश्चनमहिलायाः प्रथमाद्द्वितीयाच्च पत्युरष्टादश प्रजाः समुत्पन्नाः, तासु च त्रयोदश जीवन्ति साम्प्रतम् । तथा तु किमपि प्रार्थनापत्रं न्यायाधिकरणके समुपस्थापितं, यत्र अशक्यत्वादितःपरं प्रसूतिकष्टाऽन्तमाहम्, अतो वै यथा मे स्वामी इतःपरं मयासह संयोगन्न विदध्यात् तथा चाज्ञाप्रदेयेति सा प्रार्थयति न्यायाधिपतिम् । पतिस्तु तस्या अहं पञ्चाशत्प्रजानां पिता भवितुं वाञ्छामीति न्यायाधिकरणकेऽवोचत् । वैद्या अपि नेयमितःपरं प्रसवकष्टसहनक्षमा, तथात्वे तु म्रियेतेयमिति वदन्ति न्यायालये च पत्युस्स्वेच्छया पत्न्यां सन्तानोत्पादनस्याधिकारोऽस्ति न वा, पत्न्यामशक्तायां तस्यास्संरक्षणस्य कोऽप्युपायश्शासनेष्वस्ति न वा ? इत्ययं प्रश्नः समुपस्थितो विद्यते, इति विचित्रोऽयं नूतनोऽभियोगो लक्ष्यते ।

* * * *

## विज्ञेषु हर्षविज्ञप्तिः ?

श्रीमन्तः पूज्यपादारविन्दाः प्रातस्स्मरणीयनामानो महामहोपाध्यायाः पण्डितप्रवराः श्रीशिवदत्तशास्त्रिदाधीमथमहोदयाः कीदृक् संस्कृत-साहित्यस्योपकारं कृतवन्त इति न तिरोहितं संस्कृत-साहित्यविदुषाम् । ते च साम्प्रतं "काशीमेवाधितिष्ठन्तीति जानन्तु "सुप्रभात" पाठका सूचयति—

श्रीगोपालदत्त त्रिपाठी
दर्शन-विद्यालयस्छात्रः ( काशी

## श्रीसनातनधर्म-सभा ।

श्रीमतो मोहान्त-जगन्नाथदास-वैष्णव-म... यस्य समुद्योगेन छपरामण्डलान्तर्गतपिपरा... सनातनधर्म-सभा महता समारोहेण आ... प्रतिपदि द्वितीयायाश्च तिथ्योः सुसम्पन्नाभूत् ... स्थेषु श्रीमान् पण्डित श्रीगोल-शास्त्री दर्शन-... श्रीमान् पण्डितनन्दकिशोरशर्मा महोप... पं० अवधेशप्रसादशर्म्मा महोपदेशक... समुपस्थिता आसन् । प्रथमदिने तत्र स... धर्म-महत्व-वर्णव्यवस्था-मूर्तिपूजा-प्रातिव्रत्यादि... षयकं व्याख्यानमभूत् । गुरयाकोठी-हाई... प्रधानपण्डितस्य, श्रीमतः पण्डितरा... त्रिपाठिमहोदयस्य, हिन्दुमहासभाया महो... कस्य श्रीलक्ष्मीनारायणमिश्रमहोदयस्य, पं० ... पाण्डेयस्य कवीन्द्रस्य च भाषणं संजातम् । ... सहस्रद्वयस्योपस्थितिरासीदेवं सनातन-धर्मस्य... गतिजनकमिदम् । अन्ते च सधन्यवादं स... सर्जनमभूत

निवेदकः—
अयोध्याप्रसाद त्रिपाठी
जगन्नाथ सं० पो०-लक्ष्मीगञ्ज, सा...

RegN. 134

## सचित्रम् सामुद्रिक-रहस्यम् ।

ले०—श्रीकालिकाप्रसादशर्म्मा, राजज्योतिषी,

अद्भुतमिदं ग्रन्थरत्नम्, हिन्दीटीकासहितम्, अनेकचित्रविभूषितम्, नरनारीणां शुभाशुभज्ञाने नितरामुपयुक्तम्, संस्कृते सर्वथा नवीनमेव । एतेन हस्तरेखाणां गुरुं विनैव सम्यक् परिचयो भवति। मूल्यम् १।) मुद्रा।

## रतिरहस्यम् (कोकशास्त्रम्)

एष प्राचीनो ग्रन्थः श्रीमहाकवि कोकोक विरचितः। अस्मिन् कामशास्त्रसम्बन्धिन्यः सर्वा वार्ताः, पद्मिनी शङ्खिनी चित्रिणी हस्तिनी प्रभृतीनां स्त्रीणां भेदाः, एवं चत्वारः पुरुषभेदाः, स्त्रीणां वशीकरणस्यौषध्यः, मन्त्राः, तत्तद्देशीयानां स्त्रीणां पुरुषाणाञ्च लक्षणानि, तेषां संयोगाः, आलिङ्गन-चुम्बनादीनां भेदाः, तेषां विशेषाश्च अन्ये च बहवो ज्ञातव्याः कामशास्त्रीयाः विषयाः सन्ति। एष ग्रन्थो नितरां सुप्रसिद्धः प्राचीनश्च विद्यते। एतस्यैका प्रतिः सर्वैरपि स्वसविधे नूनं संस्थापनीया। मूल्यम्—मुद्राद्वयम्।

## राष्ट्रभाषाभूषणम् ।

ले०—श्रीगोपाल शास्त्री, दर्शनकेशरी, साहित्याचार्यः ।

एतत् पुस्तकं हिन्दीभाषायां विद्यते। संस्कृतज्ञानां हिन्दीज्ञाने नितरामुपकारजनकम्। सर्वैरपि संस्कृतज्ञैरेतद् व्याकरणम् पठनीयम्। एतेन हिन्दी भाषायां निबन्धलेखन-अनुवादादिज्ञाने महत्सौकर्यं स्यात्। मूल्यम्—आणकषट्कम्। मार्गव्ययः—=)

## सूर्यचरितम् वा ऋतुचरितम् ।

ले०—तारादत्तपन्तः, साहित्याचार्यः, व्याकरण-काव्य...

गोलविद्या-विषयकं नूतनं महाकाव्यम्

अतिसरलम्, भारतस्य विभिन्नदेशानां ... पर्वतानां ऋतूनां चात्र परिचयो कविता न... सरण्या समुपवर्णितः। गोलविषये नूतनं सं... महाकाव्यम्। सर्वथा द्रष्टव्यम्। मूल्यम्... मार्गव्ययः पृथक्।

## गोलविद्या गोलसूत्रञ्च ।

ले०—श्रीतारादत्तपन्तः, साहित्याचार्यः, काव्य-व्याकर...

संस्कृते भूगोलज्ञानस्य प्रधानं प्रथम... कम्। अत्र हिन्दी-भूगोल-पुस्तकवत् भारत... समस्तो भूगोलः सरलतया बालानां ज्ञानाय ... वर्णितोऽस्ति। संस्कृतकाव्येषु नाटकेषु पुरा... केषु च समागतानां देशानां नदीनां स्थाना... तानाञ्चाधुनिकी स्थितिस्तेषां नामानि च ... सर्वथा द्रष्टव्यमिदं पुस्तकम्। मूल्यम् ॥) मा...

## महाकवि बाणभट्टः ।

लेः—भू०पू० सुप्रभात-सम्पादकः श्रीकेदारनाथ...

हिन्दीभाषायामयमपूर्वो निबन्धः। अत्र ... भट्टस्य जीवनविषये महत्वपूर्णा, मननीया ... षणा वरीवर्ति। छात्राणां कृते नितरामुपका... निबन्ध-बन्धः। मूल्यम् =) मार्गव्ययः -)

सर्वेषां प्राप्तिस्थानम्—

 मैनेजर, सुप्रभात कार्यालयः, बनारस-सि...

Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

सौराश्विनः १९८५ वैक्रमाब्दे ।

October 1928.

षष्ठोऽङ्कः
No. 6

# सुप्रभातम् ।

संस्कृत-साहित्य-समाजस्य मुखपत्रम् ।

...तातिमुदस्यद् भेदतारा विलुम्पन्-नयदधिसुरभाषाभाषि जागर्तिमुच्चैः ।
...विहग-वादैराह्वयद् भाग्यभानुम्, विलसतु भुवनेऽस्मिन् सर्वतः 'सुप्रभातम्'

निरीक्षकः—

महामहोपाध्याय-श्रीदेवीप्रसादशुक्लः, कविचक्रवर्ती, साहित्य-वारिधिः

...दकः—
... श्रीगोपालशास्त्री त्रिपाठी "साहित्याचार्य्यः"

व्यवस्थापकः—
श्रीगिरीशशुक्लः, "न्यायाचार्यः"

...मूल्यम्—३)
...भ्यः—१२)

छात्रेभ्यः—१॥)
वैदेशिकेभ्यः—५)

अस्याङ्कस्य मूल्यम् ।)

# लेख-सूची ।



## पण्डितान्प्रति प्रश्नः ।

अद्यत्वे संस्कृतज्ञा विद्वांसोऽपि सनातन-धर्माभ्युन्नत्यै बद्धपरिकरा दृश्यन्ते, तत्र किं स्वरूपं सनातनधर्मस्येति प्रथमत ऐकमत्येन प्रकाशयन्तु ।

यथा—खिष्ट-मोहमद-धर्मयोरन्यधर्मावलम्बिनां भवति प्रवेशः । सनातनधर्मे सम्भवति न वा सम्भवति चेत्तेषां कुत्र वर्णे प्रवेशः ? नो चेत् छन्द-(वोट) युगेऽस्मिन् सर्वथा वर्द्धमानायामन्यधर्मिणां संख्यायां कथमस्माभिः स्वात्मानं गोप्तुमपार्यते ?

चित्रकूट पाण्डेयः प्र० अ० सारण्य स० विद्यालयस्य

## उपदेशकानां कृते सूचना ।

वीकानेरस्थ-ब्रह्मचर्याश्रमस्य यज्ञाऽनुष्ठानो-त्सव-सम्मेलनसमये कपिलक्षेत्रे कार्तिकशुक्ला-मारभ्य भविता । श्रीसनातनधर्म-सौभाग्य-महानुभावा उपदेशकास्तत्र सम्प्रार्थ्यन्ते महानुभावाः कृपया मार्गव्ययं गृहीत्वाऽत्र महोत्सवं सफलयन्तु सनातन-धर्मस्य आ- च गौरवं समुल्लासयन्तु । तथा निजा- शुभसूचनां दत्वा शीघ्रमनुगृह्णन्त्विति सूचयति

—चन्द्रशेखर मिश्रः

मन्त्री—ब्रह्मचर्याश्रम, वीकानेर




विध-विषय-विभूषितम्, अद्वितीयम्, सचित्रं संस्कृत-मासिक-पत्रम् ।

सौर—आश्विने । १९८५ वैक्रमाब्दीये | षष्ठोऽङ्कः ।

## भव्याभिलाषः ।

[ ...ता—प्यारेलालशर्मा, प्रधानाध्यापकः ]
( ज्ञानिशाला, वृन्दावनम् । )

...म्बरो नूतननीरदाभः ।
...पर्यङ्कशेषाऽहिविलक्षणाभः ॥
...द्य-गङ्गा-यमुना-जलाभः ।
पुनातु पुण्यं भुवि पद्मनाभः ॥ १ ॥
...वर्णाम्बर-सुप्रभातम् ।
...सारस्वताशा-सुमनःप्रभातम् ॥
...सुधी-सूर-कर-प्रभातम् ।
...य भूयाद्भुवि "सुप्रभातम्" ॥ २ ॥

## नाम-धाम-गुप्तिः ।

[ रचयिता—उत्तरमध्यगाक्षरगुप्तः ]

किं नाम स्यान्मुरारेः, सरसिजजनुषो वाहनस्याभिधानं
को वा सूनुर्मघोनो, जनिसमयदशां वीक्ष्य को वक्त्युदर्कम्
ईहन्ते मानुषाः किं हिमगिरि-दुहितुर्वल्लभः को मतः स्यात्
को वा देवर्षिरिष्टः, किमु सदृशपदं भाववाच्यस्य नूनम् ।
धीयन्ते कानि युद्धे, ननु रजतसुवर्णादिधातोः खनिः का
किं शास्त्रं भार्गवस्य, श्रुतिमधुर-रणत्पादभूषा किमु स्यात्
किं स्यान्निर्मन्थ्यदारु क्रतुविधिविहितं पाठका उत्तराणि ।
मध्यैर्वर्णैर्ब्रुवीरन् रचयितुरभिधास्थानयोर्वाचकानि ॥ २ ॥



# स्वागतम् *

लेखकः—पं० श्यामदत्तः पन्तः ( साहित्य-शास्त्री )

योगाभ्यासवशीकृतेन मनसा तन्निर्गुणं निष्क्रियम् ।
ज्योतिः किञ्चन योगिनो यदि परं पश्यन्ति पश्यन्तु ते ॥
अस्माकं तु तदेव लोचनचमत्काराय भूयाच्चिरम् ।
कालिन्दी-पुलिनेषु यत्किमपि तन्नीलं महो धावति ॥

अयि परमकरुणानिधे ! दीनवत्सल !! कृष्ण !!!

पुनरपि समागतस्त्वदीयो जन्मदिवसः । तत्त्वरितमनुगृहाणास्मान्, देहि दर्शनम् । चिरंसंचित-पापध्वंसविधौ पटीयसे दर्शनायोत्कण्ठिताः स्मो वयम्, विमलीकुरु कलुषित-हृदयाना मज्ञानान्धकारतचेतसाञ्चेतांसि, दर्शय सन्मार्गम्, स्थापय स्वचिह्नानि, अवलोकय देशव्यवस्थाम्, अपनय दुःखान्यत्रत्यानि, कीदृशी दशा विद्यते पुण्यभूमेर्भारतस्येदानीम् ? कियानत्याचारो भवति विमलेऽस्मिन्नार्यावर्त्ते ? यत्र पुरा व्यास-वाल्मीक्यादयो महर्षयोऽभूवन् तत्राधुना दुष्टचेतसामकारुणिकानां पाश्चात्यानां यवनानाञ्च निवासो विलोक्यते, अतः कुतोऽस्माकं सुखम्, अयमेवावसरो भवदीयशुभागमनस्य । यतस्त्वमेवालम्बनमस्माकम्, त्वमेवानुभविता परमदीनानां विषमार्त्तेः, कियत्कालपर्यन्तं दुराचारिणामकारुणिकानां मध्ये स्थातव्यमस्माभिः ?

* लेखोऽयं भाद्रे स्थानाभावादत्र प्रकाशित इति
—सम्पादकः ।

न स्मर्यते ? यत्पूर्वमिहागत्य सर्वा
दुःखानि दूरीकृतवान् भवान् ? किं प्रतिज्ञातं
कौरव-पाण्डवानां युद्धे ? तत्कथं चिरयसि ?
द्भागधेयस्य वैपरीत्येन स्वतः प्रतिज्ञातं वा
यद्विस्मृतं त्वया तन्महच्चित्रम् ! यतोऽवलोक्य
भारतस्य महतीं विपत्तिं क्षणमपि न करोषि
पातम् । वयं सर्वदा त्वामवलोकयितुं त्व
जन्मदिवसेऽहोरात्रं परमकारुणिकं मन्यमाना
मो भवन्तम् । भवति गृहे गृहे महोत्सवः,
सञ्जात-कौतुका जनाः, किन्तु भवदीय-कृपाक
नावलोक्यन्ते । कथं भवदाश्रितानामप्यसमद
भवति विपत्तिकलाप-जन्यमरण्यं रोदनम् ? कि
वोक्तं श्रीमता भगवद्गीतायाम्—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्

इति ? युक्त एव प्रतिभाति किं यवनानां दुरा
भवन्तम् ? उचित एवास्ति किं सदैव त्वामेव
न्तीनामप्यसहायानामबलानां चीत्कारः ? कि
विचार्य विलम्ब्यते भवता ? किमर्थमुक्तं पुरा
सादिषु यदा भारते वर्षे दुराचारिणो भवेयु
तेषां नाशाय जगन्नियन्ता पुराणपुरुषोत्तमो भू
वतरिष्यतीति महर्षिभिः ? किं सर्वेऽपि ते
श्वयितुं निर्मिताः सन्ति ? नो चेद्देहि
मनोहरं जनसन्तापनाशकं दर्शनम् ? शीघ्रमेवा
यास्मान् ? वयं तु कलुषित-हृदयानां विषम
रतो बहिर्गन्तुमपि न शक्नुमः । किम्बहुना,
सर्वेषां दीनाऽदीनानां रक्षको नाशकश्चासि ।
त्वमेव शरणमस्माकम् ।

कारुणिक ! एहि, आगत्य च विस्तारय स्व-
जाल-चमत्करणानि, अकारुणिकेभ्यो वैदे-
मोचयाऽस्मान् द्रुतम् ? तथ्यं कुरु
दुर्हृत्सन्तापकं वाक्यम् । तथाहि—

त्राणाय साधूनां विनाशाय च दुष्कृताम् ।
संस्थापनार्थाय संभवामि युगे युगे ॥"

ऽद्य त्वदीयं स्वागतं कुर्मः । आशासे,
मिमां स्वीकृत्य भवद्दर्शनोत्सुकानामहर्निशं
भजमानानां भक्तानामाशा-पल्लवं स्वकी-
नाभिवृष्य स्वनामाङ्कितमेव "श्रीकृष्ण-ज-
-व्रतं" सफलयिष्यसीति शम् ।

## ( समस्या-पूर्तिः )

"धाताऽपि भग्नोद्यमः" *

( १ )

परन्ध्रवीक्षणपरो हालाहलं यन्मुखे ।
गतिर्जलाशयचरोऽजस्रं द्विजिह्वोऽपि यः ।
यितुः पयोऽपि दशति प्राणानहो दुष्टधी-
न-चित्तवृत्तिहरणे "धाताऽपि भग्नोद्यमः ॥"
—किशोरीदास वाजपेयी ।

( २ )

नरदुर्लभः परहितः सेवा तु तस्मादपि ।
ऽस्तिसुयोगिनामपिमताऽगम्यस्वरूपाध्रुवम् ।
! इहलोकसेवनपरे मार्गे तथापि स्थिताः ।
नियमाध्वनश्चलयितुं "धातापि भग्नोद्यमः ॥"
—इन्द्र विद्यार्थी "न्यायतीर्थः"

( ३ )

मारीचेन विभीषणेन महता श्रीकुम्भकर्णेन वा ।
धीरेणापि हनूमताऽथ बहुधा सम्बोधितो रावणः ।
श्रीमद्रामविरोधमेव कृतवान् तस्मादहं निश्चितम् ।
मन्येदुर्जनचित्तवृत्तिहरणे "धाताऽपि भग्नोद्यमः ।"

( ४ )

श्रीकृष्णद्रुपदादिभिः सविनयं सम्बोध्यमानो भृशम् ।
दुर्नीतिप्रचुरप्रयोगनिपुणोऽतिक्रान्तसन्धोऽनृजुः ॥
दुह्यन् पाण्डुसुतेभ्य ईषदपि नो दुर्योधनोऽदाद्धनम् ।
मन्ये दुर्जनचित्तवृत्तिहरणे "धातापि भग्नोद्यमः ॥"

( ५ )

"श्रीगङ्गाधर"-"गोखले"-प्रभृतिभिःप्रेद्दात्तमाशालिना
श्रीमद्गान्धिमहात्मना च बहुधा स्वाराज्यमभ्यर्थितः ॥
प्रत्यूहं जनयन्नयंश्च समयं दत्ते न तच्छासको
मन्ये स्वार्थजडस्य मार्गनयने "धाताऽपि भग्नोद्यमः ॥"
—पण्डित रमाकान्तजी ।

## किं तत्त्वज्ञानादस्माकमवनतिः ?

लेे०—न्य० वि० मोहरीरः ( काशीविद्यापीठस्थः )

भारतीयतत्त्वज्ञानादस्माकमवनतिरभूदिति केचि-न्मन्यन्ते । ते तु प्रायो नवशिक्षादीक्षिताः सन्ति । ते ऐतिहासिकप्रामाण्येन निदर्शयन्ति यदस्माकमियं दुर्दशाऽकर्मण्यतया संजाता, सा चाकर्मण्यता तत्त्वज्ञानात्समुत्पन्नेति । यथा हि, अद्वैतसिद्धान्तेन, दयादाक्षिण्यादिगुणविपाकेन, परलोकादिविमर्षणेन च शत्रुभिर्हतेष्वपि दारेषु, हतेष्वपि बालेषु, अपहृतेष्वपि धनेषु न वयं तान् प्रत्यपकुर्मः ।

* बीकानेरस्थश्रीसेठिया विद्वत्समाजस्य पाक्षिकाधिवे-
पठिताः ।
( प्रेषकः )

यद्यपि वयं पश्यामो यदियं परयस्त्रीरिव दस्युभिरुपभुज्यमाना, दुःशासनाकृष्यमाणपाञ्चालराजतनयेव विगलितावयवा, हठादुपभुक्तस्त्रीरिव चेखिद्यमाना, वैधव्यविक्लवा नववधूरिव शोकोपहतहृदया वसुन्धरा रोदितीव तथापि तस्याः कृते न किमपि वयमाचरामो यत इयमस्माकं भावना वरीवर्ति यत् स्वयं हि भगवानागत्यागत्य तदुद्धारं करिष्यतीति । इयमस्माकमकर्मण्यता तत्त्वज्ञानात्संजायतेऽतस्तदेवास्माकमवनतेर्मूलकारणमिति ते वदन्ति ।

वयमपि स्वीकुर्मो यदस्माकमवनतिरकर्मण्यतया अभूदिति यत एतत्पूर्वेतिहासात्प्रसिद्धम् । किन्तु, इयमकर्मण्यता तत्त्वज्ञानात् संजाता, इत्यस्माकं नाभिमतम् । वयन्तु मन्यामहे यदेतत्कथनमज्ञानमूलकमिति । न तेषां तत्त्वज्ञानस्य सम्यग्ज्ञानम् । ते न जानन्ति यदस्माकं तत्त्वज्ञानं हि कर्मपथ-विचलितान् जनान् सत्कर्मणि प्रवर्तयतीति । यदा खलु जना मायामोहवशा भवन्ति तदा ते कर्म-पथाद्विचरन्ति । यदाऽर्जुनो युद्धभूम्यां योद्धुकामान् स्वबान्धवान् दृष्टवांस्तदैते मरिष्यन्तीति भीत्या मोहाविष्टोऽभूत् कर्मपथाच्च विचचाल, तदा श्रीकृष्णस्तस्याज्ञानमूलकं मोहमपनेतुं कर्मणि च तं प्रवर्तयितुं भगवद्गीतामुक्तवान्, इति जानन् गीतया अकर्मण्यता संजातेति कथं मन्येत । मोहाविष्टोऽर्जुनोऽन्ते स्वयमेव कथयति, यत्—

"नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत !
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव" इति ।

अयं गीताया एव परिणामः । सा च गीतासत्तत्त्वज्ञानविषयकानामुपनिषद्ग्रन्थानां सारसर्वस्वमिति । तथाहि—

"सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीताऽमृतं म[...]"

इत्यस्माद्वचनात् सिद्धमेव ।

सेयं भगवद्गीता विचलितकर्मपथानां ज[...]मज्ञानमूलकं मोहं ज्ञानयोगेनापनयन्ती, कर्म[...] च तान् निष्कामकर्मणि प्रवर्तयन्ती,—

'अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरि[...]
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत[...]'

इत्युपदिशति । तत्कथं वयं मन्यामहे यदुप[...]दुक्त-तत्त्व-ज्ञानादस्माकमकर्मण्यता संजाते[...] अस्यास्तु भिन्नं हि कारणं स्यात् ।

नवशिक्षा-दीक्षिता वदन्ति यत्तत्त्वज्ञानमेवा[...] कारणम् । यद्येतत् सत्यं तर्हि त्वेत तत्त्वज्ञान[...]क्ताद् भिन्नतरं वा भवेदथवा उपर्युक्ततत्त्वज्ञा[...]यकमज्ञानम् स्यात् । उपनिषत्तत्त्वज्ञानात् [...] भिन्नतरं तत् तर्हित्वसमत्तत्त्वज्ञानादस्माक[...]तिरभूदिति वक्तुं न शक्यते, यत उपनिषत्त[...]नमेव केवलमस्माकं तत्त्वज्ञानं यतस्तदेकमेवा[...] ब्रह्म विवृणोति तद्द्वारा च निष्कामकर्मणि [...]यति । ईशावास्योपनिषद इमौ द्वौ श्लोकौ [...]वार्थस्य प्रमाणम् । तथा हि—

"ॐ ईशावास्यमिद ँ सर्वम्
यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथाः
मा गृधः कस्यस्विद्धनम् ॥ १ ॥

जगदिदं सर्वव्यापिना तेन ब्रह्मणा व्याप्तम[...] अतः सर्वाण्यपि वस्तूनि समानानि सन्ति । [...] जगद्वस्तूनां सच्चिदानन्दस्वरूपं ब्रह्म न [...] किन्तु शब्दरूपमयी माया सदैव परिवर्तते[...]

। अतस्त्यक्तेन भावेनार्थादसक्तबुद्ध्या
जीथाः । तत्र कस्यापि वस्तुनः परिग्रहणं
। अर्थात् "असक्तो ह्याचरन् कर्मेति"
तोक्तिः—

नेवेह कर्माणि जिजीविषेच्छतं समाः ।
त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥२॥

गति कर्ममार्गेण विनाऽन्यो नास्ति
यः खलु तानि कर्माण्युपर्युक्तरीत्या अर्थात्
द्ध्या करोति, स तेन कर्मणा न लिप्यते ।
र्षशतं जीवितुमिच्छेदिति भावः ।

र्थमिमं सम्यग् न जानन्ति, ते यदि वदे-
कतत्त्वज्ञानमकर्मण्यतामुपदिशतीति, तन्ना-
? किन्तु जानन्तोऽपि केचित् 'महाजनो
स पन्थाः' इति बुद्ध्या महाजनस्यैकदेशी-
न नीता अन्धा इवानुसरन्ति, इति
नम् ? अनेन त्वस्मत्तत्त्वज्ञानस्य वैशि-
तं भवति । अस्मत्तत्त्वज्ञानन्तु इह
मेति दर्शयति । वयं पश्यामो यत्
ज्ञानेनाऽज्ञानेन वा कर्म न कुर्वन्ति
मन्यन्ते यत्कर्मैव जन्मनो मूलं, जन्म च
मतस्तद्धेयमिति । किन्तु न वयं मन्या-
महे यज्जन्मनो मूलं कर्मेति । अस्माकं मत्या
तु जन्मनो मूलमिच्छैव । तदैच्छत् बहुस्याम्
प्रजायेय इति । बह्व्यः कथाः अस्मद्धर्मग्रन्थेषु
पुराणेषु वा दृश्यन्ते, याः कथयन्ति यदस्य
मरणसमये कामेच्छा जाताऽतोऽस्यागामिनि जन्मनि
शुनो जन्माऽभूत्, अन्यश्च मृत्युकालेऽस्य राम-
नामस्मरणमभूत्, अतोऽयं परे जन्मनि भक्तो
जात इति । सदिच्छा सज्जन्मनः प्रेरिका, असदि-
च्छाऽसज्जन्मनः । इच्छाऽभावस्तु जन्माऽभावस्य
जन्म दुःखात्मकत्वाद्धेयम् । अत इच्छापि तन्मूल-
कत्वाद्धेयैव । अत्र तु केचिन्मन्यन्ते यदिच्छाभावात्
कर्मप्रवृत्तिर्न सम्भवति । एतत् सत्यम् । किन्तु
कर्मप्रवर्तिकेच्छा जन्मनो मूलं नहि । अत एव
भगवान् वदति यत् 'असक्तो ह्याचरन् कर्म
परमाप्नोति पूरुषः । 'कर्मभिर्न स बध्यते ।'
'मामेति सोऽर्जुन' इति । एतदस्माकं तत्त्वज्ञानम् ।
तत्तु निष्कामकर्मणि प्रवर्तयति । तत्कथमियमक-
र्मण्यता तस्माज्जाता इति ? एतत्तु सम्यग्
ज्ञायते यदियमकर्मण्यता तत्त्वज्ञानविषयकादज्ञानात्
सम्भूता इति । * (पुष्पाञ्जलितः)

---

* काश्यां 'काशीविद्यापीठनाम्नि राष्ट्रियमहाविद्यालये पुष्पाञ्जलिनामतश्चैका संस्कृतपत्रिका हस्तलिखिता प्रतिमासं
भवति । तत एवोद्धृतोऽयं लेखो लेखकेनैव । (सम्पादकः ।)

**पत्र-प्रेषणसमये ग्राहक-सङ्ख्या नूनं लेखनीया, अन्यथा पत्रमवलोकितमेव न स्यात् ।**




[ रचयिता—" साहित्य-शास्त्री " श्रीसरयूप्रसाद पाण्डेयः ( द्विजेन्द्रः ) " काव्यतीर्थः " ]

रघुनाथ ! हे दयालो !
द्रुतमेहि भारतेऽस्मिन् ॥ ध्रुवम् ॥

( १ )

अयि भो प्रभो ! शरण्य !
सततं सुराग्रगण्य !
अवनीसुता-वरेण्य !
शुभ-राम-नाम-धारिन् !
द्रुतमेहि भारतेऽस्मिन् ॥ रघु० ॥

( २ )

जगदीश ! जन्मदातः !
निज-भक्तजात-पातः !
अखिलेश ! हे विधातः !
जन-दुःख-दैन्य-दारिन् !
द्रुतमेहि भारतेऽस्मिन् ॥ रघु० ॥

( ३ )

जनताप तापहारिन् !
खल-खर्व-गर्वदारिन् !
भव-चाप-खण्डकारिन् !
छलभृत्-समाजकेऽस्मिन् !
द्रुतमेहि भारतेऽस्मिन् ॥ रघु० ॥

( ४ )

कलिकाल-चक्रधारिन् !
'सरयू'-तटे विहारिन् !
समयेऽवतारधारिन् !
समयं किमीक्षसेऽस्मिन् ?
द्रुतमेहि भारतेऽस्मिन् ॥ रघु० ॥

( ५ )

सुर-गो-'द्विजेन्द्र'-पाल !
भगवन् ! विशाल-भाल !
दशभाल-काल-काल !
विजयाभिधे दिनेऽस्मिन् !
द्रुतमेहि भारतेऽस्मिन् ॥ रघु० ॥

# गृहागमनम् ।

( ले०—बहादुरचन्द्र शास्त्री )

( अवशिष्टांशः )

नास्त्यस्मिन् संसारेऽन्यत्किमपि कष्टतरं वस्तु चतुर्दशवर्षवयस्कान्माणवकात् नचायमलङ्करिष्णुर्भवति नाप्युपयोगी । लघुतरबालकवत्तस्मिन् स्नेह-निषेकोऽसंभवः स पुनः सर्वदाऽन्तरायते । य... बालकवदस्फुटं भाषते तदा स शिशुः कथ्यते ... यदि प्रौढं वक्ति तदा धृष्टोऽभिधीयते, यत्सत्य... विधमपि तस्य भाषणं विजुगुप्स्यते, स ... समुपचीयमानमकमनीयं वयः पद्यते । ... नीतया त्वरया स निजानि वस्त्राण्यतिक्रामति, ... स्तस्य कर्कशीभवति, विशीर्यंति कम्पते च, ... तस्य सहसा त्रिकोणं जायते विरूपश्च ... आदौ बाल्यकाले तु सर्वाणि स्खलितानि ...

र्वन्ति, चतुर्दशहायने माणवके पुनरपरिहार्या ष्टुटयः सुदुर्मर्षा भवन्ति । इदञ्चारुन्तुदं दत्तम्मन्यः संवर्तते, ज्यायसा जनेन संलप- ऽग्रतःसरो भवति, तथा वाऽनुचितमपत्र- संजायते यथा स्वस्माद्प्यस्तित्वात्स हीणः ते।

पीदमस्मिन्नेवायुषि संदृश्यते यत् तरुणः कीर्तिं प्रीतिञ्चाभिलष्यतितमाम् यः कोऽपि भावं विवृणोति तस्यासौ भक्तिमान् दासः ते। परं न कोऽपि तेन सह प्रकाशं प्रीतिं हते, तद्धि निन्दितं व्यसनं गणयेत, ततश्च ाय तदवरं भवेत् । तेनैव यत्किञ्चित्तर्जन- स विहीनप्रभुणा बम्भ्रम्यमाणेन शुनाऽति- भवति ।

र्दशाब्दस्य माणवकस्य स्वकीयं गृहमेव स्ति । अपरिचिते सद्मन्यपरिचितैः पुरुषैः सनं तत्कृते परं पीडाकरमस्ति, अयं पुनः ापचयस्तस्य; यदि महिलानां कृपादृष्टि-लाभः रस्कारविरहश्च भवेत् ।

टिकस्य कृते तु स्वस्या मातुलान्या अशुभा- ुणिकीभवनं नितान्तं व्यथाकरमासीत् । या गरीयस्या योषिताऽनवरतं कुत्सितो वि- ाभवत् । यदि सा कदाचित्तं किमपि कर्तु- तदा स निरतिशयं हर्षं लेभे यत्सत्यं र्षं उपोद्वलितः संललद्दे, तदा च सा तमा- ाऽतिमूढो भूः, गत्वा पाठं पठ इति ।

नैरन्तर्येण विडम्ब्यमानः फटिकः परं ेदे, ववाञ्छ च कञ्चन विवृतं प्रदेशं सच्छेन वायुना कण्ठं संतर्पयाणीति । परं नासीत्तत्र कश्चिद्विवृतः प्रदेशो गन्तुम् । समन्तात्कालिकातैर्भुवनैः कुड्यैश्च परिवेष्टितः स प्रतिनिशं निजग्रामगृहस्य स्वप्नं ददर्श तत्रैव प्रतिगन्तुञ्चाचकाङ्क्ष । सस्पृहं स आदध्यौ 'क्वासौ रमणीया शाद्वला भूमिः, यत्राहमादिवसं पतङ्गोत्पातनरतो व्यहरम्, क्व च त उदारा नदीतीरपरिसराः यत्राहं-सानन्दं गायं-गायं नादं-नादं च भ्रमं-भ्रमं च दिवसमनयम्, क्वासौ तन्वी सरिद्‌ यत्राहं यथेच्छमममज्ज मम्लवे च' इति स तस्य बालसखानां संघस्यापि चेतयामास यस्योपरि तस्योच्छृङ्खलमाधिपत्यमासीत् किम्बहुना नृशंसायाः शासिकायाः, मत्सरिण्या मातुः स्मरणमपि दिवानिशं तस्य मनः संकुलयाम्बभूव पशुप्रेम-निर्विशेषः कश्चित्प्रेमविशेषः, कापि प्रियजनसंदर्शनलालसा, अनीर्वचनीया वियोगकालिकी काप्युत्कण्ठा, सायंकाले वत्सस्य संरूतिरिव अन्तरतमस्य हृदयस्य मातरं प्रति निभृता काप्याहूतिः, सर्वथा पाशवीं वृत्तिमनुकुर्वत्किमपि भावान्तरमस्य लज्जापरवशस्योत्कण्ठितस्य तनुकस्य मन्दस्य कुरूपस्य पोतस्य मनस्तरलयांचक्रुः । नैतत्कश्चिदपि विदांचकार परन्त्वैनत् तस्य मानसं निरन्तरं कदर्थयांचकार ।

नासीत्कृत्स्नेऽपि विद्यालये फटिकात्परः पठने जघन्यतरो माणवकः । यदा तदाऽध्यापकेन कमपि प्रश्नं पृच्छ्यमानः स आस्यं व्यादाय तूष्णीं तस्थौ सर्वविधाञ्च प्रतिपादितां ताडनापरम्परामतिभाराभिभूत इव रासभः सधैर्यं विषेहे । अन्येषु बालेषु बहिः क्रीडत्सु स गवाक्षान्तः स्थितः परमौत्सुक्येन विप्रकृष्टानां गृहाणां छदींषि निर्वर्णयाम्बभूव । अथ दैवयोगाद्‌ यदि स उपरितनेषु विवृतेषु

छदिःपटलस्थलेषु बालान् संक्रीडमानान् आलुलोके तदा तस्य हृदयं लालसातिशयाद्बुद्धिविजेतराम् ।

अथैकदा स प्रयत्नेनोत्साहमास्थाय मातुलं पप्रच्छ—'माम ! कदाहं गृहान् गच्छेयम्' इति । तस्य मातुलः प्रत्युवाच—'प्रतीक्षस्व यावदवकाशाहा उपयन्ति' इति ।

परन्त्ववकाशाहा यावदक्तूवरमाससमागमेलिमा-नासन् । तदित्थं दीर्घः कालः प्रतिपालनीय आसीत् ।

एकदा फटिकस्य पाठपुस्तकं क्वापि प्रणनाश । अन्यदीयपुस्तकानां साहाय्येनापि तत्कृते पाठाभ्य-सनाधिगमनं सुदुष्करं संववृते । तदपीदानीमसंभवं जज्ञे । दिने दिने अध्यापकस्तं वेतसताडं निर्दयं ताडयामास । तस्य दशा तथा दयनीया शोचनीया च संवृत्ता यथा तस्य मातुलसूनवोऽपि तदीय-बन्धुत्वाभ्युपगमाल्लज्जामापेदिरे । ते तं तथो-पहसितुमवहेलयितुञ्चारेभिरे यथेतरेऽपि बाला न दधृषुः । अन्ते स मातुलानीमुपसंगम्य निवेदयामास —'पुस्तकम्मेऽनास्ति' इति ।

अथासौ निरतिशयघृणाप्रकाशनपुरःसरं स्फु-टन्तीव व्याजहार—'आः ! पामराधम ! ग्राम्य गर्दभ ! कथङ्कारं त्वहं मासस्य पञ्चकृत्वः पुस्तकानि क्रीत्वा तुभ्यं दातुं शक्नुयां यावत्स्वकीयमपि कुटुम्बं मया पालनीयमस्ति ?' इति ।

तस्यां रात्रौ विद्यालयात्प्रतिनिवर्तमानः फटि-कोऽध्वनि शिरःशूलं वेपथुञ्च भेजे । स उपजिगमिषुं ज्वरावेगमनुबभूव । एष पुनस्तस्य महीयाञ्ज्वरव्य-तिकर आसीद् यद् 'माऽहं मातुलानीकृते-शल्यं भूवम्' इति

परेद्युः प्रातः फटिकः क्वापि न ददृशे । प्रतिवेशदेशेषु गवेषणा मोघा बभूव । प... सकलां शर्वरीं मुसलधारं ववर्ष । ये च ... विचिकीषवो विनिर्जग्मुस्ते सर्वे त्वक्क्लेदं चि... अवसाने विश्वम्भरो राजपौरुषं साहाय्यं ननाम...

निशामुखे राजपुरुषाणामेका शकटी गृहद्वा... ससाद । पर्जन्यः साम्प्रतमपि प्रवर्षतिस्म र... सर्वा आप्लाविता आसन् । द्वौ राजपुरुषौ बाहु... द्वहन्तौ फटिकं विश्वम्भरस्य पुरतो निद... स आ च पादात् आचशिरसः परिक्लिन्नः... समाकीर्णश्चासीत् । वदनं तस्य ज्वरावेगेन ... गात्राणि च विवेपिरे । विश्वम्भरस्तं बाहुभ्या... गृहान्तरन्निनाय । तत्पत्नी तं तथाभूतमा... सविक्षोभमुदीरयाञ्चकार—'धिक् कियद्ग्रा... काष्ठामयं माणवकोऽस्मान्नीतवान् । नूनमेनं ... प्रेषयितुमर्हति भवान्' इति ।

फटिकस्तस्यास्तद्वचनं श्रुत्वा सहिक्कं प्रो... क्रन्द—'माम ! गृहानेव खलु प्रस्थितोऽहं तैर्व... समाकृष्टोऽस्मि !'

अथ ज्वरः सवेगं ववृधे, समग्रां रात्रिं च ... वीतसंज्ञस्तस्थौ । विश्वम्भरश्चिकित्सकमाना... मास । फटिको नेत्रे उन्मीलयामास पटलमु... माणश्च शून्यं बभाषे—' माम ! किमिदानी... काशाहा आगताः ?' इति ।

विश्वम्भरस्तस्याक्षियुगलादश्रूणि ममार्ज... लन्तौ च फटिकस्य तान्तौ पाणी आत्मीयाभ्याम... तदन्तिकमासीनश्च निखिलां त्रियामां नि... अथ माणवकस्याधरोष्ठं स्फुरितुमारेभे तस्य ... क्रमेण चीत्कारतामापेदे । स चुक्रोश—'मा... मातः ! मैवं मां मारय । नन्वस्व ! तथ्यं ब्रवीमि...

थान्वेद्युः फटिकः स्तोककालाय चेतन । आगारकोणेषु चक्षुषी चारयन्कस्याप्या-सम्भावयमानो बभाषे । अन्तेऽभिव्यक्तनैः-तस्य शिरः पुनः शिरोधाने विलिल्ये । निःश्वासपुरस्सरं स निजाननं कुडयाभिमुखं ।

श्वम्भरस्तस्य मनोभावानवजगाम । आत्मी-नाहृश्च नमयन्ननीचैः शशंस—' आकारित-तव मातरं फटिक ! ' इति ।

नपश्चिन्ताय । चिकित्सकः सखेदं बभाषे—विषमा वर्तते बालस्य दशा ' इति ।

टकः शब्दायितुमुपचक्रमे—" अङ्कान् अनु-म् । अङ्कान् अनुगाहचतुष्टयम् । अङ्कान इति । तेन हि बहुकृत्वः सिन्धौ वाष्पि-नेषु मानरज्जोरङ्कानभिदधाना नाविकाः आसन् । सम्प्रति पुनः स स्वयमप्येकमगाधं परिमातिस्म ।

ऽपराह्णे फटिकस्य माता वात्याऽऽवेशं समाविवेश, इतस्ततः पार्श्वतः पार्श्वं परिघू-च परिदेवयितुं संक्रन्दितुश्च प्रावर्तत ।

श्वम्भरस्तां सान्त्वयितुं प्रयेते, परं सा विनिपत्य करुणं चुकूज—' फटिश्क ! मम वत्स ! हा ! ' इति ।

टकः क्षणाय तरलां चेष्टां विरमयामास । उपर्यधोधमनाद्विरेमतुः । ततः स सपी-' अहह ! ' इति ।

पुनः संचक्रन्द—' फटिक ! हा मम-मम सर्वस्व ! ' इति मन्दं मन्दं फटिकस्य चक्षुः, परं न स शयनं परितः स्थितान् जनान् वीक्षितुं पारयामास । अवसाने स मन्द मुदीरयामास—' मातः ! अवकाशाह्वाःसमागताः ' इति । समाप्ता चेयं कथा ।



# उरगजिह्वस्य ( औरंगजेब ) स्वपुत्र-पार्श्वे प्रहितम् पत्रम् *

[ ले०—पं० अवधप्रसादशर्म्मा काव्यतीर्थः राघबपुरस्थः । ]

हे हे पुत्र ! समागतो मम पुनः कालो बलीयानिह,
द्रष्टुं वांछति मे मनश्चिरमहो त्वामेव हा ! साम्प्रतम् ।
जातं मे शिथिलं वपुश्च नितरां प्राप्तं तथा क्षीणता-
मायाता विषमा बलक्षयकरी कष्टा जरा-जीर्णता ।

( १ )

एकाकीह यथाऽगतोऽस्मि भुवने हा ! कर्मबद्धोऽवशः,
एको हन्त ! तथैव यामि विकलो लोकादितोऽकिञ्चनः ।
मूढः पान्थ इवात्र हन्त ! विहितो वासो मयाऽज्ञेन हा,
स्वार्थान्धेन विलोकितो नहि चिरात्पन्थाः पुनःश्रेयसः

( २ )

कस्याप्यत्र हितो मया न विहितोऽज्ञानादहो ! गर्वतः
स्वच्छन्दं निजशासनं क्षितितले विस्तारितं सर्वदा ।
न ज्ञातं किल लेशतोऽपि चिरतो दुःखप्रदं किल्विषम्,
दुर्दैवात्क्षणमप्यहो नहि मया स्वात्मापि हा ! चिन्तितः

( ३ )

सन्मार्गं नयति स्म मां प्रतिदिनं चेतश्चिरेणादरात्,
अज्ञानान्मतिरेव किन्तु विषमा जाता तदानीं मम ।

* संस्कृत जिज्ञासूनां छात्राणां कृते श्रीमैथिलीशरणगुप्त-रचित-"पत्रावली-" पुस्तकतः संस्कृत-भाषायामनूदितम् ।
—( रचयिता । )

लोभेनैव मदेन चापि विमला दृष्टिर्मदीयाऽऽवृता,
येनाद्यापि कृतो मया न कुधिया स्वात्मावबोधः किल

( ४ )

शोचाम्यद्य यथा तथा निजकृतं सर्वं पुनर्दुष्कृतम्,
चेतो हन्त ! यथा तथा ज्वलति मे धैर्यं विहायाऽधुना ।
क्व स्थानं मम विद्यते हि विषयाऽऽसक्तस्य दुश्चारिणः
ध्यात्वैतद्विलपामि हा ! मम कृते शेषं किमस्ति क्षितौ

( ५ )

यद्यप्यत्र तु केऽपि सन्ति भुवने हा ! नामरा मानवाः
नीचोऽहं मरणात्तथापि नितरां भीतोऽस्म्यहो ! चिन्तया।
दृश्यन्ते हि यमस्य भीषणतरा दीर्घाश्च दण्डाः पुरः,
प्राप्नोमीह चिरस्य हन्त ! विषमां हा ! नारकीं यातनाम् ॥

( ६ )

दैवाधीनमहो ममास्ति विषमं सर्वं भविष्यत्फलम्,
हा ! हा ! संप्रति दृश्यते हि तमसाच्छन्नो नु मार्गः पुरः ।
राज्यं हन्त ! मया न पालितमहो मोहाद्धिया शुद्धया,
तत्प्राप्तिः किल दुर्लभात्र नितरां जाताऽधुना पूर्ववत्

( ७ )

यद्यप्यस्ति दयार्णवो हि भगवान् सर्वेश्वरः श्रीधरः,
विख्यातो भुवने परन्तु समदृग्न्यायी निरीहो विभुः ।
मच्चित्ते कथमप्यहो ! यदि भवत्येषा क्षमाशा यदा,
हा ! चैनामपि नाशयत्यचिरतः पापस्य चिन्ताऽधुना

( ८ )

देहस्यास्य विनश्वरस्य च कृते नो कोऽपि भोगो मया
त्यक्तोऽत्रैव विभाति हन्त ! विमुखो मत्तोऽधुनासोऽप्यहो
अस्य प्राप्तमिदं मया प्रतिफलं युक्तं नु दुष्कर्मणो-
रे रे मोह ! जनेन कारयसि हा ! सर्वं शुभं वाऽशुभम्

( क्रमशः )

# अद्वैतरत्नोपलब्धिः *

[ ले० योगीन्द्रस्वामी शास्त्री, प्रयागीय-महानिर्वा-
णवेदविद्यालयस्थः । ]

( गुरुराह्वयति स्वशिष्यान् )

भो भो महानिर्वाण-वेदविद्यालयस्थाश्छात्राः
ऐषमस्तने द्वादशे वार्षिकोत्सवे सभापतेरासन-
भ्राजयन्तं साक्षान्मिथिलाधिपतिगोष्ठीगरीष्ठ-
याज्ञवल्क्यसदृशं तत्रभवन्तं किन्न जानीथ, यस्य
यशोराशिरादिगन्तं वितानायते ? अतो यूयं
भवतां समक्षं दार्शनिकविचारेणोपस्थिताय-
तायाः कर्णपालीं पुनीत ।

रक्तविरक्तनामानौ छात्रावागच्छतः—

( अन्योऽन्यं वीक्ष्य ) प्रथमः कोऽयं
मित्रमिव दृश्यते ।

द्वितीयः—यथा जानासि ।

प्र०—तत्र भवन्तं विश्ववर्य्यं मित्रमणिमभि-
यते रक्तशर्म्माऽयम् ।

द्वि०—प्रणमामि भोः प्रणमामि, किमिति
न्मद्विलोचनतिथिरभव; उन्मना इव च कथं वी-

प्र०—न जानासि निखिलप्राणिनां वडिश-
जगद्बन्धनम् ।भवानपि तु किमिति यथा पू-
न दृश्यते ?

* प्रयागस्य दारागञ्जस्थ श्रीमहानिर्वाण-वेदविद्या-
वार्षिकोत्सवे द्वाभ्यां छात्राभ्यामभिनीतोऽभिनयोऽयम्

द्वि०—तव इव मम तु उत्खातदंष्ट्रोरगवदिदं [पि] भीतिं न जनयति जगत्, तथापि मत्तः [स्य] चिरसंचितस्याद्वैतरत्नस्य कश्चन ग्रहीता [नास्]ति इति कष्टम् ।

[प्र]०—नहि प्रयोजनमनुद्दिश्य मन्दोऽपि प्रवर्तते [कि]ं तस्याद्वैतरत्नस्य फलं स्वरूपञ्चेत्युच्य[ते], ततो बहवो ग्राहका भविष्यन्तीति किं [उच्यते]?

द्वि०—अद्वैतस्वरूपं तु स्वस्वरूपमेव, स्वस्वरूपे [अद्वै]तस्वरूपं ज्ञातं भविष्यति, फलं तु तस्य [ब्रह्म]ापत्तिरिति सर्वोपनिषदां सिद्धान्त [इ]ति ।

[प्र]०—इह जगतीतले को न जानाति स्वस्वरूपं [सर्वो]ऽपि कथयति-स्थूलोऽहम्, गौरोऽहम्, श्यामोऽ[हम्]। न कश्चनापि ब्रह्मभावं प्राप्नोति प्रत्युतेहैव [...] परिमार्जयन् खट्वां त्रोटयतीति ।

द्वि०—अहो महान् व्यामोहो यदनात्मनि देहा[दावात्म]भ्रम इति ? अयमेव भ्रमो महाननर्थकर [स्त]स्यैव च निरासाय सर्वं वेदान्तशास्त्रं गर्जति ।

[प्र]०-किं भो मित्र ! यदि अद्वैतमेव स्वस्वरूपं [त]त्र कोऽनुरागः ? द्वैते सत्यनुरागो जायते । [...]। तदुक्तं चापि श्रुतौ—

[ए]तस्मादेकाकी ना रमत स द्वितीयमैच्छत् '

द्वि०—सत्यमेवं यथा वदसि, परमिदमिह सम्प्र[धार्य]म् । अन्यस्मिन् यत् प्रेम तत् कस्य कृते, [आत्मार्थ]मिति चेत् तर्हि स्फुटा परमप्रेमास्पदता आत्म[नः] परमियमद्वैतवासना सर्वैर्दुरापा । तदुक्तम्-

"[ईश्वरानु]ग्रहादेषा पुंसामद्वैतवासना ॥ महाभयकृतत्राणा [...] यदि जायते" इति । अपरञ्च—

क्षुरस्य धारा निशिता दुरत्यया, दुर्गं पथस्तत्कवयो वदन्ति 'तस्मादद्वैतमेव स्वस्वरूपं तदेव च परमप्रेमास्पदमिति

प्र०—भगवन् ! यद्यपीयता प्रबन्धेनाद्वैतमेव मम स्वरूपमिति सुनिरूपितं भवता तथापि नास्मदीयहृदय आस्पदमादधाति, किमत्र करोमि ?

द्वि०—शृणु भोस्त्वं शैलसारहृदयोऽसि । यतः-

" इत्येवं श्रुतिनीतिसंप्लवजलैर्भूयोभिराक्षालिते ।
येषां नास्पदमादधाति हृदये ते शैलसाराशयाः " ।

प्र०—ब्रह्मन् ! किमिति मामधिक्षिपसि शैलसारहृदयोऽसीति । तवापि हृदये किमद्वैतं स्वरूपं चकास्ति ?

द्वि०—नितरामनभिज्ञोऽसि, नहि त्वमिवाहं यतः—

" तस्मिन्मे तु निसर्गसुन्दरतमे चेतो निमग्नं चिदानन्दज्ञाननिधौ शिवेऽतितरलं नाद्यापि सन्तुष्यते । "

प्र०—ब्रह्मन् ! तथापि मम चित्ते नयात्मद्वैत रत्नम् ।

द्वि०—शृणु ब्रह्मबन्धो ! ब्रह्मद्वेषजनितपातकदूषितान्तःकरणोऽसि ।

प्र०—भगवन् ! शाधि मां यथास्मिन्नद्वैताध्वनि मच्चित्तं प्रविशेत् ।

द्वि०—शृणु वत्स, ईश्वरप्रसादकं देशोपकारं भूतानुग्रहं विधत्स्व । यत उक्तम्—

"भूरात्मासर्वभूतानि भद्रपूजापदानि मे" भा० स्क० ११, "नहि कल्याणकृत् कश्चिद्‌ दुर्गतिं तात गच्छति"

प्र०—ब्रह्मन् ! किमिति वत्सेति सम्बोधयसि । यतो नाहं वत्सः, किन्तु वृद्धोऽहम् ।

द्वि०—न ते पलितं शिरः । पश्यामीति वृद्धोऽहमिति वदतस्तव व्याघातः ।

प्र०—नहि भगवन् !

"न तेन वृद्धो भवति येनास्य पलितं शिरः ।
यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः" ॥

किञ्च ब्रह्मन् ! ईश्वर-प्रसादकरं सर्वभूतहित-चिन्तनं सर्वदा कर्तुमशक्यं विषयस्वार्थाक्षिप्तचित्त-त्वात् ।

द्वि०—अरे बालिश ! विषयेषु स्वार्थसाधकेषु दोषं पश्य । यत उक्तम्—

"इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥
अध्यात्मज्ञाननित्यत्वं तत्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥"

प्र०—ब्रह्मन् ! एतेषां मध्ये ममैकमपि साधनं नास्ति, सुगममुपायं वद ।

द्वि०—शृणु वत्स, लौकिकं वैदिकं यत्कर्म तत्स-र्वमीश्वरार्पितं कुरु । यत उक्तम्—

"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥"

नातः परं सुगममुपायान्तरमस्ति ।

प्र०—भगवन् ! तत्तत्कर्मजन्यस्वर्गादिकामना-क्षिप्तमनस्तया फलमनुद्दिश्य तत्तत्कर्मजातमपि नाहं कर्तुमुत्सहे ।

द्वि०—अरे ! नूनमूषरात्मासि त्वम् ।

प्र०—भगवन् ! किं बहव आत्मानस्तवमते यन्मामूषरात्मेति सम्बोधयसि ।

द्वि०—शृणु रे ब्राह्मणडिम्भ ! एकमपि ब्रह्म मायाभिः परिच्छिन्नमनेकमिव भवति । तदुक्तम्—

"एकं रूपं बहुधा या करोति" इत्यविद्याव-स्थाया ऊषरात्मा त्वं निगद्यसे ।

प्र०—नाहमुपेक्षणीयो भगवन्, यतः सर्वभूता-कम्पायास्तवमिवाङ्गीकारात् कदाचिदहमपि तत्त्व-ग्रहेण समदमादिसाधनसम्पन्नो मुक्तो भविष्यामि ।

द्वि०—शृणु वत्स, तर्हि मदुक्तप्रकारेण भग-वदर्पणेन कर्माणि कुरु ।

प्र०—भगवन् ! एवं करिष्यामि, आविर्भूतं चित्ते विषयेषु दोषदर्शनम् । संप्रति शुद्धस्व-संवृतोऽस्मि, शाधि मां किमतः करवाणि ?

द्वि०—शृणु वत्स ! ज्ञाननिधिगुरुकुलोपस-र्पणं कुरु । यत उक्तम्—

" तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् " ।

प्र०—भगवन् ! तर्हि क्व गच्छामि, शाधि मां प्रसन्नं करुणानिधे !

द्वि०—अहो महान् खेदोऽस्ति, न जाना-सि महानिर्वाण-वेदविद्यालयं दारागञ्ज-प्रयागे । तं सिमहोदया इतो द्वादशवर्षतः पूर्वमेव समुद्घाटि-तवन्तः । मासुरिति तत्रैव गच्छ ।

प्र०—भगवन् ! केन पथा गच्छामि, श्रान्तोऽस्मि ।

द्वि०—आगच्छ, दर्शयामि ।

( इति निष्क्रान्तौ )



## परोपकारः ।

ले०—लक्ष्मीचन्द्रो वजाजः ( रतनगढीय-ऋषिकुल... )

मान्याः ! सत्स्वपि बहुषु धृतिक्षमादमा-स्तेयादिषु धर्माङ्गेषु परोपकारस्यैव प्राधान्यम्

विद्वांसः । परेषां हितानुष्ठानम्, हीनेषु दयनम्, अत्याचारैर्निपीडितानां साहा- मनुष्यस्य परमो धर्मः । एतदेव शब्द- प्रतिपाद्यते ।

ष्टादशपुराणानां व्यासस्य वचन-द्वयम् ।
पकारः पुण्याय पापाय परपीडनम् ।"

हि मानवो जन्मजरामरणसङ्कुले सुखदुःखा- सृष्टेऽस्मिन् जगति जन्मासाद्यास्मादसा- भङ्गुरात् कायात् परोकृतिरूपं सारमाहरति, स एव साधुः स एव महात्मा तस्यैव म् ।

यन्ते विलीयन्ते संसारे कोटिजन्तवः ।
पकारव्रतिभिराकल्पान्तन्तुजीव्यते ।'

क्षियन्तुर्जगदीश्वरस्य सृष्टिक्रमे विचार्यमाणे मिकामासदयन्ति तदुपादानभूतानि पृथि- ञ्चभूतानि, यैः केवलं परार्थमेव स्वस्वरूपं ।

यं गन्धवती पृथ्वी स्वयमेव स्वीयं गन्ध- ति, नचाप्याप आत्मनैव रसं रसयन्ति, नैव आत्मदीप्त्यात्मानं दीपयन्ति, न वा वायुः वाति नचाप्याकाशोऽवकाशं स्वकीयमा- मुपयुंक्ते । सत्येवं पञ्चभिर्महाभूतैर्भाविता- भूतात्मनः परोपकार एव अन्तरङ्गम- धर्मोक्षेषु ।

चन्द्रो घना वृक्षा नद्यो गावश्च सज्जनाः ।
परोपकाराय युगे दैवेन निर्मिता ॥
पकार-शून्यस्य धिङ्मनुष्यस्य जीवितम् ।
न्तु पशवो येषां चर्माऽप्युपकरिष्यति ॥"

परोपकारमेव लक्षीकृत्य लीलाविग्रहो भगवान् विष्णुः समये-समये दशावतारान् गृह्णाति । परोपकारिणां चित्तेषु अयं निजः परो वेति नैव कक्षाविभाग उदारतायाः । यथा ते निजेषु पुत्रादिषु दयां कुर्वन्ति तथैव दीनेषु, आर्तेषु च । परोपकारिणो यत्र कुत्रापि दुःशासकेन पीडयमानान् दारिद्र्येण दार्यमाणान्, रोगेण रुज्यमानान् पश्यन्ति, तत्रैव तानुद्धर्तुं सहस्रैरुपायैश्चेष्टन्ते । तेहि करुणाक्रान्त-हृदया अन्धान् मूकान् क्षुत्पिपासार्दितान् शीतवातातपैर्बाधितान् दृष्ट्वा अन्तःकरणे विद्रवन्ति यथाशक्ति तेषां साहाऽयमारचयन्ति च । ते हि अज्ञानान्धकारेणाच्छादितान् स्वकर्तव्यविमुखान् असत्पथप्रवृत्तान् निरीक्ष्य विद्यादानव्यवस्थया शिक्षितान् कुर्वन्ति ।

संसारेऽस्मिन् तादृशानामपि मानवानामभावो नास्ति । ये हि—

"यावज्जीवेत्सुखं जीवेदृणं कृत्वा घृतं पिबेत् ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥"

इत्यादिकान् सिद्धान्तान् संसाध्य परोपकारसदृशं गुणमपि निन्दन्ति, प्रयतन्ते च तदर्थं प्रवृत्तिमपि स्वार्थमूलिकामेव साधयितुम् । तानेतादृशानेव भगवान् श्रीकृष्णो गीतासु आसुरीं योनिमापन्नान्निर्दिश्य—

"तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥"

इति शास्ति । को हि नाम व्याघ्रादिर्हिंस्रजन्तूनपि स्वसन्तानार्थं प्राणान् त्यजतो विलोक्य मनुष्याणां हृदयेषु परोपकारादि-गुणानां प्रवृत्तेर्मूलं केवलं स्वार्थमेव निर्दिशेत् । वस्तुतो ज्ञानवन्तो महात्मानः

सर्वभूतस्थमात्मानमनुभवन्तस्तस्यैवोपकारार्थं सर्वदा चेष्टन्ते । अत एव बृहदारण्यके योगी याज्ञवल्क्यः स्वधर्मपत्नीं मैत्रेयीम् —

"आत्मनस्तु कामाय सर्वं प्रियं भवति, आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"

इत्याद्युपदिदेश । आस्तां नाम चेतनानामियं कथा जड़ेऽपीयं परोपकारप्रवृत्तिः स्वाभाविकी विलोक्यते, । अत एवोक्तं केनचिन्महाकविना—

"पद्माकरं दिनकरो विकचीकरोति
चन्द्रो विकाशयति कैरवचक्रवालम् ।
नाभ्यर्थितो जलधरोऽपि जलं ददाति
सन्तः स्वयं परहितेषु कृताभियोगाः ॥"

अयं परोपकारस्योच्चतमो निष्काम आदर्शः । यदि एतादृशं उच्चभावं विहाय सामान्यदृष्ट्या विचार्यते तथात्वेऽपि परोपकारो मानुषस्य परमो धर्मः सिद्धयति । न खलु मनुष्यः पश्वादिवत् कश्चिदेकाकी तिष्ठति । अयं सामाजिकः प्राणी समाजे प्रायः सर्वविधैरेवेतरैर्मानवैः संगच्छते संव्यवहरति च । एवं सति यदायं न केषांचिदुपकारमादधीत न वा केषांचित् साहाय्यमातन्वीत तर्हि कोऽन्योऽमुं प्रत्युपकुर्यात्, को वा विपत्तौ समाश्वसयेत् । परन्तु यथार्थतया प्रशंसनीयस्तु स एव निष्काम-परोपकारः । अत एव भर्तृहरिणोक्तम्—

"एके सत्पुरुषाः परार्थ-घटकाः स्वार्थं परित्यज्य ये,
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।
ते वै मानव-राक्षसाः परहितं स्वार्थाय निघ्नन्ति ये,
ये निघ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥"

यद्यपि परोपकारिणां मार्गेऽनल्पा विपत्तयः समापतन्ति, अनेके च क्लेशाः समाग[...] तथापि ते न कथंचिद्विचाल्यन्ते ।

"परोपकरणं येषां जागर्ति हृदये सताम्
नश्यन्ति विपदस्तेषांसम्पदस्तुपदे पदे ॥"

एतादृशस्यैव परोपकारस्य कृते महर्षिर्द[...] स्वकीयान्यस्थीन्यपि याचमानाय इन्द्राय [...] राजर्षिः शिबिश्च स्वशरीरस्य मांसमपि [...] कपोतस्य रक्षार्थमुत्ससर्ज ।

"कर्णस्त्वचं शिबिर्मांसं जीवं जीमूतवाहनः
ददौ दधीचिरस्थीनि, किमदेयं महात्मनाम्"

अतो मान्याः पाठकमहाभागाः [...] उभयोर्लोकयोः सुखन्तर्हि परोपकारो[...] समनुष्ठेयः ।

—:o:—

## विजयादशमी ।

ले० नारायणशर्मा दाधीचः ( जयपुरीय संस्कृत विद्याल[...]

मान्या भारतहितैषिणो विपश्चित[...] आनन्दमयो विजयादशमीमहोत्सवः समाग[...] अत्रार्य्यमातुः श्रीदुर्गादेव्याः पूजनं भविता [...] मानिनः सर्वेऽपि मानवाः सुन्दराणि प्रायो[...] त्राणि विदेशीयवस्त्राणि परिधास्यन्ति । [...] भारतीयानां पार्श्वे यदि कश्चिदिमं प्रश्नं कु[...] का नाम विजयादशमी ? कस्तावदस्या [...] अस्या वार्ताया भारतवासिन उत्तरं दद्युरि[...]

...। यदि कतिपया मानवाश्चोत्तरं दद्युस्त-
...ष्यन्ति । रुचिकरभक्ष्य-पदार्थानां भक्षणं
...णां परिधानमेवास्माभिर्विजयादशमी
तेषामेतज्ज्ञानं सर्वथा भ्रान्तिमूलमस्ति ।
शारदीयनवरात्रे विष्णुमहेशादिदेवानां
...ता या महाशक्तिः इदं भूमण्डलमवतीर्य
...सुरराजस्य महिषासुरस्य विनाशं विधाय
...ं स्थापयामास, यस्यां विजयादशम्यां
...रामचन्द्रः परितः समुद्रैर्वेष्टितां यमराज-
...द्वासमानां लङ्कां प्रतस्थे । यस्यां विजया-
...पाण्डवैरज्ञातवासं परिसमाप्य दुष्टदुर्योधनेन
...स्य विराटराजस्य गोधनस्य रक्षाऽक्रियत,
...नैव युद्धक्रमेण सर्वान् कौरवान् विनाश्य
...स्थाप्यत, यस्यां विजयादशम्यां प्राक्-
...त्रिया विजयार्थं प्रस्थानमकुर्वन्, यस्यां
...म्यां पवित्रतमेयं भारतभूमिः सुगृहीत-
भगवता बुद्धेन जन्मनाऽलङ्क्रियत, यस्य
...खिलजगति प्रसृतं यस्य मतानुयायीनोऽद्या-
...सारे सर्वेभ्योऽधिकतराः सन्ति । तस्यशा-
...तरामोत्तरगां विजयादशमीमेवं रीत्या मान-
...यं संतुष्टा भवामश्चायमेवास्माकं पतिताऽव-
...पर्याप्तपरिचयः । अस्माकं प्राकृतना भार-
...श्विनशुक्लदशम्यां विदेश-विजयार्थं शत्रु-
...यात्रामकुर्वन् । तेषां शौर्येणैवास्या-
...यादशमीति नाम प्रथितम् । वयं तेषामेव
...स्मः । अस्माकं शरीरेऽद्यापि रामकृष्णा-
...सांप्रतिकवीराणां प्रतापशिवाजीप्रभृति-
...णां राज्ञां शोणितमुपस्थितं वर्तते । हन्त !
...दृशा ना स्मः । ते स्वाधीना आसन्, वयं
पराधीनाः स्मः । ते विदेशविजयिनो, वयं गृह एव पराजिताः, ते शक्तिमन्तो, वयं बलहीनाः, ते धर्माय स्वप्राणानपि मोक्तुं शक्ता, वयं धर्माय केवलं रोदिमः किम्बहुना, तैरेव विजयादशमीनाम सार्थकं कृतम् । साम्प्रतं वयं खल्वस्य नाम्न उपहासं कारयामः । पुनरपि वयं तेषां संततयो, वयमपि तत्सदृशा भवितुं शक्नुमः । यदि वाञ्छामो यदि च तेषां मार्गोऽस्माभिरवलम्बितः स्यात्

पूरा खल्वभूत् शक्ति-पूजा दुर्गापूजा वा । अयं महोत्सवो नास्त्यद्यतनः किन्तु; भगवतो रामचन्द्रादपि प्राक्कालिको वर्तते । किन्त्वतीतायां वर्तमानायां च पूजायां महदन्तरमस्ति । ते दुर्गापूजां शक्त्यर्थमकुर्वन्, जगन्माता भगवती दुर्गाऽपि तेभ्य आत्मीयां शक्तिमदात् । अधुनापि तां शक्तिं प्राप्तुं शक्नुमः परञ्चास्माभिः पूजाप्रकारः परिवर्तनीयः । अस्माकं पूर्वजा मृण्मयीं भगवत्या मूर्तिं विदेशीयवस्त्रैर्मिथ्याभूतैर्मनःशिलादिधातुभूषणैरलङ्कृत्य निरपराधानजान् दुर्गामूर्त्याः समक्षे हत्वा स्वचेतसि ईदृशीमिच्छान्नोत्पादयन्जगन्माता भगवती संतुष्य अस्मभ्यं कंचिद्वरं दास्यति येनास्माकं वसु, स्वजनकष्टश्च दूरी भवेत् । अयं पूजाविधिरज्ञानान्तरितो वर्तते । अज्ञानपूजया कोऽपि लाभो भवितुं नार्हति । पूजा सज्ञाना करणीया, अस्माकं प्राक्तनाः सज्ञानां पूजां कुर्वन्तिस्म । चित्तैकाग्र्याय तेऽथावश्यकतानुसारं द्रव्यमूर्तिं निर्माय पूजायां संलग्नचेतसोऽभूवन् । सा मूर्तिः परितः शुद्धा वेदमन्त्रैश्चपूताऽभूत् परञ्च तेषां ध्यानं भावना चास्याः स्थूलमूर्त्याः कलेवरतोऽप्यग्रेसराऽविद्यत । ते हि महाशक्त्या वास्तविकं स्वरूपं मर्म चाजानन् । येन ईश्वरीयतेजसा

या महाशक्तिः प्रादुर्भूता तामेव सर्वतः पवित्रतमया तपश्चर्यया प्राप्तुं प्रयतन्ते स्म । भगवत्याः पार्श्वद्वये सरस्वतीलक्ष्मीगणेशानां मूर्तिं पश्यामः, सरस्वती कला तथा विद्याऽस्ति विघ्नराजो विज्ञानमूर्तिश्चेति । पूर्णशक्त्युपासकैर्विद्यायास्तथा कलाया विज्ञानस्य चोन्नतिः करणीया । अथ तावद्देशस्य सुखसमृद्धये श्रीमहालक्ष्मीमूर्तेर्भावसाधनं कर्तव्यम् । इदमेव शक्तिपूजाया मुख्यरहस्यम् शक्त्युत्पादनस्य साधनश्चास्ति । तेषामनुष्ठानं शारदीयनवरात्रे महिषासुरमनोविकाराणां विनाशनेऽजायत । इदमेव शारदीयनवरात्रस्य महत्वमप्यस्ति । पुराऽमन्यतास्माकं पूर्वजैरपि विजयादशमी, अस्माभिरपि साम्प्रतं मन्यते । तैर्वास्तविकी विजयादशमी मन्यते स्म । सांप्रतमस्माभिस्तस्याः प्रतिबिम्बमात्रमपि मानयितुं न शक्यते । अद्य वयं विजययात्राया वार्तामपि ध्यातुं न शक्नुमः । यतो वयं निर्बलाः स्मः । विजययात्रा निरन्तरं न भवति । किन्तु शक्तेरावश्यकताऽत्रास्ति । यतोऽनया विनाऽऽत्मरक्षामपि कर्तुं न कोऽपिशक्तः । साम्प्रतमस्माभिरप्यात्मरक्षा कर्तुं न शक्यते । एतत्प्रत्यक्षम् । वयं बलशालिनो भवेम इति विजयादशमी मानयितव्या । प्राक्काले विजयादशम्यां परस्परं मिलनस्य व्यवस्थाऽऽसीत, सांप्रतमपि कतिषुचित् स्थानेष्वेवमेवास्ति । वयमपिमिलामोऽधुना विभिन्नैः परिवारैः सम्बन्धिभिश्च । विजयादशमी केवलं पारिवारिकमहोत्सवो नास्ति किन्तु राष्ट्रमहोत्सवोऽयं हिन्दूजात्याः सर्वासां व्यक्तीनामन्तर्गतानां विभिन्नसंप्रदायानां च परस्परं मिलनस्य व्यवस्था कर्तव्या । विजयादशम्याः सङ्गमे स्पृश्यास्पृश्यभेदोऽपि दूरीभवति विन्ध्याचलादिषु बहुत्र देव्यालये सर्वेऽपि स्पृश्यास्पृश्याः पर सङ्घधर्ममाचरन्तो देवीमर्चन्ति ।

हिन्दुजातौ संमिश्रणेन शक्त्युत्पन्ना अस्योत्सवस्य सृष्टिर्जाता । यस्यभग्नावशेष एवा कुत्रचनोपलभ्यते । अधुनापि हिन्दुराजानां सा णतः सर्वेषां क्षत्रियाणामयं महोत्सवः क्षात्रभावं प्रकटयति । प्रायोऽत्र खड्गस्य पूजा भ मल्लयुद्धस्यायोजनं जायते, व्यायामालयस्य खाड़ा ) व्यवस्था क्रियते । किन्तु साम्प्रतमि कार्याणि नष्टप्रायाणि दृश्यन्ते । किं बहुना, सार्वजनिकरूपं च नष्टमभूत् हिन्दुजातिः धर्मप्र जातिः किन्तु धर्मत्राणाय देशरक्षार्थं च वीर रप्यासीदिति । अतः खल्वस्या अन्यगुणानां वश्यकताऽस्ति, तथैवास्या जातेरस्य स्याप्यावश्यकताऽस्ति । बहुधा पश्यामो खलु हिन्दुयुवका यवनानां पैगम्बरोत्सवे (ता यवनव्यायामस्थाने गच्छन्त्यन्योन्यं बाहुयुद्ध यामञ्च कुर्वन्ति । तस्मिन्समये यवनदेवल रपि यवनैःशिल्पकार-काम्बविक-लोहकारा हिन्दुयुवका यवनमतावलम्बिनः क्रियन्ते । य प्रतिव्यक्ति नियमोऽयं कृतोऽस्ति यत् स्वजीवने हिन्दवो यवनमते कर्तव्याः । मान्या भारती अनोऽयंदशमीमहोत्सवः श्रीमद्भिः पुनरपि स्थापनीयः पुनरपि श्रीदुर्गा देवी शुद्धैः स्वदेशै शक्तिसञ्चयायैव पूजयितव्या वयंतु मन्यामहे वमेव भारते पुनरपि बलवृद्ध्यै प्रतिग्रामं व्या शालाप्रभृतयो विनिर्मेया येन स्यात् पुनर्वि भारत-वसुन्धराया इति निगद्य विरमति विधेयः ।

# सम्पादकीयम्

## स्थापिकासभायामनधिकारचर्चा

र्नां व्यपस्थापिकासभायां श्रीहरिसिंह शयेन श्रीहरविलासशारदा महोदयेन च विवाहसम्बन्धविच्छेदविषये विवाहकाल- षये च नियमौ निर्मापयितुं प्रस्तावद्वय- पितम् यदाशयश्च क्रमश एवं व्रियते—

प्रथमे यदैव दम्पत्योर्मध्ये कश्चन विवाद उत कोऽपि दोषः स्त्रिया पुरुषे उपल- दु आहो पुरुषेण स्वपत्न्याः कश्चनामर्षणीयो श्चेत्तर्हि उभाभ्यामपि यथेच्छं विवाह- त्यागः परस्परं कर्तुं पार्य्यते । तत्र मतस्ताभ्यामन्योऽन्यसम्बन्धत्यागं कृत्वा च पुरुषान्तरेण पुरुषश्च स्त्र्यन्तरेण पुनः कर्तुं पार्य्यत इति ।

तीये च—चतुर्दशवर्षतो न्यूनवयस्कायाः परिणयं कर्त्ता कारयिताऽनुमोदकस्त- कर्ता पुरोधाश्च, एवमष्टादशवर्षतो न्यून- बालकस्य परिणयं कर्त्ता कारयिता तत्सं- श्च पुरोहितोऽर्थदण्डेन कारागारवासदण्डेन ता भविष्यन्तीति ।

विषये ममेयानेव वक्तव्यो विद्यते यत् क भूतानां नियमानां निर्मातारः प्रस्तावका वा भारतमहाराज्ञ्या श्रीव्यक्तोर्जया ( विक्टो- रिया ) देव्या त्वेवं प्रतिज्ञातमस्ति यन्नाहमार्य्यधर्मे हस्तक्षेपं करिष्यामि, नापि मदुत्तराधिकारिण इति' एवं सति मध्ये मध्ये व्यवस्थापिकासभायां श्रीगौड-श्रीशारदामहाशय-प्रभृतीनां धार्मिकविषये नियमादिनिर्मापणप्रयासोऽनधिकृतिचर्चैव प्रति- भाति । नियमोऽयं समीचीनोऽसमीचीनो वेति विचारणायामपि प्रथमनियमस्तु भारतीय-संस्कृति- विनाशक एव। यतो हि आर्य्यधर्म्मे दाम्पत्यबन्धनं हि धार्मिकं बन्धनम् । न केवलमैहिकोपभोगायैवा- र्य्याणां भवति विवाहबन्धनम् । किन्तु संसारया- त्रापारमासादयितुं वैदिककर्मकाण्डादिविधान- योग्यतालाभायैवेति । अपरञ्च लौकिकविचारे- णापि दाम्पत्यप्रेम्णः स्थैर्य्यं यथा सम्बन्धाविच्छेद- नियमे भवति, न तथा, सति सम्बन्धविच्छेदनि- यमे पश्यन्तु पाश्चात्यदेशेषु प्रतिदिनमीदृशैरेवा- भियोगैर्न्यायालयाः सम्भृता भवन्ति । तत्र तु गार्ह- स्थ्यसुखं दुःखबहुलमेव भवति । पत्नी कथयति यत् मम पतिर्मे हस्ते मोदकमदत्वा ममाग्रे निहितवा- नतोऽहम् पत्यन्तरं करिष्यामि । एका कथयति यन्मम जन्मदिनोत्सवे मे पतिर्मह्यं किञ्चिदुपा- यनं बहुमूल्यं नादादतोऽहं तं विहाय पत्यन्तरं करि- ष्यामि । इत्यादि । किमिमामेव दशामत्रापि द्रष्टुमिच्छति गौडमहोदयः ? श्रूयते प्रस्तावोऽयं

स्थगितो भूदिति। अहो भारतभाग्यत एव प्रस्तावोऽयन्नोपस्थितः संसदि, नो चेदेकतो विलुप्तगौरवस्यास्य देशस्यायं द्वितीयो गण्डस्योपरि विस्फोटकः सम्वृत्तः स्यादिति।

द्वितीयः शारदीयः प्रस्तावस्तु उपस्थित एवास्ति संसदि। सोऽपि तु महानर्थकारी। यद्यपि आधुनिकीं वालविवाहप्रथां दर्शं दर्शं तु सर्वेऽपि विज्ञा देशकालविदस्तत्समर्थका एव। परन्तु नायं पन्था वालविवाह–निरोधस्य साधीयान्। एवन्तु अनर्थपरम्परैवोदेष्यति। यतोहि आधुनिकी शासनपद्धति र्नास्माकं कल्याणमीहते, अपि तु स्वहस्तप्रसारमेव। एवं कृते तस्या एव वलवृद्धि र्भवति इदमस्त्रप्रदानेन। अस्त्रमिदमासाद्य सास्माकं धार्मिककृत्येऽपि पादं प्रसारयिष्यति। तत्रापि उत्कोचादिदानादाने प्रचलिष्यतः, येन दैनन्दिनं भारतस्य नैतिकवलह्रासश्चरित्रपातश्च स्यादेवेति। आश्चर्य्यन्तु मामिदम्प्रतिभाति यत स्वराज्याभिलाषुकाः 'लाला' 'लाल' प्रभृतयोऽपि नियममिमं राजतः प्रचालितमभिलषन्ति। अयि महात्मानोयदि भवन्तो वालविवाहं निरोद्धुमिच्छन्ति चेद्व्यवस्थापिकासभातो निःसृत्य जनतासु कार्य्यं कुर्वन्तु। तत्तज्जातीय, तत्तद्धर्मीय-सभाभिः प्रस्तावमिमं स्वीकार्य्य प्रचालयन्तु, जनान् सु बोधयन्तु। यावान् प्रयासो भवतां तत्र वाग्युद्धे भवति, ततोऽणुरपि प्रयास एतादृशेषु विषयेषु जनतामध्ये समये समये कृतश्चेन्महान्स्याल्लाभोऽस्य देशस्येति। किम्बहुना एवंभूता विषयाः सनातनधर्म-सभाहिन्दुसभा-प्रभृतिष्वेवोत्थापनीयास्तथा तद्द्वारैवेषां जनतासु प्रचारो विधेयो न राजसभयेति विमृशन्तु स्वपारतन्त्र्यपाशदार्ढ्यं कथं गज निमीलिकया व्रजन्ति भवन्तो पश्यन्तु मा ह्रस्वं परं पश्यन्तु मा परम्"।

भारतीयजनता धर्मदण्डतो यथा विभ्यति तथा राजदण्डत इति निश्चितं विदन्तु। अतो सभाभिः स्वीकारिते वालवृद्धविवाहनिषेधे त्येव ताः स्वीकरिष्यन्ति। राजसभया तु शिरसो नापि तत् कारयितुं न पार्य्यते यच्चानायासं धर्मसभाभिः साधितं स्यादिति।

* * *

# सनातन-धर्मोदयः।

एतन्नामकं पाक्षिकं राष्ट्र-भाषा (हिन्दी) श्रीकाशी-सनातनधर्म-पण्डित-सभायाः मुखपत्रत्वेन ... णेतः काशीतो निःसरति पत्रमिदमद्यत्वे बहूपकरिष्यति सनातनधर्मजनतायामित्यस्माकं धारणा ... यच्च, इदानीं सर्वेऽपि पत्र-पत्रिका-सम्पादका वृद्धं सनातनधर्ममेवाभिक्रामन्ति। तेषां मुखम... विदधत् स्ववर्गं च चिरकालतः प्रवृत्तां कु... कुप्रथां कुसंस्कारमुन्मूलयत् श्रुति-स्मृति-सदाचारप्राप्तं देशकालोपयुक्तं च नियमजातं सर्वेषां पु... प्रस्थापयत किङ्कर्तव्यविमूढञ्च विद्वत्समाजं का... क्षेत्रेऽवतारयत् सर्वतो विप्लुतञ्च धार्मिकं सम... नियमयच्चिरञ्जीव्यादिति श्रीकाशीविश्वेश्वरमभ्यर्थयमानोऽहमस्याभ्युदयं शाश्वतिकं कामयेऽनुरुन्धे ... सनातनधर्मसमाजमन्यधर्माणाञ्च यदस्य ग्रहणेन वि... ङ्करोत्वखिलधर्म-रहस्यं शास्त्रनिर्दिष्टं स्वीयं कर्तव्य... ञ्चेति। अस्य प्रवर्त्तकाः पूज्यपादाः पण्डित... सम्राजो महामहोपाध्यायाः श्रीप्रमथनाथ तर्कभूषण...

...ाः सन्ति । सम्पादकाश्च त एव भवतां परि-...पूर्व-सुप्रभात-सम्पादकाः श्रीमन्तः पण्डित-...शर्माणः सारस्वताः । काशीस्थानाञ्च बहु-... विदुषां महामहोपाध्यायपदभाजामत्र ...न्तीत्यपि सुवर्णे गन्धसमवायः । मूल्यं ...(२) प्राप्ति-स्थानम्—

...व्यवस्थापक-सनातनधर्मोदय, टेढीनीम,

बनारससिटी

* * * *

## ...ाढनगेर सतीत्वपरिणामः ।

...ामेव समाचारपाठकानां विदितमिदम् । ...नगरे काऽपि सती स्त्री स्वपतौ मृते तच्छ-...य चितामारुह्य स्वीयमपि नश्वरं शरीर ...त्वा भारतीयोज्ज्वलं रत्नं सतीत्वं पुनरपि ...न् कलौ प्राचीकशत् । परन्तु तदीय-...नां तत्सतीत्वानुज्ञादानापराधे पाटलिपुत्र-...यतः सपरिश्रमः कारागारे वासोऽभूत् । तत्रैव ...विचारपद्धतेरालोचनया कतिपयानाम् ...मान्तीयनेतॄणां 'जगत्लाल'-'सर्चलाइट्'-...क-महोदयानामपि तस्मिन्नेव गृहे सपरिश्रमो ...तः । वृत्तमिदमाकर्ण्य कस्यच सनातन-...धर्मिणो हृदयं क्रोधेन शोकेन च न क्षुभ्येत । ...ऽपि धर्मशास्त्राचार्य्या अत्र विषये स्वमुख-...नविघटयन्तीत्येतदेवाश्चर्य्यम् । इदानीं ...ब्राह्मणसभयाऽखिलभारतवर्षीय-ब्राह्मणानां ...मेलनं विधातुमुपक्रान्तम् तयैवम्भूतानां ...विचारो यदि कृतः स्यात्तर्हि स्यादपि तस्याः साफल्यम् । केवलं कोलाहलमात्रेणैव विरतायां तस्यां न भविष्यत्यस्माकं सन्तोषः । अतो वयम-नुरुन्ध्महे तत्संयोजकान् यदेवम्भूतानां विषयाणां विचारन्तेऽवश्यं कुर्य्युः । पश्यन्तु भारतीयसभ्यताया हृदयं सतीत्वं विद्यते । तस्य रक्षणं यदि भवतामभीष्ट-ञ्चेत्पुनरपि सतीत्वप्रथायाः प्रचाराय यतन्ताम् । तद्विषयकं राजकीयं निरोधनियमञ्चापसारयन्ताम् नो चेत् एकतः सतीत्वनिरोधोऽपरतश्च पुरुषबहु-विवाहानिरोधोऽन्यतश्च कामवासनावृद्धिकरवैदेशि-कसभ्यता–प्रचारोऽपरतश्चभवदनुमोदितपुंस्त्ववि-घातकबालविवाहवृद्धविवाह-प्रसार इत्येते समु-दिताः कारणकलापा आर्य्यनारीणां चरित्रगौरवं हठाद्विनाश्य व्यभिचारमुत्कर्षयन्तो भ्रूणहत्यादिम-हापापान् समेधयन्तो यवनसंख्यां वर्द्धयिष्यन्त्येवेति शृण्वन्तु सत्यमप्रियम् ।

——

# समालोचनासारः ।

## स्तुति-कुसुमाञ्जलिः—

श्रीमज्जैनाचार्य श्रीदेवचन्द्र सूरिभिर्विरचितेयं स्तुतिः पार्श्वचन्द्रसूरीश्वराणां हेमचन्द्रसूरीश्वराणा-ञ्चाष्टकप्रयुक्ता अतीव सरससरलैः भावभूषितैः पदैरलंकृता सर्वैरेव तदुपासकैरन्यैश्चापि सज्जनै-रवश्यं द्रष्टव्येति । तत्प्राप्तिस्थानम्ः—

श्रीहेमचन्द्रसूरि,

जैन–पुस्तकालय, बीकानेर ( राजपूताना )

## प्रश्नोत्तरी—

इयं हि परिव्राजकाचार्य्य जगद्गुरु श्रीमच्छङ्करा-चार्य्यपादैर्विरचिता ।

वेदान्तविषयविबोधिनी सा सान्वय-हिन्दीभा-षाविभूषिता प्रश्नोत्तरी सर्वैर्मुमुक्षुभिः साधुभिः संसारसागर-निमज्जद्भिर्जनैश्चावश्यमेव द्रष्टव्या । अस्याः सम्पादकष्टीकाकारश्च 'साहित्य-शास्त्री, पं० श्रीसरयूप्रसाद पाण्डेयः ( द्विजेन्द्रः ) काव्य-तीर्थ विशारदः' । समुचितया टिप्पण्या बहुमूल्य-तामधिगतवत्या अप्यस्या मूल्यं सुतरां न्यूनतरं पणषट्कमेव । अतो ग्रहेप्सुभिरधोलिखितेन संके-तेन गृहेलिमा । प्राप्तिस्थानम्ः—

मास्टर खेलाड़ीलाल, संस्कृत-बुकडिपो, काशी ।

—श्रीशिवकुमार शास्त्री ।

## हिन्दू-पञ्च ।

साप्ताहिक-पत्रस्यास्य श्रीकृष्णजन्मोत्सवोप[...] प्रकाशितोऽतीव मनोहरः सहृदय-हृदयानन्द-सन्[...] जनकः सम्पादन-कलाकलितो रसिकजनमनोर[...] विविध-विषय-विभूषितो गद्य-पद्यपुष्पितो हृदय[...] इव सचित्रोऽयं श्रीकृष्णाङ्कः श्रीकृष्णाङ्कं विभूषय[...] हर्षास्पदं राष्ट्रभाषाऽभिज्ञानां सहृदयपाठकानाम्[...]

अस्य च सुलभगा लेखाः कविताश्च सर्वाः स[...] सहृदयानां सन्तोषमावहन्तीति सम्पादक-पाटव[...] सितम् । अङ्कस्यास्य मूल्यमपि स्वल्पमेवाष्टा[...] मात्रम् । अतो वै सर्वैं राष्ट्रभाषोदयाभिलाषुकै[...] मङ्को द्रष्टव्य इत्यस्माकमभीप्सितम्—

—'द्विजेन्द्रः' ( स० सम्पादकः ) ।

# संस्कृत-समाचाराः

[ १६२६ तमे खिस्ताब्दे पुनर्युद्धम् ]

## विचित्रा गणना ।

भारतवर्षे किमपि महायुद्धमागामिनि १६२६ तमे खिस्ताब्दे भविष्यतीति कश्चिद्दैवज्ञः प्रोक्तवान् । युक्तयश्च तेनैवं प्रोक्ताः:-१८५७ तमे खिस्ताब्दे भारत-वर्षे किमपि युद्धं प्रावर्ततेति सर्वेऽपि जानन्ति । तत्संवत्सरीय-संख्याङ्कानां १+८+५+७=सङ्क-लने २१ एकविंशतिर्भवति । अस्याश्च संख्यायाः १८५७ संख्यया योगे १८७८ भवति, तस्मिन्वर्षे वङ्ग-प्रदेशे किमपि युद्धमभूत् । अथ चैतत्संख्यागताङ्कानां १+८+७+८=योगे २४ लभ्यते । पूर्वसंख्ययास्या योगे १६०२ भवति । अस्मिंश्चापि वर्षे वङ्गेषु प्रजानां राज्यशासक-विरूद्धमान्दोलन मुद्भूतं वङ्ग-विच्छेद[...] लकम् । अथ त्वैतत्संख्यागताङ्कानां सङ्कलने १+६[...] ०+२=१२ लभ्यन्ते, पूर्वसंख्ययास्य योजने १६[...] भवति । अस्मिन्वर्षे व्रिटिशराज्य-शासकानां पा[...] त्यमहायुद्धे योगः कर्तव्यो ऽभूत । अथैतत्संख्या[...] नां सङ्कलने १+६+१+४=१५ । लभ्यन्ते । अ[...] तु पूर्वसंख्यया योजने १६२६ भवति । अतो [...] पूर्वानुभव-संगृहीतव्याप्त्यनुरोधेन तस्मिँश्च [...] युद्धमवश्यं भावीति गम्यते । ततश्चापि परं १६५[...] तमे वत्सरे भिवतुमर्हति । १+६+२×६=[...] संख्यायाः १६२६ संख्यया योजने १६५० लभ्यते [...] इतित्ववगन्तव्यम् ।

—*—

---

Reg N. 1348

## सचित्रम् सामुद्रिक-रहस्यम् ।

ले०—श्रीकालिकाप्रसादशर्म्मा, राजज्योतिषी,

अद्भुतमिदं ग्रन्थरत्नम्, हिन्दीटीकासहितम्, अनेकचित्रविभूषितम्, नरनारीणां शुभाशुभज्ञाने नितरामुपयुक्तम्, संस्कृते सर्वथा नवीनमेव । एतेन हस्तरेखाणां गुरुं विनैव सम्यक् परिचयो भवति । मूल्यम् १।) मुद्रा ।

## रतिरहस्यम् (कोकशास्त्रम्)

एष प्राचीनो ग्रन्थः श्रीमहाकवि कोक्कोक विरचितः । अस्मिन् कामशास्त्रसम्बन्धिन्यः सर्वा वार्ताः, पद्मिनी-शङ्खिनी-चित्रिणी-हस्तिनी-प्रभृतीनां स्त्रीणां भेदाः, एवं चत्वारः पुरुषभेदाः, स्त्रीणां वशीकरणस्यौषध्यः, मन्त्राः, तत्तद्देशीयानां स्त्रीणां पुरुषाणाञ्च लक्षणानि, तेषां संयोगाः, आलिङ्गन-चुम्बनादीनां भेदाः, तेषां विशेषाश्च अन्ये च बहवो ज्ञातव्याः कामशास्त्रीयाः विषयाः सन्ति । एष ग्रन्थो नितरां सुप्रसिद्धः प्राचीनश्च विद्यते । एतस्यैका प्रतिः सर्वैरपि स्वस्वविधे नूनं संस्थापनीया । मूल्यम्—मुद्राद्वयम् ।

## राष्ट्रभाषाभूषणम् ।

ले०—श्रीगोपाल शास्त्री, दर्शनकेशरी, साहित्याचार्य्यः

एतत् पुस्तकं हिन्दीभाषायां विद्यते । संस्कृतज्ञानां हिन्दीज्ञाने नितरामुपकारजनकम् । सर्वैरपि संस्कृतज्ञैरेतद् व्याकरणम् पठनीयम् । एतेन हिन्दीभाषायां निबन्धलेखनेऽनुवादादिज्ञाने महत्सौकर्यं स्यात् मूल्यम्—आणकषट्कम् । मार्गव्ययः—=)

## सूर्यचरितम् वा [illegible]चरितम्

ले०—तारादत्तपन्तः, [illegible] [illegible]करण-काव्य[illegible]

गोलविद्या-[illegible] [illegible] महाकाव्यम्

अतिसरलम्, [illegible] [illegible]भिन्नदेशानां [illegible] पर्वतानां ऋतूनां चात्र परिचयो कविना न[illegible] सरण्या समुपवर्णितः । गोलविषये नूतनं सं[illegible] महाकाव्यम् । सर्वथा द्रष्टव्यम् । मूल्यम् [illegible] मार्गव्ययः पृथक् ।

## गोलविद्या गोलसूत्रञ्च ।

ले०—श्रीतारादत्तपन्तः, साहित्याचार्यः, काव्य-व्याकर[illegible]

संस्कृते भूगोलज्ञानस्य प्रधानं प्रथम[illegible]कम् । अत्र हिन्दी-भूगोल-पुस्तकवत् भारत[illegible] समस्तो भूगोलः सरलतया बालानां ज्ञानाय [illegible] वर्णितोऽस्ति । संस्कृतकाव्येषु नाटकेषु पुरा[illegible]केषु च समागतानां देशानां नदीनां स्थाना[illegible] तानाञ्चाधुनिकी स्थितिस्तेषां नामानि च [illegible] सर्वथा द्रष्टव्यमिदं पुस्तकम् । मूल्यम् ॥) आ[illegible]

## महाकवि बाणभट्टः ।

लेः—भू०पू० सुप्रभात-सम्पादकः श्रीकेदारनाथ[illegible]

हिन्दीभाषायामयमपूर्वो निबन्धः । अत्र [illegible] भट्टस्य जीवनविषये महत्वपूर्णा, मननीया [illegible]षणा वरीवर्ति । छात्राणां कृते नितरामुपका[illegible] नबन्ध-बन्धः । मूल्यम् =) मार्गव्ययः -)

## सर्वेषां प्राप्तिस्थानम्


मैनेजर, सुप्रभात कार्यालयः, बनारस-सिटी ।

Published by Gaurinath Pathak and printed bs Rameshwar Pathak at the Tara Printing Works, Benares.

सौरकार्तिके १९८५ वैक्रमाब्दे ।

November 1928.

सप्तमोऽङ्कः
No. 7

# सुप्रभातम् ।

संस्कृत-साहित्य-समाजस्य मुखपत्रम् ।

ततिमुदस्यद् भेदतारा विलुम्पन्-नयदधिसुरभाषाभाषि जागर्तिमुच्चैः ।
विहग-वादैराह्वयद् भाग्यभानुम्, विलसतु भुवनेऽस्मिन् सर्वतः 'सुप्रभातम्'

निरीक्षकः—

महामहोपाध्याय-श्रीदेवीप्रसादशुक्लः, कविचक्रवर्ती, साहित्य-वारिधिः

दकः—

श्रीगोपालशास्त्री त्रिपाठी "साहित्याचार्य्यः"

व्यवस्थापकः—

श्रीगिरीशशुक्लः, "न्यायाचार्यः"

मूल्यम्—३)
कः—१२)

छात्रेभ्यः—१॥)
वैदेशिकेभ्यः—९)

अस्याङ्कस्य मूल्यम् ।)

# लेख-सूची।



श्रेष्ठि-श्रीगोकुलदासतेजपाल-महाविद्यालयः (मोहमयी)

उपर्य्युक्त-संस्कृत महाविद्यालयस्य 'काशी-कलकत्ता-राजकीय-परिक्षोत्तीर्णच्छात्रेभ्यः 'वार्षिक पारितोषिकप्रदानमहोत्सवः श्रेष्ठिवर्य्याणां धर्मकार्यै प्रमुखाणां श्रीमाधवजी (बी. ए. एल. एल. बी) महोदयानां सभापतित्वे महता समारोहेण संपन्नः। मंगलपाठात्परं संस्कृतच्छात्रोपयुक्ते विषये उपदेश-कानां भाषणानन्तरम् छात्रैर्व्यायाम-कौशलं प्रद-र्शितम्। श्रीमतां प्रधानाध्यापकानां'वार्षिक-विवरण पाठानन्तरम् छात्रेभ्यो योग्यतानुसारं संकलनात् (६४०) रजतमुद्राः पारितोषिकरूपेण प्रदत्ताः। आशास्महे संस्कृतोन्नति-प्रचारशून्ये मोहमयीप्रान्ते अन्येऽपि श्रेष्ठिवर्य्याः 'श्रीगोकुलदासश्रेष्ठिवर्यानन-कुर्युस्तर्हि गीर्वाण्या अपेक्षिता समुन्नतिः स्यादेव इति शिवम्

भवदीयः—चन्द्रकान्त पाठकः

## समालोचनासारः।

### माधुरी—

माधुरी माधुरीवेति मा धुरीणा-स्मयो भवे
संदृष्टाऽऽलोचितेयन्तु निर्मलैव विभाति

माधुरीयं मधुराक्षरैर्मधुरा, सुचित्रैर्वि गम्भीर-गद्यगुणगुम्फिता, पद्यपुष्पिता, विवि यविभूषिता च विभूषयति राष्ट्रभाषा-भ सहृदयानां भाषा-भण्डारमिति हर्षास्पद कम्। किम्बहुना ? दर्शनेनैवेमां चेतो न वि मिच्छति। स्वगुणैर्बहुमूल्यतामधिगताया अ मूल्यं व्ययादपि न्यूनतरं केवलं सार्द्ध मेवेति बहूपकारतां सूचयति प्रकाशकस्या किंवक्तव्यमत्र सम्पादक-पाटवविषये ? वि एवात्र प्रमाणमिति सर्वथा बुधैरनुग्राह्येयं भा मेऽभिलषितम्—(द्विजेन्द्रस्य) स० सम्पाद




विविध-विषय-विभूषितम्, अद्वितीयम्, सचित्रं संस्कृत-मासिक-पत्रम् ।

वर्षं } सौर—कार्तिके । १९८५ वैक्रमाब्दीये { सप्तमोऽङ्कः ।

श्रीश्रीगौरकृष्णः शरणम् ।

## समालोचनोत्तरम् ।

—श्रीमन्माध्वसंप्रदायाचार्य्य-दार्शनिक-सार्वभौम-तर्करत्न-न्यायरत्न-साहित्यदर्शनाद्याचार्य्य-

गोस्वामिश्रीदामोदरशास्त्री ।

विकस्वरायामच्युतग्रन्थमालायामाद्यपुष्पप्रकाशितायां मत्संपादितायाः श्रीभगवन्नाममङ्गलाचरणप्रथमार्य्याघटकषष्ठ्यन्तहरिपदार्थस्वारस्यप्रतिपिपादयिषया तट्टीकापरमेश्वरवाचकत्वाभावहेतुके भगवत्सहस्रनामान्तर्गतविश्वादिनाम्नां स्तोत्राद् बहिःप्रयोगाभावसमर्थने शास्त्रविरुद्धतां प्रदिदर्शयिषुणा मया लिखितायाष्टिप्पण्याः समालोचनं कृतवता श्रीचण्डीचरणतर्कतीर्थमहोदयेन कश्चन प्रबन्धः कलिकातानगरात् प्रकाशमानायाः संस्कृतसाहित्यपरिषत्पत्रिकाया आषाढमाससंख्यायां प्रकाशितः, शेषे तदुत्तरं चार्थितमतस्तदनुरोधपारवश्यान्निरपेक्षविद्वन्मनोविनोदानुगुणे तथाविधाने प्रावर्त्ति

परथाऽन्वहोदित्वरनानाविधाफलेग्रहिप्रश्नोत्करमार्जनोचितावसरविधुरतोद्वेजयत्येवाश्रयान्,

यदि त्विहालोचनसंसृष्टमूलटीकाटिप्पणीसमालोचनान्यानुपूर्व्यैवोदधरिष्यन्त; पर्यास्यत्तर्हि निरीक्षकसौकर्य्यसुविधा; परन्तु विषयबंहिमभयान्निशितमतिकावगतिप्रश्रेयत्यप्यायतेतेति नैतानि तथोददीधरम्,

## इत्थमिह प्रतिविधीयते—

अत्र तावत्तर्कतीर्थमहोदयेनाकाण्ड एव स्वतार्किकतां परिचाययता प्रसिद्धत्वेन विषयमननुमित्सोरपि वाक्ये न्यायत्वमारोप्याप्राप्तकालत्वेन परं निजिघृक्षुणाऽऽत्मैव निरनुयोज्यानुयोगेन न्यग्राहीति प्रथमग्रासे मक्षिकापातमनुहरति,

प्रसिद्धिश्च सहस्रनामस्तवघटकनामनिष्ठवाचकताया मूलकारस्यैव तृतीयपरिच्छेदेऽधिकारिनिरूपणे "यतस्तद्विषया मतिः" इत्युपक्रम्य; "हरेर्नामपदैस्तद्वाचकैः शब्दैः" इत्युपसंहाराद्यैः; टीकाकृतश्चारम्भ एव " षष्ठ्या च संबन्धवाचिन्या वाचकत्वम् " इति वाक्येन; अभिधायकनामानुशासनपरकोशादिघटकविष्णुनारायणकृष्णादिपदेषु भगवद्वाचकतायां कस्याप्यविमतेर्निष्प्रत्यूहैवेत्यपि सुधिय एव विचारयन्तु,

यत्तु प्रथमकिञ्चेत्यादिना–अवाचकत्वमननूद्य; कृतमबोधकत्वानुवादमाक्षिपता तीर्थेनानावश्यकव्याप्तिज्ञताहेवाक आरब्धः सोऽपि प्रेक्षावद्धासास्पदमेव—

शब्देष्वर्थबोधकतायां शक्तिलक्षणाऽन्यतरप्रयुक्तत्वस्य सर्वतन्त्रसिद्धान्तसंमततायां; स्तवादिघटकनाम्नां लक्षणाया भगवद्बोधकतायाः श्रुतिस्मृतिपुराणादिभिरननुमोदिततायां च तेषां तदबोधकत्वंतदवाचकत्वापर्यवसायीति कथंकारमनुन्मत्तोऽङ्गीकुर्यादित्यस्मिन्नर्थे किं साक्षित्वे पाठका मूकायिष्यन्ते ?

यत्तु–द्वितीयकिंचेत्यादिना—छलप्रक्रियाशरणीकरणेनात्माऽऽयास्यते स्म तीर्थेन; तत् किमर्थमिति न वयं जानीमः,

अत्र हि टिप्पणीस्थं " तेषां नाम्नाम् " पदद्वयं त्यक्त्वा; स्वकल्पितव्याप्त्याभासमवलम्ब्य नमस्मदीयव्याप्तित्वेन प्रख्याप्य साधु तीर्थता आदर्शो दर्शितः,

यत उपक्रमोपसंहारादिग्राहिततात्पर्यज्ञाना घटितसामग्रीनिबन्धनबोधेच्छयोच्चारितशब्दात्त बोधानुत्पादे तादृशशब्दस्य वैयर्थ्यं दुर्निवार

न हि लोके प्रयोजनसामान्याभावमेवोप व्यर्थशब्दो व्यवह्रियते " न हि बीजप्रयोजना विना " इत्यादिन्यायेनासंभवात्; किन्तु स्वामि प्रयोजनाभावज्ञानात्; तस्मात्प्रकृते विशेषतात्प प्रयुक्ते व्यर्थशब्दे,सामान्यतात्पर्येण प्रत्यवस्थानं रूपमसद् वर्त्म नातिक्राम्यति,

भवति च भगवद्विषयकबोधजनकत्वतात् प्रयुक्ते सहस्रनामस्तवघटकनाम्नि तदबोध वैयर्थ्यव्याप्यम् ,

यदपि तृतीयकिंचेत्यादिना–स्तवघटकना भगवद्बोधकत्वमुपगम्योच्चारणमात्रेणादृष्टद्वारा पनाशकत्वादिकथनं; तदपि शास्त्रविरुद्ध च्छलमेव

तादृशनाम्नां तदबोधकत्वोक्तौ न प्रमाणं; प्रत्युत श्रीविष्णुसहस्रनामस्त महाराजयुधिष्ठिरेण "स्तुवन्तः कम्" इत्यादि पितामहगाङ्गेयेनोत्तरितं "जगत्प्रभुं स्तुवन्नाम णं" इत्यादि; "सर्वदुःखातिगो भवेद्" इत्यन्तं "नामसहस्रेण स्तुवन् गुणकीर्त्तनं कुर्वन्" 'निमित्तशक्तया नाम्नां भेदिन्यस्तदुदीरणाद् विष्णुधर्मोत्तरोक्तवाक्यं प्रमाणयतां "षष्ठीगुण जातिरूढीनां शब्दप्रवृत्तिहेतूनां संभवात् सर्वे

स्मिन् पुँसि प्रवर्त्तन्ते" इत्थं व्याचक्षाणानां-
ङ्कराचार्य्यपादानामुक्तयस्तद्बोधकत्वप्रतिष्ठापन-
एव जाग्रति

त्त्वघटकनाम्नामवाचकत्वे हि भगवन्निष्ठगुणा-
भगवत्तत्तन्नामप्रवृत्तिनिमित्तत्वोक्तिः स्पष्टमेव
भवेत्, तस्मात्तेषां तदीयतत्त्वे स्थिते
ऽपि वाच्यत्वं दुरपन्हवं, "वाच्यत्वे सति
वृत्तित्वे सति वाच्योपस्थितिप्रकारत्वस्यैव
निमित्तलक्षणत्वात्, ततश्चावाचकत्वोक्तिरसू-
प्रयुक्तदुराग्रहमूला; शास्त्रज्ञानवैधुर्यनिबन्धना
स्यत्राणुरपि विचिकित्सा

न प्रथमकिञ्चोक्तौ भगवदवाचकत्वेऽपि
लक्षणाऽऽदिना स्यादित्युक्तिरप्यव्युत्पन्नतां-

चारणद्वाराऽदृष्टेत्याद्युक्तं; तदप्यसंगतं,-
नामुच्चारणद्वाराऽदृष्टजनकता तदैव स्याद्
भगवद्विषयकबोधजननसामर्थ्यं तत्र स्याद्,
विश्वादिनाम्नां भगवत्संबद्धत्वमेवाप्रामा-
प्रसज्येत,

च्चेत्याद्याक्षेपोऽप्यसमञ्जस एव संभाव्य-
स्याक्लृप्ततयाऽनुवाद्यत्वानर्हत्वाद्

त्याद्याक्षेपोऽप्यसूयाकलुषित एव, टिप्पणी-
स्फुटमेतदवगम्यते यत् शक्यसंबन्धो-
द्? यस्मिन् पदे शक्तिरेव किंचिन्निरूपिता
तत्र किंचिन्निरूपिता लक्षणाऽप्यसंभवेति
तात्पर्येण निर्दिष्टविषये निरूपकैक्य-
पर्यनुयोगशृङ्खलपद्धतिमध्यास्ते न वेति
भावन्तः परिशीलयन्तु,

यच्च वाचकत्वशक्त्योरैक्याक्षेपः सोऽप्यत्यन्तं-
हेयः, शक्त्याऽर्थविषयकबोधजनकत्वं वाचकत्व-
मुच्यते, तथा च व्यापारस्य व्यापारिनिष्ठधर्ममा-
त्रेणैक्यमेवेति केनानुभवेन तीर्थेनाधिगत इति ता-
दृशा एव ज्ञातुमलम्,

यच्च तथा हीत्यादिना-आक्षेपे स्तोत्राद्बहिस्तेषा-
मुच्चारणं पापक्षयसाधनमित्यत्र शास्त्रप्रमाणाभावा-
दित्युक्तं तदपि नितान्तशास्त्रानभिज्ञतासाधकं-
"सर्वरोगोपशमनं सर्वोपद्रवनाशनम् ।
शान्तिदं सर्वरिष्टानां हरेर्नामानुकीर्त्तनम्" इति
"सर्वार्थशक्तियुक्तस्य देवदेवस्य चक्रिणः ।
यद्वाऽभिरोचते नाम तत्सर्वार्थेषु योजयेद्"

इत्यादिप्रमाणैर्भगवन्नामोच्चारणं पापक्षयका-
रीत्यर्थस्य स्पष्टप्रतिपत्तेः,

यत्तु टीकाकृदाशयवर्णनं तदपि स्वदोषस्य
परत्रार्पणजातीयं, न हि टीकाकारोऽस्त्येतादृगन-
वधानवान् यत्स्वयं बहुत्र पूर्वोक्तवचनतत्तुल्यान्य-
न्यानि वाक्यानि प्रदर्श्यापि भगवन्नामोच्चारणस्य
पापक्षयसाधनत्वाभावसमर्थनेन प्रत्यवेयाद्, एतेन
शास्त्रप्रमाणाभाव एव प्रतिबन्धक इत्युक्तिरपि
च्छिन्नमूला; तत्सद्भावस्य दर्शितत्वाद्,

यच्च तदपीत्यनेनाक्षेपः सोऽप्यज्ञानविजृम्भित-
एव, यतो वाचकत्वं चेन्नास्ति लक्षकत्वं त्वसति
बाधके नैव संभवीति फलितमेवानुपस्थापकत्वम्,

एवं यच्चोच्यत इत्यपि हेयं-विश्वादिशब्दानां-
भगवद्वाचकतायां कथं तात्पर्य्यानुपपत्तिरागता
यन्निबन्धना शक्तिं विहाय लक्षणाऽऽद्रियते

शेषे च यदपीत्याक्षेपोऽप्यश्रद्धेयतमः-स्वाव्यु-
त्पत्ति दोषविशेषवशात् परत्रारोप्याक्षेपेणोक्तेः, जीवे-

श्वरसाधारणात्मशब्दस्य चेतनत्वे वाच्यताऽवच्छेदकत्वसत्त्वेऽपि नेश्वर आत्मशब्दवाच्य इति कुतोऽवधारितं तर्कतीर्थन, ? यथा प्रमेयद्रव्यादपदानां पृथिवीत्वघटत्वादिषु वाच्यताऽवच्छेदकत्वाभावेऽपि पृथिवीघटादयः प्रमेयत्वद्रव्यत्वादिभिः प्रमेयद्रव्यादिपदवाच्या एव, कथमन्यथा घटः प्रमेयो द्रव्यं पृथिवी वेत्यादयोऽभियुक्तव्यवहाराः प्रामाणिकाः स्युरिति कृतं विस्तरेण ।

निरपेक्षविज्ञपाठकवृन्देभ्यः सप्रश्रयमेतन्निवेदनम्—प्रबन्धेऽस्मिन् क चित् क चिद्गाभाषाव्यवहृतिर्जाता किन्त्वत्र न नो दोषः, तीर्थमहोदयेनैवात्मना सम्भाषां प्रयुञ्जानं स्वस्मै रोचमाना परिपाटी स्वप्रबन्धे प्रदर्शिता सुतरामस्माभिरपि तत्प्रसत्त्यै तथैव भाषा व्यवाहारीति । शम् ।

## सात्त्विकं साहाय्यम् ।

श्रीसार्वदेशिकार्यसभायाः प्राधान्यपद-
मलङ्कुर्वद्भिः समण्डलैः—

### श्रीनारायणस्वामि-महोदयैः ।

काशीस्थ-संस्कृत-साहित्य—समाजस्य-विपन्नां दशामुपश्रुत्य तस्मै प्रतिमासं १०) रूप्यकं साहाय्यं वितीर्णमिति तेभ्यः समण्डलेभ्यः साधुवादान् वितरति समन्त्रणा-समितिसदस्यः ।

श्रीप्रभुदत्तशर्म्माऽग्निहोत्री (महामहोपाध्यायः)
सभापतिः—
श्री संस्कृत-साहित्य-समाजस्य काशीस्थस्य ।

# परिभाषेन्दुशेखर-व्याख्या ।

## पद्यमयी, रुचिराख्या ।

( आदितः )

( ले० शास्त्री अमृतलाल शर्म्मा व्या० वेदान्त-तीर्थः )

सच्चित्सुखस्वरूपं ध्यात्वा विश्वेश्वरं गुरूंश्च हृदि
परिभाषाणां व्याख्यां रचये रुचिराभिधां पद्यैः
गद्योक्तोऽर्थो दुर्धर उक्तः पद्यैः स एव सुधरः स्या
इति मत्वा व्याख्येयं पद्यैर्विहिता विदां प्रमोदाय
प्राचीनेऽस्मिन्नपि च व्याकरणे वाचनिक्यो
ज्ञापकतो न्यायाद्वा सिद्धा भाष्येऽथ वार्त्तिके प
पाणिनिना चापठिता व्याख्येया अत्र परिभाषाः
तासां नागेशकृतां व्याख्यामनुसृत्य गुरुभिरुक्तां
विजयाभिधटीकायां संगृह्यावश्यकान्परिष्कार
ग्रथ्नामि पद्यबन्धं यथामति मतेः परिष्कृत्यै ॥ ५
यद्बोधो[1] विधिशास्त्र-प्रवृत्तिमथ वा निवृत्तिमाव
शब्दस्य[2] साधुतां वा शक्तिं[3] या नैव बोधयति
अधिकारादतिरिक्ता[4] सा परिभाषेति लक्षणं बो
त्रीण्यत्र च प्रकरणान्याद्यं शास्त्रत्वसाधकं[5] तद
बाध-प्रयोजकोक्तिर्द्वितीयमन्त्यं च शेषोक्तिः ।
एकांशविकृतमपि नैवान्यवदित्यन्तमाद्यमथ ॥

(१) यद्बोध इति, विधिशास्त्रप्रवृत्तिनिवृत्ति साधुत्वाप्रकारक-शक्त्यविषयक-बोधजनकत्वे सत्यधिका न्नत्वं परिभाषात्वम् । (२) अपवादसूत्रव्यावृत्तय (३) संज्ञासूत्र व्यावर्तनायेदम् । (४) पूर्वत्रासिद्ध ग्रधिकारसूत्रव्यावृत्तय एतत् ।

(५) प्रवृत्तिप्रयोजकनिर्णयात्मक-बोधजनकत्वं तत्साधकत्वं व्याख्यानत इत्यारभ्य एकदेशविकृतमन त्यन्तानां परिभाषाणाम् ।

…न्या निर्देशो बलवत्तर एतदन्तमपरं च ।
…शिष्टं च तृतीयं प्राधान्याच्छास्त्रसाधकं प्रथमम् ।
…ण् सूत्रे लणिति च सूत्रेऽप्येकस्य णस्यैव ।
…दशिण् पदार्थे सन्देहान्निर्णयार्थमिदमाह ।१०।
…ख्यानाच्छिष्टकृतादन्यतराद्यर्थ-निर्णयः कार्यः ।
…सन्देहाच्छास्त्रं स्यादननुष्ठापकं किमपि ॥११॥
…नकतारूपेष्टसाधनत्वस्य निश्चयेनैव ।
…र्भवेत्पुंसां साधुपदोच्चारणे नियतम् ॥ १२ ॥
…यार्थके यत्सन्देहोत्पादकं वचः शास्त्रे ।
…ख्यानात्सन्देहो निवर्त्य इत्यर्थसूचकं तद्वै ॥ १३ ॥
…दिदिति हित्वा पूर्वणैवाण् परेण चेण् ग्राह्यः '

…रिभाषेन्दु-शेखरस्य कारिकानिबद्धेयं रुचिरा यदि पाठकेभ्यो रोचेत, तदा स्वानुमतिप्र-…यच्छन्तु । अग्रे प्रकाशनीया नवेति

( सम्पादकः )

## संस्कृत-भाषा-महत्त्वम् ।

[…० श्रीसरयूप्रसाद शास्त्री ( द्विजेन्द्रः ) काव्यतीर्थः ]

…चीनतमेयं सुरभारती संस्कृतभाषैव या …र्वाल्मीकि-व्यास-वसिष्ठादिभिरपि व्यवहृता, …ता च परस्परं कालव्यवहितानपि श्रुति-…पुराणेतिहासादिग्रन्थान् माणिक्यभूतान् एक-…यन्ती मञ्जुमालेव विभाति । कथमन्यथा …णो चतुर्मुखनिःसृताश्चत्वारो वेदाः, ततोऽ-…नेकवत्सरादपि पश्चाद्भाविनां मन्वादि-मुनि-…णां स्मृतयश्चाद्यत्वेऽप्यस्माकं कर्णकुहरान् …करिस्यन् ।

या चेयं संस्कृतवाणी मधुरतमवर्णालङ्कारैरल-ङ्कृता, स्मृति-पुराणादिभिः संसेविता, वेदैरध्यु-षिता, पुरातनयुगमभिव्याप्याद्यावधि सनातनधर्मै-कप्राणा नित्या चेति निश्चीयते न जानीमहे कैर्दु-ष्कृतकर्मभिः कृतघ्नैः सततमनाद्रियमाणा सरस्व-तीयं पातालमूलं बलादिवाभ्युद्यते ।

सैव सुरभारती कलियुग-प्रभावेणान्तर्हितै-र्विबुधैर्विरहिताऽपि स्ववात्सल्येनैवैकेन त्रिविधान् तापान् दूरयन्ती शाश्वत-धर्मावलम्बिनोऽस्मान-वति । यथा दिनावसानेऽस्तंगच्छतो भगवतो भास्करस्य परमपावनी प्रभा परितस्तूत्तमे शिखरे-ऽत्यन्तं क्षीणतरा विभाति तथैवाद्यत्वे सायंसमय-विडम्बिनि कलिकालेऽस्मिन्नस्तं जिगमिषोः सार्वभौ-मस्य सनातनधर्मसूर्यस्य शोभाऽपि सुरसरस्वतीगुणै-रनुत्तमैरुन्नतमे भारतवर्ष एव क्षीणतां संजायमा-नेव भातीत्यहो ! आश्चर्य्यम् ।

यतो यत इयं गीर्वाणवाणी प्रान्तर्हिता भवति ततस्ततः खद्योतसमा ह्यनेकशोऽवलम्बविस्तृताः पाखण्डधर्मा अवैदिकाः प्रोद्यन्ति; परन्तु नायमस्तं गमिष्यति सनातन-धर्मसूर्यो न च तत्प्रभाऽपि संस्कृतभाषा । सनातनो हि भगवानेष धर्मभास्करः, नास्य कदाचिदस्तत्वं सम्भाव्यते । अत एवायं शाश्वतिको धर्म इति व्यवह्रियते सर्वैः ।

हा हन्त ! ईदृश्या विशुद्धायाः प्राञ्जलगुण-गणगुम्फितायाः सुरभारत्या एव अस्तित्वोन्मूल-नार्थं मोघश्रमां क्रियां क इव विमूढः संश्रयते ? इदानीन्तनानां नवीन-शिक्षा-दीक्षितानामथ च स-मेषां विदुषां सहृदयानामपि जनानामश्रद्धा दरीदृ-श्यते किलास्यां भारत्यां भारतेऽस्मिन्नेव ।

किमत्र कारणम् ? सत्सु बहुष्वपि कारणेष्वेकोऽनुवादोऽपि कारणतया परिगण्यते यतो वै कस्याश्चिद्भाषायाः कस्याश्चिदन्यस्यां भाषायां पुनः परिवर्तनमेवानुवादः । अथानूदिते वाक्यसमूहे मूलस्थ-शब्दानां याथार्थ्यं कदापि नायातीति निर्विवादसिद्धम् ।

यथा चाध्यात्मिकगम्भीरभावोद्बोधकानां शब्दानामनुवादोऽन्यासु भाषासु कथं सम्पद्येत ? यथाकथमपि सम्पद्यमानेऽप्यनुवादे मूलग्रन्थानामभिप्रायः प्रायो विलुप्येत एव उदाहरणार्थमत्रानूदिता ग्रन्था एवालम्भविष्यन्ति, ते च सर्वत्रैव सुलभाः । यथा कस्य चिन्मन्त्रस्य सूत्रस्य, श्लोकस्य वा पदार्थो यादृक्संस्कृते भासते, नानूदिते तादृगिति सुरभारतीसमुपासकैरनुभूयत एव ।

साम्प्रतन्तु बहूनां बहुभाषाभाषिणामत्रेयं सम्मतिर्यत् "प्रचुर-प्राचीन-पुस्तकानामन्यस्यां विशेषतो हिन्दीभाषायामनुवाद एव लोकोपकाराय श्रेयाननिति, एतेनैवास्य भारतवर्षस्य समुन्नतिरपि सम्भविष्यतीति" ।

किन्तु समीचीना नेयं सम्मतिर्न च वयमत्र श्रद्दध्महे । समीचीनविचार-समलङ्कृताः सहृदयास्तु कथयन्ति । यत्—

"सर्वासां भारतीयानां भाषाणामुपजीव्यता ।
संश्रिता सुरभारत्यां तत्त्यागो न मतो वरः ॥

अपिच—

"जह्युः संस्कृतभाषाञ्चेत् हिन्दीभाषाश्रिता जनाः ।
तदाऽसौ ग्राम्यभाषातोऽप्यधमत्वं गमिष्यति ॥"

अतोऽयं निष्कर्षः समुत्पद्यते, यन्मूलं विना केवलमनुवादेन कालान्तरे तस्य मूलस्य विना[illegible] एव भावीति । अतो यद्यनुवादः कस्यचित्का[illegible] एव तदाऽसौ मूलेन सहैव प्रकाशयितव्यो नो [illegible] दस्याः सुरभारत्या नूनमेवाधोगतिर्भविष्यतीति सर्ववादि-सिद्धान्तः ।

अयि भोः ! कः खल्वत्रेदृग् ऋषिसन्तानो स्वमातरमपि सुरभारतीमधो निनीषेत् ।

अतोऽस्माभिः स्वीयार्य्यभाषोन्नत्यभीप्सुभिः [illegible] वधानैर्भवितव्यं समालोच्यैवानुवादो विधेयः [illegible] अस्माकमनवधानमेघैर्विपद्वज्रतोयोत्सर्जकैस्तिरोभ[illegible] तीयं संस्कृतभाषारविभाः । ते वेगप्रचलतोत्साह[illegible] वेगेन क्षणादेव तिरोधातुं शक्यन्ते । किमधुना का[illegible] तिपातेन यैर्यैर्विविधोपायैः सुरभारत्याः समु[illegible] ध्रुवा चेति सम्भाव्यते तैस्तैरुपायैरस्माभिः सत्वर[illegible] प्रयतितव्यमिति । अयि भोः सहृदयाः संस्कृ[illegible] साहित्य-समुपासकाः ! संवदध्वं सङ्गच्छध्व[illegible]

अपरञ्च—

"धर्मप्राणाः ! कुरुत सततं देववाणी-विकाशे
बुद्धिं तामुन्नयत सततं तीव्रयत्नावधानैः ।
अन्तर्धानं द्युमुनिगिरः सम्भवेद्यर्हि तर्हि,
नायं धर्मो न च खलु यशो नामशेषोऽपि तिष्ठेत् ॥"

"तस्मात्कायेन मनसा वाचा चापि सदा द्विजैः ।
यतितव्यं देववाणी-जीर्णोद्धाराय सन्ततम् ॥"

इतिशम् ।

# धन्वन्तरि-वन्दना ।

(रचयिता—हरिनारायण शर्मा वैद्यः (आयुर्वेदाध्यापकः)

विशिष्टरोगौषध-बोधभावात् ।
रोग-व्रजाभाव-विधान-वीरम् ॥
न तत्र यान्तश्च कदापि मोहम् ।
धन्वन्तरिं वैद्यवरं नमामि ॥

( २ )

पीयूषपाणिं कुशलं क्रियासु ।
धीरं निरीहं शुभदं दयालुम् ॥
प्रवृद्धसाङ्गागद-वेद-विद्यम् ।
धन्वन्तरिं वैद्यवरं नमामि ॥

( ३ )

स्वस्थेषु मैत्रीं करुणां रुजार्ते ।
प्रीतिं सुसाध्ये विदधानमेव ॥
उपेक्षणञ्चासु-मुमुक्षुमर्त्ये ।
धन्वन्तरिं वैद्यवरं नमामि ॥

( ४ )

दुःखान्तमग्र्यं परमं स्व-धर्मम् ।
दुःखात्प्रयत्नेन सदातुराणाम् ॥
निजात्म-जानामिव रक्षितारम् ।
धन्वन्तरिं वैद्यवरं नमामि ॥

( ५ )

भूतानुकम्पेति परो हि धर्मः ।
निश्चित्य पथ्येन गदघ्नमस्मात् ॥
सुसिद्धिमन्तं सुखिनम्प्रशान्तम् ।
धन्वन्तरिं वैद्यवरं नमामि ॥

( ६ )

पुंसां गदानां विविधे निदाने ।
लिङ्गे सुशान्तौ च भवाप्रवृत्तौ ॥
चतुर्विधज्ञान-विशेषभाजम् ।
धन्वन्तरिं वैद्यवरं नमामि ॥

( ७ )

देशस्य कालस्य तथागदानाम् ।
द्रव्यस्य दोषस्य रसस्य चापि ॥
अशेष-तत्त्वज्ञवरं प्रभावात् ।
धन्वन्तरिं वैद्यवरं नमामि ॥

( ८ )

स्पर्शादिगम्यैर्बहुभिस्तु भावैः ।
शरीर-जातैर्गदपीडितानाम् ॥
आयुः प्रमाणान्यवबुध्यमानम् ।
धन्वन्तरिं वैद्यवरं नमामि ॥

( ९ )

असाध्यवर्जं परियाप्य याप्यान् ।
साध्यामयान् सिद्धसुयोगसङ्घैः ॥
निघ्नन्तमव्याहतबुद्धिवेगम् ।
धन्वन्तरिं वैद्यवरं नमामि ॥

(स्थानगतीय वी. एन्. मेहता-संस्कृत-विद्यालय- धन्वन्तरि-जयन्त्युत्सवे पठिता ।)

## ब्रह्मचर्यम् ।

ले०—धनेशदत्तशर्मा छात्रः ( दानापुर सं० विद्यालयस्थः, )

अत्र धराधाम्नि ब्रह्मचर्यं विना न कोऽपि कामपि समुन्नतिं कर्त्तुं शक्नुवन्ति । अस्यामेवार्यभूमौ प्राचीनाः प्रातःस्मरणीया महर्षयो वशिष्ठप्रभृतयो ब्रह्मचर्य-वैभवेनैव जगच्चमत्कृतवन्तः । अर्वाचीना अपि भगवत्पूज्यपादाः शङ्कररामानुजवल्लभ-निम्बार्कमाध्व-प्रमुखा धर्माचार्या ब्रह्मचर्यमहिम्नैव विश्वं विस्मापयन्ति स्म । किं बहुना, लोकमान्याः स्वर्गीय-"बालगङ्गाधर"-महोदया, ब्रह्मचर्य-प्रभावेणैव राजनीतौ नैपुण्यमासाद्य देशविदेशान् निर्मलैरात्मयशोभिरलञ्चक्रुः । स्वर्ग-सोपानमेतद् ब्रह्मचर्यं, मुक्तेर्व्योमयानमेतद् ब्रह्मचर्यमिति । असाध्या अपि व्याधयो ब्रह्मचर्यबलेन निःसंशयमनायासमचिरादेव विलयं व्रजन्ति । ब्रह्मचर्यमाधिवर्गमपि समूलमुन्मूलयति, ब्रह्मचर्यमाध्यात्ममाधिदैवमाधिभौतिकञ्च बलमुत्पादयति, जनयति च निरन्तरं प्रसादमन्तःकरणे । ब्रह्मचारिभिः त्रिलोकमपि स्वसात्कर्त्तुं प्रभूयते । किं पल्लवितेन क्षिति-तले नास्ति तादृक् किमपि कार्यं यद् ब्रह्मचर्येण निष्पाद्यं न भवेत् । पूर्वाचार्यैः ब्रह्मचारिणां यान्यनवद्यानि कर्त्तव्यानि निर्दिष्टानि तानि निखिलानि त्रिष्वेवान्तर्भवन्ति, वीर्य-रक्षा विद्याध्ययनं गुरुशुश्रूषाचेति । शरीरमाद्यं खलु धर्मसाधनमिति शास्त्रदिशा निखिल-धर्म-धर्माङ्गरक्षायै प्रथमं शरीर-नैरुज्यं निष्पादनीयम् । एतमेवादर्शं "नायमात्मा बलहीनेन लभ्य" इति श्रुतिरपि पुष्णाति । वीर्य-रक्षणं विना न कदाचित् कथमपि वपुर्बलं वृद्धिमुपेयात् । शरीरेऽस्मिन् निखिल-मर्मभूता मनोवहा नाम नाडी वरिवर्ति, वीर्य-पातनावसरे मनोवहाभिधाना नाडी सातिशयं चञ्चलायते, तदाघात-प्रतिघाताभ्यां सर्वा धमन्यो विकम्पन्ते । अतः शुक्रनाशकाः तस्मिन्नवसरे मृतप्राया वेभवन्ति । अत एव शास्त्रे निगदितं ... कविना "मरणं बिन्दुपातेन जीवनं बिन्दुधारणात्" अपि चाद्य भुक्तमन्नं सप्तविंशति-तमे दिने वीर्यरूपेण परिणमति । इत्थमेव चत्वारिंशद्बिन्दुरुधिरैः एकबिन्दुवीर्यमुत्पद्यते । ये जनाः प्रत्यहं शुक्र... नानाबिन्दुवर्गं पातयन्ति तेषां शरीरतः कियन्तो रुधिरौघा निःसरेयुरिति स्वयमेव ते विभावयन्तु ।

तेषां वीर्यव्ययिनां देहे न कथमपि शक्तिः सञ्चीयेत । तस्माद् शारीरिक-बलवृद्ध्यै वीर्यरक्षणं नितान्तमावश्यकम् । काये द्विविधाः कीटाः भवन्ति, श्वेता, रक्ताश्च, शारीरकाः श्वेताः कीटाः रोगजनकं बाह्यकीटकदम्बं विजित्य शरीरमेते रक्षन्ति रक्ताश्च सन्ततं शरीरस्वास्थ्यं समेधयन्ति । समधिकशुक्र-नाशतो नितान्तं श्वेताः की... दुर्बलायन्ते । येन मानवानां शरीराणि वा... रोगकीटा निरन्तरमाक्रामन्ति । तस्माद् रोग...नाय ब्रह्मचर्यपालनं नितान्तं प्रयोज...मावहति ।

निसर्गतोऽहर्निशं प्राणिनां श्वासप्रश्वासाः ... षट्शतोत्तरैकविंशतिसहस्रमिताः ...सरन्ति । इयं श्वासानां स्वाभाविकी गतिः ... च गतिः स्वमुखाद्द्वादशाङ्गुलि... प्रवर्तते । इयमेव द्वादशाङ्गुलिपर्यन्त-गमन-... गतिर्भोजनादि-कार्यवशादधिकमुपजायते ... यथोक्तं हठयोगे—

हाद्धिनिर्गतो वायुः, स्वभावाद्द्वादशाङ्गुलिः ।
ने षोडशाङ्गुल्यो, गायने विंशतिस्तथा ॥
विंशाङ्गुलिः पान्थे, निद्रायां त्रिंशदङ्गुलिः ।
ने षट्त्रिंशदुक्तो, व्यायामे च ततोऽधिकम् ॥

कप्रमाणपुञ्जं प्रमाणीकरोति यत् वीर्यविनाशे यं श्वासा निर्गच्छन्ति, यतः प्राणिनामायुः । अतो दीर्घायुः-प्राप्तये प्राणिभिरवश्यं ब्रह्मचर्य-णीयम्, प्राणानां केवलं श्वास-प्रश्वासनिर्भर- "असंकल्पाज्जयेत्काममिति" शास्त्रतो विजयाय त्वसतां कामानां संकल्पो हेयः । अष्टविध-मैथुन-त्याग एव ब्रह्मचर्य-लक्षणम् । ब्रह्मचारिभिरष्ट-विधमैथुनत्यागे प्रवर्तितव्यम्, मृतेन च शरीरं पोषणीयम्, मनो निग्रह-वचः संयमनीयम्, नियमेन च जीवनम- । इत्येवास्माकं सहृदयान् सहाध्यायिनो नः प्रति सादरं सानुनयं सानुरोधश्च मिति दिक् ॥

---

# पाणिनीय-प्रकाशः ।

म० म० देवीप्रसाद शुक्लः कविचक्रव...

॥ अथ स्वादि-सन्धिः ॥

पदं यच्च सजुषूशब्दास्तव...त् ॥
स्यात्सचाऽन्त्यस्याऽल... इति निश्चितम्
...परस्य स्याद्रोरु... परे ॥
...ति सत्वस्य ...वश्च...यते ॥ २ ॥
...नस्य

अनूद्य रुत्वमुत्वस्य विधानादिति बुध्यताम् ॥
शिवोऽर्च्यस्सर्वदा पुम्भिर्निजोन्नतिविधायिभिः ॥ ३ ॥
अतोऽप्लुतात्परस्य स्याद्रोरुर्हशि परे सति ॥
शिवो वन्द्यस्सदा प्रीतैः पुरुषैर्मोक्षलिप्सुभिः ॥ ४ ॥
भोपूर्वस्य भगोपूर्वस्याऽघोपूर्वस्यरोस्तथा ॥
भवेदवर्णपूर्वस्य यकारोऽशि परे सति ॥ ५ ॥
देवा इह विराजन्ते देवायिह सुरक्षकाः ॥
अशीतिग्रहणाद्देवास्सन्तीत्यादौ न दुष्टता ॥ ६ ॥
पदान्तयोर्वयौ स्यातां वा वकारयकारयोः ॥
परे तु सत्यशि लघूच्चारणाविति सम्मतम् ॥ ७ ॥
रसनाग्रोपाग्रमध्यमूलानां यस्य ...णे ॥
शैथिल्यं जायते नूनं स लघू...णः स्मृतः ॥ ८ ॥
पदान्तस्य यकारस्याऽल...तस्य सन्ततम् ॥
ओकाराद्धि परस्य स्...लोप एतन्मुनेर्मतम् ॥ ९ ॥
भो अच्युत ! स्व... माम्पाहि पाहि कृपां कुरु ॥
लघुप्रयत्नपक्षे ...च्युतेति विबुध्यताम् ॥ १० ॥
पदान्तस्ये...निर्देशात्तोयशब्दे न दुष्टता ॥
अवर्ण...लोपः स्याद्यकारवकारयोः ॥ ११ ॥
प...योरुञि पदे परे त्विति मुनेर्मतम् ॥
उ एकाग्निराभाति ज्वालाजालकरालितः ॥ १२ ॥
पद इत्युक्तितस्तन्त्रयुतेत्यादौ न दुष्टता ॥
भोपूर्वस्यभगोपूर्वस्याघोपूर्वस्य चापि वै ॥ १३ ॥
स्याल्लोपोऽवर्णपूर्वस्य यकारस्य परे हलि ॥
भोदेवाः कृपया दीनं भवन्तोऽवन्तु मां सदा ॥ १४ ॥
भगोनमस्तेऽघोयाहि देवा नम्या ननु त्वया ॥
हलीतिग्रहणाद्देवायिहेत्यादौ न दुष्टता ॥ १५ ॥
रेफादेशो भवेदह्नः परे सुपि न तु ध्रुवम् ॥
शङ्करोऽहरहस्सेव्योऽहर्गणो मागमद्वृथा ॥ १६ ॥

असुपीत्युक्तितोऽहोभ्यामित्यादौनाऽस्तिदुष्टता ॥
रूपशब्दे रात्रिशब्दे शब्दे चाऽपि रथन्तरे ॥ १७ ॥
परे सति भवेदह्नोरुत्वमेतन्मुनेर्मतम् ॥
अहोरूपं गतश्चाहोरात्रिरेषा विभासते ॥ १८ ॥
अहोरात्रजपस्तस्याऽहोरथन्तरमुच्यताम् ॥
भवेद्रेफोऽहरादीनाम्पत्यादिषु परेषु वा ॥ १९ ॥
...हश्च गीश्च धूश्चेमेऽहरादय उदाहृताः ॥
...पतिर्गणः पुत्रश्चैते पत्यादयस्स्मृताः ॥ २० ॥
उदेत्य...तिस्साद्यादह...पतिरहःपति ॥
इत्याकुल...ऽवोचत्कामुकं कापि कामिनी ॥ २१ ॥

क्रमशः

रघु...-महाकाव्ये

## चोरप...टीका



वत्सोत्सुकापि स्तिमिता सप...
म्प्रत्यग्रहीत्सेति ननन्दतुस्तौ...
भक्त्योपपन्नेषु हि तद्विधाना-
म्प्रसादचिह्नानि पुरः फलानि ॥ २...

सा धेनुः स्तिमितापि निश्चलापि वत्सोत्... सती असपर्यां प्रत्यग्रहीत् सेति सहिता ईतिर्यत्र अथ सहिता इतिर्यत्र कर्मणि तद्यथा तथा तौ ननन्दतुः हि अपि तु उ वितर्के भक्त्या अपपन्नेषु अयुक्तेषु तद्विधानां तयोर्विधा इव विधा येषां तेषां फलानि पुरः नगर्याः प्रसादचिह्नानि प्रकृष्टः सादो येषु तादृशानि चिह्नानि येषां तादृशानि भवन्ति ॥ २२ ॥

गुरोः सदारस्य निपीड्य पादौ
समाप्य सांध्यं च विधिं दिलीपः ।
दोहावसाने पुनरेव दोग्ध्रीं
भेजे भुजोच्छिन्नरिपुर्निषण्णाम् ॥ २३ ॥

निषण्णां निर्गताः षट् वर्गाः कामादयः... तेषां रिपुः चौरः पुनरेव दोहावसाने दोग्ध्रीं न... किं कृत्वा सदाचारस्य गुरोः सती आरा... भेदिका यस्य तस्य गुरोः पादौ निपी... संवाह्य तथा सान्ध्यं सन्धिभवं विधिं स... कीदृशः चौरः दिलीपः दिलीं यवागूं पि... तथाविधः पुनः कीदृशः भुजोच्छित् भुजयो... छित् छिदा कर्तनं यस्य चौरत्वात् सः "... यवागू विलूपा" इति हैमः । छेदनं... संपदादित्वात् क्विप् ॥ २३ ॥

तामन्तिकन्यस्तबलिप्रदीपा-
मन्वास्यगोप्ता गृहिणीसहायः ।
क्रमेण सुप्तामनु संविवेश
सुप्तोत्थितां प्रातरनूदतिष्ठत् ॥ २...

गोप्ता अपलापकः अनु यथा तथा तां... आक्षिप्य गृहिणीसहायः सन् गृहिणीसहि... गृहिणीसहः आयो यस्य, अथ गृहिणीं स्थगि... हायः हानं यस्य सः क्रमेण सुप्तां तां गृहिणी... संविवेश प्रातः सुप्तोत्थितां तां गृहिणीम्... ...र्णीं तां धेनुम् अन्तिके नितरां अस्तः ब... यस्...तां कीदृशीं गृहिणीं अन्तिके... बलिप्र...या सा ताम् ॥ २४ ॥

इत्थ...ारयतः प्रजार्थं
सम...या महनीयकीर्तेः ।
सप्तव्यती...णि...ानि तस्य
...वितस्य ॥ २...

तस्य त्रिगुणानि सप्त दिनानि व्यतीयुः कीदृश्रमहनीयकीर्तेः चौरत्वात् न महनीया ...र्यस्य तस्य तथा दीनोद्धरणोचितस्य दीनानां ...नां उत् उच्चैः यत् हरणं सर्वस्वमोचनं ...चितस्य तथा प्रजार्थं प्रसवार्थं महिष्या समं ...पत्न्या सह इत्थं व्रतं धारयतः धारं कुर्वतः ...त्यं एतादृक् व्रतं यत्र कर्मणि तद्यथा तथा ...र्थं धनं धारयतः, अथ प्रजायै धारं कुर्वतः महिष्यां सैरिभायां प्रजार्थं इत्थं समं तुल्यं व्रतं ...: अहनि दिवसे ईया ई लक्ष्मीं याति, अथ ...कामं याति तादृशी कीर्तिर्यस्य तस्य ॥ २५ ॥

( क्रमशः )

# गर्हितं किमतः परम् ।

श्रीमन्तः सुप्रभात-सम्पादक-महोदयाः पत्रमिदं ...स्यैव कृते लिखितमित्यविकल्पं प्रकाशनेना-...नु

ओरुगंटि वेंकटेश्वर शर्मा

...धाः कियन्तः पण्डिताः स्वविचारानुरूपं ...ति-पुराणादीनामर्थं कुर्वन्तो देश-कालानुप-...युत देशविध्वंसकरीमर्वाचीनकालत एव सनातनधर्मस्य बाह्याचारपद्धतिं कियतीं ...मन्यानाः स्वाज्ञानेन, दुराग्रहेण वा वैयक्तिक-...स्वार्थादिदोष-पारवश्येन वा कियन्तो नेत्रा-...वित्तेन ...नस्य

वित्तैर्बहायाससाध्यं बहुव्यय-सम्पाद्यञ्चोदर्क-शून्यम्ब्राह्मणमहासम्मेलनायोजनमारचयन्ति— इति समाचारपत्रतो ज्ञायते । आरचयन्तु नाम न मे तत्र किञ्चिदस्ति वक्तव्यम्—

"विस्तीर्णा पृथिवी जनश्च विविधः
किं किन्न सम्भाव्यते ।"

वक्तव्यन्त्वत्रेयदेवास्ति यदिमे महात्मान आत्मानं शुद्धसनातनधर्मानुयायिनम्प्राचीनतममार्गानुगामिनं मन्यमाना अपि कथमीदृशीं बाह्याडम्बरबहुलामन्तः सारविरहितां पाश्चात्य-पद्धतिमाश्रयन्ति, धर्मनिर्णये तत्र तु केवलं धर्मशास्त्रविदामेव भवति प्रयोजनं न राज्ञां नापि साधारणजनतायास्तत्र विषयेऽकिञ्चित्कराया इति । कथञ्च "कलावाद्यन्तयोः स्थितिरिति" वाक्ये जडश्रद्धतया कलौ केवल-ब्राह्मणशूद्रयोरेव सत्वात् क्षत्रिय-वैश्ययोरभावे स्व-मतेन शूद्ररूपाणामेवात्रत्यमरुभूमिस्थ-वैश्यजातीनां द्रव्यान्नग्रहणादि-पातित्याधायकदुष्कर्मकर्तृत्वमाश्रयन्ति ।

कथं वा स्वसिद्धान्ततो म्लेच्छानां ( यवनानां ) मलकाना-क्षत्रियाणां ( अस्मन्मते तु व्रात्य-क्षत्रियाणां ) शुद्धिविधायकत्वात् स्वसिद्धान्तानुसारं पातित्यभाजि पराच्यैव घोषणापत्रादावसहयोगार्हादि-विशेषणेन कृतनिन्दे भारतधर्म-महामण्डले गत्वा साहाय्यदानार्थं तत्सञ्चालकेभ्यो बद्धाञ्जलि-प्रार्थनाकरणम्—तत्सभापतिना च महाराजेन दर्भङ्गाधिपतिना पुनः सम्पर्कमाचरन्तीत्याद्यैवैतेषां कृत्यानि विस्मयन्ति सनातनधर्मावलम्बि-समाजम् । सर्वसनातनधर्मविद्वद्सम्मतं साइमन्सत्तकस्वागतं कुर्वतस्तस्यैव राज्ञोऽखिल-ब्राह्मण-महासम्मेलनस्यास्य

सभापतित्वमुपश्रृण्वतां कथञ्चिद्विज्ञानां सनातनधर्मानुयायिनां केषामपि भविष्यत्र सम्मेलनेऽणुरप्यास्थाऽदरदृष्टिर्वेति विचारणीयमेवैभिर्महात्मभिः । अपरञ्च कथमिमे महात्मानः स्वस्मिन्सङ्कटमानानि—

" न शूद्र-राज्ये निवसेन्नाधार्मिकजनावृते"

इत्यादि धर्मशास्त्रीयवचनान्यनाद्रियमाणा अन्येषांकृते धर्मशास्त्रीयनियमान्निखिलानविकलानेव पालयितुमुपदिशन्ति ।

अपरञ्च—अपरिवर्तनवादिन इमे सम्मेलनसञ्चालका महामहोपाध्यायाः प्रतिमासं (१०) दशरूप्यकं म्लेच्छराजप्रतिग्रहं गृह्णन्तः स्वयं पातित्यं जुषमाणाः कथं धर्मशास्त्रनिर्णेतारः ?

इतरच्च यदीमे महात्मानो नूतनं कमपि निर्णयमकृत्वा वर्तमानामन्धपरम्परागतां रुढिमेव समर्थयितुमुद्युक्तास्तर्हि कथमियन्तं प्रयासमाश्रित्य पर्वतं खनित्वा मूषकं निःसारयन्ति । तावन्मात्रस्य कृते इयत्प्रयासाचरणन्तु व्यर्थमेव भाति ।

अथवा यथा किम्वदन्त्या श्रूयते यदत्र वाराणस्यां चिरकालतो बहुभिर्विद्वद्धौरेयैः प्रतिष्ठापितां काशीपण्डितसभां शिथिल-प्रायां विलोक्य पण्डित प्रकाण्डा देशकालात्मविदो बहवोऽद्यत्वे चालयितुं पुनर्यतन्ते । वर्षद्वयतः साधु प्रचालयन्त्यपि । यत्र च बहवः प्रसिद्धाः काशीस्था विद्वांसः सदस्याः । तस्या विरोधकरणमेवास्य सम्मेलनस्य प्रयोजनमिति ।

यतोहि तस्याः सभायाः पदाधिकारिणो महानुभावाः स्वनामधन्याः सनातन-धर्माभ्युन्नत्यै सर्वत्रैव तन्महत्व-प्रख्यापनाय च विधर्मिभिः कृतान् सर्वविधानाघातप्रत्याघातांश्चापाकृत्य द्वीपद्वीपान्तरेष्वपि प्रचारयोग्यं वर्तमानकालक्षमं सनातनधर्मस्वरूपं परिष्कर्तुं प्राणपणतश्चेष्टन्ते । तादृगेव तस्योद्देश्यपत्रमपि मुद्रितं विद्यते ।

तस्याः सभाया मुखपत्ररूपेण सनातनधर्म... यनामकमेकं हिन्दीपत्रमपि निःसरति । (जिज्ञासु... काशीपण्डित-सभा-कार्य्यालय, काशीनरेशमन्दि... गोदवलिया, बनारससिटी इतिसङ्केततो ग्राह्य...

अन्यच्च तत्सभासदस्या अखिलभारतवर्षी... सनातनधर्मसभायाः प्रयागीयाधिवेशननिर्णी... प्रस्तावान् समर्थयन्ति । महासम्मेलन-सञ्चालका... तद्विरोधमाचरन्तीत्येतदपि काशीपण्डितसभा... विद्वेषकरणनिमित्तमेषाम् । अत एव यत्र ... मूर्खसमाजे काशीपण्डित-सभा-सदस्यान् अपमा... तुं तैः सह ग्रामण्यमाचरितुमिमे स्वशक्त्या... स्वकटिबलं यावद्यतन्त एव । परन्तु एवम्... इमे महात्मानः धर्म-शास्त्रविगर्हितं महा जनापवा... पमानजन्यमहापातककलङ्कितमात्मानञ्च विद्व... स्वार्थान्धतैषाम् ?

किम्ब्रवीम्यहं सम्मेलन-पक्षाश्रितानां कति... पण्डितानां जघन्यकृत्यं । ते हि सर्वतोऽप्य... निर्बलं गणयित्वा पण्डित-सभासदस्यान् वि... विवाहसमर्थनान्त्यजस्पृष्टान्नभोजनादिविविध... लिप्तदोषैः समाजदृष्टौ पातयितुं यतन्ते । परन्तु... इमे विफलप्रयासा एव भवन्ति, भविष्यन्ति ... निश्चयः ।

पश्यन्तु, यत्र पण्डित-सभायाम् महामहो... ध्यायाः पण्डितराजाः श्रीप्रमथनाथ-तर्क... महोदयाः, महामहोपाध्यायाः श्रीदेवीप्रसाद... क[illegible]महोदयाः, ज्योतिर्विदां मूर्धन्य... [illegible]लीधरझा...

...दाः सनातनधर्मैकप्राणाः श्री-अनन्त-
...शास्त्रिमहोदयाः, प्रातःस्मरणीयाः श्री-
...नाथशास्त्रिमहोदयाः, विश्वविदिता वैया-
...शिरोमणयो विनयावताराः श्री ( देव )
...यणत्रिपाठिमहाशयाः, देशकालविदः श्री-
...उपाध्यायज्योतिषाचार्य्यमहोदयाः, सदा-
...रताः श्रीगोपालशास्त्रिणो दर्शनकेशरि-
...णः, श्रीमन्तो महादेवशास्त्रिणः साहित्या-
...ः, इत्यादयः ।

...न्ये च बहवः स्वनामधन्याः सनातनधर्मादर्श-
...सदाचारपूता विद्वांसः सन्ति । तत्र सभाया-
...विपर्य्यासस्यैवम्भूत-विषयाणां वा स्वप्नेऽपि
... नास्ति परन्तु

"...स्वार्थी दोषन्न पश्यति"

...नियमनिगडिताः कियन्तः सूर्य्योपरि थूत्कृ-
...व्यापारान्नैव विरमन्तीत्याश्चर्य्यतरम् । सर्व-
...पराहतास्ते–हिन्दुविश्वविद्यालयीयविदुषामे-
...पण्डितसभेत्यपि बहुत्र कथयन्ति, परन्तु नि-
...तिनां विदुषां दृष्टिकोणमहमित उपरिनिर्दिष्ट-
...रसमुदाय-नामोपरि समावर्जयितुमिच्छा-
...यन्तु-कियन्तोऽत्र सन्ति, येषां हिन्दु-विश्व-
...तोऽणुरप्यस्ति सम्बन्ध इति । सर्वेऽपि
...स्वतन्त्राः काशीस्थाः प्रसिद्धा विद्वांसः सन्ति
...ना ते तु स्वविचारदृढिम्नि पर्वतवदकम्प्याः
... गत-प्रयागीय-सनातनधर्म-महासभाधिवेशने
...श्रीप्रसादशुक्ल-कविचक्रवर्त्ति-महोदयैरेव स-
...सम्प्रणव-दानस्य विरोधे...

न्विषये तेऽधुनापि तादृग्विचारा एव सन्ति । तथा द्विजाति-कृत-लाङ्गल-चालनप्रस्तावो दर्शनकेशरिणां श्रीगोपालशास्त्रिणां विरोधेनैवास्वीकृतोऽभवत् । अहन्तु जाने यत्—

'सम्मानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव,
अवमानस्य चाकांक्षेदमृतस्येव सर्वदा ॥ इति

मानव वचनस्य तु काशी पण्डित-सभासदस्या एव परिपालकाः । यत् सम्मेलनसञ्चालक-समर्थक-परिपोषकप्रभृतीनां दुरुक्ति-वादानाकर्णयन्तोऽपि सनातनधर्मशाश्वतिकाभ्युदय-जनमङ्गलादि–जनक स्वपवित्र-विचारान्नैव विरमन्तीति । ईदृशानामेव दृढविचाराणां विदुषां सनातनधर्मेऽद्यत्वे आवश्यकता विद्यते यैश्च पुनरपि समेधितः स्यात्सनातन धर्म-महिमा । येन च सर्वेऽपि जगतीतलगा जन्तवोऽस्योदारधर्म्माश्वत्थस्य च्छायातलाश्रिताः सुखिनः स्युरिति । ब्रा० सम्मेलन-सञ्चालकादि-सुधियस्तु राग द्वेषादि-परवशाः सन्तः—

"धर्मं चरत, माऽधर्मं सत्यं वदत माऽनृतमिति" धर्म-शास्त्र-रहस्यमपि विस्मृत्य किङ्कर्तुं व्यवसिता इति न विद्मः । श्रूयते तेषां रागद्वेषदम्भाहङ्कारादिबहुलव्यवहारत एवोद्विग्ना जात-घृणा बहवः काशीस्थाः प्रसिद्धा विद्वांसो ब्राह्मण-सम्मेलनन्नैव समुपतिष्ठन्ते । प्रत्युतास्य सर्वथा बहिष्कारमेव कुर्वन्तीति कथं स्यात साफल्यं द्वेषासूयामूलकस्यास्य सम्मेलनस्येति विदध्यादीश्वरः शिवम्

ओरुगण्टि वेंकटेश्वर शर्मा
( आन्ध्राभिजनः काशीवास्तव्यः )

# उरगजिह-(औरंगजेब) स्य पुत्रपार्श्वे प्रहितम्पत्रम् ।

( अवशिष्टांशः )

( अवधप्रसाद शर्म्मा का० ती० आयुर्वेदरत्नम् ।
खगौल-स्थ- ई० आई० आर० स्कूल हेड पण्डितः ) ।

( ९ )

नाऽयाता हि विभूतयः सह मया सेना न वा दुर्जया ।
सर्वैता हि समर्जिता भुजबलेनात्रैव हा ! सम्पदः ।
किन्त्वेतत् समुपार्जनं मम पुनः पुण्येन नाभूदहो,
दुष्टं मामनुयाति केवलमतः पापं सखे ! वाऽधुना ॥

( १० )

उद्धारो मम [illegible] ? कथन्नु भविता दुःखादितो घोरतो,
भोक्तव्यं कथमस्य रे प्रतिफलं पापस्य दैवाधुना ।
किं कुर्य्यां विवशोऽस्मि हन्त कठिनं कष्टं पुरो वर्त्तते,
हाऽऽवर्त्ते विषमे प्रभो निपतिता जीर्णा तरीयं मम ॥

( ११ )

यद्यत् कार्य्यमिदं मया कृतमहो सर्वं शुभं वाऽशुभम्,
तत्तत्सर्वमिदं ब्रवीम्यवितथं हा! हा! कृतं त्वत्कृते ।
दोषः कोऽपि सुत त्वया मयि पुनर्नो यातनीयोऽधुना,
हा!हा! पुण्यकृदस्मि वा कलुषकृत् किन्तु त्वदर्थं ननु ।

( १२ )

बुद्धिर्मेऽद्य पराङ्मुखी स्मृतिरपि प्रायेण नष्टाऽभवत् ।
जाता हा धनुषाकृतिः कटिरहो दृष्टिस्तथा विह्वला
जीर्णां मेऽत्र तनुं विहाय सकलै र्वीर्य्यादिभिः प्रस्थि-
तम् ॥ शेषो मद्गमनं नु केवलमहो युष्माकमग्रेऽधुना ॥

( १३ )

चित्ते हन्त ! पदे पदे भवति मे तापः प्रमादस्य हा !,
पाषाणोपममप्यहो नु शतधा भिन्नं हृदेतन्मम ।
नष्टो मे समयोऽधुना न भगवन् ! यत्नः परो दृश्यते ।
हस्ताद्धन्त ! विनिर्गतो ननु सरः कुर्य्यां किमद्य प्र[illegible]

( १४ )

सित्वा पापघटं स्वकीयमभितो गन्ता यमस्यालयम्
गर्वादैहिकमत्र सर्वनियमं न्यायं विनाश्य क्षितौ
हित्वैतत्प्रियमप्यहो निजवपुःप्रेमास्पदम् जीर्णकम्
दुष्कर्त्तिः 'सहधर्मिणीव' नहि मामेकाऽधुना मुञ्च[illegible]

( १५ )

किञ्चिन्न प्रथमं विचारितमहो ! मूढेन मोहान्मया
बद्धो दुष्कृतिरज्जुभिः कपिरिव भ्राम्यामि हाहाऽद्य
रे रे!! संप्रति कुत्र कोऽस्मि शरणं कं वा व्रजामि[illegible]
शोकार्त्तस्य ममाद्य हन्त! सकला गाढ़ान्धकारा [illegible]

( १६ )

व्यर्थं नैव कदापि पुत्र ! भवता हा ! पीडनीया [illegible]
कर्त्तव्यात् किल पूर्वमेव सुधिया चिन्त्यं भविष्यत्[illegible]
हा!हा! किल्बिषकारिणं प्रथमतो मामेव पश्य[illegible]
कीदृक् पापफलं चिरेण विषमं पुत्राद्य वोभुज्[illegible]

( १७ )

दुर्लभ्यः समयस्त्वया नु सुधिया व्यर्थं न नेयः [illegible]
वक्तव्यं मधुरं वचोऽनिशमहो रम्यं सुशीलं चिर[illegible]
स्वाद्वीयं सरसा सुधा हि सुखदा वाणीषु सं[illegible]
तास्वेवासु-हरं वि [illegible] च विषमं हा ! दुस्सहं ति[illegible]

( १८ )

पूर्वं पुत्र ! सदैव कार्य्यमखिलं साम्नैव कार्यं त[illegible]
दर्पान्धेन पदे पदे हि भवता ध्येयो न दण्डः [illegible]
जेतव्या रिपवस्त्वया नु सुधिया रागादयो दु[illegible]
रम्यं दुर्व्यसनान्मनश्च चपलं नित्यं निजश्रे[illegible]

( १९ )

निर्दोषं यदि पीडयिष्यसि जनं कञ्चित् सुखस्य[illegible]
तन्नूनं भा[illegible]वितासि पुत्र ! मम भो दुःखस्य हेतुश्चि[illegible]
जागर्तीह चि[illegible]रेण मेऽद्य हृदये ह्याशा त्वदीयाऽ[illegible]
[illegible] केवलमहो जानाति दुःखं हि [illegible]

( २० )

...प्रियपुत्र ! पत्रमखिलं मद्दुःख-संसूचकम्,
...करणीयमत्र सकलं कार्य्यं पुनर्निश्छलम् ।
...स्मरणीयमत्र सकलं वाक्यं मदीयं शुभम्,
...त्याशिषमद्य यामि भुवनात्त्वद्दर्शनैर्वञ्चितः ॥

## श्रीसुप्रभाताशीः

...वैभवं समुदयन् साहित्य-सत्पूरुषम् ।
...तिरीतिनीति-निपुणैर्भावैः समुद्भावयन् ॥
...षु गौरवं प्रकटयँस्तद्भेषु सर्वोन्नतिम् ।
...खलु सुप्रभात-महिमा नित्यं समुज्जृम्भताम् ॥

...सन्त उद्योगिनो महात्मानो येषां महाकष्ट-...शालतेदानीं पुष्पिता फलिता सती नितरां निखिलमधीतं जगत् प्रीणाति । महद्भ्यस्तेभ्यो धन्यवादवितरणमनुचितमिति ज्ञात्वाप्यनेकशः सादरं हार्दिकान् धन्यवादान् दत्वा दत्वापि न विरमत्यन्तरात्मा । एवमेव नितरां श्लाघ्याः पण्डित मनोरञ्जकाः, सुप्रभाताङ्का भवेयुरित्याशंसति,

**श्रीसत्यप्रसादशास्त्री "बहुगुणः"**
टकोली, देवलगढ़, गढवाल ।

---

## मासिकं मुद्राशतम् ।

गुरुकुलविद्यालये वृन्दावने दार्शनिकस्य विदुषः प्रयोजनम् । प्रमाणपत्रेणाध्यापनादियोग्यतासूचकेन सह पत्रं प्रहिण्वन्तु ।

**श्रीरुद्रदेव शुक्लो वेदाचार्य्यः,**
काशी विद्यापीठ बनारस ।

गार्भाधानं विधानं किमु भवति पुरेवाऽद्य तद्वद्द्विजानां ।
संस्काराणां प्रकाराः किमु तदनु भुवां भव्यभावं भजन्ति ॥
सद्रीतिः क्वोपनीतेः श्रुति-विहित-कृतिः कीदृशीदं विचार्य ।
प्राचीनाचार्यचर्या-समुचित-समयो नायमस्तीति मन्ये ॥ १ ॥

म० म० देवीप्रसादशुक्लः कविचक्रवर्ती

# सम्पादकीयम्

सुप्रभातपाठकैः पठितमेव भवेत् श्रीमताम्बेकटेश्वरशर्मणाम्पत्रम् । तत्पत्रावलोकनेन तु ब्राह्मणमहासम्मेलनसञ्चालकानां कर्तव्योपरि दयैवोदेति ते हि अखिलभारतवर्षीय-सनातनधर्ममहासभाया विरोधमाचरन्तीत्येतदपि गेहेनर्दित्वन्तेषां हास्यास्पदमेव। यस्याश्च सभायाः सर्वस्मिन्नपि प्रान्ते प्रतिबिम्बरूपाः सहस्रशः शाखासभाः सन्ति तस्य विरोधमेवमेकत्र गृहकोणे कोलाहलकरणेन कथमिमे सफलमनोरथाः स्युः । अहन्तु कथयामि यदिमे स्वमनोवेगं स्वकण्डूयनं शान्तयितुमेवेयत्कूर्दनमुत्सवनादिकमाचरन्ति । महासभाविरोधमाचरद्भिरेभिः स्वात्मापि विस्मर्य्यत इत्येतदेवाश्चर्य्यम् सनातनधर्म-काशी पण्डित-सभा तु नैकस्य कस्यचन विदुषः सम्पत्तिः सा तु सर्वेषामपि काशीस्थविदुषां सभास्ति । तस्या विरोधाचरणं तत्सदस्यविदुषोऽपवदितुमनेक-कपटपत्रप्रसारणम् । तैः सह ग्रामण्यप्रयोगः कियद्रोचेत सत्पथपथिकेभ्यः सुरभारतीसमुपासकेभ्यः । अहमत्र विषये न बहु वच्मि स्वयमेव स्वेद्वग्गर्हिताचारेण लज्जितांस्तान् ।

तेषामीदृग्व्यवहारेणैव भूयांसः काशीस्थाः प्रसिद्धाः पूज्यपाद पण्डित पद्मनाभशास्त्रिमहोदयप्रभृतयोऽपि नैकतरपक्षगा विद्वांसो ब्राह्मणसम्मेलनतस्तटस्थाः सञ्जाताः ।

जगत्प्रसिद्धानां स्वनामधन्यानां पण्डित रा... श्रीमहामहोपाध्याय प्रमथनाथ तर्कभूषणमहोद... श्री म० म० श्री देवीप्रसादशुक्ल कविचक्रवर्ति... दयानां, सर्वतन्त्रस्वतन्त्र पण्डित श्री पद्मनाभशा... महोदयानां, म० महाध्यापक राधाप्रसाद शा... धर्माचार्य्याणां, अशेषशास्त्राध्यापक श्रीकाशी... शास्त्रिणां, वैयाकरणशिरोमणि श्री (देव) हरि... रायणत्रिपाठिमहोदयानां, वर्तमानप्रगति-परिचि... श्री हृषीकेशोपाध्यायगणकशिरोमणिप्रभृतिविद्व... रोमणीनामनुपस्थितौ किं साफल्यमस्य ब्राह्म... महासम्मेलनस्येति सुधिय एव विमृशन्तु । क...

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः
हृदयेनाभ्यनुज्ञातो यो धर्मस्तन्निबोधतेति

मनूक्तिः सनातनधर्म-स्वरूपे । क्वचैषां रा... मात्सर्य्यासूयोपहतानां तत्स्वरूपनिर्णये प्रवृत्ति... महद्वैषम्यम्—

अहमिमान्पृच्छामि यदिमे किङ्कर्तुं व्यवसि... किं सनातन-धर्म्ममपि सम्प्रदायं कर्तुं वाञ्छ... अयि भोः ! विमृशन्तु सनातनधर्म-स्वरूपम् ।...

ये पृथग्धर्मचरणाः पृथग्धर्म-फलैषिणः
ये पृथग्धर्मैः समर्चन्ति तस्मै धर्मात्मने नमः

इदं हि वाक्यम् किमुपदिशति भवतः किं यथा-
विशामि तथैव सर्वैरुपवेष्टव्यम् ? यथाहं
मि तथैव सर्वैर्व्रजेलिममिति ? पश्यन्तु अस्मि-
धर्मे—

ह ! ह ! निन्दसि श्रुतिजालम् केशव !
स्वरूप ! जय जय देवहरे ?

वदुपालम्भः । अस्मिन्नेव धर्मे—

ग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
रुषहीनानां जीविका धातृनिर्मिता " ।

ति देवाचार्य्यस्य बृहस्पतेरुक्तिः । किम्बहुना
नेव धर्मे ईश्वरावतारस्यापि कपिलस्य निरी-
रं सांख्यशास्त्रं जागर्ति ।

बौधायनसूत्रे—

धा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतो यानि
स्तानि व्याख्यास्यामो यथैतदनुपनीतेन
नं पर्य्युषितभोजनं मातुल-पितृष्वसृ-दुहितृ-
नमिति, अथोत्तरतः—उर्णाविक्रयः शीधुपान-
दद्भिर्व्यवहार आयुधीयकं समुद्रयानमितीत-
स्मिन् कुर्वन् दुष्यतीतरदितरस्मिंस्तत्र तत्र
मारण्यात् इति " ।
नेतु लशुन-पलाण्डुभक्षणादयोऽपि बहवः सन्ति । )
यादि-देशकालाधिकारिभेदतो व्यवस्थाऽस्ति ।
सम्प्रदाय-मत-मतान्तरवदेकैव विधा दृश्यते ।
धर्मोऽयमश्वत्थवदनेकशाखः कदाचनैकस्याः
वृद्धिः कदाचनापरस्याः । नायं मृतशरीर
नोऽपक्षीयमाणो विनश्वरः । किन्तु जीवन्मा-
विकाशशालीति विदाङ्कर्वन्तु । अतएव
कर्मविचिकित्सा वा वृत्तविचि

३

स्याद्ये तत्र ब्राह्मणाः सम्मर्शिनो ( नतु भवादृशा
अपरिवर्तनवादिनः ) युक्ता आयुक्ता अलूक्षा धर्मकामाः
स्युर्यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः " श्रुतिः—

" अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत् ।
यं शिष्टा ब्राह्मणा ब्रूयुः स धर्म्मः स्यादशङ्कितः"

इत्यादि परामृशन्तो रागद्वेषादिकं विहाय सना-
तनधर्ममिमं स्थाष्णुं चिकीर्षन्तोऽग्रे वर्द्धन्तां ।
प्रयागीयसनातनधर्ममहासभानिर्णयान्न पृष्ठतो गन्तु-
मीहामपि कुर्वताम् । निरीक्षन्तां सनातनधर्मह्रासम् ।
एकदा धरातलमिदं सनातनधर्मावलम्बिभिरेव परि-
पूर्णमासीत् । अद्यत्वे तु धरातलमात्रे—१, ६३, ६४,
०१, ००० इयती जनसंख्यास्ति । तत्र—५४, ४५, १०
००० इयन्तः खृष्टीयाः । ४६, ३८, ००, ००० इयन्तो
बौद्धाः २२, १८, २५, ००० इयन्तो मोहमदीयाः ।
२१, ६५, ३४, ५८६ इयन्त एव हिन्दवः । १५, ८२,
७०, ००० इयन्त आरण्यकाः । १, २२, ०५, ०००
इयन्तो यहूदीयाः । १, ५२, ८०, ००० इयन्तश्च
प्रकीर्णकाः । चतसृष्वपि महाजातिषु हिन्दूनामेव
संख्याऽल्पीयसी, तत्रापि सनातनधर्मावलम्बिनः
कियन्त इति स्वयमेव विमृशन्तु । तत्रापि ३०००
सहस्रत्रयं खृष्टाः, मोहमदीयाश्च केवलं जुमामज्जि-
तेऽष्टादश १८ प्रतिदिनं वर्द्धन्ते हिन्दूनान्तु प्रतिदिनं
ह्रास एव भवति । वर्द्धनस्य कथा तु दूरे तिष्ठतु ।

अतः पाश्चात्यशिक्षामात्रग्रहणविदूषितान्तःकर-
णान् स्वत एवेमं विहातुकामान् स्वीयानेव बान्ध-
वान् न गलहस्तयन्तु सनातनधर्मतः, अपि तु साम्ना
निष्पक्षविचारेण च तानावर्जयन्तु स्वपदे, इत्येव
[illegible]:—अपरश्च—

स्पृश्यास्पृश्यादि-विचारे कल्याणधर्मनिबन्धा म. म. पं. सदाशिवमिश्र शर्मणाप्येवमेवादिष्टमस्ति—

"संसर्गदोषः पापेषु मधुपर्के पशोर्वधः" ।

इत्यादित्यपुराणीय-वचनार्थकरणावसरे । तदपि पश्यन्तु—कल्याणधर्मसर्वस्वे ४५१ तमे पृ० ।

अत्र पापेषु यावत्पापेषु स्पर्शदोषात्मक-पातकमेकं युगान्तर-विषयमेव कलौ तु परिहातव्यं तन्नामक-वृजिनमित्यर्थः सुसमीचीन एव । कलावङ्गीकृते तत्परिहरणे सुतरां कलियुगान्तर्गतापदि परिवर्जनीयस्तद्दोष इति परामर्शः । + + परिशुद्धचरितैकेशपरिच्छिदैः प्रतिलोम-शङ्करजातीयैः सहैकासनोपवेशनादि-कार्य्यानुष्ठानावसरे नावगण्यः स्पृष्टास्पृष्टिविचारः । अन्यथैषां धर्मान्तरग्रहणेन स्वधर्मदौर्बल्य-प्रसङ्गात् ।"

इत्यादि—भवन्तोऽपि यद्यस्मिन्काले किमपि कर्तुं वाञ्छन्ति चेदेवमेव गम्भीरविमर्शनेन सनातनधर्ममिमं समेधयन्तु, सर्वमान्यञ्च कुर्वन्तु, देशकालोपयोगिनिर्णयेन जनानावर्जयन्तु समादरणेऽस्य । अहो ! रागद्वेषाभिभूता अन्यथयितुमेवेच्छन्ति चेत्तदा तु—

"न कल्माषो न कपिलो न कृष्णो न च लोहितः । अणीयान् क्षुरधारायाः को धर्म्मं वक्तुमर्हति ।"

इति स्मरन्तोऽत्रविषये विचारमेव न कुर्वन्तु । जपमालिकां गृहीत्वा हस्तोपरि हस्तं वा धृत्वा गृह एव तिष्ठन्तु । कथं पुनरेतावता महता समारोहेण सम्मेलनमारचयन्ति स्वतर्जनगर्जनादिना च रोदसी सम्मीलयन्तीत्यलं बहूक्तेन । * * *

## सुरभारती-समेधनसम्भारः ।

बुलन्दशहरप्रान्तस्थखुर्जाभिजनेन श्रेष्ठिप्रवरेण श्री गौरीशङ्करगोयनका महोदयेन स्वातन्त्र्यकोशतः सुरभारत्याः समृद्धये पञ्च षट् लक्षाणि मुद्राणां ...

निःस्वार्थ्यं पृथगेकमन्त्यकोशं व्यधात् । यतस्तै... संस्कृतमहाविद्यालयः प्रचलति । पुनश्च दानवी... तेनैषमोऽपि सार्द्धलक्षस्यैकमन्यत् न्यास-पत्रं ... चय्य श्रीसुरभारती-शिक्षासमुत्कर्षाय प्रोत्सा... समनुष्ठितम् । एतदीयमितिवृत्तममयास्मिन्नङ्के ... क्षेपतः प्रकाशितं द्रक्ष्यन्ति सुप्रभातपाठकाः । ... व्यवस्थया श्रेष्ठिनोऽस्य संस्कृतविद्यानुरागो मू... निव प्रस्फुरति । सन्ति बहवोऽत्र भारते ध... परन्तु तेषां संस्कृतभाषामर्मानभिज्ञत्वात् तदीय... नामन्यस्मिन्नेव कर्म्मणि भवति व्ययः । श्रेष्ठिन... संस्कृतज्ञानस्यैव फलमिदं, यदेतस्य द्रव्य... संस्कृत-भारत्या एव समुन्नतौ भवतीति । एवमे... श्रद्धा दैनन्दिनं वृद्धिमीयात् । अयञ्च स्वादर्श... नान्यानपि धनिनः सत्पथे नयञ्चिरं जीव्या... श्रीविश्वनाथमभ्यर्थये । श्रीमता 'आज'—सम्पा... नास्मिन् विषये स्वाग्रलेखेऽभिहितं यत् ... ब्राह्मणा एवास्याः परीक्षाया अधिकारिणो ... न्तीति नियमं विदधता श्रेष्ठिवर्य्येण स्वीय सं... वोऽभिव्यक्तीकृत इति' अत्र ममेदं वक्तव्यं ... यन्नेयं सङ्कोच-दृष्टिः श्रेष्ठिनोऽपि तु अनेना... विमर्श-कारित्वम्,देशकालात्मविज्ञत्वम्,कार्य... व्यवस्थितौ शास्त्राश्रितत्वमेव द्योत्यते । ... इदानीं ब्राह्मणातिरिक्ताः सर्व एव द्रव्य... संस्कृताध्ययनं विहाय द्रव्यलाभधिया पाश्चा... च्छायामासक्ता भारतीय-संस्कृतिमप्युपहस... च्छस्वार्थलाभमोहेन पाश्चात्याचारपरायणा ... प्रभु-पुत्तलकमात्मानं कृत्वा तदीयदो... अन्धा इवानुकुर्वन्ति । कथन्तेभ्यः कृते मुक... ... अपि च "दातव्यमिति यद्दानं दी...

…ते । देशे काले च पात्रे च तद्दानं सात्त्विकं …" इति—तथा "सममब्राह्मणे दानं द्विगुणं …ब्रुवे । प्राधीते शतसाहस्रमनन्तं वेद-पारगे" …शास्त्रनियममनुसरतोऽस्य कथं सङ्कोचदृष्टिरिति …चारयामः । अपरञ्च निश्चितं विदन्तु भवन्तो …रतीयं भव्यं सनातन-धर्म-परिपोषकैर्ब्राह्म-…साधितं भविष्यति । स एव धर्मः सैव च …रतस्य हृदय-स्थानं निगद्यते । अस्ति च तादृ-…द्यप्यधुना तयोः स्वरूपं विगुणितमिव भाति …स्वरूपज्ञाने सञ्जातेऽनयोः समक्षे न कोऽपि …कापि जातिः स्थातुमर्हति । स्मरन्तु चाण-…नन्द-साम्राज्य-ध्वंसकरं चन्द्रगुप्तसाम्राज्य-…कमिति । किम्बहुना "तावद्गर्जन्त्यमी धर्मा …विपिने यथा । न गर्जति महासिंहो यावद्धर्मः …" अतो ब्राह्मण्यं परिवर्धयते सनातन-धर्मश्च …ऽस्मै श्रेष्ठिने ससाधुवादमस्माकमाशीः । …समितौ च धर्मान्तरभाजां विशेषतः शासक …नां प्रवेशने कः श्रेष्ठिन आशय इति मयाऽपि …ते । मन्येऽत्राद्यत्विकी चातुष्कुद्धनि-सम्प्रदा-…येव श्रेष्ठिनानेनाप्याश्रितेति । यत् किमपि …रणीयोऽयं दान-प्रकारोऽन्यैरपि कमलाक-…भारतीयैरिति शम् ।

* * *

…भात-पाठक-महोदयाः !

सुप्रभातस्यान्यतमे पृष्ठे मुद्रितम् …साहाय्यम् । श्रीमद्भिरवलोकितमेवभवेत् । …एवमेव महानुभावैः सुरभारतीसमुन्नति-…ः साहाय्यन्दीयमानमासाद्यायं सं० सा० …स्तकस्या आर्थिक्या अवस्था… कथमपि क्षतिम्पूरयन् पञ्चषेभ्यो वर्षेभ्यः श्रीमत्याः सुरभारत्याः सर्वविधामपि सेवां विदधदद्यावधि-सुप्रभात-सञ्चालनेन विवाद-समिति-संस्कृतच्छात्र-सङ्घादि-संस्थापनेन वाचनालय--संस्कृत-सा० विद्यालयाद्युद्घाटनेन च संस्कृत-साहित्य-समाजे ऽपूर्वाञ्जागर्तिञ्जनयन् श्रीमतां संस्कृतसेविनामुन्न-त्या अहर्निशं यत्नमादधातीति ।

अतः श्रीमन्तोऽपि प्रतिमासं निजपाणिपद्मयो-रुपतिष्ठतोऽस्य वराकस्य सुप्रभातस्यैवार्थिकादि साहाय्येन लालनं कुर्य्युः कारयेयुश्चेन्महान् हस्ता-लम्बो विहितः स्यात् सं० सा० समाजस्य ।

निभालयन्तु तत्र भवन्तः श्रीमन्तो नाद्यापि श्रीमतां प्रियतमं 'सुप्रभातम्' स्वव्ययं स्वयमुपार्ज-यति । इदमिदानीन्तरुणं सदपि स्वावश्यकव्ययार्थ-मपि स्वपितुः सं० सा० समाजस्यैव मुखं निरीक्षत इत्यहो विषादास्पदं संस्कृतज्ञानाम् । * *

## ॥ ऋग्वेदालोचनम् ॥

ले०—पं० श्री नरदेवशास्त्री वेदतीर्थः ।

यथानामगुणं पुस्तकमिदमशेषं पठित्वा लेख-कस्य भारतीय-संस्कृति-प्रेम्णाहमतीवानन्दितः । पदे पदे गुरुभक्त्यादि-भावप्रोद्वलनेनाध्येतुर्हृदये पौरस्त्य सभ्यता साधु समुद्भासिता भवति । पुस्तक-विषयो-पन्यास वैदुष्यमपि चेतश्चमत्करोति मुग्धानल-(मेंग्डानल) लो० तिलक-, सामश्रमीत्यादि-पाश्चात्य पौरस्त्य-मनीषिकदम्बानामृग्वेदविषयिणी गवे-षणा साररूपतया निवेशिता पाठकानां वैदि-कार्य्यनिवासभूमिज्ञाने साधु वैशद्यमादधाति ब्रह्मवादिपक्ष-निरुक्त-पक्ष-सायणाचार्य्यादि-प… …लोचनया तु प्रत्नुनूतनाशेषपण्डितप्रकाण्डकः

वेदाऽपौरुषेयत्व-पौरुषेयत्वादि विचारवैचित्र्यविज्ञापनेन पुस्तक-पाठकानां वेद-विषयकमान्ध्यमपसारयताऽमृताञ्जनमेवेदमाविष्कृतं शास्त्रिवर्य्येणेति, तस्मै स धन्यवादं वैदिकविज्ञानेतिहासादिज्ञान—प्रियान् सुप्रभात-पाठकाननुरुणधिम पुस्तकमिदमवलोकयितुम् । ३०० शतत्रयपृष्ठात्मकस्य वैदिकार्य्यसभ्यताऽशेषज्ञानसम्भृतस्य बाह्याकार-मुद्रण-प्रकार-लिपि-सौन्दर्य्यादि-विभूषितस्याप्यस्य मूल्यम् १॥) पादोनरूप्यकम् प्राप्तिस्थानम्-मैनेजर, शान्ति प्रेस, आगरा ( यू० पी० )

## सुरभारती-शिक्षा-समुत्कर्षाय प्रोत्साहनम् ।

बुलन्दशहरप्रान्तस्थखुर्जाभिजनेन श्रीमता श्रेष्ठिप्रवरेण गौरीशंकरगोयनकामहोदयेन संस्कृत्रिमवाङ्मयस्य श्रेयसां शास्त्रसमुदयानां प्रागदृष्टचरीमतिगभीरां भूयसीञ्चोपलब्धिं भृशमुज्जीवयितुमभिवर्द्धयितुञ्च सार्द्धलक्षमितं वित्तजातं प्रान्तीयशासनसदसे प्रयोजनमदोऽभिलक्ष्य समर्पितं यदस्य कुसीदेन सहस्रमुद्रामिता उपहारा ( दक्षिणाः ) श्चत्वारो विपश्चितामपश्चिमेभ्यस्तेभ्यो दास्यन्ते ये निम्नाम्नाते विषयचतुष्टये प्राथम्यमुपगच्छेयुरवरमाञ्च प्रमाणयेयुरात्मनो योग्यताम् ।

शासनसदसा व्यवस्थेयमधोनिर्दिष्टदिशाङ्गीकृता ।

(१) न्यासमण्डलमिदं 'सेठ-गौरीशंकर-गोय-[illegible]-संस्कृत-स्पेशलाइजेशन-दक्षिणा-इण्डाउमेण्ट सुर[illegible] इति नाम्ना प्रथितिमुपैष्यति ।

(२) अयमस्य न्यासमण्डलस्य भविष्यति समुद्देशो यत् प्रतिवत्सरं वाराणस्यां राजकीयसंस्कृतमहाविद्यालये सुपरीक्षितान् स्वविषये प्रौढिमुपगतान् विपश्चितः पदवीप्रदानेन दक्षिणाप्रदानेनोपहारप्रदानेन चाभिनन्द्य संस्कृत्रिमवाङ्मयेऽभिनवायाः [illegible]मत्कृतेराधानं तथोच्चशिक्षायाः प्रोत्साहनमिति । त[illegible] वास्य भवेयुरधिकारिणो ये जन्मना ब्राह्मणाः श्रु[illegible] स्मृति—पुराण—-प्रतिपादितसनातनधर्मानुसारि[illegible] स्युः ।

अमी वक्ष्यमाणा भविष्यन्ति परीक्ष्यविषया[illegible] वेदो वेदाङ्गयुतः । धर्मशास्त्रं पूर्वमीमांसा[illegible] च । वेदान्तः । पुराणं सेतिहासम् ।

(३) परीक्षाया भविष्यति त्रैविध्यम्—[illegible]खितपरीक्षा, मौखिकपरीक्षा, शास्त्रार्थपरीक्षा [illegible]

[१] लिखितपरीक्षायाम्—तिसृभिस्तिसृभि[illegible] राभिः समाधेयानि षट् प्रश्नपत्राणि भविष्यन्ति [illegible]

[२] मौखिकपरीक्षायाम्—समित्या [illegible] कमपि विषयमधिकृत्य परीक्षार्थिविरचिते मौखि[illegible] निबन्धे भविष्यन्ति मौखिकाः प्रश्नाः ।

[३] शास्त्रार्थपरीक्षायाम्—द्वयोरधिका[illegible] परीक्षार्थिनां मिथो भविष्यति शास्त्रार्थः ।

भारतवर्षीयासु प्रतिष्ठितपरीक्षासु सर्वो[illegible] क्षायां समुत्तीर्णो लब्धवर्णः परीक्षायामस्या[illegible] शक्ष्यति यदि स परीक्षां तामुत्तीर्य स्वे परीक्ष्य[illegible] वर्षत्रयं कृतपरिश्रमः स्यात् । प्रत्तां परिपाटीम[illegible] रन्तोऽपि संख्यावन्तः परीक्षायामस्यां प्रवेष्टुं [illegible] ष्यन्ति, यदि तेषां वैदुष्यं पूर्वोक्तोपाधिधारि[illegible] प्रमाणितं स्यात्, वर्षपञ्चकं यावत् ते स्वविष[illegible] [illegible]य स्युः ।

रीक्षायां प्रविविक्षुभिर्विधिरयं व्यवहार्य्यः—
रीक्षार्थिना परीक्षायां प्रवेष्टुं शिक्षाविभागोच्च-
धिकारिणा प्रत्तेन, परीक्षार्थिनः प्रान्तीयविश्व-
लयस्य शासकमहोदयेन वाइसचान्सलराख्येन
ष्ठेन वा परीक्षार्थिनः सदाचारस्य योग्यता-
प्रति पादकेन प्रमाणपत्रेण साकमेकमावे-
समितेर्मन्त्रिणः सविधे प्रेषणीयम् । यदि
र्थी कस्यचिद् भारतीयावनिपालस्य विषय
न् स्यात्तर्हि स तत्रत्यशिक्षाविभागस्योच्चत-
कारिणः प्रमाणपत्रं प्रदाय परीक्षायां प्रवेष्टुं
। आवेदनपत्रे परीक्षाया निबन्धनस्य च
स्फुटमुल्लेख्यः ।

यमुल्लेखः समितेः समक्षमुपस्थापयिष्यते
ते तस्मिन्नवश्यन्त्वामनुचिन्त्यपरीक्षार्थिना
षये इयती संविदुपार्जनीया, इयच्च नूतनम-
र्थमिति परीक्षार्थिनं सूचयितुं विद्वत्तल्ल-
समितिरेका नियोक्ष्यते ।

क्षार्थिनः निबन्धो मन्त्रिद्वारा समितेरुपकण्ठं
र्षमासत्रयात्प्राक् प्राहितं भविष्यति । तेनैव
स्य मौलिकतायास्तत्तद्ग्रन्थानाञ्च सूचिका-
र्पयेत । अर्थात्—निबन्धेऽमुष्मिन्निया-
केन स्वप्रतिभया प्रतिनिबद्धः, इयांश्चांशो-
ग्रन्थेभ्यः समुद्धृत इति । तदनन्तरं समि-
न्यातुं त्रीन् परीक्षकान् नियोक्ष्यति ।

र्थी परीक्षायां प्रवेष्टुं विंशतिर्मुद्राः परी-
पेण समितयेऽर्पयिष्यति । मुद्राजातमेतन्-
लस्य कोषे स्थापितं भविष्यति ।

र्यपरीक्षा द्वयोर्मिलितयोर्विद्वद्वृन्दारकयो-
ष्यते ।

परीक्षायामुत्तीर्णो लब्धवर्णः, वाचस्पतिरित्ये-
तया पदव्या भूषयिष्यते । अर्थात्—यो यामुत्तरि-
ष्यति परीक्षां स तद्विषयिणीं वाचस्पतिपदवीं
प्राप्स्यति । यथा—वेदवाचस्पतिः, स्मृतिमीमांसा-
वाचस्पतिः वेदान्तवाचस्पतिः, पुराणवाचस्पति-
रिति । प्राप्तोपाधिपरिचायकं शतेन रूप्यकैः क्रेयं
काश्मीरदेशीयमेकं राङ्कवांशुकं (काश्मीरी दुशाला)
वाराणसेयं शीर्षण्यश्चोपायनरूपेण प्राप्तोपाधिभ्यो
दास्यते । प्रतिवत्सरं वाराणस्यां राजकीयसंस्कृतम-
हाविद्यालये उपाधिवितरणोत्सवावसरे उपाधयो
वितरिष्यन्ते । प्रत्येकस्मिन् विषये प्रथमकक्षायां
सर्वप्राथम्यमुपगताय विपश्चिते सहस्रं मुद्राः स्वर्ण-
पदकञ्च समर्पयिष्यते । समितिर्यदीच्छेत्तदा रजत-
पदकं साधारणीं दक्षिणाञ्च तेभ्योऽपि प्रयच्छेद्
येषां स्वविषयिणी योग्यता परीक्षकान् भृशं
सन्तोषयेत् ।

एतद्वर्षीया—एतादृशी परीक्षा १९२९ खीस्ता-
ब्दीयेऽप्रिल्मासे भविष्यति । परीक्षायास्तिथयः
प्रकाशयिष्यन्ते । वर्षेऽस्मिन् निम्नाङ्कितयोर्द्वयोर्वि-
षययोर्भविष्यति परीक्षा—वेद विषयिणीपरीक्षा—
शुक्ल-यजुर्वेदे । वेदान्तविषयिणी परीक्षा—शाङ्करमत-
वेदान्ते ।

परीक्ष्यग्रन्थानपेक्षितानन्यांश्च विषयान् जिज्ञास-
मानैः समितेर्मन्त्रिणः सविधे पत्रं प्रेषणीयम् ।

सभापतिः श्रीगोपीनाथ कविराजः एम्० ए०, ।
वाराणसेयराजकीय सं० महाविद्यालयाध्यक्षः ।
मन्त्री श्रीकाशीरामः, एम्० ए०, ।
संयुक्तप्रान्तीय सं० पाठशालानां निरीक्षकः

# संस्कृत-समाचाराः

## श्री-सनातन-धर्म-सभा

चूरूनगरस्थ-श्रीसनातन-धर्म-परिषदोऽष्टादश-वार्षिकोत्सवो भाद्रपद-शुक्ल-१०-११-१२ तिथिषु महता समारम्भेण समपद्यत । तत्र क्रमशः—विद्या-वयोवृद्धाः पं० श्री-जयदेव-मिश्रमहाशयाः, चूरूनगरस्थन्यायाधीशमहोदयाः, (तहसीलदार साहब) श्रीमत्पण्डित-श्रीधरव्यासज्योतिर्विन्महोदयाश्च सभापति-पदं शोभितवन्तः । पं० मल्लिनाथ ज्यौतिषाचार्य्य महोदयेन सभाया वार्षिकं विवरणं सुश्रावितम् । त्रिष्वपि दिनेषु 'वर्णाश्रमधर्म, सनातनधर्म-स्वरूप-भक्तिमहिमप्रभृतिविषये—पं० अखिलानन्द-महोदयस्य च सुमधुरं हृदय ग्राहि व्याख्यानमभूत् । जनतोपस्थितिः पर्याप्ता-आसीत् ।

स० मंत्री सनातनधर्म-परिषदः, चूरूनगरम् } बी० जोशी (साहित्यशास्त्री)

## जङ्गलीनाथः

सारणमंडले हिप्पादपुरे यवनावसथे बहुकालोऽभूत, जङ्गलीनाथनामा महादेवः कदाचन स्वयमेव प्रादुर्बभूव । तत्रत्या जना इमं स्वयंभुवं ज्ञात्वा महत्या श्रद्धया महताऽऽदरेण विविधैर्वस्तुभिः पूजयन्ति । तस्मिन् ग्राम एक एव कूपः जङ्गलीनाथसंनिकट एव वरिवर्ति । यतो यवनाः पानीयं पिबन्ति शिवभक्ताश्च शिवं समभ्यर्चयन्ति । तत्रैवेदानीं स्वराज्य-खिलाफतान्दोलनावसरे आर्य-यवनयोः प्रवृद्धवैरकालतो वर्धमाणा यवनाश्चर्चांविघ्नन्ति । यद्विषये हिन्दुयवन[illegible] रभि योगो वर्षद्वयात् प्रचलति । तत्र हिन्दूनामेव[illegible] यालयतोऽधुनाविजयोजातः ।

जगन्नाथपुरं सारन् { शिवकुमार शास्त्री का० ती[illegible]

विहारोत्कल-प्रान्तीय-संस्कृत-समाजस्य-[illegible]
(बिहार ऐण्ड ओरिसा संस्कृत अशोशियेशन[illegible]

## सूचना

भाविनीः १९२९ वत्सरीय-विहारोत्कल-प्रान्ती[illegible] संस्कृत-समाजीय-परीक्षा दित्सुभिः परीक्षा[illegible] ३०-११-२८ मितिपर्यन्तं नियमित-शुल्केन स[illegible] आवेदन-पत्राणि प्रपूर्य्य प्रेषणीयानि । एतत्प्रा[illegible] विद्यालय-परीक्षार्थिभिः स्व-स्व-मंडल-त्रि[illegible] निरीक्षकाणां उपनिरीक्षकाणां वा कार्य्यालयत आ[illegible] दन-पत्राणि ग्राह्याणि तत्रैव प्रेषणीयानि च । [illegible] प्रान्तीयैः परिक्षार्थिभिस्तु स्वीयानि [illegible] पत्राणि निम्नोक्तकार्यालयत एव प्रापणीया[illegible] तत्रैव प्रेष्याणि च ।

एस, एन, मजुमदार शास्त्री (सेक्रेटरी)
विहार एण्ड ओरिसा, संस्कृत[illegible]
एसोशिएशन पट[illegible]

Published by Gaurinath P[illegible] ... [illegible]ar Pathak at the Tara Printing

सौर मार्गशीर्ष १९८५ वैक्रमाब्दे ।

December 1928.

अष्टमोऽङ्कः
No. 8.

# सुप्रभातम् ।

संस्कृत-साहित्य-समाजस्य मुखपत्रम् ।

...ततिमुदस्यद् भेदतारा विलुम्पन्-नयदधिसुरभाषाभाषि जागर्तिमुच्चैः ।
...विहग-वादैराह्वयद् भाग्यभानुम्, विलसतु भुवनेऽस्मिन् सर्वतः 'सुप्रभातम्'॥

निरीक्षकः—

महामहोपाध्याय-श्रीदेवीप्रसादशुक्लः, कविचक्रवर्ती, साहित्य-वारिधिः

सम्पादकः—
श्रीगोपालशास्त्री त्रिपाठी, "साहित्याचार्य्यः"

व्यवस्थापकः—
श्रीगिरीशशुक्लः, "न्यायाचार्यः"

...—३)
...—१२)

प्राप्तिस्थानम्—
सुप्रभात-कार्यालयः
बनारस-सिटी ।

छात्रेभ्यः—१॥)
वैदेशिकेभ्यः—९)
अस्याङ्कस्य मूल्यम् ।)

## लेख-सूची।





वरिवा...

Published...




विध-विषय-विभूषितम्, अद्वितीयम्, सचित्रं संस्कृत-मासिक-पत्रम् ।

-वर्षे | सौर—मार्गशीर्षे । १९८५ वैक्रमाब्दीये | अष्टमोऽङ्कः ।

## नामधामगुप्तेरुत्तरम्

[ रचयिता—रामनारायणदत्त शर्म्मा, गोरखपुरीय-कुबेरनाथ-संस्कृत-विद्यालयस्थः ]

श्रीनाथो ननु नाम यन्मुररिपोर्वाहो मरालो विधे-
　　र्विख्यातस्स च पाकशासनसुतो नाम्ना जयन्तस्ततः ।
ब्रूते जन्मदशां निरीक्ष्य गणक स्सद्यःफलन्तूत्तरं,
　　वृक्षन्ते कुशलं नरा गिरिसुता-कान्तःपुनश्शंकरः ॥
इष्टो नारद एव दैवतमुनिर्भावार्थकोप्याशयः
　　वर्माण्येव रणे धृतानि वसुधा स्वर्णादिकानां खनिः
शस्त्रं वै परशुर्मतो भृगुमुनेः पद्भूषणान्नूपुरो
　　यज्ञे वा-ऽरणीति दारु विहितं सन्त्युत्तराणीत्थकम् ॥
स्यान्‘नारायणशंकरशर्म्मा ‘सुरपुर’-वास्तव्यश्चाऽसौ-
　　उत्तरमध्यमवर्णैरेभिस्सर्वैर्मिलित्वैवम् ॥

श्रीकाश्याम् अखिलभारतवर्षीय-सनातन धर्म्म-महासभा-
विशेषाधिवेशने स्वागतसमितेः सभापतीनाम्
द्विजराज-काशीराज-श्रील-श्रीयुत महाराज
**श्री प्रभुनारायण सिंह शर्म्म-**
वीरपुङ्गव-
जी. सी. आई. ई., जी. सी. एस. आई.
प्रभृत्युपाधिगणभूषितानाम्

# अभिभाषणम्

भूमिष्ठापि न यात्र भूस्त्रिदिवतोऽप्युच्चैरधःस्थाऽपि या
या बद्धा भुवि मुक्तिदा स्युरमृता यस्यां मृता जन्तवः।
या नित्यं त्रिजगत्-पवित्रतटिनीतीरे सुरैः सेव्यते,
सा काशी त्रिपुरारिराजनगरी पायादपायाज्जगत् ॥

( १ )

पूजनीया धर्म्माचार्य्याः प्रियाः सभासदश्च !

श्रीकाश्यामस्यां निखिलभारतवर्षीयसनातन-धर्म्म-महासभाया अस्मिन् महाधिवेशने कृपया समागतान् सनातनधर्म्मैकशरणान् सनातनधर्म्मस्य संरक्षणाय परिपोषणाय समभ्युदयाय च कृतनिश्चयान् श्रीमतः प्रतिनिधीन् सदस्यांश्च स्वागतेनाभिनन्द्य, मया सविनयं यत् किञ्चिदिह समुचितं समालोचनीयं, पुरतः समुपह्रियते, तत्र श्रीमद्भिर्भवद्भिः कृपया दीयमानमवधानं समभ्यर्थ्यते ।

श्रुतिमूलस्य धर्म्मशास्त्रपुराणेतिहासशिष्टाचार-परम्परा-परिबृंहितस्य भारतीयानामस्माकं सकलैहिकपारत्रिककुशलैकनिदानस्य महतः सनातन-धर्म्मस्याऽभ्युदयमबाधमभिलषतां सनातनधर्म्मावलम्बिनाम् केषुचिद्विषयेषु कालवशतः समुत्पन्नं प्रतिपत्तिवैषम्यं शास्त्रानुमतविचारालम्बनेन परि-हाय सर्व्वथा ऐकमत्येन वर्त्तितव्यमित्यस्मिन् विषये नास्ति कस्यापि प्रेक्षावतो जनस्य वैमत्यम् ।

साम्प्रतं कीदृशानामुपायानामवलम्बनेन तदनु-र्त्तनं सुकरमभीप्सितफलानुकूलं च सम्भवेदित्य-स्मिन् विषये, पुरुषमतिवैचित्र्यात् समुत्पद्यमाना-बहुविधानां विप्रतिपत्तीनां प्रतिदिवसमुपचीयमा-प्रसरो महतापि प्रयत्नभरेण यद्यपि नाधुना निवा-यितुं शक्यः, तथापि सन्त्यधुनापि तानि बहू-कर्त्तव्यानि, येषु सर्व्वेषामेव सनातनधर्म्मावलम्बि-नामस्माकं प्रायेण ऐकमत्यमनायासेन भवितुमर्ह-आपाततस्तान्येव कर्त्तव्यानि सामाजिकैः सर्वै-ऐकमत्येन दृढ़तराध्यवसायेन च यद्यनुष्ठितानि भवे-युः, तर्हि महान् खलु उपकारः सनातनधर्म्माव-लम्बिनामस्माकं सर्वास्वपि श्रेणीषु अचिरेणैव का-लेन समुदियादित्यत्र नास्ति मे अणीयानपि सन्दे-लेशावसरः ।

कानि खलु तथाविधानि कर्त्तव्यानि इत्य-यां प्रदर्शनार्थम् आपातत एतान्येव श्रीमतां पु-संस्थाप्यन्ते,—यथा अस्मदीये समाजे आबाल्य-धर्म्मशिक्षायामौदासीन्येन समुपचीयमानस्य ना-क्यस्य परिहाराय विद्यालयेषु सर्व्वेष्वेव नियमेन सनातनधर्म्मशिक्षाप्रवर्त्तनम् ।

"धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्म्मलक्षणम् ॥"

इति भगवता मनुना प्रतिपादितस्य दशल-कस्य धर्म्मस्य जातिवर्णनिर्विशेषेणानुष्ठानाय स-षामेव सनातनधर्म्मावलम्बिनां योग्यतासम्पादन-आबाल्यात् सर्व्वेषां कुमाराणां कुमारीणां च स-

...यानां सत्यंप्रति ऐकान्तिकस्यानुरागस्य मि... व्यवहारं प्रति विद्वेषस्य च समुत्पादनं, मनसि ...या संस्थापनं च, दारिद्र्यादिभिः यथाकालं ...लब्धुमसमर्थेषु प्राकृतेषु जनेषु सुयोग्योपदेश-...गेन रामायणमहाभारतपुराणप्रभृतीनां धर्म्म-...नां सम्यक् तात्पर्य्यबोधानुकूल-व्याख्यानमुखे-...दानविधिसौकर्य्यं प्रतिनगरं प्रतिग्रामं सायं ...जनसम्मेलनस्थलेषु निखिलमङ्गलहेतु-सर्व्वाप-...रणत्तम-श्रीमद्भगवन्नामसङ्कीर्त्तनादिप्रवर्त्तनं, ...सदाचारपरेषु सत्यैकव्रतेषु शास्त्रानुशीलनर-...गवद्भक्तेषु-ब्राह्मणेषु सार्व्वजनीनश्रद्धासमु-...म, गवां सम्यक् प्रतिपालनं, सर्व्वतः संरक्षणं ...े शक्तिः कलौ युगे' इति शास्त्रवचनानुसा-...स्वधर्म्मसमाजजातिदेशाभ्युदयार्थं सर्व्वेषां ...धर्म्मावलम्बिनां मनुजानामैकमत्येन एकप्रा-णतया च विहितकार्य्यसम्पादनयोग्यतानयनं च, एतानि तावत् कार्य्याणि प्रायेण सर्वैरपि सनातन-धर्म्मावलम्बिभिः अवश्यानुष्ठेयतया अङ्गीक्रियन्ते । अखिलभारतीयसनातनधर्म्ममहासभाया अपि एता-नि कार्य्याणि प्रत्यधिवेशनं कर्त्तव्यतया समुद्-घोषितानि । एतेषामन्येषां च समाजहितकराणां कार्य्याणां सम्पादनाय अवश्यमपेक्षितं बलं साहसं धैर्य्यं त्यागशीलत्वं च सम्यगधिगत्य इयं महासभा सर्व्वेषां सनातनधर्म्मावलम्बिनां भारतीयानां महते सुचिरस्थायिने च उपकाराय सदा प्रभवतु, तेना-स्मासु महोदयपुरःसरा शान्तिः सुप्रतिष्ठिता भवतु, इतीयमस्माकं करुणामयश्रीविश्वनाथचरणकमलयोः सभक्तिविनिवेदनमित्यलमभिज्ञेषु श्रीमत्सु इदानीम-धिकेन विनिवेदनेनेतिशम् ।

---

रचयिता—देवदत्तशर्म्मा शास्त्री, ज्वालापुरमहाविद्यालयस्थः ।

त्वयैव दीपावलि ! चण्डि ! षण्ढे ! स्वामी दयानन्द इतोऽपनीतः ।
वधाय ते मार्गणमेतदास्तेऽप्यधः प्रदीपैर्गगने खधूपैः ॥ १ ॥
धर्मोपदेशाय स देहधारी लीनो धरायामिह धर्मचारी ।
तमेव लीनं परिलोकयन्ते त्वधः प्रदीपैर्गगने खधूपैः ॥ २ ॥

ग्राहक-संख्या-विरहितं पत्रं नैवावलोक्यते सुप्रभातकार्यालये, इत्यवधानीयम् ।

अखिलभारतवर्षीयब्राह्मणसम्मेलनप्रबन्धकारिणीसभापतेः

महामहोपाध्याय पण्डित श्रीयुक्त

पञ्चानन तर्करत्न भट्टाचार्यमहोदयस्य

संक्षिप्तम्

# अभिभाषणम्

नमः सर्वजगद्बिम्बच्छायामण्डलमूर्त्तये ।
अनन्तज्ञानविज्ञानश्रेयःसौभाग्यपूर्त्तये ॥

विदितमस्तु तावदत्रभवतां श्रीभारतधर्माचार्य-निदेशनियन्त्रितसदाचारवर्त्मनां सामाजिकानाम्, यद्चिरंजीवता मया दृष्टा प्राचीना समाजस्थितिः, क्रमविस्रस्तिस्तु तस्या यदधुना दृश्यते, तन्मूलं वैदेशिकी शिक्षा । वैदेशिकं हि राजचक्रं बहुजनपूर्णायामस्यां स्वर्णप्रसविन्यां भारतधरित्र्यामव्याहत-माधिपत्यं कामयमानमार्षोपदेशविरुद्धस्वदेशीय-कौशलं शिक्षाव्यपदेशेन तथा प्रवर्त्तयामास, यथा तत्परावर्तितमतिका जनाः प्रायेण समाजस्थिति-विरोधिनो जाताः स्वांश्चावमन्यमाना अन्तर्भेदेन चत्वारो वर्णा विशेषतो वर्णबाह्या जीर्ण-शीर्णाः-सञ्जाताः । "अस्त्येव सवर्षां मनुष्याणां साम्यं, कल्पितो वर्णभेदः स्वार्थसाधनपरैर्धूर्तब्राह्मणैः, निपीडिता हि प्राचीनाभिजाता नवागतानामार्याणां प्रभावेण,' शूद्राः खलु भारतवर्षस्य प्राचीनाधिकारिणः । येषां मूर्द्धन्या द्राविडा आसन् । " इत्येवं नाम वैदेशिकी शिक्षा, तया च शनैरुत्तम्भितो भेदः। भेदो हि राज्ञां प्रणेयः प्रथमोपायः । सति च भेदे वर्द्धमाने चान्योन्यं विद्वेषे यथावसरं तत्र तत्रानुकूलायमानस्य राजचक्रस्य समदृष्टितादिप्रशंसा च प्रवृत्ता । अथ गच्छति कियति काले दैवात् तच्छिक्षापरिणतिरीदृशी जाता, यया बहवो रा[illegible] चक्रविद्वेषिणो बभूवुः, राजचक्रं हि समदृ[illegible] स्वपक्षस्य, विषमदर्शनं च ब्राह्मणादीनाम् ख्याप[illegible] आचरति च विषमं भारतीयैः सह स्वजाति[illegible] विरोधे, उपेक्षते च योग्यमपि भारतीयं राजक[illegible] विशिष्टकृत्येषु, येन कनीयानपि स्वदेशस्यापक[illegible] कल्याणं च प्रभूतं भारतस्य, न तं पन्थानमाश्र[illegible] इत्येवं वैषम्यावबोधः प्रद्वेषहेतुः प्रादुरासीत् [illegible] तावत् तच्छिक्षायामस्ति जन्मान्तरवादः, [illegible] राजरूपस्य भगवद्विभूतित्वज्ञापनमपि तु [illegible] चक्रोच्छेदपद्धतिप्रतिपत्तिरेव । तदनुशीलन[illegible] प्रकर्षाणां केषाञ्चन वैदेशिकशासनोच्छेदबुद्धि[illegible] पद्यत । केचित् संघशक्तिवृद्धये नाम कूटराज[illegible] चर्चापराङ्मुखान स्वाचाररक्षणपरान् शास्त्र[illegible] ब्राह्मणान् निगृह्णन्तः प्राचीनसमाजस्थितिम[illegible] सयितुं प्रवृत्ताः । ते हि 'अहिंसा सत्यमस्तेयं शौ[illegible] मिन्द्रियनिग्रहः । एतत् सामाजिकं धर्मं चातुर्व[illegible] ब्रवीन्मनुरिति भगवतो मनोरुपदेशं तृणाय [illegible] धार्मिकहिंसामसत्यमात्मस्तेयमाशौचं कपट[illegible] वचेनाऽच्छादयन्तोऽनुतिष्ठन्ति स्वैराचारं धर्म[illegible] वतो भण्डा इति विनिन्दन्ति । देशोद्धार एव [illegible] मस्माकं कर्म इति भावं प्रकटयन्तो देशम[illegible] पातयन्ति न हि श्रुतिस्मृत्युदितधर्मभ्रंशनं [illegible] चिदुद्धारोपायो भवितुमर्हति । स्वाधीनतैव [illegible] मोऽर्थ इत्युदीरयन्तः, अन्तश्च बहिश्च सर्वथैव [illegible] तन्त्रा भवन्ति । प्रयच्छन्ति च पारतन्त्र्यमा[illegible] स्वशास्त्रविधिमुत्सृज्य स्वैराचारपराः स्वैर्[illegible] न्तनभावमपजहतः स्वीकुर्वाणाश्च म्लेच्छभाव[illegible] तन्त्र्यं कथं नाम नामापि गृह्णन्ति स्वातन्त्र्य[illegible]

विनीयामहे । भोज्यदानविनिमयेन वा ललनोदानपरिवर्त्तेन वा सज्जार्पणकौशलेन वा तेषामर्था ह्रियन्ते पणननिपुणैर्वैदेशिकैः । नहि कद्रव्यसम्भारव्यवहारमन्तरेण तेषामहरेकमवर्त्तते, इत्येवं परतन्त्रवृत्तयः । स्वातन्त्र्यस्वरूपजानन्तः स्वाधीनतावादेन परप्रत्ययनेयबुद्धीन् वहयन्ति । केचित्तु बाह्याचारेण प्राचीनभावमाणा अपि मनसा तानेवानुकुर्वन्ति । तथाहि नापि शास्त्रं बहु मन्यन्ते, नापि चिरन्तनाचारं, राका यथा ब्राह्मणद्वेषं प्रचारयामासुः तेऽपि भ्युपगच्छन्ति, न च विश्वसन्ति जन्मान्तरीयकेन जात्यायुर्भोगान् । इत्येवं परानुकरणपटीमनसा चिन्त्यमानं स्वातन्त्र्यमपि पारतन्त्र्याप्रकारः, नहि दौवारिकरक्षितो गृहपतिः परभवति नापि दौवारिकविरहितोऽप्रावृतगेहेषु निवसन् निगडबद्धः पुरुषः स्वतन्त्रो । आर्षपद्धतिमनुसरन्तो वर्णाश्रमिणः सुदीर्घबाह्यपारतन्त्र्यमनुभवन्तोऽपि आन्तरेण न्त्र्यामृतेनाप्यायिता जीवितात्ययं नापेदिरे । पेदिरे पुष्टिम् ।

पद्धतिपरित्यागप्रणयिनश्च साम्प्रतिका यद्यपि रतन्त्र्याद्विमुच्येरन् तथापि आन्तरपारतन्त्र्यरसास्वादसम्मूढा जीवितादेव भ्रश्येयुः, एवं गतानुगतिकतया वयमपि तादृशा माभूमेति शीलव्यसनेषु निवेदनम् । अपिच सा-

त्वं नाम शास्त्राविमन्तृत्वम्, देशभक्तिर्नाम रः, औदार्यं नाम अविचारेण पानभोजनम्, नाम प्रतिष्ठितदेवालयेषु सर्वजातिप्रवेशनम्, विद्या नाम परप्रतारणम्, धर्म्मो नाम आत्मस्तेयम्, कर्म्म नाम अनुकूलनीयपापानुवृत्तिः, वीरत्वं नाम सदाचारत्यागः, त्यागो नाम परस्वाधिपत्यम्, दया नाम दुःखजीविस्वजनोपेक्षा, कृतज्ञता नाम पित्रादिपरित्यागः, संस्कारो नाम समाजस्थितिभङ्ग इत्यादयो नवाः परिभाषाः प्रचरन्ति ।

स्वशास्त्रपरिनिष्णाता अपि न शिक्षितसंज्ञां लभन्ते । वैदेशिक-शिक्षाकवलितास्तु तामविसंवादमेवाधिगच्छन्ति । आपणक्रीतम्लेच्छान्नजीविनश्च चुल्लीहीनगृहाधिष्ठातारोऽपि पुरुषधौरेयाः महात्मत्वेन संज्ञायन्ते । हिन्दुनामलाञ्छनमितरव्यावर्त्तनाय महस्मदीयैः प्रवर्त्तितमधुनाऽतिव्याप्त्युवदाललक्ष्यते ।

यथाऽस्मत्समशीलव्यसना वर्णा भाषाविपर्ययजनितभ्रान्तयो माभूवन्नित्येतदर्थमैकमत्यसाधनमस्माकं प्रयोजनम् । ये तावन्मूलतः सजातीया अपि विजातीयभावमापन्नाः, समभाषा अपि विषमभाषाव्यवहारिणः, कुलतो मित्रभूता अपि शत्रूयमाणाः समुपेक्षितधर्मशास्त्रा राजनीतिवर्त्मना लब्धप्रवेशाः समाजाभ्यन्तरं दूषयितुं प्रयतन्ते, नच स्वरूपतस्तावदिमान् जानीते लोकः । एते हि, येषां राजनीतिचर्चाप्रतिनिधितया राजकीयपरिषदि लब्धासनास्तेषामेव प्राणाधिकं धर्माचारं विध्वंसयितुमीहन्ते, इदमेषामालम्बनशाखाच्छेदिनी नीतिः सर्वतस्तारस्वरेणोद्घोषणीया । न खलु स्वशास्त्रविश्वासमन्तरेण भवति जात्यभ्युदय इत्ययं विश्वासो यथा बद्धमूलो भवेत्तदर्थं प्रयतनीयम् । एवमुद्योगः सर्वत्र भारतप्रान्तेषु सममेव सम्पादनीय इत्यत्रैकमत्यं सर्वेषां सनातनधर्मिणां सहमेलनमन्तरेण न भवतीति सम्मेलनमिदं सप्रयोजनम् । सम्मिलित-भगवद्-

र्मान्नार्यचरणावलोकपुण्यसंचयश्च विधान्तरदुर्लभं प्रयोजनम् ।

किञ्च सर्वधर्मविरहितानां राजनीतिचर्चामात्रसाराणां सामाजिकतत्वमविदुषां नर्त्तनकुर्द्दनपटीयसां जनानामुल्लम्फनप्रोल्लम्फनवाक्कन्दुकलीलाहृतमनसः प्राकृतास्तद्वशतामधियन्ति । के चन मध्यमास्तेषु वीतरागा अपि तदितरेषामालस्यदोषजनितां वा मोहजनितां वा बहुषु कर्मसूपेक्षामवलोक्यानन्यगतिकतया तदनुवर्त्तिनो भवन्ति । परे च समाश्रयणीयः कः पन्था इति संशेरते, चिरमनुत्थाने च तावदस्माकं सम्प्रति संशयाना अपि पुरस्तात्तद्वर्त्मैवाश्रयिष्यन्ति, एवं क्रमेण प्रसृते तदनुगमनप्रवाहे पिण्डोदकलोपः सर्वेषामेवास्माकं नियतमेव भविता ।

दुष्करोहि संयम आपातक्लेशभूयिष्ठश्च, सुकरः स्वैराचारो रमणीयश्चापाततः ।

विना शास्त्रविश्वासं विना परलोकभीतिं न चैतयोरुपादानहाने भवतः । शास्त्रविश्वासभङ्गे परलोकभयाभावे च सर्वा एव स्थितयो भज्येरन्, भग्नस्थितिकाश्च मानवाः पशुप्राया भविष्यन्ति । इत्येषानर्थपरम्परा सर्वतो बाधनीया । तदर्थमप्येतन्महासम्मेलनम् । इत्येतावन्ति प्रयोजनान्यभिलक्ष्य संघटितमिदं महासम्मेलनं श्रीश्रीविश्वेश्वरकृपया सम्मेलनपोषकाणां चानुग्रहेण सुसम्पन्नं भूयादिति शम् ॥

---

# हेमन्तर्तु चर्या ।

( रचयिता—भगवतीप्रसाद शुक्ल अयुर्वेदाचार्यः सभापतिः वहराइचसंस्कृतच्छात्रसमितेः )

अलिचापे तु हेमंतो-धनुर्ग्राहौ परेऽपरे ॥
पौषमाघौ-सहःपौषौचतुर्णां प्राग्धि संमतः ॥

हेमन्तकाले जठरानलो वै,
रुद्धान्तरोष्मा हिमशीतवातैः ॥
पचत्यजस्रं गुरु चापि भुक्तं,
निरिन्धनो धातुचरो नृणां स्यात् ॥
आद्या रसाः[1] स्निग्धतमास्त्रयोऽतो,
नवान्नपिष्टोष्णजलं सुपथ्यम् ।
गोधूम-माषेक्षु-पयोविकारा,
ऊर्जस्करा येऽपि च ते निषेव्याः ॥
बिलेशयानां प्रसहोदकाना,
मनूपजानामपि चामिषादाम् ॥
पलमत्तुकामस्त्वलमत्तु कामम्,
न जातु हारि प्रबलाग्निकारि ॥४॥
शैत्यञ्च शीतानिलजातरौद्र्यं,
व्यायामवातघ्नकटूष्णतैलम् ॥
उत्सादनाभ्यञ्जनपादघात—
युद्धावमर्दा निखिलं निहन्युः ॥५॥
तारुण्यमधुसम्मत्ताः,
समुद्दीप्तमनोभवाः ॥
अहिमेता हिमे काँस्कान्
प्रमदानोष्णयन्त्यहो ॥६॥

---

१ मधुराम्ललवणाः

# न स्त्री स्वातन्त्र्यमर्हति ।

(ले०—श्रीनिवास केदलायः रम्भापुरमठस्थः)

...ऽस्मिन्नन्तर्वाण्यश्चिरन्तनाः 'स्त्री अस्वतन्त्रा' ...थयन् । यदि विचारयेम वास्तविक्या दृष्ट्या, ...कथनं सांप्रतमेवेति भासेत । प्रथमं नारी-शरी-...विचारादेव तत् कोमलं कष्टमसहिष्णु इति प्रतीयते । पुरुष-कलेवरे यदस्ति काठिन्यं ...ष्णुत्वञ्च न तत् सर्वथा संभवेन्मृदुलशरीरेषु ...जनेषु । भिदैषा न केवलं मानवीयासु जातिषु; ...पशु-पक्ष्यादितिर्यक्ष्वपि विभाव्यते ।

...नाऽभिप्रयन्ति यत् स्त्रीणां कृत्रिम-बन्धनैः ...शक्तिश्छिन्नाय, ततस्ताः पुरुषा इव ...नाऽभूवन् इति" परन्तु मृग-विहगादिष्व-...यते स्वातन्त्र्यम्, तथाऽपि भेदोऽयं तेषु ...लोक्यते ? वृष-महिषौ यावन्तं भारं ...तावन्तं वोढुं कथमपि प्रभवो गोमहिष्या-...ो नराः कृषये शकटाय च वृषमहिषादीनेवो-... । तत्कृते चेद्वयं गा महिषीश्चैवोपयोजयेम ...मेव न दद्युस्ताः । तथा न शक्ताः स्युर्वृष-...र्वोढुमपि । अर्थात् द्विविधस्यापि कार्य-...ः स्यात् । विनिमयेन विहितं कार्यं ...पि नाशयति । एतेन को वा लाभः तथा ...वा सज्जाः ? अभिनवयाऽनया सरण्या ...सिरास्तां दूरे; मनुष्य-जीवन-निर्वाहोऽपि ...।

...ोऽयं नारीणामपि सम्बध्यते । पुरुषाऽपे-...नार्यो निर्बलाः कोमला इति नास्ति संशयः ... । परन्त्वस्मिन् विप्रतिपद्यन्ते बहवः सुधारण-धोरणी-दर्शका नागरिकाः । "महिला नृभिस्तुल्यबला स्सन्ति गर्भ-धारण-मोचनावसरेषु भवेयुस्ताः परतन्त्राः । आसामायुषि समयोऽयमल्प एव । तदैता अस्वतन्त्रा इति न विस्मयाऽव-काशः । पुरुषा अपि शक्तिहीनाः परवन्तो भवन्त्येव व्याधाविति

न सर्वसम्मतेयं व्याहृतिः । यतः पुरुष-समा-नशक्तयस्त्रियः । "मिस् ताराबाई", सदृशाः क्वचि-त्स्त्रिताः स्युर्जगति, न सर्वाः, व्याधिजं पारवश्यं स्त्रीपुंसोस्समम् । तथा व्याधि-पीडे आगन्तुके क्षणिके च न प्रकृतिसिद्धे गर्भधारणं त्वबलानां नैसर्गिकम् ।

वनिताः सन्ततये तद्गुप्तये जनिमलभन्त । तासां स्वभावसिद्धं पारतन्त्र्यमीश्वरकल्पितमेव । नवमा-सगर्भधारणं तदनु मोचनञ्च । परं जातापत्यता विद्यत एव मासत्रयम् । तद्वर्षपर्यन्तमन्याधीनताऽऽसां युक्तैव । तदा वपुषा चेतसा च स्वातन्त्र्येण न कर्म विधातुं पार्येत । ताः कुर्वीरन यदि, तदा वैयात्येन तस्य विपरिपाको ध्रुवमर्भके दृश्येत । प्रसूतेरनन्तरं कष्टदः शिशुरक्षाभारः तासां शिरस्येव पतति वर्ष-द्वयपर्यन्तम् । इयदेव तात्पर्यम् एकस्मै शावकाय वत्सरत्रयं यावत्परवत्येव भवेन्नितम्बिनी, तदनु भूयो गर्भधा-रणवेला भविष्यति ।

इत्थमाषोडशादापञ्चचत्वारिंशत्पर्यन्तं यावदासां सर्वमायुः गर्भधारणार्भकपोषणार्थमेव याति परि-स्थितावस्यां कथं स्वातन्त्र्यमनुभवेत्सा ? पूर्वोक्तं प्रजापालनकर्म अयोग्यमिति न कोऽप्याचक्षीत विवेकी । प्रबल-सन्ततेरुत्पत्तिः तद्गुप्तिश्च समेषां राष्ट्रप्रणयिनां कर्तव्यम् । ततः स्त्रीजीवितेनास्वात-

न्त्र्येणैव भाव्यम्, एवञ्च सति स्त्रीपुमांसैा समानाविति पूरुषवत् स्त्रीभ्यः स्वातन्त्र्यं दत्वा ताभिः पुरुषक्रियाः कारयितुं यतमानानां सुधारकधौरेयाणां मौर्ख्याय किमुत्तरं देयम् ?

समाज-सुधारको भगवान् मनुमहर्षिर्देशह्रानिमभिप्रेत्यैव स्त्री-स्वातन्त्र्यमपललाप स्त्री-स्वातन्त्र्यस्याशयः वंशक्षयः स एव राष्ट्रनाशः ।

गर्भधारणादिसमयेषु योषितः स्वातन्त्र्येण किमपि विधातुं न शक्नुवन्तीति पूर्वमेव निरूपितम् । पुरुष-कार्यकर्त्र्यो रमण्यः प्रायः प्रजोत्पत्तेर्विमुख्यो लक्ष्यन्ते । यदारभन्ते पौरुषाणि कर्माणि प्रमदास्तदाऽवश्यं विशेद्रसातलं राष्ट्रम् । "स्त्रीपुंवच्च प्रभवति यदा तद्धि राष्ट्रं विनष्टम् ।" इति नानृतम् । स्वातन्त्र्येणात्मजीविका विदधत्य स्सीमन्तिन्योऽविवाहमेवेहन्ते । अथवा विवाहिता अपि सन्तति-निग्रहे यतन्ते । एतस्मात् यादृक्परिणामो भविष्यति तदद्यत्वे 'फ्रान्स्' देशपरिस्थितया स्पष्टमवभासते । एतेन स्वैराचारो जले तैलबिन्दुरिव प्रसरिष्यत्येव । अयं भावः-स्वैराचाराद्विवाहमर्यादा नङ्क्ष्यति ततः कुटुम्बसंस्था मृग्या भविता निकेतनेषु । निर्णीयेदं ज्ञानचक्षुषा मुनिना मनुना प्रतिषिद्धा स्त्री-स्वातन्त्र्यप्रचारसरणिः । परन्तु तदीया कल्या वाणी उन्मार्गगामिनीनामेतासां हृदयं न प्रीणाति । ततस्तासामुन्नतिरपि 'नवाङ्गनानां नव एव पन्थाः' इति नवीनैव । प्रजोत्पादनाय पुरुषाऽवश्यकतायां विद्यमानायामपि, स पुरुषः तत्कार्यं विधाय अन्यत् कार्यं स्वातन्त्र्येण कर्तुं प्रभवेत् । एवं पुरुषस्वातन्त्र्यमबाधितं सहजं च विद्यते । नार्यस्तु गर्भधारणवशान्नूनं परवत्यः ।

किन्तु स्त्रीभ्यः स्वातन्त्र्यदानमयोग्यमिति वच... ताः केवलं पुरुषभोग्या इति वा दास्य इति... नाऽस्माकमाशयः । क्वचिन्मनुरपि "यत्र नार्य... पूज्यन्ते रमन्ते तत्र देवता" इति ताः सम्मानित... नेयमसङ्गतिः । तात्त्विकदृष्ट्या तासां पारतन्त्र्य... कृत्य तासां यावदावश्यकं स्वातन्त्र्यं ताव... दातव्यं सर्वेषां कर्तव्यमिति भगवतः मनो... सन्धिनाऽवसीयते । इति



## समस्या-पूर्त्तयः ।

### "किं कम्प्रति ब्रूमहे"

योऽयं शाश्वत-धर्म-कर्म-निरतैर्विज्ञैर्जनैः सेवितः
नानाकार्य्यकलाकलापकुशलश्चासीत्सुदेशः पुरा
अस्मिन्पूर्वतने समृद्धिसदने देशे पराधीनता ?
धिक्कालस्य विचित्रतां कुटिलतां, "किं कम्प्रति ब्रूमहे"
यत्रासन्निगमाऽगमादिपटवः साहित्य-संगीतका...
विद्वांसः सुकलाकलापकुशला धीराः प्रवीराश्च ...
यातास्तेऽपि दिवं कलौ पुनरिमे हा हाऽवशिष्टा न...
आर्य्याः शुद्धि-पुनर्विवाह-घटकाः "किं कम्प्रति ब्रूमहे"

### "भारतम्"

न दृश्यते सा परमा रमा सखे !
सखेदमस्माभिरितो विमार्गिता ।
यदाऽगुरेते वणिजोऽत्र शासकाः ।
सखे ! तदैत्सापि विहाय "भारतम्" ॥
मिथो मृषाभाषणता-परम्परा—
मनार्य्यतां शासकगाश्च वञ्चनाम् ।
विलोक्य नीतिं जनतापकारिणीं
सखे ! रमाऽगात्प्रविहाय "भारतम्" ॥

— "द्विजेन्द्रस्य"

# ब्रह्मचर्याश्रम-प्रभावः ।

( ले०—शुक्ल आत्माराम-शास्त्री, बिठूरस्थः )

भारतीय-भारत-महानुभावाः !

…दृशां सुदूरदर्शिमहोदयानां हिन्दुनेतॄणाञ्चै-…तन्नास्ति यद्‌ वार्तमानिके कराले कलिकाले …हिन्दु)-नाम्ना यावन्तः सम्प्रदाया धर्ममार्गाश्च …, तेषु वर्णाश्रम-धर्मावलम्ब्यार्याणां दशैवात्य-…वनीया । एषु 'नवशिक्षित'-नामधारिणां …स्य कृते तु सर्वतो वर्णाश्रम-धर्मस्य नामैवा-…नकम्, येनैतस्या अतिप्राचीनायाः सर्वश्रे-…सामाजिकसर्वसिद्धिप्रदपद्धतेर्मूलोन्मूलन एव …तेः समाजोन्नतिः स्वधर्मोन्नतिश्चावलोक्यन्ते । …यसंघे जडतैतादृशी प्रवृद्धास्ति यद्वर्णाश्रम-… सहस्रश आक्रमणान्यनाचारांश्च दर्श… तस्यातिकठिनं हृदयं न विहन्यते । तत्प्रति-…च पुरुषार्थशक्तिसंचारोऽपि तेन न क्रियते । …कारणद्वयेन वर्णाश्रमधर्मावलम्बिजनतां, येषां …दिच्छा भवति, त एव वाक्यबाणैः पादघातै-…जनककार्यप्रणालीभिरनेकैराघातैश्च पूर्व…दानीमपि विध्यन्ति । यथा हि, राष्ट्रियम-…( काँग्रेस )-राजकीयमहासभा ( कौंसिल )-… क्वचित् क्वचिद्‌ हिन्दुमहासभास्वपि कियन्त …हिन्दुनामधारिणो वर्णाश्रमधर्मविरोधिवर्गाः …स्वस्वपितृपितामहादिभिः प्रवर्तितानुमोदि-…स्य विधेर्मूलोच्छेदार्थमेव यतन्ते ।

…स्या अप्यस्या वर्तमानहीनदीनदशाया…य संमिल्य पुरुषार्थसाधनमेवैकमात्रमुपायं …। तत्पुरुषार्थशक्तिप्रकटनार्थमथ च वर्णाश्र-मधर्मरक्षणार्थमेव परमकारुणिका दयालवः पूज्याः पूर्वजा ब्रह्मचर्य-गार्हस्थ्य-वानप्रस्थ-संन्यासा इत्या-श्रमाँश्चतुरो विभज्य संस्थापितवन्तः, यैराश्रमैरार्या भारतवर्षवासिनः 'आश्रमादाश्रमं गच्छेद्‌' इति रीत्या क्रमशः स्ववर्णाश्रमधर्मान् रक्षन्त ऐहिकीमानन्दस-म्पत्तिमनुभवन्तः पारलौकिकीं च सुखसम्पत्तिमनु-बभूवुरिति ।

अतिकुटिलकलिसमयप्रतापेन ब्रह्मचर्यस्येदानी-मस्तित्वमेव लुप्तप्रायम्. यस्य प्रबलप्रतापमिन्द्रादयो देवा अपि सोढुन्नाऽशक्नुवन् यस्य ब्रह्मचर्यस्य प्रभावः स्वयम्भगवता वेदेन स्वमुखेनेत्थं वर्णितो यत्—"ब्र-ह्मचारिणं पितरो देवजनाः पृथग् देवा अनुसंयन्ति · सर्वे गन्धर्वा एनमन्वायंस्त्रिशत् त्रिशताः षट्सहस्राः सर्वान् स देवाँस्तपसा पिपर्ति ॥ २ ॥ ब्रह्मचारी स-मिधा मेखलयाश्रमेण लोकाँस्तपसापिपर्त्ति ॥ ३ ॥ ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत, इन्द्रो ह ब्रह्म-चर्येण देवेभ्यः स्वराभरत् ॥ ४ ॥ इति तस्य ब्रह्मचर्य-स्यैतादृश्यवहेलना ? आः ? भगवन् ! भवानेव रक्ष-कोऽसह्यदुःखपयोधिमग्नानामस्माकम् ।

अयि भव्यभारतीयाः !

पूर्वस्मिन्नवसरे भवदीयोऽयं भारतवर्षदेशोऽखि-लभूमण्डलस्थदेशेषु ब्रह्मचर्यस्यास्य प्रबलप्रतापेन निखिलदेशैः पूजितः सर्वेभ्योऽधिकशक्तिशालिगौर-वान्वितः सर्वसुख-सम्पन्नश्चाऽऽसीत्, यत्र भारतवर्ष-वासिनो जागतिकाखिलमनुष्यानशिक्षयन्त, तथा च भगवता मनुनोक्तम्—

"एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥"

इति स्वर्गकल्पस्यास्य भारतवर्षस्य पुरातनीं

दशामालोच्याधुनिकीमत्यगाधगर्तंगताञ्च तामालोक्य केषां स्वदेशहितैषिणां न स्याद्दुव्यथितं मनः । तस्मिन् पुरातनावसरेऽस्माकं विज्ञता तात्कालिकाज्ञानध्वान्तरात्राचितस्ततः परिश्राम्यन्तीभ्यो वैदेशिकजातिभ्यो राकाज्योत्स्नादेश्या सन्मार्गप्रदर्शिकाऽऽसीत्, अस्माकं विद्यानां कलानां च प्रादुर्भावेन सकलाग्रगण्यजातयो विस्मययुक्ताः साश्चर्याः सत्यश्चकिता आसन्, तथा च व्याकरणसूत्राणां सम्पादनशैली, दार्शनिकमतानुसन्धानं न्यायपदार्थान्वेषणम्, ज्यौतिषाद्भुतोन्नतिः, बीजगणितम्, अङ्कगणितम्, दशमलवरचना, आयुर्वेदस्य विस्मयकारकाविष्कारश्चास्माकं जाज्वल्यमानानि चिह्नान्यद्यावधि संसारेऽत्रावस्थितानि, तात्कालिकाद्वितीयोन्नतीनामादर्शा इदानीन्तनेऽप्यस्मान् साभिमानान् कुर्वन्ति ।

अस्माकं पुरातनकालिकब्रह्मचर्यतपसा यथा यथा लाभा अभवन्, ते तात्कालिकसुन्दरसुखदसमयस्य स्मारका भारतीयप्रत्येकप्राणिहृदयेषु स्वार्थत्यागः, जातिसेवा, निर्भयता, उच्चाकाङ्क्षा, आत्मसंयमः, धार्मिकभावश्च सुदृढा आसन् । परन्तु परमखेदावसरोऽयं यदिदानीन्तनकुटिलसमयप्रभावैस्तथाऽस्मदादीनां परस्परेर्ष्याकलहप्रमादालस्यादिभिर्दुर्गुणैर्ब्रह्मचर्याश्रमः प्रायो लुप्त एव प्रतीयते, यस्य फलमस्माभिरहर्निशमनुभूयत एव ।

परमसौभाग्यस्यैष विषयो यदेतद् ब्रह्मचर्यरूपपुरुषार्थशक्तेः पुनस्तथैव प्रकटनार्थं बहुभिर्विधीयते यत्र तत्रोद्योगः, तेष्वेव कर्णपुरप्रान्ताभिजनैः कान्यकुब्जकुलोत्पन्नैः पूज्यपादैः प्रातःस्मरणीयैः श्री १०८ श्रीमाधवप्रकाशनैष्ठिकब्रह्मचारिभिर्याज्ञिकैः प्राचीनर्षिप्रणीतप्रणालीरनुसृत्य सर्वतः प्रशंसनीयोद्योगैरेको नूतनः 'श्रीब्रह्मावर्तब्रह्मचर्याश्रमः' कर्णपुरप्रान्तीयविठूरनगरे संस्थापितः । तत्रेदानीं वेदाध्यापको वेदान्ताध्यापको मातृभाषाध्यापक इति त्रयोऽध्यापका विंशतिं ब्रह्मचारिणोऽध्यापयन्ति ।

आशासे यदयमत्र प्रतिदिनं समेधिष्यते यत्र सनातनधर्मशिक्षादीक्षिता अधीतसकलविद्याः स्नातका उच्चकोटिकविद्वांसो भूत्वा स्वदेशस्य स्वप्राणातिप्रियसनातनधर्मस्य च पूर्णानुरागिणो भविष्यन्तीति । शिवं विदध्याच्छिवः ।



## पाणिनीय-प्रकाशः ।

[ म॰म॰ पं॰ देवीप्रसाद शुक्लः, कविचक्रवर्ती ]

लोपो भवति रेफस्य परे रेफे सति ध्रुवम् ॥
ढकाररेफलोपस्य हेत्वोस्तु परयोस्ततः ॥ २२ ॥
ढकाररेफयोर्दीर्घः पूर्वस्याऽणो भवेद्ध्रुवम् ॥
ततो न विरतस्तस्यां सपुनारमते भृशम् ॥ २३ ॥
हरीरम्यस्तथा शम्भूराजते किमहं ब्रुवे ॥
अणइत्युक्तितो दोषो न तृढे न वृढे तथा ॥ २४ ॥
पूर्वग्रहणसामर्थ्यादनुत्तरपदेऽप्ययम् ॥
त्वमजर्घाः कथं रायं रुजालीढो यतिस्त्वयम् ॥ २५ ॥
'मनस्+रथ' इहाऽऽसीत्प्राक् सस्य रुत्वं विलोप भो ॥ २६ ॥
तत उत्वञ्च रेफस्य लोपश्चाप्तावुभौ ततः ॥ २७ ॥
"विरोधे तुल्यबलयोः सति कार्यम्परम्भवेत्" ॥
इतिशास्त्रेण रेफस्य लोपः प्राप्तस्ततः परम् ॥ २८ ॥
त्रिपाद्यन्तरितत्वाच्च रलोपासिद्धिरागता ।
तत उत्वं गुणश्चाऽभूत्ततः सिद्धो मनोरथः ॥ २९ ॥

...ककारयोरेतस्तयोर्यस्तुः परे हलि ।
...लोपो भवेत्किन्तु नञ्समासे स्तनेष्यते ॥ २९ ॥
...ष्णुः स्वयम्भाति सशम्भुरिव शोभते ।
...द्र' इत्यादौ न दोषोऽकोरितीरणात् ॥३०॥
...समासे नो इति निर्देशतः किल ।
...व इहेत्यादिप्रयोगेषु न दुष्टता ॥ ३१ ॥
...र्णे दोषः कोऽप्येषोऽन्येत्यादिके स्थले ॥
...तस्य सोर्लोपो भवेदचि परे सति ॥ ३२ ॥
...येव पूर्येत पादश्चेदिति सम्मतम् ॥
...सैष किं साक्षाज्ज्ञामवृन्यं व्रजेष्ट यः ॥३३॥
...पादपूर्त्तौ तु नायं लोपो भवत्यतः ॥
...जन्मशुद्धानामित्यादिषु न दुष्टता ॥ ३४ ॥
...मरतिर्यस्य पिता श्रीदुःखभञ्जनः ॥
...प्रसादेन कविना सुविनिर्मिते ॥ ३५ ॥
...प्रकाशाख्ये प्रबन्धेऽस्मिन्मनोरमे ॥
...प्रकरणं पद्यरूपं समाप्तिमैत् ॥ ३६ ॥
॥ इति सन्धिप्रकरणम् सम्पूर्णम् ॥

॥ शमस्तु ॥

---

# महात्मनो माहात्म्यम् ।

[—लक्ष्मीनाथ मिश्रः ( काव्यतीर्थः ) भागलपुरीय-रसलपुरस्थः ]

...त्याग्रहाश्रमे गान्धिमहोदयेन विष-वस्तिविधा-...मनुभवन्तं पङ्गुं गो-वत्समघातयदिति न ...तः कोऽपि दूश्येत, यदि पत्रेषु पत्रिकासु च ...प्रकाशितं न स्यात् । श्रुत्वेदं सनातनधर्मा-...नो मर्मणि आहता विमुञ्चन्त्यश्रूणि, नाशा-...परमपि गान्धिसम्पादितं किञ्चिच्छ्रेयो भारतीयानाम्, स्वराष्ट्रनिर्माणकार्येऽप्येवमेव न कदाचिद्विपत्तिरापतेदिति सन्देहः समुदेति चित्ते । यद्यपि पङ्गु-गोवत्स-सेवाश्रममाश्रयदाश्रमवासिजनस्तथापि तच्छरीरनाशे सत्येव तस्य वास्तविकं सुखं तर्कयता पाश्चात्यदेशाचारविश्वासकलुषीकृतबुद्ध्या कृतमेतदश्रव्यमकर्त्तव्यञ्च कर्म्म गान्धिमहोदयेन । "कृषिगोरक्षवाणिज्यं वैश्यकर्म्म स्वभावजम्" ( गी० अ० १८ श्लो० ४४ ) वचनेनानेन किमेवंविधमेव गोरक्षणमुक्तं भगवता वैश्यकुललब्धजनीनाम्? द्विविधासु हिंसासु नान्तर्भवति किमियं हिंसा? प्राणिवृत्तिच्छेदः, अविधिपूर्वकं प्राणयुपघातो वा हिंसा । हिंसापदार्थः कोऽभिप्रेतस्तस्येति तु न निश्चिनुमः । यज्ञे युद्धे च जायमानां वेद-शास्त्रविहितामपि हिंसां निन्दन् गोवत्स-प्राणहानिं विधाय साम्प्रतं कथङ्कारं स्वात्मनः प्रधानोपासकतामहिम्नाया रक्षिष्यति । अज्ञानान्मोहाद्वा गोवधे महतैनसा लिप्तो भवत्यात्मा महात्मनामपि । कस्य शास्त्रस्य वा सनातनधर्मावलम्बिसमाजाचारस्यानुमतोऽयं पन्थाः? यमनुसृत्य कृतं गान्धिना गोवधरूपं महत्पातकम्, आचारोऽयं सनातनधर्मध्वंसिनाम् । शास्त्रबोधिताऽऽचारपरिपूतमेव कर्माऽऽचरन् यशः श्रेयश्च विन्दति जनः, न पुनरवमत्य शास्त्राज्ञाम् । "यः शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः । न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥" ( गीता० अध्या० १६ श्लो० २३ ) कार्यमिदमारभमाणस्य गान्धिमहोदयस्य हृदयभूमिर्नैवावलोकिता, लज्जया विवेकितया वा, कथमन्यथा ऽसार्वजनीनां वृत्तिमिमामुरीकर्त्तुम्प्रभवेत्? येन नात्मनस्तोषः, परस्य वा न कश्चिदुपकारः, यस्य च सम्पादने

त्रपाऽऽक्रामति नाचरन्ति तत् कार्यं जनाः । तदेवोक्तं भगवता बादरायणेन—"यदन्येषां हितं न स्यादात्मनः कर्म पौरुषम् । अपत्रपेत वा येन न तत्कुर्यात्कथञ्चन" (महाभा० शान्ति प० अ० १२४ श्लो० ६६) । तर्कयामो, लब्धे स्वराज्ये, व्याधितल्पगतस्य जीवमात्रस्य विषप्रयोगेण हनने न हिंसाजनितोऽधर्मः, न वा राजदण्डभीतिरपीति नियमं विधातुमवश्यमेव यत्नमाधास्यन्ति गान्धिमहोदयाः । निजे शरीरे सर्वेषां प्रभुत्वम्, तत्कथन्न व्याधितल्पगता जना विषप्रयोगेणानित्यमिदं शरीरं परित्यज्याऽविच्छिन्नं सुखं गान्धिनिर्णीतं परमं पदम् ( वस्तुतो नरकम् ) प्रपद्यन्ते ( ! )

व्याधिव्याकुलानां शोचनीया दशा गान्धिमहोदयानामिति समाचारो नैकदा पठितोऽस्माभिः प्राक् । वयं पृच्छामः, स्वशरीरप्रभुः गान्धी न कथं विषप्रयोगेण निजशरीरं परित्यज्यासुखसागरपारमगमत् ? निजशरीरनाशोऽन्यश्चापि कश्चिदात्मप्रतिकूलो व्यवहारो न कस्यचित्प्रेयान् भवति, सर्व एव निजप्रियं निजात्मानुकूलमेवाचरन्ति, एवं प्रतिकूलमाचरन् गोवत्सस्य गान्धिमहोदयो नाजीगणन्निजजीवनसुखसमानं तस्य जीवनसुखम् । उक्तञ्च "न तत्परस्य संदध्यात्प्रतिकूलं यदात्मनः । एष संक्षेपतो धर्मः कामादन्यः प्रवर्त्तते ॥" (महाभा० अनुशासनप० ११३-श्लो० ८ ) अपिच, "यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः । न तत्परेषु कुर्वीत जानन्न प्रियमात्मनः ॥ १९ ॥ जीवितं यः स्वयं चेच्छेत्कथं सोऽन्यं प्रघातयेत् । यद्यदात्मनि सम्पश्येत् तत्परस्यापि चिन्तयेत् ॥ २१ ॥" ( महाभारत-शान्ति० ) ॥ गोवत्सस्य परवशतां समीक्ष्य यदि तन्मरणं सुखकरमभिमतं तस्य, तदा सकलभार-वासिनः परवशाः, तेऽपि महात्मनोऽनेनोपाये परवशं शरीरं परित्यज्यामन्दानन्दसन्दोहसम्पाद-निदाननन्दनकानने विचरन्तु, विहरन्तु, सुखम-भवन्तु च । नातःपरमपि किञ्चिद्वक्तुमुत्सहे वक्तव्यमेव शिष्टमेतावदेव यत् "दुराग्रहमुत्सृ-शास्त्रविधिमनुसृत्य प्रायश्चित्तमनुष्ठाय विधाय पश्चात्तापं पापमुक्तो भवतु गान्धिमहोदयः । इ-निष्कृतेः पन्थाः, नान्यथा सन्तोषलवमपि सञ्च-यितुं प्रभविष्यति एतत्कर्मविलुण्ठितसनातनध-हृदये" इति विरतिमीहते लेखनी ।

—:***:—

# चोरपल्लीया टीका ।

[ स्वर्गीयः पं० श्रीदुःखभञ्जन कविः ]

अन्येद्युरात्मानुचरस्य भावं
जिज्ञासमाना मुनिहोमधेनुः ।
गङ्गाप्रपातान्तविरूढशष्पं
गौरीगुरोर्गह्वरमाविवेश ॥ २६ ॥

अथ परेद्युः मुनिहोमधेनुः आत्मानुचर-आत्मना स्वेन अनु यथा तथा चरति तादृश-अथ आत्मा एव अनुचरो यस्य तस्य चौरस्य सत्ताम् अथ आत्माभिप्रायम् इङ्गितविशेषं वा जि-समाना सती गौरीगुरोः हिमालयस्य गह्वरं गु-आविवेश कीदृशं गङ्गाप्रपातान्तविरूढ-शष्पं स-अथ गङ्गाप्रपातः अन्तो येषां तादृशानि जात-बालतृणानि यत्र तत् ॥ २६ ॥

सा दुष्प्रधर्षा मनसापि हिंस्रै-
रित्यद्रिशोभाप्रहितेक्षणेन ॥

अलक्षिताभ्युत्पतनो नृपेण
प्रसह्य सिंहः किल तां चकर्ष ॥ २७ ॥

किल ऐतिह्ये सिंहः प्रसह्य तां धेनुं चकर्ष कीदृशः चौरेण अलाक्षिताभ्युत्पतनः कीदृशेन इति पर्वतशः प्रतिपर्वतमिति यावत् अभाप्र- ...न अभया अप्रहिते ईक्षणे यस्य तेन इति किं ...र्षा सा हिंस्रैः मनसा आपि ॥ २७ ॥

...तीयमाक्रन्दितमार्तसाधो—
गुहानिबद्धप्रतिशब्ददीर्घम् ॥
...रश्मिष्विवादाय नगेन्द्रसक्तां
निवर्तयामास नृपस्य दृष्टिम् ॥ २८ ॥

...पाटलायां गवि तस्थिवांसं
धनुर्धरः केशरिणं ददर्श ॥
अधित्यकायामिव धातुमय्यां
लोध्रद्रुमं सानुमतः प्रफुल्लम् ॥ २६ ॥

तस्याः इदं तदीयम् आक्रन्दितम् आक्रन्दनम् भावे क्तः कर्तृ, नून् पिबति लक्षणया रुधिराणि अथ जनान् भक्षयति तादृशस्य चौरस्य दृष्टिं नगे पर्वते वृक्षे वा अन्द्रसक्तां रश्मिषु आदाय रज्जुषु गृहीत्वा इव निवर्तयामास कीदृशस्य आर्तसाधोः आर्ताः पीडिताः साधवो येन यस्माद्वा हेतुभूतात् कीदृश- माक्रन्दनं गुहानिबद्धप्रतिशब्ददीर्घं स्पष्टम्। "अन्द्रः स्यात्कुनटीभेदे गुल्मग्रन्थौ शिराव्रणे ॥ कुशूलपादे कन्दे च वल्मीके पामरेऽपि च॥ विचर्चिकाविशेषेऽपि जातिभेदे च वाच्यवत्" ॥ २८ ॥ स्पष्टम् ॥ २६ ॥

( क्रमशः )

## शोकोच्छ्वासः।

प्र०—भारतं भारतीयांश्च
स्वकीयान्विरहातुरान् ।
क्व गतो ऽद्यविहायाऽस्मान्
हा ? हा ? पञ्चाम्बुकेसरी ॥ १ ॥

उ०—आर्य्याणामवनीं दृष्ट्वा
साम्यन्स्सप्तक-संकुलाम् ।
देवान् वेदयितुं सोऽगाद्
दिवं पञ्चाम्बुकेसरी ॥ २ ॥

—"द्विजेन्द्रस्य"
(सहायक-सम्पादकस्य)

# शुभाभिनन्दनम् ।

## श्रीमदाद्यशङ्करभगवत्पादाचार्य-प्रतिष्ठापित-पश्चिमाम्नाय श्रीशारदापीठाधीश्वराणाम्, श्रीमज्जगद्गुरु-शङ्कराचार्याणाम्, श्रीश्रीराजराजेश्वराश्रमस्वामिचरणानाम् कमनीयेषु करकमलेषु—

श्रीमन्तः पूज्यपादाः सुगुणगणचणाश्चारुचञ्चच्चरित्राः ।
सत्कर्माणः स्वधर्मावननिपुणधियो धैर्यगाम्भीर्ययुक्ताः ॥
जीवन्मुक्ताः प्रभावोपचितसितयशोराशिसंभासिताशाः ।
सन्तु श्रीशंकरार्या जगतिविजयिनो राजराजेश्वराख्याः ॥
श्रीशारदापीठमठाधिनाथाः श्रीराजराजेश्वरनामधेयाः ॥
श्रीशङ्कराचार्यमहोदयाः श्री,युक्ताश्चिरं मोदभरं लभन्ताम् ॥ २ ॥
स्वधर्ममर्मावनदत्तचित्ताः हृत्तापहीना विलसत्सुवृत्ताः ॥
अनेकभक्तार्चितपादपद्माः श्रीशंकरार्या विजयं लभन्ताम् ॥ ३ ॥
वसुन्धराधीश्वरवृन्दवन्द्याः प्रणम्यपादानतसर्वलोकाः ॥
दयामयान्तःकरणाः सुशीलाः श्रीशंकराचार्यवरा जयन्तु ॥ ४ ॥
वाराणसेया विद्वांसो मुदिता मानशालिनः ।
श्रीमतो भवतो भूयोऽभिनन्दन्ति समादरात् ॥ ५ ॥

वाराणसी,
मार्गः कृष्ण १०, १९८५ ।

श्रीसंस्कृत-साहित्य-समाज-सदस्याः ।

## " राक्षसनामकरणबीजम् "

ले०—जयपुर-राजगुरु-कथाभट्ट-वंश्यो-नन्दकिशोर-शर्मा-साहित्याचार्यः ( सरस्वती-भवनं काशी ) ।

...यो गतवर्ष एव सुप्रभातस्य यस्मिन्कस्मिन्न-...कोऽपि महोदयः प्रश्नमिमं प्राकाशयत् ...च प्रार्थितवान् । यन्मुद्राराक्षसनाटके सुबु-...भिधेयस्य जात्या ब्राह्मणस्यापि नन्दमन्त्रिणः ...दुष्टकर्मोचिता ' राक्षस ' इत्याख्या प्रख्या-...कर्त्री ।

...त्तरे—पुरातत्त्वविभागे पुस्तकविद्याकर्म-...(आफी) सम्पादयता मया राजेन्द्र-लालमित्र-...त-पुस्तकसूचीपत्र-चतुर्थभागे १६५४ संख्या-...राक्षसपूर्व-पीठिकाख्यं श्रीयुक्तानन्तकवि-...यकाव्यं समासादितम् ।

...सारिण्या कथयाऽत्र समाधाने प्रावर्त्ति । ...नन्दश्चामरग्राहिण्या सुमङ्गलया सह वस-...दर्शनाय कमनीयकामिनीकामितं प्रमदवनं ...। तत्र च निर्यतिपपीलिकापङ्क्तिसन्दर्शनेन ...कमलं स्मितमाकलय्य स्मितवदनायां सुम-... ' महाराजस्मितेनैव मम स्मितं संजातमिति ... च ' मत्-स्मितहेतुं कथय नो चेत् त्वां निग्रहीष्ये " इति सुमङ्गलां प्रति राज्ञो नन्दस्य पर्य-नुयोगः ।

ततस्तु सा सुमङ्गला सुबुद्धिशर्माभिधेयस्य कस्यचित् ब्राह्मणस्य समुपदेशेन राज्ञः स्मितनिमि-त्तं प्राकाशयत् ।

राजा नन्दस्तु तस्मै सुबुद्धिशर्माभिधेयाय द्विजाय मन्त्रिराक्षसपदवीं प्रदाय स्वामात्यकृत्ये न्ययुङ्क्त । ( 'राक्षस' इति पदवी-प्रदाने किं बीजमिति न स्फुटति । सम्पादकः ) । विशेष-जिज्ञासाक्रान्त-हृदयैस्तु तत्रत्यकथाभागाः सावधानमनुसन्धेयाः यद्वा--उद्भटभटकूरकर्मप्रख्यस्य राक्षसोपाख्यस्य वी-रोचितप्रकाण्डप्रक्रियाक्रियाविधायित्वात् सुबुद्धिश-र्माख्यस्य ब्राह्मणस्यापि प्रोक्ताख्या संगतैवेति नास्ति मनागपि संशयावसरः । यथा च—काव्यपरिभाषायां वक्त्रौचित्येन कर्मौचित्येन वा प्रबन्धरचना विधीयते ।

( मृते नन्दे तत्काये योगविद्यया प्रविष्टं कञ्चन योगिनं चेष्टादिभिरूहयित्वा तदीयं कायं पुनः प्रवेशभिया सुबुद्धि-शर्मा भस्मीचकार, अतः स्वकाय-दाहद्वेषेण रुष्टो नन्दकाये निगूढोऽसौ योगी तं ' राक्षस ' संज्ञया आजुहावेति स्वाध्ययनकाले कस्मिंश्चित्पुस्तके मया दृष्टचरम् । सम्पादकः ) ।

## संस्कृताध्यापकस्यावश्यकता

...म्बर-जैनव्याकरणसाहित्योच्चग्रन्थाध्यापनकुशलस्यैकस्य संस्कृताध्यापकस्यावश्यकता वर्त्तते । ...चातुर्येणच्छात्रान् समीचीनतया तोषयितुं समर्थास्ते महानुभावाः स्वयोग्यतापरिचायक-प्रमा-...-पुरस्सरमधोलिखित-संकेतेन पत्रं व्यवहरन्तु । मासिक-पुरस्कारश्च योग्यतानुसारेण प्रदा-...मिः ।

स० मन्त्री गो० दि० जैन सिद्धान्त

मोरेना ( ग्वालियर ) ।

# सम्पादकीयम्

## व्यर्थः प्रयासोऽभवत् ।

वैशाखमासत एव भारतीय-सभ्यता-समेधन-समादराणां सनातनधर्मणां सुधियां हृदि सुविरूढासीदियमाशालता—यत् सनातनधर्मस्य जागरूकादर्शस्वरूपायां वाराणस्यां भावि ब्राह्मणमहासम्मेलनं स्वधर्मस्य पुनर्जागरूकतायै, विधर्मणां मुखमर्दनपुरस्सरं शाश्वतिक-कल्याणकृत्सनातनधर्मस्वरूपाविष्कृत्यै, वर्तमानप्रगतिप्रतिस्पर्द्धि-वाह्याचारपरिष्कृत्यै, विवादास्पदविषयाणाञ्चैकमत्येन सत्स्वरूपनिर्धारणायालं भविष्यतीति ।

परन्तु सम्मेलनसञ्चालकानामीर्ष्याद्वेषाभिभूतबुद्धिविपर्य्यासेन मूलत एवोच्छिन्नायां तस्यां सर्वमप्येकपद एव विनष्टम् । सम्मेलनसञ्चालकमर्मज्ञैर्वाराणसेयैर्बहुभिर्विद्वत्तल्लजैस्तु पूर्वमेवास्य भाविनं परिणामं विगणय्यौदासिन्यमेवावलम्बितमासीत्, किन्तु "दूरतो मृदङ्गनादः श्रुतिं सुखयतीति" लोकोक्तिपरवशा अज्ञाततन्महिमानो वहिस्था वराका महान्तो विद्वांसः पश्चात्तापभाजोऽभवन्नित्यस्माकं चेखिद्यते चेतः ।

विचारसभायामुपसेदुषां विदुषान्नेदन्तिरोहितं स्याद्यदिमे महात्मानो निर्णयबुद्ध्या नेदं सम्मेलनमामन्त्रयाञ्चक्रुः, किन्तु पूर्वमेव स्वमनसि कञ्चन
सिद्धान्तं स्थिरीकृत्य तस्यैव प्रकाशनायैतावन्नर्तन
र्दनमेषामासीदिति । नो चेत् सार्द्ध-(१५००)सहस्र
प्रतिनिधीनाम्मध्ये (तेषामेव वाक्यतः परम्पर
ऽश्रूयत— यदेतावती संख्या प्रतिनिधीनामासीदि
केभ्यश्चनाऽपि स्वविचारप्रकाशाय पर्य्याप्तावसरो
प्रदत्त एभिरित्यत्र किङ्कारणम् ?

यद्येभिर्महात्मभिर्निर्णयबुद्ध्या सम्मेलनमिद
नुष्ठितं स्यात्तर्हि, उपस्थितैरियत्संख्याकैर्विद्वत्प्रति
धिभिः स्व स्वविचारानुरूपं विमर्शितेषु सप्तदशप्रश्न
विषयेषु कस्य स्यान्नाम वैमत्यम् । नापि स्या
सन्तोषः केषाञ्चनापि सुधियाम् । परन्तु स्वदुरा
हग्रहिलैरेभिर्महात्मभिः पुनरप्येषां विषयाणां विच
धर्मपरिषदन्तरस्य कृत एव परित्यक्त इत्यहो
व्यर्थ एवैतेषाम्प्रयासोऽभवत् । अस्तु देशकाल
विदो विद्वांसस्तु तेषु विषयेषु स्वाविरतधर्म
स्त्रादि-परिशीलन-जन्यविमलविमर्शबुद्ध्या-कृत
श्रया एव सन्ति । ते च यथाशक्यं स्वविचारानु
स्वयमाचरन्ति, स्वानुगांश्च चारयन्त्यपि श्रीम
मनुनाप्येवमेवाभिधाय समर्थित एवायमर्थः :—
"एकोऽपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः ।
स विज्ञेयः परो धर्मो नाज्ञानामुदितोऽयुतैः" ।
तेषान्तु नास्त्येवैवम्भूतस्य ब्राह्मणमहासम्मेलन
बाह्याडम्बरकरणस्य प्रयोजनम् । साधारणजनत

पाय तु श्रीकाशीपण्डितसभायाः काशीसना-
र्मपण्डितसभायाश्च साहाय्येन अखिलभारत-
-सनातनधर्ममहासभयाऽवश्यमेवैषां सप्तदश-
नां धर्मशास्त्रीयनिर्णया अविलम्बेनैव प्रकाशिता
यन्ति इत्याशास्महे । ते च निर्णया देश-
रिस्थिति-पर्य्यालोचनासम्वलित-श्रुति-स्मृति-
तिहासादिविमर्शैरवधारिताः सिद्धान्तिताश्च
यन्ति, इत्यपि सम्भावयामः, अस्माकन्तु
नसञ्चालकानां विचारपद्धतौ दयैवोदेति-
थन्ते देशकालपरिस्थितिविरुद्धं तर्कशून्यं
स्त्रं विवेक्तुं सन्नद्धा आसन्। यत्र खलु
ः शास्त्रवचनान्येव श्रुत्यविरोधिनां तर्काणां
परिस्थितीनाञ्च शास्त्रविमर्शनायैवादरणं
। किम्बहुना भगवती श्रुतिरपि 'श्रोतव्यो
' इति स्वात्मनः सहायकत्वेन तर्कमाश्रयति ।
चार्यभगवत्पादैश्च लौकिक-तर्कस्यापि
ं "पण्डितो मेधावी गान्धारानेवोपसम्पद्ये-
हाचार्य्यवान् पुरुषो वेद" इत्यादि श्रुतिनिद-
भ्युपेतमेवेति न तिरोहितं सुधियाम् ।
स्त्राणि तु—

ं शास्त्रमाश्रित्य, न कर्तव्यो विनिर्णयः ।
नविचारे तु धर्महानिः प्रजायते । '
र्मोपदेशञ्च वेद-शास्त्राविरोधिना ।
णानुसन्धत्ते स धर्मं वेद नेतरः ।" (मनु.अ.१२)
ञ्चानुमानञ्च शास्त्रञ्च विविधागमम् ।
विदितं कार्य्यं धर्मशुद्धिमभीप्सता।' (मनु.अ.१२)
मीयमाणे तु वेदेन करणात्मता ।
र्तव्यताभागं मीमांसा पूरयिष्यति ।" (भ.वा.)

"देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् ।
उपपत्तिमवस्थाञ्च ज्ञात्वा शौचं प्रकल्पयेत् ॥"
( इति आह्निकतत्त्वे, दक्षबौधायनवाक्यम् )

"जाति-शक्ति-गुणापेक्षं सकृद् बुद्धिकृतन्तथा ।
अनुबन्धादि विज्ञाय प्रायश्चित्तं प्रकल्पयेत् ॥'
( इति देवलस्मरणम् )

विज्ञानेश्वरेणापि—याज्ञवल्क्यटीकायाम्—
परस्परोपमर्दपरिहारार्थं विषयव्यवस्था-कल्पनैवोचिता। सा च जातिशक्ति गुणाद्यपेक्षया कल्पनीयेति ।

इत्येवं बहूनि शास्त्रीयवचांसि सन्ति, यानि च युक्तिहीन-धर्मशास्त्रविचारं विरुन्धन्त्येव नहि, अपि तु निन्दन्त्येव । दार्शनिक-विज्ञानानि तु प्रत्यक्षत एव जाग्रति अनुमानाभ्यर्हितत्वसूचकानि। तथाहि कणादाक्षपाद-कपिल-पतञ्जलि-प्रभृति-महामान्यानां दर्शनानि त्वानुमानिकत्वेनैव गीयन्ते । पूर्वोत्तरमीमांसे अपि 'श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यादिभिः प्रमाणैः पुरुषबुद्धिपरिकल्पितैरेव श्रुत्यर्थं मीमांसमाने न तर्काश्रयतां परिहरत इति किं बहुज्ञेषु बहूक्तेन । एवमेव वैदिक-लौकिकोभय-मीमांसा-विरहितं विचारमाचरद्भिस्तैः सर्वे स्वपक्षगा अपि विद्वांसो विरोधिताः । शास्त्र-निर्णयमपि दूरे प्रक्षिपद्भिः स्वमनोऽभिलषितमपि न पूरयितुम्पारितम् । समाचारपत्रादिष्वपि न किमपि वृत्तं प्रकाशितम्, सर्वसाधारणजनेभ्योऽपि न कोऽपि मार्गो निदर्शितः, इति सर्वोऽप्येषां व्यर्थः प्रयासोऽभवदित्येव खेदास्पदमस्माकम् । सम्मेलनस्यास्य साफल्यान्वेषणे दत्तावधाना वयं कथमपि संस्कृत-विश्वविद्यालयोद्घाटनप्रस्तावमेवैकं सर्व-

स्मिन् क्षेत्र एकं मृत्पिण्डमिव सारमाकलयामः । तत्रापि यदीमे बद्धपरिकराः सन्तस्तस्य कृते यत्नमाचरेयुस्तदैवास्माकं सन्तोषः स्यात् । वयं तु कथयामो यद् व्यर्थमेवैते द्वेषासूयाभिभूताः स्वकर्तव्यविमुखा ब्राह्मणानां जन्म-सिद्धमपि नेतृत्वमपगमयन्ति । किम्बहुना यदैवेमे रागद्वेषौ विहाय कर्तव्यपरायणा भूत्वा कार्य्यक्षेत्रेऽवतरेयुस्तदैव सर्वमपि भारतमेकदैव जागरितं स्यात् ? स्याच्च स्वर्गायितोऽयं देशः । अपि च सर्वात्मना समुत्थिते ब्राह्मणकुल इदानीं य इमे नेत्राभासा अस्मदीयं परमपवित्रं नेतृपदं विगुणयन्तोऽन्यथयन्ति भारतीयं समाजम् । तेषां चक्रमेकपद एव निरुद्धं भवेत् दूरे तिष्ठत्वन्यत्, यदीमे महात्मानः संस्कृतविश्वविद्यालयोद्घाटनायैव स्वशक्त्यनुरूपं प्रयतेरन् तदापि सर्वा एव भारतीयाः सनातन-धर्मावलम्बिन्यो जनता एतदनुगा भवेयुः । अपेक्षिते साहाय्ये वयमपि सोल्लासास्तत्र सर्वत्र सर्वतः सर्वथा सर्वात्मना साहाय्यमाचरिष्याम इत्यास्माकं हार्दिकोऽभिप्रायः इति विरम्यते विस्तरात् ।

* * * *

## जगद्गुरु-श्रीशङ्कराचार्य्याणां-
## शुभाभिनन्दनम् ।

अस्मिन् मासेऽत्र काश्यां समागतानां पश्चिमाम्नाय-शारदापीठस्थ जगद्गुरुशङ्कराचार्य्य-श्रीराजराजेश्वराश्रम स्वामिवर्य्याणां स्वागत-शुभाभिनन्दन-पूजन-व्याख्यानादिकं बहुत्र श्रीगुर्जरच्छात्र समिति-श्रीकाशीपण्डित-सभा-संस्कृत-साहित्य-समाजादि-प्रशस्यतरासु संस्थासु सञ्जातम् । तद्वृत्तमस्मिन्नङ्के स्थानाभावादस्माभिः प्रकाशयितुन्न पारितम् । अग्रिमाङ्के पाठकानां पुरतोऽवश्यमुपस्थापयिष्यामः ।

---

# संस्कृत-समाचाराः

## ब्राह्मणमहासम्मेलनाधिवेशनम् ।

विदितमेव स्यात् सुप्रभातपाठकानां यत् कार्तिककृष्णपक्षे ब्राह्मणमहासम्मेलनम् महता समारोहेण सम्पन्नमिति । प्राक् महासम्मेलनावसरे एव कतिपयैः समाचारपत्रैः प्रकटितमभूत् यत् सम्मेलनसम्पादकाः व्यक्तिगताऽसूयापराः सन्तः सम्मेलनाय उद्यता इति । अहं तावत् महासम्मेलनविचारसभायां महासभायां च उपस्थितोऽभवम् । इत्येतद्विषये

इदानीं तावत् तत्र किमहमन्वभवमिति युष्माकं सविधे विज्ञापयामि । अयं समय तथाविध आपतितो ऽस्ति यो धर्मविरोधीति गीयते एतादृशे अविश्वासयुगे स्वीयधर्मरक्षणार्थं सनातनपथजुषां ब्राह्मणविदुषां सुसंघटनाय एतावान् समारोहोऽतिशयेन प्रयासेन सम्पादित इत्ययमेव प्रशंसार्हः । नूनम् यदाहं तत्र विचारसभायां महा

ां च देशांतरादागतैः १५०० प्रतिनिधिभिर्महो-
समलंकृतमधिवेशनमपश्यं तदा मम हृद्यतीव-
र्षः समजनि । सन्तु नाम, कार्य-परिचालने
निर्णये स्वपक्षप्रोद्धलने परपक्षप्रतिरोधे च
नानाम् अनन्तकृष्ण-शास्त्रिणामसहनीया हा-
निरंकुशप्रवर्तनातिशयः पक्षपातश्च । तथा-
वृत्तमिदमालोच्यताम् यत् तावत् परिश्रमेण
ब्राह्मणानां समावेशनं कृतमित्येव तेभ्यो
लक्ष्मणशास्त्रिद्राविडेभ्यः, म० म० पञ्चानन-
भ्यः, अपरेभ्यः संपादकेभ्यो साधुवादसह-
दातव्यानि न वेति ।

मन् महासम्मेलनेऽतीव निन्दनीया दुःखदा
त्रुटिरभवत् सेयमेव यत् नियमास्तादृशाः
विहिता ये काशीस्थ-विद्वदाचार-
लज्जाजनकाः । कतिपये प्रस्तावाश्च
पात्रानुकूला एव स्वीकृताः । यदि
कार्यकर्तारस्ते प्रस्तावा देशाभ्युदय-निःश्रेय-
रति मन्येरन् तर्हि परिपालयन्तु तान् । सर्वत्र
मेलनस्य शाखाः प्रशाखाः स्थापयन्तु, धर्मप्र-
पि उपदेशकान् विसृजन्तु "आरम्भशूराः खलु
राः" इत्येषा लोकोक्तिस्तैरवश्यमन्यथा
। प्रयत्नान्तेषां भगवान् विश्वनाथः सफलो-
रति आशास्ते ।

**वेङ्कटेश्वर शर्मा ।**

(आन्ध्राभिजनः, काशी-विद्यापीठस्थः)

# विशेषाधिवेशनम् ।

कार्तिक-शुक्ल—द्वितीयायां बुधे स्थानीय-श्री-परिव्राजक-महामण्डलस्य विशेषाधिवेशनं महा-समारोहेण समजनि । सभापतेरासनं श्रीमज्जगद्गुरुशङ्करभगवत्पादगोवर्धनपीठाधीश्वरश्रीभारतीकृष्ण-तीर्थस्वामिभिस्समलङ्कृतमासीत् । मङ्गलाचरणानन्तरं श्रीमत्प्रेमपुरिस्वामिनः "संन्यासिनो यदा कार्यक्षेत्रे अवतरन्ति तदा प्रवृत्तिकारणान्निन्दां व्रजन्ति, यदि न कुर्वन्ति तथा जनेऽकर्मण्यादिदोषालङ्कृता भवन्तीत्येतेषां द्वैविदुध्ये किं कर्तव्यं तदेवाद्योद्बोधयन्त्विति" सभापतीन् प्रार्थितवन्तः । सभापतिमहोदयैः सर्वं श्रुत्वा द्विघटिकापर्यन्तं संन्यासधर्मः प्रदर्शित उद्घोषितं च यावत्पर्यन्तं शिखासूत्रधारिणो वयं तावत्पर्यन्तमस्माकं सर्वमपि कार्यं फलेच्छायुक्तं भवति तत्त्यागेनाऽस्माकं निष्कामकर्मण्यधिकारः सञ्जातः । संन्यासिनां शरीरमपि परोपकाराय विद्यते पुनर्धनसम्पतेः का कथा ? अस्माभिः सदैव निष्कामकर्म कुर्वद्भिः भुवि पर्यटनं कार्यं येनास्माकमेवमस्मत्संसर्गिणामुभयलोककल्याणं भवेत् । एवं सम्यगस्मद्धर्मानुसारेण कार्यकरणे धर्मस्य, देशस्य, समाजस्य च सुरक्षा भविष्यति । इति—

**ब्रह्मानन्द संन्यासी,**

मन्त्री—'श्रीपरिव्राजक-महामण्डलस्य' काशी ।

## श्रीधन्वन्तरि-जन्म-महोत्सवः ।

श्री महीशूर-( मैसूर ) जनपदे सम्भाव्यमानानां रोगाणामपाकरणाय तज्जनपदानां पूर्णायुर्वेद-शिक्षा प्रदानाय च प्रतिष्ठापिते गवर्न्मेंन्ट-आयुर्वेद महाविद्यालये प्रति-वत्सरं धन्वन्तरि-महोत्सवो भवति । स चास्मिन् हायने आश्वयुज-कृष्णद्वादश्यां महता समारम्भेण नगर-सभा-सभापतीनां ( म्युनिसिपैल्टी प्रेसिडेन्ट ) श्रीयुत टि० जि० राम० बी. ए. एल. एल. बी. महोदयानामध्यक्षत्वे समपद्यत । वार्षिक-विवरण-पाठमारभ्य विदुषां व्याख्यानानन्तरं श्रीमन्महाराज–संस्कृत–पाठशालाया नव्यन्यायाध्यापकानां श्रीमताम् एस. रामस्वामि अयङ्गार्य्यमहाशयानाम् ।

"प्रह्वीभावमुपाश्रयन्तु नृपतौ लोका" इति घोषितुं ।
शीर्षन्यस्त-किरीटरत्न-विलसत्कान्तिप्रसूनैर्मुदा ॥
सामन्तावनिपा यदीय-चरणावाराधयन्त्यन्वहम् ।
तस्मै कृष्णनृपाय भूरि कुशलं देवात्स धन्वन्तरिः ॥

इत्यन्तश्लोकात्मकस्तोत्रेण धन्वन्तरि-स्तुत्या सधन्यवादं स-महाराजाशीर्वादं च महोत्सवोऽयं समाप्यतेति निवेदयिता—

**श्री गोपालकृष्णः शास्त्री,**
गवर्न्मेंन्ट—आयुर्वेद—कालेजः
( मैसूर )

## श्रीकाशी-पण्डित-सभा ।

सं० १९८५ वैक्रमाब्दीय-कार्तिक-शुक्ल-प्रतिपदि ( ता० १३—११—२८ ) सारस्वतकुलभूषण 'रायसाहब, श्रीमान् माधवराम सण्ड-' महोदयानां राम-मन्दिरे एका महती सभा सम्पन्ना । तत्र का शीस्थसमस्त-सारस्वत-मण्डली-पण्डित-समुदा समुपस्थित आसीत् । अस्यां सभायां ब्राह्मण संस्कृत-विद्यायाश्च महत्वं, द्वयोः साद्यस्करिथ रेवं भविष्यत्कर्तव्यमित्यादि-विषयानधिष्ठायाने विदुषां महत्वपूर्णोपदेशाः संवृत्ताः । तथा च पश्चि माम्नाय-द्वारिका–पीठाधीश्वर–जगद्गुरु-श्रीमच्छ ङ्कराचार्य्य—श्रीराजराजेश्वराश्रममहाराज-पार्श्व तित्वेन ब्राह्मणमहासम्मेलने उपस्थितेभ्यः निम ङ्कितेभ्यो विद्वद्वरेभ्यः श्रीलोहाणाखत्रिप्रभृतिस नेभ्यश्च "काशीस्थ-सारस्वत-मण्डली"-द्वारा, "श्रीकाशीपण्डित-सभा"—द्वाराऽभिनन्दनपत्रा पाधयश्च क्रमशः समर्पिताः । इति ।

*( १ ) श्रीपण्डित-कार्तान्तिक श्रीकृष्णशर्म-ज्यो षिभ्यः—"दैवज्ञ-वाचस्पतिः" इति ।

( २ ) महोपाध्याय पण्डित श्रीदयाराम ख जी शर्मभ्यः—'वेदान्त-वाचस्पतिः' इ

( ३ ) श्री पण्डित जयराम-उकरडा-व्यासे —'भागवताचार्यः' इति ।

( ४ ) श्रीसेठसिंघसुन्दरेभ्यः —'स्वधर्म-धुरन्धरः' इति ।

( ५ ) श्रीवसन्त दयालुभ्यः —'व्याख्यान-केशरी' इति ।

**श्रीगोपालशास्त्री त्रिपाठी**
स० मन्त्री—श्रीकाशी-पण्डित-सभा

---

* एतयो विद्वद्वरयोः सारस्वत-मण्डलीतोऽपि अपि समर्पिते आस्ताम् ।

## ...प० ब्रा० छात्रसम्मेलनम् ।

...परिव्राजकछात्रसम्मेलनस्य विशिष्टाधिवेशनं ...-११—२८ तिथौ श्रद्धास्पदस्य श्रीपण्डित ...शास्त्रिणां दर्शनकेशरिणांसभापतित्वे संजातं । ...श्रीसच्चिदानन्द परमहंसस्य सारगर्भ-भाषणानन्तरं, राष्ट्रनेतुः श्रीलालालाजपत-पंचाम्बुकेशरिणः मृत्युना देशस्य या क्षतिः ...तां प्रति शोकप्रकाशात्मकः प्रस्तावः सर्व-...समादृतस्तथा कतिपयच्छात्राणां भाषणा-...सभापतिमहोदयस्य पाण्डित्यपूर्णं भाषणं ...सरस्वत्या संजातं विसर्जिता च सभा—

स्वामी विज्ञान-भास्करानन्द

...मन्त्री—श्रीपरिव्राजक-छात्रसम्मेलनस्य

लक्ष्मीकुण्ड, काशी ।

## ...सिद्धान्त पदार्थलक्षणसंग्रहः

...भिक्षुकृतः, द्वितीयावृत्तिः । मूल्यम्-।।।)

...शास्त्रदर्शनस्मृतिकाव्यादिशास्त्रीय-पदार्था-...लक्षणवर्णनात्मकग्रन्थो नाद्यावधि प्रका-...उपयोगित्वविषये—

...सन्ति विषयाश्चास्मिन् ते न दृष्टाः, परत्र वै । ...नैव समावेश्यं सर्वसिद्धान्तलक्षणम्' इति ...नासादिस्था ८६ विद्वांसो मुक्तकण्ठमुद्घो-...।

प्राप्तिस्थानम्—

...पुट्ठी, पो० जमालपुर, जि० हिसार ।

## सचित्रम् सामुद्रिक-रहस्यम्

ले०—श्रीकालिकाप्रसादशर्मा, राजज्योतिषी,

अद्भुतमिदं ग्रन्थरत्नम्, हिन्दीटीकासहितम्, अनेकचित्रविभूषितम्, नरनारीणां शुभाशुभज्ञाने नितरामुपयुक्तम्, संस्कृते सर्वथा नवीनमेव । एतेन हस्तरेखाणां गुरुं विनैव सम्यक् परिचयो भवति । मूल्यम् १।) मुद्रा ।

## रतिरहस्यम् (कोकशास्त्रम्)

एष प्राचीनो ग्रन्थः श्रीमहाकवि-कोक्कोक-विर-चितः । अस्मिन् कामशास्त्रसम्बन्धिन्यः सर्वा वार्ताः, पद्मिनी-शङ्खिनी-चित्रिणी-हस्तिनी-प्रभृतीनां स्त्रीणां भेदाः, एवं चत्वारः पुरुषभेदाः, स्त्रीणां वशी-करणस्यौषध्यः, मन्त्राः, तत्तद्देशीयानां स्त्रीणां पुरुषा-णाञ्च लक्षणानि, तेषां संयोगाः, आलिङ्गन-चुम्बनादीनां भेदाः, तेषां विशेषाश्च अन्ये च बहवो ज्ञातव्याः कामशास्त्रीयाः विषयाः सन्ति । एष ग्रन्थो नितरां सुप्रसिद्धः प्राचीनश्च विद्यते । एतस्यैका प्रतिः सर्वैरपि स्वस्वविधे नूनं संस्थापनीया । मूल्यम्—मुद्राद्वयम् ।

## महाकवि बाणभट्टः ।

ले०—भू० पू० सुप्रभात-सम्पादकः श्रीकेदारनाथ शर्मा

हिन्दीभाषायामयमपूर्वो निबन्धः । अत्र बाण-भट्टस्य जीवनविषये महत्वपूर्णा, मननीया च गवे-षणा वरीवर्ति । छात्राणां कृते नितरामुपकारकोऽयं निबन्ध-बन्धः । मूल्यम् =) मार्गव्ययः -)

सर्वेषां प्राप्तिस्थानम्—

मैनेजर-सुप्रभात-कार्यालयः, बनारस-सिटी ।

अतीत—१९८१-८२-८३-८४ संवत्सराणाम्

# सुप्रभातम् ।

## प्रथमवर्षस्य—१९८१

शोभनबन्धैः पुस्तकाकृत्या निबद्धम् । मूल्यम्—६) षण्मुद्राः । मार्गव्ययः पृथङ्नास्ति ।

## द्वितीयवर्षस्य—१९८२

प्रथमाब्दवदतिमनोहरबन्धबद्धम् । मूल्यम्—५) पञ्चमुद्राः । मार्गव्ययः पृथङ्नास्ति ।

## तृतीयवर्षस्य—१९८३

पूर्ववद् बद्धम् । मूल्यम् २॥) सार्द्धमुद्राद्वयम् । मार्गव्ययः पृथक् ।≡) ।

## चतुर्थवर्षस्य—१९८४

अतिमनोहरमिदम् निबद्धम् । मूल्यम् ३॥) सार्द्धमुद्रात्रयम् । मार्गव्ययः पृथक् ॥)

प्रकीर्णाङ्काः

प्रकीर्णाङ्काः स्वल्पा एव विद्यन्ते । येषाम्पार्श्वे-कस्यचनाङ्कस्याभावो भवेत्ते नूनं शीघ्रतां कुर्वन्तु ।

प्रथमवर्षस्य प्रत्येकाङ्कस्य मूल्यम्—।) आ चतुष्टयम् । अङ्काः—आदर्शः, १, ४, ६, ११,

द्वितीयवर्षस्य—प्रत्येकाङ्कस्य मूल्यम् आणकत्रयम् । अङ्काः—२ ३, ५, ६, ११, १२ ।

तृतीयवर्षस्य प्रत्येकाङ्कस्य मूल्यम्—≡) आ कद्वयम्, अस्य सर्वेप्यङ्काः सन्ति ।

चतुर्थवर्षस्य प्रत्येकाङ्कस्य मूल्यम्—।) आ चतुष्टयम् । अस्य सर्वेप्यङ्काः सन्ति ।

प्रकीर्णाङ्कानां मार्गव्ययेनिर्धारितमूल्यतः पृथ जिघृक्षुभिस्त्वरा कार्या । पत्रव्यवहारसङ्के

व्यवस्थापकः—

सुप्रभात-कार्यालयः, का

( Benares City



Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

पौषे १९८५ वैक्रमाब्दे ।

January 1929.

नवमोऽङ्कः

No. 9.

# सुप्रभातम् ।

संस्कृत-साहित्य-समाजस्य मुखपत्रम् ।

[त]तिमुदस्यद् भेदतारा विलुम्पन्-नयदधिसुरभाषाभाषि जागर्तिमुच्चैः ।
[…]विहग-वादैराह्वयद् भाग्यभानुम्, विलसतु भुवनेऽस्मिन् सर्वतः 'सुप्रभातम्'

निरीक्षकः—

महामहोपाध्याय-श्रीदेवीप्रसादशुक्लः, कविचक्रवर्ती, साहित्य-वारिधिः

सम्पादकः—

दर्शनकेसरी श्रीगोपालशास्त्री त्रिपाठी, "साहित्याचार्य्यः"

प्राप्तिस्थानम्—

सुप्रभात-कार्यालयः

बनारस-सिटी ।

छात्रेभ्यः—१॥)

वैदेशिकेभ्यः—६)

अस्याङ्कस्य मूल्यम् ।)

# लेख-सूची ।



## सं० सा० समाजस्य धर्मपरिषद् ।

इदानीं वाराणस्यामन्यत्र च धार्मिकक्षेत्रे शैथिल्यमस्तव्यस्ततां, धर्मप्राणर्जुबुद्धि-वैश्यादि-साधारणजनेषु दाम्भिकानां वर्द्धमानं पादप्रसारं धर्ममर्मानभिज्ञेषु धार्मिकह्रासञ्च विलोक्य, संस्कृत-साहित्य-समाजेन एका 'धर्मपरिषत्' संस्थापिता । या च समये समये बहिःप्रदेशेषु स्वोपदेशकसदस्यै-र्धर्मप्रचारं कारयिष्यति । यस्या धर्मोपदेशका मार्गाद्यावश्यक-व्ययमात्रमेवादाय धार्मिक-सामा-जिकादिसभायां धर्मोपदेशार्थं गतागतं करिष्यन्ति, प्रत्यहञ्चात्र काश्यां जनसम्मर्दबहुले दशाश्वमेध-घट्टे धर्मशास्त्राणां प्राचीनपद्धत्या कथाप्रवचनं च प्रवर्तयिष्यन्ति ।

गत-पौषशुक्लद्वितीयायां महता समारम्भेण सर्वेषां सं० सा० समाज-सदस्यानामन्येषाञ्च काशीस्थानां विदुषामुपस्थितौ दशाश्वमेधीयाऽह-ल्यावायी-घट्टे कथाप्रवचनस्य प्रारम्भः सञ्जाता । यत्र च समाजीय-धर्मपरिषत् सदस्याः श्रीपं०विन्ध्येश्वरीप्रसादशास्त्रिणो मनुस्मृतेः प्रवचनं प्रत्यहं सायं पञ्चवादनतः यावन्नियमतः कुर्वन्ति । काशीस्थानां संस्कृत-विद्यालयच्छात्राणां कृते तु प्रवचनं महदुपकरिष्यतीति प्रतिदिनं सायं वायुसेवनबुद्ध्यैव तत्र गत्वा तदीयं मनुस्मृति-प्रवचनं शृणुयुश्चेत् । यदि च स्वपार्श्वे तत्पुस्तकं गृहीत्वा व्याध्ययनरूपेण ते शृणुयुस्तदा "एकक्रियार्थद्वयप्रसिद्धेति" श्रवणेन साकं मनुस्मृतिरपि कण्ठस्था स्यादित्यहो नोपेक्षणीयोऽयमवसरो धर्मशास्त्र-जिज्ञासमानैर्भावुकैः संस्कृतच्छात्रैरन्यैश्चेति ।

केदारनाथशास्त्री सारस्वतः
मन्त्री—सं० सा० समाजस्य ।




विध-विषय-विभूषितम्, अद्वितीयम्, सचित्रं संस्कृत-मासिक-पत्रम् ।

| | | |
|---|---|---|
| वर्षे | सौर—पौषे। १९८५ वैक्रमाब्दीये | नवमोऽङ्कः। |

## श्रीशारदाष्टकम् ।

[ रचयिता—श्रीचन्द्रशेखरशर्मा, बीकानेरस्थः ]

...तां मनोज्ञनयताम्, नयतां तमो-विलयताम् । करुणाप्रसारसिन्धुम्, त्वामेव, सर्वबन्धुम् ।
...तां जनेष्वभयताम्, दयतां सदैव दयताम् ॥ जानाति देवि ! सर्वः,स्तवयत्यलं सगर्वः ॥

...णीय-पद्म-शोभम्, कमनीयसर्वतोभम् । धारा सिताऽसिपुञ्जे, कमनीयता निकुञ्जे ।
...ते पदं प्रसादम्, हरते मनो-विषादम् ॥ तुलनोभयोरनन्या, त्वय्येव देवि ! धन्या ॥

...यन्नुदेति दैवम्, नमतेऽशिवं सदैवम् । त्वय्येव सन्ति भावास्त्वय्येव सत्प्रभावाः ।
...हिमानमाद्रियन्ते, के नैतमद्भुतं ते ॥ त्वामेव चिन्तयन्तः, सत्यं भवन्ति सन्तः ॥

...णाम्बुजस्य सेवामुपकल्पयन्ति देवाः । मातर्ददासि वृद्धिम्, पुनरैश्वरीं समृद्धिम् ।
...योऽपि योग-लीनास्त्वां चिन्तयन्त्यदीनाः ॥ त्वं सर्वतो जयन्ती, कल्याणवैजयन्ती ॥

# संस्कृत-साहित्य-समाजस्य संक्षिप्त-परिचयः *

जगदम्बावलम्बाय निरालम्बाय शूलिने ।
जगत्रय-कुटुम्बाय नमः साम्बाय शम्भवे ॥
या शिल्पशास्त्रादिपयो महार्हम्,
सन्दुह्यते योजितबुद्धिवत्सैः ।
वैज्ञानिकैर्विश्वहिताय शश्वत्,
तां भारतीं कामदुघामुपासे ॥

**अयि आर्या आचार्यचरणाः !**

विदितमेव तत्र भवतां यदिदानीं समये निखिलेऽपि भूमण्डले दरीदृश्यते प्रबलो विप्लवः, समाकर्ण्यते सुमहान् कोलाहलः, अनुभूयते विषमविषमा दुरवस्थितिः, अनुमीयते च भीषणतरा परिणतिः । अस्माकं सम्मुख एव विश्वमण्डले विपुलं वैक्लव्यमवलोक्यते । अस्माकं भारतवर्षे धर्मप्राणा हिन्दूजातिरियमराजकतायामस्यां चकित-चकितेव सर्वतो विलुंठ्यमाना दोदुलयमाना च विपथ-प्रवृत्ता कल्याणं कामयन्ती कातरतरैर्नेत्रैः स्वीयान्नेतृनन्वेषयन्ती समालोक्यते ।

अस्या हिन्दूजातेर्जन्मसिद्धा नेतारो विद्वांसो ब्राह्मणाः स्वकीय-कार्यक्षेत्रमपहाय कालस्य दुर्दमनीयं प्रवाहं संरोद्धमपारयन्तो निर्जीवाः, अकर्मण्याश्च निभृताः सन्तिष्ठन्ते । तेषामपि समाजे सैव व्याकुलता, सैव दुरवस्थितिः, सैव च परिणतिर्दरीदृश्यते या खल्वितरेषु साधारणेषु जनेषु चिराद्दूरीवर्ति । एतेषामेवालसतया स्वार्थपरतया च, सुचिरकालादस्मत्पूर्वजैर्महर्षिचरणैराचार्यपादैर्विद्वत्प्रकाण्डैश्च संरक्षिता हिन्दूजातिर्वर्णाश्रमपरिस्थितिश्च, साम्प्रतमितरधर्मावलम्बिभिर्धर्मानभिज्ञैः हिन्दूसमाजनेतृत्वाभिमानिभिश्च कैश्चन स्वच्छन्दं निःशङ्कञ्च यथाभिमतं विनाश्यते, विलुण्ठ्यते च । तदस्य विद्वत्समाजस्य समुत्थाने, सुसंग्रन्थने, सुसञ्चालने च केवलमाचार्यचरणानामेव वर्तते शास्त्रसिद्धो लोकसिद्धश्चाधिकार इ… नात्र कस्यापि लेशतो वैमत्यं सम्भवेदिति सुदृढं प्रतीमः ।

अस्माकं पूज्यपादाः प्रातःस्मरणीया धर्म-संस्थाप… श्रीमच्छङ्करभगवत्पादाचार्या अन्ये च श्रीमद्रामानुज-निम्बा… वल्लभ-प्रभृतय आचार्या एतादृश एव महति समाज-स… धर्म-विप्लवे, बुद्धि-व्यतिकरे च प्रादुर्भूय भारतीयं वर्णा… संग्रन्थनम्, विदुषाञ्च सङ्घटनं सम्पादयन्त इमं स… विविधैरुपायैः प्राणपणेनापि जीवितं स्थापयामासुरित्यपि… तिरोहितं कस्यापि विदित-वेदितव्यस्य विदुषः ।

परमिदानीमस्माकं भारतीयानां विदुषां ब्राह्मणा… दुर्दैववशाद्वा यथा कथमपि वा आचार्य-मण्डलमप्यस्मा… स्मात्प्रसिद्धाद्दोषाद् न सुरक्षितं वरीवर्त्तीति परं विषादस्या… मस्माकम् । तथापि श्रीमद्भगवच्छङ्कराचार्यचरणप्रतिष्ठापित… वैदिक-धर्म-प्रतिपालन-परिपाटीं यथाशक्यं निर्भयेन चेतस… सुविशदेन बुद्धिवैभवेन, प्रबलेन च तपोबलेन यथाशास्त्रं… रक्षतां श्रीमतामाचार्य-चरणानां कार्य-परिपाटीं दृ… वयं संस्कृत-साहित्य-समाज-सदस्याः काशीस्था वि… श्रीमतां चरणेषु श्रद्धा-पुरस्सरं भक्तिपुष्पाञ्जलिं समर्प… न्तः परं प्रसादमाप्नुमस्तदस्माकमेव सौभाग्य-विजृम्भि… तच्चास्माकमेव गौरवं महिमानञ्च समेधयतीति वयं स… सबहुमानं साभिलाषञ्च स्वीयान् हृदयोद्गारान् श्रीमतां पु… सविनयं सुस्पष्टञ्च व्याहरामः । यतः—

"सुहृदि निरन्तर-चित्ते,
गुणवति भृत्येऽनुवर्तिनि कलत्रे ।
स्वामिनि शक्तिसमेते,
निवेद्य दुःखं सुखी भवति ।" इति

* एष संस्कृत-साहित्य-समाज-परिचयः, मार्गकृष्ण-दशम्यां १९८९ वैक्रमाब्दीये विशिष्टाधिवेशने सभापतिपदमल… करकम… तां, पश्चिमाम्नाय शारदापीठस्थ-जगद्गुरु-शङ्कराचार्य्य-श्रीश्रीराजराजेश्वराश्रमस्वामिचरणानाम्, कमनीयेषु श्रीसंस्कृत-साहित्य-समाज-सदस्यैः सादरं सविनयं साभिलाषञ्च समर्पितः— [ सम्पा…

## संस्कृत-साहित्य-समाजः ।

प्रतिकी हिन्दूनां परिस्थितिः कियतीं दुरवस्थां स्वीयमस्तित्वं विलोपयितुञ्च प्रवृत्तेति नेदानीं विद्यते ।

स्याः दुर्गतेर्निदानं विद्वाँसो ब्राह्मणाः सन्ति । यतोहि हिन्दूसमाजस्य शीर्षस्थानीया नेतारः संस्कृतज्ञाः ब्राह्मणा एव सन्ति । तेषां स्व-कार्यक्षेत्र-परित्याग एव प्राचीनसंस्कृतेः सभ्यतायाश्च प्रधानं विनाशकारणं स्माकं प्रतिभासते । पण्डितानामवनति-कारणेष्वसा-रणं अभिमानः सहि नाम तेषां विघाताय प्रतिक्षणमुप-एवालोक्यते । अभिमानेन तेष्वनैक्यम्, अनैक्यात कलहाद्दारिद्र्यम्, दारिद्र्याच्च तज्जन्यानां विविधानां तीनां सुतरां समुत्पत्तिरिति नाविदितं विदितवेदित-। शुष्कगर्वेण वयं स्वधर्मनिरता अपि स्व-सभ्यतां रक्षन्तोऽपि स्वदेशे, स्वजातौ, स्वसमाजे, स्वगृहेऽपि बुभुक्षिता म्रियामहे । तत्रैवास्माकं गृहे, देशे, अस्माकं साम्राज्ये सहस्रशो विदेशीय-धर्म-सहस्रशश्च यवनधर्म-प्रचारका निःशङ्कं स्वच्छन्दं सुरापानम्, गोमांसभक्षणम्, व्यभिचारम्, अनाचारञ्च भीषणं निर्लज्जता-ताण्डवं कुर्वन्ति । वयमभिमा-दैववञ्चिताः, दौर्भाग्यमाक्रोशमाणाः, गृहकलह एव बहुमन्यमानाः समाजदृष्टौ तिरष्कृतास्तिरोहि-शनैः शनैः न केवलमात्मानमेव; स्वसभ्यताम् म्, स्वगौरवम्, स्वमहिमानम् सर्वमपि च विलोपयितुं स्मः ।

त्रैवाभिमानेन पतनं प्रकृतिसिद्धो नियमः । संस्कृत-अभ्युत्थानसमये भगवान् कालिदासः स्वग्रन्थेषु नामापि न प्रकटयन् लिखति—

"मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥"

कालिदासात् सार्धसहस्रवर्षानन्तरं संस्कृत-साहित्यस्य पण्डितराजो भगवान् जगन्नाथः समालपति, यत्—

"आप्राचः कामरूपात्तुहिनगिरितटादाचकूलात् पयोधेः
यावन्तः सन्ति काव्य-प्रणयनपटवस्तेऽविशङ्कं वदन्तु ॥
मृद्वीका-मध्यनिर्यन्मसृणमदधुरी-माधुरी-भाग्यभाजाम्,
वाचामाचार्यतायाः पदमनुभवितुं कोऽस्ति धन्यो मदन्यः"

एषैव गर्वोक्तिः संस्कृत-साहित्य-छधायाश्चरमो विन्दु-रासीदिति वक्तुं शक्यते । एतेनैवाभिमानेन शनैः शनैः पाण्डि-त्यस्य ह्रासे समालोच्यमाने प्रकम्पते चेतः, विषीदन्ति मर्माणि, यदिमां दशामापन्ना वयं निकटे भविष्यत्येव स्व-पूर्वपुरुषाणामक्षय्यां कीर्तिं कथामात्रशेषां विधास्यामः । नास्त्यत्र सन्देहलेशोऽप्यस्माकम् ।

एवमेवास्माकमनेन व्यापारेण प्राप्तावसरा पाश्चात्य-शिक्षापद्धतिरस्मान् सर्वथा भक्षयितुं प्रसारितकरा पिशाचि-नीव सर्वतः समावर्तते । राज्यमस्माकमहितम्, राजकर्म-चारिणश्चास्माकमहिताः, राजकीयशिक्षादीक्षिताश्च भारतीया एवाऽस्माकं विध्वंसं कामयन्ते, राजनीतिनेतारश्चास्मान् सनासाक्षिसङ्कोचभङ्गमवलोकयन्ति । किं बहुना; दैवमप्यस्माकं प्रतिकूलम् । एतत्सर्वमप्यनर्थजातमस्माकं दोषेणैव समागतम् । नहि दुर्बलमकर्मण्यं पितरमपि पालयन्ति पुत्राः । दरिद्रस्य दुर्बलस्य च जगति नास्ति शरणं क्वापि । दैवोऽपि दुर्बलघात-को भवतीति प्रकृतिसिद्ध-एवैष नियमः । तामेतां दुर्बलता मुज्जासयितुम्, कर्मण्यतां प्रबलताञ्च सम्पादयितुमत्र संस्कृत-विद्याकेन्द्रे संस्कृत-विदुषां प्रधान-साम्राज्ये वाराणसी-नगरे कतिपयैर्महद्भिर्देशकालात्मविद्भिः संस्कृत-पण्डितैः सम्भूयै-का प्रबला सङ्घशक्तिः संस्थापिता । या च **संस्कृत-सा-हित्य-समाज**-नाम्ना श्रीमतां पुरतः सविनयं सोत्साहं सोल्लासञ्च संस्थिता वर्तते ।

### कार्य—विभागाः ।

संस्कृत-पण्डितानां छात्राणाञ्च प्रधानकेन्द्र-भूतायामस्यां वाराणस्यामस्माभिश्चिरकालाद्दरीदृश्यते यत् शतशः सना-तनधर्मावलम्बिनां सभाः संस्थापिताः । बहुवारं विदुषां छात्राणाञ्च समितयः संग्रन्थिताः । भूयस्यश्च संस्कृत-समुन्नति-सम्पादकाः संस्थाः, पाठशालाः, अन्यानि च बहूनि कार्याणि सञ्जातानि, परं तत्परिणतौ प्रतिदिनमेव-नहि नहि-प्रतिक्षणमेव

संस्कृतभाषायाः क्षीणतैव प्रत्यक्षीक्रियते । संस्कृतभाषायाः, ब्राह्मणजातेः, सनातनधर्मस्य च परस्परं विद्यते भूयान् महिष्ठो घनिष्ठश्च सम्बन्धः । त्रयोऽपि परस्परमन्योन्याश्रयतामाश्रयन्त इत्यस्माकं वर्तते प्रबलतरा धारणा । एकस्याप्यभावे द्वयोः स्थितिरशक्यैवेति समेषामपि मार्मिकाणामत्रैकमत्यमेव स्यात् । तदेकस्यैवाङ्गस्य प्रत्यङ्गस्य वा समुन्नयने कृतप्रयत्नानामसाफल्यमालोच्यास्माभिः सर्वाङ्गीणां संस्कृतसमुन्नतिं विधातुकामैः संस्कृतसमाजस्य द्वादश विभागाः संस्थापिता विद्यन्ते । यथा—

(१) संस्कृतच्छात्र-सम्मेलनम्, (२) संस्कृत-कवि सम्मेलनम्, (३) शास्त्रार्थसभा, (४) निरीक्षासमितिः, (५) गवेषण-समितिः, (६) संस्कृत-नाट्यपरिषद् (७) धर्म-परिषद् (८) पुस्तक-प्रकाशन-परिषद्, (९) पत्र-प्रकाशन-समितिः, (१०) संस्कृत-सेवा-सङ्घः, (११) शिक्षा-संस्कार-समितिः, (१२) भारतीय-संस्कृत-विद्यालयश्चेति ।

अत्र चैतेषां विवरणमपि समासतो निर्दिश्यते ।

**१—संस्कृतच्छात्र-सम्मेलनम्**—सर्वप्रथममिदानीमस्माकमिदमेव कर्तव्यं प्रतिभाति यदस्माकं भाविपण्डित-समाजः, सर्वाङ्गैः दृढः, सजीवः, कर्मवीरः, देशकालात्मवित्, सोत्साहशक्तिसम्पन्नश्च स्यादिति । प्रचलितां संस्कृत-विद्वत्परिपाटीं संस्कृतच्छात्राणामवस्थाञ्च दर्शं दर्शमस्माकं प्रकम्पते हृदयम् ।

**"ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम् ।"**

भगवत उदयनाचार्यस्येमामुक्तिं च विचारपथमारोहयतामस्माकं हृदये सञ्जायते भीः, यदिदानीं शास्त्रतत्त्वाभिज्ञानामपि लोक-कालानभिज्ञानां विदुषामियं दुष्परिस्थितिर्विद्यते चेदग्रे वराकाणामेषां केवलं परीक्षा-पण्डितानामनात्मविदां, निर्जीवानां छात्राणांच का गतिर्भविष्यतीति । अत एव तेषु सर्वप्रथमं नवजीवनसञ्चारः प्रधानतममुद्देश्यमस्माकं समाजस्य । येन ते स्वीयज्ञानस्य पूर्णतां साफल्यञ्च भजेयुरिति समस्त-संस्कृतच्छात्राणाम् सम्मेलनं सम्पाद्य तेषु दृढसङ्घशक्तेः संस्थापनमस्माकं प्रथमकर्तव्यम् ।

**२—संस्कृतकविसम्मेलनम्**—साम्प्रतं प्रचलिते[illegible] साहित्याध्ययने साहित्य-रसिकानां राज्ञां सहृदयानाञ्चा[illegible] वेनास्माकमिदं साहित्याङ्गं कवित्वं शनैः शनैरपसर[illegible] संस्कृत-समाजादिति तत्संरक्षणायास्य संस्थापनमावश्यक[illegible]

**शास्त्रार्थसभा**—साम्प्रतं प्रचलिता नियमित-विषयि[illegible] शास्त्रार्थपद्धतिर्वस्तुतो नातिरामणीयकमाधत्ते । केषु[illegible] निर्द्धारितग्रन्थेष्वेव शुष्क-शब्दानामेव विचारो नास्[illegible] विचारवैभवमुन्नयति; प्रत्युतास्माकं व्यापकं विविधवि[illegible] ज्ञानं प्रतिबध्नात्येव । धर्मशास्त्रेषु, व्यावहारिकेषु विष[illegible] वैदिकविषयेषु, पुराणेषु, दार्शनिकेषु तान्त्रिकेषु विचारेषु[illegible] नास्त्यस्माकं नियमिता शास्त्रानुकूला शास्त्रार्थ-सरणिः । श[illegible] वालानां चर्माणि समाकर्षयतामस्माकं व्यापकतत्त्वविचारसर[illegible] पुनर्यथा समागच्छेदिति शास्त्रार्थसभा समाजेन संस्थापिता[illegible]

**४—निरीक्षासमितिः**—एतदपि विदितमेव श्रीम[illegible] यन्न केवलमत्रैव; सर्वत्रैव वञ्चका व्यापारिणो दुराचा[illegible] संस्कृतपाठशाला-छात्रालयादिव्याजेन धन-सङ्ग्रहं विधा[illegible] वराकान् पण्डितान् छात्रांश्च प्रवञ्चयन्ति, मुग्धांश्छात्रा[illegible] नेकेषु दुराचरणेषु प्रवर्त्तयन्ति, तेषां जीवनं विनाशयन्ति च[illegible] केषुचन सत्रेषु, छात्रालयेषु, पाठालयेषु च तदधिका[illegible] स्वामिनामनुपस्थितौ कपटेन धनमर्जयन्ति । छात्रे[illegible] जीर्णम्, कृमिकुलकलुषितम्, दूषितम्, स्वास्थ्यविघात[illegible] मन्नादिकं दत्वा निर्जीवान् दरिद्रान् छात्रान् खेदयन्ति[illegible] क्षते क्षारमिव तदस्माकमसह्यं भवतीति सर्वविधामीदृशीं[illegible] वस्थां दूरीकर्तुमस्माभिस्तेषां सम्यङ्निरीक्षणाय निरी[illegible] समितिसंस्थापनमावश्यकत्वेन परिगण्यते ।

**५—गवेषण-समितिः**—अनया समित्या विलु[illegible] चारस्य, विज्ञानमयस्य, अपारस्य संस्कृतवाङ्मयस्य त[illegible] न्वेषणं विधीयेत । साम्प्रतमाङ्गलशिक्षादूषितमतयः [illegible] भारतीयाः, संस्कृतानभिज्ञाश्च पाश्चात्यपण्डिताः, स्वैराचा[illegible] चरमाणाः संस्कृतवाङ्मयमन्वेषयन्ति, कदर्थयन्ति च । [illegible] वास्तविकानि प्रतनूनि प्रत्नानि तत्त्वानि तिरोहिता[illegible] सन्तिष्ठन्ते—इति संस्कृतविदुषामिदं प्रधानतमं कर्तव्यम्[illegible]

संस्कृतनाट्यपरिषद्—इयं संस्कृतच्छात्रेषु दार्ढ्य- य प्राच्यसाहित्य-संरक्षणाय, मनोरञ्जनाय चा- मावहतीति नात्र विशिष्टं वक्तव्यमस्माकम् ।

-धर्म-परिषद्—अस्याः परिषदः कियती आव- विद्यत इति न कथनीयतामावहति । साम्प्रतं धर्म- कुश-काश-कण्टकाकीर्णत्वेन तस्य स्वरूप-निर्णयाय सपरिकरं समवतीर्णाः सन्ति विद्वाँसः केचन । निर्णयाय भूयान् समयः, प्रचुरमध्ययनं शास्त्राणाम्, हिता देशकालस्थिति-विचार-चतुरा, विशुद्धा बुद्धिरपे- शानाम्, पुराणानाम्, धर्मशास्त्राणाम्, इतिहासा- सम्प्रदायिकसिद्धान्तानाञ्च सम्यगध्ययनं विना साम्प्रतं ये धर्म-निर्णयो न कदापि भवितुमर्हतीति निःसंशयं समुद्घोषयामः । तदयं समाजः, हिन्दुसमाजस्य, समाजस्य च सुव्यवस्था-सम्पादनाय, तत्प्राणभूतस्य सनातनधर्मस्य च, सम्यग्विवेचनाय धर्मपरिषदं नाऽचिरादेव भारतीयानां समस्त-विदुषाम्, व्यवहा- लोकानां समक्षं सडिण्डिमघोषं स्वीयान् विचारान् चिरादेव प्रबलं प्रयतिष्यत इति निश्चितं समाजेन ।

-पत्रप्रकाशन-परिषद्—अनया परिषदा सुप्रभातं कं संस्कृतपत्रं पञ्चवर्षेभ्यः सञ्चाल्यते । तद्विषये नास्ति वक्तव्यम् । साम्प्रतमेव हिन्दी-भाषायां सर्वा- विचार-पूर्वं पाक्षिकं समाजमुखपत्रमाविर्भविष्यतीति स्यानां सुदृढो निश्चयः । शनैः शनैरियं परिषत्, दैनिक-पत्राणां प्रकाशनेऽप्यविरतं प्रयतमाना वरीवर्त्ति ।

-पुस्तक-प्रकाशन-प्ररिषद्—अस्याः विषये विशेषतो वक्तव्यम् ।

-संस्कृत-सेवा-सङ्घः—साम्प्रतं परःसहस्राः या दारिद्र्येण कस्यापि सहृदय-निरीक्षकस्याभावे- क्षैः पूर्वोक्तैरनेकैः कारणैः पशुमारं म्रियन्ते 'अनेके विद्वांसः समुचितसाहाय्याभावेन दुःखमाप्नुवन्ति । संस्कृतज्ञेषु सेवाभावस्य, पारस्परिकस्याखण्डसौहा- सम्पादनाय सेवासङ्घस्य विद्यते महत्यावश्यकता ।

-शिक्षा-समितिः—साम्प्रतं संस्कृत-समाजस्य अनेकेषु समुचितशिक्षाया अभाव एव परं पतन- कारणम् । अस्मासु सर्वत्र पाश्चात्य-शिक्षा-दीक्षा-परीक्षा-प्रकाराः प्रचरन्ति । यद्यपि वयं स्वीये समाजे सर्वं कर्तुं प्रभवामः, परन्तु अस्माकं सर्वाङ्गीणं विनाशं सुनिभृतं सम्पादयन्ती पाश्चात्य-पद्धतिः संस्कृत-भाषाम्, प्राच्य संस्कृतिम्, आर्य- सभ्यताञ्च तिरोहितुं यथा गुप्तरीत्या प्रयता विद्यते, न तथा काचनापरा शक्तिरस्माकं विघातिका । अस्याश्च गूढा भीषणा परिणतिरस्माकं प्रत्यक्षं न प्रतिभासते । तस्याः पाश्चात्य शिक्षा-दीक्षा-परीक्षादिपद्धतेः सुमहान् विरोधः, स्वकीय-शिक्षा परीक्षा-पद्धति-प्रचारश्चास्माकं जीवनम् । एतस्मिन् विषये वयं भृशमुदासीनाः स्मः । परमयं सुधीरं गभीरं च विचार- णीयो विषयः । अतः शिक्षा-संस्कार-समितिर्नितरामपेक्षिता । एतदर्थन्द्रुतमेव परीक्षापद्धतिमेकां सञ्चालयिष्यति समाजः ।

१२—भारतीय-संस्कृत-विद्यालयः— साम्प्रतं सर्वत्र विद्यालयेषु आंग्ल-परीक्षा-पद्धत्यनुसारं केषाञ्चन विषयाणामध्ययनाध्यापन-प्रचारो दृश्यते । भारतीयैः संस्था- पिताश्च महान्तो विश्वविद्यालया अपि सर्वथा तामेव सरणिमनुसरन्तः संस्कृतशिक्षा-विषये नितरामुदासीनाः सन्ति । नहि संस्कृतशिक्षा सर्वाङ्ग-सम्पूर्णा, भारतीय- संस्कृति-सुरक्षिका, व्यापक-ज्ञानपूर्णा, भारतीय-ज्ञानविज्ञान- प्रकाशिका जीवनपूर्णा कुत्रापि विद्यते । इमां शिक्षा-पद्धतिं दृष्ट्वा वयं भृशं विदीर्ण-हृदया वर्तामहे । तत्केवलं प्राच्य-संस्कृति- संरक्षणाय विशाल-पुस्तकालय-परिपूर्णस्य भारतीय-संस्कृत- विद्यालयस्य महती आवश्यकता वरीवर्तीति नाविदित- चरं शिक्षा-मर्म-विदामांग्ल-राजनीति-रहस्यविदाम् ।

एवमनेन समाजेन संस्कृत-समाजस्य सर्वाङ्गीण-समु- न्नतिसम्पादनाय द्वादश विभागाः सकल-लोक-समक्षं प्रस्ता- विताः सन्ति । न खलु समाजः सुदीर्घकाल-सम्पाद्यान्, प्रचुर- धन-सम्पत्तिसमपेक्षितान्, अनवरतपरिश्रमसाध्यानिमान् सर्वा- नपि विभागान् स्वहस्तेनैव सम्पादयितुमीष्टे, समभिलषति तु । तस्येयमभिलाषा वर्तते यत् ये केचनापि विशुद्धहृदयेन, करुणया, स्नेहेन, औदार्येण, गाम्भीर्येण च संस्कृत-सेवाम्, समाजसेवाम्, धर्म-सेवां वा कर्तुं कामयन्ते, तैरेतेषु विषये- ष्ववश्यमवधानदानं विधाय समाजोद्देश्यानां परिपूर्तये सर्वथा प्रयतनीयम् । साम्प्रतमेष समयः कार्यकरणक्षमः । यदिदा-

नीमपि वयं स्वार्थनिरताः भवेमस्तदा न केवलं स्वीयं विनाशं करिष्यामः; प्रत्युत स्व-देश-समाज-धर्मादीनपि विनाशयन्त आगामिन्याः सन्ततेः पन्थानं कण्टकाकीर्णं कुर्वन्तस्तेषां जीवनमपि विनाशयिष्याम इति सर्वथा विवेचनीयमाचार्यचरणैः, विद्वद्धौरेयैर्वृद्धविपश्चिद्भिः, देशस्य सर्वस्वभूतैर्नवयुवभिः पण्डितैः, अस्माकञ्च प्राणभूतैश्छात्रैरिति साग्रहं सानुरोधञ्चास्माभिर्निवेद्यते ।

## समाज-साफल्यम् ।

पञ्चवर्षेभ्यः संस्कृत-साहित्य-समाजोऽयं काश्यां संस्थापितो निःसहाय एव कृतघ्नैः, क्रियमाणघ्नैश्च स्वार्थाभिभूतैरनेकधा समुपद्रुतोऽपि सुदृढेन हृदयेन, सत्येन सङ्कल्पेन, अनन्तेन प्रेम्णा, समुपचितेन सौहार्देन च निःशङ्कं कार्यं कुर्वन् यत्साफल्यमनुभवन्विजयतेतराम्, तत्तस्य सत्यसङ्कल्पस्य, प्रवर्धमानस्य च वीर्यस्यैव विजृम्भितम् ।

यतस्ततो भिक्षावृत्तिमकुर्वन्, धनसंग्रहलोभं दूरे निक्षिपन्, विविधा भयङ्करा विपत्तीस्तिरस्कुर्वन् प्राणापहारकान् प्रहारान् सोल्लासं मर्षयन्, विरोधिषु स्व-सत्यबलेन सात्त्विकं भावं प्रापयन्नायं समाजः पञ्चसु वर्षेषु स्व-स्वरूपानुरूपं साफल्यमभजदित्यस्माकमुत्साहः प्रतिदिनम्, प्रतिक्षणमुपचीयमान एव वर्तते ।

यदा समाजेन काश्यां सर्व-प्रथममस्य संस्थापनं समुद्घोषितं तस्मिन् काले प्रगाढ-निद्रा-निमिलित आसीदन्यः काशीस्थः पण्डित-समाजः । प्रथममेव समाजस्यास्य डिण्डिमघोषं सुप्रभाताभिधानम् मुखपत्रं पण्डितानामुत्थाने सुप्रभातमेवाभवत् । तदनन्तरञ्च शनैः शनैः जागर्तिमापन्ने समाजे संस्कृत-पत्राणामुर्वरायां भूमावस्यां वाराणस्यां समभूत् 'सूर्योदयः' । तदनन्तरञ्च 'सहस्रांशुः' ब्राह्मण-महासम्मेलनम्' चेति पत्रत्रयं काश्यामाविर्भूतम् । न केवलं काश्यामेव; सुदूरवर्तिनि पञ्जाप-प्रान्तेऽपि सुप्रभातस्य 'उद्योतः'-प्रकाशमलभत । लवपुरीयैर्नवयुवकैः संस्कृतविद्वद्भिश्च 'उद्योत' नामकं सुन्दरतरं संस्कृत-मासिकं पत्रं निःसार्यते । इदं तु प्रथमं साफल्यं समाजस्य ।

एवमेव चिरसुप्तोऽयं पण्डित-समाजः शनैः शनैः जागर्ति-

मनुभवन् प्राचीनां विश्रृङ्खलितां शास्त्रार्थसरणिं पुनः समुद्
यतस्ततो बहुत्र सुव्यवस्थिता शास्त्रार्थ-सरणिः सम्प्रवृत्ता

ये खलु पण्डिताः व्याख्यानादिकार्येषु प्रथमं वि
कुर्वन्ति स्म, त एव स्वीयान् बालकान्, छात्रांश्च व्याख्या
नादौ प्रावर्तयन् । एवमेव ये खलु विद्वांसः, छात्राश्च से
सङ्घादिसामाजिकानि कार्याणि प्रतिपदं निन्दन्ति
विरुन्धन्ति स्म, त एव विद्वांसः स्वयं सेवाकार्येषु सा
छात्रान् प्रवर्त्तयन्ति । प्रतिपाठशालतश्छात्रा अपि
सेवकादिकार्येषु प्रवर्तन्ते । एतदपि पण्डित-समाज-ह
नाल्पं साफल्यं समाजस्य ।

अस्माभिर्वारंवारं प्रार्थिता आसन् विद्वांसो
'श्रीमन्तः प्रतियोगिविधया, अनुयोगिविधया वा यथाक
वा कार्यक्षेत्रे समवतीर्य स्वीयं कालिमानमपहरन्ति
तत्रापि अस्माभिर्महान् साफल्यलाभः कृतः सामाजि
काशीस्था वृद्धविद्वांसोऽस्माकमाह्वानमाकर्ण्य समुत्
महान्तमाशातीतं च कार्यं समपादयन्निति महान् हर्षप्रक

एवमेव समाजेन संस्कृतच्छात्राणां सुदृढ-संग्रन्थनाय व
द्वयात् काशी-संस्कृतच्छात्रसङ्घः संस्थापितः । यस्येदानीं या
विंशत्यधिवेशनानि यत्र तत्र संजातानि । तत्र च दशाधि
नानि शकलजनतासाधारणं नगराङ्गणे (टाउनहाले), वि
द्यालये, शारदामठे, विश्वाराध्ये रंगमञ्चे, काशीनरेशमन्दि
सञ्जातानि । यत्र बहवो मान्याः पूज्या विद्वांसो नागरि
नेतारश्च भागमगृह्णन् । तेनापि संस्कृतच्छात्रेषु महती जाग
समभूत् । छात्राश्चानेके भाषणे, लेखने, कार्यकरणे च कु
संवृत्ताः ।

सामाजिकेनोद्योगेन श्रीमतामच्युताश्रमस्वामिमहोद
माश्रयेण च भारतीय-संस्कृत-साहित्य-विद्यालयस्य संस्
प्यभूत । यत्र संस्कृतच्छात्राणां धर्मशिक्षा-भूगोलशिक्षा-हि
शिक्षेतिहासशिक्षा-लेखनशिक्षा-निबन्धरचनानुवादादि-शि
प्रबन्धः कृत आसीत् । परं स्वामि-महोदयाः कियत्काला
धार्मिकेऽपि स्वस्थाने नैनं विद्यालयं समस्थापयन् ।
च स्थानाभावाद्वयं विवशास्तं स्थगितवन्तः ।

समाजस्याधिवेशनेषु प्रतिवर्षं प्रत्याधिवेशनं सं
च्छात्राणां व्यापकेषु शास्त्रीयेषु, लौकिकेषु च विषयेषु

विवादोऽपि ( दिबेट् ) भवति तत्र च पुरस्कार-
पि समाजेन क्रियते ।

जस्याधिवेशनेषु च श्रद्धेया विद्वांसो माननीयाः
ठारशर्ममहोदयाः, श्रीमन्मध्वसम्प्रदायाचार्याः,
काण्डाः पूज्यपादाः श्रीदामोदरलाल-गोस्वामिमहो-
मान्याः श्रीमदनमोहनमालवीय-महोदयाः, हिन्दू-
लयाचार्याः श्रीआनन्दशङ्कर-ध्रुव-महोदयाः, महा-
या विद्यावयोवृद्धाः श्रीप्रमथनाथ-तर्कभूषण-महो-
न्तो रामभवनशास्त्रिमहोदयाः, महामहोपाध्यायाः
-शास्त्रिमहोदयाः, महामहोपाध्यायाः श्रीदेवीप्रसाद
चक्रवर्तिमहोदया अन्ये च विद्वांसः सभापतिपद-
: समाजस्योत्साहं समेधितवन्तः । अद्य च श्रीमता-
णानां परमपवित्रेण शुभागमनेन कृतार्थीकृतोऽयं
षां समाजः परं साफल्यमनुभवन्नमन्दानन्द-सन्दोहं

प्रारम्भे संस्कृत-समाजस्य दुरवस्थां विलोक्य-
वयं समाज-संस्थापनमभिलषन्तः स्वीयान्
विदुषः प्रार्थितवन्तः, परन्तु गाढसुप्ते, मात्सर्य-
च पण्डित-समाजे सर्वेऽप्यस्मान् तिरस्कुर्वन्तो
परमस्माकं सौभाग्येन म० म० श्रीमत्प्रभुदत्तशास्त्रि-
संस्कृत-नवयुवकानामादर्शभूता मान्या अस्माकं
महामहोपाध्यायाः श्रीदेवीप्रसादशुक्ल-कविचक्रवर्ति-
अस्माकमुत्साहं प्रवर्धयन्तो नेतृत्वमस्माकम-
अस्माकं परमपूज्या विद्यावयोवृद्धाः श्रीमदनन्तराम-
अपि कार्येऽस्मिन् सोत्साहमस्मानभ्यवर्द्धयन् ।
अस्माकं मान्याः संस्कृतपण्डिताः स्व-स्वभावसुल-
, द्वेषेण च दन्दह्यमाना विविधं विरोधमकुर्वन्
उत्साहशक्तिर्न मनागपि शैथिल्यमभजत् । शनैः
कार्यं प्रायशः सर्वेऽपि काशीस्थाः सहृदया विद्वांसोऽ-
शक्ति प्रवर्द्धयन्तः समाजमिमं सनाथीकुर्वन्ति ।

## कार्यकर्तारः, आर्थिकीपरिस्थितिश्च ।

आर्थिकी परिस्थितिर्नाममात्रैव विद्यते ।
दाने, समाजाधिवेशनादावन्येषु च कार्येषु यावान्
तत्सर्वमपि सुप्रभातद्वारैव सम्पाद्यते । प्रथमत-
एवास्य सञ्चालकैरर्थसङ्ग्रहविषये औदासीन्यं प्रकटीकृतम् । यतः साम्प्रतं विविधैर्वञ्चकैराडम्बरेण महता दम्भेन च भिक्षावृत्त्या धनं सम्पाद्यते । तस्य व्ययश्च स्वार्थसिद्धावेव क्रियते, तत्रापि संस्कृतनाम्ना, ब्राह्मण-समाजनाम्ना, सनातनधर्मनाम्ना च धन-मर्जयन्तु प्रायशो व्यापारिण एव सन्ति । तदिमां दुरवस्था-मालोच्य समाजेनैषा पद्धतिरेव परित्यक्ता । यदा कदाचन समा-पन्ने ह्यर्थसङ्कटे यस्य कस्यापि सहृदयस्योद्योगेनास्माभिस्ताव-न्मात्रमेव धनमासादितं,येन कार्य-प्रतिबन्धो न भवेदिति । केवल-मुत्साहधनाः, परिश्रमपरायणाः, ईश्वरावलम्बिनो नवयुवकादर्शाः समाजकर्णधाराः कार्यं कुर्वन्ति । गतवत्सरात् पूर्वमस्य स्थायि-कोषे सप्तशतमुद्रा आसन् । परमिदानीं व्ययाधिक्येन ता अपि न सन्ति । किम्बहुना, अस्मदभिन्नहृदा ज्येष्ठभ्रातृकल्पेन श्रीमता विन्ध्येश्वरीप्रसादशास्त्रिणा मया च स्वहस्तेनैव यन्त्र-सञ्चालनं कृत्वा प्रथमाङ्को मुद्रित आसीत् । एवमेव सर्वदा कार्यसाफल्यमालोक्य वयं स्वपरिश्रमेणैव कार्यं सञ्चालयामः ।

एतस्य प्रधान-सञ्चालकेषु कार्यकर्तृषु च सर्वेषामस्माकं मान्याः प्रिय सुहृदः श्रीगोपालशास्त्रिणः साहित्याचार्या दर्शन-केशरिणः ( काशी-विद्यापीठस्य दर्शनाध्यापकाः ) साम्प्रतं सुप्रभात-सम्पादकाः सन्ति । अपरे च परमोत्साहिन आदर्श-युवकाः पण्डिताः प्रियवराः श्रीगिरीश शुक्लाः, न्यायाचार्याः (हिन्दूविश्वविद्यालये न्यायाध्यापकाः) समाजस्य व्यवस्थापकाः सन्ति । अस्माकं श्रद्धेयाः सुहृदः श्रीमत्तारादत्त-पन्त-महाशयाः साहित्य-व्याकरणाचार्याः, ( रणवीर-पाठशाला-द्वितीयाध्यापकाः ) साम्प्रतं संस्कृतच्छात्रसङ्घस्य सञ्चालकाः सन्ति । समाजस्य सुप्रभातस्य च विशिष्टाः संस्थापकाः सुप्र-सिद्धाः कार्यकर्तारः श्रीविन्ध्येश्वरीप्रसाद शास्त्रिणश्च वर्षद्वयं यावत् सुप्रभातस्य सम्पादन-व्यवस्थापनादिकार्यं सञ्चाल्य साम्प्रतं सामाजिक-कार्येषु प्रधान-सहायकाः सन्ति । अस्माकं प्रथमे प्रोत्साहकाः सहायकाः श्रीदामोदरशास्त्रिणो भिषगाचार्या अपि समाजस्य प्रधानाङ्गभूताः सन्ति । इदानीं काव्यतीर्थेन श्रीसरयूप्रसाद शास्त्रिणा ( द्विजेन्द्रेण ) अपि सुप्रभातस्य-स०-सम्पादकत्वेनास्माकम्महत्साहाय्यं क्रियते । श्रीमदनगोपाल-शर्मा त्वस्य सुप्रभातस्य प्राणभूतः सर्वदा समाजकृते प्राणान् दातुं सन्नद्धः सन्तिष्ठते ।

एवं चास्माकं सर्वेषां प्रधाननेतारः श्रीमन्तो म० म० श्रीकविचक्रवर्त्तिमहोदयाः, श्रीमन्तः श्रीअनन्तरामशास्त्रिमहोदयाः, परमोत्साहाः श्रीमन्तः सभापतिमहोदयाः, व्याकरणाचार्याः, श्रीमदनमोहनशास्त्रिणो व्याख्यानवाचस्पतयश्चास्माकं सञ्चालकाः सहायकाश्च सन्ति ।

म० म० डा० गङ्गानाथझा, एम० ए० ( वाइसचान्सलर प्रयागविश्वविद्यालय ), एवं काशीस्थ विद्वन्मौलिमणयो म. म. श्रीप्रमथनाथभट्टाचार्य-महोदयाः,भारतगौरवभूताः श्रीमदाचार्य-रामावतारशर्म्ममहोदयाः, भारतप्रसिद्धा व्याख्यातृशिरोमणयः म०म० श्रीगिरिधरशर्म्ममहोदयाः, काशीस्थाः विद्यावयोवृद्धाः पण्डितप्रकाण्डाः श्रीरामभवनशास्त्रिमहोदयाश्चास्माकमनुशासकाः सर्वदा समाज-साहाय्यं कुर्वन्ति । तैरेव महोदयैरस्य समाजस्य सर्वप्रथमं बीजवापः कृत आसीदिति तेषां महतीमुपकृतिमुररीकरोति समाजः ।

### उपसंहारः ।

साम्प्रतं वत्सरेऽस्मिन् सर्वत्रैव संस्कृत-समाजेऽभूतपूर्वां जागर्त्तिमालोक्य,स्वकार्य-साफल्यञ्चालोच्य, संस्कृत-साहित्य-समाजोऽयं महता समारम्भेणोत्साहेन च कार्यक्षेत्रेऽवतीर्य, संस्कृतनवयुवकानां सुदृढं सङ्ग्रन्थनं सम्पाद्य, महामहति हिन्दुसमाजे, संस्कृत-समाजे, पण्डित-समाजे च विशिष्टां शास्त्र-लोक-मर्यादाऽविरुद्धां शाश्वतिकीं जागर्त्तिं कामयन्, सर्वारम्भे भगवतस्तत्रभवतः श्रीशङ्कराचार्यचरणस्य सोत्साहम्, साभिलाषञ्चार्चनमाचरन्, तत्रभवत आचार्यान् सानुरोधं सविनयञ्च प्रार्थयते, यत्—बाह्यशत्रुभिरान्तरिकैश्च भीषण-शत्रुभिः सर्वतः समाक्रान्तोऽयं भारतीय-हिन्दुसमाजः पण्डितानामालस्यात् शनैः शनैः विनाशोन्मुखः, प्रतीक्षते कमपि श्रीमच्छङ्करभगवत्पादाचार्यसमानवीर्यवतो नेतॄनिति नात्र बहु वक्तव्यम् । श्रीमन्तश्च सन्ति भारतीयेष्वाचार्येषु सपरिश्रमं कार्यकर्तारः ।

एतदपि विचारणीयं यदिदानीं सर्वत्र भू-मण्डले नवयुवकानां साम्राज्यं समेधमानमालोक्यते । भारते वर्षेऽपि नवयुवकानामान्दोलनमिदानीं प्रतिदिनमभिवर्धमानमालोक्यते । भारतीया नवयुवकाः सर्वसाधनसम्पन्नाः साम्प्रतं भीषणां क्रान्तिं कर्तुं कामय राजनीतौ, समाजे, धर्मे सर्वत्रैव वृद्धा नेतारो नवयुव विविधैः साधनैः समुत्साहयन्ति । स्वयञ्च तेपामा भूताः प्राणान्परिहातुं बद्धपरिकराः सन्तिष्ठन्ते । अस्म वृद्धा नेतारः स्वयमादर्शहीनाः पथपरिभ्रष्टाः, अकर्म स्वीयान्नवयुवकान् नोत्थितान् सहन्ते । स्वकीय-स्व परवशास्तान् युवकानपि पातयितुं प्रबलं प्रयतन्ते, सर्वप्रथमं विनाश-कारणमधःपातकारणञ्च हिन्दुजातेः परमिदानीं संस्कृत-नवयुवका अपि तेषां नम्र मालोचयन्तोऽन्येषां नेतॄणामादर्शं गृह्णन्ति । ततश्च पणि महान्तमुत्पातमाचरन्ति, न च स्वीयं दोषमनुपश्यन्त साम्प्रतं तेषां देश—धर्म—समाज—प्राणभूतानां युवक नेतृत्वाय कस्याप्युदारहृदयस्य धर्मनेतुर्वर्तते महत्यावश्यकत

साम्प्रतमुत्साहपूर्णानां नवयुवकानां नेतृत्त्वं कर्तुं शिथि सन्ति वृद्धविपश्चितः । तत्रभवति भवति आचार्यचरणे तेऽस्माकमाशाबन्धः । यदि चेच्छ्रीमन्तो वास्तविकीं ध सेवां विधातुमभिलषन्ति, तदा स्वतन्त्रेण, देशकालानुकूले भारतीय-संस्कृतिपूर्णेन, उदारेण पथा प्रवर्त्तयन्तु, समाज कुर्वन्तु देश-कल्याणम्, समाचरन्तु समाजस्य सुदृढं बन्धनम्

इयमेवास्माकमभिलाषा, इयमेवचाशा । न वयं कामयामः, न प्रतिष्ठाम्, नापि चान्यत् किमपि । वयम लषामस्तादृशं धर्मनेतारम्, यः खलु वस्तुतः श्रीम शङ्कराचार्य-चरण-प्रदिष्टेन पथा स्वीयान् प्राणान् करतले स्थाप्य, निर्भयः केसरीव भारत-विपिनं विधर्मि-हृदय-विदा गर्जनेनापूरयेत्, येन पलायिता भवेयुस्ते हिन्दुधर्म-विद्रोहि निर्दयं भारतं निगिरमाणाश्च हिंस्राः दुष्टश्वापदा इति ।

—श्रीकेदारनाथ शर्म्मा सारस्वतः
(सं० सा० समाज-मंत्री)



# "देववाण्यभिवन्दनम्"

[रचयिता-गोस्वामी श्रीनिवासशास्त्री
सी. पी. सागर-वास्तव्यः ]

अयि ! सौख्यकारिणि मौढ्यहारिणि,
देववाणि ! नमोऽस्तु ते ।
भवसिन्धुतारिणि कीर्तिधारिणि,
देववाणि ! नमोऽस्तु ते ॥१॥
अधिगम्य ते चरणालयान्तिक-
माप्नुवन्ति जना न किम् ?
अयि शारदेन्दु-तिरस्कृतद्युति
देववाणि ! नमोऽस्तु ते ॥ २ ॥
कलिकाल-कुत्सित-कल्मषोत्थ-
कुतर्क-कर्कश-बुद्धयः ।
कलयैव किं कलयन्ति ते किल
देववाणि ! नमोऽस्तु ते ॥ ३ ॥
अधुनाऽपि भारत-भूतले
भवदुद्भवो न तिरोऽभवत् ।
भवन्ति भावित भावनास्तव-
देववाणि ! नमोऽस्तु ते ॥ ४ ॥
त्वदृते वयोधनरूपजाति-
भिरन्वितोऽपि न शोभते ।
विधवाऽऽत्तकुङ्कमबिन्दुवन्ननु
देववाणि ! नमोऽस्तु ते ॥ ५ ॥
मनसोबलं वचसोबलं मतिजाड्य-
मात्मनि पाटवम् ।
हर, देहि, नाशय, धेहि, मे भुवि
देववाणि ! नमोऽस्तु ते ॥ ६ ॥
किमु "मा(श्री)निवास" जनोऽप्य-
पाङ्गनिरीक्षितो भविता क्वचित् ।
वरमेतमेव वृणे दयामयि,
देववाणि ! नमोऽस्तु ते ॥ ७ ॥

# ईश्वर-सन्देशः

[ निबन्धा—पञ्चानन्दश्चतुर्वेदः प्रयागस्थः ]

अयि सुहृदयाः, सुमनोहराः, सुसंघटिताः, सुपुरुषाः, भारतीयाः ! शृणुत मत्सन्देशम् ।

भारते भवतां सृष्टिं विधाय सामाजिकीं लौकिकीं शास्त्रीयामतिमनोहरां प्रजापालनपद्धतिञ्च शिक्षयित्वा सुखेनात्र क्षीर-सागरे स्वपिमि; किन्तु भवन्तः साम्प्रतं पूर्वोक्तां सर्वां क्रियां विहायाऽहम्मन्यमानाः सन्तः मत्कृतं कर्म च तिरस्कुर्वन्तो मदनुष्ठितां स्वानुजानां रक्षामकृत्वा कथं मां दुःखयन्ति ।

दृश्यते च सर्वे यूयं वृद्धानां वाक्यमनादृत्य स्वकीयेनैव कपोल-कल्पितेन शास्त्रेण कार्यं कुरुथ न युष्माकम् राज्ये सर्वे सुखिनः, नान्त्यजानाम् रक्षा, न शास्त्र-रक्षा, न मर्यादा-रक्षा, न स्त्रीणां रक्षा न गवादीनां रक्षा, सर्वथा त्राहि-त्राहि करुणो दीनः हृदय-विदारणः, आश्चर्य-जनकः, स्वरः श्रूयते कथमेतदर्थमेव तत्र युष्माकम् निवासः कृतः, एतदर्थमेव शास्त्रं निर्मितम्, एतदर्थमेव अल्पायासेनैव बहुपुण्यफलप्रदं कलियुगं विरचितं परस्परम् द्वेषेर्ष्या-क्रोध-मद-मात्सर्यच्छल-प्रपञ्चादीनां वृद्धिर्जायते ।

आधुनिकीं दशामालोक्य न स्वावताराय प्रयत्नं करिष्यामि । यदाऽन्त्यजानां रक्षा सर्वेषामुपकारायेति पूर्वोक्तं साधु चरित्रं स्फुटीभविष्यति तदा वैदेशिकानां संहत्यर्थमागमिष्यामि ।

युष्माकमेव निरुद्योगतो रामलीला निरुद्धा, युष्माकमेवानुत्साहेन गोवधः, नारी-हरणं, धर्मोपरि कुठाराघातश्च प्रतिदिनं प्रभवति । युष्माकमेव कृत्येन, वृद्ध-बाल-विवाहेनाऽसंख्या विधवा भारतेऽस्मिन्दरीदृश्यन्ते ।

यदि कटिबद्धा भूत्वाऽस्य दोष-निस्सारणे कृतप्रयत्ना भविष्यथ, तदा परित्राणायेत्यादि दर्शयितुमागमिष्याम्यन्यथाऽरण्यरुदितमिव रोदनं कुर्वन्तु नाहमागन्ता । स्मरन्तु मद्वाक्यम्—

"अस्ति चेदीश्वरः कश्चित्फलरूप्यन्यकर्मणाम् ।
कर्तारं भजते सोऽपि नह्यकर्तुः प्रभुर्हि सः" इति

## हेमन्तोपालम्भः ।

[ ले०—जगल्लालशर्म्मा शिष्यः, व्रजभूषण विद्यालयस्थः गया । ]

तुषारलेशं समवाप्य कान्ता
गता न का कान्तसदेशमाशु ।
युवा च हेमन्त ! न कां सदोषा-
ञ्चकार दोषाभिनवोढ-योषाम् ॥१॥

द्रुतं महासैन्यबलावलेपो-
विजित्य हेमन्त ! महारिपुस्त्वाम् ।
कृतावमर्षो नयशीलशाली
निजाधिपत्यं शिशिरो विधाता ॥२॥

## उपनिषद्गौरवम् ।

[ ले०—कुरुक्षेत्रीय पं० छज्जूरामशास्त्रि-कविरत्न-विद्यासा लायपुरीय-वारकृषिकुलस्थः । ]

प्राचीनकालादस्मदाचार्यचरणा वेदविषयं त्रि भागेषु विभजन्ते स्म, स च विषयविभागो व्याप ऽतीव विशुद्धश्च, तदनुसारेण वेदोपनिषत्स्व त्रिधैवाध्यात्मिक-तत्वस्य वर्णनमस्ति । अर्थ परमात्मनो जीवात्मनश्च तत्वज्ञानं वेदेषु त्रि व्यवस्थितं विद्यते कर्मोपासना-ज्ञानभेदात् एतत्प्रकारत्रयं काण्डत्रय-नाम्ना व्यपदिश्यते । ज्ञानकाण्डे परमात्म-जीवात्मनोर्वास्तविक-स्वरूप वर्णनम् । कर्मकाण्डे यज्ञसम्बन्धिकर्मकलाप विधानम् । उपासनाकाण्डे परमात्मनो भक्तिनि णम् । ज्ञानकाण्डस्य—'सपर्यगाच्छुक्रमकायमव्र मस्नाविरं शुद्धमपापविद्ध' मित्यादिकमुदाहरणम् कर्मकाण्डस्य—'सह नाववतु सह नौ भुनक्तु वीर्यं करवावहै तेजस्विनावधीतमस्तु माविद्विषा इत्यादि । ( एष कर्मोपदेशः पुरुषाम्प्रतीश्वरी उपासनाकाण्डस्य—"प्राणाय नमस्तस्मै यस्य मिदं वशे । यो भूतःसर्वस्येश्वरो यस्मि प्रतिष्ठितम् ॥" इति वैदिकसमये त्रीणि काण्ड मिलित्वा धर्मशरीरं कुर्वन्तिस्म । वस्तुतस्तु त्रयो भेदाः समयभेदाज्जाताः । ये मानवा यज्ञादि काण्डस्य विगुणत्वं क्षणिकफलदायित्वं वा विलो विरक्तास्ते भक्तिपथं चाश्रयन्तेस्म । एवं भक्ति नकर्मणां पृथक् २ मार्गाः संबभूवुः । सम्प्रद बहवः प्रचलिताः । ब्राह्मणग्रन्थेभ्यस्तु इदं ज्ञा यत्पुरा वेदाः कर्मकाण्डार्थमेवोपयुज्यन्तेस

...ना-दर्शनादिग्रन्था अपि कर्मकाण्डस्यैव परि-... इति सुव्यक्तम् । ब्राह्मणग्रन्थेभ्यः किंचिदर्वा-...लीना वेदसारभूता उपनिषदस्तु—'प्लवा ...दृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । ...येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरे-...न्ति ॥' इति मुण्डकोपनिषच्छ्रुत्या सुव्यक्तमेव ...ण्डमुपहसन्ति । ब्राह्मणग्रन्थेषु ज्ञानोपासन-...दृशी निष्फलता न प्रदर्शिता । उपनिषत्सु तु ...ण्डस्य महानेवायमुपहासः कृतो दृश्यते । ... सर्वा उपनिषदो नैककालप्रभवा न सहम-... तथापि 'ज्ञानादेव मुक्तिरिति प्रतिपादने ...मैकमत्यम् । ज्ञानकाण्डस्येव विस्तारो न्या-...कसांख्ययोगवेदान्तदर्शनादिषु दृश्यते । ...पर्यायमुपासनाकाण्डं रामायणभारतादि-... विकाशमाप । एवमेते त्रयोऽपि भेदा ...ता एव । कर्मज्ञानभक्तीनां भेदभावं निरस्य ...नीवद्भगवद्गीता त्रयाणामेकार्थसंपादने यत्नं ...। यतस्तया त्रयाणामेव सफलत्वं प्रसाध्य ...अपि त्रयः पुनर्मेलिताः । अत एव संप्रति ...गीता प्राणभूता हिन्दूनां मन्यते । प्रकृतमनुस-... सर्वासां भाषाणामुत्पत्तिस्थानं संस्कृतभाषा । ...धार्मिकसाहित्ये यद्वेदानां गौरवं तदेवोपनि-...षत्र नास्ति कस्यापि वैमत्यम् । विदुषां ...हंसी तूपनिषत्सरोवरे महान्तमेव मज्जना-...मते । वस्तुतस्तु निःसारे संसारे उपनिषद ...जन्यज्ञानाग्निना जन्मजराया जटिलं जालं ...सा अमन्द-ब्रह्मानन्द-रसभाजनं कुर्वन्ति ...सस्य स्थायीभावश्चमत्कारः स खल्वद्भुतो ...। उपनिषत्सु पदे पदे भासते । कस्यचिदुप-निषदामध्ययनेऽपि कृते यत्परमानन्दो न जायते स खलु 'नैष स्थाणोरपराधो यदेनमन्धो न पश्यतीति, न्यायादुपनिषदां नापराधः । पारिभाषिकशब्दानां बाहुल्यात्किंचित्काठिन्यमपि तासां भूषणमेव न दूषणम् । उपनिषदो न बुभुक्षितव्याघ्रेण तुल्या अपितु दुग्धदायिन्यो धेनवः । तदनुशीलनरूपसेवया परममृतं प्राप्यते, यत्पीत्वा नरोऽजरोऽमरो भवितुमर्हति । 'आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम्' इति न्यायात् ।

किंबहुना पाश्चात्य-विद्वद्भिरपि-काण्ट-शोपनहार-मोक्षमूलर-मुग्धानल-प्रभृतिभिरुपनिषदो धार्मिकसाहित्यस्य प्राणा मन्यन्ते । तैरुक्तम्, उपनिषद्भिर्वेदेभ्यो ज्ञानरत्नानि निष्कृष्य तैः सुवर्णमाणिक्यं मेलयित्वा एका निर्मला माला कल्पिता या भारतीयकण्ठे बद्धा सती विलक्षणां द्युतिं धारयति । भारतवर्षस्य पुरातनो महिमा यद्यपीदानीं नास्ति, तथापि संस्कृतभाण्डारस्य यावान्धार्मिकपुस्तकानामंशो लभ्यते, तस्य गम्भीरतां प्रवेष्टुमद्य यावदपि कश्चिदन्यदेशीयो विद्वान्न समर्थः । केचित्कथयन्ति यस्मिन्समये शिक्षायाः सभ्यतायाश्च पूर्णः प्रचारो भवति, तदैवौपनिषदं ज्ञानं वर्द्धते । वैदिकसमये कर्मकाण्डानुयायिन एव सर्व आसन् । उपनिषदामुच्चविचारांस्ते न जानन्ति स्म । यदा शिक्षायाः सभ्यतायाश्च विकाशोऽभूत् तदा महर्षिभिः स्वस्वगूढविचारा उपनिषद्द्वारा प्रकाशिताः । कणाद-गोतम-कपिल-बुद्ध-शङ्करादिभिः कर्मकाण्डस्य खण्डनं कृत्वा ज्ञानकाण्डस्य प्रचारः कृतः । परन्तु नैतत्सत्यं प्रतिभाति, यत उपनिषदां वास्तविको विचारविषयोऽद्वैतवादः । तं चाद्वैतवादं खया-

खण्डनं-सिद्धान्त-लेशाद्वैतसिद्धि-प्रभृतिग्रन्थेभ्योऽपि प्रोज्ज्वलरीत्या शतं वेदमन्त्राः प्रतिपादयन्ति । उपनिषदामाश्रयो वेदो यथा अनादिस्तथैवौपनिषदं ज्ञानमप्यनादि । उपनिषदामेव वाक्यानां समन्वयाय भगवता वेदव्यासेन स्वकीयं वेदान्तदर्शनं प्रणायि ।

किंचित्समयानन्तरं तस्योपरि बहूनि भाष्याणि संजातानि । तेषु सर्वेष्वपि शङ्करावतारभगवच्छंकराचार्यक भाष्यमतीव प्रौढं सचमत्कारं च वर्तते, परन्तु 'प्रायेण सामग्र्यविधौ नराणां पराङ्मुखी विश्वसृजः प्रवृत्ति' रिति न्यायेन तत्रैको महान् दोषोऽपि विद्यते । स चायं यत् शाङ्करभाष्यं केवलं शास्त्रीयमेव न, किन्तु कथापरकमपि । भगवान्-शङ्कराचार्य एकमद्वैतपक्षं स्वीकृत्य तत्समर्थने सर्वोपनिषदो वेदान्तदर्शनं भगवद्गीतां च लापयामास । शांकरभाष्यपाठकस्य चित्ते स्वभावादिदमङ्कितं भवति यच्छङ्कराचार्यः स्वबुद्धिप्राबल्येन स्वपक्षे लोकानाकर्षति न निष्पक्षपातमुपनिषदोऽन्यांश्च ग्रन्थान् व्याख्याति । एवमेव श्रीरामानुज-श्रीमाध्व-श्रीनीम्बार्क-श्रीवल्लभादिभिराचार्यैः स्वस्वभाष्यैः सम्प्रदायस्यैव दाढर्यं कृतं न निष्पक्षपातं किंचिद्व्याख्यातम् । अस्तु, तावत्प्रकृतमनुसर्तव्यम् । उपनिषदां गौरवे बहूनि कारणानि सन्ति । तत्र दिङ्मात्रं प्रदर्श्यते । प्रथमं कारणमुपनिषदां भाषासारल्यं, यथा—'वायुर्यथैको भुवनं प्रविष्टः रूपं रूपं प्रतिरूपो बभूव। एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ ( काठकः ) ॥ पश्य कीदृशी सारल्यस्य परमा सीमा । अथ च—

'त्रयो वेदा एत एव' वागेव ऋग्वेदो मनो यजुर्वेदः प्राणः सामवेदः, ( बृहदारण्यकम् ) । ऋग्वेदस्य कार्यं स्तुतिर्वाग्रूपत्वात् । यजुर्वेदस्य कर्मसम्पादनं मनोरूपत्वात् सामवेदस्य जीवात्मपरमात्मनोः सम्बन्धस्थैर्यकरणं प्राणरूपत्वात् पश्यैक एव दृष्टान्तः कथमिव गम्भीरं प्रश्नं स्पष्टयति । द्वितीयं कारणं केन-कठ-प्रश्न-छान्दोग्य-बृहदारण्यक-प्रभृतय उपनिषदो ब्रह्मज्ञानरूपं तीव्रमौषधं कथारूपिणि मधूनि मेलयित्वा पाययन्ति । इति

"म०म० पं० श्रीशिवदत्तशर्म-दाधिमथानां

## संक्षिप्त-परिचयः ।

( रचयिता—जयपुर-राजगुरुकथाभट्टवंश्य -नन्दकिशोरशर्मा साहित्याचार्यः, सरस्वती-भवनं, काशी )।

बदरीलालतनयो गोदादेव्यास्तु गर्भजः ।
शिवदत्तो दाधिमथस्त्यक्त्वाऽस्मान्दिवं गतः ॥ १ ॥
श्रीमज्जयपुराधीश-विद्यानिलय-रक्षिताः ।
विद्याः सर्वा अधीत्यैव वाचस्पतिसमप्रभः ॥ २ ॥
शब्दशास्त्रे प्रगल्भत्वं प्रातिनिध्यं च पाणिनेः ।
अनल्पकल्पनाजालैरभजद्गुरुसन्निधौ ॥ ३ ॥
प्रसारं तत्र विद्यानां कृत्वा लब्ध्वा च गौरवम् ।
दुर्गाप्रसाद-सविधे काव्यमाला-प्रकाशकः ॥ ४ ॥
स्वातन्त्र्यं तत्र लब्ध्वा यो ग्रन्थोद्धारमथाकरोत् ।
वेङ्कटेश्वर-यन्त्रेऽपि रङ्गनाथस्य सम्मतः ॥ ५ ॥
टिप्पणीर्ग्रन्थरत्नेषु चक्रे भाव-परिप्लुताः ।
ज्यौतिषेऽपि दृढज्ञानाच्चन्द्रसूर्योपरागयोः ॥ ६ ॥

च गणनां धीमानर्वाचीनविधानतः ।
माधवसिंहाय दर्शयामास दानिने ॥ ७ ॥
का-टिप्पणीकर्ता भाष्यभाषणनागराट् ।
प्राच्यविद्याप्रधानाध्यापकोऽभवत् ॥ ८ ॥
द्वर्षपर्यन्तं बालांश्चक्रे सुपण्डितान् ।
सुयशःप्राप्य जराजीर्णकलेवरम् ॥ ९ ॥
-त्रयोदश्यां देवनद्यास्तटे शुभे ।
त्यक्त्वा शाश्वतं तच्छिवसायुज्यमाप्तवान्॥ १०॥

## ूज्यपूजाव्यतिक्रम-परिणामः ।

सुपस्थितेषु जगद्गुरुश्रीशङ्कराचार्यरामानु- र्यवल्लभाचार्यचरणेषु, वङ्ग-गुर्जर-काठियावाड- महाराष्ट्रादिसर्वप्रान्तीयसुप्रसिद्ध-महामहोपा- पाध्यलङ्कृत-विद्वद्वरेषु सर्वमान्यजनसमू- पीदमद्वितीयमखिलभारतीय-ब्राह्मण-महा- नं समयद्रव्यव्ययापेक्षया किमप्यन्यत् न ति यत् विश्वासार्हसमाचारपत्रैः सर्वत्र द्घोष्यते निन्दा च क्रियते। तत्र को पाठकानां मनसि सहजमाशङ्का समुत्प- बहुत्र पत्रेषु तु परिषत्सञ्चालकानां पक्ष- दोषा अस्य कारणत्वेन समुपस्थापिताः । परमस्मन्मते तु पूज्यपूजाव्यतिक्रम- लम् । तद्विचार-सभायामेकदिने पञ्चानन- महोदयैः स्वाधिकारमनालोच्य पूज्यचर- जगन्मान्यानां धर्माचार्याणां जगद्गुरुश्रीशङ्क- कुर्तकोटिस्थानां तत्प्रेषित-सभासदस्यानाञ्च- मानः कृतस्तस्येदं फलम् यदिदानीं सर्वे र्यमपि सम्मेलनं निन्दन्त्येव । अन्यच्च अनन्त- तिरिणां सभा-सञ्चालकानामनुचितमशोभनं च वक्तव्यम् । यत् "ते इतो ( विचार-सभातः ) गच्छन्तु येषां सभानियमेषु वैमत्यं वर्तते" इति । किमेतदपि न ज्ञायत एभिर्यत् वीतरागभयक्रोधैः ऋषिमहर्षिभिः प्रणीतेषु सनातन-धर्म-नियमेषु वैमत्यं सम्भवति, ( यद्दुदूरीकरणायैव ब्राह्मणमहा- सम्मेलनं सम्पन्नम् ) तत् किं रागद्वेषान्वित-युष्मत्- सदृश-मनुष्यकृतनियमेषु तन्न सम्भवति ? ब्राह्मण- महासम्मेलनन्तु भवतां गृहं नासीत् (!) भवद्भिरनु- चितभाषणेन पूज्यपण्डितानामवमानः कृतः । अतः तस्य फलमनुभूयताम् । सर्वत्र निन्दा ! घृणा !! किं बहुलेखनेन ? "प्रतिबध्नाति हि श्रेयः पूज्यपूजा- व्यतिक्रमः ।" इति ।

—त्र्यं. वि. मोहोरीरः ।

## उत्कण्ठा ।

[रचयिता—केदलायोपाह्वः श्रीनिवासशर्मा रम्भापुरमठस्थः]

नाकीश-मौलि-मणि-राजि-विराजिताऽङ्घ्रेः
काश्याः पवित्र-चरितस्य विभोश्शिवस्य
शोकार्ति-हारि-पद-पङ्कज-रेणु-राशा—
वाशास्महे विलुठितुं वयमल्पपुण्याः ॥ १॥

पापारि-वारि-परिपीय सुरापगाया—
स्तापाऽपनोदनपटुं गिरिशं प्रणम्य
पाकारि-सेवित-पदा-महमन्नपूर्णा—
मासेव्य धूत-कलुषः सुकृती कदा स्याम् ॥२॥

परम-पुरुष-पाद-विनि-स्सृता
पतित-पावन-चारु-गुणाऽन्विता ।
मुनि-चकोर-शिवङ्कर-चन्द्रिका
शिवकरी क्व नु स्यात्सुरदीर्घिका ॥३॥

# सम्पादकीयम्

## हा ! अनभ्रे वज्रपातः

" यच्चिन्तितं तदिह दूरतरं प्रयाति ।
यच्चेतसापि न कृतं तदिहाभ्युपैति ॥ "

अयि प्रिय सुहृदः सुप्रभात-पाठकाः ! कम्पते करः, शिथिलं शरीरम्, विदीर्यते हृदयं न प्रचलति लेखनी, शीर्य्यते स्वान्तम् प्रियवयस्यस्य गिरीश शर्मणो दिवङ्गमन-वृत्तान्तमावेदयितुम् । न मतिः प्रत्येति, येन सहाधुनैवाशितम्, स्थितम्, हसितम्, विलसितम्, स एकपद एवान्तर्हितः स्यादिति ? वयं चकितचकिता एव प्रतीक्षामहे । किं वयस्यो ऽस्मान् विहाय गमिष्यति ? न ह्येवं सम्भवति । हा ! कास्मान् जहासि ! कुह सर्पसि ! किमितोऽपि स्वर्गे सुख-सन्दोहः ? नहि संस्कृत-साहित्य-समाज-सुहृत-सह-वास-सुख-तुलां निःश्रेयस-सुखमधिरोढुमर्हति इति निश्चितं वेत्तु । हा ! हा ! स्वप्नोऽयम्, आहो माया उत मतिभ्रमोऽस्माकम् ? किं वयम्प्रलपामः " यत् गिरीशशङ्कोऽस्मासु नास्तीति ? अरे दुर्दैव ! कराल काल !! नैवं स्यात् सहि कायेनास्मान् विहायापि स्वस्मृत्या क्षणमपि न जातु हास्यति । न कदापि तेन वयं वञ्चिताः । स कथमेकपद एवैवं वैरस्यमाच-रिष्यति । हा ! यो हि, अस्मान् हतोत्साहानपि स्व-मञ्जुल-मधुर-भाषया सुधाप्लावितान् करोति स्म, स किमनिगद्यैव शाश्वतिकपदाय प्रस्थितो भविष्यति ? नैतत् स्वप्नोऽपि सम्भाव्यते । हा ! हन्त !! मपि ममैतत् प्रलपितम् न स कर्णे करोति । दीर्घनिद्रं प्रसुप्त एव, दीर्घ-प्रस्थानं प्रस्थित सोऽन्तिम-स्वासं निरस्वसीदेव । वज्रहृदय ! सं म्भयात्मानं न स पुनरावर्त्तते । हा ! संस्कृत-साहि समाज सर्वथा वञ्चितोऽस्येव तेन महात्मन अहो न बध्नाति धैर्यं धिषणा, किं ब्रूमः प्रियसुहृदो कारणत्यागम् ? कमुपालभामहेऽधुना ? कालो बल यान् किल न विमृशति कर्तव्याऽकर्तव्यम् । गतहाय एव प्रिय-सुहृदो हिन्दूविश्वविद्यालये न्यायशा ध्यापकत्वमुपश्रुत्य समेत्यास्माभिर्निर्णीतमासीद् न्यायकुसुमाञ्जलि-वात्सायन-प्रभृतीन् सर्वानपि रूह-न्याय-ग्रन्थान् सरल-संस्कृतटीकया समलङ्कृ शास्त्रिग्रन्थ-मालायां स्वल्पतरशुल्केनैव प्रकाश ष्यामो, येन सर्वेषामपि तदध्यायिनां स्यात् सौलभ्य मिति । तत् सर्वमपि स्मृतिपथमुपगतं भृशं दुनो चेतः । संस्कृत-साहित्य-समाजस्य व्यवस्थापकत्व मुररीकृत्य सर्वमपि सुप्रभातीय-प्रबन्धकृत्यं स्वशि स्येव प्रियसुहृदा गृहीतमासीत् । गृहस्वामिने सर्वम भारं समर्प्य यथा कुटुम्बिनः सुखं विहरन्ति तथै वयं प्रियसुहृदि सं० सा० समाजीयम् सर्वमप्युत्त दायित्वं निधाय सुखिनो मुदिता आस । य खलु समाजीयाधिवेशनं भवति स्म, तदोपवेशनादि

त्तिकर्मत आरभ्य प्रतिपन्नकर्मान्तं सर्वमपि- कुटुम्ब-स्थविरवत् प्रियसुहृदैव सम्पाद्यते तत्सर्वमपि स्मारं स्मारमिदानीं न निरुध्यते- ता। पुरतश्च तदीयानाम् अनाथानां कुटुम्बानां विलोक्य व्यथतेऽन्तरात्मा क एषास्पालयितेति । हन्त !! तदीयकुटुम्बेषु—हतभाग्या जरठा चतस्रो दीना दुहितरः, द्वौ कोमलौ कुमारौ, तपस्विनी भार्या अहर्निशं विलपन्ति न नयनाम्बु तेषाम् । नास्ति कोऽप्याधारस्तेषा- स्य। हा ! कस्य दुष्कृतस्याऽयं परिणाम ? यत् पुष्पन्नेव तरुरशनिना विनिहतः, आरामं दग्धवान्। हा ! कले ! ध्रुवं तवैवेदं म्, यत्र मृष्यसि सुकृतशालिनं परोपकृति- बुधजनं स्वसाम्राज्ये। अयि सुप्रभातपाठकाः! प्रियसुहृदो गिरीशशर्मणो न्यायाचार्यस्य श्रीमतामेव कृपाकटाक्षैकजीविनः सज्जा- श्रतो तदीयानाथ-कुटुम्बदशां श्रुत्वा विगलि- करणाः ये केऽपि यत् किञ्चिद् द्रव्यादिकम् कुटुम्बसाहाय्यार्थं प्रेषयितुमभिलषेयुः, तत्स- महामहोपाध्याय-पण्डित-देवीप्रसादशुक्लक- वर्तिनाम्ना सुप्रभात-कार्यालये प्रेषयितुं तथा- प्रेषणार्थं प्रेरयितुमर्हन्ति। इदानीं सर्वेभ्योऽपि तत्कुटुम्बरक्षार्थं दत्तं दानं महत्पुण्यमु- त्तुमलमिति सर्वानेव प्रतिभाति। यथा तेषां विपत्समुद्रे मज्जतां तृणसाहाय्यलाभ- विधीयतां तत्र भवद्भिः श्रीमद्भिरिति साञ्जलि- मानस्य शोकाकुलस्याश्रुधारानिमिलितनयन- मपि नाग्रे सरति लेखनीति विरम्यते ।

* * *

## शोकोच्छ्वासः ।

अत्र काश्यां मार्गशीर्षकृष्णचतुर्दश्यां महाम- होपाध्यायविद्वद्वराणां श्रीमतां शिवदत्तशास्त्रि वर्याणां लवपुरीय वास्तव्यानां स्वर्गवासोभूदिति नितरां विषादस्थानमस्माकम्, नूनं संस्कृत सर- स्वत्या, दुर्भाग्यविलसितञ्चेदम् । विद्वद्धुरी- णानान्तेषां लोकोपकारिण्या साहित्यसेवया अध- मर्णा वयं तत्पारिवारिक-जनानां सन्निधौ समवेदनां प्रकाशयन्त स्तच्छान्त्यै परमात्मानं प्रार्थयामहे ।

* * * *

## शारदापीठस्थाः श्रीशङ्कराचार्याः ।

काश्या मस्यां समागतानां पश्चिमाऽम्नायश्री- शारदापीठस्थानां जगद्गुरुशङ्कराचार्य-श्रीराज राजेश्वराश्रम-स्वामि-पादानां श्री-काशीपण्डित- सभातोऽभिनन्दनं पूजनञ्च संजातम् । यत्र सर्वेऽपि महामहोपाध्याया दण्डिस्वामिनः श्रेष्ठिनश्चोप- स्थिता आसन् । संस्कृत-साहित्य-समाजद्वारा च नगराङ्गणे(टाउनहाल) जनसङ्घसम्भृते महता समारो- हेणाचार्यपादानां समादरणं शुभाभिनन्दनमभूत् । काशीस्थ-गुर्जरसमित्यापि समारोहपूर्वकं पूजनं कृतम् । काशिक-ब्राह्मण-सम्मेलने च, आचार्य- वर्य्याणां सनातनधर्मस्य दार्ढ्यसम्पादनाय विदुषां परस्परमैकमत्येन कार्यकरणाय च भावपूर्ण उपदेशोऽभवत् । श्रीमदाचार्यपीठद्वारा च काशीस्थानां सर्वेषामेव दण्डिस्वामिनां सवस्त्र- युगलं भिक्षाकृत्यं सम्पन्नमम् । विशिष्टानां विदुषां वैदिकानाञ्च सर्वेषां सदक्षिणः सत्कारः समपद्यत । अत्यत्रश्रेष्ठिभिश्च स्वस्वालयेष्वाचार्याणां पूजन

मुपदेशश्रवणं च कृतम् । एवमागतेष्वेतेषु शारदापीठस्थभगवत्पूज्यश्रीशङ्कराचार्यपादेषु इदानीं काश्यां समीचीना धर्मचर्चा प्रजासु धर्मोत्साहवृद्धिरासीदिति प्रसीदत्यस्माकं चेतः ।

* * * *

## गीता-डायरी ।

प्राप्तिस्थानम्—गीताप्रेस गोरखपुर मू० ।-)

इयं डायरी हिन्दु ( आर्य ) जातेस्तु प्राणस्वरूपैव प्रतिभाति गीतापाठं कुर्वतोऽनया गीता सम्पूर्णाऽपि वर्षाभ्यन्तर एव कण्ठस्था भविष्यति । यतो प्रतिपत्र मत्र गीताश्लोकद्वयं मुद्रितमस्ति। इमां डाय गृहीतवतः प्रतिदिनं गीतापाठो दैनिक-वृत्त-ले नञ्चेति "एकक्रियार्थद्वयकृत्प्रसिद्धा" लोकोक्तिश्चरितार्थ्यमेति । वयं तु अभिलषामो, सर्वेऽपि भारतीया अन्येऽपि गीतानुरागिणो विशे संस्कृतज्ञा इमामेव डायरीं गृह्णन्तु बहुज्ञात विषयसम्भृतायाः शोभनकर्गजादिविभूषिता अप्यस्याः मूल्यमतीव स्वल्पमस्ति ।-) आणकमि

# संस्कृत-समाचाराः

## सुप्रभातस्य 'गिरीशाङ्कः' ।

अयि आर्य्याः ! सुप्रभात-पाठकमहाभागाः ! हन्त ! संस्कृत-साहित्य-समाज-संस्थापकेषु सुप्रभात-सञ्चालकेषु चान्यतमः काशीस्थविद्वन्मण्डलीमण्डनायमानः, संस्कृतसाहित्यसेवकानामादर्शभूतः श्रीमान्-पण्डित—गिरीशशुक्ल—न्यायाचार्यमहोदयः अकाण्ड एव विनश्वरं शरीरमपहाय कैलाशवासमनुतिष्ठन् संस्कृतज्ञ-समाजमपारे शोकपारावारे सममज्जयदिति हृदयविदारकं दैवदुर्विलसितं कस्य वा सहृदयस्य स्वान्तं न नितान्ततान्तमातनोति ?

तत्तस्यालौकिकशक्तिशालिनो महानुभावस्य स्मृतौ सुप्रभातस्य 'गिरीशाङ्कः' पौषमासान्त एव सत्वरं प्रकाशमेष्यति । अतोहि तस्य महात्म विषये यत्किमपि गद्यं पद्यं वा निवापाञ्जलिरिव भवद्भिः सप्ताहाभ्यन्तर एव कार्यालये प्रेषणीयम् ।

भवद्भिस्तद्विषये स्वीयमनोभावं तज्जीवनविष काणां विषयाणाञ्च यथाज्ञानं वर्णनं स्वल्पतरं महद्वा यावद्वा सत्वरमवश्यञ्च प्रेषणीयमिति किमप्यधिकं वक्तुं पारयामि भग्न-हृदयो, भागधेयोऽहमिति निवेदयते ।

शोक-विकलः—

विन्ध्येश्वरीप्रसाद-शास्त्री

'गिरीशाङ्क'-सम्पादकः ।

# राष्ट्रिय-सप्ताहावसरे

## कलिकातानगर्य्याम्

## त्रिचत्वारिंशत्तम ( ४३ ) वर्षीय-भारतीय-राष्ट्र-महासभायाः

### ( कांग्रेस ) महाधिवेशनम् ।

[ सूचयिता—साहित्य-शास्त्री पं० श्रीसरयूप्रसादपाण्डेयः ( द्विजेन्द्रः ) काव्यतीर्थः ]

यं हि राष्ट्रिय-महासभा, भारत-प्रधानभूतायां कलिकाता-नगर्य्यां गतराष्ट्रियसप्ताहे महता समारोहेण निर्विघ्नं समपद्यत । तत्र समन्तात्प्रतिनिधि-राजनैतिक-धार्मिक-सामाजिकनेतारो विद्वांसो ...का राजानश्च सभाजनाः समागता आसन् । ...अपरे द्वीपान्तरागताः प्रतिनिधयोऽपि सम्मि-...त्ययमत्र विशेषः ( ? ) तत्र श्रीमन्तः पण्डित-...लाल-नेहरूमहोदया राष्ट्रसभायाः सभापतिपद-...ः ।

...थ यथावसरन्ते सभापतिस्थानमलङ्कृत्या-...जनसमाकुलायां राष्ट्रिय-महासभायां महता ...र्येण निखिलकृत्यजातं सुसम्पादितवन्तः । ...तं कार्यविवरणसमूहं सुर-सरस्वती-समुपास-...कानां सुप्रभात-पाठकानां कृते सारभूतं सूच्यते ।

तत्रादौ प्रथमदिने—माङ्गलिकसंगीता-...नन्तरं श्री जे० एम० सेन-गुप्तमहोदयानां सार...गर्भितं भाषणं सञ्जातम् । ततः पुनरपि संगीतपूर्वकं ...नायकानां श्रीमतां पं० मोतीलाल-नेहरूमहोदयानां सम्भाषणं समपद्यत । तदैव राष्ट्रभाषा-...सम्मेलनसभापतीनां श्रीगांधी-महोदयानामप्योजः-...शिक्षाविलसित-सम्भाषणानन्तरमद्यतनं कृत्यं ...समगात् ।

द्वितीयदिने—श्रमिकाणां सङ्घसम्पादनार्थं सभामण्डपे युवकप्राणभूतानां श्रीमतां पं० जवाहिरलाल-महोदयानां सभापतित्वे श्रमिकदल-सम्मेलनं सञ्जातम् । ततो महासभायां ( कांग्रेसे ) देशान्तरादागतान् शुभ-सन्देशान् श्रावयद्भिर्महास-भाप्रधानसचिवैः, सभापतिमहोदयैरन्यैश्च स्वनाम-धन्यैर्नेतृवर्गैः समुपयुक्ताः प्रस्तावाः प्रस्ताविताः सर्वसम्मत्या ते स्वीकृताश्चेति ।

तृतीयदिने—अद्यापि पूर्ववत् देशकाला-नुसारिणो पूर्णस्वतन्त्रतायाः साधनभूता बहवः प्रस्तावाः प्रस्ताविता वादि-प्रतिवादिभ्यां विनिर्णीताः संशोधिताश्च स्वीकृताः । तदैवागामिन्या राष्ट्र-महासभाया ( कांग्रेस ) अधिवेशनं पञ्चाम्बु-प्रान्तीय-लाहौर-नगरे भविष्यतीति निमन्त्रणं स्वीकृतम् ।

चतुर्थदिने—महासभासमाप्तिवासरे सुनि-र्णीतेषु प्रस्तावेषु श्रीगांधीप्रमुखानां वृद्धानामौपनि-वेशिकस्वराज्यसम्पादनाय, पं० जवाहिरलाल-प्रमु-खानां नवयुवकानां पूर्ण-स्वतन्त्रतालाभायेति पक्ष-द्वये सञ्जाते, वर्षं यावत् सर्वसम्मत्या पूर्वतन एव पक्षः स्वीकृतः, तदसिद्धौ द्वितीयपक्षसाधने प्राण-पणेनापि प्रयत्नो विधेय इति निर्णीतोऽयं सिद्धान्तो महासभायाः । तत्रैव गोरक्षण-महासभायाः सभा-पतिभिः श्रीमदनमोहन-मालवीयमहोदयैः गोजाति-रक्षयैव स्वराज्योपलब्धिरित्युच्चैरुद्घोषितम् ।

## सनातनधर्म-सभा-समाचाराः ।

काश्यां 'कार्तिकमासे' सूर्यग्रहणावसरे पण्डित श्रीमदनमोहनमालवीय-महोदयानां सुप्रबन्धेन जगद्गुरूणां श्रीमच्छङ्कराचार्य-श्रीभारतीकृष्णतीर्थ-स्वामि-महोदयानां सभापतित्वे अखिलभारतवर्षीय-सनातनधर्म-महासभाया विशिष्टाधिवेशनमभूत् । तत्र देशकाल-शास्त्रानुसारिणो बहवः प्रस्तावाः प्रस्ताविताः स्वीकृताश्च । ततो मार्गशीर्षमासे दशाश्वमेधघट्टे महता समारोहेण अ० भा० सनातनधर्मसभायाः स्थायि-सभापतयः श्रीमन्तो मालवीयमहोदया महारुद्रयागं जपादिकं च बहुभिः श्रोत्रीयैर्ब्राह्मणैः कारयित्वा स्वयञ्च विधाय, प्रायः शतद्वय-संख्याकान् सर्वानेव वर्णान् सप्रणव-मन्त्रैर्दीक्षितवन्तः । पुनश्च तैः कलिकातानगर्यां परमपवित्र-श्रीभागीरथीतटे महति जनसम्मर्दे सवभ्योऽप्यधिकारिभ्यो मन्त्रदीक्षा प्रदत्ता । तत्र च तद्विरोधिनो महामहोपाध्याय श्रीलक्ष्मणशास्त्रि-प्रभृतयोविद्वांसो मालवीयैः सह तद्विषयकं शास्त्रार्थं विधाय निजपराजयरूपं यथोचितं पुरस्कारं संगृह्य पराहता बभूवुरिति कलिकातास्थ-हिन्दी-पत्रादि-भिर्ज्ञायते ।

श्रूयते च, तत्र विजय-श्रियमधिगत्य सोत्साहाः श्रीमालवीयमहोदया जगन्नाथपुरी-महाराष्ट्रोज्जैनी-हरिद्वार-सिन्ध-पञ्जाब-प्रयागादिषु सर्वतीर्थ-क्षेत्रेषु मन्त्रदीक्षादानोद्देशेन भ्रमणं करिष्यन्तीति । बङ्गदेशस्था महामहोपाध्याय-श्रीकामाख्यानाथ-तर्कवागीशप्रभृतयः सर्वेऽपि महान्तो विद्वांसः श्रीमालवीय-मतं समर्थितवन्तः ।—एकस्तटस्थः संवाददाता ।

## श्रीकाशी-पण्डित-सभा ।

अस्याः सभाया द्वाचत्वारिंशत्तमवार्षिकमहोत्सवः श्रीकाश्मीराधिपतेर्दशाश्वमेधीय-विशालभव… श्रीमतां महामहोपाध्यायानां पं० श्रीमुरलीधर… महोदयानां सभापतित्वे महता समारोहेण समपद्य… तत्रेश्वरवन्दनपूर्वकं श्रीमन्त्रिमहोदयानां सभाकृत… प्रकाशनानन्तरं पूज्यपाद–पं० श्रीपद्मनाभशास्त्रि… महोदय-प्रभृतीनां काशीस्थविदुषामुपदेशपूर्णभा…णान्यभूवन् । वैदेशिकेभ्यः काशीस्थेभ्यश्च योग्य…मविद्वद्भ्यः परीक्षोत्तीर्णेभ्यश्छात्रेभ्यः क्रमशो मा…पत्रप्रमाणपत्रादि-वितरणानन्तरं ससाधुवादं स…विसर्जनमभूत् । तत्र मानपत्रग्रहीतॄणां कतिपये…विदुषान्नामानि उपाधयो यथा—

श्रीकविराज-प्रतापसिंहमहोदयः—रसायनाचार्य… श्रीरायसाहब जगन्नाथप्रसादः—चिकित्सकचूडाम… श्रीबालमुकुन्दशर्म्मा—हिन्दी-साहित्यरत्नम् । श्रीराजपुरोहितवैद्यनाथपारीखः —पौरोहित्यरत्नम्… श्रीहरगोविन्दशास्त्री—पाणिनीय-व्याकरणाचार्य… श्रीशिवशङ्करवैद्यराजः–भिषगाचार्य्यः । श्रीरेवाशङ्क… शास्त्री—सद्विद्यावागीशः । श्रीमोतीरामशास्त्री–… विद्यावारिधिः । श्रीहिम्मतिरामशास्त्री—भिषक्चू…डामणिः । श्रीकृष्णारामशास्त्री—याज्ञिकमार्तण्डः… श्रीगुलाबरायशास्त्री ( हाथी )—विद्यावारिधिः… श्रीजटाशङ्करशुक्लः—वेद-विशारदः । श्रीमन्नूभ… (सोलिसीटर )—विद्यासागरः । श्रीमल्लभाई वै… महोदयः—भिषग्रत्नाकरः । श्रीमोहनलालमहोद… —धर्मभास्करः। श्रीबनमालीपांड्या—धर्मधुरन्ध… श्रीवसनजी महाशयः—स्वधर्मभूषणम् ।

त्यादि बहवो विद्वांसश्छात्राश्च सन्ति येषां ति स्थानसङ्कोचास्यज्यन्ते ।

—श्रीगोपालशास्त्री त्रिपाठी
(स० मन्त्री-काशी-पण्डित-सभायाः)

## श्रीगीता-जयन्ती ।

यानीय दर्शन-विद्यालये काव्यतीर्थोपाधि-वि-नां श्रीमतां पं० सरयूप्रसादशास्त्रिणां सभा-ति श्रीगीता-जयन्ती-महोत्सवो महता समा-समपद्यत । तत्र श्रीगीता-पूजनं तत्पाठं र्तनादिकञ्च कृत्वा विदुषां छात्राणाञ्चाप्यने-ताविषयकं भाषणमभूत् । अन्ते सभापति-यानां भाषणे "गीता सुगीता कर्तव्या किमन्यैः स्त्रैः" इत्युच्चैः श्रुत्वा प्रतिश्रुतं तत्रत्यैः गीताकण्ठस्थकरणायेत्यादर्शोऽयं समेषां नानामिति—

ी-'दर्शन-समितेः'
मीकुण्डम्, काशी ।

निवेदयति—
ठाकुरप्रसादशर्मा

## संस्कृत-संवर्द्धिनी-समितिः ।

थानीय-सेन्ट्रल-हिन्दू-स्कूलनामधेये विद्यालये ध्यापकानां विद्यार्थिनाञ्च समुत्साहेन रिक-संस्कृत-संभाषण—परिज्ञानाऽभिवृद्धये र्शीर्षमासे 'संस्कृतसंवर्द्धिनी' नाम्नी एका स्तैः संस्थापिता । तस्याः प्रारम्भिकाधि-श्रीमतां पं० कालीप्रसन्नचक्रवर्ति-महोदयानां तित्वे महता समारोहेण समपद्यत । तत् कारिणोऽपि निम्ननिर्दिष्टनामानोऽध्यापकाः म्मत्या निर्णीता अभूवन् ।

सभापतिः—कविरत्नं पं० श्रीकालीप्रसन्नचक्रवर्ती बी. ए. मन्त्री—साहित्य-शास्त्री पण्डित-श्रीजगन्नाथप्रसाद त्रिपाठी एम. ए., स० मन्त्री—काव्यतीर्थ पं० श्रीसरयूप्रसादशास्त्री ( द्विजेन्द्रः ) विशारदः ।

अन्ते सर्वसम्मत्या निश्चितमिदं यदागामिनि समित्यधिवेशने व्याख्यान-विषयो निबन्ध-निषयश्च "वर्तमान-संस्कृत-शिक्षासरणिः समीचीना न वा" इति ।

स० मन्त्री—
"संस्कृत-संवर्द्धिनी-समितेः"
( सेन्ट्रल-हिन्दू-स्कूल, काशी )

## विचित्रा-चिकित्सा

एकोऽद्वितीयो वैद्यो ऽपस्मार-(मिर्गी) प्रस्तान-र्शादिरुजान्वितान् जनाननायासेनैवापगतरोगान् करोति । अर्शरोगप्रपीडितं जनं नवभिर्दिनैरेव कर्त्तन-(आपरेशन) दुःखेन विनैव स्वस्थं करोति । तत्राजीर्णादिरुजानां का कथा ? श्वेतकुष्टकासश्वास-( दमा ) मपि वर्षद्वयाभ्यन्तर एवापगतं करोति । दीनेभ्यो जनेभ्यो न किञ्चिद् गृह्यते, किन्तु सम्पत्ति-शालिभ्यस्तच्छक्त्यनुसारेण पारितोषिकं गृह्यते । विशेषं जिज्ञासमानैरत्र पत्रव्यवहारो विधेय—इति ।

दर्शन-विद्यालयः,
लक्ष्मीकुण्डम्, काशी ।

—सरयूप्रसादपाण्डेयः
( द्विजेन्द्रः )

## वार्षिकोत्सवः

रायदुर्गीय-श्रीहरनन्दनराम-रुइया-संस्कृत (कालेज) महाविद्यालयस्य द्वादशो वार्षिकोत्सवो महर्षिकल्पस्य श्रीनीलकण्ठन्यायाचार्यस्याध्यक्षत्वे महता समारोहेण सम्पन्नः। बहूनां विदुषां शिक्षाविषये संस्कृतभाषाया महत्त्वविषये च ललितललितानि भाषणान्यभूवन्। महाविद्यालयस्य प्रधानाध्यापकेन श्रीहनुमत्प्रसादशास्त्रि साहित्याचार्येण वार्षिकविवरणं श्रावितम्। अन्ते परीक्षोत्तीर्णेभ्यश्छात्रेभ्यः पारितोषिकं वितीर्य्य ससाधुवादं सभाविसृष्टिरभूदिति निवेदयति—

व्रजमोहन सिंघानिया।
(प्रबन्धकः)

# समालोचना-सारः

## साहित्य-दर्पणस्य 'विमला'

अपूर्वा (हिन्दी) टीका।

संस्कृत-साहित्य-शास्त्रे साहित्य-दर्पणनामा ग्रन्थो विषय-साकल्येन, प्रतिपादन-शैल्या, परमतालोचनरीत्या चातिशेते एवैतद्विषयकानितरग्रन्थानिति सप्रमाणं वक्तुमुद्यताः स्मः। प्रणेता ग्रन्थरत्नस्यास्य न केवलं संस्कृतभाषायामेव, अपि तु 'अष्टादशभाषावारविलासिनी-भुजङ्गतां' दधानः साहित्य-विद्याया वाचस्पतिः, इति तत्कृतिरस्यैवावगम्यते।

साहित्य-दर्पणस्य प्रचुरासु टीकासु तर्कवागीश-श्रीरामचरणभट्टाचार्यकृता 'विवृति' रेव स्वगुणगरीयसीति परमप्रेयसी साहित्य-पण्डितानाम्। इदानीं तस्यैव साहित्यदर्पणस्य लक्ष्मण... (लखनऊ) स्थित—'मृत्युञ्जय-महौषधालयत... प्रकाशिता विद्यावाचस्पति-साहित्याचार्य-श्रीशा... ग्रामशास्त्रिकृता 'विमला' ऽऽख्या हिन्दी-टी... विचित्रैव प्रतिभाति चक्षुष्मताम्।

अस्यां हिन्दीटीकायामितराभ्यः संस्कृतटीका... भ्य एतावानेव विशेषो यदत्र स्वोपजीव्यविवृ... कार-श्रीतर्कवागीश-महोदयैः सह सघृणमधिक्षि... दर्पणकाराः। अनेन साहित्याचार्येण दर्पणका... सर्पत्वेन कल्पित इति श्रुत्वा कस्य सहृदय... मनसि सहसा क्रुधो घृणायाश्च समुद्रेको भविष्यति?

'संस्कृतविद्वांसो टीकाममां दृष्ट्वा तदधि... प्रकारमवश्यं चिन्तयेयुरिति सप्रश्रयं निवेदनम्... संस्कृत-साहित्यसम्मेलनेऽप्येतादृश-गालिप्रदान... न्दिलायाष्टीकाया विचारो यदि भवेत्, ... महानुपकारः स्यान्नव्यानां शिक्षितानाम्।

साहित्याचार्येणानेन 'अलंकार-कल्पद्रुम... 'अर्वाचीन-साहित्य-विवेचना' चेति निबन्ध... 'मौलिक' मपि स्वमेधया समुद्भावितम्। त... रालोचनाऽत्रैव 'सुप्रभाते' क्रमशः प्रकाशं गमि... तदवलोकनेन सर्वेऽपि ज्ञास्यन्त्येव साहित्याचार्य... 'विद्यावाचस्पतित्व' मिति नाधिकमिह सम... वदामः।

—किशोरीदासवाजपेयी शास्त्री

## राष्ट्रभाषाभूषणम् ।

-श्रीगोपाल शास्त्री, दर्शनकेशरी, साहित्याचार्य्यः

...तत् पुस्तकं हिन्दीभाषायां विद्यते । संस्कृत- हिन्दीज्ञाने नितरामुपकारजनकम् । सर्वैरपि ...रैतद् व्याकरणम् पठनीयम् । एतेन हिन्दी ... निबन्धलेखनेऽचानुवादादिज्ञाने महत्सौकर्यं । मूल्यम्—आणकषट्कम् ।=) मार्गव्ययः =)

## ...र्यचरितम् वा ऋतुचरितम् ।

...दत्तपन्तः, साहित्याचार्यः, व्याकरण-काव्य-तीर्थः ।

...लविद्या-विषयकं नूतनं महाकाव्यम् । ...तिसरलम्, भारतस्य विभिन्नदेशानां नदीनां ... ऋतूनां चात्र परिचयो कविना नवीनया ...समुपवर्णितः । गोलविषये नूतनं संस्कृत- ...यम् । सर्वथा द्रष्टव्यम् । मूल्यम्—१) ...ः पृथक् ।

## सनातन-धर्म-संरक्षकः ।

उपदेशदर्पणस्य प्रथमसंख्या ।

...ता—एकः काशीस्थः सनातनधर्मा विद्वानाचार्यः

...कमिदं हिन्दीभाषायां श्रुतिस्मृति-पुराणेति- ...लेखादिप्रमाणाधारेण शुद्धिभोजनादिव्य- ...ये लिखितमस्ति । विषयेऽस्मिन् बहुज्ञता- ...र्त्तमान-सामाजिक-धार्मिक-प्रगतिप्रति- ...ः खण्डनमण्डनकामैश्चावश्यं गृहेलिममिदम् ...णकद्वयस्य =) चिटिका प्रेष्या ।

## सचित्रम् सामुद्रिक-रहस्यम् ।

ले०—श्रीकालिकाप्रसादशर्म्मा, राजज्योतिषी,

अद्भुतमिदं ग्रन्थरत्नम्, हिन्दीटीकासहितम्, अनेकचित्रविभूषितम्, नरनारीणां शुभाशुभज्ञाने नितरामुपयुक्तम्, संस्कृते सर्वथा नवीनमेव । एतेन हस्तरेखाणां गुरुं विनैव सम्यक् परिचयो भवति । मूल्यम् १।) मुद्रा ।

## रतिरहस्यम् (कोकशास्त्रम्)

एष प्राचीनो ग्रन्थः श्रीमहाकवि-कोकोक-विरचितः । अस्मिन् कामशास्त्रसम्बन्धिन्यः सर्वा वार्ताः, पद्मिनी-शङ्खिनी-चित्रिणी-हस्तिनी-प्रभृतीनां स्त्रीणां भेदाः, एवं चत्वारः पुरुषभेदाः, स्त्रीणां वशीकरणस्यौषध्यः, मन्त्राः, तत्तद्देशीयानां स्त्रीणां पुरुषाणाञ्च लक्षणानि, तेषां संयोगाः, आलिङ्गन-चुम्बनादीनां भेदाः, तेषां विशेषाश्च अन्ये च बहवो ज्ञातव्याः कामशास्त्रीयाः विषयाः सन्ति । एष ग्रन्थो नितरां सुप्रसिद्धः प्राचीनश्च विद्यते । एतस्यैका प्रतिः सर्वैरपि स्वसविधे नूनं संस्थापनीया । मूल्यम्—मुद्राद्वयम् ।

## महाकवि बाणभट्टः ।

ले:—भू० पू० सुप्रभात-सम्पादकः श्रीकेदारनाथ शर्म्मा

हिन्दीभाषायामयमपूर्वो निबन्धः । अत्र बाणभट्टस्य जीवनविषये महत्वपूर्णा, मननीया च गवेषणा वरीवर्ति । छात्राणां कृते नितरामुपकारकोऽयं निबन्ध-बन्धः । मूल्यम् =) मार्गव्ययः -)

### सर्वेषां-प्राप्तिस्थानम्—

मैनेजर, सुप्रभात कार्यालयः, बनारस-सिटी ।

अतीत—१९८१-८२-८३-८४ संवत्सराणाम्

# सुप्रभातम् ।

## प्रथमवर्षस्य—१९८१

शोभनबन्धैः पुस्तकाकृत्या निबद्धम् । मूल्यम—६) षण्मुद्राः । मार्गव्ययः पृथङ्नास्ति ।

## द्वितीयवर्षस्य—१९८२

प्रथमाब्दवदतिमनोहरबन्धबद्धम् । मूल्यम्—५) पञ्चमुद्राः । मार्गव्ययः पृथङ्नास्ति ।

## तृतीयवर्षस्य—१९८३

पूर्ववद् बद्धम् । मूल्यम् २॥) सार्द्धमुद्राद्वयम् । मार्गव्ययः पृथक् ।≡) ।

## चतुर्थवर्षस्य—१९८४

अतिमनोहरमिदम् निबद्धम् । मूल्यम् ३॥) सार्द्धमुद्रात्रयम् । मार्गव्ययः पृथक् ॥)

### प्रकीर्णाङ्काः

प्रकीर्णाङ्काः स्वल्पा एव विद्यन्ते । येषामुपार्श्वे कस्यचनाङ्कस्याभावो भवेत्ते नूनं शीघ्रतां कुर्वन्तु ।

प्रथमवर्षस्य प्रत्येकाङ्कस्य मूल्यम्—।) आण चतुष्टयम् । अङ्काः—आदर्शः, १, ४, ६, ११, १२

द्वितीयवर्षस्य—प्रत्येकाङ्कस्य मूल्यम्—=) आणकत्रयम् । अङ्काः—२, ३, ५, ६, ७, ८, ११, १२ ।

तृतीयवर्षस्य प्रत्येकाङ्कस्य मूल्यम्—=) आण कद्वयम्, अस्य सर्वेष्यङ्काः सन्ति ।

चतुर्थवर्षस्य प्रत्येकाङ्कस्य मूल्यम्—।) आण चतुष्टयम् । अस्य सर्वेष्यङ्काः सन्ति ।

प्रकीर्णाङ्कानां मार्गव्ययेनिर्धारितमूल्यतः पृथगेव जिघृक्षुभिस्त्वरा कार्या । पत्रव्यवहारसङ्केतः-

### व्यवस्थापकः—

सुप्रभात-कार्यालयः, काशी

( Benares City)



Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

रीशाङ्कः

माघ १९८५ वैक्रमाब्दे ।

पञ्चमवर्षे Vol. 5 | February 1929. | दशमोऽङ्कः No. 10.

# सुप्रभातम् ।

संस्कृत-साहित्य-समाजस्य मुखपत्रम् ।

विबुध-विहग-वाद्यैराह्वयद् भाग्यभाजम्,
विलसतु भुवनेऽस्मिन् सर्वतः 'सुप्रभातम्'

तिमिरततिमुदस्यद्भेदतारा विलुम्पन्-
नयदपि सुरभाषाभाषि जागर्तिमुच्चैः ।



[ एतेषां मार्गशीर्षशुक्लपञ्चम्यां सं० १९६३ वै० जन्म, मार्गशीर्षपूर्णिमायां सं० १९८५ वै० मृत्युः । ]

सम्पादकः—

श्रीविन्ध्येश्वरीप्रसादशास्त्री ।



अस्याङ्कस्य मूल्यम् ॥)

[ २४७ पृष्ठावशिष्टम् ]

महोदयानां मार्गशीर्षपूर्णिमायां गिरीशपुरङ्गमनमभूदिति परं विषादस्थानमस्माकम् ।

एतेषां गुरुवराणां देशोद्धारप्रणयिनां ममोपरि सुमहान् प्रेमातिशय आसीदित्यसमये वज्राघातो न कदापि व्यपगतः स्यात् । नूनमिदानीमखिले राजनैतिकसामाजिकधार्मिकविप्लवमये भारतवर्षे हीनदीनायाः सजलनैत्रैः स्वीयान्नेतॄनन्वेषयन्त्या देववाण्या दुर्भाग्यविलसितमिदम् ।

एतेषां संस्कृतसाहित्यप्रभाकराणामस्ताचलगमनेन नितरां परितप्ताः, तत्पारिवारिकजनानां समीपे हार्दिकसमवेदनां प्रकाशयामः । जगद्रक्षाशिक्षाविचक्षणं गिरिजापतिं गिरीशमेवं प्रार्थयामो यद् गिरीशशुक्लवियोगजशोकसंतप्तहृदयाननाथान् सुकुमार-कुमारी-कुमारान् सनाथान् करोत्विति ।

अजयगढ़राज्यम्, ३—२—२६ | भवदीयः— लल्लाभैयाशुक्लः

## शोकाश्रुविन्दवः !

हा ! वाणि ! दार्शनिकि ! हन्त ! निराश्रयासि
काशि ! त्वमप्यहह ! शोकरता न भासि ।
आशीविषोपमितदारुणकालदष्टो
नष्टो गिरीश इह चेद् युवयोरधीशः ॥

—श्रीरामनारायणदत्तपाण्डेयस्य ।

न्यायं सावयवं किलोभयमथ श्रीपाणिनीयं तथा,
सांख्यं काव्यमधीत्य वेदममलं वेदान्तमल्पैर्दिनैः ।
जैनानामपि तर्कवादमखिलं दृष्ट्वैव योऽध्यापिपत्,
अन्यत्राऽपि च मालवीयरचिते सद्विश्वविद्यालये ॥
यस्याऽऽसीद् विरुदावली प्रवचने लेखे च शक्तिः शुभा,
छात्राणामपि हृच्चमत्कृतिकरी प्रीतिः किलाऽध्यापने ।
सादृश्यं वत भारतीयविदुषां गोष्ठीषु नासाद्यते,
यातोऽस्मानपहाय शैवपदवीं वन्द्यो गिरीशः सुधीः ॥

गिरीशशुक्लस्य सदान्तरात्मा, सायुज्यमभ्येतु महेश्वरस्य ।
सुतौ तदीयौ चिरजीविनौ स्तां, समाप्नुयाच्छान्तिमलं कुटुम्बः ॥

—श्रीसत्यनारायणशास्त्रिणः

अवगत्य दिवं गतं बुधं नयविज्ञं च गिरीशपण्डितम्
नितरां हि निपीडिते श्रुती नयने वाष्पयुते च ते च मे
शिथिलीभवतः करावुभौ लिखितुं नोत्सहते च लेखनी
हृदयं च विदीर्य्यतेतरां वयमुच्छ्वासहताः हतासवः ॥

—श्रीवासुदेवद्विवेदिनः ।

वाराणसीनाथनिबद्धभावः साहित्यपाथोजविकासभानुः ।
राष्ट्राभिमानी किल कर्म्मयोगी हंहो वतागात् क्व गिरीशशर्म्मा ॥
वैशेषिकन्यायकलासु विज्ञो वेदान्तविचापि पुराणवेत्ता ।
षड्दर्शनाचार्य्यतया प्रसिद्धो गतः परात्मा क्व गिरीशशर्म्मा ॥

—श्रीगोपालदत्तत्रिपाठिनः ।

किं भो दैवमशोभनं, दिविषदो
रुष्टा, ग्रहा निन्दिताः ।
देवेन्द्रः किमुताऽप्रसन्नहृदयः,
श्रान्तश्च वाचस्पतिः ॥
कर्माऽन्धः किमु धर्मराजनृपति-
र्विष्णुः सुषुप्तश्च किम् ।
कालः प्राणहरो 'गिरिश' विदुषो
केनाऽपि नो वारितः ॥

—श्रीकृष्णवल्लभशास्त्रिणः ।

गिरीशशुक्लामलशीतरश्मि,
जग्राह कालो विकरालराहुः ।
शोकान्धकारावृतमस्ति विश्वं,
कथं नु जीवेम वयं चकोराः ॥

—श्रीमहाबलशर्मणः ।




विध-विषय-विभूषितम्, अद्वितीयम्, सचित्रम्, संस्कृत-मासिक-पत्रम् ।

-वर्षे | सौर—माघे १९८५ वैक्रमाब्दीये— | दशमोऽङ्कः ।

# गिरीशः ।

आर्याऽधिसङ्गाधिकसुप्रसन्नः समुल्लसद्भूतिविभूषिताङ्गः ।
सुबोधशाली विबुधोपजुष्टः पदे परस्मिन् रमते गिरीशः ॥ १ ॥

अहीनसंसर्गितया प्रसिद्धो वृषानुरागेण भृशं मुदं यन् ।
न्यायैकनिष्णातमतिः परात्मा पदे परस्मिन् रमते गिरीशः ॥ २ ॥

अनन्यसामान्यगुणोपपन्नः प्रसन्नचित्तो विलसत्सुवृत्तः ।
हृत्तापहृत्तापरमाप्तशीलः पदे परस्मिन् रमते गिरीशः ॥ ३ ॥

विराजमानो द्विराजसङ्गाद् गङ्गाजलोल्लासिकलेवरश्रीः ।
कलाविलासालयतामुपेतः पदे परस्मिन् रमते गिरीशः ॥ ४ ॥

सदागमाऽऽशंसितसत्प्रभावो विद्याऽतिविद्योतितचारुचेताः ।
शिवान्वितः शङ्करणैकतानः पदे परस्मिन् रमते गिरीशः ॥ ५ ॥

—श्रीदेवीप्रसादशुक्लः 'कविचक्रवर्त्ती'
( महामहोपाध्यायः )

# श्रीगिरीशशुक्लो न्यायाचार्य्यः ।

ले०—श्रीगोपालशास्त्री, त्रिपाठी ।

दर्शनशास्त्रस्य प्रगाढपाण्डित्यजुषानेन विदुषा मम सङ्गतिः सुप्रभातप्रकाशानन्तरं कियत्सु दिवसेषु गतेष्वेवाभूत् । पूर्वन्तु नैयायिकोऽयं रीवाँ-राज्यान्तर्गतकिञ्चिद्ग्रामाभिजनः काशीवास्तव्यः सरयूपारीणब्राह्मण इत्येतावानेव संक्षिप्तः परिचय आसीत् । प्रसङ्गतो रथ्यायां सङ्गतयोः कदाचिदावयोः केवलान्वयिलक्षणे कियत्कालं विचारेण परस्परालाप-लक्षणः सम्बन्धोऽप्युद्भूत आसीत् । यदा सुप्रभातस्य जन्मदः पं० केदारनाथशास्त्री सारस्वतमहोदयो मत्पार्श्व आगत्य वयं किञ्चित् पत्रं प्रकाशयितुमिच्छामस्तत्र भवन्तोऽपि साहाय्यमाचरन्तु, इति व्यजिज्ञपत्, तदा गुरुपुत्रोऽयं किञ्चित् सार्वजनीनं कार्यं कर्तुमभिलषत्यतोऽस्य साहाय्यमवश्यं विधेयमिति मनसि निश्चित्य "अधुना यावत् के भवतां सहायका जाताः" इति मया पृष्टास्ते श्रीविन्ध्येश्वरीप्रसादशास्त्रिणो नामागृह्णन् । ततश्च मम स्वीकृतिपत्रं गृहीत्वा ते पत्रप्रकाशनादिव्यवस्थितये स्वगृह एवैकां समितिमाकारयामासुः । समितौ तत्राहं, पण्डितश्रीविन्ध्येश्वरीप्रसादशास्त्री, पं० केदारनाथशास्त्री सारस्वत इति त्रय एवास्म इत्येव तावदहं स्मरामि । तत्र सुप्रभातमिति पत्रनामास्तु इत्येभिः प्रस्तावितम् । तदेव च सर्वसम्मत्या स्वीकृतमभूत् ।

अत्र काश्यां के विद्वांस एवम्भूताः सन्ति येऽत्र साहाय्यमाचरिष्यन्तीति विचारणायां पण्डित देवीप्रसादशुक्ल-कविचक्रवर्ति-पं० गिरीशशुक्ल-दामोदरशास्त्रि-महोदयप्रभृतीनां विदुषां नामान्युपस्थितान्यभूवन् । प्राथमिको व्ययः कथं प्रचलिष्यतीति विचारे स्वपार्श्वादेवायमावश्यको व्ययः कर्तव्य इति सर्वैर्निश्चितम् । संक्षेपत ईदृशं प्राथमिकमल्पविचारं विधाय काशीस्थविदुषां साहाय्याय साहिकोपस्थितये एका सूचनाऽस्माभिः प्रकाशिता ।

यत्र काशिकराजकीय-संस्कृत-पाठशाला-व्याकरणाध्यापकानां श्रीमतां श्रीरामभवनोपाध्यायमहोदयानां सभापतित्वे पत्रप्रकाशनप्रस्तावः स्वीकृतः । ततश्च श्रीमन्तोऽस्माकं मान्याः श्रीकविचक्रवर्तिमहोदयाश्च सम्पादकत्वार्थं प्रार्थिताः स्वस्वीकृतिमददुः, तेषां स्वीकृतिदानेन द्विगुणोत्साहा वयं प्रकाश्यमानानां लेखानां यथाकथञ्चित्परस्परत एव संग्रहं विधाय शीघ्रमेवादर्शं मुद्रापयितुं सन्नद्धा अभूम । तत्र प्रधानो व्यापारो मम प्रियवयस्ययोः श्रीकेदारनाथशास्त्रि-श्रीविन्ध्येश्वरीप्रसादशास्त्रिणोरेवासीत् । मया मुख-बद्ध-श्लोकं कियतो लेखांश्च समर्प्य नाम... ततः प्रूफसंशोधनादिव्यापारे साहाय्यमनुष्ठितमासीत् । इत्थमादर्शप्रकाशनानन्तरं सुप्रभातजन्मदात्रैव पण्डितगिरीशशुक्लानां मया परिचयः कारितः । तदानीन्तैः सहालापादिना मम मनसि य आनन्द उत्साहो मनोभावोद्गमश्चासीत् स किं मया क्षुद्रलेखन्या व्यक्तो भविष्यति ? प्रथमत... तेषां महात्मनां न्यायाचार्याणामपि सतां हिन्दीभाषानुरागं 'सरस्वती'—प्रभृतिपत्रग्राहकत्वं विलोक्याहं चकित-चकितोऽभवम् । अहो ये पण्डिता हिन्दीभाषां 'भाखा' इति शब्देन व्यव...

तत्रैवैषामियाननुरागः ! हन्त ! इमेऽवश्यमाधुगति-प्रतिस्पर्द्धिनो देशकालात्मविदो महोदयाः एभिरस्माकं सं०-सा०-समाजीयं कार्य्यं प्रचलिष्यति। इति मे मनसि भावोदयोऽभूत्। कूलमेव ते तदानीमेवोत्थाय सुप्रभातसाहासन्नद्धा भूत्वा स्वपरिचितैः कियद्भिः परिव्राडलेश्वरैः द्रव्यं दापितवन्तः। यन्मेलयित्वा ऋणमपि आदर्शाङ्कव्ययोऽस्माभिर्निःशेषितः। भूति तु त एव महात्मानः सर्वमपि सुप्रभातभारं स्वशिरसि गृहीत्वा रात्रौ दशवादनं यावत् लयकृत्यं कुर्वन्तोऽभूवन्। स्वभावस्तेषामीसरलो गम्भीरश्चासीद् यत् कदाचन मन्त्रणा परस्पर-सम्मतिवैषम्येऽपि महता धैर्येण तं प्रकाशयन्ति स्म येन सर्वेषामपि सन्तोषः स्म। किम्बहुनाऽस्माकं मित्र-गोष्ठीषु मत्तो कनीयानपि स मया वर्षीयानिवावगम्यत। ह यदैव तेषां सङ्गतिः सञ्जायते स्म तदामतुन्दिलितयोरावयोः कालातिपातोऽप्यगणित स्म। यदापि मे मनसि कोऽपि गृहचिसांसारिकव्यग्रतया वा विरसो विकार उद्यन्नवाहं तत्पार्श्वे गत्वा तदपाकृतिमन्वभवम्। नानकार्य्ये तेषां कीदृङ्मनोयोग आसीदिति काभ्यन्तर एव संस्कृत-साहित्यसमाजे छात्रसङ्घप्रवर्तन-वाचनालयोद्घाटन-परीक्षाभावन-शास्त्रिमण्डल-ग्रन्थ-माला-संस्थापकैरेव द्योत्यते। सनातनधर्म-पण्डित-सभानेऽपि तेषामेव प्राधान्यमासीत् प्रथमवर्षे प्रधानमन्त्रिणोऽभवन्। चक्रवर्तिमहोदयानान्तु पहस्त एवासन्। यत् किमपि कविमहोदयाः कथयन्तोऽभूवन् तत्सर्वमपि नतमस्तका एव ते गृह्णन्तोऽभूवन्। तदाज्ञयैव ते वर्षद्वयं सुप्रभातं सम्पादितवन्तः। तेषां सम्पादनकाले साधु सुप्रभातसहायकानां वृद्धिरभूत्। एवं सर्वमपि सार्वजनीनकृत्यं कुर्वतां तेषां स्वकुटुम्बभरणार्थं द्रव्यसंचयचिन्ता स्वप्नेऽपि नाभूत्। बहुशोऽस्माभिर्निवेदितास्ते एवमेवाकथयन् यत् "कुसूल-कुम्भीधान्यो वा त्र्याहिको द्व्याहिकोऽथवा जीवेद्वापि शिलोञ्छेन श्रेयानेषां परः पर इति मनोराज्ञया ब्राह्मणानां धनसञ्चयनं गर्हितम्। ब्राह्मणानान्तु सुरभारतीसमुपासनैव परमं कर्तव्यन्तत्त्वहं करोम्येव। अग्रेऽपि सं० सा० समाजसेवयैवाहं स्वकालं नेष्यामि" इति। मध्ये मध्ये काशीस्थपण्डितानां सं० सा० समाजत औदास्यं विलोक्य यदा यदा वयं हतोत्साहा अभवाम, तदा त एव महात्मानोऽस्मान् सोत्साहान् कुर्वन्तोऽभवन्। कियानेव कालो गतो यत्र मया सह तेषां परामर्श आसीत् यत् कुसुमाञ्जलिग्रन्थस्य न्यायवात्सायनस्य चान्येषामपि दुरूहन्यायग्रन्थानां साधु सरलसंस्कृतभाषया हिन्दी-भाषया च विभूषितं मनोहरं प्रकाशनं स्वल्पमूल्येनैव शास्त्रि-मण्डल-ग्रन्थमालातो भवतु येन तदध्यायिनामन्येषाञ्च हिन्दी-भाषाभिज्ञानामपि स्यात् सौलभ्यमिति। बालानां सदाचारोन्नतौ तेषां महदासीदवधानम्। एतद्धियैव ते सदाचारसोपाननामकमेकं शिक्षोपनिषत्पूर्णं पुस्तकं बाल-शिक्षार्थं स्वयं विलिख्य प्रकाशितवन्तः (यच्च मुद्रितं विद्यते ≈) आणकत्रयेण सुप्रभातकार्यालयतो मिलति) धर्मशास्त्रेऽपि तेषां तादृगेवासीत् प्रवेशो यथा दर्शनशास्त्रे। कियानेव कालोऽभूत्, देवलस्मृतिं

स्वहस्तेनैव प्रतिलिपितो विलिख्य ते मह्यं राष्ट्रभाषया समलङ्कृत्य प्रकाशनायाददुः, ताञ्चाहं तत्कथनानुसारेण साधु सम्पाद्य प्रकाशयितुं यतमान एवासम्, तावदेव ते कुटिलेन कालेन वियोजिताः। हा! हन्त कोपलब्धि र्भाविनी तादृशस्य स्मितमुखस्य वयस्यस्याधुना, यो हि मम कथने तादृगवधानं दास्यति? एकदा कथानुकथनप्रस्तावे विजयादोषं मन्मुखाच्छ्रुत्वा स तत्कालत एव तत्सेवनाभ्यासमजहात्। ताम्बूलभक्षणाभ्यासमपि मत्कथनेनैव हसिमानं नीतवानासीत्। किं कथयामि प्रियसुहृदा वञ्चिता वयं पङ्गु-कूण-मूक-प्राया जाताः। न दृश्यते कोऽपि तादृक् कर्णेहत्य कार्यकर्ता प्रासायामपि वैफल्यपरम्परायां द्विगुणितोत्साहेन स्वव्यापारं विधाता। ईदृशं सर्वगुणसम्पन्नं स्वादस्योत्साहसमेधितमन्त्रणसमितिसदस्योत्साहं प्रियवयस्यं गिरीशशर्माणं स्मारं स्मारं न शुष्यति नयनाम्बु, न वध्नाति, धैर्यं धिषणा, न विश्वसिति चेतस्तेषां परलोकवासम्। अयि सुप्रभातपाठकाः! अधुना सुप्रभातसंचालनभारो भवद्भिः सर्वैरपि विसज्य वहनीयो येन स्यान्मम प्रियवयस्यस्य परलोकगतस्याप्यात्माप्यायित आनन्दितः प्रसादितः सुप्रभातोन्नतिं समीक्ष्य। श्रीमन्तश्च तदीयप्रियतरं सुप्रभातं समुन्नयन्तस्तद्गुणमुक्ताः स्वात्मानं कृतकृत्यं कुर्वन्तोऽस्मानपि सोत्साहानेव विधास्यन्तीति विरमति बहुविक्लव-वाग्व्यापारादिति।



# गिरीश-स्मृतिः।

कलिकवलितचित्तं धर्म्मधैर्यादिहीनं
मलिनविषयमग्नं जीवलोकं विलोक्य॥
जननमरणजालच्छेदने लम्पटः किं
गिरिशचरणरेणौ संविलीनो गिरीशः!॥
साफल्यं शुचिता विचारपटुता विद्याप्रचारोद्यम
शास्त्रेषु व्यसनं विनम्रवचनं सौजन्यजन्यत्तमा॥
धर्म्मे तत्परता गुणैकरुचिता तर्कप्रियत्वं च तत्
हाहा! पण्डितकेसरिंस्त्वयि गते क्व स्थानमासाद

त्वदेकपुत्रां जननीं जरातुरां
सुतास्तनूजौ गृहिणीं तपस्विनीम्॥
सदानुरक्तं स्वजनं च निर्दयं
निपात्य दुःखाब्धिजले कुतो गतः?॥
तव विरहकृशानु र्ध्यानमात्रेण दीप्तो
बुधवर! हृदयं नो दुःसहज्वालजालैः॥
ज्वरयति ननु यादृग् भीषणं सन्ततं तत्
प्रकटयितुमजीवा लेखनी नो समर्था॥

—श्रीजीवनकृष्णभट्टाचार्य्यः

# शोकोच्छ्वासः

(ले० श्रीगिरिजादत्तत्रिपाठी—काशी-हिन्दूविश्वविद्यालय

अयि सुप्रभातपाठकाः!

न भवेदविदितो भवद्भिर्न्यायाचार्याणां पवि गिरीशशुक्लशर्मणां मरणवृत्तान्तः। स्मृत्वा चेमं नि दूयते मच्चेतस्तथापि तदीयाशेषगुणैर्भृशं प्रणो स्तदीयगुणवर्णने प्रवृत्तोऽस्मि। ते हि अ

वयसि काशीराजकीयसंस्कृतविद्यालयीयन्या-
र्यपरीक्षामुत्तीर्य काश्यामेवच्छात्राध्यापनेन
पाटवं प्रकटय्य अनन्तरं सुप्रसिद्धगोयनका-
लये न्यायशास्त्रमध्यापयितुं प्रवृत्ताः । तत्र
लक्षणप्रतिभया, प्रगाढपाण्डित्येन च सर्वान्
यन्तः परमां ख्यातिं लब्धवन्तः । व्यतीतेऽब्दे
लयशिरोमणि-काशी-हिन्दूविश्वविद्यालयान्तर्ग-
विद्याविभागीयन्यायविभागं सुशोभितवन्तः
पर्णेन । शास्त्रपाण्डित्यं, व्युत्पत्तिवैचित्र्यं
हारपाटवं च तेषां स्मृत्वा खिद्यते नितान्तं
नम । दृश्यते हीदं वैचित्र्यं, यत् संस्कृतभारती-
सकेषु विद्वत्सु प्रायो व्यवहारानभिज्ञत्वमेव
, परमेतस्य नियमस्य व्यभिचार एवासी-
विद्वद्वरेषु । आजीवनमन्तेवासिभिः सार्धं
निष्कपटमाचारमाचरितवन्तः, येन तेषां
तद्गता एव जाताः । ते हि काशीहिन्दू-
विद्यालयीय-संस्कृतच्छात्रसमित्याः सभाप-
निर्वाचिता आसन् तत्सदस्यैः । परमियं
तभागिनी समितिः, अचिरादेव प्रियविरहिता
। नासीदिदमस्या भाग्ये प्रियसुखं भोक्तुम् ।
तच्छात्रसमित्या अमूल्यमिदं रत्नं तिरोबभूव,
सदस्याश्च दुःखार्णवे गाढं निमज्जन्तः पारं
समर्थाः कर्तव्यविरहिता एव जाताः । हा
! दुर्दैव ! किमिदमाचरितं त्वया, अकाल
यो वज्रः प्रहारितः !!

—❧*❧—

# शोकोद्गारः ।

सहसैव गिरीश हे सखे !
  क नु मित्राणि विषादसागरे ॥
विनिपात्य दृशोरगोचरो
  धृतमौनव्रत ! साम्प्रतं गतः ॥ १ ॥
तनयाः करुणास्पदं न किं ?
  सुहृदो वा प्रतिकूलवर्तिनः ॥
यदुपेक्ष्य चिराय साम्प्रतं
  नरलोकं किल मुक्तवानसि ॥ २ ॥
अहह ! क्षणमप्ययं ! तवा-
  ऽकृतिरेषा मनसोऽपयाति न ॥
ननु धैर्यमियं बुधावलि-
  स्तव शोकेऽद्य दधातु कीदृशम् ॥ ३ ॥
हतदैव ! तवैव चेष्टितं
  ननु मन्ये कथमन्यथाऽधुना ॥
विबुधोऽल्पवया अदृश्यतां
  गतवानित्यभिधत्स्व कारणम् ॥ ४ ॥

जगन्नाथशास्त्री होशिङ्गः,
( साहित्याचार्यः )

# ममाशाबन्धो विच्छिन्नः ।

रात्रिर्गमिष्यति भविष्यति सुप्रभातम्
  भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ।
इत्थं विचिन्तयति कोशगते द्विरेफे
  हा ! हन्त ! हन्त ! नलिनीं गज उज्जहार !!

अनेन गजेन इव करालकालेन गिरीश-तनु-
निपातेन तदाश्रिता ममाशालता मूलत एव विच्छि-

न्नेति शोकमोहाकुलस्य बालस्य दग्धहृदयस्य हृदयहारिणी कथा श्रूयताम् । कोशगतस्य द्विरेफस्येव ममापीदानीमवस्था सञ्जाता । गिरीशोदितज्ञानप्रकाशेन गमिष्यति मेऽज्ञानम्, भविष्यति मे सुप्रभातम्, हसिष्यति मे मुखश्रीरित्याशास्तद्दिनात् पुष्पायमानाः प्रलयकालवायुना सहसैव विलयं नीताः ।

एकदा संस्कृत-साहित्य-समाजाधिवेशने तद्व्यवस्थापकस्य गिरीशशुक्लमहोदयस्य श्रुतिमधुरं सुमनोहरं सुभाषणमश्रौषम् । तत एव 'क इमे' इति सञ्जातकुतूहलः, तेषां सं०सा० समाजव्यवस्थापकत्वेन विश्वविद्यालयीयन्यायशास्त्राध्यापकत्वेन न्यायशास्त्रस्याद्वितीयपण्डितत्वेन च प्राप्तपरिचयः, उत्पन्नाशाङ्करः, तान् द्रष्टुं सदैव प्रयत्नशीलः, अयं मन्दभाग्यो दुर्दैववशात् यावत् तदीयं दर्शनमपि कर्तुं नाशक्नोत् तावदेव करालकालेनानार्यमाचरितं ममाशास्थानं निर्दयं विच्छिन्नमिति मे दुर्दैवदुर्विलसितम् ! हा ! रोदिति हृदयं, मुञ्चतः कवोष्णाश्रूणि नेत्रे, व्रजत्यन्धकातरतां दृष्टिः, शैथिल्यं याति देहबन्धः, किमधिकम् विनष्टयष्टिः पंङ्गुरिव, आश्रयविहीनोऽन्ध इवेदानीमहं सञ्जात इति हा ! हतोऽस्मि । कथमधिकं लिख्यतामधुना ! न चलति मे लेखनी ।

अन्ते, कालकवलीकृतशरीरस्य गिरीशशुक्लमहोदयस्य परमात्मा स्वपादभूमौ परमं स्थानं दद्यादिति स्वीय मौक्तिकतुल्याश्रुमालया तं दयाघनं परमात्मानं संपूजयन् अहं सविनयं साग्रहं च प्रार्थये—इति ।

— श्यं० त्रि० मोहरीरः (काशी विद्यापीठस्थः)

# दुर्दैवदुर्विलसितम् ।

अहह ! प्रतिभागुणैर्गरिष्ठं
सरसं सूरि"गिरीश"शर्मशुक्लम् ।
करुणा-विकलो विवेक-शून्यो
विकरालः कवलीचकार कालः ॥ १ ॥

समयोचितसत्समव्यवस्था-
स्थितिसम्पादनकौशलाद् "गिरीशः"
यदहो ! उदजीवयत् तदद्या-
ऽऽश्रयहीनं नहि भाति "सुप्रभातम्" ॥

अद्य "संस्कृतसाहित्य-समाजः" शोकसागरे ।
पतितो याति वैक्लव्यं "गिरीशेन" वियोजितः ॥

हाहा ! हन्त ! विधे ! गिरीशपदभू-
सौभाग्यमभ्युन्नतम्
यस्त्वं प्रापितवान् "गिरीश"मधुना
स्थानेऽस्ति तच्चेष्टितम् ।
किन्तु न्यायविरोधि दुःसहमिदं
दुश्चेष्टितं, यत्किल-
न्यायाचार्यसुधीस्त्वया कवलितो-
ऽकाले हठान्निर्दयम् ॥ ४ ॥

अहह ! सहजप्रेमाधारप्रसादविराजितो-
त्तरपदलसद् "देवी-विन्ध्येश्वरी" समुपेक्षया
क्व नु विरसतां चित्ते धृत्वा "गिरीश !"गतं त्वया
तदियमथवा दैवी लीला न ते किल दूषणम् ॥

अनन्तरामशास्त्री वेताल
( साहित्याचार्यः )

# कालचेष्टितम् ।



-सीतारामशास्त्री जोशी एम्. ए. (साहित्याचार्यः)

दि नित्यमनित्येन निर्मलं मलवाहिना ।
शः कायेन लभ्येत ततो लब्धतरं नु किम् ॥
(सुभाषितम्)

नया सुभाषितोक्तरीत्या न्यायाचार्यपण्डित-शशुक्लानां शरीरविनिमयो जात इत्यत्र कश्चित्सन्देहः । अधुनास्माकं ते यशःश- प्रतीयन्ते । महतामयं स्वभावः किल यदि णमपि स्युस्तर्हि किमपि महत्कार्यमेव । श्रीगिरीशशुक्ला नूतने वयसि संसार-भूय स्वमित्रबान्धवान् परिपोष्य यथा-समाजसेवां विधाय स्वदारपुत्रादीन् अनाथान् परस्मिन् धाम्नि विलीनाः । यावज्जीवं लोके स्पदमेव भूत्वा शरीरयात्रां निर्वाहितवन्तः । व तेषां जीवितं स्पृहणीयमेव जातम् । तेषां सह परिचयस्त्वल्पकालिक एवाभूत् । गतमाघ- यदाहं काशीस्थविश्वविद्यालयस्याधिकारिभिः विज्ञानविभागेऽध्यापककार्ये नियुक्तस्तदा तैः थममेव मे संस्तवो जातः । तदारभ्य ते मम पूजास्थानमेव प्रापुः । एकाहोऽपि मया न स्मर्यते यस्मिन् तेषां विषयक आदरो । प्रत्युत दैनंदिनं वृद्धिमेवाभजत । तेषामृ-भाव आकृत्यनुकूल एवासीत् । तेषां स्मितालाहकं वदनं, मधुरा वाणी, दैवी संपत्परिपोष-मानराहित्यं सर्वमेव स्पृहणीयमभवत् । अहहातीव कष्टतरमिदं यदस्मिन्संसारे एवंविधैः सह-परिचयोभूत्वाऽचिरादेव वियोगावस्थाऽनुभूयते । निर्घृणः काल इति सत्यमेव, परं सोऽपि स्वार्थसाधनपटुः किमपि रमणीयं वस्तु स्ववशं कर्तुं प्रयतते !! विनश्वरं कलेवरमिति सर्वैरेव ज्ञायते । किन्तु तेनानश्वरं किमपि कर्तुं कतिपयेषामेव प्रयासः । अस्यां श्रेण्यां गिरीशशुक्लाः पदं कुर्वन्ति, अतो भगवतो विश्वनाथस्य सविधेऽभ्यर्थनेयं यद्भवदिच्छया तेषां कौटुम्बिको जनोऽसहायो जातः । अतस्तद्विषयिकी चिन्ता गिरीशशुक्लानां मनसो निराकृत्य भवद्भिरेव वोढव्येति शम् ।

# शोकोच्छ्वासः ।

श्रुत्वा गिरीशस्य गिरीशलोके,
प्रयाणमाकस्मिकमद्य लोकात् ।
विदीर्य्यते हृत्परमत्र कुर्म्मः,
किं क्रूरकालस्य विचेष्टितेषु ॥

यदाननान्निःसृतवाग्विलासं,
निसर्गमाधुर्य्यरसानुलिप्तम् ।
सर्वास्ववस्थास्वमृतायमान-
माकर्ण्य केषां चकितं न चेतः ॥

गीर्वाणवागुन्नतिहेतुभूतं,
सम्मेलनं यन्नवमं बुधानाम् ।
जातं पुरा कर्णपुरे तदैवा-
ऽस्माकं गिरीशेन समागमोऽभूत् ॥

महात्मनस्तस्य तदावलोक्य,
गुणानुरक्तिं सुरवाचि भक्तिम् ।

बुधस्वभावोचितसौम्यमूर्त्तिं
नानाविधाशाङ्कुरितं मनोऽभूत् ॥
श्रुत्वा तं सहसा पुरन्दरसभासभ्यीभवन्तं शुचा,
क्रान्तं बन्धुजनं विहाय सकलं याचे विभुं शङ्करम्
धैर्य्योत्सारितशोकमोहविषया तत्सन्ततिः सन्ततं,
कल्याणे पथि संगता यितनुताच्छुभ्रं तदीयंयशः

कविरत्ननारायणप्रसाददद्विवेदी ।

## शोकाश्रु ।



ले०—महेशानन्द ओझा न्याय-शास्त्री,

सृजति तावदशेषगुणाकरं,
पुरुषरत्नमलङ्करणं भुवः ।
तदपि तत्क्षणभङ्गु करोति चेत्,
अहह ! कष्टमपरिडतता विधेः ॥

अयिभोः संस्कृतभाषानुरागिणः सहृदयाः !! सहसैवेदमावेदयितुं भवतां पुरः न पार्यते, यन्मम गुरुचरणा नश्वरं जगद्‌ विहाय दिवं गता इति शिथिलान्यङ्गानि, केनापि क्रूरेण भावेन नियम्यमानेव लेखनी न निबन्धुं शक्नोति । अस्य मासस्य प्रथमायां तारिकायां लवपुरादागत्याहं कस्यचित्सकाशादिदानीं काशीस्थविद्वन्मण्डलीमण्डनायमानाः पण्डितप्रकाण्डाः संस्कृतसमाज-साहित्यसेवासंलग्नमानसाः शिक्षैकपक्षपातिनः प्राक्तनाऽधुनिकशिष्केषु आदर्शभूता न्यायतन्त्रस्वतन्त्रास्तव गुरुचरणकमलाः श्रद्धेयश्रीगिरीशशुक्ला न्यायाचार्यपदालङ्कृता मान्या असारमापातरमणीयं संसारं चिराय परिहाय स्वकीयं बन्धुवर्गं शिष्यसमुदायं शोकाब्धौ निक्षिप्य संस्कृतज्ञेषु घृणामुत्पाद्य देववा
मिमां मूर्च्छन्तीमवज्ञाय स्वर्गं गता इति वज्रा
तसन्निभं वचनं श्रुत्वाऽहमतिव्यलपम् । सहसैव
नाहं तत्थ्येनेदमनभ्राशनिपाताकारं वृतान्तं स्वी
कार; किन्तु यदा तेषां गृहे गत्वा बालकानामा
करुणं रोदनमश्रौषन्तदा ममाङ्गानि चेतनारहिता
वाभूवन् । कस्मादयमत्यल्पीयसि वयसि अस्मा
संस्कृतज्ञानां शिरोरत्नं करालोऽयं कालोऽपजहा
चिन्तानलसंतप्त एवास्ते ममात्मा । किं संस्कृ
स्यैवेताहृशानि भागधेयानि सन्ति यद्यः को
देववाणीमिमामुन्नतिपथं प्रापयितुं यतते स
क्रूरेण यमेन स्वकीयं स्थानं नीयते इति कस्य
नाम सचेतसश्चेतो दूयेत । संस्कृतच्छात्राणां वि
षतो विश्वविद्यालयीय-विद्यार्थिनामस्माकं विदी
र्णतेऽन्तःकरणानि न शक्नुमो वयं तस्य साधोः गुणा
गणयितुमिति । नाद्यापि प्रत्ययं करोति मनो यत्
त्यमस्मत्तः पृथग्भूता गुरव इति । हा हन्त ? क
णारहितविधे ! सफलो भव । इदानीं कृतं करणी
त्वया । हा ! सत्य, कुत्रेदानीं तव वसतिर्भविष्यति
हा न्यायतन्त्र ! कस्य पार्श्वं स्थास्यति भवानधुना
गुरुवर्या ! नेदं साधु भवद्भिरनुष्ठितं यत्सहसैव स्वर्ग
मनमकारि भवद्भिः । अहं पञ्चनदप्रान्तस्थ-शास्त्रि
परीक्षां दत्वा तेषां पार्श्वे न्यायकन्दलीसहितप्रशस्त
पादभाष्यमपठम् । कीदृशी तेषां पाठनशैली आस
दिति केनोपमिनोमीदानीम् । हा ! कथमतिदुर्बोधान
पि ग्रन्थानतिसरलां सरणिमनुसृत्यास्मान् बोध
यन्तिस्म ते । कीदृशो मधुरिमा कीदृशी-आकृतिः
प्रतिक्षणं परिहासोन्मुखी वार्ता तेषां लक्ष्यतेस्म
तेषां महानुभावानां चरित्रं स्मारं स्मारं तेषां प

स्य अतिकरुणं परिदेवनं श्रावं श्रावं तस्य चातीव दशां दर्शं दर्शं गुरुवर्यस्य चरणकमलेषु निवा-लिमयीमिवाश्रुधारां जहामि । अथ च प्रार्थयामि शं काशीपुरपतिं यदस्माकं गुरोरात्मा येन स्वर्गादपि अधिकं सुखमाप्नुयात्तथा ! दयाशीलेन त्वया यतनीयमिति । तेषां बन्धु-पि यथा शान्तात्मा स्यात्तदर्थमपि उमापतिं म्यहम् ।

## शोकोद्गारः ।

इदं यत्वमवलम्ब्य कुटुम्बं
दुःखसागरनिमग्नमनाथम् ।
विहाय कथमद्य गिरीश !
हा ! गतोऽसि परलोकमितस्त्वम् ॥

त्वां विना तव कुटुम्ब इदानीं
सर्वथा किल विषीदति रौति ।
स्वर्गतस्सुखमलौकिकमुच्चैः
प्राप्य तं किमिति न स्मरसि त्वम् ॥

नो दया हृदि तवास्ति किमद्य
यच्छृणोषि न कुटुम्बविलापम् ।
सा भवहृदयकोमलता हा !
क्वाऽगमद्वद सखेऽसुखदायिन् ॥

—श्रीदेवीप्रसादशुक्लः कविचक्रवर्ती
( महामहोपाध्यायः )

## सुरगिरो दुर्भाग्यम् ।

[ ले०—श्रीयज्ञनारायण उपाध्यायः एम्० ए० ]

आपूर्णश्च कलाभिरिन्दुरमलो यातश्च राहोर्मुखम् ।

न्यायाचार्यगिरीशशर्ममहाशयानामसामयिक-मृत्युवशादुत्पन्नाया वाराणसीविदुषां क्षतेः पूर्त्तिर्न स्वल्पेन कालेन कथमपि सम्भाव्यते । न केवलं गिरीशो गीर्वाणवाण्याः पारदृश्वा अपि तु सच्चरित्रः सदाचारसंपन्नः शुचिशीलश्चासीत् । इदं तु विशेषतः शोकावहं यद् देशस्य तदीयपरिपक्वानुभवमहिम्ना विविधमनोरथसाफल्याङ्कुरे जाग्रत्येव स यौवनारम्भ एव करालकालेन अकस्मात् कवलीकृतः । अस्य पूर्वपुरुषाः रीवाँराज्ये मनिगवाँ—वसतौ अवसन् । पितृव्यश्चास्य शैवध्वजशर्मा वैदिकपुङ्गवः सहास्य पित्रा समागत्य काश्यां महतीं ख्यातिमवाप । बाल्य एव पित्रा विहीनस्यास्य पितृव्येणैव स्नेहानुबन्धाद् विद्यासंस्काराः प्रावर्ध्यन्त । गुरवश्चास्य काशिक-राजकीयपाठशालायां ( गवर्नमेन्ट-संस्कृत-कालेज ) न्यायशास्त्राध्यापकाः श्रीजीवनाथशर्ममिश्रा अस्य प्रतिभासम्पत्त्या भृशमतुष्यन् । अचिरादेव च न्यायाचार्यपरीक्षामुत्तीर्णस्य तस्य कतिपयप्रतिष्ठित-पाठशालास्वध्यापयतश्छात्रा दश दिशः प्रसृताः । विश्रुतकीर्तिरेष विनयबहुलो भारतभूषण पं० मदन-मोहनमालवीयमहानुभावैः प्रसह्य हिन्दूविश्वविद्यालयेऽध्यापकपदेऽधिरोपितो देशस्य संस्कृतविद्याया वा दुर्दैवाद् वर्षमात्रेणैव कलेवरं पाञ्चभौतिकमसहात । अयं च वृद्धमात्रे पत्न्यै अत्यल्पवयःकुमाराभ्यां कन्याचतुष्टयाय च ऋणमन्तरा न किञ्चिदपि

दत्त्वा अगच्छत् । अस्य च सर्व एव कुटुम्बिनो महतां दयापात्राण्येव । विश्वेश्वरश्चास्य परलोकं गतस्य सुखशान्तिं, कुटुम्बायास्य सुहृद्भ्यश्च धैर्यं दद्यात् ।



## संन्यासिनो रुदितम् ।

[ श्रीयोगीन्द्रस्वामी, बीकानेरस्थः ]



ग्रन्थान्प्रणेष्यति लिखिष्यति सुप्रभातं
विद्वत्समाजमपि नेष्यति संघशक्तिम् ।
एवं विचिन्तयति संस्कृतभाषिलोके
कालो गिरीशमहहा ! कवलीचकार ॥ १ ॥

उत्साहयन्ति सुखयन्ति सुधारयन्ति
विश्वासयन्ति मधुरं वचनं वदन्ति ।
साहाय्यमाददति पौरुषमावहन्ति
हंहो ! भवादृशबुधा भुवि नात्र सन्ति ॥ २ ॥

हा ! हन्त !! अयि गिरीशाङ्कसंपादकमहोदयाः ! पञ्चमवर्षस्य नवमाङ्के श्रीमन्माननीयपण्डित-गिरीशशुक्लन्यायाचार्यमहोदयानामकाल एव निर्वाणपदप्राप्तिसमाचारमवलोक्य नितरां विदीर्णहृदयोऽस्मि । विस्मृतं कर्तव्यं, न जानामि वक्तव्यं लेखनीयं वा ।

येन हि मातृ-पितृ-स्वजनादिकृतेऽपि न रुदितं, तेन संन्यासिनापि मया तत्कृते तु बालवत्तदेव कृतम् । प्रेम्णो विचित्रा गतिः । अथवा—

मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः ।
उत्पद्यन्ते त्रयः पक्षाः मित्रोदासीनशत्रवः ॥

पूर्वमयं जनस्तेषां प्रियच्छात्रतामगमत् । काश्
यथा स्नेहेन पुत्रवत् मित्रवद्वा तैरयं पाठितो
तथाऽन्यैः । न्याय-वेदान्तदर्शनादि पाठयद्भिस्तैर
जीवस्य यद्वहु उपकृतमस्ति, यावज्जीवनं न कदा
तद्विस्मृतिपथं यास्यति । न तेषामुपकारस्
प्रत्युपकारं पश्यामि, येन मे आनृण्यं स्यात् ।
केवलं ते पाठका एव, अपि तु पाठनसमये पाठक
आपदवसरे प्रियमित्राणि इव सदुपदेशपुरःस
धैर्योत्साहप्रदायकाः सुखदपथप्रदर्शकाश्चासन्
निःस्वार्थता, लोभविहीनता, परोपकारपरायण
प्रियवक्तृतादयस्तु तेषां सहजा गुणाः सन्ति स
न जातु चित्ते छात्राणां दुःखदशां हतोत्साहतां चा
लोकयितुमपि सेहिरे । बहुशो मया दृष्टमासी
यत्ते यथाशक्ति द्रव्यप्रदानेनापि दीनाः छात्रा
भृशमुपकृताः । इदानीं तेषां दीनं कुलं भगवान्
दीनबन्धु ध्रुवं रक्षतु ।

तेषां पण्डितवराणां गुणेषु सर्वश्रेष्ठोऽयं गुणो व
र्तितिस्म यच्छ्रीविश्वेश्वरस्य नगर्यां समस्तवा
ण्स्यां त एव सर्वाधिकाः संन्यासिच्छात्राणां प्रि
प्राणा बभूवुः । त इव न कोऽपि प्रेम्णा भक्त्या श्रद्ध
वा तान् अपाठयत् । अयं सर्वो मामको नैजोऽनुभ
मया प्रकाश्यते, न श्रुतमात्रः कल्पितो वा ।

किं बहुना, तेषामुपकारपरम्परा गुणगणां
स्मारं स्मारं भृशं खिद्यते मे चेतः । किं करोमि
दैवी विचित्रा गतिः । अत्र विषये सैव प्रम
प्रभ्वी च ।

न चेह जीवितः कश्चित्कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी

...इदानीं संन्यासिबन्धूनां वाचस्पतीनां तेषां ...भ्यः सद्वृत्तिं, तद्गृहगतानां प्राणिनां हृदयेभ्यः ...सहनशक्तिं शान्तिं च परमपिता परमेश्वरो-...दास्यतीति दृढो मे विश्वासः ।



## गिरीशस्मृतयः ।

[ ले०—श्रीकेदारनाथशर्म्मा सारस्वतः । ]

...तावदशेषगुणाकरं पुरुषरत्न-मलङ्करणं भुवः ।
...तदणभङ्गि करोति चेदहह! कष्टमपण्डितता विधेः

( फल्गुहस्तिनी )

...ञ्च वर्षाणि व्यतीतानि, यदा वयं द्वित्राः सुहृदः ..., संस्कृत-साहित्यस्य संस्कृत-समाजस्य च ...ां दुरवस्थामालोच्य कमप्युपायं चिन्तयन्तः ...त-साहित्य-समाज-संस्थापनाय काशीस्थ-...णां साहाय्यं प्रार्थितवन्तः । हन्त ! न विस्मरामि ...वसं, यस्मिन् विश्वारङ्ग-रङ्गमञ्चे समाज-...पनावसरे सर्वप्रथममेकेनैव वीरेण समुद्घो-..., यदहमस्य समाजस्य सदस्यतां ग्रही-...मि यथावसरं कार्यञ्च करिष्यामीति । यद्यपि ...दस्माकमाशा, यदयं नैयायिक-प्रवरः समय-...-परिश्रम-साध्येऽस्मिन् कठिने कार्येऽस्माक-...तं साहाय्यं सम्पादयितुं प्रभविष्यतीति । को ...नातिस्म, यदयं प्रखरप्रतिभा-सम्पन्नो मार्मिक-...तत्त्वदर्शी विद्वान् न केवलं साहाय्यमेवाचरिष्यति; ...स्माकमपि नेतृत्वं कुर्वन् चिरसुप्ते विद्वत्स-...सफलां क्रान्तिमुत्पादयिष्यतीति । स च वीरः शास्त्रतत्त्वदर्शी गिरीश-महोदयोऽकाण्ड एव पश्यतामेवास्माकं केवलं कीर्तिकलेवरेणैवातिष्ठत इति नास्माकं हृदये सुदृढं संलग्नः शोक-शङ्कुरयमा-जीवनमस्मान् प्रतोदयिष्यतीति नास्माभिर्निवेद-यितुं प्रभूयत इति जानन्त्येव सुहृदः सुप्रभात-पाठकाः ।

कियद्दिवसानन्तरं समाजस्य कार्येषु दत्त-चित्तास्ते अपरिचितानामप्यस्माकमुत्साहवर्धनाय सुप्रभात-प्रकाशनार्थं धनसाहाय्यं लेखादिसाहा-य्यञ्च कृत्वाऽस्माकमुत्साहमवर्धयन् । द्वितीयमासा-नन्तरं कार्यालयाभावादव्यवस्थिते सुप्रभाते भारत-धर्ममहामण्डले सुप्रभातकार्यालयोऽगमत् । तदानीं सुप्रभातस्य सम्पादका अस्माकं प्रियसुहृदः श्रीविन्ध्येश्वरीप्रसादशास्त्रिणः, व्यवस्थापकाश्च श्रीमन्तो गिरीशशर्म्माण आसन् । कार्यालयस्य महामण्डलाक्रान्तत्वात्, महामण्डलीयनीतिं विरु-न्धद्भिरस्माभिः समुत्साहिताः श्रीगिरीशमहोदया महामण्डलस्य नातिदूर एव सशुल्कं कार्यालयस्थानं कृत्वा संस्कृत-साहित्य-समाजस्य सुप्रभातस्य च स्वतन्त्रं कार्यालयं स्थापितमकुर्वन् । तदानीं गिरीशमहोदयानामेवोत्साह आसीद्यत्ते निर्धना-वस्थायामेव केवलं परिश्रमबलमवलम्ब्य सुप्रभा-तस्य सञ्चालनव्यवस्थां व्यवास्थापयन् । वयं तु धनाभावान्निरुत्साहसम्पन्ना आस्म, परमिमे श्रद्धेय—प्रयत्नाः प्रातः संन्यासिसंस्कृतमहाविद्या-लये सायञ्च सत्यनारायण-महाविद्यालये चाविरतं कठिनतरदर्शनशास्त्रग्रन्थानध्याप्य रात्रौ प्रहरपर्यन्तं सुप्रभातकार्यं कुर्वन्तिस्म । तदानीमासीद्धनाभावः, तथाहि वेतनदानयोग्यताभावात्ते स्वयमेव लेखकस्य

कार्यं कुर्वन्तिस्म । तस्यैव परिश्रमस्य फलभूतं सुप्रभातं साम्प्रतं विजयतेतरां सर्वत्र संस्कृत-संसारे । शनैः शनैः कार्य-प्राचुर्य्यात्, धनाभावस्य सत्वात् च स्वाधिकृते सुंघनीसाहूमन्दिरे निःशुल्कं कार्यालयस्थापनमकुर्वन् । एतस्मिन्नेवावसरे महामण्डलीयानामनुरोधेन सूर्योदयन्नाम संस्कृतपाक्षिकपत्रं सम्पादयन्तः श्रीविन्ध्येश्वरीप्रसादशास्त्रिणः सुप्रभात-सम्पादनं त्यक्तवन्तः । अवशिष्टेषु त्रिषु कार्यकर्तृषु श्रीमन्तः गोपालशास्त्रिणः, अहञ्च द्वावपि कार्यान्तरविवशौ गिरीशमहोदयं सम्पादनाय प्रार्थितवन्तौ । कार्येष्वनुद्विग्नमनाः, गम्भीर-प्रकृतिः श्रीमान् गिरीशमहोदयः सोत्साहं सम्पादनकार्यं समचालयत् । वर्षद्वयं यावत् तेन भगवता सम्पादितमिदं सुप्रभातं महतीं समुन्नतिं समधिगच्छत् स्थिरतामवापत् । तदनु च मया गृहीते सुप्रभात-सम्पादनभारे पुनस्ते विविधकार्यव्यापृता अपि व्यवस्थाभारमाजीवनं कुर्वन्तः समाजं सुप्रभातञ्च सम्यक् सञ्चालयन्त आसन् । तस्मिन् कालेऽस्माभिः सामाजिकैर्मध्ये मध्ये वारं वारमवकाशो गृहीतः, परन्तैः समाज-संस्थापनादारभ्य यावज्जीवनं न कदापि सुप्रभातकार्यं परित्यक्तम् । हन्त ! तेषां धैर्यम् ।

किं ब्रूमो मन्दभाग्या वयं तेषां गाम्भीर्यं धैर्यञ्च । तेषामाभ्यन्तरसुहृदामप्यस्माकमिदानीं यावत् न विदितचरमासीत् यत् ते ऋणग्रस्ता अपि सन्ति । तेषां कुटुम्बे दश प्राणिन आसन् । आयश्चासीत् पञ्चाशन्मुद्रामासिकमितः । ऋणग्रस्तत्वेऽप्येतावन्तं सुदीर्घं कुटुम्बं परिपालयन्तः केवलं सुरसरस्वती-समाराधनैकतत्परस्तत्रभवान् गिरीशशुक्लः प्रत्यहं प्रशान्त-गम्भीर-भावेन सुप्रभात-कार्यं सञ्चालयन्, संस्कृत-विदुषां छात्राणाञ्च पुरो महान्तमुज्ज्वलमादर्शं स्थापितवान् । ये खलु असन्तुष्टवृत्तयो मात्सर्यमग्ना भाग्यमाक्रोशमानाः पुरुषकारपरिहीनाः कार्यचौराः संस्कृतविद्वांसश्छात्राश्च कथयन्ति,—'किं कुर्मो, नास्ति समयः'—इत्यादि, ते महापुरुषाः केवलं पौरुषहीना एव । अस्माकमादर्शो विद्वान् तत्रभवान् गिरीशमहोदयः स्वगाम्भीर्येण, सन्तोषेण, धैर्येण च समुन्नतिशिखरमारूढश्चतुर्ष्वेव वत्सरेषु शनैः शनैः समुन्नति-सरणिमनुसरन् संस्कृतज्ञानां पुरस्तात् शिक्षणीयमुदाहरणमुपास्थापयत् । सर्वप्रथमं ब्रह्मविद्यापाठशालायां पञ्चदशमुद्रावेतनेन अष्टादशमुद्रावेतनेन वाध्यापयन्तिस्म । एकवर्षाभ्यन्तर एव संन्यासिसंस्कृतपाठशालायां समागता इमे त्रिंशतिमुद्रावेतने, सायं सत्यनारायणविद्यालये च त्रिंशन्मुद्रामासिकवेतने च कार्यं कुर्वन्तिस्म । एकवर्षानन्तरमेव नवसंस्थापिते गोयनकामहाविद्यालये चत्वारिंशन्मुद्रामासिके समध्यापयन्त ।

इमे कियत्कालानन्तरमेव हिन्दूविश्वविद्यालये पञ्चसप्ततिमुद्रामासिकेनाध्यापयन्तिस्म । वर्षचतुष्टयमेवाविरतं सुरसरस्वतीं समाराधयन् सरस्वतीमातुस्तनयोऽकाल एव कालकवलितः समभूदिति कस्य वा सहृदयस्य हृदयं न विदारयेत् ।

अन्यदपि, गिरीशशर्म्मणामत्यधिकं महत्त्वमिदमासीद्यत्तेषां हृदयं नितरां विशुद्धं रागद्वेष-रहितमासीत् । सत्यपि मतभेदे, सिद्धान्त-विरोधे च न ते कस्यापि माननीयसिद्धान्तमपलपन्तिस्म । 'बुद्धे

नाग्रहः,' 'विद्याफलं विनीतत्वम्,' इत्येतदुभयं सर्वथा संगतमासीत् । मनुष्यजीवने यत्किमपि मस्ति तदिदमेव । सत्यं हि नाम तेषु प्राधा- सीत् । तत एव च प्रत्यहमुन्नतिपथमधि- सर्वत्र कार्येषु साफल्यं लभमानाः पण्डित- ते महतीं सुधारणां, जागर्ति, जीवनश्च सञ्चार- स्माकमादर्शभूताः समभवन् ।

सामाजिककार्येषु मया सह गिरीशशर्म्मणा- महान् सहयोगः, वर्षपञ्चकं यावत् तैः सह सीद्घनिष्ठतरः सामाजिक-कार्य-सम्बन्धः, जिक-कार्येष्वावयोर्महासम्बन्धस्य कारण- सीत् यत्, ते कस्यापि कार्यस्योपयोगितां व तावत् सन्तुष्टा न भवन्तिस्म, यावत्तं विषयं ण न परिणमयन्तिस्म । सर्वेष्वपि कार्येषु भागभाजस्ते सत्येन प्रबलेन च हृदयेन ऽवतरन्तिस्म । तेषां हृदयं नितरां विशुद्ध- च वीर्यवदपि समभूत् । वस्तुतस्ते काशीस्थे समाजे रत्नभूता आसन् । तेषां जीवनमादर्शभूतं पावनं प्रशान्त-गम्भीरं विमलं विशुद्धञ्चासी- स्वल्प एव वयसि स्वल्पे च काले समुन्नति- धिरूढास्ते नामतोऽपि गर्वमपहरन्तः सर्वथा- वेनैव सर्वान् सम्भावयन्तः सम्मानयन्तश्च स्नेह-सम्मानास्पदानि समभूवन् ।

षां पाण्डित्यमपि प्रथितम्, प्रकृष्टम्, प्रबल- । नव्यन्यायशास्त्रस्य मार्मिकास्तार्किका करण-पाण्डित्ये काश्यामसाधारणा एवासन् । दान्त-साङ्ख्य-मीमांसादिदर्शनग्रन्थानामध्या- स्वल्पा एव परिगणनीयाः सन्ति । तेषु प्रथितयशस इमे दार्शनिकप्रवरा न साधारणविद्वांस आसन् । ते न केवलं शुष्कदार्शनिका एव; व्याकरण-साहित्ययोरपि तलस्पर्शिनो विद्वांसोऽभूवन् । सुप्रभातं सम्पादयतां तेषां व्याकरण-साहित्य-पाण्डित्यं प्रत्यक्षमेव सुप्रभात-पाठकानां विदुषाम् । नैतावतैव, ते सुदक्षा मर्मविदः पौराणिकाश्चासन् । पौराणिकी वृत्तिर्हि तेषां परम्परासंप्राप्तैवासीत् । हिन्दीभाषालेखने, पत्रसम्पादनकलायाञ्च निपुणास्ते यन्त्रालयादिकार्येषु व्यावहारिकेषु च महत्त्वपूर्णेषु विषयेषु प्रगाढं पाण्डित्यं परिचयञ्च दधतिस्म ।

दीर्घतरं कुटुम्बं परिपालयन्तः स्वल्प-धना अपि गिरीशशर्म्माणो न कदापि केनापि कुत्रापि व्यथितचेतसो विकलाश्च समालोकिताः । नापि च कदापि तेषां मनसि, वचसि, कर्मणि वा गृहचिन्तया कश्चनापि विघ्नः समुत्पादितः । मुदित-मानसाः, बुद्धिधनाः, सहृदय-शिरोमणयस्ते सर्वदा प्रसन्न-हृदया एवावातिष्ठन्तेत्यपरं महत्त्वमादधाति विषय-स्तेषामनुकरणीये जीवने । दुर्लभतराणि हीदृशानि पावनचरितानि महार्हाणि समुज्ज्वलानि भारतीय-विद्वद्रत्नानि । भारतवसुन्धराया दौर्भाग्य-विलसित-मेतत्, यत् नहीदृशा महात्मानः सुखिनो दीर्घायुषश्च भवन्तीति । पाश्चात्यपण्डितास्तु प्रायो दीर्घायुषः । परं हतभागधेयेष्वस्मासु भारतीयेषु ब्राह्मणेषु प्रचलत्ययं दुर्विधिविहितो नियमः—

अत्यन्तगुण-मेधावी चतुर्णामेव भाजनम् ।
अल्पायुरनपत्यो वा दरिद्रो वा रुजान्वितः ॥

हन्त ! वयन्तु दैवदुर्विपाकमिममालोक्य किं-कर्तव्यविमुग्धमनसो न किमपि वक्तुं पारयामः ।

परं किं ब्रूमः, ! तस्य महात्मनः कैवल्यलाभानन्तरं तदीयस्य कुटुम्बस्य कीदृशी परिस्थितिर्वरीवर्त्तीति तु क्षते क्षारमिव विदारयति चेतः । हन्त !

दूरोल्लासित-सज्जनापदि दृढप्रारब्ध-नीचोन्नतौ ।
यः सर्गे क्षण-दृष्ट-नष्ट-विरसे बद्धादरः सर्वदा ॥
पश्येयं यदि तं क्वचित् सकरुणोपालम्भरूक्षोक्तिभि-
र्लज्जानिष्प्रतिपत्तिमूकवचनं कुर्यामहं वेधसम् ॥

## विदीर्णहृच्छोकोच्छ्वासाः ।

( ले०—श्रीदिनेश शर्म्मा )

नाज्ञातमस्ति तत्रभवतां श्रीमतां संस्कृत-साहित्यसमाजेऽन्नतिपरायणानां देववाणीप्रचारप्रव-णानां दत्तसंस्कृताध्ययनचेतसामखिलान्तेवासिनां "सुप्रभात" पाठकानाञ्च यदेको विद्वद्गणधुरीणः संस्कृतसमाजस्तम्भरूपो रूपे सौन्दर्ये वा साक्षान्म-दन इव, बुद्धौ बृहस्पतिरिव, नम्रतायां धरेव, कृतौ ब्रह्माणमिव, विद्यायाञ्छङ्कराचार्य इव, तेजसि साक्षा-द्गिरीश इव कश्चन "गिरीश"नामधेयो मत्पूज्याङ्घ्रि-कमलो निखिलजनध्येयचरितोऽत्युत्कृष्टक्लिष्टग्रन्था-न्सरलतयाऽध्यापयन् हिन्दूविश्वविद्यालये छात्रहृ-दयान्याह्लादयन् न्यायकक्षायां समध्यापितवाना-सीदिति ।

तत्कीर्तौ गुणप्रकाशने वाऽलमधिकेन, यतो गिरः ईशस्य ( गिरीशस्य ) गुणव्याख्यानानि केवलया गिरा एव नरः कथं समर्थः स्यात् कथम्वाऽतः पदं विदध्यात् । यस्य च कीर्तिः कृतिश्च विलसत्येव माथुरी पञ्चलक्षणी-टिप्पणीरूपेण विदुषां दृष्टिगोचर इति । तदीहा सर्वथैवमासीद् यत्कथं संस्कृताध्येतॄ-णामुन्नतिः, कथम्वा वेद वेदाङ्गदर्शनपुस्तकानां पठनपाठने सुगमता, कथं वा रीत्या देववाणीपाठ-कानां राष्ट्रे राष्ट्रियकार्ये वा मानं स्यादिति ।

अद्यावधि नाधिकमहो व्यतीतं यत् अधुनैव कालो निजदुष्टताम्मूर्खतां वा प्रकाशयन् पश्यतामेव मादृशानाम्बहुच्छात्राणान्तथान्य क्रियाकुशलचिकि-त्सकानां विपश्चितां वाग्रत एव त्वरितं गुरुवर्यस्य प्राणान् हृत्वा पश्यतोहरतां समाप्नुवन् गीर्वाणीमातुरङ्कं क्षणेनैव शून्यञ्चकार । उन्नतिशिखरमारुरुक्षुं पदैकमधस्तलं पदैकमुपरि सोपाने ददतः संस्कृतसाहित्यसमाजस्य विचित्रा दशा संवृत्तेति कष्टम् ।

## गिरीशशुक्लमहोदयाः ।

[ ले०—अम्बिकाप्रसादशर्मा, व्याकरणाचार्यः ] ।

एते काशीस्था न्यायशास्त्रपारंगता न कस्यापि विदुषोऽपरिचिताः । एते सुगृहीतनामधेयाः काशी-स्थराजकीयसंस्कृतपाठशालायां श्रीमतां पण्डित-प्रवराणां श्रीजीवनाथमिश्राणां सविधे अधीयाना वर्षत्रयमस्माकं सहाध्यायिन आसन् । तत आरभ्य अद्यावधि एतेषामस्माभिः सह परिचय आसीत् । एतेषां हृदयौदार्यम्, निष्पक्षपाता विचारशैली, निरभिमानता, न्यायप्रियता, निर्भीकता, प्रगाढ-पाण्डित्यमित्यादयोऽनेके गुणा न शक्यन्ते वर्ण-यितुम् । न कदाप्येभिर्महानुभावैर्लोकरञ्जनाय "मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यदिति" दुष्टपद्धतिराचरणपथमानीता । किन्तु सदैव "मनस्येकं वचस्येकं कर्मण्येकमिति" सज्जनाचरितपथेनैव व्यवहियतेस्म । किमधिकमेषां गुणपरिचयाय पर्या-

यद्यावधि धार्मिकतायां समधिकोदार-रैरप्येभि र्न कस्यापि प्राचीनविदुषो मनागपि शो दृष्टचरः श्रुतचरो वा । यद्यपि एषामैहलौ-चरितमपि स्वर्गीयमेवासीत्तथापि स्वर्गगमन-मे किमर्थमात्मा उपनीत इति त एव त्ति महान्तः ।

शस्यास्य शुक्लस्य स्वर्गतस्य विहाय नः ।
तां वर्णने शक्ताः कथं स्यामो भुवि स्थिताः ॥
यं चरितं यद्यद् विश्रुतं शुचि वर्तते ।
पिणवद् व्यर्थं वर्णनं विदुषां पुरः ॥ इति

## स्मरणीयाः समये वयं वयः !

[ ले०—श्रीरामप्रसादशुक्लो विद्यार्थी । ]

हं पण्डितवरस्य श्रीगिरीशशर्म्मणो दर्शनाय यः अष्टदिनपूर्वमेव प्रतापगढ़ात् काशीं । मामवलोक्य तेनोक्तं-"रामप्रसाद ! अस्माकं मस्ति, गतवर्षे वृद्धमङ्गलस्य समये श्रीपं० नाथस्य नौकायां मया सह त्वमपि वर्तसेस्म, न्तरं काश्यां त्वमद्यैवागतः" । पुनरुक्तवान्— दीपनिर्वाणगन्धोऽनुभूयते, अद्यापि चास्माकं स्ति । संग्रहणीनामके रोगे " युवा जीवति न वा " अत्र वा शब्दो वर्तते । अतो ते, पुनः स्वस्थो भूत्वा प्रतापगढं गमि-मि । यदि इदानीं मम मृत्युर्भविष्यति तर्हि पनिर्वाणगन्धश्च न जिघ्रन्ति गतायुषः " श्लोकमनर्गलं त्वं जानीहि । इदानीं काले-कमिदमेव महद्दुःखमस्ति यत् कन्याया हो न कृतः, अथच गृहोपरि यद्दृणं वर्तते तत्र दत्तम् । भयंकरेऽस्मिन् रोगे यद्यप्युपस्थितानां कार्याणां स्मरणं मया न कृतं, तथापि चेतो दूयते । एतदर्थमेव वारं वारं रावलपिण्डयां कलकत्तायां, बम्बईनगरे च गमनं कृतं, परन्तु सफलमनोरथो न जातः । प्रत्युत–मोहमय्यामेवानेन प्राणघातकेन रोगेणाहं ग्रस्तः । पञ्चदश-वर्षाभ्यन्तर एव ममोदयो जातः, अस्तोऽपि भविष्यतीति लक्ष्यते ।

"मम जन्म वेणुवाणनवेन्दुमिते विक्रमाब्देऽभूत् । यदा अष्टवर्षस्याहमभूवम्, तदा मम पितुः दुर्गा-प्रसादशुक्लस्य मृतिर्जाता ! स्वर्गगतस्य पण्डितशैव-ध्वजस्य मम पितृव्यस्य संरक्षकतायां मम सम्यक् पालनं पोषणञ्च सम्वृत्तम् । परन्तु अध्ययनस्य काचिदपि व्यवस्था गगनमुनिनवेन्दुवैक्रमाब्दात् पूर्वं न जाता । केनचिन्मित्रेणावबोधितोऽहं गगनमुनि-नवेन्दुवैक्रमाब्दस्य चैत्रशुक्लद्वितीयातः काश्या राज-कीयप्रधानविद्यालये पण्डितप्रवराणां जीवनाथ-मिश्राणां समीपे न्यायशास्त्रपठनार्थं गतोस्मि । तस्मि-न्नेवाब्दे (१९१४ ई०) न्यायमध्यमपरीक्षायामुत्तीर्णो जातः । ततो न्यायशास्त्राचार्यपरीक्षां दत्वा सन्यासि-सत्यनारायण-गोयनका-विद्यालयेषु क्रमेण न्याय-वेदान्तादि-विविध-शास्त्राणि छात्रान् पाठयित्वा गत-वर्षे जैनन्यायशास्त्रपाठनार्थं हिन्दू विश्वविद्यालये गतोऽहम्, अद्यैव श्रूयते हिन्दूविश्वविद्यालये मम नियुक्तिः स्थिरा जाता । परन्तु तत्र पुनः गमिष्यामि न वेति को जानाति ? १९७० वैक्र-माब्दस्य चैत्रमासात् १९८५ वैक्रमाब्दस्यार्थं मार्गशीर्षे मास इति पञ्चदशवर्षाभ्यन्तरे सर्वेषां कामानां सिद्धिःकृता । परन्तु यत्र कृतं तत्

कविवराः पं० श्रीदेवीप्रसादशुक्लाः, श्रीकेदारनाथशर्म्माणः—अन्ये च काशिस्था मे शुभचिन्तकाः, यूयञ्च करिष्यथेत्यस्माकं विश्वासः।" इत्यादिसकरूणं सम्भाष्य—"स्मरणीयाः समये वयं वयः" इत्युक्तवान्॥



## शोकशङ्कुः।

[ ले०—श्रीसरयूप्रसादपाण्डेयः ( द्विजेन्द्रः ) काव्यतीर्थः ]



श्रीमतां पण्डितप्रवराणां न्यायाचार्यगिरीशशर्मशुक्लमहोदयानां कैवल्याधिगमेन समुत्पद्यमाना संस्कृतज्ञमण्डलस्य महीयसी हानिर्न शक्यते प्रयत्नशतेनाऽपि पूरयितुम्। वाराणसेयं श्रीसंस्कृतसाहित्यसमाजं तदीयमुखपत्रं सुप्रभातं च ते स्वरुधिरैरसिञ्चन्निति नास्ति परोक्षं केषामपि विदुषाम्। तैर्विना समाजः सुप्रभातं च म्लानायमाने न सुषमामाकलयतः। तैः सह मम कथं परिचय इत्यधो निर्दिश्यते—

एकदाऽहं स्वगुरुचरणैः श्रीमद्भिः श्रीगोपालशास्त्रि ( दर्शनकेसरिभिः ) महोदयैः सहानुगच्छन् तत्र गतवान्, यत्र सुप्रभातपत्र-प्रकाशनाभिलाषिणां संस्कृत-साहित्य-समाजसदस्यानां मन्त्रणसमितिरभूत्। अत्रसुप्रभातप्रकाशनाय संजाते निर्णयेऽहमपि छात्रशुल्केन तद्ग्राहकत्वमुररीकृतवान्। तदैवाऽस्माकं तैः साकं प्रथमं भाषणपूर्वकः परिचयो जातः। सुप्रभातसम्पादनावसरे पत्रव्यवहारेण तत्परिचयो निरूढिंगतः। तत्पश्चात् यदाहं जयनारायणहाईस्कूलनामधेये विद्यालये अध्यापकत्वेन नियुक्तस्तदैव तेषां मया सह प्रगाढपरिचय स्नेहाधिक्यञ्चाभूत्। अतस्तेषामेकः सतीशनाम पुत्रस्तद्विद्यालये मम पार्श्वे पठतिस्म। तस्मिन्ने समये तैः सह वार्त्तालापस्यावसरः सम्प्राप्तः। हा हन्त! विधे! नूनं क्रूरोऽसि।

यदा तेषां सुमधुरभाषणं, विस्मयकरं स्मितञ्च स्मृतिपथं समागच्छति, तदा विदीर्यते हृदयं, न प्रचलति लेखनी, न दृश्यतेऽश्रुपरिपूरिताभ्यामाभ्यां नयनाभ्यां किञ्चिदपि। वयमिदानीं युवप्राणभूतानामादर्शस्वरूपाणां पण्डितप्रकाण्डानां श्रीगिरीशशुक्लशर्म्मणां न्यायाचार्य्याणां सहसैव दिवङ्गमनेन विदीर्णहृदयाः सञ्जाताः।

यद्यपि मया बहुत्र बहुधा बहुविधा विद्वांसो दृष्टाः श्रुता अपि, तथापि नेदृशो लोकवेदविदो देशकालमर्मज्ञाः परमोदारचेतसो विद्वांसो दृष्टिगोचरीकृताः। एतेषु महाभागेषु वैलक्षण्यमिदमद्वितीयमासीत्, यत्किल ते न केवलं शास्त्रमर्य्यादामर्म्मज्ञा एव, प्रत्युत यथाकालं लोकमर्य्यादाभिपालका अपि आसन्। तेषां पाठनपद्धतिरनुत्तमा विद्यार्थिनाम् अतीवोपकारिणी मनोहारिणी चासीदिति तद्विदो जानन्त्येव। संस्कृतभाषायां यादृगधिकारस्तेषामासीत्तादृगेव हिन्दी (राष्ट्र) भाषायामपीति नाविदितचरं केषामपि। किं बहुना, साम्प्रतं तदीयवियोगेन नितरां निपीडिता वयं काशीश्वरं प्रार्थयामो यदसौ दयासिन्धुस्तदीयतनुजन्मानौ बुद्धिमन्तौ दीर्घायुषौ च विदधात्विति।



# सम्पादकीयम्

*निवापाञ्जलयः ।*

एकस्य दुःखस्य न यावदन्तं,
गच्छाम्यहं पारमिवार्णवस्य ।
तावत् त्रितीयं समुपस्थितं मे,
छिद्रेष्वनर्था बहुलीभवन्ति ॥

हन्त भोः ! केनेदमवधारितमासीद् यत् प्रिय- ... पण्डितगिरीशशर्मशुक्ले न्यायाचार्ये पर- ... गते सुप्रभातस्य गिरीशाङ्को मयैव हतभाग्येन ... दितः स्यात् ! काशीमभ्युपेताः पण्डितमण्डली- ... नायमाना महामहोपाध्यायशिवदत्तशास्त्रिणो ... मथाः संस्कृतसाहित्यसमाजसेवकान् सनि- ... णं सम्भावयितुमिच्छन्तीति सुप्रभातकार्यकर्त्तु- ... धारिणो मदनगोपालस्य मुखादाकर्ण्य प्रसी- ... मया पञ्चषदिवसानन्तरमेव तेषामश्राव्यं श्रुत्वा ... विषादोऽनुभूतः ! तदनन्तरं केषुचिदेव ... गच्छत्सु पथप्रदर्शकेन सुहृदा गिरीशे- ... पि हृदये सुदृढं निखातः शोकशङ्कः ! ... शोकसंवर्द्धनायैव मयि चैतन्यमर्पितम्, मर्मो- ... तिभिः प्राणैर्वज्रकीलायितं स्थिरैः" इति ... भूतेरुक्तिरीषद्व्यत्यासेन मयि संगच्छते ! ... बन्धो गिरीश ! क्नु त्वादृशस्य साधोः सुहृदः ... भवः ! भवता विरहितः समाजो न शोभते ! ... कालेन भवन्तमपहृत्य, महामान्यं सभापतिमपि कवलीकृत्य समाजस्य शिरसि दृढमशनिर्निक्षिप्तः । कर्मकाण्डकुलकमलदिवाकरै महामहोपाध्यायपण्डितप्रवरप्रभुदत्तशास्त्रिभिरपि शिवत्वमासाद्य समाजो विस्मारितः ! महानुभावैरेभिर्यादृशं सर्वविधं संस्कृतसाहित्यसमाजस्य साहाय्यमनुष्ठितं न शक्यते निर्जीवया लेखन्या लिखितुम् । हा "सुप्रभात"! एवं दुःखपरम्परयाऽनेकशो जर्जरीभूतेन त्वया कथं प्राणा धारयिष्यन्ते ? अयि पाठकाः ! शोच्यावस्थामापन्नस्य गिरीशकीर्त्तिभूतस्य सुप्रभातस्यैतस्य जीवनं भवतामधीनम्, रक्षन्तु भवन्त एतत्, येन गिरीशात्मा प्रीतः स्यात् । त्वयाऽपि भगवन् गिरीश ! आत्मजेऽत्र सदा दयनीयम् । अस्मिन् सुप्रभातस्य गिरीशाङ्के 'स्तुत्याऽनिर्वचनीयताऽखिलगुरो ! दूरीकृता यन्मया' इति सत्यं ममापराधः । किन्तु क्षन्तव्योऽस्मि । मन्मते तु—

असितगिरिसमं स्यात् कज्जलं सिन्धुपात्रे ।
सुरतरुवरशाखा-लेखनी, पत्रमुर्वी ॥
लिखति यदि गृहीत्वा शारदा सर्वकालम् ॥
तदपि तव गुणानां नैति पारं गिरीश ! ॥

*बाल्यजीवनम् ।*

प्रायः षष्ठिहायनानि व्यतियन्ति, यदेको ब्राह्मणपरिवारः शैवः शैवनगरीं वाराणसीं 'रीवाँ'-राज्यतः

समागमत् । परिवारस्यैतस्य राज्यत्र आसीद् घनिष्ठः सम्पर्कः, परन्तु ब्राह्मणधर्मा परिवारोऽयं वाराणसीनिवासमेव निरतिशयं प्रियं मन्यतेस्म । परिवारेऽत्र पण्डितशैवध्वजशुक्लः पण्डितगङ्गाप्रसादशुक्लश्चेति द्वौ सोदरावास्ताम् । गङ्गाप्रसादशुक्लस्य सन्तानद्वयं—पार्वतीदेवी पुत्री, गिरीशशुक्लः पुत्रश्चेति । गिरीशशुक्लस्य जन्म १९५३ वैक्रमाब्दस्य मार्गशीर्षशुक्लपञ्चम्यां बुधे रात्रौ नववादने काश्यां बभूव । स्वीयसामयिकबुधोवरेषु वाराणसेयेषु कर्मकाण्डस्य पारदृश्वनि पण्डिते गङ्गाप्रसादशुक्ले दिवंगते शैवध्वजशर्मैव सन्ततिद्वयस्यैतस्य सम्यक् परिपालनादिकमन्वतिष्ठत् । अन्वर्थनामाऽयं शैवध्वजो निरन्तरवेदाध्ययनमनननिदिध्यासनपरायणो नैजं ब्राह्मणोचितं धार्मिकजीवनं यापयन् काशीस्थशैवानां प्रधानाचार्यत्वेन विश्रुत आसीदिति श्रूयते । ब्राह्मणेन वेद एव केवलमध्येयो विज्ञेयश्चेति तन्मतम् । व्यास-वरूद-निषाद-प्रणीता ग्रन्था ब्राह्मणेन न स्पर्शनीया इति तत्सिद्धान्तः । श्रुत्यर्थावगतिहेतवे व्याकरणस्य अष्टाध्यायी-भाष्यमात्रस्याध्ययने तस्य श्रद्धा । ब्राह्मणेन प्रतिदिनं केचन वैदिका मन्त्रा नूनं लिखेलिमा इति तदीयो विद्यतेस्म विश्वासः । साम्प्रतमपि गिरीशगृहे तेन निजहस्तलिखिता वैदिकग्रन्था निभाल्यन्ते । "न शूद्रसमाः स्त्रियः" "तस्मात् छन्दसा स्त्रियः संस्कार्याः" "न हि शूद्रयोनौ ब्राह्मणक्षत्रियवैश्या जायन्ते" इत्यादि हारीतधर्मसूत्रप्रामाण्येन द्विजस्त्रिभिरपि वेदोऽध्येय इति तस्य दृढीयसी धारणा । सोऽयं स्वकीयसिद्धान्तानुरूपं कौमार एव वयसि देव्या पार्वत्या गिरीशेन च समग्रं शुक्लयजुर्वेदसंहितां मुखस्थामकारयत् । शैवध्वजप्रयत्नेन गिरीशशुक्लेन बाल्यकाल एव संहिता-शतपथ ब्राह्मणादयो वेदग्रन्थाः, अमरकोषः, अष्टाध्यायी च कण्ठस्थीकृताः ।

*किशोरावस्था ।*

हिन्दीभाषायाः सुप्रसिद्धकवेः सुगृहीतनामधे यस्य श्रीजयशङ्करप्रसादस्य पूर्वपुरुषाः स्वर्गीय श्रीदेवीप्रसादादयः शैवाः शैवध्वजशर्मणां सुतरां श्रद्दधतेस्म । एतेषां परिवारः सुँघनीसाहुनाम्ना काश्यां प्रसिद्धः । स्वर्गीयदेवीप्रसादमहोदयेन शैवध्वजशुक्ला दीक्षाऽपि गृहीताऽऽसीत् । हौजकटोरास्थिते सुँघनी साहु-शिवालये गिरीशमध्यापयन् शैवध्वजो निव सन्नभूत् । एष श्रुतिव्यतिरिक्तं किमपि शास्त्रमध्येतुं गिरीशं न न्यदिशत् ! परन्तु गिरीशमहोदयस्य मनसि व्याकरणटीकाग्रन्थानां दार्शनिकपुस्तकानामपि तेन चाध्ययने बलवती समीहा समुत्पेदे । शैवध्वजभयेन गुप्तरूपेणैव निजाभिलषितग्रन्थान् गिरीशमहोदयः पठितुमारेभे । एकदा करकलितसिद्धान्तकौमुदी न्यायमुक्तावलीप्रभृतिपुस्तकं गिरीशमालोक्य शैव ध्वजः परं चुकोप, तं च बहिष्कर्त्तुमियेष । किन्तु श्रीजयशङ्करप्रसादमहोदयस्य शान्त्वनया, वर्त्तमान संस्कृतशिक्षासरणिसमुपयोगितावर्णनेन च शैवध्वजः कथं कथमपि विरराम । तदा प्रभृति तस्य निर्बाधं मध्ययनं प्राचलत् । अनन्तरं हि गिरीशशुक्लमहोदय साहित्यव्याकरणदर्शनादीनां सपरिश्रममध्ययने परं प्राविण्यं प्राप्नुवन् वाराणसेयपण्डितप्रकाण्डे गण्यमान्यो भूत्वा ब्रह्मविद्या-संन्यासि-सत्यनाराय विद्यालयेषु, काशी-हिन्दुविश्वविद्यालये च ह्रस्वा तीतानन्तेवासिनोऽध्यापयन् १९८५ वैक्रमाब्दे माग

पूर्णिमायां प्रातरष्टवादने निःश्रेयसमधिगतवा-
जानन्त्येवैतत्संख्यासमुदिततत्तन्निबन्धृनिबद्ध-
ग्रैः पाठकमहानुभावा इत्यलं तन्निवेदनेन ।

श-कोषः ।

तीवाँराज्यात् सर्वस्वं विहाय काशीमुपढौक-
नाऽकिञ्चनेन पित्रा विरहितस्य शुक्लमहोदस्य
कालत एवार्थकष्टमासीत् । तदीयपितृव्ये शैव-
ऽपि परलोकमलङ्कृतवति सर्वोऽपि कुटुम्ब-
पालनभारः शुक्लमहोदयस्यैव शिरसि समाप-
। कुटुम्बे तस्य जननी, गृहिणी, द्वौ तनूजौ,
कन्याः, एकः सम्बन्धीयः, स्वयं चेति दश
तः । आगन्तुकानां कथा तु दूरे तिष्ठति ।
वाराणसेयः । शुक्लोऽपि व्यये महानुदारः ।
पि तेन स्वयमर्जयित्वैव स्वकुटुम्बस्य पालन-
आदिकमनुष्ठितम् । षड् वर्षाणि, कियन्तो मासा-
तिगच्छन्ति, तेन सशुल्के परगृहे निवासो न
रिति मत्वा काशी-ढेढ़ीनीमस्थात् श्रीलक्ष्मणशा-
वैद्यात् षोडशशतरूप्यकानि प्रतिशतमेक-
मासिककुसीदेन ऋणमादाय क्रीत आलय एकः ।
ननवत्यधिकनवशतमुद्राः कुसीदरूपेण शुक्लमहो-
स्वयमर्पिताः । एतदृणव्यतिरिक्तं षट्शतमुद्रा-
प्रकीर्णकम ऋणमपि तेन मासषट्कं रोगग्रह-
नैजचिकित्सार्थं कृतमास्ते । चतस्रः कुमार्यः
। तास्वेका विवाहयोग्या । एतस्या विवाहे
सहस्रव्ययानुमानम् । इयद्व्ययमन्तरेण सरयू-
ब्राह्मणसाम्प्रतिकपरिस्थितेरवलोकनेनेयं कष्टां
माद्येत । अध्यापनीयौ द्वौ कुमारौ ।
वतो महतः कुटुम्बस्य काश्यां परिपालनमिति

सर्वमवधार्य शुक्लसुहृद्भिरेको 'गिरीश-कोषः'
संस्थापितः । फाल्गुनकृष्णप्रतिपदं यावत् गिरीश कोषे
१६३०॥।≡)। मितद्रव्यस्य आयोऽभूत् । तत्र शुक्लमहो-
दयस्य श्राद्धे ६३॥।=) द्रव्याणि व्ययीभूतानि ।
( श्राद्धदिवसेऽनुमानतः पञ्चाशन्मुद्राणां तानि तानि
भोज्यवस्तूनि शुभचिन्तकगेहेभ्यः समागतानि,
तान्यपि श्राद्धे व्ययितानि ) २≡) प्रकीर्णको व्ययः ।
११२५) मुद्रा गृहार्णदात्रे श्रीलक्ष्मणशास्त्रिणे प्रदत्ताः ।
सम्प्रति ४०६॥।=)। गिरीशकोषे तिष्ठति । ६५-)॥।
द्रव्ये समागते गृहार्णं निःशेषं स्यात् । षण्मासाभ्यन्तर
एव सर्वमपि ऋणं दास्यत इति प्रतिज्ञापूर्वकं प्रार्थ-
नया गृहार्णदेन कुसीदस्य २५६) मुद्राः कृपया परि-
त्यक्ता इति तस्मै शतशः साधुवादा दीयन्ते ।
श्रीदेवीप्रसादशुक्ल-श्रीरघुवीरत्रिपाठिवैद्य-श्रीयज्ञनारा-
यणोपाध्याय—श्रीराजनारायणशर्म—श्रीरामव्यास-
पाण्डेयानां परिश्रमोदर्कभूतो गिरीशकोषस्थ उपर्यु-
क्तरूप्यककलाप इति पाठकैरवधेयम् । निष्किञ्चनै-
श्छात्रैर्विद्वद्भिश्च वाराणसेयैरेवैतानि रूप्यकाणि
दत्तानीति न विस्मर्त्तव्यम् । सम्प्रति बहिःस्थाना-
मवसर आयातः । अयि भोः ! बहिस्थाः संस्कृत-
सेवकाः ! मातुः संस्कृतसरस्वत्या अविरतसेवाया-
मेवोत्सर्गीकृतजीवनस्य शुक्लमहोदयस्य पारिवारिक-
कार्यकलापसम्पादनार्थं संस्थापिते गिरीशकोषे
श्रीमन्तस्तादृशं साहाय्यमाचरन्तु येन दुःखपङ्कमग्नो
ब्राह्मणपरिवारः समुद्धृतः स्यात् । नाधिकं भवत्सु
निवेदन् । भवतां कार्यं, भवन्तो जानन्तु । साहाय्य-
दातृभिः "महामहोपाध्याय श्रीदेवीप्रसादशुक्लः,
सुप्रभात- कार्यलयः, काशी" इति संकेतेन द्रव्यं
प्रेषणीयम् ।

# संस्कृतसमाचाराः

## प्रहितपत्रनिचापाञ्जलयश्च ।

सम्पादकमहोदयाः !

पण्डितप्रवरन्यायाचार्यगिरीशशुक्लमहोदयानां मार्गशीर्षपूर्णिमायां दिनेऽष्टवादनसमये पाञ्चभौतिकनश्वरकलेवरपरित्यागपूर्वकं निःश्रेयसलाभेन पौषकृष्णप्रतिपदि विश्वनाथमन्दिरसन्निधाने काशीस्थविदुषां महती शोकसभा समभूत । पौषशुक्लाष्टम्यां टाउनहाले शुक्लमहानुभावानां, महामहोपाध्यायप्रभुदत्तशास्त्रिणां च कैवल्याधिगमेन महामहोपाध्याय—श्रीप्रमथनाथभट्टाचार्याणां सभापतित्वे संस्कृतसाहित्यसमाजस्य शोकाधिवेशनमभूत् । तदनु द्वितीयदिने तत्रैव काशीविद्वत्परिषदाऽपि नैजं शोकाधिवेशनमनुष्ठितम् । हिन्दुविश्वविद्यालये, वाराणसेयेषु बहिस्थेषु च बहुषु विद्यालयेषु शुक्लमहोदयस्य कृते बहवः शोकसभाः समपद्यन्तेति ।

काशी
१२-२-२८

आश्रवः—
**श्रीमदनगोपालशर्मा**

सम्पादकमहोदयाः !

पौषकृष्णतृतीयायां शनिवासरे श्रीशङ्करनाथमहाविद्यालयीयाया वाग्वर्धिन्याः कुमारसभाया एकं शोकाधिवेशनं श्रीपूज्यपादानां श्रीगिरीशशुक्लन्यायाचार्याणां मृत्युसमाचारं ज्ञात्वा महाविद्यालये संजातम्, यत्र कुमारसभायाः सर्वे सदस्या अधिकारिणो महाविद्यालयीया अध्यापकाश्च उपस्थिता आसन् । सर्वसम्मत्या श्रीपं० रामदत्तशास्त्रिभिः शोकप्रस्तावः पठितः । तथाहि—

श्रीशङ्करनाथमहाविद्यालयीया वाग्वर्धि[...] कुमारसभा श्रीमतां पं० हुकुमचन्द्रशास्त्रिणां (श्रीगि[रि]शशुक्लमहोदयशिष्याणां) साभापत्ये, प्रातःस्मरणीयानां श्रीगिरीशशुक्लमहोदयानां लोकान्तरगमनोदन्तं श्रुत्वा,तेषां महात्मनां गुणसम्भारान् स्मारं स्मारं दोदूयमानहृदया भृशं शोकं प्रकाशयन्ती लोकान्त[रे] तेषां भव्यं भावयेद् भगवान् काशीशो विश्वनाथ इति भूशमानतेन शिरसाभिलषति । तच्छोकसंतप्तेन परिवारेण सह समवेदनां प्रकाशयन्ती च तत्परिवार[स्य] शोकशमनाय तमेव भगवन्तं प्रार्थयते । एतन्महा[...] शोकनिमित्तकोऽवकाशश्च समजनि ।

कपूरस्थल-राज्यम्
१५ पौषे, सं० १९८५

निवेदकः—
**किशोरीलालजोशी**

माननीयाः सम्पादकमहानुभावाः !

गुरुवर्याणां श्रीमतां पण्डितप्रवरन्यायाचार्यगिरीशशुक्लशर्मणामसामयिकपरलोकगमनेन वय[...] मनाथा दीना अन्तेवासिनो दुःखदावाग्निदग्धा[...] किंकर्त्तव्यविमूढाश्च सन्तप्ततदीयपरिवारसन्नि[...]

...नां प्रकटयन्तो दयार्द्रचित्तानां गुरुवराणा-
...ः शान्तिमभिलषामः । तेषामस्माकमुपरि
... दयातिशय आसीन्नासौ जन्मशतेनाऽपि
...ुं शक्यते ।

...णसी, ...-२८ } श्रीरामसिंहासनशर्मा
श्रीगोपालदत्तशर्मा

...सम्पादकमहोदयाः !

...कृत-साहित्य समाजसंस्थापको महामान-
...श्रीमदाचार्यः श्रीगिरीशशुक्लमहानुभावः स्वीयं
...तिकं शरीरमुत्सृज्य गिरिजापतेः परम-
...दवीं जगामेत्यसामयिकं हृदयविदारकं
...श्रुत्वा, वयं भृशं दुःखिताः । देशमान्या एते
...सरस्वत्याः, भगवतस्सनातनधर्मस्य, भारत-
...यद्दर्शी सेवां व्यधुर्न तथा संस्कृत-साहित्य-
...ाजे कोऽपोति । वयं तत्पारिवारिकजनानां
...सहानुभूतिं प्रकाशयामः ।

...राज्यम् ...-२८ } कृपेच्छुः - पौराणिकपीताम्बरराव:

...ाः ! सम्पादकाः !

...ऽस्तु । 'सूर्य्योदय' द्वारा 'सुप्रभात' स्य
...सम्पादकानाम् अधुना च व्यवस्थापकानां
...श्रीगिरीशशुक्लन्यायाचार्य्याणां स्वर्गतिं वि-
...ं महतीं शुचमापन्नोऽस्मि । यद्यपि तैः साकं
...मील् साक्षात् परिचयः; तथापि तेषां विद्व-
...गुणाः, नवयौवनश्च ममाप्यक्षिणी बाष्पाऽऽ-
...कार्षुः ! एतेषां स्वर्गमनेन 'सुप्रभाते' सत्यं
...तोऽजनि । अस्मिन् वृहति शोके सहाऽनु-
...दुर्वन्नहं परमात्मानं तेषां सद्गतिं तत्पारि-
वारिकेषु च धैर्य्यं प्रार्थये । 'हा हन्त ! करालकाल-
व्याल ! त्वं कलौ कलिकल्मषकलुषः सन् वैदुष्य-
प्रत्यर्थी संवृत्तः ।

मुलताननगरम् । २—२—२८ } भवदीयो— दीनानाथशर्म्मा शास्त्री,

श्रीयुतसम्पादकमहोदयाः !

संस्कृत-साहित्य-समाज-प्राण-विद्वद्दल सहृदय-
पं० गिरीशशुक्लन्यायाचार्यमहोदयानामकाण्ड एव
निधनसमाचारं पठित्वा महद्दुःखं समभून्मम
मनसि । हा ! हन्त ! अकाल एवास्माकं पूज्य-
न्यायाचार्याणां स्वर्गारोहणं समजनि ! नूनं संस्कृत-
सरस्वत्या दुर्भाग्यमेतत् । हा ! कोऽधुना गह-
नन्यायशास्त्रस्य-न्यायकुसुमाञ्जलिप्रभृतिपुस्तकानां
सरलां टीकां विधास्यति ? हा ! अनभ्र एव
वज्रपातोऽयं कालेन कृतः । न केनाऽपि ज्ञायते
कालस्य कुटिला गतिः । श्रीमतां शुक्लमहोदयानां
पारिवारिकजनानां सन्निधौ समवेदनां प्रकाशयन्नहं
तच्छान्त्यै परमेश्वरं प्रार्थये ।

चूरू, २८-१-२८ } भवदीयः— श्रीवासुदेवशास्त्री ।

श्रीमन्तः सम्पादकाः !

विदेशीयशिक्षादीक्षापिशाचनीप्रवलप्रभावपार-
तन्त्र्यपाशनिगडितचरणायाः सुरसरस्वत्या नेतृरत्न-
भूतानां प्रातःस्मरणीयचरणारविन्दानां संस्कृत-
साहित्य-समाजसेवकादर्शभूतानां व्याकरण-
साहित्य-कर्मकाण्ड-न्याय--ज्यौतिषशास्त्राध्यापकानां
गुरुवराणां श्रीमदाचार्यपादानां श्रीगिरीशशुक्ल-

( अवशिष्टम् आवरणद्वितीयपृष्ठे द्रष्टव्यम् )

Rg N. 1348 A

अतीत—१९८१-८२-८३-८४ संवत्सराणाम्

# सुप्रभातम् ।

## प्रथमवर्षस्य—१९८१

शोभनबन्धैः पुस्तकाकृत्या निबद्धम् । मूल्यम्—६) षण्मुद्राः । मार्गव्ययः पृथङ्नास्ति ।

## द्वितीयवर्षस्य—१९८२

प्रथमाब्दवदतिमनोहरबन्धबद्धम् । मूल्यम्—५) पञ्चमुद्राः । मार्गव्ययः पृथङ्नास्ति ।

## तृतीयवर्षस्य—१९८३

पूर्ववद् बद्धम् । मूल्यम् २॥) सार्द्धमुद्राद्वयम् । मार्गव्ययः पृथक् ।≡) ।

## चतुर्थवर्षस्य—१९८४

अतिमनोहरमिदम् निबद्धम् ।
मूल्यम् ३॥) सार्द्धमुद्रात्रयम् । मार्गव्ययः पृथक् ॥)

### प्रकीर्णाङ्काः

प्रकीर्णाङ्काः स्वल्पा एव विद्यन्ते । येषाम्पार्श्वं कस्यचनाङ्कस्याभावो भवेत्ते नूनं शीघ्रतां कुर्वन्तु ।

प्रथमवर्षस्य प्रत्येकाङ्कस्य मूल्यम्—।) आण चतुष्टयम् । अङ्काः—आदर्शः, १, ४, ९, ११, १

द्वितीयवर्षस्य—प्रत्येकाङ्कस्य मूल्यम्—≡) आणकत्रयम् । अङ्काः—२, ३, ५, ६, ७, ८, ११, १२ ।

तृतीयवर्षस्य प्रत्येकाङ्कस्य मूल्यम्—=) आ कद्वयम्, अस्य सर्वेऽप्यङ्काः सन्ति ।

चतुर्थवर्षस्य प्रत्येकाङ्कस्य मूल्यम्—।) आण चतुष्टयम् । अस्य सर्वेऽप्यङ्काः सन्ति ।

प्रकीर्णाङ्कानां मार्गव्ययो निर्धारितमूल्यतः पृथगेव जिघृक्षुभिस्त्वरा कार्या । पत्रव्यवहारसङ्केत

### व्यवस्थापकः—

## सुप्रभात-कार्यालयः, काशी

( Benares City )



Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

सौर-फाल्गुने १९८५ वैक्रमाब्दे ।

पञ्चम-वर्षं
Vol. 5

March 1929.

एकादशोऽङ्कः ।
No. 11.

# सुप्रभातम् ।

संस्कृत-साहित्य-समाजस्य मुखपत्रम् ।

...मिर-ततिमुदस्यद् भेदताराविलुम्पन्, नयदधि-सुरभाषाभाषि-जागर्तिमुच्चैः ।
...ष-विहग-वादैराह्वयद् भाग्यभानुम, विलसतु भुवनेऽस्मिन् सर्वतः 'सुप्रभातम्' ।

निरीक्षकः—

महामहोपाध्याय-श्रीदेवीप्रसादशुक्लः, कविचक्रवर्त्ती, साहित्य-वारिधिः

सम्पादकः—
...सरी श्रीगोपालशास्त्री त्रिपाठी
"साहित्याचार्य्यः"

स० सम्पादकः—
पाण्डेय-श्रीसरयूप्रसादशास्त्री ( द्विजेन्द्रः )
"काव्यतीर्थः"

व्यवस्थापकः—

श्रीसत्यनारायणशास्त्री " कविराजः "

( टेढ़ीनीम, बनारस-सिटी )

...क मूल्यम्—३)
...यभ्यः—१२)

अस्याङ्कस्य मूल्यम् ।)

छात्रेभ्यः—१॥)
वैदेशिकेभ्यः—५)

# लेख-सूची ।



## गिरीशकोषः—

अद्यावधि अस्मिन् कोषे गृहर्णसंख्यापरिमितमेव द्रव्यमागतमस्ति । अन्येषामुत्तमर्णाना मृणानपकरणमन्तरा न गृहविमुक्तिरिति तस्यकृतेऽपि दयालुभिरुदाराशयैर्दानिभिर्यतेलिमम् । पूर्व प्रकाशितद्रव्येभ्योऽतिरीक्तानीमानि द्रव्याणि समागतानि । हिन्दूस्कूलीयाध्यापकमहोदयेभ्यः ४३ इयत्संख्याकन्तु कोषाध्यक्ष-श्रीमदनन्तरामशास्त्रिणां हस्ते सम्प्राप्तमस्ति । इतोऽधिकमेवास्मिन्मासे आगमिष्यतीति सम्भाव्यते । श्रीकाशीविद्यापीठाध्यापकच्छात्रेभ्यः ५१।) सपादैकपञ्चाशद्रूप्यकाणि सनातनधर्मस्कूलप्रभृतिस्थानीयविद्यालयाध्यापका अपि स्व-स्वविद्यालये द्रव्यसञ्चयार्थम्प्रार्थिता सन्तीति सूचयति—

श्रीरघुवीरशास्त्री 'वैद्यः' ( संग्राहकः )




[वि]विध-विषय-विभूषितम्, अद्वितीयम्, सचित्रम्, संस्कृत-मासिक-पत्रम् ।

...-वर्षे | सौर—फाल्गुने १९८५ वैक्रमाब्दीये | एकादशोऽङ्कः ।

## सुप्रभाताशीः

( १ )

विश्वाशागत-गद्य-पद्यरचना यस्मिन् समालोडते ।
स्फारे वीचिचये सुगूढविषया यस्याऽसते शुक्तिवत् ॥
गम्भीरो बहुलेखमौक्तिकमयः प्रज्ञैः प्रसिद्धिं गतः ।
योऽसौ सँस्कृतसंस्कृतो विजयते श्रीसुप्रभातोदधिः ॥

( २ )

गुणगणरमणीयं यस्य गम्भीरभावं-
कविकुलमहनीया यस्य कीर्तिः पृथिव्याम् ॥
विविध-विषय-विद्याभूषितो यस्य कायः-
स किल जयतु नित्यं 'सुप्रभातं' पृथिव्याम् ॥

—वासुदेवशर्म्मा द्विवेदी

( भवानी·छापरवास्तव्यः । )

# स्वाध्यायोऽध्येतव्यः

[ ले०—श्रीनरदेवशास्त्री, वेदतीर्थः ]

( ज्वालापुर-महाविद्यालय-व्यवस्थापकः )




लमाहात्म्याद्वेदपरः 'स्वाध्याय'—शब्दः सम्प्रति वेदाङ्गानां मध्येऽन्यतमेषु रूढः । स्वाध्यायः स्ववेदोऽध्येतव्यः । अधीयते किमु स्ववेदोऽद्यत्वे भूदेवैः ? स्वाध्यायप्रवणा ब्राह्मणा न सन्तीति नास्माकमभिप्रायः, सन्त्यल्पशो भारतभूमिभूषणभूताः । लोकसंख्यानाद्भारतीये भूभागेऽस्ति ब्राह्मणानां कोटिद्वयीति प्रतीयते । तेषु च जातिमात्रोपजीविनामेवाधिक्यम् । आर्यसाम्राज्याभावात्, सत्क्षत्रियाणां तेजोऽभिभवाच्चैतादृशी दशा संवृत्तेति वयं विजानीमः, परं भारतीयानां पुनरुज्जीवनं सर्वथा ब्राह्मणसादिति किमु वक्तव्यम् ? तच्च पुनरुज्जीवनं केवलं जातिमात्रोपजीविभिर्ब्राह्मणैर्न भवितुं शक्यमिति । यदीदानीमपि ब्राह्मणाः पुरेव विद्यावन्तस्तपस्विनश्चाभविष्यँस्तर्हि नूनं भारतीयजनानां पुनरुज्जीवनमभविष्यद् । भूदेवानां ब्राह्मणानां देहः क्षुद्रकामाय नास्तीति मनुनैव सुस्पष्टं प्रतिपादितम् । तथाहि—

"ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते ।
इह कृच्छ्राय तपसे प्रेत्यानन्तसुखाय च ॥"

द्विजन्मनां विशेषतश्च ब्राह्मणानां वेदाध्ययनमेव परं तपः—

"तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥
वेदमेवाभ्यस्येन्नित्यं तपस्तप्स्यन्द्विजोत्तमः ।
वेदाभ्यासो हि विप्रस्य, तपः परमिहोच्यते ॥"
( मनुः २—१६५-६६ )

तच्च तपो भूदेवैर्विस्मृतप्रायम् अत एव वेदाभ्यासेन प्रवृत्तिः सदोषा संवृत्ता । ते चाधुना वाचो विग्लापनेन कालं गमयन्ति, स्वयमेव न विदन्ति कर्त्तव्याकर्त्तव्यम्, कथङ्कारं नामाऽन्यान् शास्त्रतत्त्वं बोधयितुं शक्नुवन्ति ? हन्त ! क तदुच्चैस्तत्त्वमुपनिषद्वर्णितम् ? तथाहि—

"तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद्बहूञ् शब्दान् वाचो विग्लापनं हि तत् ॥"

क चेदानीन्तनी विपन्ना दशा जगद्गुरुभुव... ब्राह्मणानाम् ? यथाऽन्येषु वेदाङ्गेषु परिश्रमो वि... यत एभिस्तथा कथं न स्वाध्याये-स्ववेदे विधीय... वेदोपदेशाय ग्लायन्तो ब्राह्मणा एवास्य पुण्यभू... धोगमनस्य मूलम । यथा सैनिकगतस्य जयाऽप... यस्य सेनापतौ व्यपदेशस्तथैव ब्राह्मणेतरकृत... पुण्यपापानां ब्राह्मणेष्वेवापदेशो मन्यतामिति । ह... यैस्तपोनिष्ठैर्ब्राह्मणैरद्यावधि कुलपरम्परामनु... स्वाध्याय-रक्षा कृता, तेऽपि घृतलवण-तैलत... चिन्तया म्रियमाणाः स्वसन्ततीराङ्ग्लभाषाऽ...

न्ति, स्कूलेषु कालेजेषु च प्रेषयन्ति, अतः परं
श्चर्यम् (!!) महच्च वैचित्र्यं पश्यामः सम्प्रति ।
त्यविद्यातो विमनीभूताः पौरस्त्यविद्या-अधिजी-
मानाः सन्ति । पौरस्त्यविद्याभ्यो ग्लायतां च
तः पाश्चात्यशिक्षादीक्षासु च । सर्वमधरोत्तर-
सर्वं संकुलमिव, सर्वं मण्डलं व्याकुलीभूत-
पश्यामः । जीविकालोभादेव ब्राह्मणाः
यास्याः" ( मनुः ) संवृत्ता इतस्ततो हस्तं
यन्ति स्वतेजोभङ्गश्चानुतिष्ठन्तीति । महर्षिणा
ना साधूक्तं धर्मतत्त्वं श्रोतुकामान् महर्षीन्प्रति—
भ्यासेन वेदानामाचारस्य च वर्जनात् ।
ादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥"
ान्याः ब्राह्मणाः !
ानामभ्यासो विधेयः, आचारस्य रक्षणं
, आलस्यं हेयम्, अन्नदोषस्त्याज्यः—येन
श्रीमतां धीमतां विद्यावतां पुनरुज्जीवनं
भूमेश्च पवित्रतमायाः पुनराश्वासनं स्यादिति
भूयो विनिवेदनम् । के ब्राह्मणाः पारयितुं
ः ? इति प्रश्ने तु—
ते ब्राह्मणाः पारयितुं समर्थाः' इत्यादि
भागवतोक्तं प्रकरणं द्रष्टव्यमित्येव ब्रूमः, विस्त-
त्र नोच्यते । भवतु अत्रैव विरम्यते ।



## करुणक्रन्दनम् ।

( वियोगिनीवृत्तम् )

शृणु केशव ! नो दशामिमाम्,
द्रुतमागत्य विभो ! सुरालयात् ।
इह पश्यतु धर्म्मपुङ्गवान्,
व्यभिचारे निरतान् शठान् हरे ! ॥१॥
नहि देशहिताय मानवः,
कुरुते कार्य्यमुपाकृते विधौ ।
निजसोदरयोः परस्पर-
मभियुद्धं सततं विलोक्यते ॥२॥
तव भारतपुण्य-भूतले,
द्विज-गो-वृन्दमुपैत्यपक्षयम् ।
करुणामय ! पश्य गोकुलम्,
यवनैःसंकुलवत्सयूथ्यकम् ॥ ३ ॥
अयि माधव ! किं श्रुतन्न ते,
महिलानामतिदैन्य-रोदनम् ।
भुवि शीघ्रतयाऽवतीर्य्यताम्,
धृतचक्रेण हरे ! कृपानिधे ! ॥

—रामप्रसादमिश्रः, विद्यार्थी
( ब्रजभूषण-विद्यालयस्थः )

## विशेष-विज्ञप्तिः

...राः कुर्वन्तु भवन्तः सुप्रभातलेखका ग्राहकाः पाठकाश्च यत् ये केऽपि सुप्रभाते प्रकाशनार्थं लेखान् ...ा वा प्रेषयन्तु ते सुस्पष्टाक्षरैरेकस्मिन्नेव पृष्ठे लिखित्वेति न विस्मर्तव्यम् । अथ चावश्यकपत्र-...राद्यावश्यकेष्व एव नियमः । तत्र पत्रोत्तरापेक्षायां चिटिकाऽपि नूनमेवप्रेषणीयेति, नान्यथोत्तरलाभः ।

( स० सम्पादकः )

# अश्रु-द्वयम् ।

[ लेखकः—रवीन्द्रशास्त्री, भिवानी ]




मधुमासे निनिर्गत-"सुप्रभाते" कस्यचिद्विद्यार्थि—-महोदयस्य "हिन्दुधर्मान्तर्गताः काश्चित् घातिकाः प्रथाः" इति-शीर्षकं सन्दर्भमुद्वीक्ष्य चेतसि मे एतद्विषय एव किञ्चिल्लि-खनस्पृहाऽभिव्यक्ता। विद्यार्थिमहोदयस्य दर्शं दर्शं विधेयमेतदुल्लसति मनः। यद्येवमेवान्येऽपि सुलेखका एतदेव लक्ष्यीकृत्य किमपि लिखेयुस्तर्हि महानुपकारः स्यादस्य स्वातन्त्र्यातीतस्य भार-तीभारतस्य।

इदानीं भारतवर्षस्य कीदृग्व्यवस्था इति तु सु-विदितमेव सर्वैस्सामयिक-समाचार-पत्र-पाठकैः। कथमनुदिनं मौहम्मदीयाऽत्याचारो वृद्धिमेति, कथञ्च हिन्दुजाती रसातलतोऽपि तलातले परि-स्खलति, शक्तिहीनत्वादस्माकं सर्वत्र माङ्गलिक-कार्येष्वपि कथमत्याचारो यवनानाम्, कथमस्म-दीय-रमणीनां परिहरणं तिरस्करणञ्च चर्क्रति यवनाः, कथं वा यत्र तत्र सर्वदैव दण्डादण्डि-केशाकेशि हिन्दु-यवनयोर्युद्धं श्रूयते! लवपुरादौ तु परीक्षादितुच्छात्राणामपि जीवितेश-निकेतन-गम-नमभूदिति स्मारं स्मारं परिद्रूयते चेतः! हा हन्त!!

विषयेऽस्मिन्निदानीमधिकतया कारणद्वयमे मुख्यतो दरीदृश्यते। तच्च कथमस्मज्जीवनोच्छे चर्करीत्यत्र प्रथमं तु "बाल-परिणयः" अपर 'वृद्ध-परिणयः'। अनेनैव कारणद्वयेनास्म जातिह्रासो बोभूयते। अथ च भृशमेवैतस्य प्र कारो नो स्यात्तद्य्वगन्तव्यमेतत् यत् हिन्दुजाति वसानं गतेवास्ति। यदेतयोः (बाल-वृद्ध-प णययोः) सहृदय-संस्कृतज्ञावस्थितावपि 'प्रचा धिक्यं वर्वर्त्ति। पुनरपि न कश्चित् समाजसु चिन्तकः किञ्चिद्वु बाभाष्यते। 'बाल-परिणयो' खलु शास्त्र-स्मृति-प्रतिपादितो न च हिन्दुध न्तर्गतः। यवनात्याचाराधिक्ये केनचिन्महोद समाजशुभाकाङ्क्षया प्रवर्त्तितेयं प्रथा। भगव मनुना तु न क्वापि बालपरिणयो बोभूयेतेति स्पष्ट तम्, न क्वाप्यक्षिस्फालनेनापि दृश्यते बाल-प णयः। बाल्यावस्थायान्त्वपराणि विधेयानि वि हितानि स्मृतिप्रवर्त्तकैः, परं तानि तु विस्मृता र्वाचीन-कोविद-कदम्बैः। "बाल-परिणयः" विषये तु मदीयमपि किञ्चिद्वक्तव्यं वर्त्तते। णयशब्देन तावदत्र किमभिव्यज्यत एतत्त्ववगन्त एव शब्दज्ञैः। अथ च, परिणयस्तदैव बोभ महति यदा न्यूनातिन्यूनं परिणायकः परिणयस्य वाच्यार्थन्त्वधिगच्छेत। नो चेत्, कथं परि कीदृक् परिणयः? येन वराकेण बालेनैतद

श्चिदपि नावगम्यते तस्यैव परिणयः ? हा, कष्टम् !! एतत्खलु चित्रमस्मदीय एव भारते दृश्यते (!) एवं सति, कथं बलरक्षणं स्यात्, आगामिजीवनं सुखकारकं सम्भवेत् ?

सदनाधिक्य एवमपि निरीक्ष्यते यद्यदा परिणयानन्दलम्पटाय बालकाय 'मधुपर्कं प्रतिगृह्णाम्' इति जागद्यते कन्याजनकस्तदा 'मनोरञ्जमिदं दृश्य'मिति मत्वा डिम्भो हास्यं करोति। बालिकानान्तु काऽऽख्यायिका ? एतास्तु स्वातन्त्र्यात्ताः पुरुषाधीनाः किं कुर्युर्वराक्यः। मरुस्थले त्वष्टवर्षीयं बालं बालया सहोद्वीक्ष्य स्त्रियो "राधाकृष्णयुग्मता ('राधाकृष्ण की जोड़ी' इति भाषया) सम्भूता" इति बम्भण्यते !!! स्वदशवर्षावस्यायास वराको बालोऽष्टवर्षीयां बाल-वैधव्य-विधुरां पत्नीं विधवां परिहाय यमालयं याति। वैधव्य-दुःखिता बाला कथं कथमपि यापयति जीवनायम् ! यदा तस्या यौवनश्रीः प्रादुर्भवति तदा विलासविलसितः कामस्स्वकीयं सम्मोहनं शरं

लक्ष्यीकृत्य तां तच्चेतसि परित्यजति। ततः सा विधुरा बाला यौवनोद्यामेनानङ्गशरजर्ज्जरितेन च हृदयेन कस्यचिन्मौहम्मदीयस्य निकेतने यापयति स्वदिवसान्। तत्र च प्रजननक्रियां सम्पाद्य दशगोभक्षकान् दुष्टानधमान समुत्पादयत्यसौ। एवमेका गोपालकजननी दशगोभक्षकान् सुतान् सम्पादयति (!!) तत्रापि समाजसुधारका धर्मशास्त्रिणश्च कृततूष्णीम्भो भवन्तीति हा, हन्त !! किमतः परं दुःखदं विवरणं स्यात् ?

हा ! भगवन् ! त्वमेवैतस्या हीनाया जात्याः सहायकः स्यात्। हिन्दुरक्तरञ्जिता वनितास्स्वीये धर्मे सम्मेलयन्ति यवनाः, स्वभोग्याश्च ताः कुर्वन्ति कथमेवमेतस्य निस्तरणं सम्भविष्यति ? हा ! हन्त !! बाल-विवाहकरणेन कीदृग्ज्यानिरस्माकमिति तु दर्शितमत्र। वृद्ध-विवाह-विषयेऽपि चेल्लेखकाः किमपि लिखेयुस्तर्हि समाजोन्नतिस्तत्संरक्षणं च स्यादित्यनुमिनोमि। शुभमस्तु।

## अवस्थात्रयी

शैशवे प्राग्वन्मर्त्यः प्रवचनपटुः कर्मकुशलः,
स्वतन्त्रः सानन्दोऽध्ययनसुमतिर्भ्रामणरुचिः।
वृद्धपादे जाते पशुरिव विमूढो गृहरति-
स्तथाऽलित्वं प्राप्ते महति खलु मोहे निपतति॥१॥

—सत्यप्रसादशास्त्री "बहुगुणः"

---

## नामगुप्तिः

किन्नाम प्रथमाश्रमस्य भगवन् ! का सृष्टिकर्त्री सखे !
कः खे क्रीडति काञ्चनस्य हि तथा काऽऽख्याऽपरा विद्यते।
किञ्चास्ति ह्यवहेलनस्य मतिमन् ! नामान्तरन्तद्वद।
मत्प्रश्नोत्तरपूर्ववर्णजनिता ज्ञेया मदीयाऽभिधा॥ १॥

शर्मान्तः प्रश्नोत्तर-प्रथमाक्षराऽभिधः
कुशेश्वर संस्कृत विद्यालयस्थः।




## भारतीयं सुश्रावक-यन्त्रम्।

( लेο—पण्डित कृष्णदत्तभारद्वाजः शास्त्री, बी. ए. )

सुविदितमेवैतत्सुधियां यदाधुनिकवायुयानाविष्कारात्प्राक्संसारः श्रीमद्रामायणप्रभृतिग्रन्थवर्णित-पुष्पकादि-व्योम-यानाऽस्तित्वे संशयान आसीदिति। प्रत्यक्षं खयानान्येव विलोक्य सर्वेषां सन्देहो विलयमुपागमत्। पुराणवर्णनासु च कोऽपि विश्वासः समजनि। यद्यपि वयमर्वाचीना भारतीयाः प्राचीनोत्कर्षं साधयितुं न प्रभवामो विज्ञानाद्यभावात्परायत्तत्वाच्च, तथापि शास्त्रोल्लेखे मिथ्यात्वमारोपयितुं कृतः प्रयत्नोपि गच्छत्यनेहसि सफलेतरो भविष्यति। विज्ञानस्य महान्महिमा अवलोक्यते।

अद्यत्वे भारतोय-राष्ट्रपरिषदा—( काङ्ग्रेस ) ष्यवसरे उपस्थितायां जनतायाः श्रवणसौकर्याय सुश्रावक ( Loud-Speaker ) नामकानि यन्त्राणि सर्वासु दिक्षु अवस्थाप्यन्ते यद्द्वारा व्याख्यातुः वचांसि सर्वत्र समानमाकर्ण्यन्ते। यद्यप्येतद्यन्त्राविष्कारस्य श्रेयो यशः प्रतीच्यविदुषामेव तथापि नैतत्पुरा भारतवर्षे आसीदिति न वक्तुं युक्तम्। यतः प्राचीन-भारत-गौरवशालिनि महाभारते प्राप्यते हि एतादृशोपकरणास्तित्वम्।

पुरा खलु दिलीपमहाराजस्य यज्ञे विश्वावसुर्नाम गन्धर्वो वीणामवादयत्, श्रोतारश्च देवप्रमुखा अष्टादशसहस्रसंख्याका आसन्। एतावति विशाले समाजे सुस्पष्टं वीणाप्रवणनं न सुकरम्। तदानीन्तना वीणा घोरध्वनयोऽभूवन्निति चेत्तर्हि समीपस्थानां श्रोतॄणां कर्णास्तूत्तुङ्गारावेण श्रवणाऽरमणीयेन नष्टा एवाऽभविष्यन्, परन्तु न तादृग्वर्णनमुपलभ्यते। अतो विश्वावसु-वीणामहाध्वनि-कल्पनाऽपार्थैव। तत्र तु "ममैव पुरतो वीणामयं मधुरं वादयतीति" विचारः सर्वस्य मनस्युदभूत उक्तञ्च यथा—

" ननृतुर्देवगन्धर्वाः षट्सहस्राणि सप्तधा।
अवादयत्तत्र वीणां मध्ये विश्वावसुः स्वयम्।
सर्वभूतान्यमन्यन्त मम वादयतीत्ययम् "।

अत्र पूर्वोक्तो जनताया भावो विश्वावसुवीणावादनकौशलजन्यः? आहोस्विद् रङ्ग-प्रबन्ध-विशेषोद्भूतः सम्भवेत्, परन्त्वाधुनिकोपरिलिखितयन्त्राणीव तदापि उपकरणानि बभूवुरिति मम मतम्।

# उदुम्बरसार-प्रयोगाः ।*

म० म० श्रीगणनाथसेनशर्म्मणः ( एम्. ए. एम्. एस्. )

...ग्नो-व्रणे—

विंशतिभागजलेन सह उदुम्बरसारस्य प्रयोगः ...यस्सुखायाऽरोग्याय च भवति, यदि स्वल्पजलेन ...युज्यते तर्हि दाहस्तोदश्च भवति ।

...ग्नि-दाहे—

षड्गुणजलेन सहितः तत्प्रयोगो दाहनाशक ...रोग्यप्रदश्च भवति ।

...त्र-रोगेषु—

पूयमेहसम्पर्कजन्ये नेत्राभिष्यन्दे सद्यः प्रसूतस्य ...स्य अन्येषाञ्च नेत्ररक्तकोऽयम्प्रयोगः साधारण-...भिष्यन्देऽपि उदुम्बरजलेन नेत्रधावनं विशेषेण ...म् । नेत्रोपघाते चास्य पिचुप्रयोगः परमहितकरः ...कीरोगे चन्दनवद्द्रवं कृत्वाऽस्याञ्जनं हितकरं ...तीति न विस्मर्तव्यम् ।

...र्ण-रोगेषु—

कर्णनाडी-व्रणजन्य-पुराणपूयस्रावे उदुम्बरजलेन ...प्रक्षालनमारोग्यप्रदम्भवति ।

...सा-रोगेषु—

नवीनप्रतिश्याये पुराणपीनसे च नासाप्रक्षालनेन ...ः सुखम्भवति, नासारक्तस्रावे एतज्जलेन धारा-...लनम्परमोपकारि भवति ।

दन्त-रोगेषु—

दन्तपूयरोगे वर्त्तिवत्कृत्वास्य चूषणान्निष्ठीवनश्चाल्पीयसा कालेनाऽरोग्य-प्रदम्भवति ।

मुख-रोगेषु—

मुखपाकादौ प्रक्षालनं स्वास्थ्यप्रदम् । मुखक्षते जलरहितस्योदुम्बरसारस्य क्षणिकस्पर्शनं शीघ्रं फलप्रदम्भवति ।

मूत्रमार्गरोगेषु-दुष्टव्रणेषु च—

( शराविकादौ ) किञ्चित्तरलीकृतस्यास्य प्रलेपस्तज्जलेनैवोष्णस्वेदश्च पञ्चषैर्दिनैर्व्रणशोधनः क्रमशो रोपणश्च ।

नाडी-व्रणेषु—

तुत्थकप्रयोगान्ते उदुम्बरसारस्य वर्त्तिका प्रयुक्ता शीघ्ररोपणाय भवति ।

रुजायुक्ते व्रणशोथे—

अस्य घृष्टचन्दनवत् पौनःपुन्येन प्रयोगो रुजाशोथहरो भवति ।

प्रवाहिकायाम्—

नवीनायाञ्जीर्णायाञ्च उदुम्बरसारजलेन वस्ति-प्रयोगः ( आन्त्रधौतिः ) शीघ्रमारोग्य-प्रदो भवतीति बहुधा परीक्षितोऽयम्प्रयोगः ।

---

* चम्पारण्यान्तर्गत-रत्नमाला-निवासिनां चिकित्सकचूडामणि-भिषगाचार्य्य-कवीन्द्र-श्रीचन्द्रशेखरधरशर्म्म-महोद-...नासुदुम्बरसाराविष्कारो भैषज्यजगति युगान्तराऽधायकः । आविष्कर्त्तृभिश्च संस्कृताध्येतॄणां कृते तस्य निःशुल्कमेव प्रदानं ...विज्ञातमस्ति, तत्र विषये महामहोपाध्याय-श्रीगणनाथसेनमहोदयानां सम्मतिः प्रकाश्यते । विशेषजिज्ञासवः सुप्रभात-...कार्यालयतः –) आणकैकस्य चिटिकां सम्प्रेष्य तत्प्रयोगविधिं गृह्णन्त्विति । —( सम्पादकः )

अम्लपित्ते-शूले च—

अस्य प्रत्यहन्द्विस्त्रिः प्रयोगोऽतीव हितकरः ( मात्रा-५-१० रक्तिकाः ) भवति ।

पुराणग्रहण्यामप्येवं विध एव प्रयोगो विशेषेण हितकरो भवतीति एतावन्तः प्रयोगा मया परीक्षिताः । एते च श्रुता अन्येभ्यो वैद्येभ्यः—

विषूचिकायाम्, यकृच्छूले, वातवेदनासु, अश्मरीशूले, प्रदरे, रक्तपित्ते, पूयमेहे, मधुमेहे, अतिसारे, वृक्कशूले, उदरशूले, कैन्सरनामकरोगे, कर्णशूले, भगन्दरे चैतत्प्रयोगो हितकरो भवति । तथाहि—

औदुम्बरामृतमिदं सुपरीक्षितन्नो,
युञ्जन्तु साधुमतयो भिषजः सदैव ।
तेनात्र रोगशतपीड़ितदुःखिलोक-
दुःखापनोदनविधौ प्रभवन्तु धीराः ॥१॥



## शीतला-संक्षिप्तपरिचयः प्रतिषेधोपायश्च

[ लेखकः—श्रीभगवतीप्रसादशुक्लः, आयुर्वेदाचार्यः, सभापतिःबहराइचस्थच्छात्रसमितेः ]



ह खलु विदितमस्ति सर्वसाधारणजनानां शीतलाया दारुणव्याधित्वम् । आसार्धसहस्रवर्षात् जनपदेषु कवलितजीवितापि न शीतला शीतला जाता; प्रत्युत प्रत्यब्दं सहस्रशो जना अनया क्रान्ता विपद्यन्ते । एष व्याधिः यथा शिशूनां भवति न तथेतरेषां तरुणस्थविराणाम् । एतदङ्कशयानाः शिशवो भूम्ना शवा एव उपलभ्यन्ते । दैववशाद् यदि जीविता भवन्ति तदा एतल्लक्षण-लक्षिता नष्टप्रायवर्णेन्द्रिया आजीवितावसानं दृश्यन्ते । अयं व्याधिर्घोररूपेण विद्यमानः पुरा भारतीयान् नार्दयतिस्म यथेदानीम् । न च प्राचां कृता शीतला संज्ञाप्यस्योपलभ्यते (!) प्राक्तनैस्तु मसूरिकेति कथिता सूत्रितापि क्षुद्ररोगेषु । यथा चरके-पतञ्जलिः "याः सर्वगात्रेषु मसूरमात्रा मसूरिकाः पित्तकफात् प्रदिष्टाः" ( च. चि. अ. १२ ) दाहज्वरं रुजावन्तस्ताम्रा स्फोटाः सपीतकाः । गात्रेषु वदने चान्तः विज्ञे यास्ता मसूरिकाः ॥ ( सुस्रुत अ. १३ ) " गात्रे स्वतश्च वक्त्रस्य दाहज्वररुजान्विताः । मसूरमात्रास्तद्वर्णाः तत्संज्ञा पिटिका घना ॥ ( वाग्भट उत्तर ३१—८ ) इत्यनेनानुमातुं शक्यते, यत् वाग्भटसमयपर्यन्तमुद्भूतिर्न जाताऽस्येति ।

माधवादीनां ग्रन्थे विशेषविवरणदर्शनादव गम्यते, यत् वाग्भटात् कियत्कालानन्तरमेवे शनैः शनैर्दारुणव्याधित्वं शीतलेतिनाम च प्रापेति

परमाङ्गलवैद्यके ( डाक्टरी ) मसूरिकोत्पत्तिं ...थ्वी-जल-वायु दुष्टितो भूम्ना तज्जुष्टरोगिसंस्पर्शा-...भिरामनन्ति, कथयन्ति च शीतलारोगिणां ...त्कपिटिका रजःपरमाणवो वायुमिश्रिता नासि-...दिमुखेनान्तःशरीरगता अन्येषामपि शीतलो-...दका भवन्ति । व्याधिरयं प्रायः शिशिर-...न्त-ग्रीष्मेषु-जनानभिद्रवति । विज्ञानं त्वस्य ...राकारा सर्वावयवप्रचुरसान्द्र-पिटिका तीक्ष्ण-...रवती या, सा मसूरिका 'स्मालपोक्स्' इति ...यते । या तु विरलपिटिका, अल्पज्वरकरी सप्ता-...भ्यन्तरमेवोत्पत्तिप्रकोपप्रशमा सा 'चिकनपोक' ...त कथ्यते । सज्वरा, ताम्राभा, रोमकूपोन्नतिसमा, ...या रोमान्तिका नाम मसूरिका 'मिसलेस' ...च प्रोच्यते ।

...तन्महाव्याधितो रक्षणार्थं प्रत्नवैद्यैर्मसूरिका-...जनानां चर्मोत्पाट्य इतरेषां बाहौ छिन्नायां ...चि तद्रजःकणं प्रक्षिप्य मसूरिकाकल्पा अन्या ...रिका उत्पाद्यन्तेस्म । परमेतत्प्रयोगतः सत्यपि ...तलाया अपुनर्भावित्वे, गृहीतमसूरिकात्वचो जनस्य ...जव्याधिना अर्शःकुष्ठोपदंशादिना कृतमसूरि-...ऽपि जन एतज्जात-व्यापत्तिमन्वभवत्, शोणि-...पात् । न केवलमेत एव दोषाः, क्वचित्प्राणात्य-...पि जाताः, घोरपिटिकारसजातत्वात् । एवं ...मन्यमानानामहरहोऽन्यप्रतीकारोपायं मृगयतां ... विलियम्-जेनर-महोदयेन १७९६ ई० वक्शीनेशन ...का ) इत्याख्यो योग आविष्कृतः ।

अयं महानुभावः शीतलाक्रान्तिकाले गोपालानां ...णां च अतज्जुष्टत्वात्, इतरेषां शीतलार्तत्वाच्च ...विकाय । यदेतादृशी अद्भुता गवि शक्तिर्वि-द्यते यया तत्समीपवर्तिनो जना जातु शीतलार्ता न भवन्ति । तदाऽवश्यमेव गोमसूरिका रसव्याप्त-शोणिता मानवा अपि नानुभवेयुस्तद्व्यापत्तिमिति निश्चित्य प्रागष्टवत्सरीयबालके प्रयुज्य दृष्ट्वा तदनुत्पत्तिं चान्यविकारं वा पुनः पुनः सहस्रवारान-नुभाव्य विज्ञापयतिस्म । "अयं सर्वथा प्रमोद्योदर्क" इति स एष प्रयोगो भारते भारतशासकैर्भारतीयान् प्रति व्यवह्रियते साम्प्रतम् । गोस्तनजातमसूरिका-मुत्पाट्य लसीका गृह्यते प्रयुज्यते च सैव यस्याः "वक्शीनेशन" इति नाम । अस्मात् कथंचिदपि न भेतव्यम्, सर्वथा कार्मुकोऽयम् ।

ये खल्वत्रोद्विजन्ते ते आयुर्वेदीयौषधेन परम-सुकुमारान् कुमारान् संस्कृतदेहान् विधाय सुखं यावज्जीवितं तिष्ठन्तु न जातु शीतलाया भयम् ।

तथाहि—

" ये शीतलेन सलिलेन विपिष्य सम्यङ्  
निंबा[1]ऽक्षबीजसहितां रजनीं[2] पिबन्ति ।  
तेषां भवन्ति न कदाचिदपीह लोके  
पीडाकरा जगति शीतलिका विकाराः ॥१॥  
मोथा[3]रसेन सहितं सित[4]चन्दनेन  
वासा रसेन मधुकं[6] मधुकेन[7] चाथ ।  
आदौ पिबन्ति सुमना[8]स्वरसेन मिश्रं  
ते नाप्नुवन्ति भुवि शीतलिकान्विकारान् ॥२॥

१ निंबः (नीम) + अक्षः (बहेड़ा) तयोर्बीजं । २ रजनी (हरिद्रा) ३ कदलीवारिणा । ४ श्वेतचन्दनेन । ५ अडूसा । ६ मधु । ७ मुरैठी । ८ मालती । (चमेली) इति इमे सर्वेऽपि योगा जनसुलभा दृष्टफलाश्चेति ।

# भौतिकवादोऽनुपादेयः

[ ले०—साहित्य-शास्त्री पं० चैनसुखदासो न्यायतीर्थः ]



साम्प्रतमध्यात्मवाद्–विमलसलिल–पूरपरिपूते, तपोधन-महर्षिगण-चरणरजोनिर्माजिते, निस्सारजड़वाद-दूषित-पङ्क-कलङ्क-शङ्कयाऽपि रहिते, सुराऽसुर-वृन्दमहिते, माननीयेऽस्माकमस्मिन् भारते वर्षे पाश्चात्यानां संसर्गात् सर्वथा हेयोऽपि भौतिकवादः समुत्कर्षमयं स्वास्पदं कुर्वन् दृग्गोचरीभवतीति महच्चित्रमेतत् ? पश्चिमीय-शिक्षणतो भारतीया अपि सरस्वत्युपासका नाशोन्मुखा मुख्यमुन्नतिसाधनमपास्य मरीचिकायाः समानतामादधानं साधनाभासं गवेषयन्तो दृष्टिपथमवतरन्तीति दुर्भाग्यमस्माकम् ! ईदृशीं चेतसो व्यथासम्पादिकामवस्थां निरीक्षमाणानां भारतहितैषिणां भारतीयानामन्तःकरणमशनिपात—जर्जरीभूतमिव भवति । यदि भौतिकवादस्याऽयमेधमानः प्रसारो नावरुध्येत, तर्ह्यनागतकालेऽध्यात्मवादस्य नामापि न श्रोष्यत इति निश्चितमेव ।

इदानीं शनैःशनैर्भारतस्य निखिलमपि वायुमण्डलं भूतवादमयं भवति । विज्ञानस्य चरमोन्नतिरपि भूतवादस्य जननी । चेतसो विस्मयसम्पादकैर्विज्ञानस्याभूतपूर्वैराविष्कारैर्धर्मश्रद्धाऽपि विलु-

प्तेवास्ति भारतीयानाम् । केचित्तु धर्ममपि आड
म्बरमात्रं प्रतिपादयन्ति, ईश्वरस्यापि बहिष्कारं
विधातुं सन्नद्धाः सन्ति, कथयन्ति चेत्थं नास्यां जग
त्यामीश्वरनामधारी कश्चन पदार्थो वरीवर्ति । इ
किल केवलं कल्पनाजगतो वस्तुमात्रम् । न
कश्चन वास्तविकः पदार्थः । माधुरीत्यभिख्याय
हिन्दीपत्रिकायां केनचिद्भूतवादपक्षपातिना लेख
केनेश्वर-बहिष्कारविषयक एको लेखः प्रकाशित इति
तु सुविदितमेव समेषां सहृदयपाठकानाम् । एतादृ
ग्धर्मध्वंसकार्यैं समयस्य शक्तेश्चोपयोगेन को लाभो
भविष्यतीति तु लेखकमहोदय एव विजानीयात् ।
धर्ममाडम्बरमात्रं प्रतिपादयद्भिरीश्वरबहिष्कारं च
कुर्वद्भिः पुरुषैर्न कदाचिदपि विचारितं यदेतयोर्न
श्चाऽपि लोकानां महानुपकारो भवति । यदीश्वर
भयं न स्यात् सर्वत्र जगति निरन्तरं रक्तनद्यो वहेयुः
सबला निर्बलान् त्रासयेयुः, शान्तेस्तु नामाऽपि
न श्रूयेत, निखिलमपि जनमण्डलं कलहायमा
प्राणान्तमुपव्रजेत् । पुरातनसमयेऽध्यात्मवादप्रचा
रेण न कश्चनापि भारतवासी दुःखी आसीत्
साम्प्रतन्तु सर्वत्र हाहाकारः श्रूयते । कश्चन धना
भावतः, कश्चन जनाभावतः, कश्चन च शरीरसौख्या
भावतो दुःखपीडितोऽस्ति । साम्प्रतन्न कुत्रापि प

दुःखाविमिश्रं सुखं समवलोक्यते, भयङ्करैरसा-
कष्टसाध्यैश्च रोगैर्मृत्योः किङ्करैरिवानवरतं भार-
जनता क्लेशिताऽस्ति । अकालमरणादिनाऽ-
दुर्भिक्षादिना च प्रतिसंवत्सरं भारतीय-दीनज-
था याऽदर्शनीयाऽवर्णनीया च दुर्दशा भवति
या वर्णनमात्रमपि कर्तुमस्माकं मनो नोत्सहते ।
त् समस्तमपि जडवादप्रचारफलमेवास्ति ।

यदि प्राकृतनसमयाद्वर्तमानकालस्य भेदो वि-
येत तर्हीदं निःसंशयं निगदितुं शक्येत, यत् पुरा-
समयः सुवर्णयुगमासीदिति । तदानीं सर्वे जना
धान्यपरिपूर्णा निखिल-सांसारिक-सुखानुभवन-
ना अपि परोपकारैकव्रता धर्मप्राणाः पापभीर-
सन् । तदानीमकालमृत्योर्नामाऽपि नासीत् ।
कश्चन दुर्भिक्षपीडितो बुभुक्षाकुलितश्चाभवत् ।
तु प्रायोऽकालमृत्यव एव भवन्ति । प्रति-
नेके भारतीया अन्नाभावतः क्षुधाकुलिततया
प्राणान् विमुञ्चन्ति । प्रतिवर्षमकालस्य साम्राज्यं
दृग्गोचरीभवति ।

अयमनात्मवादः सर्वथाऽपि हेय इति न केवलं भारतीया एव जानन्ति अपि तु पाश्चात्या अपि बहवो विद्वांस इमं सर्वथा परिहेयं प्रतिपादयन्ति। आत्मवादगवेषणायां प्रयतमनाश्च समवलोक्यन्ते। मानवजातेश्चरमोन्नति-साधनमयमेवात्मवाद इति निःशङ्कं निश्चितं च कथयन्ति। भारतीया यावदनात्मवादमपरिहेयमनुभविष्यन्ति न तावद्भारतस्योन्नतिर्भविष्यति। ये जडवादपक्षपातिनो न ते वस्तुभूतमुन्नतेर्लक्षणं जानन्ति। नास्तिकवादाश्रयणेन भारतस्य महदनिष्टं भविष्यतीति नात्र सन्देहलवोऽपि।

अन्ते च प्रार्थयामहे, यद्भारत-हितानुवर्तिनो विद्वांसः शीघ्रमेवेदानीमालस्यं विहाय तद्दोषस्य निराकरणे भारतस्य समुन्नतये च सन्नद्धा भवेयुरिति शम्।

## सुप्रभातपाठकेभ्योऽभ्यर्थना ।

श्रीमन्तः पाठकमहोदयाः ! विदाङ्कुर्वन्तु तत्रभवन्तो भवन्तो यत्सुप्रभातस्य पितृकल्पानां स्वर्गीय-पण्डित-गिरीशशुक्लशर्मणां दिवङ्गमनमेतत्कृते कीदृश-शोकोद्वेगकरमिति। अत एवेदं तत्पुत्रकल्पमिदं साम्प्रतिके होलिकोत्सवावसरे स्वकीयं कलेवरं साधारणप्रायमेव भवतां पुरः स्थापयति सर्वेषामन्यपत्राणामनल्प-जल्पन-कल्पना-विलसनपुरस्सरमनुनर्तनन्दर्शन्दर्शम्प्रसीदतो भवतोऽभ्यर्थयते च यद्दीनं बहिर्मलीनमपि मां क्षमध्वमिति ।




## समस्यापूर्त्तयः *

### राष्ट्रमाराधनीयम्

राजा यादृक्तादृशो लोक एष-
भूयादेवं प्राहुरत्रार्थविज्ञाः ।
अस्माद्धेतोः पूजनं स्वीहमानै-
र्नित्यं भूपै "राष्ट्रमाराधनीयम्" ॥

—मोहनलालशर्म्मा, ( चिड़ावा )

* * * *

श्रुतिसततसुघोषैः कीर्तितं नैकशो य-
त्तदनु मनु-वसिष्ठैर्वन्दितं ध्यानवद्भिः ।
पवनसलिलयोगाद्यस्य पुष्टा वयञ्च
तदखिल-फलकल्प "राष्ट्रमाराधनीयम्" ॥

—सोमदेवशर्म्मा सारस्वतो विद्यार्थी ।

* * * *

दलित-ललितवेषं पूरितं क्लेशपुञ्जै
र्विघटित जनवृन्दं नश्यदानन्दकन्दम् ।
विबुधवरकदम्बैः शान्तिभावानुभावैः
सरस-हृदयपद्मे "राष्ट्रमाराधनीयम्" ॥

—गोपालदत्तविद्यार्थी ।

* * * *

सकल-सुखनिदानं भारते गीयमानं
विविध-निधिसुशोभं सर्वविद्याविभूषम् ।
धृत-नव-रसयोगैर्विज्ञवृन्दैश्च लोकै-
र्हृदय-गतमखण्डं "राष्ट्रमाराधनीयम्" ।
पर-पद-दलितेऽस्मिन्भारतेऽनार्यवर्गैः
सततमहितकैर्वा पीड्यमानैस्तथैव ।
अहह ? मनुजवर्गैर्भीरुभिर्भारतीयैः
कथय, कथमिदानीं "राष्ट्रमाराधनीयम्" ॥

—सरयूप्रसादशास्त्री "द्विजेन्द्र"

* * *

अयि बुधवरसार्थाः ! साम्प्रतं वाग्विनोदम्
परिहरत नितान्तं स्वान्तमालोक्य तान्तम् ।
इह सुरवचसो हा ! सर्वतः संवृतायाः
परिहृत-गृहजालं "राष्ट्रमाराधनीयम्" ॥

—गोपालशास्त्री "केसरी"

* इमाः समस्यापूर्त्तयः सं० सा० समाजस्य पञ्चम-वार्षिकाधिवेशने ( फाल्गुनकृष्णैकादश्यां गुरौ ) पठिताः ।
—( सं० सम्पादकः )

# सुप्रभातम्

निजसुरगिरमेतां सर्वथाऽराधयध्वं
स्व-तनु-मति-वचांसि ध्यानतो वर्द्धयध्वम् ।
रुचिर-विविध-बोधं मामधीत्याजयध्वं-
सुनियतपठितॄन् भो वक्ति वः "सुप्रभातम्" ॥
—गोपालशास्त्री "केसरी"

* * * *

दयानिधान-प्रभुदत्तहीनम्
त्यक्तं गिरीशेन महामलीनम् ।
शल्यं यदन्तर्निहितं निशातम्
दीनं बुधाः ! रक्षत "सुप्रभातम्" ॥
—पाण्डेयः सुरेन्द्रदत्तशर्मा 'इन्द्रः'

* * * *

विश्वनाथनगरी-विदुषां हि बीजम्
बोधो धिया महिलया सहयोगमापत् ।
जातो जनिमविन्दत लोकमान्यो
ज्ञानाकरो गुणिसुतः किल "सुप्रभातम्" ॥
—मोहनलालशर्मा ( चिड़ावा )

* * * *

ऋषिगणसमवर्त्ति बिभूतः पूज्यगान्धे-
रयनमनुसरेयुर्भारतीया मनुष्याः ।
यदि रविरुदीयात्स्वीयराज्यात्मकोऽद्धा
निबिड़-तिमिर-तन्त्रं नाशये"त्सुप्रभातम्" ॥
—सोमदेवशर्मा सारस्वतः,

* * * *

बुधवर-वरेण्ये भारते हन्त ! जातं
विलपनमबलानां बाल-वैधव्य-योगात् ।
नमितरधर्मेऽस्पृश्यजातेश्च वीक्ष्य
कथय, कथमिदानीं जायतां "सुप्रभातम्" ॥

निखिल-गुणनिधानैर्विज्ञवर्यैरगाधै-
र्धृतदय-सुखधामैश्शान्तचित्ताभिरामैः ।
विहितमिदमखण्डं शम्भुपुर्यां चिरन्तं
निहितहृदयरागैर्धार्यतां "सुप्रभातम्" ॥
—सरयूप्रसादशास्त्री "द्विजेन्द्रः"

* * *



## सखे ! वसन्त !!

(लेखकः-साहित्यभूषण पं० आशारामशास्त्री, व्याकरणाचार्यः)
प्र० अ०-श्रीमहर्षिकुलब्रह्मचर्याश्रम, लक्ष्मणझूला ।

प्राज्यप्रमादसमुपस्थित-पारतन्त्र्य—
पाशैर्भृशं निगडिताः परिदीनभावाः ।
श्रीमत्प्रसाद-विमुखा भगवन्निदानीं
रम्यं वसन्त-समयं कथमर्चयामः ॥ १ ॥

धी-श्री-विहीनाः कथमत्र हन्त !
नित्यं सुदीनाश्च सखे वसन्त !
सर्वस्वरिक्ताः किल भारतीया-
स्त्वां स्वागतेन ह्यभिनन्दयेयुः ॥ २ ॥

सुप्ता मृताः किञ्चन जीविता वा
चिरादिमे भारत-भू-सुतास्त्वाम् ।
निवेदयन्त्यञ्जलिबन्धमेत-
द्दुद्वेषस्य पारस्परिकस्य नाशम् ॥ ३ ॥

विधाय तूर्णं ननु प्रेमपूर्णा—
न्विधेहि सत्कर्म-पथे सुलग्नान् ।
यथा वसन्तः खलु भारतेऽर्व्यां
सदा वसन्तं ह्यभिनन्दयेयुः ॥४॥
( युग्मम् )

## वसन्तोत्सवः।

सिद्धार्थान् प्रथयन् रसालनिकरानुल्लासयन् सर्वतः
संफुल्लां सुमनस्ततिं विरचयञ्जाड्यार्तिमुन्मूलयन्।
चिन्तातान्तिमुदस्य चेतसि चिरं चैतन्यमुत्पादयन्
भूयादभ्युदयाय भारतभुवि प्रादुर्भवन् माधवः॥१॥
धत्तेऽन्तं जडतामयः कुसुमयस्तेजस्विनो जृम्भिताः
संसज्ञाः सरकारकाः क्षितिरियं जाता सदाशाधरी।
उत्साहं विपुलं वहद्भिरधुना धृत्वा करे जीवनम्
प्रेष्ठैः साधु समेत्य रागनिभृतैर्निर्विश्यतामुत्सवः॥२॥

### शान्त-शृङ्गारौ

पायान्नोदरमीलितेक्षणपुटो निर्बद्धगाढासनः
किञ्चित्किञ्चिदुदञ्चिताधरपुटो विभ्राजितोऽग्र्याभिधः॥
सान्द्रानन्दभरानुभूतिविगलद्बाह्यप्रपञ्चस्मृतिः
कञ्चिद्योगमुपाश्रितो गिरिभुवा भावोद्भटो धूर्जटिः॥

—अलवरस्थो भट्टगिरिधारिशर्मा,
( कविकिङ्करः )

## चन्द्रकान्ते!

रति-कलित-कपोलं सारहीनं विदित्वा
वसति तव कपोले सर्वदा शम्बरारिः।
सपदि भवति बोधः सुष्ठु विज्ञाय वक्त्रं
विधुरपि निजवासं लज्जया खञ्चकार॥१॥

तव रतिकरहास्यं चन्द्रकान्ते! विलोक्य
भवति शशिकलायाः लोकमध्येऽपमानः।
सरसिज-नयनाभ्यां लज्जिता भूरि भूत्वा
युगपदुदकमध्ये सर्वमीना निमग्नाः॥२॥

—श्रीश्यामनारायणपाण्डेयः।



## भृङ्गान्योक्तयः

( १ )

ललामकमलावली किमु मतङ्गजैर्भक्षिता
न्यदाहिषत मालतीप्रभृतयः किमैर्वैरहो?
निरर्थकपदावलीं प्रणिनदन् रुदन्नाक्षिपन्
प्रमत्त इव पर्यटंस्त्वमसि भृङ्ग! येनाऽधुना॥

( २ )

द्रुढोल्लसितमञ्जरी–समुदये यदीयेऽनिशं
सुमञ्जु-परिगुञ्जितं प्रणिनदन्नभूर्मोदभाक्।
अमुत्र विटपेऽधुना विधिवशाद्विनाशङ्कते
विहाय तव नोचितन्तमितरत्र भृङ्गायनम्॥

( ३ )

द्विरेफ! करिकेसरि-प्रचुरदानधारामितो
दधत्प्रमदमावहन्नसि परं म संहसन्।
अवव्रजसि नैव तन्मम मनः परं खिद्यते
यदि श्रवणमास्फुरेत्तव दशा तदा कीदृशी॥

—श्रीजीवनाथझा शर्म्मा।

# पठनं नाम ।

[ ले०—केशवात्मजः, पं० मूलशङ्करशास्त्री, वडाली ]

ठनं स्वात्मविज्ञानं पठनं कर्षणं स्मृतम् ।
ठनं चूषणं प्रोक्तं पठनं त्वात्मशीलनम् ॥ १ ॥
ठनं मोक्षणं द्वन्द्वात् पारतन्त्र्यात्तथैव हि ।
ठनं स्वाश्रयित्वं तु पठनं प्रकृतिज्ञता ॥ २ ॥
ठः शक्तित्रयावाप्तिः पठनं प्रकृतेर्जयः ।
ठनं विनयाधानं पठनं सारसङ्ग्रहः ॥ ३ ॥
ठनं समदर्शित्वं स्वयं विज्ञाय वर्तनम् ।
ठनं मृत्युशोकाब्धेस्तरितुं सेतुबन्धनम् ॥ ४ ॥
ठनं तु परिच्छेदः पठनं परिशीलनम् ।
ठनं पात्रतावाप्तिः पठनं कर्मकौशलम् ॥ ५ ॥
ठनं नाम गोदोहः सद्ग्राहालम्बनं तथा ।
वर्तनं त्वसद्ग्राहादात्मदीपप्रकाशनम् ॥ ६ ॥

पठितं सत्यकामेन सत्यं जाबालि-सूनुना ।
द्वष्टिर्लब्धा स्वयं यत्नाद्धौम्यशिष्योपमन्युना ॥७॥
आत्मज्ञानं यमाल्लब्धं मृत्योरमृतताऽर्जिता ।
श्रद्धावताऽनसूयेन दान्तेन नचिकेतसा ॥ ८ ॥
गुरोराज्ञाममोघान्तु कुर्वताऽऽरुणिना तथा ।
आत्मानपेक्षवीरत्वं दर्शितं वार्निरुन्धता ॥ ९ ॥
जागर्ति रान्तरीन स्यात् पठनं तद्विडम्बनम् ।
शुका वा सारिका वाऽथ शब्दान्नाधीयते किमु ॥१०॥
यदि कर्तव्यनिष्ठा नो वितण्डावादतः किमु ?
सफलं कर्मवैदग्ध्यं वर्षाभूरटितं मुधा ॥ ११ ॥
संकल्पाऽचारवचसां त्रयाणामेकरूपता ।
शुभा चैव समर्था च सफलं पठनं तदा ॥ १२ ॥

# संस्कृतच्छात्राणामात्मिकबलह्रासः

ले०—पं० सरस्वतीप्रसादशर्मा, भैसौना ( फैजाबाद )

साम्प्रतं हि खल्वधिकतममिदं दरीदृश्यते, यत् स्कृतभाषामधीयमानैरपि प्रथमादि–परीक्षोत्तीर्णैः स्कृतान्तेवासिभिर्गीर्वाण-विद्याया भाषण-लेखना-विधेयेष्वियत्यसमर्थता प्रकाश्यते, यन्निरूपणेन व्रीडां कुर्मः । संस्कृतभाषायाः प्रथमपरीक्षोत्ती-र्णानां हि विद्यार्थिनां तुलनाऽऽङ्गलभाषायामिएट्रेन्स ( S. L. C. ) परीक्षोत्तीर्णैश्छात्रैः सह सम्पाद्यते लोकैरिति श्रुतमस्ति, परन्तूक्तपरीक्षोत्तीर्णैराङ्गलभाषायाश्छात्रैर्नूनं हि सर्वाणि विधेयानि सुस्पष्टमाङ्गलभाषायामेव सम्पाद्यन्ते । गीर्वाणविद्यायाश्छात्रैस्तु परीक्ष्य-ग्रन्थातिरिक्त-देवभाषाभाषणे, लेखने चासमर्थताऽनभिज्ञताऽनुत्साहश्चापि प्रदर्श्यते । किमन्यद्

[ शेषः २६६ पृष्ठेऽधो द्रष्टव्यः ]

# विवाहनक्षत्रविषये प्रश्नः।

[ ले०—महोपाध्यायः, खटाऊशर्मात्मभवः पं० दयारामशर्मा ]

( बडगादी, मुम्बई नं० ३ )



प्रायः सर्वैः पण्डितवर्य्यैर्व्याकरणव्यतिरिक्तेषु सर्वेषु विषयेषु पूर्वं पूर्वं प्रमाणं स्वीक्रियते। तथा सतीदानीन्तना विवाहे—१ रो० उत्तरास्तिस्रः (२ उ. फा. ३ उ. षा, ४ उ. भा.) ५ रेवती, ६ मूलं, ७ स्वातिः, ८ मृगशीर्षः, ९ मघा, १० अनुराधा, ११ हस्त-इत्येतानि नक्षत्राणि गृह्णन्ति, न तु पारस्करगृह्योक्तानि नक्षत्राणि। तत्र— "त्रिषु-त्रिषूत्तरादिषु स्वातौ मृगशिरसि रोहिण्याम्।" इति सूत्रे त्रिषुत्रिषूत्तरादावित्युक्तत्वात्। १ उ. फा, २ हस्तः, ३ चित्रा, ४ उ. षा, ५ श्रवणः, ६ धनिष्ठा, ७ उ. भा, ८ रेवती, ९ अश्विनी, १० स्वातिः, ११ मृगशीर्षः, १२ रोहिणी-एतानि द्वादशनक्षत्राण्युक्तानि सन्ति। ( पा. गृह्यसूत्रे )

तत्सूत्रे १ मूलं, २ मघा, ३ अनुराधा—एतानि त्रीणि नक्षत्राणि त्यक्तानि। अपि च—१ चित्रा, २ श्रवणः, ३ धनिष्ठा, ४ अश्विनी—एतानि नक्षत्राणि गृहीतानि सन्ति; परन्तु इदानीं चित्रा, श्रवण, धनिष्ठा, अश्विनी-एषु नक्षत्रेषु केऽपि विवाहं प्राय न कुर्वन्तीति।

अथ मूलाख्यं नक्षत्रं तीक्ष्णसंज्ञं दारुणसंज्ञञ्च। त तीक्ष्णनक्षत्रे अभिचारकर्माणि भवन्ति। मघ नक्षत्रमुग्रसंज्ञं क्रूरसंज्ञञ्च, उग्रनक्षत्रेष्वपि उ भयङ्करकृत्यं ( मारणादिकर्माणि ) भवति कथं तस्मिन्नक्षत्रे विवाहः स्यात्साधुफलदः किञ्च धनिष्ठानक्षत्रं श्रवणनक्षत्रं चोर्ध्वमुखसंज्ञ तस्मिन्नुर्ध्वमुखनक्षत्रे राज्याभिषेकं पट्टबन्धं कारयेत्। अश्विनी-चित्रादिभानि पार्श्वमुखा स्मृतानि। एषु 'दमनं गमनाऽगमनादिकं कार्यम इत्याद्युक्तत्वात्सूत्रग्रन्थेऽप्युक्तत्वाच्च शुभफलप्रदे नक्षत्रेषु विवाहः कथं न भवति ?

सामान्यग्रन्थोक्तानि नक्षत्राणि कदा प्रविष्टा तथा च सूत्रोक्तानि नक्षत्राणि कथं, केन, कदा व व्यवहारान्निष्कासितानीत्येवं विधः प्रश्नः सम धेयोऽत्रैवेति शिवम्।

# श्रीभगवान्दास-महोदयानां षाष्टित-माब्दीय-महोत्सवे सादरम-भिनन्दनम् ।*

[ जन्म, माघी मौनी अमा सं० १९२९ वि० ]



...स्वान्तसदागमैकशरणो बुद्धो निरीहः परः
...र्जागनिकप्रपञ्चविमुखः संत्यक्तसर्वैषणः ।
...ातः परिपूर्णकामपदवीं स्वेनैव भावेन यो
...भारतभूभुवां स भगवान् दासो भवन् भासते ।१।
...धीरधियो धरासु कतिचित्केचित्कलाकोविदा
...तो प्रभवन्ति केऽपि सुधियोऽन्ये राजनीतौ मताः ।

साहित्ये सरसा लसन्ति च परे केचित्तथा केषुचित्
सर्वस्मिन्विषये समेधितमतिर्धन्यस्त्वदन्योऽस्ति कः ।२
श्रद्धामाकलयन्ति केऽपि विबुधाः पौरस्त्य-विद्यागमे
केचित्केवलमेव कौतुककृतः पाश्चात्य-शिक्षार्जने ।
अन्योन्यप्रतिकूलतां श्रितवतां प्राचां प्रतीचामपि
भावानां भगवान्समन्वयकरो विज्ञानवारान्निधिः ॥३॥
दुष्प्रापं डिपुटी-कलक्टर-पदं सम्मानसंवर्द्धनं
हत्वा यत्नशतं सदैव विदधल्लोको दरीदृश्यते ।
तत्सन्त्यज्य पुरा भवान् बहुविधां शिक्षाप्रचारोद्यतां
भास्वद्भारतसभ्यतैकजननीं संस्थां समस्थापयत् ॥४

हिन्दूकालेजनामा दिशि दिशि सुचिर-
प्रोल्लसत्कीर्त्तिधामा ।
शिक्षायाः काशिकाया सुरुचिर-निलयः
श्रीमता स्थापितो यः ॥
तत्रैवोत्पद्यमाना सुरवचसि परं-
भावमन्तर्दधाना ।
संसत् संवर्द्धिनीति प्रसृमरविभवा
संस्कृतस्याचकास्ति ॥ ५ ॥

श्रीमत्षष्टितमाब्दपूरणदिने सम्पद्यमानोत्सवे
सभ्यास्तत्समितेः समेत्य सकला मोमुद्यमाना भृशम् ।
माद्यन्मानसपारिजातरचितैर्माल्यैः सदा शोभनै-
स्त्वामर्चन्ति गुणाकरं परमया प्रीत्याऽभिनन्दन्ति च॥

से० हि० स्कूल, काशी
माघी मौनी अमा.
सं० १९८९ वि०

भवदीयदीर्घायुरभिलाषिणी—
श्रीसंस्कृतसंवर्द्धिनीसमितिः ।

* अभिनन्दनमिदं श्रीविन्ध्येश्वरीप्रसादशास्त्रि-विरचितं डाक्टर-श्रीभगवान्दासमहोदयानामभिनन्दनार्थं 'सेवा-सदन' तदीयनिलये दिग्देशान्तरतः समागतेषु संघीभूतेषु मनीषि-मण्डलेषु सभापतिप्रमुखैः सं० सं० समिति-सदस्यै-...करकमलयोः सादरं समर्पितम् ।
—( स० सम्पादकः )

# संस्कृत-साहित्य-समाज-सदस्याः ।

संस्कृत-साहित्य-समाजस्य प्राचीनमन्त्रणा-समितेरधिवेशनं फाल्गुनशुक्लप्रतिपदि मार्चमासस्य १३ तमे दिवसे सुप्रभातकार्यालये सम्पन्नम् । तत्र चागामि-वर्षस्यकृते समित्या अधोनिर्दिष्टप्रकारेण निर्वाचिताः—

## पदाधिकारिणः—

प्रधान-सभापतिः—महामहोपाध्यायः श्रीप्रमथनाथ भट्टाचार्यः, तर्कभूषणम् ।

सभापती—म०म० श्रीमुरलीधरझा, ज्योतिषाचार्यः,
म० म० श्रीरघुनन्दनत्रिपाठी (विहार) ।

संयुक्त-सभापतयः—म० म० श्रीगिरिधरशर्मा चतुर्वेदी ( राजपुताना )
म०म० श्रीहरिहरकृपालुमहाशयः ( विहार )
म० म० श्रीहाथीभाईशास्त्री ( गुजरात )
म० म० श्रीतातासुब्बारायशास्त्री ( मद्रास )

अर्थमन्त्री— पण्डित श्रीअनन्तरामशास्त्री
मन्त्री— „ श्रीकेदारनाथशास्त्री सारस्वत
सहायकमन्त्री—( रिक्तस्थानं विद्यते )
धर्मपरिषन्मन्त्री—„ श्रीविन्ध्येश्वरीप्रसादशास्त्री
प्रचारमन्त्री— „ श्रीरुद्रदेवशास्त्री वेदाचार्यः
सम्पादकः— „ श्रीगोपालशास्त्री 'दर्शनकेसरी'
स० सम्पादकः—„ श्रीसरयूप्रसादशास्त्री 'द्विजेन्द्र'
व्यवस्थापकः— „श्रीसत्यनारायणशास्त्री कविरत्न
आयव्ययनिरीक्षकः „श्रीविक्रमादित्यत्रिपाठी आचार्य
कार्यालयनिरीक्षकौ „श्रीविद्याधरझा बी. ए.
„श्रीबलदेवमिश्र ज्योतिषाचार्यः

## विशेषसदस्याः—

१. म०म० श्रीदेवीप्रसादशुक्लः कविचक्रवर्ती
२. सर्वतन्त्र-स्वतन्त्र पं० श्रीबालकृष्णमिश्रः

[ २६३ पृष्ठावशिष्टम् ]

भणितव्यमस्ति? यदि कदाचित्, कथमपि, कैश्चिदन्तेवासिभिः संस्कृतभाषाभाषणे स्वकीयोत्साहः प्रदर्श्यते, तदात्वन्यैस्ततत्सहाध्येतृभिश्छात्रैस्तद्भाषणे छिद्रान्वेषिवत् केवलमशुद्धतैवान्विष्यत इति महदाश्चर्यम्? किम्बहुना, संस्कृतभाषाभाषणे केवलन्तैरसमर्थतैव न प्रदर्श्यते, किन्तु लज्जापि । इयं हि संस्कृतच्छात्राणामात्मिक-बलावनतिः । प्रत्येकैः संस्कृतच्छात्रैरिदं किल प्रतिज्ञातव्यमस्ति यन्मिथो भाषणपत्रादि-व्यवहारो हि सर्वदा गीर्वाण-विद्यायामेव सम्पादनीय इति । संस्कृतविद्यायाश्छात्रैस्तद्भाषायामेवं शक्तिर्विवर्धनीया विद्यते, यथांग्लभाषायाश्छात्रैस्तद्भाषाविशारदैश्चापि देवभाषान्तेवासिनां जुगुप्सां विहाय, मुक्तकण्ठं प्रशंसा विधेया भविष्यतीति दिक् । एवं करणेनैव संस्कृतच्छात्राणामात्मिकबलह्रासो न भविष्यतीत्यलम् ।

३. पण्डित-श्रीरघुवीरशास्त्री वैद्यराजः
४. ,, श्रीविद्याधरशर्मा गौड़ः, वेदाचार्यः
५. ,, श्रीदेवीनारायणशर्मा बी.ए.एल.एल.बी.
६. ,, श्रीमदनमोहनशास्त्री
७. ,, श्रीसभापति-उपाध्यायः, व्याकरणाचार्यः
,, श्रीतारादत्तपन्तः, साहित्याचार्यः
,, श्रीजगन्नाथवाजपेयी, आयुर्वेदाचार्यः
,, श्रीराजनारायणशास्त्री, व्याकरणाचार्यः
,, श्रीमहादेवशास्त्री, साहित्याचार्यः
,, श्रीप्रतापसिंहमहोदयः, कविराजः
,, श्रीकाशीनाथशास्त्री, वैदिकः
,, श्रीतारापदो भट्टाचार्यः
,, श्रीदामोदरशास्त्री, कविराजः
,, श्रीरामशास्त्री महोदयः
,, श्रीबालमुकुन्दशर्मा सारस्वतः
श्री बाबू जयशङ्करप्रसादमहाशयः
श्री बाबू शिवपूजनसहायो हिन्दी-भूषणम् ।

## पत्र-प्रकाशन-समिति-सदस्याः—

श्री तर्करत्न-न्यायरत्नेत्याद्यनेकबिरुद-विभूषितः सर्वतन्त्र-स्वतन्त्रो मध्वसम्प्रदायाचार्यः श्री १०८ श्रीदामोदरलाल-गोस्वामिमहोदयः ( निरीक्षकः )
श्री गोपालशास्त्री 'दर्शनकेसरी' (सम्पादकः)
३. श्री द्विजेन्द्रकविः ( स० सम्पादकः )
४. श्री सत्यनारायणशास्त्री ( व्यवस्थापकः )
५. श्री केदारनाथशास्त्री सारस्वतः ( मन्त्री )
६. श्री विन्ध्येश्वरीप्रसादशास्त्री
७. श्री शिवपूजनसहायः, हिन्दी-भूषणम् ।

## धर्म-परिषद्विभागस्य सदस्याः—

१. श्री तर्करत्न-न्यायरत्नेत्याद्यनेकविरुद-विभूषितः सर्वतन्त्र-स्वतन्त्रो मध्वसम्प्रदायाचार्यः श्री १०८ श्रीदामोदरलाल-गोस्वामिमहोदयः
२. म० म० श्री प्रमथनाथभट्टाचार्यः तर्कभूषणम्
३. म० म० श्री अन्नदाचरण-तर्कचूडामणिः
४. म० म० श्री मुरलीधरझा ज्योतिषाचार्यः
५. म० म० श्री देवीप्रसादशुक्लः कविचक्रवर्ती
६. पण्डित श्री अनन्तरामशास्त्री महोदयः
७. ,, श्री बालकृष्णमिश्रः, न्यायारण्य-केसरी
८. ,, श्री रामभवनशास्त्री व्याकरणाचार्यः
९. ,, श्री राधाप्रसादशास्त्री धर्माचार्यः
१०. ,, श्री हरिनारायणत्रिपाठी, व्याकरणाचार्यः
११. ,, श्री विन्ध्येश्वरीप्रसादशास्त्री (मन्त्री)
१२. ,, श्री सभापति उपाध्यायः, व्याकरणाचार्यः
१३. ,, श्री चिन्नस्वामी शास्त्री मीमांसाकेसरी
१४. ,, श्री गोपालशास्त्री दर्शनकेसरी
१५. ,, श्री तारादत्तपन्तः, साहित्याचार्यः ।

---

विशेषसूचना—सं० सा० समाजस्य पञ्चमवार्षिकाधिवेशन-विवरणमत्र स्थानाभावान्न प्रकाशितम् । आगामिङ्के तद्विस्तृत-विवरणं प्रकाशितं भविष्यतीति विदाङ्कुर्वन्तु श्रीमन्तः सुप्रभातपाठकाः । सचाङ्कः 'समाजाङ्कः', भविता [...]यप्रथमाङ्कश्चापि " वैदिकाङ्कः " । तत्र वेदविषयका गवेषणादिपरिपूर्णा लेखा अपेक्ष्यन्त इति विदुषोऽभ्यर्थयते, यद्द्रुतमान् सम्प्रेष्यानुगृह्णन्त्विति । —( स० सम्पादकः ) ।

# सम्पादकीयम्

## राजनीतौ संस्कृत विदुषां प्रवेशः ।

पूर्वं हि वर्णाश्रममर्य्यादाप्राधान्येऽस्मिन्भारते जन्मना क्षत्रिया वीर्य्यवन्तो राजानो बभूवुः धर्म-शास्त्र-प्रणेतारश्च जन्मना ब्राह्मणा विद्यावन्तो महर्षयोऽभूवन् । यैश्च प्रवर्तिता नियमास्तदानीन्तनै राजर्षिभिः स्वप्रजासु प्रचारिताः स्वयञ्च तन्नियमानुसारमेव व्यवजह्रुः । कियतः कालादघटन-घटना-पटीयसो भगवतः कालात्मनो माहात्म्यात् परस्परं कलहायमानैः क्षत्रियपाशैर्यवना राजान आनायिषत, ततश्च तेषामत्याचार-पीडितैस्तदानीन्तनैर्विज्ञै राजनीतिविद्भिरार्य्यैरियं वर्तमानशासन-पद्धतिर्गौरण्डजातिहस्ते निक्षिप्ता । या चेदानीमात्मन ईश्वरदत्तभारतशासनाधिकारित्वं प्रख्यापयति । नेतृभिः पौनः-पुन्येनानुरुध्यमानापि स्वराज्यायोग्यान् भारतीयान् प्रमाणयितुं सोपधि बहुविपरीतं चेष्टते—इति नास्त्यविदितं तदीयचङ्क्रमणपरिचितिचणानां विचक्षणानामिति ।

अस्तु, सा हि बहुशोऽनुरुध्यमाना, बहुभिश्च भर्त्स्यमाना, कियद्भिश्च प्रार्थ्यमाना, बलवद्भिश्च गृहीतकण्ठा कथंकथमपि कियन्तमधिकारं शिक्षा-स्वास्थ्यविषयकं दत्तवती भारतीयेभ्यः । तत्रापि प्रतिनिध्यविधयैव भारतीयानां कियतां भवति प्रवेशः, प्रान्तीयनियमनिर्मापिकासु तथा भारतीय-व्यवस्थापिकासु च सभासु, तत्रप्रतिनिधिनिर्धारण-नियमे कियत्यो योग्यता अपेक्ष्यन्ते । तत्र शिक्षा-योग्यताऽपि गण्यत एका । यथा ये इंग्लिशपरीक्षायां बी. ए. परीक्षोत्तीर्णाः सन्ति तेऽपि प्रतिनिधि-निर्वाचने समर्था इति । अत्र स्वभावत एव संस्कृतज्ञा विद्वांस उदासते । यतो हि य एकदा सम्राजो राज्यासनाधिरोहणप्रच्यावनयोः समर्था आसन्, तथाहि—

'ये देवा देवसुवः स्थ त इममामुष्यायणम-नमित्राय सुवध्वं महते क्षत्राय महत आधिपत्याय महते जानराज्यायैष वो भरता राजा सोमोऽस्माकं ब्राह्मणानां राजा ' इति ॥

(हे देवा अग्न्यादयो ये यूयं देवसुवो यजमानप्रेरकाः ते यूयमिमं यजमानमामुष्यायणम् अमुष्य देवदत्तस्य पुत्रममुष्य पौत्रं अनमित्राय शत्रुरहित्यार्थं सुवध्वं अनुजानीध्वं । किंच महते क्षत्राय उत्तम-क्षत्रियकुलाय, महते अधिपत्याय अप्रतिहतनियमनसामर्थ्याय, महते जानराज्याय जनसम्बन्धि यद्राज्यं तस्मै सार्वभौमत्वाय सुवध्वं अनुजानात । हे भरता राजन्यवैश्यादयो धनिका एष यजमानो युष्माकं राजा, एनं स्वामिनं यथोचितं सेवध्वमित्यभिप्रायः । सोम उत्तमदेवोऽस्माकं ब्राह्मणानां राजा नत्वधमो यः क्षत्रियः इति श्रुत्यर्थः । )

इत्यादि वेदवचोभिः सूच्यते । त एवाद्य [स]मुपेक्ष्यन्ते यत् सर्वत्रैव राजसभासु राजकीय-[स]भासु च नैव केऽपि गण्यन्ते प्रत्युत इदानीं [पा]श्चात्यशिक्षावायुविकृतचेतोभिस्ते सर्वथोपहस्यन्त [इ]ति । अस्मिन् व्यतिकरे ब्राह्मण-पण्डितैर्वर्णाश्रम-[म]र्यादापालनपरायणैर्नैवमुपेक्षया वर्तितव्यम् । [का]लो हि प्रबलप्रतापो रङ्कान्नृपान् करोति धनिनश्चा-[कि]ञ्चनान् विदधाति—इति नियतिदत्तहस्तैस्तैरधुना [लोक]व्यवहारे दृष्टिपातो विधेय एव । चिकित्सक-[चू]डामणिर्वाग्भटोऽप्येवमेवाह । यथा—

"त्यागः प्रज्ञापराधानामिन्द्रियोपशमस्स्मृतिः ।
देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम् ॥"

किम्बहुना, संस्कृतविदुषामुपेक्षयैवान्ये सर्वेऽपि [स्व]ात्मानं नेतृत्वेन प्रख्यापयन्तः सर्वत्रैव राजसभासु [प्र]विशन्तः स्वयमेव धर्म-नियमादिनिर्माणमाचरन्तः [ई]र्ष्यादि-मानवसामान्यदोषाभिभूता उपेक्षन्ते [धर्म]कृतज्ञान् विदुषः, धर्मशास्त्रपद्धतिश्चावहेलयन्तः [स्व]यं कामचारं चरन्त्यन्यांश्च चारयन्तीति सर्वतो-[ऽ]प्युपद्रुतेयमस्तीदानीं भारत-वसुन्धरा । अतो [सा]ञ्जलिरभ्यर्थये मान्यान्, अनुरुन्धे समवयस्कान्, [आज्ञा]पयामि विनेयान्, यत्ते बद्धपरिकरा भवन्तु [सर्व]त्रैव राजनीतिसभासु प्रान्तीयसभा-(लेजिस्लेटिम् [कौ]न्सिल) मण्डल-सभा-(डिस्ट्रिक्टबोर्ड) नगर-[स]भासु (म्युनिसिपैलिटी) च प्रेष्यमाण-प्रतिनिधि-[नि]र्वाचनयोग्यताधिकारे संस्कृतपरीक्षोत्तीर्णानामपि [स्था]नं कारयितुमिति । एवं वर्तमानराजनीतिमार्गा-[नुसा]रिणां संस्कृतविदुषां सम्पर्कमधिगत्य साधा-[रण]जनतापि द्रुतमेव परिचिता भविष्यति वर्तमान-राजनीतिपद्धत्या । नेतारोऽपि स्वकामचारं परित्यज्य भारतीसंस्कृति-प्रेमपरायणा एव भविष्यन्तीति "एका क्रियां द्व्यर्थकरी" विमृशन्तु सुधियः सुम-नोयोगेनेत्यप्रीयसैव विरम्यते ।

× × × ×

*श्रीमन्तः श्रीभगवान्दासमहोदयाः ।*

एतेषां महोदयानां षष्टितमवर्षीयजन्मदिवस-समुत्सवे काशीस्थ-हिन्दू-स्कूल-सं० सं० समित्या समर्पितमभिनन्दनं पठितमेव स्यात्सुप्रभातपाठकैः । गतमासे स्वीयोपाधिवितरण-महोत्सवे सपरिषत्स-दस्यैः हिन्दूविश्वविद्यालयीय-वर्तमान-चाँसलर-महोदयैः काशीविद्यापीठकुलपतिभ्यः प्राच्य-पा-श्चात्यानवद्यविद्याविद्योतितान्तःकरणेभ्यो जगत्प्र-सिद्धेभ्यो विद्वच्छिरोमणिभ्य एभ्यो महोदयेभ्यः "डाक्टर" इति विरुदं प्रदाय यत् स्वीयगुणि-पूजाप्रेमाविरकारि, तत् सपरिषत्सदस्यानां तेषां सौजन्यविवेकविलसितं प्रशंसनीयतरमेव ।

अन्यच्च, श्रीमद्भिः श्रीभगवान्दासमहोदयैरेव प्रथमतो हिन्दू-कालिजरूपेण प्रतिष्ठापितं वीजमि-दानीं हिन्दूविश्वविद्यालयत्वेन परिणतमिति सर्व एव तद्वृत्तवेदिनो विद्वांसो जानन्ति । तत एवोद्भूतां स्वीयामिमां योग्यसत्कृतिं स्वीकुर्वतां तेषां महा-नुभावानां चेतसि कीदृगमन्दानन्दपायोनिधिरान्दो-लितः स्यादिति तैरेवानुभूतम्भवेत् । विरला एवे-दृशानामानन्दसन्दोहानां भाजनानि भवन्ति पुरुषपुङ्गवाः । इतीमं सुयोगं वयम्भूयोभूयोऽभि-नन्दामः ।

Rg N. 1348 A.

## समालोचना-सारः ।

### 'युवकः'

हिन्दी-मासिक-पत्रस्यास्य सम्पादकः प्रकाशकश्च सम्पादनपटुः श्रीरामवृक्षशर्म्मा (बेनीपुरी) । प्राप्तिस्थानम्-"युवक-आश्रम", पटना । वार्षिकमूल्यम् ४) प्रत्येकस्य च मूल्यम् ।=)

अस्य सम्पादनं महता चातुर्य्येण भवतीतित्यलं बहुवक्तव्येन । सम्पादकमहोदया 'बालक'-सम्पादनवसरे तद्धिताय यथा प्रयत्नवन्तस्तथैवात्र 'युवक'-सम्पादनेऽपि प्रयत्नशीला भविष्यन्तीत्यस्माकं सुदृढो विश्वासः । पत्रमिदं सहृदयेषु विशेषतो राष्ट्रभाषाभाषि-भारतीय-नवयुवक-सुकोमलहृदयेषु नवजीवनोत्पादने नूनं सफलीभविष्यति ।

अस्यच लेखा हृदयग्राहिण उत्साहवर्द्धकाः सुपाठ्याश्च सन्तीति तत्पठनेनैव विज्ञायते । सत्स्वप्यत्र बहुविध-वैचित्र्येषु चित्रेषु न किमपि वैचित्र्यम् ! ततोऽप्यावरणपृष्ठस्थं मुखचित्रन्त्वतीवानुपयुक्तमेतत्कृते इति तद्दर्शनेनैव प्रतीयते । अतो यदि तत्स्थाने राष्ट्रियभावाभिव्यञ्जकं किमप्यन्यचित्रम्भवेत्तदा "सुवर्णे सुगन्धः" स्यादित्यस्माकमभिप्रेतम् । अथाशास्महे यदुत्साहिनो नवयुवकवर्गा अवश्यमेवात्रावधास्यन्तीति ।

### भारत-भूषण-पञ्चाङ्गम्—

सं० १६८६ वैक्रमाब्दीयं तिथिपत्रमिदम् । ज्योतिषाचार्य्याभ्यां श्रीरामनिहोरद्विवेदि-श्रीरामानन्दमिश्राभ्यां विनिर्माय लोकश्रेयसे प्राकाशितम् । सर्वथोपादेय-ज्ञातव्य-पर्वनिर्णय-यात्राविवाह-मुहूर्तनिश्चय-मिलापक-चक्रादिसमन्वितम् । प्रतिभाति । जिघृक्षुभिः ।=) आणकषट्कस्य चिटिका ( टिकट ) श्रीपण्डित-रामनिहोरद्विवेदी, ज्यौतिषाचार्य्य, धर्मकूप-काशी-इति सङ्केतेन प्रेषणीया ।



Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

सौर-चैत्रे १९८६ वैक्रमाब्दे ।

पञ्चम-वर्षे Vol. 5 | April 1929. | द्वादशोऽङ्कः । No. 12.

वार्षिक मूल्यम्—३)
माननीयेभ्यः—१२)

छात्रेभ्य :—१॥)
वैदेशिकेभ्यः—५)

# सुप्रभातम् ।

संस्कृत-साहित्य-समाजस्य मुखपत्रम् ।

तिमिर-ततिमुदस्यद् भेदताराविलुम्पन्, नयदाध-सुरभाषाभाषि-जागर्तिमुच्चैः ।
विबुध-विहग-वादैराह्वयद् भाग्यभानुम्, विलसतु भुवनेऽस्मिन् सर्वतः 'सुप्रभातम्' ॥

निरीक्षकः—

महामहोपाध्याय-श्रीदेवीप्रसादशुक्लः, कविचक्रवर्त्ती, साहित्य-वारिधिः

सम्पादकः—
दर्शनकेसरी श्रीगोपालशास्त्री त्रिपाठी
"साहित्याचार्य्यः"

स० सम्पादकः—
पाण्डेय-श्रीसरयूप्रसादशास्त्री ( द्विजेन्द्रः )
"काव्यतीर्थः"

व्यवस्थापकः—
श्रीसत्यनारायणशास्त्री " कविराजः "
( टेढ़ीनीम, बनारस-सिटी )

अस्याङ्कस्य मूल्यम् ।)

# लेख-सूची



—:***:—




विविध-विषय-विभूषितम्, अद्वितीयम्, सचित्रम्, संस्कृत-मासिक-पत्रम् ।

...ञ्चम-वर्षे | सौर—चैत्रे १९८५ विक्रमाब्दीये | द्वादशोऽङ्कः ।

## राष्ट्रगानम् *

( दादरावृत्तिः )

...रे त्वां भूदेवीम् । आर्यमातरम् ।
...यत जयतु पद-युगलं, ते निरन्तरम् ॥ध्रुवम् ॥
...भ्र-शरच्चन्द्रयुक्त-चारु-यामिनीम् ।
...कसित-नवकुसुम-मृदुल-दाम-शोभिनीम् ।
...स्मितयुक्त-बदन-मधुरभाषिणीम् ।
...जलां, सुफलां, सरलाम् ;
...सवरदां, चिरसुखदां, मुकुलरदाम् ॥ आर्य० ॥१॥
...कत्रयकोटिजन-कण्ठनादिनीम् ।
...मितभुजां धृतसदसीं तनयतारिणीम् ॥

हिमनगजां स्वाभिमान-बुद्धिदायिनीम् ।
कमलाम्, अमलाम्, अतुलाम् ;
रिपुहरिणीं, बलकरिणीं, धृतनलिनीम् ॥आर्य० ॥२॥
धर्मस्त्वं शर्म त्वं त्वं यशोबलम् ।
शक्तिस्त्वं भक्तिस्त्वं कर्म चाखिलम् ॥
प्रतिसदनं प्रतिमा ते त्वं महाबलम् ।
धरणीं, भरणीं, जननीम्;
कविप्रतिभां, नतसुलभां, जगदम्बाम् ॥ आर्य० ॥३॥

* संस्कृत-साहित्य-समाजस्य वार्षिकाधिवेशन-प्रारम्भे गानमिदं काशी-विद्यापीठस्य च्छात्रैः सुस्वरं गीतं वाद्यस्य ...स्मेनेति ।
—( स० सं० )

# सभापतेरभिभाषणम् *

* श्रीहनुमते नमः *

मैथिलीहेतुमाश्रित्य हनूमान भरतप्रियः ।
भारते राजतेऽद्यापि तं नमन् मुरलीधरः ॥१॥
ब्रूते स्तोकं बुधाः सर्वे शृण्वन्तु यदरोचकम् ।
दूरं निरस्य यत्किञ्चित् सारलेशं भवेद्यदि ॥२।
भवद्भिः कृपयाऽऽहूतः सभास्वाम्येन सत्कृतः ।
अयोग्यो योग्यतां प्राप्तुमाशासे श्रीमदग्रतः ॥३॥
श्रीसंस्कृत-सुसाहित्य-समाजस्याधिवेशने ।
पञ्चमे पञ्चम इव तर्केऽहंस्यामपि ध्रुवम् ॥४॥
अत्राधिवेशने सभ्यैः सनातनपथानुगैः ।
भाव्यं भव्यं तदैव स्यादन्यथा शोक उच्चकैः॥५॥
राष्ट्रीयं मङ्गलं गानं किं कुतोऽत्राधिवेशने ।
शास्त्रीयञ्चेदवश्यं तद्रोचकं मन्मतं त्विदम् ॥६॥
राष्ट्रीया नागरी भाषा भवत्वत्र क्षतिर्न हि ।
तदर्थं बहवः सन्ति शङ्खभेरी-निनादकाः ॥ ७ ॥

किन्तु ते संस्कृतार्थं हि करतालं न कुर्वते ।
पण्डिता झल्लरीवादं राष्ट्रीयार्थं प्रकुर्वते ॥ ८ ॥
नागरीचालका गालीरर्पयन्ति स्वपत्रके ।
पण्डितेभ्यः सदा ते तु विधवाधर्मलुण्ठकाः॥९।
धर्मशास्त्रं विनिन्दन्ति वेदान् विप्रान् सनातनान्।
किन्तैः कार्यं बहिस्थैर्हि सेत्स्यतीति विचारणा १०
इत्यादि कारणं प्रायः पण्डितानां समागमे ।
सुसंस्कृतसमाजेऽस्मिन् बुधा जानन्तु तत्त्वतः११
परीक्षानर्त्तकी देशे नरीनृत्यति राक्षसी ।
वेदं शास्त्रं पुराणानि मुक्त्वा नास्त्यत्र शेषकम्१२
नाममात्रेण सन्तुष्टा वयमत्राप्रयोजकाः ।
भवन्तोऽद्य नवीना हि साधयन्तु स्वपौरुषम्१३
वयं जीर्णा कार्यमुक्ता काशीनिर्वाणलोलुपाः ।
भवतां प्रेमबद्धा वै जीवाम इति शं शुभम् ॥१४॥

रामकटोरा, काशी ।
५-३-२९

बद्धकरयुगलो भवदीयो—
**मुरलीधरझा ।**

* सं० सा० समाजस्य पञ्चमवार्षिकाधिवेशने तृतीयदिवससभापतीनां म० म० पं० श्रीमुरलीधरझा ज्योतिषाचार्य्य-महोदयानामभिभाषणमिदम् । —( सं० सं० )

# संस्कृत-प्रहसनम् *

( प्रियदेशशर्म-खड्डेशास्त्रिणोः प्रवेशः )

खड्डेशास्त्री—अये प्रियदेशशर्मन् ! अस्तु, भवतः कथनेन इदन्तु मया सम्यग् ज्ञातं यद् दक्षिणस्यां दिशि एव विन्ध्यः पर्वतः, ततोऽपि अग्रे बहवो देशाः सन्ति । काञ्ची-विशाला-प्रभृतयो महानगर्य्यश्च तस्यामेव दिशि विद्यन्ते इति ।

पश्चिमायामपि प्रयागः, कान्हपुरम् , इन्द्रप्रस्थमिति । ओ हो ! उत्तरस्यां वर्तते गोरक्षपुरम् , नेपालदेशोऽपि कोऽपि अस्ति यस्तस्यामेव दिशि वर्तते । अपरन्तु इदं मयाऽपूर्वमेवाद्य ज्ञातं यत् पाटलिपुत्रं पूर्वस्यां दिशि वर्त्तते । अहो! इदं कस्मादधीतं भवता ? अहं तु वारद्वयम् प्रथम-मध्यमपरीक्षे दातुं पुष्पपुरं गतवान् । परन्तु एतन् नाज्ञासिषम् यत् कां दिशमवलम्बते तन्नगरमिति ।

प्रियदेशशर्मा—अये खड्डेशास्त्रिन् ! अत्र किमध्येतव्यं विद्यते । वयं राष्ट्रभाषा-( हिन्दी )-विद्यालय एव भूगोलेतिहासाध्ययनकाले सर्वप्रथममिदमेव पठामो, यदस्यां दिशि एतन्नगरं विद्यते, इमानि वस्तुजातानि तत्राविर्भवन्तीति । किं भवन्तोऽत्यावश्यकं वस्तु भूगोलगणितेतिहासादिकमपि न जानन्तीत्यहो आश्चर्य्यम् !

खड्डेशास्त्री—सखे प्रियदेशशर्मन् ! किं पृच्छसि, अहन्तु भवन्मुखादेव शृणोमि यत् भूगोलगणितेतिहासादिकमपि किञ्चिद् वस्तुजातमस्तीति । पूर्वन्तु एतस्य नामापि न श्रुतं मया, अध्ययनन्तु दूरे तिष्ठतु । अस्तु, इदमद्य भौगोलिकं ज्ञानमुपदिश्य भवता मम बहु-उपकृतम् । किमहं वच्मि, अस्माकमध्यापका लोकव्यवहारानभिज्ञाः साधव एव । तेऽस्माकमध्ययनाध्यापनादिव्यवस्थायां किमप्यवदधत्येव न हि । ते हि नेत्रे निमील्य तान्येव पुस्तकानि पाठयन्ति, यानि राजकीयपरीक्षासु निर्धारितानि सन्ति । वयं कूपे पतामः । देशः कुम्भकारपचने भस्मसाद् भवतु । किन्तेन तेषां महात्मनां प्रयोजनम् । ते तु युधिष्ठिर-राज्यमिदमिति कृत्वा सुखं शेरते । तेषां विज्ञानमेव नास्ति यच्चाणक्यस्यापि पितृव्यपत्नीयं वर्तमानशासनपद्धतिः । बलिवर्दवत् शृङ्गघर्षणेनैव इतो मृदुद्रेको भवतीति ।

प्रियदेशशर्मा—अयि खड्डेशास्त्रिन् ! विस्मरति भवान् । मया तु बहुशः पठितम् इतो निर्गच्छति 'सुप्रभात'-पत्रे यद् राजकीय संस्कृत-परीक्षायां भूगोलेतिहासयोरपि भवतु प्रवेश इति । अतो मिथ्या वदति भवान् यदस्माकमध्यापका नावदधत्यत्र विषय इति । इदानीं काश्यां संस्कृत-साहित्य-समाजेन तु नूतनयुगपरिवर्त्तनमेव कृतमस्ति संस्कृत-जगति । "पण्डिता अलसा भवन्ति, ते सार्वजनीनं

*प्रहसनमिदं संस्कृत-साहित्य-समाजस्य पञ्चमवार्षिकाधिवेशने काशी-विद्यापीठस्य छात्रैरभिनीतम् । ( स० सं० )

कार्य्यं न कुर्वन्तीति" लाञ्छनं तु संस्कृत-साहित्य-समाज-सदस्यैः स्वोद्योगेन सर्वथैवापाकृतमेव।

खड्डेशास्त्री—ह ! ह ! ह ! प्रियदेश ! त्वमपि अहमिव कूप-मण्डूक एवासि, किमपि न जानासि। हरे ! हरे ! सुप्रभातम् ! सुप्रभातम् !! सुप्रभातम् केऽपि पण्डिताः पठन्ति अपि तत् पत्रम् ? अहमेकदा तज्जिघृक्षुः स्वगुरुमभ्यधाम् यद्भो गुरो ! अहं सुप्रभातपत्रं पठितुमभिलषामि। तत्र बहव उपयोगिनो लेखाः सन्ति-इति। स तु लगुडं गृहीत्वा मां ताडयितुमुद्यतः। हा ! हा ! समाचारपत्रं पठिष्यसि? अरे ! कौमुदीं खाद, कौमुदीं पिब, कौमुदीं गृहीत्वा स्वपिहि, कौमुदीं गृहीत्वा जागृहि। जगति किं भवतीति ज्ञातुमिच्छामपि न कुरु। चुल्ल्यां पततु तत्सुप्रभातम् कुप्रभातमिति।

प्रियदेशशर्मा—खड्डेशास्त्रिन् ! किं तर्हि भवता गुरोराज्ञा पालिता न वा ?

खड्डेशास्त्री—प्रियवर ! आज्ञापालनस्यावसर एव नागतः। तदानीमेवावयोः कलहं श्रुत्वा पाठशालाध्यक्षस्तत्र समागतः। स च ममाध्यापकं बहु विनिन्द्य सर्वानप्यस्मान् सुप्रभातं पठितुमुपदिदेश, अपराण्यपि च हिन्दीपत्राणि पठितुमुपदिष्टवान्। ततः प्रभृति सर्वेऽपि छात्राः सुप्रभातं पठन्ति।

प्रियदेशशर्मा—अस्तु, ईश्वरो भवतां कल्याणं विदध्यात्। साधु ! भवन्तो देशकालात्मविदो भवन्तु !! अधुना मया गम्यते। (यातुमिच्छति)

खड्डेशास्त्री—(वस्त्रं गृहीत्वा) आः ! कथं गमिष्यसि ? बहुदिवसात् मिलितोऽसि। मम बहु-प्रष्टव्यं विद्यते, अयं मम सुहृदपि समागतोऽस्ति। अयमेव इत आरभ्य त्वया सह वार्तां करिष्यति।

( खड्डेमित्रस्य प्रवेशः )

प्रियदेशशर्मा—भोः खड्डेमित्र ! वद, वद, किन्ते वक्तव्यमस्ति ?

खड्डेमित्रम्—भोः प्रियदेशशर्मन् ! शृणोमि भवान् बहु देशभक्तोऽस्ति। इदन्तु ब्रूहि यदधुना स्वदेशि-वस्त्रान्दोलनं प्रवर्त्तते-इति यज्जनाः कथयन्ति तस्य कोऽर्थः ? किं स्वदेशि-वस्त्राणां कोऽपि समुद्रोऽस्ति यस्मादान्दोलनं नाम जलप्रवाह उद्वेलते-इति।

प्रियदेशशर्मा—भोः खड्डेमित्र ! अस्मादेव कारणात् सर्वे जना भवद्विधान् [1] कूपमण्डूकोपाधिभिर्विभूषयन्ति। राम ! राम !! भवानेतदपि न जानाति यत् स्वदेशि-वस्त्रान्दोलनस्य कोऽभिप्राय इति? केवलं लम्बशाटपटावरणमेव कर्तुं जानासि!!! अस्तु, शृणु महात्मन्, गेहेनर्दिन् ! इतो भारतदेशादेव रूप्यकैणैकेन सप्त सेटकानि अष्टौ सेटकानि वा क्रीत्वा कार्पासकानि विदेशेषु हरिवर्षादिषु ('योरप' इति भाषया ख्यातेषु) प्राप्यन्ते। तत्रत्या उद्योगिनो मानवास्तत एव तूलं निर्माय तद्बीजत एवैकं रूप्यकं सम्पादयन्ति। अवशिष्टात्तूलात्तु एकस्मिन्नपि सेटके सूक्ष्मातिसूक्ष्माणि सूत्राणि निर्मान्ति, येन च धौतद्वयं धौतत्रयं वा सम्पादयन्ति। तानि पुनरत्र भारते वर्षे प्रेषयन्ति, यानि च भवन्त एव क्रीणन्ति। एवं विदेशि-वस्त्रद्वारा नदीप्रवाह इव भारतीयं द्रव्यं प्रतिवर्षं हरिवर्षे गच्छति, अत्र च सुवर्णभूमौ दैनंदिनं दारिद्र्यमेव समेधते ! एतस्य सर्वस्यापि भवद्विधा एव निदानम्। तदेव भारतवर्षादाबाध्यमानं द्रव्यको-

निरोद्धुमत्रत्या नेतारो यतन्ते । तस्य कृते प्रतिग्रामं नगरं प्रचारं कुर्वन्ति, यत्र केऽपि वदेशिवस्त्रं यन्तु-इति । अयमेव स्वदेशि-वस्त्रान्दोलनस्याभि-यः । पश्य कोऽपि, पुरत आयाति ।

( अनुकरणदासस्य प्रवेशो विदेशीयपरिच्छेदेन )

नुकरणदासः— ( खड्डेमित्रं दृष्ट्वा क्रोधान्वितो भूत्वा सभ्येवापशब्दादिकम् आंग्लभाषायां वदति— ) ओह् ! व्हॉट ए फूलिश मॅन ही ईज ! सी, ही पुट्स् ऑन दि चोंगा इन् धिस् रिफॉर्मेशन पीरिअड् ऑफ़ दि ट्वेंटिएथ सेंच्युरी ! ब्लड़ीफूल ! नॉन्-सेन्स !! वेल् बट् आय् मस्ट नॅाट फ़र्गेट दॅट् ही इज माय् ओल्ड् फ्रेंड् ॲण्ड ॲकॉर्डिंगली आय् ट शेक् माय् हॅण्ड वुइथ हिज़् ! हॅलो मिस्टर खड्डेमित्र, गुड् इव्हिनिंग ! हाऊ आर यू" *

[अनुकरणदासस्तस्य पार्श्वे गत्वा हस्तस्पर्शं करोति, तस्य स्तं वेगेन कम्पयति । खड्डेमित्रं तु स्वहस्तं कृषति, सिके संकोचयति, अङ्गानि शिरश्च चालयति, हस्तपादौ पति । अनुकरणदासः स्तब्धीभवति, प्रियदेशशर्मा हसति ।]

खड्डेमित्रम्—अये प्रियदेशशर्मन् ! अहन्तु च्छेनानेन स्पृष्टः सचैलं स्नानं कर्त्तुमिच्छामि । ! हा ! कोऽयं दुरात्मा मामकारणमेव स्पृष्टवान् मपराद्धं मयाऽस्य । ( तदभिमुखो भूत्वा ) अरे दुरात्मन् ! कोऽसि त्वम्, यन्मामकस्मादागत्य स्पृष्टवानसि ? किं मयाऽपकृतं तव ?

* ( स्वगतम् ) हन्त ! कोऽयं मूर्खः ! पश्य, अस्मिन् शत्कृते विंशतितमे शतकेऽयं गतानुगतिकपरः पुरुषः 'चोंगा' मकं वस्त्रं धारयति-इत्यहो ! अस्य मौर्ख्यम्, अज्ञानं च । न्तु, अयं मम पुरातनः सुहृदिति तु मया कदाचिदपि न स्मर्तव्यम् । अतस्तस्य हस्तान्दोलनं कर्तुं मामुचितमेव भाति ( प्रकाशम् ) भो खड्डेमित्र ! नमस्ते ! कथय, थं वर्तसे ?

अनुकरणदासः—" वेल् सर्स ! सी हिम—आय् डिड् नेव्हर सी सच् ए वाइल्ड फ़ेलो बिफ़ोर ! आय् ॲम् अनुकरणदास, हिज़् ओल्ड् फ्रेंड्, ॲण्ड बीइङ्ग् हिज़् ओल्ड् फ्रेंड् आय् वुइश् टु सॅल्यूट् हिम् अण्ड ही रन्स् अवे फ़्रॉम मी ॲज़् ए बुलक् फ़्राम ए रेड रॅग ! ओह् ! नो बेटर, दॅन् ए बीस्ट !!"[२]

प्रियदेशशर्मा—( खड्डेमित्रं लक्ष्यीकृत्य ) अयि महात्मन् ! अयं अनुकरणदासस्तव पुरातनं मित्र-मात्मानं ख्यापयति । किं भवान्न परिचिनोत्येनम् ?

[खड्डेमित्रम् उपनेत्रं नेत्रयोः संयोज्य अनुकरणदासमग्रतः पृष्ठतः पश्यति, शिरस्त्राणमुत्तारयति, बाहू चालयति, पश्चा-त्परिचयं लब्ध्वा तमालिङ्गति, स्वयं संस्कृते हिन्दीभाषायां च वक्ति, अनुकरणदासस्तु 'इंग्लिशि' वक्ति । परस्परं कोऽपि कस्यापि कथनं नावगच्छति ।]

खड्डेमित्रम्—किम्, अनुकरणदासोऽयम् ? कुत्र इयन्तं कालमासीत् ? किं विदेशे बम्भ्रम्यमाण एतावन्तं कालं यापितवान् ? अहो वैदेशिकभावापन्नः परिचीयते एष न हि सोऽयमनुकरणदास इति ।

अनुकरणदासः—" वेल, डिअर फ्रेंड् खड्डेमित्र ! डोण्ट " यू रेकग्नाइस् मी ! डोन्ट्यू नो आय् हॅड् बीन इन इंग्लॅंड फ़ॉर फ़ाइव्ह यीअर्स ॲण्ड् आफ़्टर दॅट आय् ट्रॅव्हल्ड थ्रुआंउट ऑल् दि यूरोपिअन कंट्रीज़् ! आय् सॉ दि लार्जेस्ट बिल्डिंग्ज़ ऑफ़ अमेरिका ! ॲण्ड डू यू नो व्हेन् आय् वॉज़ इन पॅरिस, आय् लर्न्ट् दि आर्ट् ऑफ़ डान्सिंग देअर.

२—पश्यन्तु भवन्त एनम्, एतादृग् बर्बरो न पूर्वं कदापि मया दृष्टः । अहमनुकरणदासोऽस्य पुरातनं मित्रम् । तेनैव सम्बन्धेन तं नमस्कर्तुमहमिच्छामि; परन्तु यथाऽऽरक्तेन पटेन बलीवर्दस्तथाऽयमपि मत्तः पलायितुकामः खलु । हा ! हन्त ! ननु पशुतोऽपि नीचतरः प्रतिभात्ययम् ।

नाऊ आय् डू नॉट् लाइक् इण्डिया ! आय् डिस्ला-इक हर् रस्टिक् फुड्, फूलिश कस्टम्स् ऍण्ड रूड मॅनर्स् !! आय् फ़ाइण्ड् दि पीपुल् ऑफ़ इण्डिया बार्बरस् ऍण्ड यू आर् ऑल्सो वन् ऑफ़ देम ³

प्रियदेशशर्मा—( उभयोरपि दशां दृष्ट्वा मनसि चिन्तयन्नुभावपि उद्बोधयति खड्डेमित्रं लक्ष्यीकृत्य ) अये महात्मन् ! न कोद्रवं प्रशंसनीयमस्ति, नापि वा श्यामाकं निन्दनीयमस्ति । यथा भवान् कूप-मण्डूकस्तथाऽयमपि अन्धोऽनुकरणकारी । उभावपि युवां देशमिमं रसातलं प्रापयतः । पश्यतु, धर्मशा-स्त्रादिषु लिखितमस्ति—

,, न स्यूतेन, न दग्धेन, पारक्येन पटेन च ।
आह्निकं कर्म कुर्वीत, कृतम्वै निष्फलं भवेत् ॥ '' इति ।

किं भवानस्य वचनस्यानुकूलं व्यवहरति ? अल्पीयांस एव पण्डिता भवेयुर्ये स्वदेशीय-वस्त्रेणैव स्वकीयं सर्वं कृत्यं सम्पादयन्ति, स्वकुटु-म्बान् वा परिधापयन्ति ! हा हन्त ! कष्टतरमिदम् । ये खलु पण्डिताः पूर्वं राज्यचक्रं चालितवन्तः तान् एव अस्माकं पण्डितान् ये चलितुमपि न जानन्ति तेऽपि देशद्रोहिणोऽकर्मण्यान् कथयन्ति ! भो सुहृदः, यूयं तु स्वदेशीयवस्त्रं परिधत्त—

खड्डेमित्रम्—( संक्रुद्धः ) अलं, अलं, अलम् मौनमास्ताम् । व्यर्थमेव स्वपाण्डित्यं प्रकाशयसि जाने, त्वं 'लीडरो' वा 'विष्टरो' वा असि-इति । जाने त्वमेव साधुरसि, अपरे सर्वेऽपि अनभिज्ञा एव आः ! मन्ये, अयं स्वर्गत एव समागतोऽस्ति । वद त्वं मम अध्यापकादपि विद्वानसि, यत्तव कथ करोमि ? मम गुरुपादास्तु विदेशीयवस्त्रमेव परि दधति । ते कथयन्त्यपि च यदस्माकं परम्परा एवेदमायाति तत्कथं वयं परित्यजाम इति । गच्छ गच्छ, न वयं तव कथनं करिष्यामः ।

प्रियदेशशर्मा—अरे, अरे ! कथमयमेकपदे ए कुद्धः सञ्जातः ? अस्तु, भो खड्डेमित्र ! त्वं मम वच कुरु वा न कुरु-इत्यस्य नास्ति मे चिन्ता । त्वन्तु धर्मशास्त्रकर्तॄणां महर्षीणां श्रुतेरपि आज्ञामुल्लङ्घ्य गच्छसि-इत्येव मां दुःखयति ! पश्य—

'देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्त्तनम्'

इति वाग्भटाचार्यो देशस्य कालस्य आत्मनश्च विशेषज्ञानं कर्तव्यमिति डिण्डिमनादं वक्ति अपरञ्च सतो वृत्तस्य समीचीनस्यैवातीतस्यानुवर्त्तनं; न तु 'अन्धेन नीयमाना यथाऽन्धा' इति अन्धीभूय यस्य कस्यापि कुवृत्तस्य कुत्सितस्यातीतस्याप्यनुकरण कर्त्तव्यमिति वक्ति । श्रुतिरपि—'यान्यस्माकं सुचरि तानि तानि सेवितव्यानि, नो इतराणि' इत्यादि शति । किमहं वच्मि, भवन्तस्तु इदमपि न जानन्ति यदियं रूढिः कियतः कालात् प्रचलिताऽ-स्ति, इयमिदानीमनुपयुक्ता गर्हिता हेयैवेति मनागपि न विचारयन्ति, सर्वमपि नम्रीभूय गलिवृषभवत् स्कन्धेनावहन्ति—इति ।

---

३—भोः खड्डेमित्र ! किं भवान् मां न परिचिनोति ? किं भवान् न जानाति, यदहमनुकरणदासः पञ्चवर्षपर्यन्तं 'इंग्लैण्ड' देशे न्यवसम्, अनन्तरं च समग्रे हरिवर्षे पर्य-टनं कृत्वा तत्रत्यांश्चेतोहरान् भूमिभागांश्च दृष्टवान् । अमेरुके देशे ('अमरीका' भिधे) प्रविष्टस्तत्र च नभःस्पृशान् प्रासादान-वलोकितवान् । तथा च पेरीसनगर्यां मया नृत्यकलायां कौशल्यं सम्पादितम् । न भारतभूरद्य मां प्रीणाति । तत्रो-त्पद्यमानं रूक्षं धान्यं, घातक्यः प्रथाः' नारक्यो रूढयश्च न मह्यं रोचन्ते । भारतीयाः खलु संस्कृतिहीनाः, त्वमपि तेषामेको बर्बरः ।

( तावदेव कस्यचन मार्गस्थ-विज्ञस्यागमनम् । )

मार्गस्थः—प्रियदेशशर्मन् ! किम्भवाननेन सह-कलहं करोति ? इमे तु महात्मानो भवन्ति मानः ! एते खलु प्रदर्शनालये स्थापयितुं ाः सन्ति । किं न पश्यसि एतेषां पाण्डित्यम्? ! अत्रैव काश्यां ब्राह्मणमहासम्मेलने एताद्द-ह्मणैरियं अज्ञानमूलिका आत्मघातिका च रणा कृता, यत् स्वधर्मानुयायिभ्यो रविदासे-र्मकारादिभ्यो गोरक्षकहिन्दुभ्योऽपि परध-नुयायिनो मूर्तिभञ्जका वेदविनिन्दका गोहिं- मोहम्मदीय-तुरुष्कादयो यवनाः श्रेष्ठाः याश्चेति । तेषां यदि देशकालात्मविज्ञानं र्हि कदापीदं न स्यात् । यतो हीमे मोहम्म- मोहम्मदस्य जन्मकालत एव सञ्जाताः । तु तत्रत्याः ( सम्मेलनगताः ) बहवोऽपि पतञ्ज-हाभाष्यादिषु यवनशब्दोल्लेखं दृष्ट्वा इमानेव ब्दवाच्यान् कल्पयित्वा तत उत्कृष्टान् वदन्ति । नुकरणदासं दृष्ट्वा ) कोऽयं भो वानराकृतिः, शेऽपि विदेशिवदाचरतीति ?

प्रियदेशशर्मा—अयमप्यस्माकं दौर्भाग्यतो विदेशा-व्यवहारस्य अन्धानुकारी विस्मृतमातृभाषः भाषामधीत्य सप्तमे आकाशे नरीनृत्यते । पश्य, स्य परिच्छदम् । मन्ये, अद्यैव हरिवर्षत तीर्णः—( अनुकरणदासमनुलक्ष्य ) किम्भो ! शोभसे । कथं न वदसि--

अनुकरणदासः—" व्हॉट ! व्हॉट सेऽस्ट दाऊ ! यन ड्रेस्... फूल्स वेअर इट् ! आय डिस्लाइक् ईव्हन् युअर कल्चर !! व्हॉट ऑफ़ ड्रेस् देन् " [४]

मार्गस्थः—हा, हन्त ! दुर्भाग्यं भारतवर्षस्य यदेवं केचन परानुकरणप्रिया भूत्वा स्वदेशव्यवहाराय स्वदेशाचाराय च तिलाञ्जलिं-दत्त्वा पाश्चात्यसभ्यतामेव सर्वत आश्रयन्ति-इति । किं भो महात्मन् ! किमिदम् ? किं भवान् क्रिश्चियन-धर्म्मानुगो विद्यते, यदिदं नेक्‌टाइ ( कण्ठबन्धनं ) धारयसि । सत्यम्, त्वमनेन परिच्छदेन भारतस्य कण्ठमेव बध्नासि । त्यज, त्यज इदं सर्वम् , पश्य-यत्त्वया शोभार्थं ध्रियते, तदिदमीशामहाशयस्य 'क्रॉस' पदवाच्यमस्ति । यथा कश्चिच्छोभार्थं संन्यासिनां वेषधारणं कुर्यात् तथैव तवेदं वेषधारणमिति सत्यं जानीहि ।

( अनुकरणदासो न किंचिदपि बुध्यते । स अज्ञानं नाटयति, तदा प्रियदेशस्तं 'इंग्लिश' भाषयैव बोधयति । )

प्रियदेशशर्मा—" डिअर अनुकरणदास ! धिस् फ्रेण्ड् ऑफ़ माइन सेज् दॅट यू हॅव् बिकम् डिस्लॉयल् टु युअर मदरलँड बाय् ॲडॉप्टिंग् वेस्टर्न कस्टम्स ॲण्ड मॅनर्स ॲण्ड दॅट यू हॅव चेंज्ड् युअर ओन् रिलिजन् ॲण्ड् टर्न्ड् ए क्रिश्चियन्-यू किल् युअर मदर इण्डिया-बाय् धिस कॉंडक्ट् ऑफ़ युअर्स-फॉर दि सेक् ऑफ़ हेवन् प्लीज़ डोंट् डू दॅट्-यू ट्रेचरस फेलो ! "

---

४ किम् ? किं कथयति, भवान् ? भारतीयवेशभूषा.........सा तु मूर्खैरज्ञैरेव ध्रियते । भवदीया भारतीया सभ्यताऽपि मां न प्रीणाति । तत्कथं भवदीया वेशभूषा तत्कर्तुं समर्था भवेत् ।

अनुकरणदासः— ( स्वगतम् ) " ईज़् धिस् ऑल् ट्रू ह्वॉट ही सेज् ? अॅम् आय् रिअली डिस्लॉयल टु माय् मदरलैण्ड ? इंडीड् देअर ईज़् नॉट दि लीस्ट डाउट अॅबाउट् इट् ! सर्टनली इट् इज़् ऑल ट्रू !! आय् अॅम् रिअली गोइंग अगेन्स्ट् दि प्रोग्रेस् ऑफ़ माय नेटिव्ह प्लेस् !!! ( प्रकाशम ) वेल् फ्रेण्ड्स् आय् अॅशुअर यू आय् विल प्लेज माय्-सेल्फ़ टुं खद्दर फ्रॉम् धिस् व्हेरी मोमेंट् अॅण्ड-एल्स् "—५

( संस्कृतमाश्रित्य ) अहमपि किंचित किंचित् संस्कृतं जानामि; इत आरभ्य तस्या अध्ययनं सम्यक् प्रकारेण कर्तुं प्रयतिष्ये इत्येव मे प्रतिज्ञा। तथा च विदेशिवस्त्रं परित्यज्य स्वदेशीयवस्त्रं परिधातुं प्रतिजानामि-इति।

( ततः सर्वमपि स्ववेशं परित्यज्य खद्दरवस्त्रपरिधानमनुकरणदासेन तत्रैवसम्पाद्यते। तद्दृष्ट्वा उभावपि प्रियदेश-मार्गस्थौ तं प्रशंसयन्तौ कथयतः— )

मार्गस्थः— साधु अनुकरणदास ! साधु, अद्यारभ्य भवानवश्यं संस्कृताध्ययनं करोतु। सा तु देवभाषाऽस्ति। तस्या अध्ययनेन हृदयं पवित्रतमं जायते चेतसि च स्वधर्म्म-स्वदेशयोरादरभावो जाज्वल्यते। अपरं च यथा भवान् संस्कृताध्ययनं कृत्वा देशसेवां कर्तुमर्हति न तथाऽन्यया भाषया! यतो हि सृष्टेरादित आरभ्य सर्वेऽपि समीचीना महर्षीणां विचारास्तस्यामेव भाषायां निबद्धाः सन्तीति। अपरं च कस्मिन्नपि देशे गच्छतु कामपि भाषां पठतु परन्तु स्वीयान् साध्वाचारविचारान् न त्यजतु। इदं हि राष्ट्रियत्वं नाम यत् स्वदेशोद्भवानामेव अशोभनानामपि वस्तूनां तथा सदाचाराणां सद्रीतीनां च रक्षणं वर्द्धनं पालनं च प्रचारणमिति। पश्यतु न, जयप्राण ( जापान ) देशस्था वीरपुङ्गवाः सर्वमपि हरिवर्षीयगुणजातं गृह्णन्ति; परन्तु स्वदेशाचारं भूमावुपवेशनं काष्ठगृहनिर्माणं नैव त्यजन्ति।

( खड्डेमित्रं लक्ष्यीकृत्य ) किं शास्त्रिन्! किं विचारयति भवान्! भवाँस्तु सर्वमपि राष्ट्रियमाचारं वेषं च बिभर्त्ति; परन्तु भवतोऽज्ञानात्तत्सर्वमपि निष्फलं भवति। पश्यतु, यस्मिन्वेषे भवानस्ति स वेषस्तु भारतीय एव; परन्तु सर्वाण्यपि भवतो वस्त्राणि विदेशोद्भवानि, अत एव परोदरपूरकानि भवन्तं समाजे निन्दापात्रं कुर्वन्ति। देशकालात्मज्ञानाभावाच्च भवाँल्लोके हेयोऽनुपादेयश्च भवति। यदि भवान् सर्वदा खद्दरमेव परिदध्यात्, स्वल्पप्रयासेनैव इतिहास-भूगोलादिज्ञानं देशीयसमाचारपत्राणाञ्चाध्ययनं कृत्वा वर्त्तमान-प्रगति-परिचयं सम्पादयतु चेत्तदा तु 'सुवर्णे सुगन्ध-समवायः' सञ्जायेत। भवानेव सर्वेषामपि भारतीयानां नायकः स्यात्, यतो हि भारतस्य नेतारस्तु संस्कृतज्ञा एव भवितुमर्हन्ति नान्यभाषाभिज्ञा विदेशिभावसम्पन्नाः कियन्त आधुनिका नेतारः। तेषु तु बहव एवमेव सन्ति ये भारतमिदं यूरोपमेव कर्तुं यतन्ते। उत्तिष्ठन्तु भवन्तः स्वदेशीयवस्त्रकवचं परिधाय सर्वमपि संस्कृत-साहित्य-समाजमुज्ज्वलयन्तः सर्वानपि स्वा-

५—( स्वगतं ) यदयं वदति तत्किं सत्यम्! अप्यहं विश्वासघातको येन मदीया मातृभूमिः प्रतार्यते ? अपि तत्सत्यम् ? आम्, तदेव निःसंशयं सत्यं वस्तु। जननी-जन्मभूमेरहं हितविरोधी संवृत्तः खलु ! तां अवनतिगर्तमहमाकर्षयामीति खलु मम महानपराधः। (प्रकाशम्) अयि सुहृदः ! प्रतिजानामि यदद्यप्रभृति भारतवर्षीयं वस्त्रं खद्दरं परिदधामीति।

न् स्ववशे स्थापयन्तु, नो चेदिदानीं क्रान्ति-
स्मिन् न कोऽपि कस्यापि वृथामाहात्म्यं स्वी-
बलादपि उद्यतो भविष्यति—इति ।

खड्डेमित्रम्—( उत्साहमासाद्य अमितौजसाऽऽ-
वक्तुं प्राक्रमत ) किं भोः ! किमहमस्मादपि
तोऽस्मि यन्मामुपदिशति भवान् ! पश्यतु, अ-
गुरवः स्वदेशिवस्त्रं परिदधतु वा न परिदधतु
तु वयमद्यारभ्यैव स्वदेशिवस्त्रं तत्रापि च खद्दरं
धास्यामः । सर्वानपि स्वसुहृदः स्वानुगाँश्च
परिधापयिष्यामः । अहो! वयं शृगाल-सहचरी-
सिंहा इवात्मानं विस्मृत्य म्लेच्छराजपराधीना
तदीयदेशोद्भववस्तुजातं बिभृम इत्यहोऽस्मा-
विचारित्वम् ? पश्यास्माकं ब्रह्मबलम्, सर्वानपि
समानान् स्वशिष्याँश्च स्वदेशिवस्त्रधारिण एव
ष्यामः । सर्वेऽपि वयं संस्कृतज्ञा अद्यारभ्यस्व-
वस्त्राणि अन्यान्यपि च स्वदेशीयान्येव वस्तुजा-
परिधास्यामो ग्रहीष्यामश्च । न कोऽप्यस्मासु
शीयं वस्त्रं वस्तु वा ग्रहीष्यति । वयं तु जन्मत
सहयोगिनो भवामः, नाभिलषामो यदत्र भारत-
कस्यापि म्लेच्छराजस्य शासनं भवेदिति ।
वयं शय्योत्थायं परमात्मानं प्रार्थयामहे "म्ले-
मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः"
। अत्रैवागामिनि संस्कृत-साहित्य-समाजा-
शने भवान् सर्वानपि खद्दरमयवेषभृत एव
तज्ञान् छात्रान् विदुषश्च द्रक्ष्यतीति निश्चितं
तु । अपरं च, वयं संस्कृतज्ञाश्छात्रा विद्वांसश्च
भातम्' अपराण्यपि हिन्दी-समाचारपत्राणि-
ष्यामः, तथा सर्वत्रापि संस्कृत-पाठशालासु
भूगोल-गणितेतिहासानां पाठनायान्दोलनं करि-
ष्यामः ।

मार्गस्थः—साधु, खड्डे मित्र! साधु, भवान् ब्राह्मण-
बालोऽस्ति, दर्शितं भवता स्वानुरूपं कर्म? विना-
संस्कृतज्ञैर्नहि अस्य देशस्य सामाजिकी धार्मिकी
वोन्नतिर्भवित्री—इति भवद्विधा एव सुसंस्कृता
विद्वांसो भारतमिदं सनाथीकरिष्यन्ति । आयान्तु
सर्वे वयं मिलित्वा परेशं प्रार्थयामहे । तथाहि—

( भरतवाक्यम् )

वयमिह निजसत्त्वात्साम्प्रतं विप्रलब्धा-
अजर! सफलय त्वं प्रार्थनां सद्य एव ।
शतमपि शरदां वै प्राणिमोऽत्र स्वतन्त्रा-
द्रुतमुचितपथेऽस्मान् भारतीयान्नयेथाः ॥१॥
बहव इह जना ये पृष्ठगा देव! आसँ-
श्चरम-शिखरमारात्सङ्गता उन्नतेस्ते ।
विलपति तव दीना प्रेयसी भारती भूः
किमुचितमिदमित्थं मौनमालम्बितुं ते ॥ २ ॥
विधिपरवशतो हा! संश्रिता दैन्यमीदृग्-
वयमिह लघिमानं साम्प्रतं लम्भिताः स्मः ।
पुनरपि निजशक्तेर्ज्ञानमासादयन्तः
परमकरुण! देशं स्वं स्वतन्त्रं विदध्मः * ॥३॥
राष्ट्रदेवो भव । इति शम् ।

---

* सुमनोहरं गभीरभावभावितमिदं प्रहसनं सुप्रभातसम्पादकैः श्रीगोपालशास्त्रिभिर्विरचितं संस्कृत-साहित्य-समाजस्य पञ्चम-वार्षिकाधिवेशनेऽभिनेतुम् । तच्च तेषामेवच्छात्रैस्तेषामेव नेतृत्वे समयोचित-भावभङ्गिभिरभिनीतमिति तु दुग्धशर्करायोग एव । अभिनेतॄणां नामानि एवम्भूतानि सन्ति यथा—

| | |
|---|---|
| श्री गुरुनाथः | ( खड्डेशास्त्री ) |
| श्री गोपालजयकृष्ण-कुलकर्णी | ( प्रियदेशशर्मा ) |
| श्री सिद्धेश्वर-बडोदकरः | ( खड्डेमित्रम् ) |
| श्री शङ्करपुरोहितः | ( मिस्टर अनुकरणदासः) |
| श्री त्र्यम्बकमोहरीरः | ( मार्गस्थो विज्ञः ) |

—( स० सम्पादकः )

# श्रीयुत-पं० रामनारायणमिश्र-महोदयानां
## सिद्धियात्राभिनन्दनम्*

देशोद्धारकृते विहाय परमं स्वं धाम काशीमिमाम्
सौख्यं राजकुलोचितं प्रणयिनस्त्यक्त्वा च बन्धून् निजान् ।
यास्यन् नन्दन-सन्निभे नृपपुरे द्वीपान्तरे लन्दने
जीयात् सर्वकलासु भारतविधेः 'श्रीरामनारायणः' ॥ १ ॥

श्रीरामः कुशलं करोतु भवतः साक्षाद्रिपूणाञ्जयी
सम्पत्तिं प्रददातु सिन्धुशयनो नारायणः सेन्दिरः ।
त्वञ्चास्मान् सुखयस्व कृत्यनिपुणः कृत्वैव कार्यं समम्
व्यावृत्तः कुसुमाकरेण सदृशं सम्फुल्लयन् भारतम् ॥ २ ॥

त्वादृक्षान् रसिकान् स्वदेशकृतये दुःखार्णवाद् दुस्तरा-
दन्यान् तारयतः स्वयं च तरतः प्राशास्महे साम्प्रतम् ।
कोट्यस्त्रिंस्र उतापि हीनगणना वीरा यदा त्वादृशा-
भूयासुर्भरतस्य भूमिरनघा भूयात् पुनः पूर्ववत् ॥ ३ ॥

रामनवमी
सं० १९८६

*श्रीअनन्तरामशास्त्री,*
रणवीर-संस्कृत-पाठशालाध्यक्षः ।

---

* हरिवर्ष ( यूरोप ) देशीय-'इटली' प्रदेशान्तर्गत 'जनोवा' स्थानीय "अन्तर-राष्ट्रिय-शिक्षा-सम्मेलने" मान्या मिश्रमहोदया भारतीयप्रतिनिधिभूता वैशाखकृष्ण ७ बुधे काशीतो गच्छन्तः सिंहल ( लङ्का ) द्वीपाये 'कोलम्बा' नाम्नि स्थाने बृहज्जलयानेन वैशाखशुक्ला ७ बुधे द्वीपान्तरं गमिष्यन्ति, तदुपलक्ष्ये मिश्रमहोदयानामभिनन्दितुं श्रीमदनमोहनमालवीयमहोदयानां सभापतित्वे समुपस्थितेषु सूरि-सङ्घेषु पठितानामभिनन्दपत्राणामन्यतममिदम् ।

—द्विजेन्द्रः ( स० सं० )

# उलूकध्वनिः *

सुप्रभातस्य तृतीयचतुर्थाङ्के शास्त्रव्यवसायिनां कुत्सितं कर्मेति शिरष्को लेखः प्रकाशित आसीदिति नाविदितमस्ति सुप्रभातपाठकानाम् । तत्र सुप्रभातसम्पादकमहोदयेभ्यः शतशो धन्यवादाः सन्ति । यतस्ते सुप्रभातस्य नवमनियमे "विवाद-ग्रस्ता व्यक्तिगताक्षेपपूर्णलेखा न प्रेषणीयाः" इति मर्यादां पादाभ्यामाहत्य स्वकीयं प्रगाढ़पाण्डित्यं दर्शितवन्तः । अतःपरं लेखकमहोदयेभ्यो धन्यवादान् वितरामो, येषां मर्यादा निराकारब्रह्मतोऽपि परा वर्तते (!) तत्र भवन्तः " सम्प्रति सर्वं विहाय भारतस्य स्वातन्त्र्यमेव विद्यते साध्यं वस्तु भारतीयानामिति" ख्यापयन्तः, किञ्च "सङ्घे शक्तिः कलौयुगे" इति लज्जितमुखेनोद्घोषयन्तो देशनायकानां राष्ट्रसंघटनैककर्तव्यतामिति भाषणं कुर्वन्तो "हिन्दुसंघटनं" कामयन्तः साम्प्रदायिककलहं वर्धयन्तः सुप्रभातालोके कृष्णीकृतं स्वमुखं दर्शयितुमसमर्थाः सन्तः स्वकीयं नाम चोरायत्वा उलूकध्वनिं कृतवन्त इति निभालयन्तु सुधियः ।

तस्मिन्नेव विषयेऽहं किञ्चिद्विलिखामि । यद्यप्यादृशानां गुणाग्रहणशीलानां लोभाक्रान्तचित्तानां शास्त्रविनिन्दकानां कृते लेखप्रतिवादोऽप्ययुक्तः समयवैफल्यं चास्तीति मन्यते । तथापि "शठे शाठ्यं समाचरेदिति" मन्यमाना वयं तदुत्तरे प्रवृत्ताःस्मः ।

भो प्रणव ! शास्त्रव्यवसायिन इन्द्रियारामा भवन्तीति कथमनुभूतं भवद्भि रन्याभ्योऽथ………… अनुभूतम् ।

पौषस्य पूर्णिमायां सूर्योदये प्रकाशितं गोस्वामिनां यज्ञोपवीतधारणविरुद्धव्यवस्थापत्रं कथं दूषितं ? तत्र दूषकताबीजं किम् ?

अयि महात्मन् ! यद्भवान् भीषयते " एतेषां जीवनवृत्तान्तादिभिः सह पुस्तकाकारं खण्डनं प्रकाशयिष्यते" इति तत्रैकान्ते इत्थं विचारणीयं, नहि भवतामेव पार्श्वे लेखनी मसीपात्रञ्चास्ति किन्तु भवतां मुखविमर्दकानामपि सविधे । तस्मिन्व्यवस्थापत्रे न केवलं पूज्यपाद-म० म० श्रीलक्ष्मणशास्त्रिणामेव हस्ताक्षराणि विद्यन्ते; किन्तु महाराजाधिराज-श्रीकाशीराजमहोदयानामपि हस्ताक्षराणि विद्यन्ते प्रधानन्यायालय-( हाईकोर्ट प्रयाग ) स्थन्यायकर्तृणामपि व्यवस्थाऽस्ति "ते शूद्रा" इति । अथ च नव-महामहोपाध्यानामन्येषां विदुषाञ्च हस्ताक्षराणि

* कस्यापि 'सुप्रभात'-कर्मचारिणोऽनवधानतया कदापि पं० केदारनाथशास्त्रिसारस्वतमहोदयानामुपस्थितौ 'प्रणव' नाम्ना कोऽपि लेखस्तदीयसम्पादकतायां प्रकाशिताऽभूत् तस्यैवोत्तरमिदं साम्प्रतं म० म० श्रीलक्ष्मणशास्त्रि-द्राविड-महोदयानां पक्षतः कोऽपि तदीयश्छात्रः प्रेषितवानिति वयं सधन्यवादं प्रकाशयामः— ( सम्पादकः )

सन्ति तान् सर्वान् विहाय कथं श्रीमतां पूज्यपाद-महामहोपाध्याय श्रीलक्ष्मणशास्त्रिणामेव निन्दायां कुप्रवृत्तिः ? "एतर्हि तु द्वित्राः प्रश्ना एव क्रियन्ते श्रीलक्ष्मणशास्त्रिभिरुत्तरं " सुप्रभाते " देयमिति यद्भवाँल्लिखति तत्रेदमवधार्यताम्। यत् श्रीमतां प्रश्नानामुत्तराणि सृष्टिकर्तापि दातुमसमर्थः।

तथाहि—

" अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः।
ज्ञानलवदुर्विदग्धं ब्रह्मापि तं नरं न रञ्जयति।' इति

अन्यच्च—

" पोतो दुस्तरवारि-राशितरणे दीपोऽन्धकारागमे
निर्वातव्यजनं मदान्धकरिणां दर्पोपशान्त्यै सृणिः।
इत्थं तद्भुवि नास्ति यस्य विधिना नोपायचिन्ताकृता
मन्ये दुर्जनचित्तवृत्तिहरणे धातापि भग्नोद्यमः "—इति

अतो महामहोपाध्याय—श्रीलक्ष्मणशास्त्रिणो भवतां प्रश्नोत्तरे सर्वथैवासमर्था, अत आत्मानं धन्यं मन्यमाना उलूकध्वनिं कुर्वाणाः सुप्रभाता-लोकात् प्रपलाय्य निविड-ध्वान्तमन्विष्य ससुखं तिष्ठन्तु भवन्तोऽस्माभिस्तु स्वनाम चोरयन्तो भवन्तो नान्वेषिष्यन्त इति—

—गोपालदत्तशर्मणः।

## संस्कृत-साहित्य-समाजः।

अयं संस्कृत-साहित्य-समाजोऽत्र काश्यां षट्छास्त्रविद्भिर्ब्राह्मणैः संस्कृत-साहित्यस्य पुनरुद्धाराय वर्षपञ्चकात्पूर्वमेव प्रस्थापितोऽस्ति। प्रतिसंवत्सरमस्य समाजस्य वार्षिकाधिवेशनम्भवति, तत्र समाजकृतकार्यस्य सामान्यजनानां परिबोधाय विवरणं क्रियते, येन सर्वेषां विदितं भवेत् यदयमपि समाजो देशकालपरिस्थित्यनुरूपं यथावसरं कार्यं कुर्वन् पीडितानां ज्ञानेन, दानेन, शक्त्या च साहाय्यं विदधत्, लुप्तप्रायस्य प्राचीन-संस्कृतसाहित्यस्य गवेषणादिभिः पुनरुद्धरणं कृत्वा विद्वद्वरोल्लिखितनिबन्धपाठनेन च सर्वेभ्यो जनेभ्यस्तस्य साहित्यस्य परिचयं ददत् पंचवर्षं यावल्लोकसेवां विदधातीति। नाविदितं देशकालात्मविदामिदं यदेतादृशस्य समाजस्येदानीं परसंस्कृत्यभिभूतेऽस्मिन् भारतवर्षे नितरामावश्यकता वरीवर्तीति। प्रायः सर्वैरिदानीन्तनैः पाश्चात्यसंस्कृतिमेव बहुमन्यमानैर्जनैर्जनकल्याणदत्तचित्तानामस्मत्पूर्वजानां पूज्यकृतिः स्व-संस्कृतिर्विस्मर्यते। यदीयमेवावस्थाऽप्रतिहता प्रचलति चेत् प्रियभारतस्याचिरादेव 'इतो नष्टस्ततो भ्रष्टः' इत्यवस्था भवेत्। अत एव भारतगौरव-संरक्षकैर्निष्कामकर्मयोगिभिर्महामहिमशालिभिर्ब्राह्मणैः स्वदेश-धर्म-संस्कृति-साहित्य-समुद्धाराय संस्कृत-साहित्य-समाजस्य संस्थापनं संघटनं च कृत्वा स्वश-

यनुसारं कार्यं विधीय इति तेषां धन्यवादार्हत्वम्, शाङ्गश्रमेण द्रव्यदानेन वा पोषणीयत्वाच्चास्य समाजस्य । नायं समाजो व्यर्थमेव व्ययं विधाय भारतस्य भारभूतः संवृत्त इति प्रत्यक्षीकृत-समाजकार्यस्य मे निष्पक्षपातं मतम् ।

एतस्य समाजस्य विगतेषु रवि-सोम-भौम-गुरुवासरेषु ( ३, ४, ५, ७ मार्च, २६ ) संवृत्ते पञ्चमवार्षिकाधिवेशने ये ये सज्जनाः, छात्राः, विद्वांसः, अपरे च बाल-वृद्धाः समुपस्थिता आसन् । ते सम्यग् जानन्ति यदेभिः समाजसञ्चालकैर्विविधविषयकानि भाषणानि गवेषणापूर्ण-प्रबन्धपठनानि च कारयित्वा या संस्कृत-साहित्यसेवा विहिताऽस्ति सा खलु अद्वितीयाऽनिर्वचनीया चेति । अन्यच्च काशी-विद्यापीठ 'स्थच्छात्रद्वारा प्रहसनमेकं विधाय संस्कृत-पण्डितानामन्येषां जनानां च कूप-मण्डूक-वृत्तित्वापाकरणाय स्वदेशिवस्त्र-परिधारणाय च यः प्रयत्नस्तैः समाजकार्यकर्तृभिर्विहितः स तु अपूर्व एव सर्वानपि अन्यान् स्वदेशिवस्त्र-प्रचारप्रयत्नानतिशेत इति । सामान्यजनमनोवृत्तिमाकलय्य विहितोऽयं परिस्थिति-परिवर्तनशीलः समाधिक्येन सफलीभवेदिति सुमहान् ममाभिलाषः ? अनेन च प्रयत्नेन यत् खलु तैः स्वदेशिकार्यं सम्पादितं तदलौकिकमसामान्यं सर्वथा देश-कालपरिस्थित्यनुरूपं चेत्यत्र न मतवैभिन्यम् ।

परम्, महान् खेदावसरोऽयं यत् काशीस्थाः संस्कृतज्ञाः पण्डिताश्छात्राश्चापि बहुसंख्यायामत्र समाजे दत्तचेतसो न भवन्तीत्यपरे जनास्तु कश्चिदेवात्रावदधति । अन्तिमे दिने समाजमन्त्रि-महोदयैः श्रीकेदारनाथशास्त्रि-सारस्वतैः, समाजाधारभूतैः श्रीगोपालशास्त्रिभिश्च सामान्यजनानां पण्डितवर्याणाञ्च साहचर्य्य-सम्पादनाय यन्महत्वपूर्णं भाषणं कृतं तत्तु सर्वैरवश्यमेव स्मर्तव्यम् । रागद्वेषादिमहादोषान् विस्मृत्य आशाजीविनां समाजसञ्चालकानां प्रार्थनां च संस्मृत्यास्माभिः सर्वैर्भारतीयैः संस्कृतविद्वद्भिश्छात्रैः, सनातनधर्मिभिश्च पाश्चात्यसभ्यताभिभूतास्मत्संस्कृतिसंरक्षण-प्रयोजनस्यास्य समाजस्य ज्ञानेन, दानेन, अङ्गपरि-श्रमेण, सहयोगेन वा साहाय्यं कृत्वा संरक्षणीयोऽयं देशकालपरिस्थित्यनुरूपं कार्यं कर्त्ता संस्कृत्युन्नति-दक्षो जगत्यां भारभूतश्च संस्कृत-साहित्य-समाज इति सानुरोधं प्रार्थ्यते ।

—त्र्यम्बकविनायक-मोहरीरेण
( काशी-विद्यापीठस्थेन । )

## ❀ प्रहेलिका ❀

यः शब्दश्चतुरक्षरेण वनजं वर्णैस्त्रिभिर्भूधरम्
वर्णाभ्याञ्च शरीरिणां प्रकथयत्येकेन वैश्वानरम् ।
व्यस्ते शुष्कतृणां प्रतीरविषयं मध्ये च डिम्भन्तथा
बुध्यन्ते यदि पण्डिता भुवितले धन्या बुधा एव ते ॥

——देवरभट्टशर्मा छात्रः, ( वाराणसेयः ) ।




स्वर्गङ्गतानां महामहोपाध्याय-पण्डित-रामावतारशर्मणाम्

एम० ए०, साहित्याचार्याणां कृते—

## शोकाश्रु-विन्दवः ।

स्वप्नोऽयमस्ति यदि वा भ्रम एवमेव,
मोहोऽथवा परित एष विजृम्भमाणः ।
नो मेऽवधारणपरायणतामुपैति,
चेतोऽभितोऽपि विततं निरवेद्य जाड्यम् ॥१॥
स्वेनैव पाणिकमलेन सरस्वती यं,
संलाल्य पालितवती सुतनिर्विशेषम् ।
'रामावतार' इतिमञ्जुपदाभिधानः,
स क्वापि दैवहतकेन चिराय नीतः ॥२॥
सा बुद्धिरप्रतिहता निखिलेऽपि शास्त्रे,
सा वादिनां हृदयमोहनतर्करीतिः ।
विद्यावताञ्च परिषत्सु स हासभावः,
कञ्चेतनं स्मृतिमुपेत्य न रोदयन्ति ॥३॥
हा काव्यनिर्मितिकले ! विकले ! क्व नैजं,
स्थानं समाप्य भवितास्यधुनाधुताधिः ?
हं हो प्रसादगुण वत्स ! न जीवितासि,
चिन्ता मुधैव हृदये विविधा बुधानाम् ॥४॥
भारतं भाहतं जातं विहारो हारवर्जितः ।
'रामावतारे' स्वर्याते मूर्च्छिताऽभूत्सरस्वती ॥५॥

—श्रीहरिशङ्करपाण्डेयस्य ।
(असिस्टेन्ट छपरिन्टेण्डेन्ट विहारोत्कल-संस्कृत एसोशियेशनम्)

* * *

अस्तो विज्ञानभानुर्लयमयमयने
शब्दसद्रत्नसानु-
र्वैक्लव्यं कान्तशोके कलयति कविता-
कामिनी हन्त ! लोके ।
संशुष्कोऽत्यन्तदूरोपसृमरविभवो
दर्शनाम्भोधिपूरो
हारे वाणी-विहारे निमिषति नयने
सूरि 'रामावतारे' ॥ १ ॥

—श्रीविन्ध्येश्वरीप्रसादशास्त्रिणः ।

* * *

साहित्ये रसिकः श्रुतौ श्रुतधरः षड्दर्शने दर्शकः
कल्पेऽनल्पकरो निरुक्तविषये निर्वाचितो वेधसा ।
व्याकृत्यां प्रकृतिः स्वयं गुणवतां मान्यः समेषाञ्च यः
सोऽयं भू-भुवनं विहाय विगतो 'रामावतारः' सुधीः॥

—श्रीतारादत्तपन्तस्य ।

* * *

द्विज-भूषण ! शोकमश्नुते
त्वदभावे विकलाऽद्य भारती ।
क्व गतोऽसि सुपुत्र ! मऽधुना
बहुशः क्रन्दति 'राम' ! भारती ।

—रामप्रसादमिश्रस्य ।

# सम्पादकीयम्

## स्वदेशीय-वस्तु-व्यवहारः ।

"न स्थूलेन न दग्धेन पारक्येन पटेन च ।
आह्निकं कर्म कुर्वीत कृतं वै निष्फलं भवेत् ॥"
( आ०—सू० )



भारतीय-संस्कृतौ ब्राह्मण एव प्राधान्यम् । अत एव तद्विदो ब्राह्मणास्तत्रापि च संस्कृतज्ञा अभ्यर्हिता गायन्ते । तेषां नेतृत्वमेवाद्य यावद् भारते प्रचलितमासीत् । परन्तु इदानीं तेषामज्ञानाद्देशकालात्मज्ञानाभावाच्च हस्तगतमपि तद् दूरीभवदिव दृश्यते । तदेव न दूरीभवति; प्रत्युत अद्यत्वे त एव 'देशद्रोहि' शब्देनाहूयन्ते-इत्यत्र किं निदानमित्यवमर्शे तेषां स्वाभाविकी व्यवहारविरक्तिरेवात्र निदानमिति अस्मान् प्रतिभाति ।

पश्यन्तु, इदानीं यत् किञ्चनापि धार्मिकं सामाजिकं राजनीतिकमान्दोलनं भवति तत् सर्वमपि अन्यैरेव क्रियते । यद्यपि तत्रापि सन्ति ब्राह्मणाः परन्तु ते संस्कृतज्ञपण्डिता एव इति तु न कथयितुमपार्यते । बहव एवं कथयन्ति यदिदानीन्तनी आन्दोलनप्रणालिरेव विचित्राऽस्ति । यत्र पण्डितानां प्रवेश एव दुर्घट इति । परन्तु नास्माभिरिदं स्वीक्रियते अस्तु नाम राजनीत्यान्दोलने तेषां प्रवेशः कष्टलभ्यः परन्तु धार्मिक-सामाजिकादिषु तु तैरेवाधिकारिभिर्भाव्यम् । परन्तु निभालयन्तु तेषामौदास्यम् ! तत्रापि त एव महात्मान आन्दोलकाः सन्ति ये ऽन्यत्र राजनीति-प्रभृतिषु व्यग्र-व्यस्ताः सन्ति । हा! कष्टम्? अन्यद्दूरे तिष्ठतु, केवलमिदं स्वदेशि-वस्तूनामवान्दोलनं यदि संस्कृतज्ञा विद्वांसः स्वहस्ते कुर्य्युश्चेत्तदा देशस्य तेषाञ्च महानुपकारः स्यात् । ते हि यदि स्वदेशीय-वस्त्राणि परिदध्युः, स्वदेशीय-वस्तुभिर्व्यवहरेयुस्तदा तदनुयायिनो जनास्तु एवमेव तान् दृष्ट्वैव तस्मिन्मार्गे व्यापृताः स्युः, येन भारतीय-द्रव्यस्रोतः पाश्चात्यवणिग्भिराकृष्यमाणमेकपद एव निरुद्धं स्यात् । अन्यच्च, तेषामपि धर्मशास्त्रीयवचसः पालनेन धर्म्मविवृद्धिः, देशे तेषां समादरः साधु समेधितः स्यात्, स्याच्चाद्यत्वे प्रवर्द्धमानं संस्कृत-विद्वद्विषयकं देशजनोपेक्षणं निरुद्धमिति ।

अवदधतु, अस्मिन् वर्षे राष्ट्रमहा-सभायाः स्वदेशि-वस्त्राऽन्दोलन-सम्बन्धि शस्त्रं महात्मनो गान्धिमहोदयस्य हस्ते गतमस्ति, ते चेदानीमान्दोलनमिदम् पुनः प्रारब्धवन्तः सन्ति । यदि अधुनापि संस्कृतज्ञा विद्वांसश्छात्राश्चात्र विषये अवदध्युश्चेदनायासेनैवास्य कार्य्यस्य सिद्धिः

सम्पन्ना स्यात् । विगतायां होलिकायां यत्र-तत्र-होलिका-दहनावसरे राष्ट्रनेतारः सर्वानिवोपस्थितान् स्वयजमानान् ( स्वयंसेवकान् ) शिष्यान्, स्वसुहृदः सम्बन्धिनश्च विदेशिवस्त्रदाहमुपदिदिशुः । इदं सर्वमपि कृत्यमस्माकं संस्कृतज्ञानामस्ति । वयं हि देशस्यास्य जन्मसिद्धा नेतारः (पुरोहिताः) स्मः । यदि वयं स्व-स्वरूप-परिचिताः सन्तो देश-राष्ट्रहित-कराणि कार्य्याणि केवलं कर्तुमेव व्यवसिता भवेमः न कारयितुं, तदापि द्रुतमेव देशोऽयं स्वतन्त्रः स्यात् ।

वयं भावुकान् संस्कृतच्छात्रान् अनुरुन्धमः, यद् भवन्तो विमृशन्तु नैजं कर्तव्यमस्मिञ्जगति । नैवमेव व्यर्थजीवनं यापयन्तु । अस्मिन् राष्ट्रियाह्वाने आत्मानं पुरस्कुर्वन्तु दाहयित्वा प्रक्षिप्य वा विदेशीय-वस्त्ररूपमलम्, आत्मानञ्च राष्ट्रकार्य्यत्तमं कुर्वन्तो मार्जयन्तु संस्कृतज्ञेषु आसज्यमानमिदं लाञ्छम्, यत् "संस्कृतज्ञा विद्वांसश्छात्राश्च देश-द्रोहिणो, नेमे स्वदेश-स्वराष्ट्र-प्रेमभाजो भवन्ति" इति।

* * *

## कैवल्याश्रिताः म० म० रामावतारशर्माणः ।

जगति शिक्षितशब्दभाजः क एवम्भूताः सन्ति ये श्रीमतां रामावतारशर्मणां नाम्ना न परिचिताःस्युः । ते हि विपश्चिदपश्चिमा अद्भुताः सुरभारती-प्रणयिनोऽपूर्वाः स्वतन्त्रप्रकृतिकाः सर्वमपि स्वसमयं विद्याविज्ञान-वारिधि-मन्थनेनैवानयन् ।



[ स्व० रामावतारशर्मा ]

जन्म-सं० १९३४

मृत्यु-सं० १९८९

विरला एव विद्वांस-एवमलौकिकप्रतिभा-सम्पन्ना भवन्ति । अमी हि महात्मानः स्वजन्मना छपुर-(छपरा) मण्डलमलम कुर्वन् । स्वल्पेनैवानेहसा प्राच्यपाश्चात्योभय-विद्या -वैदुषीभाज इमे स्वाद्भुताऽध्यवसायेनाऽपूर्वाणि ग्रन्थरत्नानि जग्रन्थुः । तत्र 'परमार्थानुशासनम्', 'भारतीयेतिवृत्तम्' 'मुद्गरानन्दकाव्यञ्चेत्यादिकतिपये ग्रन्थास्तु मुद्रिताः सन्ति । कियन्तश्चेदानीमपि अमुद्रिता एव सन्ति । तत्रैषां प्राणेभ्योऽपि प्रियतरमेकमभिधानं विद्यते, यच्च संस्कृत-साहित्यस्याद्वितीयं रत्नं लोकोपकारधिया सुरभारत्या अक्षय्यकोश-सञ्चयनकामनया तेषां स्मृतिवृद्धिस्ने च तस्याभिधानस्य प्रकाशनमत्यन्तमेव समुचितमिति तज्ज्ञानत्र विषयेऽवधानदानाय विनिवेदयन्तस्तदीयकुटुम्बैः सह समवेदनाश्च प्रकाशयन्तः शोक-संविग्न-चेतसोऽल्पीयसैव विरमामः ।

सूचना—प्रियपाठकाः ! बहुशः साग्रहं सानुनयमनुरुद्धा अपि समाज-मन्त्रिणो न वार्षिककार्य्यविवरणन्नापि समाजीयाऽव्यय-विवरणन्न चान्यानि मन्त्रणा-समिति-कार्यजात-विवरणानि प्रेषितानीति 'समाजाङ्कम्' असम्पाद्य यथा-सवरोपलब्ध-सामग्रीभिः कथमपि साधारणाङ्कमेव सम्पादयितुमपारयाम । समयातिपातोऽप्येतन्मूलक एवेति क्षन्तव्या वयं श्रीमद्भिः ।

—( सम्पादकः )

# संस्कृत-समाचाराः

## १. कृत्रिम-हृदयम्—

आधुनिके विज्ञानयुगे विज्ञानशास्त्रप्रवीणैस्तत्रास्त्र एतादृशी प्रगतिः समधिगता यत्ते मृतानपि प्राणिनः जीवतः कर्तुं समर्था भवन्ति-इति श्रुत्वा आश्चर्यविमूढानि भवन्ति चेतांसि । रसिया देशे मृताय पुरुषाय जीवनमगदं दत्त्वा अष्टघटिकाभ्यन्तर एव तस्मिश्चेतनत्वं समर्पितम् । 'रॉकफेलर' नाम्नि संस्थाविशेषे कुक्कुटबालकस्य हृदयं शरीरात् पृथक् विंशतिवर्षपर्यन्तं सजीवं सुरक्षितमिति श्रूयते । कुक्कुरस्यैकस्य शिरश्छेदनं कृत्वा हस्तपादोदराद्यवयवविहीनं केवलं तच्छिरः कृत्रिमहृदयस्य साहाय्येन रक्तसम्प्राप्त्या जीवन्निवाखिलान् शब्द-स्पर्श-रस-रूपादीन्द्रियव्यापारान् सम्पादयति । एकः शाखामृगो मृतोऽपि स्वस्यैव शरीरेऽसृक् प्रवहणेन जीवितो बभूव इति प्रयोगेण सिद्धम् । अचिरादेव कोऽपि शुक्राचार्यः सञ्जीवनीविद्यासम्पन्नोऽसुरेषु भविष्यतीति न किमप्याश्चर्यस्थानम् ?

## २. स्वच्छताविधायकः सर्पः—

सर्वत्र नगरेषु मलमूत्रादिदुर्गन्धि-वाहकाः नलिकाः सन्त्येव । केषुचिन्नगरेषु ताः भूमिगर्भे वसन्ति । तत् स्थानं शुद्धं कदापि नास्त्येव, यतस्तत्र गन्तुं स्वच्छकर्तां ('भंगी' आदीनां) कठिनतमं प्रतिभाति । तं क्लेशं दूरीकर्तुमस्य सर्पस्य योजना कृताऽस्ति । तासु नलिकासु सर्पममुमुपन्यस्य तेन सम्बद्धं यन्त्रं चालयन्ति । तदा तु सर्पोऽयं विस्तृतो भवति, तत्रस्थं मलं चापाकरोति । तेनैव यन्त्रेण संकुचितो भूत्वा पुनरपि मूलरूपं दधाति-इत्येवास्य विशेषः । अनेन परिष्कारेण मानवानां श्रमपरिहारोऽवश्यमेव सम्पादितो भविष्यति ।

## ३. महिलासम्मान-संरक्षको वीरः—

'नेपाल' देशीयया 'माया' नामिकया युवत्या सह बलात्कारं कर्तुं यतमानस्य नराधमस्य हीरालाल-अग्रवालनाम्नो दुरात्मनो हत्यां सम्पादयन् वीरयुवकः खड्गबहादुर-सिंहो नरशार्दूलोऽद्यपर्यन्तं वर्षद्वयं यावत् आङ्ग्लशासककृपया कारावासे निबद्ध आसीत् । तस्य बन्धनसमयोऽष्टवर्षीयो निश्चितस्तथापि भारतीय-महिला-मण्डलस्य समाजनेतृणां च प्रयासेन वर्षद्वयाभ्यन्तर एव तस्य वीरस्य मुक्तिरभवदिति तेषां कार्यमतीव प्रशंसनीयम् । वर्तमानशासका अपि तद्भागधेया एव ।

## ४. म० म० रामावतारशर्मणां देहत्यागः

हा हन्त ! विगते अप्रैलमासस्य तृतीयदिने पण्डितप्रवराणां श्रीरामावतारशर्मणां पाटलिपुत्रनगरे देहावसानो बभूवेति तु महादुःखस्थानमस्माकं सर्वेषां संस्कृतोन्नतिप्रणयिनाम् । एतेषां संस्कृतपाण्डित्यं आबालवृद्धम् आसेतुहिमाचलं सम्यक् प्रसिद्धमासीत् । एवम्भूतानां विदुषां मृत्युना

संस्कृत-हिन्दी-साहित्यस्य या हानिः सञ्जाता सा न कदापि प्रपूर्यते ! कालचक्रं स्मृत्वा दुःसह्यमपीदं दुःखं केनापि प्रकारेण सहनीयमेव भवति । तेषां पूतात्मा परमां शान्तिं प्राप्नुयादित्येव तं दयाघनं प्रार्थयितुं शक्ता वयम् । यदि संस्कृत-साहित्यस्योन्नतिं विधातुं प्रयतेमहि तर्हि तु महामहोपाध्यायानामात्मा सुचिरां शान्तिं लब्धुं समर्थः स्यात् नान्यथा ! ! !

### ५. रूप्यकमेकं दण्डः !

कलकत्तानगर्यां 'श्रद्धानन्दपार्क' स्थाने विदेशिवस्त्राणां दहनं महात्मगान्धिभिः सम्पादितम् । अतस्तत्रत्य-नगरसंरक्षकैः रक्षिभिः (पुलिसैः) तेषामुपरि अभियोगः कृतः । विचारालयाध्यक्षेण तदपराधार्थं रूप्यकैकं दण्डं दातुं महात्मा गान्धी आदिष्टा । 'श्रद्धानन्द-पार्क' सामाजिकस्थानं विद्यते । तत्र किमपि वस्तु न दहनीयमिति तु नियमः । तद्भङ्गस्तैः कृतः, अत एवायं दण्डः !

### ६. चलविजयोपहारो विजितः—

गुरुकुल-कांगड़ी-विश्वविद्यालयस्य वार्षिकाधिवेशनोत्सवे महाविद्यालय-वाग्विवर्धिनी-सभायां 'भारतवर्षस्य पूर्णस्वातन्त्र्यमेव ध्येयं भवितुमर्हति' इत्यस्यां स्थापनायां वाद-विवादः सञ्जातः । तस्मिन् प्रथमःपुरस्कारः 'चलविजयोपहार' श्रीकाशी-विद्यापीठस्थ-विद्यार्थिभ्यां लब्धः । अनया राष्ट्रीयसंस्थया (काशीविद्यापीठ-नामिकया) विवादार्थं द्वौ छात्रौ एकः पक्षेऽन्यो विपक्षे श्रीवेंकटेश्वर-सत्यनारायणौ प्रेषितौ । तयोरेव वक्तृत्वपाटवेन स विजयोपहारः संलब्धः । स तु शीघ्रमेव विद्यापीठे आगमिष्यति ।

### ७. उग्रा दमननीतिः—

आङ्ग्लशासकानां दमननीत्याऽधुना भयङ्करमुग्ररूपं धृतं दृश्यते । सर्वत्र भारते वर्षे युवकगणः कारालये निक्षिप्तः । कारणमस्य कारानिक्षेपस्य श्रूयते यत्केचिज्जनाः तत्रापि बहुशो युवका एव अस्माद्देशतः साम्राज्यवादस्य मूलमुत्पाट्य प्रक्षेप्तुं प्रयतन्ते, साम्यवादस्य बाहुल्येन प्रचारमपि कर्तुमीहन्ते इत्यनेन कारणेन तेषां कारागृहे निःक्षेपणं सम्भूतम् अनेन स्वातन्त्र्येच्छायां मूलाघातः कृत इति यदि विदेशीयशासकानां अवेक्षावना तर्हि सा वैयर्थ्यमेव याप्स्यति इति ते निश्चयेन जानन्तु, जागृतोऽयं भारतः स्वातन्त्र्यमेव प्राप्स्यति, पवित्रं स्वर्गं वा गमिष्यति । तस्य कृते न विद्यते तृतीयः पन्थाः !!

# समालोचनासारः

## शिशुपालवधं-महाकाव्यम् ।

प्राचीनकाव्यमिदं मल्लीनाथस्य सर्वङ्कषाख्यया तथा ततोऽपि प्राचीनस्य श्रीवल्लभदेवस्य व्याख्यान्वयरूपेण विहितया अद्यावदमुद्रितया सन्देहविषौषधि-नामिकया च टीकया समलङ्कृतं श्रीजयकृष्णदासेन स्वीय-विद्याविलास-यन्त्रालये काशी संस्कृत-सिरीज़-पुस्तकमालाया ऊनषष्टितमपुष्परूपेण प्रकाशितमस्मत्पार्श्वे समालोचनार्थमागतमस्ति । श्रीमता मल्लीनाथेन तु सर्वेऽप्यस्माकं सुहृदः परिचिता एव । श्रीमतो वल्लभदेवस्य टीकेयं पदार्थबोधे

सुस्पष्टमाचरति, येनाल्पज्ञानामपिच्छात्राणामनायासेनैव स्यात् श्लोकार्थावगतिः। अद्यावधि मल्लीनाथ एवास्मासु श्लोकार्थ-विवृत्तौ प्रसिद्ध आसीत। परन्तु वल्लभदेवसमदे तु सोऽप्यकिञ्चित्कर इव प्रतिभाति।

अहो वैदुष्यमहो वैशद्यमस्य विवृतौ ? किम्बहुना यथेमे अनर्घे टीके माघकाव्ये समुपलब्धे तथैवास्माकं मित्राभ्यां सम्पादक-परिष्कर्तृभ्यां श्रीअनन्तरामशास्त्रिवेताल-श्रीजगन्नाथशास्त्रिहोसिङ्गाभ्यामनयोः सर्वाङ्गसम्पूर्णताविधाने न किमपि परित्यक्तम्, भूमिका-कथासारांशप्रदानादिभिः साधु समलङ्कृतमिदं काव्यम्। सहैवाभ्यां प्रकाशकाय साधुवादं ददतश्छात्राननुरुन्ध्मोऽस्य परिश्रमस्य साफल्यसम्पादनाय। सर्वविध-कर्गज-मुद्रणादि-परिष्कृति-विभूषितस्य ७५२ पृष्ठात्मकस्य श्लोकसूचि-भूमिकादिभिस्ततोऽपि विवृद्धकलेवरस्यास्य पुस्तकस्य। मू० ३॥)—( सम्पादकस्य )

प्राप्तिस्थानम्—

जयकृष्णदास-हरिदासगुप्तः

चौखम्भा-सिरीज-आफिस-विद्याविलास प्रेस,

बनारस-सिटी।

## प्राप्ति-स्वीकारः।

### 'बालकस्य चित्राङ्कः'

विचित्रोऽयं चित्राङ्कः, चित्रकलाकोविदैः श्रीरामेश्वरप्रसादवर्म-चित्रकारचतुरैः सम्पादितो विविध-सचित्र-चरित्र-चित्रितः सर्वैः सहृदयजनैः विशेषतो बाल-विद्यार्थिभिश्च नूनं सन्दर्शनीयः। १३० पृष्ठसंख्यकेऽत्र बालके १३१ संख्यकानि चित्राणि सन्ति। किम्बहुवक्तव्येनात्र ! यतो वै अस्योपादेयता गुणगौरवत्वञ्च पठनेनैवानुभूयते।

मूल्यमस्य १॥), वार्षिकञ्च ३), प्राप्तिस्थानम्—

मैनेजर-'बालक' लहेरियासराय।

* * *

### 'संसारः'

साप्ताहिकमिदं पत्रं विगत-श्रीवसन्त-पञ्चमीतो निःसरति। अस्य सम्पादको वसिष्ठनारायणवर्म्मा प्रकाशकश्च पं० हरिद्वारशर्मा 'वैद्यः'। हिन्दी-संसारे जागर्त्तिकरम्, कृषकाणां पक्षपाति, श्रमजीवीनां सहायकमिदं पत्रं सर्वत्र योग्यसेवां प्रकुर्वच्चिरन्तिष्ठतु-इति मेऽभिलाषा। वार्षिकं मूल्यमत्र २॥), विदेशे च ४),

प्राप्तिस्थानम्—

व्यवस्थापकः-'संसारः'

गोविन्द-प्रेस, बलिया।

* * *

### 'बलिया-गज़ट'

साप्ताहिकमिदं पत्रं हरिहर-प्रेस-बलियात एव निःसरति। अस्य सम्पादको बाबू महिपालबहादुरसिंहः, प्रकाशकश्च पं० रामचीजद्विवेदी । मूल्यमप्यत्र २), विदेशे च ४)

विषयस्त्वस्यापि समीचीन एव, किन्तु यन्त्रालयत्रुटिः पुष्टकर्गजाभावश्च सहृदयानां हृदयेषु खेदमेवावहति। अतोऽत्र प्रकाशकमहोदयैर्दृष्टिप्रसादं विधेयमिति ।

* * *

### 'ब्राह्मण-सर्वस्व'

अस्यायं 'रजत-जयन्ती-अङ्कोऽभूतपूर्व एव प्रकाशितः । अत्रत्याः स्तम्भगा लेखा श्रुति-स्मृति-प्रतिपादिताः पाण्डित्यपूर्णा विविधभावविलसिताः सन्दर्शनीयैव वरीवर्त्ति ।

अङ्कस्यास्य सम्पादकैः पं० कन्हैयालालमिश्र-महोदयैरेतस्य गौरवभूतं सम्पादनं विधाय स्वकीयं सम्पादनचातुर्यम्प्रदर्श्य, साहित्य-संसारेऽपूर्वमेकं रत्नम्मे पुरतः स्थापितमिति तत्पठनेनैव प्रतीयते । मूल्यं १), प्राप्तिस्थानम्—

सम्पादक-'ब्राह्मणसर्वस्व'
ब्रह्मप्रेस, इटावा ।

* * *

### 'सँगिहा'

पत्रस्यास्य 'रामाङ्को'ऽयमद्य मे पुरतः समुपस्थितः । अस्य सम्पादकः पं० राजारामचतुर्वेदीयः प्रकाशकश्च लाला वंशीधरमहोदयः । वार्षिकं मूल्यं २ ), प्रत्येकस्य ।)

प्राप्तिस्थानम्—

सँगिहा-कार्यालय, भाथौन, ( इटावा )

* * *

### 'स्त्री के पत्र'

अस्य लेखकः साहित्याचार्यः पं० चन्द्रशेखरशास्त्री, प्रकाशकश्च ओझाबन्धु-आश्रमः, प्रयागः । मूल्यं १)

पत्रमिदं स्वानुरूपं नर-नारीजन-मनोरञ्जकं सर्वविध-शिक्षाप्रदञ्चातीव सुष्ठ-सुशोभनप्रकारैः प्रकाशितं वर्तते । अस्य चोपादेयता पठनेनैव प्रतीयते । अतः सर्वैर्जनैर्विशेषतो दम्पतीभ्यां तु नूनमेव संगृह्य पठनीयमिति ।

—'द्विजेन्द्रस्य' ( स० सं० )

---

## दशसहस्रमुद्राः ।

आजमगढ़-मण्डलान्तर्गत-माधवभूमिस्थाय-हिन्दु-आश्रमाय तस्य संस्थापकेन कुञ्जबिहारी-पाण्डेय-विद्यार्थिना "भिक्षया" दशसहस्र-मुद्राः संग्रहीतुं प्रतिज्ञा कृता । तदर्थमस्मादेव वैशाखात् हिन्दून् प्रतिजिगमिषति । अत एव प्रार्थये, सर्वैरेव हिन्दुभिरवश्यमेव साहाय्यं कर्तव्यम्, आजमगढ-मण्डलस्थैर्हिन्दुभिस्तु विशेषेणैवेति सूचयति—

वायुनन्दनअग्निहोत्री
मध्यमेश्वर, बनारस ।

## सूर्यचरितम् वा ऋतुचरितम् ।

ले०—तारादत्तपन्तः, साहित्याचार्यः, व्याकरण-काव्य-तीर्थः ।

### गोलविद्या-विषयकं नूतनं महाकाव्यम् ।

अतिसरलम्, भारतस्य विभिन्नदेशानां नदीनां पर्वतानां ऋतूनां चात्र परिचयो कविना नवीनया सरण्या समुपवर्णितः । गोलविषये नूतनं संस्कृत-महाकाव्यम् । सर्वथा द्रष्टव्यम् । मूल्यम्—१) मार्गव्ययः पृथक् । [ सुप्रभात-कार्यालयः, काशी ]

## सनातनधर्म-संरक्षकः ।

(उपदेशदर्पणस्य प्रथमसंख्या)

सङ्कलयिता—एकः काशीस्थः सनातनधर्मा विद्वानाचार्यः

पुस्तकमिदं हिन्दीभाषायां श्रुतिस्मृति-पुराणेति-हासशिलालेखादिप्रमाणाधारेण शुद्धिभोजनादिव्य-वस्थाविषये लिखितमस्ति । विषयेऽस्मिन् बहुज्ञता-भिलाषुकैर्वर्त्तमान-सामाजिक-धार्मिक-प्रगतिप्रति-योगिभिः खण्डनमण्डनकामैश्चावश्यं गृहेलिममिदम् मुमुक्षुभिराणकद्वयस्य =) चिटिका प्रेष्या ।

## सचित्रम् सामुद्रिकरहस्यम् ।

ले०—श्रीकालिकाप्रसादशर्म्मा, राजज्योतिषी,

अद्भुतमिदं ग्रन्थरत्नम्, हिन्दीटीकासहितम्, अनेकचित्रविभूषितम्, नरनारीणां शुभाशुभज्ञाने नितरामुपयुक्तम्, संस्कृते सर्वथा नवीनमेव । अनेन हस्तरेखाणां गुरुं विनैव सम्यक् परिचयो भवति । मूल्यम् १।) मुद्रा ।

## रतिरहस्यम् (कोकशास्त्रम्)

एष प्राचीनो ग्रन्थः श्रीमहाकवि—कोक्कोक—विरचितः । अस्मिन् कामशास्त्रसम्बन्धिन्यः सर्वा वार्ताः, पद्मिनी-शङ्खिनी-चित्रिणी-हस्तिनी-प्रभृतीनां स्त्रीणां भेदाः, एवं चत्वारः पुरुषभेदाः, स्त्रीणां वशीकरणस्यौषध्यः, मन्त्राः, तत्तद्देशीयानां स्त्रीणां पुरुषाणाञ्च लक्षणानि, तेषां संयोगाः, आलिङ्गन-चुम्बनादीनां भेदाः, तेषां विशेषाश्च अन्ये च बहवो ज्ञातव्याः कामशास्त्रीयाः विषयाः सन्ति । एष ग्रन्थो नितरां सुप्रसिद्धः प्राचीनश्च विद्यते । एतस्यैका प्रतिः सर्वैरपि स्वस्वविधे नूनं संस्थापनीया । मूल्यम्—मुद्राद्वयम् ।

## गोलविद्या गोलसूत्रञ्च ।

ले०—श्रीतारादत्तपन्तः, साहित्याचार्यः, काव्य-व्याकरण-तीर्थः

संस्कृते भूगोलज्ञानस्य प्रधानं प्रथमञ्च पुस्तकम् । अत्र हिन्दी-भूगोल-पुस्तकवत् भारतवर्षस्य समस्तो भूगोलः सरलतया बालानां ज्ञानाय समुपवर्णितोऽस्ति । संस्कृतकाव्येषु नाटकेषु पुराण-पुस्तकेषु च समागतानां देशानां नदीनां स्थानाना पर्वतानाञ्चाधुनिकी स्थितिस्तेषां नामानि च सन्ति । सर्वथा द्रष्टव्यमिदं पुस्तकम् । मूल्यम् ॥) आणकाः ।

## सिर्फ १२) में रसवैद्य ।

### शीघ्रता कीजिये ! 'रसयोगसार' नया ग्रन्थ खरीदिये !

### निर्माता—वैद्य पं० हरिप्रपन्नजी शर्मा

इस ग्रन्थमें तमाम रस-प्रयोगोंका संग्रह है, और सरल हिन्दी भाषानुवाद है । कठिन स्थलों पर टिप्पणी दी गयी है । इसके उपोद्घातमें आयुर्वेदका सम्पूर्ण इतिहास है, उसके साथ २ पाश्चात्य शरीर-विज्ञानकी तुलना भी की गयी है । उपोद्घात-सहित पृष्ठ संख्या १००० के लगभग है । इस ग्रन्थ में १०८ ग्रन्थोंसे ( हस्त-लिखित ५५ मुद्रित ५३ ) रस-प्रयोगोंका संग्रह किया गया है । इसका ३०० पृष्ठोंका संस्कृत और अंग्रेजीमें लिखा हुआ उपोद्घात वैद्य डाक्टरोंके लिये तो बड़ा ही उपयोगी है । अतः इस ग्रन्थको अवश्य प्रत्येक मनुष्य को अपने पास एवं सार्वजनिक पुस्तकालयों में रखना चाहिये । बढ़िया जिल्द होने पर भी कीमत १२) डाक खर्च अलग । चतुर्थांश मूल्य पेशगी भेजना चाहिये ।

मिलने का पता :—

**वैद्य पं० हरिप्रपन्नजी,**

**श्रीभास्कर-औषधालय, तीसरा भोईवाड़ा, बम्बई ।**

# सुप्रभातस्य वैदिकाङ्कः ।

[ सम्पादकः—श्रीकेदारनाथशर्म्मा सारस्वतः । ]



सुप्रभातस्य षष्ठवर्षीयः प्रथमोऽङ्कः कैलाशवासिनां वैदिकप्रवराणां सुगृहीतनामधेयानां महामहोपाध्याय-श्रीप्रभुदत्तशास्त्रि-महोदयानां स्मृतौ वैदिकाङ्कतया महता समारम्भेण प्रकाशितो भविष्यति । अस्मिन्नङ्के वेदसम्बन्धिन एव गभीरगवेषणापूर्णा लेखाः प्रकाशमेष्यन्ति । वेदोपवेदविज्ञानपूर्णोऽयमङ्कः परं महत्त्वमुपयोगिताञ्च समासादयिष्यति । लेखाश्चापि सचित्रा भविष्यन्ति ।

सर्वथा दर्शनीय एव भविष्यत्ययमभूतपूर्वः सुप्रभाताङ्कः । *किम्बहुना ?* ग्राहकेभ्यो विनामूल्यं वितीर्येत । मूल्यमर्द्धरूप्यकम् ।

एतस्मिन्नङ्के लेख-प्रदानाय प्रार्थिताः सन्ति धुरन्धरा वैदिक-विज्ञानविदो विद्वत्प्रवराः । यथा—

१—श्रीमत्पूज्यपाद-जगद्गुरु-श्रीशङ्कराचार्य-श्री १०८ भारतीकृष्णतीर्थ-महोदयाः, ( पुरी )

२—श्रीमन्मध्वसम्प्रदायाचार्याः सर्वतन्त्र-स्वतन्त्राः श्रीदामोदरलालगोस्वामि-महोदयाः, ( काशी )

३—श्रीमहामहोपाध्यायाः—पण्डितराज—प्रमथनाथ-तर्कभूषणमहोदयाः । ( प्रिन्सिपल—संस्कृत-कालेज, हिन्दू-विश्वविद्यालय, काशी ]

४—महामान्याः श्रीमदनमोहनमालवीय-महोदयाः (वाइस-चान्सलर-हिन्दू-विश्वविद्यालय, काशी)

५—विद्यावाचस्पति-महामहोपाध्याय-श्रीमधुसूदन-मिश्रमहोदयाः, ( जयपुरम् )

६—महामहोपाध्याय-श्रीगिरिधरशर्म्माणः च... महोदयाः, (प्रिन्सिपल-संस्कृत-कालेज, ...

७—महामहोपाध्याय-डा० गङ्गानाथझा म... एम० ए०, डी० लिट्०, (प्रयागविश्ववि...

८—प्राच्यविद्यामहार्णव-श्रीगोपीनाथकविरा... ए० महोदयाः । ( प्रि० संस्कृत-कालेज...

९—विद्वद्वर-श्रीमदानन्दशङ्कर-ध्रुव, एम० ए... एल बी०, महोदयाः । ( प्रो-वाइस-चान्... हिन्दू-विश्वविद्यालय, काशी )

१०—श्रीमान् मङ्गलदेवशास्त्री एम० ए०,पी० ... ( अध्यक्ष—सरस्वती-भवन, काशी )

११—महामहोपाध्याय-श्रीदेवीप्रसादशुक्ल-का...वर्ति-महोदयाः, ( काशी । )

१२—सर्वतन्त्र-स्वतन्त्राः श्रीबालकृष्णमिश्रमहे... (दर्शनाध्यापकाः-श्रीकाशी-हिन्दू-विश्वविद्या...

अन्ये चाप्यनेके विद्वद्धुरीणाः प्रार्थिताः सन्ति... अतोऽत्र त्वरा विधेया ग्राहकत्वायेति सूच...

श्रीसत्यनारायणशास्त्री कविराजः (व्यवस्था...

लेखादिप्रेषण-स्थानम्—

" वैदिकाङ्क-सम्पादकः "

सुप्रभात-कार्यालयः, ...

Published by Gaurinath Pathak and printed by Rameshwar Pathak at the Tara Printing Works, Benares.

